SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Vol. 113 ]

# RASAGAṄGĀDHARA

[Part II]

*of*

PAṆḌITARĀJA JAGANNĀTHA

Edited with his 'Rasacandrikā' Commentary

*by*

**Pt. KEDĀRANĀTHA OJHĀ**
Hony. Professor
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi

Research Publication Supervisor
DR. BHAGĪRATHA PRASĀDA TRIPĀṬHĪ
'VĀGĪŚA ŚĀSTRĪ'
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya

VARANASI
1981

**Published by —**
**Director, Research Institute,**
**Sampurnanand Sanskrit Vishvavidyalaya,**
**Varanasi.**

**Available At—**
**Sales Department,**
**Sampurnanand Sanskrit Vishvavidyalaya,**
**Varanasi–221002.**

**First Edition : 1100 Copies.**
**Price: Rs. 60-00**

**Printed by—**
**Surendra Mishra**
**Manager,**
**Sampurnanand Sanskrit Vishvavidyalaya Press.**
**Varanasi.**

सरस्वतीभवन-ग्रन्थमाला
[ ११३ ]

पण्डितराजजगन्नाथकृतो

# रसगङ्गाधरः

[ द्वितीयो भागः ]

प० केदारनाथौझाप्रणीतया
रसचन्द्रिकाव्याख्यया
संवलितः

सम्पादकः
**प० केदारनाथ ओझाः**
सम्मानितप्राध्यापकः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

अनुसन्धानप्रकाशनपर्यवेक्षकः
**डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**
अनुसन्धानसंस्थाननिदेशकः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणस्याम्
२०३७ तमे वैक्रमाब्दे १९०२ तमे शकाब्दे १९८१ तमे खैस्ताब्दे

# प्रास्ताविकम्

रसचन्द्रिकाव्याख्यासंवलितस्य रसगङ्गाधरस्य लक्षणानिरूपणान्तः प्रथमो भागस्तावच्चतुर्भ्यो हायनेभ्यः प्राक् संस्कृतविश्वविद्यालयेन प्रकाशितो जिज्ञासुभिर्विद्वद्भिश्च सपर्यितः। तस्येममवशिष्टं यावदुपलब्धमलङ्कारनिरूपणान्तं द्वितीयं भागं साम्प्रतं प्रकाशमानीयमानं सुधीजनानां जिज्ञासुजनानां च कराम्बुजसम्पुटे समुपहरतो मे जाजायते प्रमदो महान्। आननद्वयात्मक एव रसगङ्गाधरः समासाद्यते। अप्पयदीक्षितैः स्वकीयग्रन्थो न पूर्णतां नीतः। तत्प्रतिस्पर्द्धायां पण्डितराजैरपि रसगङ्गाधरो न परिपूर्तिमापादित इति प्रवादः। शिवाभिधानपरतया ग्रन्थस्यास्य पञ्चाननानि संकलितान्यासन्निति प्रतीयते। यद्यपि तदपूर्णतादर्शनेन ग्रन्थरचनामध्य एव कैश्चिद् शिवसायुज्यमप्यनुमीयते ग्रन्थकर्तुः, तथापि पण्डितराजेनैव रसगङ्गाधराच्चित्रमीमांसाखण्डनस्य संग्रहीतत्वान्नैतदनुमानं समञ्जसम्—

रसगङ्गाधरे चित्रमीमांसाया मयोदिताः।
ये दोषास्तेऽत्र संक्षिप्य कथ्यन्ते विदुषां मुदे॥ इति।

मुख्यतश्चित्रमीमांसाखण्डनाय पण्डितराजाः प्रवृत्ता इति श्रीमदप्पयदीक्षितं प्रति प्रयुक्तया तद्भाषया गम्यते। पूर्वं तत्समादराय बहुवचनान्तः प्रयोगोऽनुष्ठितः। किन्तु पर्यन्ते भर्त्सनागर्भाणि वाक्यानि दृश्यन्ते--अप्पयदीक्षिताः, तच्चिन्त्यम् (१८ पृ०),यच्चाप्पयदीक्षितैः—तत् तुच्छम् (५१ पृ०); चित्रमीमांसाकृद्भिरभ्यधीयत ( ५२ पृ० ), तथा चाप्पयदीक्षितैः, तन्न ( ७६ पृ० ), चित्रमीमांसाकृतस्तु प्राचीनं लक्षणं दूषयित्वा—( १२१ पृ० ) इति स्वयं लक्षणमाहुः ( १२२ पृ० ), तन्न ( १२३ पृ० ); इत्यप्पयदीक्षितैरभिहितम्, तदपि न (१३९ पृ० ), अप्पयदीक्षितास्तु ( १७० पृ० ), इत्याहुः, तन्न ( १७१ पृ० ), यच्चाप्पयदीक्षितैर्वैयधिकरण्येन, अत्र चिन्त्यते (२१७ पृ०); तत्र यत्तावदप्पयदीक्षितैर्विद्याधरोक्तं " दूषितं ( २२३ पृ० ),--तदसत् ( २२४ पृ० ); यद्यपि तैरेव—उक्तम् तत्तुच्छम् ( २२४-२५ पृ० ), अप्पयदीक्षितास्तु—तन्न ( २३४ पृ० ), यत्तु चित्रमीमांसायामप्पयदीक्षिताः—इत्याहुः, तदेतद् ध्वनिमर्मज्ञैरुपहसनीयमेव ( २३९ ); यद्दीक्षितैरभ्यधीयत तदप्यपास्तम् (२४२ पृ०), यच्चाप्पयदीक्षितै-

लक्षणमुक्तम् ( २४६ पृ० ), दीक्षितैस्तु ( २५२ ) अप्पयदीक्षितास्तु इत्याहुः तन्न ( २५७ पृ० ); यत्तु कुवलयानन्दाख्ये सन्दर्भे अप्पयदीक्षितैः ( २७१ पृ०) यदि च प्राचीनमतमुपेक्ष्यालङ्काररत्नाकरेणेव मयाऽप्ययं प्रकारोपह्नुतिमध्ये गणित इत्युच्यते, तदा आहार्यताद्रूप्यनिश्चयस्य समानत्वाद् रूपकभेद एवापह्नुतिरित्य-प्युच्यताम्. निरस्यतां च प्राचीनमुखदाक्षिण्यम्। एवमपि चित्रमीमांसागत-त्वान्निर्मितापह्नुतिलक्षणस्याव्याप्तिः स्थितैव ( ७३ पृ० ); यत्त्वप्पयदीक्षितैर-पह्नुतिध्वनावुक्तम्—इति तदापातरमणीयम् ( २७५-७६ पृ० )।

यत्तु कुवलयानन्दकृतानुभयपर्यवसायिनो व्यतिरेकस्योदाहरणमुक्तम्, तन्न निपुणं निरीक्षितमायुष्मता ( ४१७ पृ० ); इत्यास्तां कूटकार्षापणोद्घाटनम् ( ४१६ पृ० ); इति चेत् साधु पृष्टमायुष्मता ( ४६६ पृ० ); कुवलयानन्दकारस्तु ( ४६२ पृ० ); इत्यादिस्तेषां ग्रन्थः कथमायुष्मता समर्थितः ( ४९४ पृ० ); यदस्मिन् प्रकरणे कुवलयानन्दकारेणोक्तम्, तत् सर्वमविचारितरमणीयमेव ( ५२५ पृ० ), एवं स्थिते कुवलयानन्दकर्त्रा तदपास्तम् ( ५४४ पृ० ), यच्चापि कुवलयानन्दकृता—उदाहृतम्, तन्न ( ५४५ पृ० ); इति सहृदयैराकलनीयम् किमुक्तं द्रविणपुङ्गवेनेति ( ५४७ पृ० )। येन ध्वनिकारोक्तमपेक्ष्य त्वदुक्तं श्रद्दधीमहि ( ५५९ पृ० ); यत्तु उक्तं कुवलयानन्दकृता ( ५५९ पृ० ); तन्न ( ५६० ); त्वदुक्तस्य विशेषस्य निषेधाव्यङ्ग्यत्वात् ५६०-६१ पृ० ), यत्तु ( ५८० )—इति षट्प्रकारां विभावनामुदाजहार कुवलयानन्दकृत्, तत्रेदं वक्तव्यम् ( ५८१ पृ० ); यत्तु इति कुवलयानन्दकृता संगतेरन्यद् भेदद्वयं लक्षयित्वोदाहृतम्, तन्न ( ६०४-६ पृ०); यत्तु इत्युक्तम् कुवलयानन्दकृता तन्न, अव्युत्पत्तेः ( ६२२ पृ० ); यदपि तेनैवोदाहृतम् ( ६२३ पृ० ); यत्तु कुवलया-नन्दकृता ( ६३१ पृ० ); इत्युक्तम्, तत्रोदाहरणे मामुच्चाटनं लम्भयसे इति द्विकर्मत्वं कथम् ( ६३२ पृ० ); इति कुवलयानन्दकार आह, तन्न, तावदियं पदरचनैवायुष्मतो ग्रन्थकर्तुर्व्युत्पत्तिशैथिल्यमुद्गिरति ( ६४६ पृ० ); इति यदुक्तं कुवलयानन्दकृता तद् भ्रान्तिमात्रविलसितमिति सुधीभिरालोचनीयम् ( ६७३ पृ० ); अनुमोदितं च कुवलयानन्दकृता, तदुभयमसत् ( ६८७ पृ० ), कुवलयानन्दकारस्तु—इत्याह, तत्तुच्छम् ( ६९१ पृ० ), त्वदुक्तो विकस्वरा-लङ्कारो न सम्भवतीति कश्चिदलङ्कारस्त्वयाऽपि वाच्यः—त्वदुक्तानां गतार्थत्वे ( ७०० पृ० ); यत्तु इति कुवलयानन्दकृता विकासपर्यायो निजगदे, तच्चिन्त्यम् ( ७१२ ), स चायुष्मता नोट्टङ्कित एव ( ७१३ ); इति कुवलयानन्दकारेणो-

दाहृते तु पद्ये ''' इति कथंकारमस्यालङ्कारस्योदाहरणतां नीतमिदमायुष्मतेति न विद्मः ( ७४८ ), यत्तु इति कुवलयानन्दकार आह, तदत्यन्तमसङ्गतम् ( ७६६-६७ ), उदाहृतं कुवलयानन्दकृता, तदसत् ( ७७३ ), कुवलयानन्दकृतो विस्मरणमेव शरणम् ( ७८४ ), इति कुवलयानन्दकृदाह, तन्न ( ८०० ) इति ।

श्रीमदप्पयदीक्षितः सप्तदशखीस्तशताब्दे प्रथमचरणे परमां गतिं लेभे । पण्डितराजस्तु शाहजहां-राजपण्डितो दाराशिकोहस्याध्यापकः । सप्तदशखीस्तशताब्दस्य तृतीये चरणे ( १५९०-१६६५ खी० ) वाराणसीमुपेत्य रसगङ्गाधरं प्रणिनाय । इत्थं तावद् यौवनकाले शाहजहां-राजद्वारि समवस्थितः पण्डितराजजगन्नाथो वाराणसीस्थितं श्रीमदप्पयदीक्षितं विलोकितुं न पारयामासेति तत्कृतपरोक्षभूतप्रयोगेणावसीयते—षट्प्रकारां विभावनामुदाजहार कुवलयानन्दकृत् ( ५८१ पृ० ); इति कुवलयानन्दकृता विकारपर्यायो निजगदे ( ७१३ ) इति । अभ्यधीयत (५२, २४२); आहुः ( १२२, ७१, २५.७ ); आह ( ६४६, ६९, ७६६, ८०० ); इत्यनद्यतने भूते वर्तमाने च कालेऽपि श्रीमदप्पयदीक्षितमालक्ष्य पण्डितराजकृताः प्रयोगा दृश्यन्ते । वस्तुतस्तु कुवलयानन्दस्य रचना श्रीमदप्पयदीक्षितैस्तदा कृता यदा पण्डितराजजगन्नाथस्य जन्म नाभूदित्यपरोक्षत्वाल्लिड्लकारः प्रयुक्तः पण्डितराजेन कुवलयानन्दकारं प्रति । अन्यत्र त्वनद्यतनभूतवर्तमानकालौ प्रयुक्तौ । एतेन श्रीमदप्पयदीक्षितो दशमीं गतो हि पण्डितराजेन साक्षात्कृत इति सिद्ध्यति ।

न केवलमप्पयदीक्षितानामेव मतं पण्डितराजैः पर्यालोचितं प्रत्युत पूर्ववर्त्तिनामन्येषामप्यालङ्कारिकाणामाचार्याणां मतानि समीक्षितानि । तत्रापि प्रत्युक्तम्, अपास्तम्, परास्ताः, यत्तु, न युक्तम्, तन्न, तच्चिन्त्यम्, इति तु दुराग्रहः, तदसत्, प्रवादो निरस्तः''''इत्यादिरीत्या व्यवहारः । यथा—विद्यानाथोक्तं लक्षणमपास्तम् ( २१ ), प्राचामपि लक्षणं प्रत्युक्तम् ( २२ ); अलङ्काररत्नाकरोक्तं न भव्यम् (२३); अलङ्काररत्नाकरादयः परास्ताः (३७), यद्यप्यलङ्कारसर्वस्वकृतोक्तम् इति तन्न ( १२५ ) यच्च विमर्शिनीकारेणोक्तम्—तत्तुच्छम् ( १२८ ), यदपि चालङ्कारसर्वस्वकृता इत्युक्तम् तदपि तुच्छम् ( १३८ ); रत्नाकरोक्तस्यैव—न युक्तम् ( १४० ); इति रत्नाकरेणोक्तम्, तदसत् ( १४३ ); तदपि न ( १६१ ); तस्माद् दुराग्रह एवायं प्राचाम् ( १६९ ); यच्च इत्यादि प्राचीनैरुक्तम्, तच्चिन्त्यम् ( १७६ ); इति परास्तम् ( १८२ ); इति तु

दुराग्रहः ( १६१ ), आनन्दवर्धनाचार्यास्तु—इत्याहुः, तच्चिन्त्यम् ( २११ ); यत्त्वलङ्कारसर्वस्वकृता लक्षितम् इति तन्न ( २१२ ), इत्यलङ्कारसर्वस्वोक्त लक्षण-मपि नात्र वर्तते ( २७१ ) निगदितम्, तदेतत् सर्वं परस्परविरुद्धम् ( ३०८ ), तस्मात् प्राचीनानाम् आधुनिकानां चोक्तयो न क्षोदक्षमाः (३०९), यत्त्वलङ्कार-सर्वस्वकृता—तदापाततः ( ३४५ ); इति सर्वस्वकारादीनामुक्तिराग्रहमूलैव ( ४२६ ); नैव प्रमाणीकुर्महे वयं मृषा मुकुलितलोचनान् प्राचः ( ४३० ), अलङ्कारसर्वस्वकारस्तु इत्याह तदेतदुक्तिमात्ररमणीयम् ( ४४५ ), इत्याधुनिकानां वाचोयुक्तिरयुक्तैव ( ५३२ ); इत्यलङ्कारसर्वस्वकृतोक्तम् । विवेचितं च विमर्शिनी-कृता, तदुभयमसत् ( ६३६ ); इत्यलङ्कारसर्वस्वकारेण यदुदाहृतं तदपि प्रत्युक्तम् ( ६४३ ); अनुगतलक्षणं विना प्राचीनोक्तिराज्ञामात्रमेव राज्ञामिति तदपेक्षया पृथगलङ्कारतोक्तिरेव रमणीया ( ६५१ ); इत्यलङ्कारसर्वस्वकृतोक्तम्, तच्चिन्त्यम् ( ७३४ ); इति रत्नाकरोक्तमपास्तम् ( ७४२ ) इति ।

वहुत्र काव्यप्रकाश-सर्वस्वकारादीनामुक्तयः पण्डितराजेन समर्थिता अपि । यथा—इत्याहुरानन्दवर्धनाचार्याः ( २४१ ); एवं च विभागश्चिरन्तनाना-मुच्छिन्नः स्यात् ( ३११ ); इति प्राचामुक्तिः संगच्छते ( ३२७ ); एतेन···· इत्यादिकाव्यप्रकाशो व्याख्यातः ( ३३९ ); प्राचीनविभागस्य भवतैव शिथिली-कृतत्वात् ( ३८२ ); अत एव मम्मटभट्टैरुदाहृतम् ( ३९४ ); इति प्राचामा-शयः ( ४०९ ); अत एवासमालङ्कारं प्राञ्चो न मन्यन्ते ( ४१५ ), अत एव मम्मटभट्टैः;····इत्युक्तम्, निरस्तं च न्यूनत्वम् ( ४१६ ); इति भामहोद्भट-प्रभृतीनां चिरन्तनानामाशयः ( ४४३ ); प्राचीनैर्निर्मितं लक्षणं व्यङ्ग्यत्ववाच्य-त्वयोर्विरोधादसंगतमिति नाशङ्कनीयम् ( ५२० ); प्राचीनैः कृतो विभाग उच्छिन्न एव स्यात् ( ५२९ ); इति प्राचामलङ्कारशास्त्रप्रवर्तकानां समयः ( ५४२ ); इति प्राचीनप्रसिद्धोदाहरणेषु ( ५६३ ; वामनस्तु····इत्याह उदा-जहार च ( ५६६ ), एवं च विमर्शिनीकारोक्तमपि पद्यमनयैव दिशा नीयते, तदा न दोषः ( ६०४ ); इति प्राचामाशयः ( ६५४ ); इति प्राचामुक्तिरेव शरणम् ( ६६१ ); इति प्राचीनसंमतोदाहरणे ( ६६८ ); तदेवं पञ्चविधं प्रतीपं प्राचामनुरोधान्निरूपितम् ( ७५२ ); इति प्राचां निदर्शनोदाहरणमपि संगच्छते ( ७६६ ) इति ।

पण्डितराजोऽलङ्कारादिविषये केवलमभिनवगुप्तपादाचार्यमतं न प्रत्याख्याति । तस्य स्मरणम्—'इति तद्युक्तिविवेचनेऽभिनवगुप्तपादाचार्याः' ( २४२ );

अभिनवगुप्तपादाचार्यास्तु······लक्षणमाहुः। तेषामयमाशयः ( ५२३ ) इति। यद्यप्यानन्दवर्धनाचार्योऽपि सादरं स्मर्यते पण्डितराजेन, तथाप्यस्मिन् खण्ड एकत्र तन्मतं निरस्यते—'आनन्दवर्द्धनाचार्यास्तु·········इत्याहुः, तच्चिन्त्यम् ( २११ ) इति।

प्राचीनाचार्यैरिव पण्डितराजेनापि भूयिष्ठानि मतानि खल्वाचार्यनामोल्लेखमन्तरा 'यत्तु' 'केचिद्' 'अपरे'इत्यादिसंकेतैरुद्धृतानि। यथा—परे तु (९; ३२०;; ३९५ ); प्राचीनैरभिधीयते ( १४ ); प्राचामनुसारेण ( २४ ); अत्राहुः ( ५६७ ), इति प्राचां निष्कर्षः ( ५६८ ); यदाहुः ( ७१९ ); अन्ये तु (३३१; ५५०; ५९२; ७०७; ७२३; ७८८ ); अपरे तु ( ५४९; ७२३ ); इत्यपरे ( ९१ ); इत्यपि केचित् ( १०० ); यत्तु ( १३५; ६९७; ७३१ ); प्राञ्चस्तु ( १४४; १५२; ५३ ); तत्र प्राञ्चः ( १९६ ); इति प्राञ्चः ( २०७; ६५१ ); केचित्तु ( २२०; ३२०; ७९८ ); यदपि·········तदपि न २३६ ); यदि च····तदा ( २७३ ); इति प्राञ्चः ( ४०३ ); यदप्युक्तम् ( ५२८; २६ ); इति प्राचामलङ्कारशास्त्रप्रवर्तकानां समयः ( ५४२ ); इति केचिदाहुः ( ५४८ ); इतरे तु ( ५५६ ); यदि तु ( ६४१ ); प्राचीनैः ( ६७२ ); इत्येके ( ७०१ ); अत्र केचित् ( ७०६ ); यदप्युक्तम् ( ८०२ ; इति प्राञ्चः ( ८०९ ); अत्राहुः ( ८११ ) इति।

पण्डितराजैर्यत्र प्रत्याख्यानातिरिक्तस्तदादावन्ते वा स्वाभिप्रायः प्रकाश्यते, तत्र 'अत्र विचार्यते' ( ४८७; ६५५; ६१; ७२८; ४७ ); तत्र विचारयामः ( ४९४ ); वयं तु ब्रूमः ( ४९७ ); इदं पुनरिहावधेयम् ( ४६९ ); तत्र विचार्यते ( ५०५ ); तेषामयमाशयः ( ५२३ ); इदं पुनरवशिष्यते ( ५२५ ); एवं तु बोध्यम् ( ५३२ ); इति सहृदयैराकलनीयम् ( ५८७ ); दिङ्मात्रं तूपदर्श्यते ( ६१५ ); इदं तु बोध्यम् ( ६७५; ७०८; ८७ ); इयांस्तु विशेषः ( ६८७ ); अत्रेदं बोध्यम् ( ७०३; ७६ ); इदं चापरं बोध्यम् ( ७१७ ); वस्तुतस्तु ( ७५२; ८१२ ) इत्यादीनि वाक्यान्यादावन्ते वा प्रयुज्यन्ते तैः।

पण्डितराजानां भाषाया मनोरमाः प्रयोगा मतान्तरखण्डनप्रसङ्गे स्वदिता एव भवद्भिर्यत्र 'निरस्यतां च प्राचीनमुखदाक्षिण्यम्' ( २७३ ); तदेतदापातरमणीयम् ( २७५ ); उक्तयो न क्षोदक्षमाः ( ३०६ ); द्रविडपुङ्गवेन यदुक्तम् ( ३०७ ); तदापाततः ( ३४५ ); इति प्राचामुक्तिर्विपुलोदाहरणाभिज्ञैर्यथा कथञ्चिदुपपादनीया ( ४०७ ); तन्न निपुणं निरीक्षितमायुष्मता ( ४१७ );

इत्यास्तां कूटकार्षापणोद्घाटनम् (४१९); इत्यत्र सहृदया एव प्रमाणम् (४४१); इति चेत् साधु पृष्टमायुष्मता (४६९); इति तु प्रभुतैव केवला, न सहृदयत्वम् (४३०); इत्यादिस्तेषां ग्रन्थः कथमायुष्मता समर्थितः (४९४); इति सहृदयै-राकलनीयम् (५२९; ८७); वाचोयुक्तिरयुक्तैव (५३२) यदि तु प्राचीन-संकेतसेतुं निर्भिद्य स्वरुचिरमणीया सरणिराद्रियते, तदा निवेश्यन्तां सर्वेऽपि व्यङ्ग्यप्रकाराः········(५४४); इति सहृदयैराकलनीयं किमुक्तं द्रविणपुङ्गवेनेति (५४७); येन ····त्वदुक्तं श्रद्दधीमहि (५५९); इति चेत् साधु पृष्टमायुष्मता (४६९); इयं पदरचनैवायुष्मतो ग्रन्थकर्तुर्व्युत्पत्तिशैथिल्यमुद्गिरति (६४६); तद्भ्रान्तिमात्रविलसितमिति सुधीभिरालोचनीयम् (६७३); एते च भेदाः ···· चातुर्यमात्रेण कल्पिताः, न तु वैचित्र्यविशेषेण (६८३); अस्तु, किं नश्छिन्नम् (६८९); उक्तयः कूटकार्षापणवदरमणीयाः (७०९); स चायुष्मता नोट्टङ्कित एव (७१२); इति कथङ्कारमस्यालङ्कारस्योदाहरणतां नीतमिदमायुष्मतेति न विद्मः (७४८); इति प्राचामुक्तिरेव शरणम् (६६१); विस्मरणमेव शरणम् (७८४) इति।

क्वचित्तु—अस्मदुक्तोदाहरणे·······सावकाशत्वाच्च (३६२); तस्माद-स्मदुक्तैव व्यवस्थाऽनुसर्तव्या (६९९) इत्यादिष्वस्मच्छब्दप्रयोगपूर्वकं दृढता प्रदर्शिता।

पण्डितराजैर्व्याकरणं भट्टोजिदीक्षितगुरूणां श्रीशेषकृष्णपण्डितानां पुत्रेभ्यः श्रीवीरेश्वरेभ्यः सकाशादधीतमिति विदन्त्येव कोविदाः। तैः प्रौढमनोरमा-खण्डनाय मनोरमाकुचमर्दिनीत्याख्यो ग्रन्थो विरचितः। इह रसगङ्गाधरे तदीया व्याकरणनैपुणी प्रकटीभवति। यथा—क्विपि लुप्ते धातवः (४५); कर्तर्युपमाने इवे प्रतिकृतौ (४८); सप्तम्युपमानपूर्वस्य (४७); छप्रत्यये (४९; ५०; ५१); कैयटादिविरुद्धत्वात् (५२); तदुक्तं कैयटेन (५२); क्विप्कनोर्लोपे (५३); अपशब्ददुष्टवैयाकरणतां कर्तुः प्रकाशयति (५५); क्यङर्थोऽनुगामी (६६); व्याकरणस्य सिद्धानुवादकत्वेन, तेन तुल्यम् (१००); क्विप्क्यङ्कृतमत्र वैलक्षण्यम् (१२६); युवत्य इति च 'सर्वतोऽक्तिन्नर्थात्' इति ङीषि साधुः (१६३); कर्तरि कृत् (३०३–५); दीप इव दीपकम्, संज्ञायां कन् (३५१); एतेन 'अप्रधानग्रहणं शक्यमकर्तुम्' इति वदन्तो मनोरमाकाराः परास्ताः (४२६); इत्यत्र च्विप्रत्ययेन···· ····भवितुमर्हति (५३४); तच्च सुबन्ततिङन्तार्थत्वाभ्यां तावद् द्विविधम्

( ६७८ ); 'यथासंख्यमनुदेशः समानाम्' इति सूत्रं व्यर्थं स्यात्। तदुदाहरणेषु 'लोमादिपामादिपिच्छादिभ्यः शनेलचः' इत्यादिषु लौकिकसामग्रीबलादेव यथासंख्यान्वयबोधोपपत्तेः········( ७०७–८ )। 'परावनुपात्यय इणः' इति पाणिनिस्मृत्या ( ७०९ ); ल्यब्लोपपञ्चम्यामपि ल्यबन्तक्रियाधिकरणे पञ्चम्या लाक्षणिकत्वादवाच्यतैव। 'ल्यब्लोपे कर्मण्यधिकरणे च' इति वार्त्तिकस्य निरूढलक्षणासम्पर्कतेति राद्धान्तात् (७११); इति।

न्यायदर्शनं व्याकरणदर्शनं च बहुत्र पण्डितराजैः समाश्रितम्। यथा—'इत्थमेव चाख्यातवादशिरोमणिव्याख्यातृभिरपि सिद्धान्तितम् इति चेन्नैवम् ( ९७ ); धात्वर्थनिष्ठविशेष्यतानिरूपित––प्रकारतासंसर्गेण शाब्दबोधं प्रति ( ९६ ); धात्वर्थान्वयोऽनुभवसिद्धोऽपलपनीयः स्यात् ( ९७ ); कथं तर्हि घटो न पश्यतीत्यादौ ( ९८ ); अरविन्देन तुल्यमित्यादौ तृतीयार्थो निरूपितत्वम् ( १०३ ); क्यङर्थाचारो धर्ममात्रम् ( १०६ ); क्यजर्थाचारश्चानुरूपक्रियादिः ( १०६ ); तत्रेवादीनां द्योतकत्वमेव, न वाचकत्वम् ( १०७ ); भावप्रधानमाख्यातम्······( ३०३–५ ); चतुर्थमपि चतुर्थचरणगतमवैयाकरणानां दर्शने। वैयाकरणानां तूपात्तया तमालाभिन्नकर्तृकतया श्रमहरणक्रिययोन्नीतं तादृशकर्तृत्वं तथा तयोः स्थितम् ( ३२१ ); कारकाणां सर्वेषामपि क्रियान्वयस्य तुल्यत्वात् ( ३४२ ); भावप्रधानमाख्यातम् इति यास्कोक्तरीत्या क्रियाविशेष्यकबोधवादिनां शाब्द एवाभेदारोपः क्रिययोरिति मुखं चन्द्र इत्यादाविव रूपकमुचितम्। प्रथमान्तविशेष्यकबोधवादिनां त्वार्थः स इति निदर्शनेति बोधः ( ४०१ ); 'सहयुक्तेऽप्रधाने' इति शास्त्रेण तृतीयायाः शक्तेर्बोधनात् तस्य कथमशाब्दत्वम्।········षष्ठी शेषे ( ४२५ ); टाप्प्रथमाभ्यां प्रतिपादितेन प्रकृत्यर्थगतेन स्त्रीत्वेन पुंस्त्वेन च स्वाधिकरण एवाभिव्यज्यते ( ४४४ ); तत्र वेदान्तशास्त्रसिद्धव्यवहारे व्याकरणसिद्धस्य शतृशानज्व्यवहारस्य ( ४७० ); इत्युक्तं नैयायिकैः ( ४९८ ); इति वेदान्तवाक्ये ( ४९८–६९ ); क्रिया चात्र न वैयाकरणानामिव शुद्धा भावना, नापि नैयायिकानामिव स्पन्दरूपा, किन्तु तत्तद्धातुवाच्या विशिष्टव्यापाररूपा ( ५६३ ); अत एव वैयाकरणानां मते परिसंख्यापि नियमशब्देनोच्यते। तथाहि—'कृत्तद्धितसमासाश्च' इत्यत्र समासग्रहणं नियमार्थमिति हि तेषां सिद्धान्तः ( ७१८ ) इत्यादि दिङ्मात्रमिहोदाह्रियते।

यद्यपि पण्डितराजानां व्याकरणविषयः खलु कस्यचिद् वैयाकरणशिरोमणेरिव

नूनं प्रौढः, तथापि तैरेकत्र शपथशब्दो नपुंसकलिङ्गे प्रयुक्तः—'इति शपथं क्रियते' ( ४६९ )इति। सर्वत्र लक्ष्यग्रन्थेषु शपथशब्दस्य पुंसि प्रयुक्तत्वात्, 'शपनं शपथः पुमान्' इत्यमराच्च शपथः क्रियते' इत्येव भाव्यमिति मे मतिः। निर्णयसागरादिसंस्करणेषु पुंस्त्वमेव दृश्यते।

एवं तावत्तस्यास्यातिगभीरस्य रसगङ्गाधरस्यात्मावबोधाय पण्डितप्रवरनागेशभट्टप्रभृतिभिः सुधीशिरोमणिभिर्व्याख्यावतारो व्यधायि। आधुनिका अप्यनेके संस्कृतव्याख्याकारा हिन्दीव्याख्याकाराश्च रसगङ्गाधरस्य मर्मोन्मीलनाय यथामति व्याख्यानानि व्यतानिषुः। पण्डितराजस्य न्यायव्याकरणवेदान्तादिशास्त्रेषु नदीष्णता भवद्भिरवलोकितैव रसगङ्गाधरात् समुद्धृतवचनानामाधारेण। पण्डितराजैः शास्त्रपारावारमन्थनं विधाय खण्डनमण्डनपुरस्सरमनर्घ्याणि यानि रत्नानि शिवस्वरूपेऽस्मिन् रसगङ्गाधरे संनिवेशितानि, तेषां यथास्थितस्वरूपोद्घाटनाय पण्डिताग्रगण्या अपि नाम संकोचमञ्चन्ति, का कथा तदेतरेषां सुधियाम्। यथा पण्डितराजैः पूर्ववर्तिनां ग्रन्थकाराणामाचार्याणां मतानि पर्यालोचितानि, तथैव रसचन्द्रिकाकारेण सूरिप्रवरेण ओझोपाह्वपण्डितश्रीकेदारनाथमहोदयेन पूर्ववर्त्तिनाम् आलङ्कारिकाणां रसगङ्गाधरव्याख्याकाराणां च मतानि सूक्ष्मेक्षिकया पर्यालोचितानि। तेनास्य रसचन्द्रिकाव्याख्याकारस्य गभीरं वैदुष्यमाविर्भवति। तदीया भाषाशैली बहुत्र पण्डितराजप्रयुक्तभाषामनुहरते। रसचन्द्रिकागतानि कानिचिद् वैशिष्ट्यानीह समासमुखेन समुदाह्रियन्ते।

पण्डितराजेभ्यः पश्चात्तनैः पण्डितप्रवरविश्वेश्वरपाण्डेयमहोदयैरलङ्कारकौस्तुभे बहुत्र रसगङ्गाधरः पर्यालोचितः। रसचन्द्रिकाकारेण कौस्तुभं प्रतिपर्यालोच्य युक्तायुक्तत्वं प्रत्यपादि। अनेकत्र तत्सिद्धान्ता निराकृता अपि। यथा—'अनेन···· अतिव्याप्तिवारणाय ·अलङ्कारकौस्तुभकृतः कठिनः परिष्कारकुठारो व्यर्थतयैव कुण्ठितो वेदितव्यः ( ४ ); इति चिन्त्यमेवालङ्कारकौस्तुभकृतां खण्डनम् (११); कौस्तुभखण्डनाय स्मरन्तु विवेचकाः ( ११ ); अत्र कौस्तुभकाराणां खण्डनं तु पूर्वत्र व्याख्यान एव खण्डितम् ( १९ ); विश्वेश्वरविदुषां स्वभाव········ ( २१ ); भ्रान्ता अलङ्कारकौस्तुभकृतो रसगङ्गाधरपद्यमिदमाक्षिपन्, तन्न समीचीनमिति प्रतीमः ( ३६ ); तदुक्तिस्तु सहृदयधुरीणैश्चिन्तनीया ( ५१ ); अन्यच्च तत्रैवास्य ग्रन्थस्य खण्डनम् ( ५१ ); तथैवालङ्कारकौस्तुभेऽप्याक्षेपः ( ५२ ); अलङ्कारकौस्तुभावलोकनेनापि मर्मप्रकाशाभिप्रायो नायाति ( ६३ ); कौस्तुभकृतां तदापाततः ( ९८ ); इत्यलङ्कारकौस्तुभटीका तत्रेदं चिन्तनीयम् ( १२७ ); तत्तु पण्डितराजखण्डनाभिनिवेशमात्रम् ( १२७ ); यत्तु

अलङ्कारकौस्तुभे ( १३० ); यत्तु अलङ्कारकौस्तुभटीकायाम् ( १४१ ); यत्तु कौस्तुभे तिरोहितभेदस्य साधर्म्यमर्थ उक्तस्तन्न समीचीनम् ( १६९ ); अत्र दीक्षितकुलकरङ्किणी मर्मप्रकाशनाम्नी तत्कन्या च कौस्तुभटीका ( १७३ ); अत्र·······अलङ्कारकौस्तुभश्च,·······तत्रेदं चिन्तनीयम् ( १८७ ); एवं च खण्डनपरः कौस्तुभो दुराग्रहपतित एव किन्तु महावैयाकरणत्वं पण्डितराजस्य न जानाति। तथा च समीचीनोऽयं पन्थाः परमेवमभि-प्रायमबुद्ध्वैव कौस्तुभस्य कपोलकल्पना ( १६१ ), यत्तु अलङ्कारकौस्तुभे······· इति, तदपि तुच्छमेव·······तेषां कथमतिसाहसम्, तत्र किं ब्रूमहे ( २२६ ); इति कौस्तुभोक्तिः खण्डिता ( २२६ ); अलङ्कारकौस्तुभे·······एकवचनम-विवक्षितम् इत्युक्तम्, तत्तु····अनभ्युपगमाभिमानेन ( २४८ ); अलङ्कारकौस्तुभः प्राचो विवेचयन्नपि विविक्ततामस्य न पश्यति, मन्ये रसगङ्गाधरप्रभावित इति ( २५३ ); इति ब्रुवन्नलङ्कारकौस्तुभो नादर्तव्यः ( ३२५ ); अत्र कौस्तुभ-कृत्खण्डनप्रकारोऽसमीचीन इति नेह प्रतन्यते ( ४१७ ); इति कथमिदं संगच्छते कौस्तुभकृतां प्रत्यवस्थानं युक्तम् ( ६०२ ) इति।

श्रीमदोझामहोदयैरलङ्कारकौस्तुभकृन्मतानां बहुत्र मण्डनमपि विहितम्। यथा—'तत्र·······अतिव्याप्तिवारणाय कौस्तुभोक्तस्य परिष्कारस्य आवश्यकता समापतति ( ४ ); कौस्तुभोक्तेन ( ५ ); इति कौस्तुभोद्धृते नातिव्याप्तिसन्देहः ( ८ ); इति चक्रवर्त्युक्तिं प्रमाणयतां विश्वेश्वरपण्डितानां खण्डनप्रकारौ ( १० ) अत एव विश्वेश्वरविदुषा·······इति काव्यप्रकाशग्रन्थस्य निष्कर्षः प्रदर्शितः ( २९ ); अलङ्कारकौस्तुभकृतस्तु ( ५४ ); कौस्तुभकृता तु ( ५९ ); अलङ्कारकौस्तुभटीकायाम् ( १५३ ); अलङ्कारकौस्तुभटीकायामेव ( १७५ ); इति कौस्तुभकारः ( २१६ ); अलङ्कारकौस्तुभकृतां वचनं संक्षिप्तम् ( ३९९ ); इति विश्वेश्वरपण्डिताः कौस्तुभकृतः ( ४५५ ); इत्यलङ्कारकौस्तुभकृतः; ( ५२ ); अलङ्कारकौस्तुभकृतस्तु ( ५४ ) अलङ्कारकौस्तुभटीकायां तु ( ५१२ ) इति।

विश्वेश्वरतोऽप्याधुनिकानां संस्कृतहिन्दीभाषाटीकाकाराणां मथुरानाथ-भट्टपुरुषोत्तमचतुर्वेदमदनमोहनादिदोषज्ञानां मतानि श्रीमदोझामहोदयेन सम्यक् समीक्षितानि। सरलायां नागेश आक्षिप्तः। श्रीमदोझामहोदयेन तस्यानौचित्यं मतम्। तेन सरलाया नागेशाक्षेपो न युज्यते ( २८८ ); अत्र सरला विषयमस्पृ-शन्ती स्वीयाज्ञानेन शुद्धमपि कलुषीकरोति·······। तेनासौ पण्डितः क्लिश्यन्नपि

न सफलः ( ३२३ ); सरलायां च ( ३६७ ); अत्र भानप्रकारयोरित्यनुवादयत चतुर्वेदिमहोदयेन टिप्पणीरूपेण सूचितं नैयायिकमतानुसारं तदेव च मदनमोहनविदुषाङ्गीकृतं सत्यमिति न भ्रमितव्यम्; अर्थांशपाण्डित्यविद्वेषिसाम्प्रदायिकस्य तस्यैव विषये भ्रान्तेः सुलभत्वात् ( १५ ); एतादृशे मदनमोहनपण्डितो मुह्यतीति सुधीभिरवधेयम् ( ६३ ); उद्देश्यतां विधेयतां च मूलोक्तविषयताशब्देन न जानाति मदनमोहनपण्डित इति ध्येयम् ( ११४ ); केचन व्याख्यातारो मर्मप्रकाशमेवं प्रकाशयन्तमाक्षिपन्तः क्रोधेऽनलमारोपयन्ति, ते तु स्थूलदृशोऽपि स्थूलमस्याशयं ग्रन्थस्य न स्पृशन्ति, ( १८५ ); मर्मप्रकाशे पितुः स्वस्य चापकर्षिकेत्युक्तम्; तन्न समन्वयपथमायाति । एवं सरलायामुपमेयस्य पितुः स्वस्य चोत्कर्ष इत्युक्तं तदपि न समीचीनम् ( ४१९ ); अत्रत्यहिन्दीचन्द्रिकाटीकाया हिन्दीरसगङ्गाधरालोचनपरायाः····न समीचीनम् ( ४३३ ) इति ।

अस्या रसचन्द्रिकाया व्याख्याकारेण रसगङ्गाधरस्य सुप्रसिद्धा गुरुमर्मप्रकाशाख्या व्याख्यापि वहुत्र पर्यालोचि । यथा—यत्तु काव्यप्रकाशटीकाकृतो मर्मप्रकाशकृतश्च····आहुस्तदपि न सम्यक् तत्रैवास्वारस्यप्रदर्शनाय केचित्तु-मतेनानतिरिक्ततायाः प्रदर्शयिष्यमाणत्वात् ( ७ ); परमत्रत्यप्रकाशपङ्क्तिः समीक्ष्यतां सूरिभिः ( ६२ ); अलङ्कारकौस्तुभावलोकनेनापि मर्मप्रकाशाभिप्रायो नायाति ।····दीक्षितोक्तस्य खण्डनपरतयैवास्य ग्रन्थसन्दर्भस्य संक्षेपेणोद्धरणात् टीकायां योजनाच्च । तेन च दीक्षितमत एव यदा-तदाभ्यामरुचिः सूच्यते····। दीक्षितकुलकिङ्करमर्मप्रकाशस्यापि दीक्षितसमीक्षितसरणिसंमार्जनाय प्रकाशितोऽप्यस्वरसो न समन्वयमेतीति विवेचनीयं विद्वद्भिरित्यलमधिकेन ( ६३ ); अत्र दीक्षितकुलकरङ्किणी मर्मप्रकाशनाम्नी तत्कन्या च कौस्तुभटीका ( १७३ ); अत्र मर्मप्रकाशः, अलङ्कारकौस्तुभश्च । तत्रेदं चिन्तनीयम् ( १८७ ); अत्र मर्मप्रकाशः—इदं तु चिन्त्यम् ( १९६ ); अत्रत्यमर्मप्रकाशगतचिन्त्यमिति वचनं न चिन्तनीयं प्रतिभाति, किन्तूपेक्षणीयमेवेति त्यज्यते ( २२० ); इति दृष्टान्तो मर्मप्रकाशप्रदर्शितो न किञ्चित् साधयति ( २२४ ) सशोकत्ववर्णनेऽपीत्यादिनाऽऽक्षिप्तं मर्मप्रकाशेन निर्मूलमेव ( ४१६ ); मूलग्रन्थाक्षरविवर्जितो मर्मप्रकाशो विव्रियते ( ४५६ ); तदा मर्मप्रकाशकल्पना न समीचीना ( ४५७ ); इति मर्मप्रकाशश्चिन्तनीयः ( ५१४ ); मर्मप्रकाशस्य····स्फुटं भेदप्रतीत्या विलाप एव ( ५२८ ); अत्र मर्मप्रकाशविलासोऽयम् ( ५३० ) इति ।

श्रीनागेशभट्टात् पूर्ववर्तिनो व्याख्याकारा ग्रन्थकाराश्चापि रसचन्द्रिकाकारेण दृढं पर्यालोचिताः । यथा—'यत्तु काव्यप्रकाशटीकाकृतः····आहुस्तदपि न सम्यक् ( ७ ); यत्तु काव्यप्रकाशटीकाकृता···· इति व्याख्यातम्, तत्तु अनुभवविरुद्धं दूषणग्रहगणग्रस्तं च ( ७ ); अस्य सूक्ष्मविचारे वहूनां व्याख्यातॄणां दोषः संभाव्यते, परं विस्तरभिया न प्रतन्यते ( ७१ ); काव्यप्रकाशोदाहरणं न संगच्छते ( २३५ ), दीक्षितग्रन्थे न्यूनतैव दोषोऽवसीयते ( २७८ ); दर्पणखण्डने तु विस्तरभिया न प्रयत्यते ( २७८ ) ।

श्रीमदोझामहाभागेन स्वव्याख्यायां रसगङ्गाधरमतपुष्टये मध्ये मध्ये तन्मतानुकूलानां ग्रन्थकाराणां व्याख्याकाराणां च मतानि समुपन्यस्तानि । यथा—निरूपितं चैतत् सर्वं मुक्तावल्यादौ ( २२ ); वामनाचार्यादीनां व्याख्यानं यथा ( २५ ); चक्रवर्तिप्रभृतिटीकाकाराणामपि मत एवमेव समन्वयस्य दृष्टत्वात् ( २६ ); अत एव विश्वेश्वरविदुषा···· ···इति काव्यप्रकाशग्रन्थस्य निष्कर्षः प्रदर्शितः ( २९ ); न्यायपञ्चाननप्रभृतयस्तु ( ३० ); काव्यप्रकाशटीकायां जयरामभट्टाचार्यैरभिहितम् ( ३६ ); अत्र नागेशभट्टमहोदयाः········इति व्याचख्युः ( ४० ), अत्र मर्मप्रकाशस्य शङ्कासमाधाने ( ४१ ); इति विश्वेश्वरपण्डिताः ( ५२ ); मर्मप्रकाशोऽपि ( ५६ ); अत्रत्यमर्मप्रकाशस्य तात्पर्यं योजनीयम् ( ६७ ); इवेत्यादावादिशब्दग्राह्याः काव्यादर्शे द्वितीयपरिच्छेदे संगृहीताः········( ७० ); अत्र मर्मप्रकाशः ( ७३; ७५; ८५ ); दण्डिमहोदयैस्तु स्फुटं न्यरूपि ( १०८ ); इति मर्मप्रकाशः ( ११० ); इति मर्मप्रकाशकारः ( ११९ ); दूषणमिदं मर्मप्रकाशोऽङ्गीचकार ( १२४ ); अत एव काव्यप्रदीपे ( १३० ); इति रत्नाकरस्याभिप्रायः ( १३७ ); काव्यप्रकाशाभिप्रायस्तु ( १४१ ); इति ग्रन्थकाराभिप्रायः ( १४१ ); इत्यादिना मर्म विध्यति मर्मप्रकाशः ( १५९ ) अन्येषां प्राचां दण्डिनां संवादमाह ( १६९ ); रत्नाकरादिमतेन ( २०७ ); चन्द्रालोकोक्तानाम् ( २१२ ); मर्मप्रकाशस्तु इत्थमप्यभिदधाति ( २२३ ); तथा दण्डिमहाभागाश्च ( ३०० ); अमरकोषरामाश्रमीरीत्या ( ३२४ ); इति उद्द्योतकरादयः, इति सुधासागरः, इति चन्द्रिका ( ३४० ); रविभट्टाचार्या·······इति वदन्ति ( ३४० ); उक्तं च तथैव काव्यप्रकाशटीकायां चक्रवर्तिनिर्मितायाम् ( ५०६ ) इति ।

यद्यपि श्रीमदोझामहोदयेन बहुत्र ग्रन्थकाराणां टीकाकर्तॄणां च नामोल्लेखपूर्वकं मतान्युद्धृतानि, खण्डनादिकं च व्यधायि; तथापि प्राचीनपरम्परामनु-

कुर्वताऽनेनानेकत्र 'अन्ये तु····इति वदन्ति ( ४ ); केचित्तु····अन्विताभिधानमाश्रित्य ( २९ ); केचन तु नात्र ( ३० ) अन्ये तु ( २१५ ); अन्ये तु·········इत्याहुः ( ३२४; ३३८); अत्र केचित् ( ३१५ ); अत्र केचित् ( ५८४ ); अन्ये च ( ३८४ ); अन्ये तु ( ४०० ); इत्यपरे ( ४२७ ) इति व्याहृतम् ।

स्वाभिप्रायाविष्कारो निर्णायकमताभिव्यक्तिर्ग्रन्थग्रन्थिभेदनं च कस्यापि व्याख्याकारस्य महनीयो गुणः । रसगङ्गाधररसचन्द्रिकाव्याख्यायामेष गुणः स्पष्टमवलोक्यते । यथा—भरतसूत्रानुसारात् काव्यप्रकाशीयालङ्कारलक्षणाक्षरस्वारस्याच्च अलङ्कारा न साक्षाद् रसमुपस्कुर्वन्ति ( १० ); चक्रवर्तिवचोवर्णनं तूभयत्र समानम् ( ११ ); इति पण्डितराजानामभिप्रायः ( ११ ); इति मर्मप्रकाशाभिप्रायः ( ३३ ); शक्तिकल्पनापेक्षया रूढत्वमेव समीचीनम् ( ७ ); वस्तुतस्तु······इति ग्रन्थकृतैवाग्रे वक्ष्यते ( ५ ); अत एव प्राचामिति पददानेनाऽरुचिः सूचिता ( ३० ); ग्रन्थकृद्द्वयो न रोचते ( ३१ ); पण्डितराजानां व्यवस्थैव विराजते ( ३७ ); रसगङ्गाधरप्रतिज्ञातप्रणाल्या ( ४२ ); इति पण्डितेन्द्रस्याभिप्रायः ( ५३ ); इति मूलाशयः ( ६० ); अयञ्चात्र निष्कर्षः प्रतिभाति ( ६३ ); परमत्रत्यमर्मप्रकाशपङ्क्तिः समीक्ष्यतां सूरिभिः ( ६२ );··· मर्मप्रकाशितो युक्त एव प्रतिभाति ( ६५ ); अत्रत्यमर्मप्रकाशस्य······तात्पर्यं योजनीयम् ( ६७ ); अतो ध्वनिकाव्यमिदम् ( ११२ );·········लक्षणां कृत्वा व्याख्यानमुचितम् ( १३० ); इति रत्नाकरस्याभिप्रायः ( १३७ ); काव्यप्रकाशाभिप्रायस्तु ( १४१ ); इति ग्रन्थकाराभिप्रायः ( १४१ ); तात्पर्यमुन्नीय पठनीयम् ( १८८ ); इति न ततो न्यूनता पण्डितराजस्यारोपणीया ( २१२ ); अयं भावः ( २२२ ); तेन पण्डितराजस्य खण्डनं नावसेयम् ( २४७ ); पण्डितराजस्य कीदृशी सम्मतिरत्रेति न निर्णेतुं शक्यते ( ३३१ ); वयं तु ब्रूमः ( ३३८ ); मम मते तु ( ४६९ ) इति ।

क्वचिन्निर्णयो विदुषामधीनः कृतः, क्वचिच्च विवेचनासरणिं दर्शयित्वाऽन्योऽपि ग्रन्थस्तदनुसारेणैव विवेचनार्थं निर्देशितः—'इति सुधियो विवेचयन्तु' ( ११; २६ ); इत्याह रसचन्द्रिकाकारः । एवमेव—'अनयैव दिशा सुधियो विभावयन्तु ( ४२ ); तदुक्तिस्तु सहृदयधुरीणैश्चिन्तनीया ( ५१ ); इति सुधियो विभावयन्तु ( ७५ ) इति ।

रसगङ्गाधरे पण्डितराजेन व्याकरणं व्याकरणदर्शनं च समुपन्यस्ते । अतस्तद्व्याख्याकारस्य व्याकरणशास्त्रनदीष्णता परमावश्यकी । अस्मादेव

कारणाद् व्याकरणशिरोमणिनागेशभट्टस्य व्याख्येह शीर्षण्या विराजते। श्रीमदोझामहोदयस्य व्याकरणशास्त्रस्वाध्यायमहिमा तत्कृतव्याकरणविचारसंदोहै-र्व्यज्यते। पण्डितराजस्य महावैयाकरणत्वं साधयति श्रीमदोझामहोदयः। यथा— 'किन्तु महावैयाकरणत्वं पण्डितराजस्य न जानाति' (९१) इति। अनेकत्र श्रीमदोझा-महाशयः पण्डितराजस्य पक्षे व्याख्याति। यथा -'इति ग्रन्थकृद्दृष्टान्तोऽभेदार्थ-कतायां वाचकत्वद्योतकत्वयोश्च नागोजिमते सुसंगतं न वा। वाचकत्वद्योतकत्वा-न्यतरपक्षे तु न पण्डितराजानामाग्रह उभयमतेऽपि उपपादनस्य पश्चादुक्तेः (२८); सादृश्यप्रतीतिष्वार्थीत्यादिना भाष्यव्याख्याकुशलैर्नागोजिभट्टैर्वर्णनात् सादृश्य-रूपोपमामतं पण्डितेन्द्राणां भाष्यविरुद्धमिति तु न शङ्क्यम्,⋯⋯उपमाया असम्भवात् ( ३१ ); तस्मादस्यामविवेकजन्यरजन्यां पण्डितराजस्य 'विधानात्' इति करपाल एव विराजते ( ३५ ); प्रायोऽत्रापि पण्डितराजस्य लेखेनोभयोः सार्थकता न प्रतीयते। तत्र शाब्दिका विमृशन्तु ( ४२–४३ ); तस्मात् पण्डित-राजव्याख्यानं भाष्यानुसारीति ध्येयम् ( ९२ ); शाब्दबोधं वर्णयतां पण्डित-राजानां मते कथं समानविभक्तिकत्वनिर्वाह इति शङ्कायाम् ( ९५ ); तथा च पण्डितराजमनुसरद्भिरालङ्कारिकैरेवं विषये प्रथमात्वेनैव स्वकीयः सिद्धान्त उद्घोषणीयः ( १०० ); पण्डितराजगतिरेव गतिरिति विभावनीयम् ( १०० ); पण्डितराजस्तु विभक्ताविव तत्समशीलं वतिप्रत्ययेऽपि लक्षणायां संचुकोच ( १०३ ); पण्डितराजविचारे पाणिनीयानुशासनमनुकूलमिति विशेषः ( १०७ ); प्राचीनार्वाचीनवृत्तिग्रन्थतत्त्वबोधिन्योरनुसारि पण्डित-राजस्य मतम् ( १६३ ); विशेषणं विशेष्येणेत्यादिनैव समासः सुलभः। तदानीमपि पण्डितराजस्यासाधारणः प्रयासः ( १९२ ); तदेव मतं पण्डित-राजस्यापीत्यनुमीयते ( १६२ ); अत्र पण्डितराजस्य एतत्सन्दर्भेण विवे-चनमपि किमप्युपकरिष्यति⋯⋯। तदा पण्डितराजो विजयते ( ३०२ ); पण्डितराजस्य केवलं मनोरमामर्दनाभिनिवेशेनैवमुक्तमित्यन्ये ( ४२७ ); इत्यभिप्रायो भाष्यस्य पण्डितराजसम्मतः ( ४२७ ); कौस्तुभकृता यदाक्षिप्तम्, तदुन्मूलनाय पक्षान्तरमुक्तमिति वच एव पण्डितराजस्य पर्याप्तम्⋯⋯इति तु महान् भ्रमः ( ८०१ ); इति पण्डितेन्द्रोक्तिमाक्षिपति अनुपासितचरणा अज्ञान-शरणा सरला।⋯⋯हा हा पाण्डित्यविनाशः ( ८०६ ) इति।

प्रौढमनोरमानिराकरणाय समुद्यताया अलङ्कारकौस्तुभटीकायाः प्रत्याख्यानं श्रीमदोझाकृतं द्रष्टव्यं सुधीभिरित्थम्—यत्तु अलङ्कारकौस्तुभटीकायाः स्थाल्वति-प्रत्यययोर्विषयभेदप्रदर्शनमात्रेण मनोरमाविरोधसाहसम्, तत्त साहसमात्रमेवेति

सुधीभिराकलनीयम् ( ३५ ) इति। रसचन्द्रिकाकारेण क्वचिन्नागोजिभट्टोऽपि पर्यालोचितो यथा यच्च मर्मप्रकाशादौ पुंवद्भावेन…… तत्तु दीक्षितपरम्पराभक्तिप्रसाधनमात्रम्, स्वयमेव शेखरेऽकारस्य स्पष्टार्थत्वोक्तेः……भाष्यकारेष्ट्या……भैरवादिभिः……भाष्यकारस्य …… भाष्यविरुद्धत्वाच्च ( ५५ ); अभेदान्वये च नियतसमानवचनकत्वापत्तेरिति मञ्जूषाकृतां मतं न समीचीनम् ( ६५ )……पाणिनीयमनुशासनं द्वितीयाविधायकम्। कातन्त्रमनुसृत्य मनोरमाशेखरादौ न मुनित्रयसम्मतम् ( १०० ); यत्तु यौतेः शत्रन्तादुगितश्चेति ङीपा ( 'युवती' इति ) सिद्धेरेतत्पर्यन्तानुधावनं व्यर्थं दुष्टं चेति मर्मप्रकाशसाधनम्, तत्तु गुरुद्रुहो भट्टोजिदीक्षितस्यानुसारेण शत्रर्थवर्तमानत्वाविवक्षाक्लेशादर्शनेन ( १६३ ); तदपि स्थूलं मर्मप्रकाशस्य ( १९१ ); यत्तु मर्मप्रकाशे……इत्याद्युक्तम्, तदपि वैयाकरणमञ्जूषायां शाब्दस्य स्वीयाप्रतिबध्यत्वोक्तेर्विरुद्धम् ( ३२६ ; द्वितीयार्थाभिप्रायेण मर्मप्रकाशोऽन्यथा व्याचख्यौ मूलम् ( ४०० ); सर्वं चिन्त्यम् ( ४२७ ); अत्र गुरुमर्मप्रकाशस्तदपि चिन्तनीयम् ( ६५७ ) इति।

परस्मैपदिनो धातोरात्मनेपदित्वसाधनं चक्षिङो ङित्करणाद् भवति। श्रीमदोझामहोदयेन तु 'न्यायसुधोक्तदिशा चान्द्रे व्याकरणे सर्वेभ्यो धातुभ्य आत्मनेपदं भवति' इति प्रतिपादितम् ( ७६६ )।

सरलाटीकाया व्याकरणज्ञानविहीनत्वं प्रतिपादयन् श्रीमदोझामहोदयः पर्यालोचयति—'मुग्धा सरला तु सर्वथैव पदपदार्थपरिचयहीना नकारं निषेधार्थं विच्छिन्दन्ती ग्रन्थार्थमेव गर्ते निपातयति ( ७८८ ); सरलाकृतं नागेशखण्डनं तु न युक्तं प्राचीनविवरणसमये तन्मतेनैव टीकाया उचितत्वात् ( ४२१ ); व्याकरणानभिज्ञस्य सरलाकृतो नातिचित्रम् ( ४३९ ); एतादृशविषमेषु स्थलेषु सरला स्खलेदेवेति च्छात्रैः सावधानैर्भाव्यम् (७०१); इति मर्मप्रकाशव्याख्या। सरला तु अन्यत् पदमेवापकर्षति ( ७०४ ); अशुद्धायां सरलायां न मुग्धेन भाव्यमित्यवधेयम् ( ७१९ ); इति पण्डितेन्द्रोक्तिमाक्षिपति अनुपासितचरणा अज्ञानशरणा सरला ( ८०६ ) इति।

श्रीमदोझामहोदयेन स्वकीयव्याख्यायां वस्तुतो मथितं व्याकरणस्य संनिवेशितम्। कानिचिदुदाहरणानीह विमर्शनीयानि। यथा—वैयाकरणमञ्जूषाकृतां मते ( ३ ); यद्यपि 'कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेन'…… ( ७ ); दण्डित्वमित्यादौ ( ८ ); आकृतिगणत्वं मयूरव्यंसकादेः शरणम् ( ९ );

वैयाकरणानां मते ( ६ ); कषायेण युक्तमित्यादिरीत्या ( १३ ); यती प्रयत्न इत्यस्मात् ( १३ ); चञ्चुगतौ भ्वादिकाच्छतृप्रत्ययेन ( १५ ); यद्यपि शेख-रादिव्याख्यानेन·······इति विचारणीयम् ( १६ ); अन्यैः प्राचीनैर्वैयाकरणैः ( १८-१६ ); तुल्यत्वेऽन्वयः ( २६ ); कटं भीष्मं कुर्वित्यत्र ( २६ ); तत्तु 'पूर्ववत्सनः' इति सूत्रस्थात् कैयटादायातीति संक्षेपः ( ३० ); पाणिनीयैः स्फुट-मनाश्रयणात् ( ३२ ); पूर्वोक्तकैयटग्रन्थोऽपि ( ३४-३५ ); शक्तिग्राहकशिरो-मणिमहर्षिप्रणीतं व्याकरणानुशासनं सर्वथैव नोल्लङ्घनीयम् ( ३५ ); सिद्धान्त-कौमुद्यामपि ( ४० ); वैयाकरणास्तु नामधातोरपि ( ४१ ); वैयाकरणमतेन तु श्रौतीत्यपि ध्येयम् ( ४१ ); कषायादिषु यथाविध्यनुप्रयोग इति सूत्रे णमुल्० ( ४२–४३ ); अत्र केचन णमुलोर्भेदः ( ४३ ); तत्तु वैयाकरणसम्प्रदाय-विरोधावहमिति न प्रपञ्च्यते ( ४७ ); भाष्योदाहरणे गम्यमाने ( ५१ ); कैयटे-नापि ( ५३ ); अत एव तत्त्वबोधिन्यां तद्धितशेखरभैरव्यां च भूरिप्रयुक्त······· ( ४५ ); पद्मं नाभौ यस्येति विग्रहे गड्वादिभ्यः परा सप्तमी ( ६१ ); भानुजि-दीक्षितास्तु ( ७१ ); उपमानोपमेययोः कर्मधारयसमासाय साधारणतया तिस्रो गतयः ( ७९ ); सन्धिस्तु 'पुत्रेति तन्मयतया' इत्यादिरीत्या समेषां प्लुतानां विकल्पतया मनोरमोक्तदिशा सम्भवत्येव ( ७९-८० ); नागोजिभट्टा-स्तु मञ्जूषायाम्··· ····( ८५ ); स्फोटनिरूपणे ( ८६ ); नागोजिमहोदयास्तु ( ८६ ); वैयाकरणास्तु ( ८६ ); उक्तं च भूषणे ( ६० ); प्रतिपादितं चैतद् दर्पणादिटीकायाम् ( ९० ); इति व्याकरणमतदिग्दर्शनम्. तन्न समीचीनम्··· ( ६१ ); अत्र वैयाकरणसिद्धान्तलघुमञ्जूषाकृतस्तदनुयायिनो वामनादय आलङ्कारिकाः ( ६१ ); भाष्यमपि ( ६१ ) शङ्काभाष्यं तु शस्त्रीशब्दः (९२); चैत्रेण पच्यते ( ९३-६४ ); मञ्जूषाकृतां मते ( ९४ ); भूषणादिषु शरपदस्य ( ६५ ); शाब्दबोधं वर्णयतां पण्डितराजानां मते (९५); कृष्णमित्रभट्टाचार्या-स्तु यूयमिवाचरति········(६५); अभेदान्वये च (६५); भाधातोर्धीर्ज्ञानमर्थः ( ६५ ); शाब्दिकसरण्या व्यापारमुख्यविशेष्यकस्तु········( ६५ ); भूषणादि-व्यवस्थापितरीत्या ( ६८-६६ ); व्यापारमुख्यविशेष्यक एव (९९); न च क्रिया-विशेषणत्वे········( १०० ); यत्तु निर्मितिमादधातीत्यादौ काव्यप्रकाशप्रयोगे क्रियाविशेषणेऽपि नपुंसकत्वादर्शनात् ( १०० ); साम्यार्थप्रतिपादकोऽमरस्तु 'ईदूदेद्द्विवचनम्' इत्यादिसूत्रे मनोरमायां भट्टोजिदीक्षितैर्मारितः ( १०१ ); अत्र नागोजिमहाभागाः वस्तुतस्तु······इतिवद् इति चिन्त्यमिदम् ( १०१ ); लक्षणेति महाभाष्यकारादयः ( १०१ ); तेन तुल्यशब्दस्य नपुंसकता प्रथमान्तता

च सामान्ये नपुंसकम् इति नियमेन कैयटनागेशाभ्यामङ्गीकृता ( १०२ ); वयं तु—इवार्थवतौ ( १०३ ); आचारमात्रे क्यजर्थे……( १०६ ); वैयाकरण-भूषणोक्तविनिगमकाभावप्रतिपादनं परास्तम् ( १०८ );……न समानवचन-कत्वं शास्त्रनियन्त्रितम् ( १०८ ); 'प्रकृतिप्रत्ययौ……' इति न्यायोऽपि वैयाकरणानामनुगृह्यते ( १४९ ); यत्तु यौतेः शत्रन्तादुगितश्चेति ङीपा……( १६३ ); एवं च शाब्दबोधे ( १६७ ); यत्तु मयूरव्यंसकादेः……( १९१ ); विशेषणं विशेष्येणेत्यादिनैव ( १९२ ); महाभाष्यं यावदुद्धरतो गदाधरस्य ( १९२ ); भवतु नाम वैयाकरणानाम् ( १९२ ); अभेदत्वसंबन्धावच्छिन्न……केत्यर्थः ( १९७ ); एवमेव व्यवस्था वैयाकरणसिद्धान्तमञ्जूषायाम्। तत्रेदं चिन्तावीजम्……( १९९ ); पदे पदार्थनिरूपिता……शक्तिरिति वैयाकरणानां मतम् ( २२५ ); सिद्धान्तकौमुदीमूलस्यापि व्युत्पत्तिं निषेधति ( २२८ ); पृषोदरादित्वाच्च निपातयन्ति……( २६० ); अथवा न वेति विभाषेति सूत्रम्……(२७१); व्याकरणमतेनोपक्रमते ( २८६ ); स्फोरितं चेदं व्याकरण-मतं भूषणादौ ( २९९ ); 'धातोः कर्मणः' इत्यादिसूत्रे भाष्ये ( ३०१–२ ); ननु धात्वर्थः फलम् ( ३०३ ); इति भाष्यविरोधः, तन्न समीचीनम् ( ३०५ ); वैयाकरणमञ्जूषायां शब्दस्य स्वीयाप्रतिबध्यत्वोक्तेर्विरुद्धम् ( ३२६ );……इत्यादिभाष्यप्रयोगेण ( ३४१ ); वैयाकरणसिद्धान्तस्तु वैयाकरणमञ्जूषायां निहितः ( ३४१ ); उपपदविभक्तेरित्यादिपरिभाषायाः……( ४२५ ); व्याकरणानभिज्ञस्य सरलताकृतो नातिचित्रम् ( ४३९ );……मञ्जूषायाम् ( ४६६ ); ण्यन्तस्य धातोर्हि द्विकर्मकत्वं……सामान्यकर्मत्वं व्यावर्तयति (६३२-३३ ); जयदेवमिश्रकृता शास्त्रार्थरत्नावली पठनीया ( ७०५ ); एष एव पन्थाः सिद्धान्तकौमुद्या अपि। शेखरे तु……भाष्यसम्मते……परं शेखरं खण्डयित्वा कैयटानुयायिभिः ( ७४५ ); कान्दिशीकशब्दो लक्षणया भीतिमात्रे……ठकि पृषोदरादित्वात् साधुः। अन्ये तु कदिशीकृधातुभ्यां साधयन्ति ( ७७१ ) इति।

न्यायसिद्धान्तोपपादनाय श्रीमदोझामहाभागैर्न्यायवाङ्मयमपि निर्मथितम्। यथा—नैयायिकास्तु कृदभिहितो भावो द्रव्यवत् प्रकाशत इत्यनुशासनोपयोगं वर्णयन्ति ( ९ ); अत्र नैयायिकानुयायिनः ( ३३ ); आख्यातवादशिरोमणि-विवरणे……वर्धमानचरणैरभिहितम् ( ३४ ); नव्यनैयायिकैरपि गदाधरा-

दिभिः ( ३५ ); इति जगदीशतर्कालङ्कारमतम् । तदनुसारेण वर्णितम् ( ८८ ); गदाधरभट्टाचार्याणां मते तु…… ( ८८ ); नैयायिका वर्णयन्ति ( ८९ );…… शक्तिवादव्युत्पत्तिवादटीकादिषु ( ६० ); नित्यसापेक्षत्वं च व्युत्पत्तिवादगूढार्थतत्त्वालोके……। वस्तुतो नेदं ग्रन्थकृतामभिप्रेतं प्रतिभाति ( ९० ); नैयायिकरीत्या प्रथमान्तार्थमुख्यविशेष्यकः शाब्दबोधः ( ६५ ); दीधितिव्याख्यायां मर्मप्रकाशकृतोऽक्षराणि ( ९८ ); वस्तुतस्तु …… वनकर्मक……कृतिमान् शूर इति बोधः ( ९८ ); इति चिन्त्यम् ( ९८ ); किन्तु तात्पर्यग्राहकम् इति नैयायिकरीत्याऽवसेयः ( ६६ ); पण्डितराजस्तु विधेयस्य सादृश्यानुयोगितया यत्र भानं तत्रोपमाया विधेयत्वमभिप्रैति ( ९९ ); तदा नैयायिकमते दोषः ( ९९ ); उपसर्गाणां द्योतकताया नैयायिकसंमततया दृष्टान्तता ( १०७ ); वै० स्वावच्छिन्नप्रतियोगिताकत्वेन ज्ञायमानसादृश्यविषयकत्वम्, स्वावच्छिन्नानुयोगिताकत्वेन ज्ञायमानसादृश्यविषयकत्वम्' स्वविशिष्टसादृश्यनिषेधव्यञ्जनोद्बोधकत्वम्, एतत्त्रितयसंबन्धेन तत्र वै० स्वावच्छिन्न……ज्ञायमानत्वम् ( १३०-३१ ); क्रियाप्रधानमाख्यातम् इति न्यायवार्त्तिकम् ( १४९ ); नैयायिकनये तदनुयायिवैयाकरणपरिष्कारे च ( १६०-६१ ); पर्वते वह्निधूमः ……साध्यताहेतुतावच्छेदकसंबन्धे जागदीशी द्रष्टव्या ( १६१ ); वैशिष्ट्यं च स्वप्रतियोगिक……( २१३ ); आलङ्कारिकेषु न्यायपञ्चाननादयो न्यायलीलावत्यादौ…… ( २७९ ; इति पक्षधरमिश्रलक्षणं न्यायव्याकरणटीकादिषु ( २९५ ); वैशिष्ट्यं च स्वप्रयोज्यत्व……( ३५१ ); शक्यतावच्छेदकतायाः सर्वैस्तिरस्कारात् ( ५२२ ); न्यायमुक्तावल्यां निर्विकल्पकनिरूपणावसरे ( ५६४ ); व्याप्यस्य हेतोः पक्षे वृत्तित्वं पक्षधर्मता ( ७०१ ) इति ।

पाठभेदनिरूपणप्रक्रिया न तावदद्यतनी । पण्डितराजकाले, ततश्चापि बहुतिथात् कालात् प्रागियं पाठभेदनिर्णयप्रणाली विद्यते स्म । पण्डितराजेन रसगङ्गाधरे— 'इति पाठे……असङ्गतत्वापत्तेः' ( ५३ ) इति न्यरूपि । रसचन्द्रिकाकारेण श्रीमदोझामहोदयेन तु रसगङ्गाधरस्य सर्वाष्टीकाः परिशील्य महता श्रमेण पाठभेदा विवेचिताः, निर्णीताश्च सन्ति । नूनं महदिदं तदीयं कार्यम् । तेन कुत्रचित् पाठान्तराणि समुद्धृतानि क्वचिच्च तेषां युक्तायुक्तत्वे अभ्यधायिषाताम्; क्वचित्तु पाठान्तरे पाठभेदे वा मुद्रणाशुद्धयो हेतुत्वेन निर्दिष्टाः सन्ति । यथा--

कुत्रचित् पुस्तकान्तरे 'विभाति वदनं तस्याः' इति पाठान्तरं दृश्यते ( १२ ); सत्त्वस्थाने तत्त्वशब्दोऽपि कुत्रचित् सम्पठ्यते (८४); क्वचित् सदैवेत्यपि पाठः ( २६८ ); क्वचिदुत्तरार्ध इत्यपि पाठः (२९२); कुत्रचिन्मूलेऽपि शत्रेति पाठः ( ३३० ); क्वचिदुभयोरिति पाठो नास्ति ( ५०८ ); आननमित्यस्य स्थाने आसनमिति कुत्रत्येचित् पाठे तदुपयु'पविशतीत्यर्थः ( ५१२ ); 'मनःप्रसादः' इत्यपि क्वाचित्कः पाठः ( ५५१ ); मा याहीति क्वाचित्के पाठे ( ५५४ ); कुत्रचिन्नेत्रे निरञ्जने इत्यपि पाठः ( ६०३ ); क्वचिद् भकारस्थाने हकारः पठ्यते ( ७२० ); कुत्रचित् पुस्तके मृष्टमित्यस्य स्थाने मग्नं लग्नमिति वा मुद्रितमस्ति ( ८०० ) इति क्वाचित्कपाठवर्णना ।

इदानीं विद्वद्भिरुद्धृतपाठनिरूपणा--( 'आलक्षितबुधाश्लेषम्' इत्यस्य स्थाने ) 'आलक्षितश्लिष्टबुधम्' इति पाठं मर्मप्रकाशाकृतः सम्यङ् मन्यन्ते (१२); 'रक्तमेवास्तमेति च' इति पाठे दुष्टतेति प्राञ्चः ( ६२ ); अन्ये तु 'हरिहितमालः' इति पाठं वर्णयन्ति ( २१५ ); अत्र कश्चित् पाठभ्रंशः सर्वपुस्तके दुर्लभो मर्मप्रकाशसम्मतः ( २७४ ); ववेत्यादिपाठः कतिपयटीकासंमतो भट्टोजिदीक्षितैर्व्यवस्थापितः ( ३५ ); अन्ये त्वेवमेव पाठः समीचीन इति ब्रुवते ( ६० ); मुद्रणाशुद्धिकारणात्पाठभेदत्रयं प्रदर्श्यते—

कुत्रचिन्मुद्रिते पुस्तके कोपमेति पाठोऽशुद्धतर एव ( ८ ); क्वचिदुपेयसिद्धयेत्यशुद्धं मुद्रितम् ( ७७० ); कुत्रचित् पुस्तके मृष्टमित्यस्य स्थाने मग्नं लग्नमिति वा मुद्रितमस्ति ( ८०० ) इति ।

बहुत्र व्याख्याकृता पाठभेदनिर्णयोऽपि कृतः, यः खलु तस्य गवेषणाधिषणामाविर्भावयति । यथा—अत्र ग्रन्थे निमित्तकेति पाठः । तेन च चाञ्चल्यस्य निमित्तं चूर्णनं वेगस्य च संहारः प्रतीयते । तथैव त्र हिन्दीभाषायामनूदितम्, मम लेखे च चाञ्चल्यमेव चूर्णनस्य वेगश्च संहारस्य निमित्तं विपरीतमिवोक्तम् । तदशुद्धं न भ्रमितव्यम्; यतो निमित्तात् कर्मयोगे इति वार्त्तिकेनात्र सप्तम्या फलस्य च तत्र निमित्तपदेन ग्रहणात् चूर्णनं चाञ्चल्यस्य फलमिति क्रमेण चाञ्चल्ये चूर्णननिमित्तत्वस्य फलितत्वात् ( १६ ; अत्र रमणोऽसीत्यपि पाठः । तत्र समन्वितेति निर्विसर्गः पाठस्तदा त्वंशब्दमहिम्ना प्रतीयमानः संबोधनान्तः समीचीनः पाठः ( ७६ ); यदि तु समन्वित इत्यत्र सविसर्गः पाठस्तदा रमण इति पाठोऽपि सम्यक् ( ८० ); एष पाठोऽपि समीचीनः ( १८३ ); कुरङ्गपर्याये

प्राय ऋश्य इत्येव पाठो दृश्यते, तथापि कुत्रचिद् ऋष्यपाठमाश्रित्येदम् ऋष्यकेतुशब्दस्य चन्द्रोऽर्थो न युक्तः 'ब्रह्मसूः ऋष्यकेतुः स्यात्' इत्यमरकोशात् कामदेवार्थस्य प्रसिद्धे ······इति ब्रुवाणा सरला नागेशोक्तिं खण्डयति; अत्रेदं तात्पर्यं नागेशस्य प्रतिभाति । ब्रह्मसूर्विश्वकेतुः स्यात्' इत्येवामरपाठः प्रसिद्धः । क्वाचित्कं सन्धिजटिलं पाठमपेक्ष्य चन्द्रार्थता प्रसिद्धिमनुसरति ( २३६-३७ ); अभेदेनेति पाठ उपपादने क्लेशकरोऽधिकः प्रतिभाति ( २४५ ); मित्रं प्रति पद्येदम्, मित्रं प्रति यदेदम् इति वा पाठः । द्वितीयः सम्यक् ( २४८ ); 'तुल्य-योगिता अनुगुणतया' इति समासरहित एव पाठो विधेयः ( २७५ ); 'कदाचन आवहसे' मूलपाठः स्यात् ( २८० ); इत्यर्थः शुद्धः पाठः ( ३२३ ); चकारस्य स्थाने वाकारस्य पाठः समुचितः ( ३४८ ); अमन्दमिति पाठे क्रियाविशेषणम् ( ३८७ ); ब्रुवन्निति पाठस्तु न रसगङ्गाधरसम्मतः ( ३९९ ); इत्यशुद्धं विप-रीतं पाठं धृत्वा बहवो व्याचक्षते । स च पाठ एतद्ग्रन्थसन्दर्भविरुद्धः सर्वस्व-ग्रन्थविरुद्धश्चेति तच्चर्चा त्यज्यते ( ४६४ ); अविन्यास इति च्छेदाभावे यथाश्रुतः पाठो न सम्यक् समन्वयमेति ( ४७८ ); संशोधनाभिमानिनो ग्रन्थे सरलाकृत्सम्पादिते त्वशब्दरहितः पाठः सर्वथाऽशुद्ध एव ( ४९८ ); इति पाठो लेखककल्पितोऽपपाठः ( ५९२ ); इतिं पाठो ग्राह्यः ( ५६२ ); हन्तेयं सरला प्रदीपोद्द्योतेऽपि प्रविष्टाऽशुद्धमेव पाठं रक्षितवती, न कश्चिदशोधयत् (६१३); नञ्कारसहितः पाठः प्राङ्मुद्रितोऽशुद्धो नञ्रहितः शुद्धः ( ७३५ ); अत्र लेखकदोषपरम्परया विषयकाठिन्येन सरलाया बुद्धावनवताराच्च नकाररहितः पाठः प्रसिद्धिं गतः ।······ नकारसहितः पाठः समुचितः ( ७८६ ) इति ।

अस्या रसचन्द्रिकाख्याया व्याख्यायाः केचिदंशा विद्वत्तल्लजैर्विमृश्याः— 'कदा किन्नो विद्वेषः पण्डितेन्द्रानुगामितां नीते मम्मटे' ( २३ ); मञ्जूषादि-वासितान्तःकरणानां नूतनानां वामनाचार्यादीनां व्याख्यानं यथा ( २५ ); इति मर्मप्रकाशप्रदर्शितसिद्धान्तं शङ्काविधयोपपाद्य खण्डयति ( पण्डितराजः ) इति ।

एवं तावद् व्याकरणन्यायसाहित्याद्यनेकशास्त्राभ्यसनपटीयस्या शेमुष्या विभासितान्तःकरणानां पण्डिताग्रगण्यानाम् ओझोपाह्वश्रीमत्केदारनाथमहोदयानां रसगङ्गाधररसचन्द्रिकाख्या व्याख्येयं कियता श्रमेण शास्त्रमन्थनजन्य-मेधया स्वोपज्ञविचारविसरैश्च सम्पुष्टेति कोविदैरभ्युपगतमेव विलोक्य कतिचिन्नि-दर्शनानि । समुद्भासते प्राचीनशास्त्रलेखनपरम्परापरिपाटीशाटी साम्प्रतमपि,

यस्यां गुम्फ्यन्ते गभीराणि तत्त्वानि, विशकलीक्रियन्ते च पुनस्तानि। रसचन्द्रिकेयं नूनं नाना कस्माच्चिदपि सूत्कृष्टादनुसन्धानकर्मण इति निश्चप्रचं शक्यते वक्तुम्। तामिमां द्वितीयभागात्मिकां सरस्वतीभवनग्रन्थमालायास्त्रयोदशोत्तरशत पुष्पतया विकचमानामवलोक्य चिराय प्रतीक्षमाणा विद्वज्जना जिज्ञासुजनाश्च प्रीणिता भृशमुपकृताश्च भवेयुरिति ध्रुवं प्रत्येति

वाराणस्याम्
लोलार्कषष्ठ्यां २०३८ वै०
( ४-९-८१ खी० भृगौ )

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
निदेशकः
अनुसन्धानसंस्थानस्य

# भूमिका

चतुष्टयेवर्षं न पूर्णविराममहत्काठिन्यमावहता कथमपि श्रीगौरीनाथ-शास्त्रिकुलपतिप्रसादं प्रतीक्षमाणमिव प्रकाशनमस्य सम्पद्यते ? रसचन्द्रिकाया रचनापूर्त्यनन्तरं कतिपयांशानां श्रवणेन परिचयभाजां प्रकाशनं समीहमानानां कृतप्रयासानां विदुषां शुभाशैव प्रत्यूहपाथोधौ तरणो अभूदिति मन्ये। तेषु निम्ननिर्दिष्टानां माननीयमनीषिणां हस्ताक्षराङ्किता लेखा अद्यापि विराजन्ते।

(१) माध्वसम्प्रदायाचार्याः श्रीमन्तो दामोदरलालगोस्वामिमहाराजाः।

(२) काशीस्थराजकीयसंस्कृतमहाविद्यालयप्राचार्याः काशीस्था महामहोपाध्यायाः श्रीनारायणशास्त्रिखिस्तेमहोदयाः।

(३) काशीहिन्दूविश्वविद्यालयसाहित्यविभागाध्यक्षाः कविचक्रवर्तिकीर्तिकरम्बिताः श्रीमहादेवपाण्डेयमहोदयाः, पश्चाच्च श्रीमहेश्वरानन्दसरस्वती-शुभनाम्ना काशीपीठाधीश्वराः शङ्कराचार्याः। रसचन्द्रिकारचनासमये पत्रोत्तररूपेण तेषां कराङ्किताः स्वल्पा लिपयोऽपि लीलायन्ते।

(४) चिरन्तना अर्चनीयचरणा मधुरं वात्सल्यं विकिरन्तः काशीहिन्दू-विश्वविद्यालयसंस्कृतमहाविद्यालयाध्यक्षाः श्रीकालीप्रसादमिश्रमहोदयाः।

(५) जयपुरमहाराजसंस्कृतमहाविद्यालयाध्यक्षा मीमांसान्यायकेसरिणो मीमांसान्यायसाहित्याचार्या बहुविश्रुता हनुमान्घाटकाश्यामधुना विराजमानाः समादरणीयसुहृदः श्री P. N. पट्टाभिरामशास्त्रिणः। अन्येषां पुण्यस्मरणेनैव कृतज्ञतां प्रदर्शयामि।

उपसंहारपद्यं भारतस्वातन्त्र्यस्य प्रथमशिवरात्रिपर्वणि रसचन्द्रिकारचना-पूर्तिचर्चां विदधाति। एवं चतुस्त्रिंशद् वर्षाणि अस्याः प्रकाशनं मम दैन्यं दौर्बल्यं सुरगिर उपेक्षाञ्च प्रकाशयति।

काश्यामागमनात् प्रागेव वर्षद्वयं बहिःस्थिते स्वद्रव्येण मुद्रापणाय सन्नद्धे मयि न कश्चित् काशीस्थो मुद्रणालयो मुद्रणाय समनह्यत। काश्यामागतोऽपि द्रुतमेव रोगाक्रान्तश्चिकित्सायै जोधपुरं गत इति प्रथमभागोऽपि प्रतिकूलपयो-दापन्न एव कथमपि उदैत।

महतोऽस्य द्वितीयभागस्यापि मुद्रणाय विश्वविद्यालयस्य प्रकाशनविभागः १९७७ जुलाईमासे पाण्डुलिपिमार्पयत्। मुद्रणालयकार्यप्रणाल्या अव्यवस्थया मुद्रणमेव न मन्थरम्, अपि तु अनुस्वारोपरितनसूक्ष्मरेफादिवर्णानाम् उपरितनीनां मात्राणाञ्च मुद्रणमतिसंकीर्णं प्राचलत्। असकृद् निदेशक-कुलसचिव-कुलपतयो निवेदिताः, तैश्च प्रकाशनाधिकारिणः प्रेरितास्ततोऽपि चिरेण १९८० जुलाई मासे मुद्रणालयपरिवर्तनं जातम्। तत्रापि नैककारणवशाद् विलम्बेनैव वै कथमपि मुद्रणं समाप्तिमापत्। तत्र मम निरन्तरं प्रवर्तमाने निवेदनप्रयासे येऽधिकारिणः कष्टमन्वभवन्, तेभ्यः क्षमां याचे, प्रार्थये चेदं यद् भवतां कार्यार्थमेवेदं निरन्तरं निवेदनम्। तत्पूर्तौ कष्टं सुखं सहन्ताम्। ये च विश्वविद्यालयाधिकारिणो मम प्रार्थनया मम कष्टं सहान्वभवन् कार्यकर्तृंश्च प्रैरिरन्, तेभ्यस्तदुपकारभार-भुग्नतामेव स्वीयां प्रदर्श्याकिञ्चनः कृतकृत्यतामवलम्बे।

रसचन्द्रिकारचनासमये या रसगङ्गाधरस्यावस्था आसीत्, तदनुसारी मम श्रमः सम्यगेवेति एतावता तोषः, परं महता विलम्बेनास्याः प्रकाशनम्, एतावति काले रसगङ्गाधरस्यावस्था परिवर्तिता, हिन्दीसंस्कृतनैकव्याख्या-विलासयुता विराजते। तामनुसृत्य तस्याः कलेवरे किमपि परिवर्तनं परिवर्द्धनं वा न कर्तुमपारयम्। चिरन्तनी अपि सा तथैव प्रकाशते।

द्वितीयभागस्य प्रकाशनात् प्राग् लक्षणाविषये 'सारस्वती सुषमाऽभिधायां पत्रिकायां पण्डितप्रकाण्डानां श्रीलोकनाथमिश्रमहोदयानां पुस्तकमपश्यम्। मनसि उदैत यदस्य कश्चित् सम्बन्धो रसचन्द्रिकया जायेत, परं नाभूत्, पाण्डु-लिपिसमर्पणस्य स समयः, अतिसंक्षिप्तस्यैवावसरः, तस्मिन् पुस्तके कार्य-कारणभावस्याननुगतस्य मार्गभेदः, पण्डितराजस्यानुगतः प्रायः सामान्यमावहन् स्थूलः कार्यकारणभावः, संक्षेपेण न संभवति, तेषां कार्यकारणभावानां स्वरूपं पण्डितराजप्रदर्शितमार्गे आनीय तदनन्तरं तुलना जायेत। भूयान् लेखो वर्धेत।

इदं त्वतिखेदावहं श्रोतृणां विस्मयकारि च यत् काश्या बहिः स्थितस्य मम निबन्धे संस्कृतपत्रे प्रकाशिते (श्रूयते) इति कृत्वा तेषां पण्डितानां पञ्चमोच्छ्वासपर्यन्तायाः काव्यप्रकाशटीकायाः क्षणक्रमयुतायाः प्रकाशनस्य चर्चा विद्यते, पञ्चमं वत्सरञ्च याति मम काशीवासस्य, नाद्यापि मम हतभाग्ये नेत्रे अपावयत् तत्पुस्तकम्। तत्र मम शरीरशैथिल्यवशाद् गमनागमनसंकोचः, क्रयं विनैव पुस्तकावलोकनसमीहालाभः, ज्यायसां मान्यानां सविधे स्वकार्यार्थं प्रार्थनायां साहसाभावः, अध्ययनशीलानां यवीयसां विदुषां सहयोगाभाव-प्रभृतयः कारणानि भवन्ति।

रसप्रकरणव्याख्यानवेलायां विस्तराद् विभ्यतैव मया ख्यातयो वर्णिताः, भीतिवशादेव क्षणप्रक्रियां न प्रादर्शयम्। माननीया वृद्धा मनीषिणो डॉ० श्रीवीरमण्युपाध्यायमहोदयाः सतीर्थ्याः काश्यां तुलसीघट्टे निवसन्तो वदन्ति सद् गुरोरधीत्य विलिख्य श्रावयित्वा च सुरक्षिताः सन्ति मम सविधेऽद्यापि क्षणप्रक्रियाः।

प्रथमभागस्य मुद्रणं ममायत्तमासीत् प्रकाशनमेव विश्वविद्यालयस्य, तदानीं महापण्डिता मम हितोद्यता अध्ययनाध्यापनलेखनप्रकाशनपरायणा आदरणीया डॉ० श्रीगोपालशास्त्रिदर्शनकेसरिमहोदयाः प्रकाशनात् प्राक् सर्वान् मुद्रितान् अवालोकयन्, तेनाशुद्धिशुद्धिपत्रनिर्माणे कश्चित् समाश्वासोऽजायत। एवमेव विद्यावैजयन्तीनिबन्धमाला प्रथमभागस्य मुद्रणप्रकाशनयोः। तदनन्तरञ्च महानुभावास्ते भृशमस्वस्थाः, तेषां समक्षमेतादृशनूतनवस्तूपस्थापनं नाम तेषामस्वास्थस्य बलदानं जायत इति सर्वं स्वयमेव योजनीयं शोधनीयञ्च समापतितम्, पूर्वरूपादिप्रेक्षणे क्रमशो द्वयोः प्रेक्षणं गुणमर्जयतीति प्रसिद्धम्। वस्तुतो नेत्राभ्यां श्रवणाभ्याञ्च शुध्यति, केवले नेत्रे त्वान्तरमेव बहिर्दृश्यत इति योगाचारगीतमाचरतो न सम्मुखस्थं पश्यतः।

रसगङ्गाधरस्य द्वितीयभागस्याल..ारनिरूपणस्य चन्द्रिका-मधुसूदनीटीकाभ्यां कापि नूतना दशाऽपि नानीता, रसचन्द्रिका इदानीमप्युपयोगिनी। आलङ्कारिकग्रन्थपरिशीलनपरेभ्यो विद्वद्भ्योऽन्यालङ्कारिकग्रन्थानामालोडनं यथा रसचन्द्रिका प्रकाशयेन्न तथा अन्या टीका। दीक्षितपण्डितराजसंगरे अलङ्कारचन्द्रिका, गुरुमर्मप्रकाशः, अलङ्कारकौस्तुभमिति त्रयो दीक्षितपक्षे सन्नद्धाः, परिडाऽतेन्द्रस्यैकाकिनी रसचन्द्रिका तत्र कथं खेलतीति शास्त्रार्थकौतुकिनोऽत्रैव द्रक्ष्यन्ति। चित्रमीमांसाखण्डनखण्डनं चिरेण केनचित् कौतुककरेण सज्जीकृतं प्रकाशितं च कुत्रचित् पुस्तकालयेषूपलभ्येत। इदं रसचन्द्रिकाप्रकाशनं चित्रमीमांसाखण्डनखण्डनखण्डनप्रकाशनमप्यवदधतु पाठकाः।

मया कृतं दीक्षितमतसमर्थनमुदयपुरप्रकाशितं स्वरमङ्गलापत्रिकायां प्रकाशितं चित्रमीमांसाया अर्थचित्रं निबन्धं पश्यन्तु, तत्र मिलिष्यति। अचिरेण प्रकाशयिष्यमाणायामालङ्कारिकनिबन्धमालायां संस्कृते हिन्द्याञ्च द्रष्टुं शक्ष्यन्ति।

अलङ्कारचन्द्रिका स्फुटोपपादिका कुवलयानन्दस्य टीका प्रसिद्धा। मम गुरुचरणैर्भृशं प्रशंसिता, 'चिरमालङ्कारिकग्रन्थान् परिशीलयतो मम बड़ोदानगरेऽकस्माद् दृष्टिपथं प्रयाता, अवलोकिता च। तत्रैव प्रयासेन क्रीता आलङ्कारिक-

शास्त्रप्रवेशायाकल्पत इत्यपि तेषामुक्तिं स्मरामि। अलङ्कारसामान्यलक्षणं तस्या बहूनां कण्ठस्थं शृणोमि।

गुरुमर्मप्रकाशस्य परम्परया लिखितस्य मुद्रितस्याशुद्धिर्मामक्लेशयत्। अस्य संशोधनाय असकृत् संस्कृतपत्रिकामाध्यमेन न्यवेदयम्। संशोधनप्रणयिनः सदुद्यमपरा मनीषिणस्तदर्थमिमां रसचन्द्रिकामपि अवलोकयन्तु इति प्रार्थये। हां महापण्डितेन मधुसूदन्या साकं प्रकाशितोऽवश्यं शुद्ध इति प्रसीदामि, नाद्यापि पठितुमपारयम्। परिचितस्वभावस्य श्रमे संदिहानः सर्वथा शुद्ध इति प्रकटने संकोचमाप्नोमि।

अलङ्कारकौस्तुभं परिष्कारप्रवीणं नैकशास्त्रविचारधुरीणं रसगङ्गाधरानन्तरं विश्वेश्वरविदुषा स्वतन्त्रविचारशोभि नूतनं प्रकाशितमलङ्कारशास्त्रपुस्तकम् आधुनिकैरालङ्कारिकैरस्पृष्टमिव प्रतिभाति, बलात् कैश्चित् परीक्षायां सन्निवेश्येत, तदैव तैः पठ्येतेत्येव प्रतिभाति। अस्य प्रकाशनानन्तरं तिस्रो रसगङ्गाधरस्य व्याख्याः प्राकटन्, परं तिस्रोऽपि शापग्रस्ता इव कौस्तुभं न स्पृशन्ति, रसगङ्गाधरस्य बहूनि स्थलानि कौस्तुभे आलोचितानि। एतेनेदं स्फुटं यदधुना आलङ्कारिकग्रन्थानां परिशीलनं नास्ति, महतो व्याख्याग्रन्थस्य प्रकाशनं लोकविमोहनार्थम्, न शास्त्रव्युत्पत्तिसम्पत्तिसमृद्धये।

तत्प्रार्थये तदध्ययनाध्यापनलेखनप्रकाशनादितत्परान् विदुषोऽवश्यमलङ्कारकौस्तुभं गृह्णन्तु, अवश्यं पञ्च सप्त वा लेखा एतद्विषये निस्सरन्तु, परिष्कारबहुला अशुद्धिग्रस्ताः संशोधनापेक्षाश्च विषयास्तावत् त्यज्यन्ताम्। अन्ये विषया यथाकथमपि आलोचनीयाः, येन उपेक्षाकलङ्ककलुषं कथमपि मार्जितं भवतु।

अलङ्कारकौस्तुभन्तु न मर्मप्रकाशवत्सम्प्रदायरूढम्, न सर्वत्र दीक्षितपक्षे पतति, क्वचन पण्डितराजं समर्थयते, तटस्थं च तिष्ठति, दीक्षितकलहातिरिक्तस्थलेऽपि रसगङ्गाधरं परामृशति। अस्यापि संशोधनेऽल्पां सहायतां रसचन्द्रिका दास्यति।

महापण्डितस्य कश्चिदत्र श्रमोऽवगतः, परं कियानिति न स्फुटमभूत्, तथाऽपि मधुसूदन्या न धृतं कौस्तुभं प्रतिभाति।

एतावता नाहमालङ्कारिकशास्त्रस्य महान् विद्वान्, किन्तु महतः शास्त्रस्य कश्चिदेवांशोऽधीतः, अधीतस्यैव कियानंशोऽभ्यस्तः परिशीलितश्च, अधुना सर्वोऽपि विस्मृतः। प्रमादो भ्रमो वा भवत्येव। कदाचित् स्वयमपि स्फुरति, परं 'पराञ्चि-

न चेयमप्युपमा लक्ष्येति वाच्यम्, ध्वन्यमानोपमानिवारण-प्रयासस्य वैयर्थ्यापत्तेः।

न ह्यत्राभेदप्रधानोत्प्रेक्षा शक्या वक्तुम्। कल्पितोपमाया निर्विषयत्वप्रसङ्गात्।

'व्यापार उपमानाख्यो भवेद्यदि विवक्षितः।
क्रियानिष्पत्तिपर्यन्तमुपमालङ्कृतिस्तु सा ॥'

इति स्वकृतसूत्रेऽलङ्कारभूतोपमाया एव लक्ष्यत्वेनाभिधानात्। अलङ्कारभूतोपमालक्षणत्वे तदेवादुष्टाव्यङ्ग्यत्वविशेषितमिति तत्रैव पुनरभिधानाच्च। न ह्यत्रोपमानोपमेयसादृश्यादुपमास्वरूपादस्ति कश्चिदतिरिक्तो वाक्यार्थः, येनोपमा तमलङ्कुर्यात्।

अपि च लक्षणे सादृश्यविशेषणं निरर्थकम्। 'उपमिति-क्रियानिष्पत्तिमद् वर्णनमुपमा' इत्येतावतैव स्वाभीष्टार्थलाभात्।

एवम्—

'स्वतःसिद्धेन भिन्नेन सम्मतेन च धर्मतः।
साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकदोपमा ॥'

---

अत्र मर्मप्रकाशकृतः। वर्णनपदं न लक्षणघटकं किन्तूपमितिक्रियादि-पदसहितं चमत्कारजनकज्ञानविषयीभूतानुयोजिकसादृश्ये तात्पर्यग्राहकम्। एवमेव द्वितीयलक्षणस्थपदस्यापि तात्पर्यग्राहकत्वम्। अतोऽचमत्कारिसादृश्य-वर्णने नातिव्याप्तिः सर्वत्रैवानुवर्तमानस्यालङ्कारपदस्यालङ्करोतीति व्युत्पत्त्यो-पस्कारकपरतया न प्रधानीभूतोपमायामतिव्याप्तिः। अव्यङ्ग्यत्वमपि प्राधान्येना-व्यङ्ग्यत्वं नातो गुणीभूतव्यङ्ग्येऽव्याप्तिरिति समर्थयन्ति। तत्र न किमपि वक्तव्यम् यतो विभिन्नैः शब्दैरभीप्सितस्यैव वर्णने पण्डितराजा एव विजयन्ते। अन्याभिप्रायेण अन्यादृशं शब्दं प्रयुञ्जाना दीक्षिता एव पराजयन्ते। इदन्तु ध्येयम्। वाच्यसिध्यङ्गभूताया व्यङ्ग्योपमाया नालङ्कारकतेति दीक्षिता ब्रुवतेऽत्र प्रकरणे। तस्मादुपस्कारकत्वेऽपि न सर्वत्रालङ्कारत्वम्, किन्त्वङ्गतयोपस्कारकत्वं भिन्नं कटकादिस्थानतया च भिन्नमिति तदभिप्रायः प्रतीयते।

स्वतःसिद्धेनेत्यादि ●। लोकसिद्धेन न तु कविकल्पितेन, उपमेयभिन्नेन,

**इति विद्यानाथोक्तं लक्षणमपास्तम्, व्यतिरेके निषेधप्रतियोगिनि सादृश्येऽतिव्याप्तेः ।**

---

कविसमयसिद्धपद्धत्या, न तु लिङ्गवचनभेदादिना वर्णितेन, अप्रस्तुतेन प्रस्तुतस्य, साधारणधर्ममहिम्ना सकृद्वाच्यं साम्यमुपमेत्यर्थः । प्रथमविशेषणेन कविकल्पितोपमानकोत्प्रेक्षाव्यावृत्तिः । द्वितीयेनैकोपमानोपमेयस्यानन्वयस्य, तृतीयेन लिङ्गवचनभेदादिदोषदुष्टस्य, चतुर्थेन प्रस्तुतेनाप्रस्तुतसादृश्यवर्णनात्मकस्य मुखमिव चन्द्र इति प्रतीपस्य परिहारः । धर्मपदेन च वृत्तित्वार्थकेनावृत्तिशब्दं सामान्यं गृहीत्वा प्रतीयमानस्य 'सकलकलं पुरमेतत् सम्प्रतिजातं सुधांशुबिम्बमिव' इत्यादौ सादृश्यस्य वारणम् । गुणक्रियादिसाधर्म्यस्य च ग्रहणम् । उपमेयोपमायां द्विःसादृश्यस्य प्रतिपादनात् तद्वारणायैकदेति । व्यङ्ग्योपमावारणाय वाच्यमिति चित्रमीमांसामीमांसितं व्याख्यानम् । अदसीयसकलविशेषणेषु विस्तरेण विविच्य चित्रमीमांसायां दूषणानि पातितानि तान्यपि चालङ्कारःकौस्तुभकारेण सपरिष्कारमुद्धृतानि । तेषामत्र समुद्धरणे विवेचने च ग्रन्थविस्तरः स्यादित्युपेक्ष्यते । विशेषतो दिदृक्षुभिस्तत एवावलोकनीयानि । परं केवलं व्यतिरेकालङ्कारे दोषं दर्शयतः पण्डितेन्द्रस्यान्येषां दीक्षितोक्तदूषणानां परिहारः समीहितः सोऽलङ्कारकौस्तुभदिशैवावसेयः पृथग्विवेचने विस्तरः स्यात् । व्यतिरेकालङ्कारेऽतिव्याप्तौ विमते मीमांसाकौस्तुभसरण्यौ ग्रन्थव्याख्यायामवश्यापेक्षिततया विविच्येते । अत्र चित्रमीमांसाकृतः । सादृश्यस्य विधेयतया वाच्यत्वविवक्षणे 'स ययौ प्रथमं प्राचीम्' इत्यादावव्याप्तिरित्यनुवाद्यसाधारणस्य निवेशः कार्यस्तदा मुखेन निष्कलङ्केन न समस्तव चन्द्रमाः' इति व्यतिरेकालङ्कारे सादृश्यवाच्यतयाऽतिव्याप्तिः । न च निषेधाप्रतियोगित्वेन विशेषणेन निर्वाहः ।

असिमात्रसहायोऽपि प्रभूतारिपराभवे ।
नैवान्यतुच्छजनवत्सगर्वोऽयं महाधृतिः ॥

नापि निषेधप्रतियोगिकोट्यननुप्रविष्टतया निर्वाहः, अत्रान्यतुच्छजनसदृशसगर्वत्वनिषेधप्रतियोगिनि सादृश्यस्य प्रवेशेन दोषाभावेऽपि ।

वृथा चरसिं किं भृङ्ग तत्र तत्र वनान्तरे ।
मालत्याः सदृशीं क्वापि भ्रमन्नपि न लप्स्यते ॥

इत्यादौ मालतीसदृशीलाभनिषेधप्रतियोगिनि सादृश्यस्य प्रवेशादुपमानलुप्तायामव्याप्तेः इत्याहुः ।

तत्रैवाव्याप्तिवारणाय विश्वेश्वरविदुषां स्वाभावप्रयोजकाभावप्रतियोगि-

एवम्—

'उपमानोपमेयत्वयोग्ययोरर्थयोर्द्वयोः ।
हृद्यं साधर्म्यमुपमेत्युच्यते काव्यवेदिभिः ॥'

इति प्राचामपि लक्षणं प्रत्युक्तम्, हृद्यतामात्रेण निर्वाहे विशेषणान्तरवैयर्थ्यात् ।

एवं काव्यप्रकाशोक्तमपि 'साधर्म्यमुपमाभेदे' इति लक्षणं नातीव रमणीयम् । व्यतिरेके निषेधप्रतियोगिनि सादृश्येऽतिव्यापनात् ।

न च पर्यवसितत्वेन साधर्म्यं विशेषणीयमिति वाच्यम्,

---

कोट्याप्रविष्टत्वे सतीति विशेषणीयम् । स्वपदं सादृश्यपरम् । सगर्वत्वनिषेधस्य सादृश्यनिषेधप्रयोजकतया, वस्तुनः सत्त्वेऽपि कुतश्चित् कारणादलाभसम्भवाद् लाभनिषेधस्य सादृश्याभावाप्रयोजकतया च नातिव्याप्त्यव्याप्ती इति वचसा पण्डितराजस्य न्यूनता न परिगणनीया, मुखेन निष्कलङ्केनेत्यादौ सादृश्याभावप्रयोजकः केवलो निष्कलङ्काभावो न तत्प्रतियोगिकोटिप्रविष्टं सादृश्यमिति तत्रातिव्याप्तिभिया तादृशनिवेशस्यैवासम्भवात् । वस्तुतःर्तवाननस्य तुलनां दधातु जलजं कथम्' इत्यत्रातिव्याप्तिः प्रदत्ता ग्रन्थकृता । तत्र च प्रतीयमानस्य सादृश्याभावस्य प्रयोजको न कोऽपि निषेध उच्यते ।

**उपमानोपमेयत्वेत्यादि●** कविसमयसिद्धोपमानोपमेययोग्यताभृतोर्द्वयोरर्थयोर्हृद्यं साधर्म्यमुपमोच्यत इत्यादिरर्थः ।

कुमुदमिव मुखमिति वारणाय तादृशयोग्यतानिवेशः । अनन्वयवारणाय द्वयोरिति । चन्द्रमुखयोरपि प्रमेयत्वद्रव्यत्वादिना साधर्म्यस्य वारणाय हृद्यमिति चमत्कारजनकार्थकम् । तथा च कुमुदमिव मुखमित्यस्य कविसम्प्रदायबहिष्कृततया न चमत्कारित्वम् । एवमनन्वयेऽप्यनौपम्यपर्यवसायिनि सादृश्यस्य । तथा हृद्यत्वाभावादेव दोषान्तरव्यावृत्तौ व्यर्थविशेषणघटितमिदं लक्षणमिति भावः । व्यर्थविशेषणघटितत्वे च स्वेतरभेदानुमितिहेतोर्व्यर्थविशेषणघटितत्वान्नीलधूमादिरिव व्याप्यत्वासिद्धिदोषः । निरूपितञ्चैतत् सर्वं मुक्तावल्यादौ । साधारणरीत्या च लक्षणनिर्मातुरव्युत्पत्तिदोषः स्फुट एव ।

**पर्यवसितत्वेन●** न त्वभावप्रतियोगितयेत्यर्थः ।

अनन्वयस्थसादृश्यस्यापर्यवसायित्वेनैव वारणे भेदविशेषण-वैयर्थ्यापत्तेः । काव्यालङ्कारप्रस्तावे लौकिकालौकिकप्रधान-वाच्यव्यङ्ग्योपमासामान्यलक्षणकरणानौचित्याच्च ।

अत एव 'भेदाभेदतुल्यत्वे साधर्म्यमुपमा' इत्यलङ्कारसर्वस्वोक्तमपि लक्षणं तथैव ।

एवम् 'प्रसिद्धगुणेनोपमानेनाप्रसिद्धगुणस्योपमेयस्य सादृश्यमुपमा' इत्यलङ्काररत्नाकरोक्तमपि न भव्यम्, श्लेषमूलकोपमायां तादृशशब्दात्मकस्य धर्मस्य कविनैव कल्पनात्, तेन रूपेणोपमानस्याप्रसिद्धेश्च ।

---

भेदविशेषणवैयर्थ्यापत्तेः● नन्वनन्वये सादृश्यनिषेधस्य व्यञ्जनीयत्वम्, व्यतिरेके तु वाच्यत्वमिति भेदोऽस्तीति न शङ्कनीयम्; 'तवाननस्य तुलनां दधातु जलजं कथम्' इत्यदावपि सादृश्यनिषेधस्य व्यञ्जनीयत्वादेव ।

अत्र वाग्देवताऽवतारं मन्यमानाः प्रकाशानुयायिनः । साधर्म्यपदस्य समानो धर्मो येषां ते सधर्माणस्तेषां भावः साधर्म्यमित्यादिव्याख्यानेन साधर्म्यपदसामर्थ्यादेवोपमानोपमेययोराक्षेपः । व्याख्यातञ्च तथैव वृत्तौ सूत्रम् । उपमानमुपमेयञ्च कविसमयसिद्धं ग्राह्यम् । ततश्च विपरीतवर्णनात्मके प्रतीपेंऽशेन तथैव परस्याञ्चोपमेयोपमायां नातिव्याप्तिः । भेदग्रहणाच्चानन्वयस्य व्यावृत्तिः । अलङ्कारप्रकरणादेवालङ्कारत्वे सतीति लब्धम् । तच्च अलङ्करोतीति व्युत्पत्त्या साधर्म्यविशेषणत्वेन प्रकृतवाक्यार्थशोभाजनकस्यैव साधर्म्यस्य ग्रहणेनाचमत्कारिसाधर्म्यं व्यावर्तयति इति व्याचक्षते, तदा किन्नो विद्वेषः पण्डितेन्द्रानुगामितां नीते मम्मटे ।

उपमानोपमेययोः साधर्म्ये भेदाभेदतुल्यत्व उपमा । त्रिविधं साधर्म्यम्—कुत्रचिदुपमानोपमेययोर्भेदप्राधान्येन सहकृतम्, यथा दीपकतुल्ययोगितादृष्टान्तप्रतिवस्तूपमासहोक्तिव्यतिरेकादिषु । अन्यत्र च तयोरभेदप्राधान्येन सहकृतम्, यथा रूपकपरिणामभ्रान्तिमदुल्लेखादिषु । उपमायां तूभाभ्यां सहकृतम् । अत्रोपमानोपमेययोरसाधारणधर्मेण भेदः साधारणधर्मेण चाभेद इति तद्व्याख्यानम् । तदेव खण्डयति अतएवेत्यादिना● ।

अनलङ्कारभूतोपमायामतिव्याप्तेः, सौन्दर्यादिनिवेशनमन्तराऽकिञ्चित्करत्वाच्च एतादृशदोषदुष्टत्वं लक्षणान्तरमपि खण्डयत्येवमिति● । प्रसिद्धाप्रसिद्धविशेषणाभ्यामुपमेयोपमाप्रतीपयोर्व्यावृत्तिः । उपमानोपमेययोर्भेद-

इत्यलं परकीयदूषणगवेषणया ।

प्रकृतमनुसरामः ।

अस्याश्चोपमायाः प्राचामनुसारेण केचिद् भेदा उदाह्रियन्ते ।

तथा हि—उपमा द्विविधा, पूर्णा लुप्ता च । पूर्णा तत्र—श्रौती आर्थी चेति द्विधा भवन्ती वाक्य-समास-तद्धितगामितया षोढा । लुप्ता च—उपमानलुप्ता, धर्मलुप्ता, वाचकलुप्ता, धर्मोपमानलुप्ता, वाचकधर्मलुप्ता, वाचकोपमेयलुप्ता, धर्मोपमानवाचकलुप्तेति तावत् सप्तविधा । तत्रोपमानलुप्ता—वाक्यगा समासगा चेति द्विविधा । धर्मलुप्ता समासगता-श्रौती, आर्थी । वाक्यगता-श्रौती, आर्थी । तद्धितगता च-आर्थ्येव, न श्रौती ।

---

प्रदर्शनेनानन्वयस्यापि । दूषणान्तरमपि दर्शयति श्लेषेति ● चन्द्राननयोरुपमानोपमेयता तु आह्लादकत्वेन प्रसिद्धा परं ययोर्वस्तुनोः कश्चित्साधारणो धर्मो न प्रसिद्धस्तयोरपि पर्यायान्तराण्यादाय कविभिरेकरूपेण वर्णनाच्छब्दस्वरूपमेव साधारणमादायोपमाङ्गीकारो भवति, तत्र प्रसिद्धेरभावादव्याप्तिः । यथाऽत्र उदाहरिष्यमाणे 'यत्र वसन्ति सुमनसी'त्यादौ । गुणादिसामान्यमेव ग्राह्यम्, न शब्दसाम्यमिति न काचिद् राजाज्ञास्ति । शब्दसाम्येन तदर्थयोरभेदारोपेण बिम्बप्रतिबिम्बभावस्थल इव साधारण्यसम्पादनमिति भावः ।

गुणेन साधर्म्यकथनाद् गुणादीनां साधर्म्यस्यासंग्रह इति चित्रमीमांसाकृतोऽत्र दूषणान्तरमभ्युपगच्छन्ति । यद्यपि स्तनाभोग इत्यादावप्रसिद्धोपमानकेऽप्यव्याप्तिः स्फुटैव, तथापि शब्दसाधर्म्यस्योपमाप्रयोजकत्वं यथा बहूनामाचार्याणां सम्मतन्न तथाऽप्रसिद्धोपमानकत्वस्य, कतिपयैस्तत्रोत्प्रेक्षाया एवोत्प्रेक्षितत्वात् । अतस्तन्न प्रदर्शितम् ।

उपमाभेदनिरूपणम्—श्रौती, आर्थी, चेत्यादि ● । तद्विभागे बहूनां मतभेदः तथाहि तथा च प्रकाशग्रन्थः । यथेवादिशब्दा यत्परास्तस्यैवोपमानताप्रतीतिरिति यद्यप्युपमानविशेषणान्येते, तथापि शब्दशक्तिमहिम्ना श्रुत्यैव षष्ठीवत् सम्बन्धं प्रतिपादयन्तीति तत्सद्भावे श्रौती उपमा । तथैव 'तत्र तस्येव' इत्यनेन विहितस्य वतेरुपादाने । 'तेन तुल्यं मुखम्' इत्यादावुपमेये एव, तत्तुल्यमस्य इत्यादौ चोपमान एव, इदञ्च तच्च तुल्यम् इत्युभयत्रापि, तुल्यादिशब्दानां विश्रान्तिरिति साम्यपर्यालोचनया तुल्यता-

इति पञ्चविधा। वाचकलुप्ता—समासगता, कर्मक्यङ्गता, आधारक्यङ्गता, क्यङ्गता, कर्मणमुल्गता कर्तृणमुल्गता चेति षड्विधा। धर्मोपमानलुप्ता—वाक्यगता, समासगता चेति द्विविधा। वाचकधर्मलुप्ता क्विब्गता समासगता चेति द्विविधैव। वाचकोपमेयलुप्ता त्वेकविधा। धर्मोपमानवाचकलुप्ता तु समासगतैकविधा। इति।

एवं साकल्येनैकोनविंशतिर्लुप्ताभेदाः पूर्णाभेदैः सह पञ्चविंशतिः क्रमेणोदाह्रियन्ते।

---

प्रतीतिरिति साधर्म्यस्यार्थत्वात् तुल्यादिशब्दोपादाने आर्थी तद्वत् 'तेन तुल्यं क्रिया चेद्वतिः' इत्यनेन विहितस्य वतेः स्थितौ। अस्य च व्याख्याने बहूनां प्रणालीभेदः।

मञ्जूषादिवासितान्तःकरणानां नूतनानां वामनाचार्यादीनां व्याख्यानं यथा। यथैवादिशब्दा यत्परास्तस्यैव सादृश्यप्रतियोगित्वरूपोपमानता प्रतीयते। तथा चोपमानविशेषणार्थप्रतिपादकत्वमात्रमेषां पर्यवसितमिति उपमानोपमेयोभयगतसाधारणधर्मसम्बन्धरूपोपमाप्रतिपादकत्वं नाञ्जस्येन निर्वहति, तथापि राज्ञः पुरुष इत्यत्र षष्ठ्यर्थस्वामित्वस्य राजविशेषणत्वेऽपि स्वस्वामिसम्बन्धवाचकत्वमपि षष्ठ्याः प्रतीयते, तथा प्रकृते इवार्थे विशेषणत्वेऽपि चन्द्र इव मुखमित्यस्य सदृशचन्द्रीयं मुखमिति बोधः। तुल्यादिशब्दोपादाने सादृश्यस्योभयत्र भानाभावात् प्रतीतस्य सादृश्यस्य साधारणधर्मस्योपादानं विनानुपपन्नतया साधारणधर्मरूपां साधारणधर्मसम्बन्धरूपां वा उपमां कल्पयति। साधारणधर्मसम्बन्ध एवोपमा। सा च यथैवादिशब्दवाच्या, तुल्यादिशब्दवाच्यसादृश्यान्यथानुपपत्तिमूलार्थापत्त्या व्यञ्जनया वा कल्प्यमाना पूर्वोक्ता उपमेति भावः। प्रदीपोऽपीदमेव दीपयति, तत्र 'तस्मात्प्रतीत्यनुपपत्त्या प्रतीतानुपपत्त्या च सम्बन्धबोधे विशेषाच्छ्रौतार्थविभाग इति मन्तव्यम्' इत्युक्तम्। तुल्यादिशब्दोपादाने सादृश्यप्रतीतिः साधारणधर्मसम्बन्धप्रत्ययं विनाऽनुपपन्ना स्वस्वोपपादकं कल्पयति। सादृश्यं स्थितौ ज्ञाने च साधारणधर्मसम्बन्धमपेक्षत इति तत्पंक्तेरभिप्रायो मे रोचते। केषाञ्चित्तु इवादिस्थले प्रतीत्यनुपपत्तिः, तुल्यादिस्थले च प्रतीतानुपपत्तिरिति योजनमुभयत्रानुपपत्त्या कल्पन आर्थत्वापत्त्या मां क्लेशयति।

प्राक्तनः 'श्रौतत्वं चोपमानोपमेययोः साधारणधर्मसम्बन्धरूपायास्तस्याः शाब्द-बोधविषयत्वम्। अर्थापत्तिगम्यत्वञ्चार्थत्वमिति लेखोऽपि नानुकूलतां तेषां भजते इति सुधियो विवेचयन्तु। यद्यपि राज्ञः पुरुष इत्यत्र षष्ठ्यर्थस्य शब्दोपस्थिततया प्रकारतयैव भानम्, अतएव राजनिरूपितस्वत्ववान् पुरुष इति शाब्दबोधं वर्णयन्ति। राजपुरुष इत्यादौ विभक्तिस्मरणं विनाऽपि शाब्दबोधानुभवाद् आकाङ्क्षा-वशात् प्राप्तस्य सम्बन्धस्य संसर्गतया भानमिति गतविशेषानुरोधेनायं ग्रन्थः। तथा च यथा षष्ठ्यर्थस्वत्वादिप्रकारकः शाब्दबोधो विशेष्यतासम्बन्धेन नामार्थे जायते, तथा निपातेवादिपदोपस्थितसादृश्यप्रकारकः शाब्दबोधो विशेष्यतया नामार्थे जायते इति विशेषानुरोधेन कल्प्यते। तदनुसारिकार्यकारणभावस्य विभक्तिनिपातान्यतरार्थनिष्ठप्रकारतानिरूपितधात्वर्थावृत्तिविशेष्यतासम्बन्धेन शाब्दबोधं प्रति नामजन्योपस्थितेर्विशेष्यतया हेतुत्वमिति।

प्रदीपे च साधारणधर्मसम्बन्ध उपमेति स्फुटमुक्तम्, न तु सादृश्यादति-रिच्यत इति ततो निस्सरति उभयत्र सादृश्यप्रत्ययाविशेषादित्यादिना इव-तुल्यादियोगे समस्य सादृश्यप्रत्ययस्याभिधानात्। योऽपि पश्चात्तनः 'सामान्यत-स्तुल्यत्वं बोधयित्वा विश्रान्तेषु तेषु धर्मविशेषं विना कथं तुल्यता' इत्यादि-ग्रन्थस्तस्याप्यय भावः। तेन तुल्यंमुखमित्यादौ 'तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽ-न्यतरस्याम्' इति पाणिनिसूत्रेण विहिततृतीयार्थस्य तुल्यपदार्थैकदेशे तुल्यत्वेऽ-न्वयः। तथा च तुल्यत्वस्योभयत्रोपमानोपमेये न साक्षादन्वयः, इवार्थस्य च साक्षादेवान्वयः। किञ्च तद्भिन्नत्वविशिष्टतद्वृत्तिधर्मवत्त्वघटितस्य तुल्य-त्वस्य सामान्यतः पर्यवसाने धर्मविशेषसम्बन्धं विना कथं तादृशतुल्यत्वमित्या-काङ्क्षायां धर्मविशेषसम्बन्धप्रतीतिरिति।

अत्र नागोजीमहाभागा अन्यथाऽपि स्वमतेन पङ्क्तय इमा योजिता अतो-मया मतान्तरेणापि व्याख्यातम्। तन्मतञ्च साधारणधर्मसम्बन्ध उपमा। उप-मानत्वञ्च साधारणधर्मवत्त्वेनेतरपरिच्छेदकत्वम्, साधारणधर्मवत्तया परिच्छे-द्यत्वमुपमेयत्वम्। तच्च 'उपमानानि सामान्यवचनैः' इति सूत्रभाष्यसम्मतम्। उपमानविशेषणानीति प्रकाशस्योपमाननिष्ठधर्मबोधकानि, उपमानत्वबोध-कानि चार्थः। तथा चेवस्य निपातस्य द्योतकतया द्योत्यार्थस्य च विशेषणत्वात्, चन्द्र इव मुखमित्यस्य उपमानचन्द्राभिन्नं मुखम्, आह्लादकमित्यस्योपपादने आह्लादकचन्द्राभिन्नं मुखमिति वा बोधः। अभेदवशाच्च मुखे आह्लादकत्वस्य भानम्, उपमानोपमेययोर्वचनान्तरं विनापि समानवचनकत्वनिर्वाहश्च। इवशब्दस्य द्योतकत्वञ्च स्वसमभिव्याहृतस्य चन्द्रस्य आह्लादकोपमानार्थे तात्पर्य-

ग्राहकत्वम् । षष्ठीवदित्यस्य प्रकाशग्रन्थस्याभेदे प्रकृते तात्पर्यम् । तथा चेवादिस्थले साधारणधर्मस्य वाच्यत्वादुपमायाः श्रौतीत्वम्, सादृश्यप्रतीतिस्त्वार्थिकी । तुल्यादिशब्दाश्च सदृशवाचकाः, तत्र सादृश्यप्रतीतिः श्रौती । तदनुपपत्तिमूलकसाधारणधर्मसम्बन्धप्रतीतिस्त्वार्थी । उपमानानीति सूत्रस्थं भाष्य तु 'यदेवोपमानं तदेवोपमेय क इहोपमार्थः 'गौरिव गौरिति' इत्यादिनाऽऽशङ्क्य 'तस्याद्यत्र किञ्चित् सामान्यम्, कश्चिच्च विशेषस्तत्रोपमानोपमेये भवतः' इति सिद्धान्तितम् । ततश्चन्द्रत्वेन मुखत्वेन भेदः, आह्लादकत्वेन चाभेद इति निस्सरति ।

अन्या च स्वमते युक्तिर्मञ्जूषायां प्रतिपादिता । तथाहि घनश्याम इति समस्तस्य कोऽर्थः ? न च सदृशे लक्षणया घनसदृशाभिन्नः श्यामः, घनशब्दस्योपमेयपरतया उपमानवाचकत्वाभावप्रसङ्गात् । विग्रहवृत्त्योः समानार्थकत्वौचित्यात्तद्विग्रहेऽपि घनशब्दस्य तादृशत्वे घनसदृशसदृश इति विग्रहार्थप्रसङ्गाच्च । घनेन सदृश इत्यस्य विग्रहत्ववर्णने समानाधिकरणत्वाभावात् समासानुपपत्तिः । तद्रीत्या मृग्या सदृश इत्यस्य विग्रहवाक्यत्वे सामानाधिकरण्याभावात् पुंवद्भावानुपपत्तिः । स्वार्थपरत्वेऽपि अभेदासम्भवात् सादृश्यसम्बन्धेनान्वये च सामानाधिकरण्यानुपपत्तिः । तस्मात् समस्तस्य श्यामोपमानघनाभिन्नः श्याम इत्यर्थो वर्णनीयः । तदरीत्या घन इव श्याम इति विग्रहस्यापि स एवार्थः ।

किञ्च शस्त्रीश्यामेत्युपक्रम्य तत्रैव भाष्ये शस्त्रीव श्यामा देवदत्तेति विग्रहः, तदा शस्त्र्यां श्यामेत्येतदपेक्ष्यं स्यात् । यदि यथा शस्त्रीश्यामा तद्वद् देवदत्तेति विग्रहः, तदा देवदत्तायां श्यामेत्येतदपेक्ष्यं स्यात् । इति श्यामाशब्दस्योपमानोपमेयान्यतरपरत्वेऽन्यतरस्मिन् श्यामाबोधकं पदमपेक्ष्येतेत्येतदभिप्रायकमुक्तम् । तथा च श्यामाशब्दस्य समानवचनकत्वाभावः । तेन चोभयगतगुणवाचकत्वं श्यामाशब्दस्यास्थेयम् । प्रायः स्फुटमप्युक्तम् । तथाहि 'शस्त्रीशब्दः शस्त्र्यामेव श्यामाशब्दो देवदत्तायामेवेति सामानाधिकरण्याभावात् समासपुंवद्भावौ न प्राप्नुतः' इत्युक्त्वा 'एवं तर्हि तस्यामेवोभयं वर्तते इति युक्तम्' इत्युक्तम् । उपमेयायामेव देवदत्तायां शस्त्रीश्यामाशब्दौ वर्तेते इति भावः । स चोपमानेन उपमेयस्याभेदप्रतीत्यैव संगच्छत इति संक्षेपः । इदं तु विवेचनीयं सुधीभिर्यद्यप्यत्र प्रकाशमूले साम्य-तुल्यता-साधर्म्यशब्दानां त्रयाणामुपादानाद् भिन्नार्थकत्वसम्भावना, तथापि न सादृश्यसाधर्म्यपदार्थयोर्भेदे ग्रन्थकृतां निर्भरः, बहुत्र समानार्थकतयैवोल्लेखदर्शनात् । तथाहि १२६ सूत्रे 'उपमानोपमेयसाधारणधर्मोपमाप्रतिपादकानामुपादाने पूर्णा इत्यत्र समेषां सममेवोपमाप्रतिपादकत्वप्रतिपादनम् । एवं 'हेत्वोरुक्तावनुक्तीनां त्रये साम्ये निवेदिते'

इति १६० सूत्रे तुल्यतापदसमानयोगक्षेमस्य साम्यशब्दस्यौपम्यार्थे प्रयोगः । 'ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम्' इत्यादावुपमादोषनिरूपणावसरे 'अत्र काव्यस्य शशिना अर्थानाञ्च रश्मिभिः, साधर्म्यं न प्रतीतम्' इति वृत्तिग्रन्थेन च साधर्म्यस्य सादृश्यस्य च स्फुटं प्रतीतेः । तुल्यार्थैरतुलोपमाभ्यामित्यादि-पाणिनीयसूत्रेण तुल्यार्थे षष्ठीतृतीययोर्विधानात् । सहपदाक्षेपेण कथञ्चिद् व्याख्यानं तु गतिसत्त्वे न मनोमोदाय । एवम् 'उपमानोपमेयोरेव साधर्म्यं भवतीति तयोरेव समानेन धर्मेण सम्बन्धः उपमा' इति वृत्तिग्रन्थेऽपि सादृ-स्यार्थकत्वमूह्यम् । कथमन्यथा कार्यकारणयोः साजात्यस्य प्रसिद्धतया सर्वथैव साधारणधर्मस्य खण्डनं सङ्गच्छेत ? सादृश्यार्थत्वे तु प्रसिद्धेन भूयसा वा धर्मेण तदिति साधु संगच्छते । इदमपि चिन्तनीयं प्रेक्षावद्भिर्यत् षष्ठया भेदसम्बन्ध एव प्रसिद्धतया षष्ठीवदिति ग्रन्थकृद्दृष्टान्तोऽभेदार्थकतायां वाचकत्वद्योतकत्वयोश्च नागोजिमते सुसंगतं न वा । वाचकत्वद्योतकत्वान्यतरपक्षे तु न पण्डितराजाना-माग्रह उभयमतेऽपि उपपादनस्य पश्चादुक्तेः । अभेदान्वयप्रमाणानि तु शाब्द-बोधप्रकारप्रदर्शनावसरे परीक्षिष्यन्ते । इवादीनां सादृश्यार्थकत्वेऽपि ग्रन्थ-समन्वयः सम्यगेव । तथाहि उपमानतेत्यस्य सादृश्यप्रतियोगित्वमर्थः । उपमानविशेषणानीत्यत्र कारणं तु इवार्थस्य द्योत्यस्य विशेषणत्वध्रुवत्वम् । वाचकत्वपक्षेऽपि यथाशब्दस्य प्रकारेऽर्थे साधोरिवेवस्यापि प्रकारोपस्थापकत्वात् । तथापीत्यादेस्तात्पर्यन्तु पञ्चकं प्रातिपदिकार्थ इति पक्षे कारकवत् सम्बन्धोऽपि प्रकृतेरर्थः कारकविभक्तिरिव षष्ठ्यपि द्योतिकाऽपि यथा सम्बन्धमुपस्थापयति । तथा इवादयोऽपि सम्बन्धमुपस्थापयन्ति । वाचकत्वपक्षेऽपि आपादानादि-कारकविभक्तयो यथा आपादानत्वादिशक्तिमन्तं प्रकृत्यर्थविशेषणीभूतं बोधयन्त्यः क्रियाकारकभावं सम्बन्धं प्रकाशयन्ति, तथा षष्ठ्यपि प्रकृत्यें स्वामित्वा-दीन् बोधयन्ती सम्बन्धवाचिका दृष्टान्तः । तथा च यथादिस्थले उपमानोप-मेययोः समानविभक्तिसमुपस्थापितत्वाद् युगपत्प्रतियोग्यनुयोगिभावेनान्वये समानवचनयोरूपमानोपमेयवाचकपदयोः समभिहारस्य कारणत्वेन सादृश्यस्य झगिति प्रतियोगित्वानुयोगित्वाभ्यामन्वयात् प्रतियोगित्वानुयोगिता-निरूपकत्वविशिष्टस्य सादृश्यस्योपमात्वात् श्रौती उपमा । तुल्यादिपदावसरे तु तेन तुल्यं मुखमित्यादावुपमेयेऽनुयोगित्वमात्रं तत्तुल्यमस्य इत्यादावुपमाने इदञ्च तच्च तुल्यमित्यादावुभयत्राप्यनुयोगित्वमात्रं बोधयति । तथा च प्रतियोगित्व-विशिष्टस्य सादृश्यस्य भानाभावः । चन्द्रेण तुल्यमित्यादौ तृतीयाया यद्यपि सम्बन्धोऽर्थः, तथापि न प्रतियोगित्वम्, किन्तु निरूप्यनिरूपकभावः । चन्द्र-

निरूपितसादृश्येत्यादेर्भानात्। तथा च चन्द्रे तृतीयार्थप्रतियोगित्वस्य भानेऽपि न सादृश्यप्रतियोगित्वं भासते। यथादिपदसत्त्वे तु उपमानोपमेययोः समानवचनोपस्थापितयोः प्रथमायाः प्रातिपदिकार्थमात्रत्वात् सम्बन्धार्थत्वाभावात् सादृश्येन सह साक्षादेव प्रतियोग्यनुयोगिभावः संसर्गमर्यादया भासते। तेन च सादृश्यघटकस्य साधारणधर्मस्य साक्षादेवोभयत्र भानमित्यभिप्रायेणैव कुत्रचित् सादृश्यसमकक्षतया साधर्म्यस्योल्लेखोनविरुध्यते। न च सादृश्ये तत्सम्बन्धेन वा मुखादौ चन्द्रादेरन्वयाभ्युपगमे चन्द्रं मुखं पश्यतीत्यादौ चन्द्रपदोत्तरं द्वितीयाया अप्राप्त्या प्रातिपदिकार्थे साधुत्वमात्रार्था वा प्रथमैव युक्ता, एवमव्ययविशेषणतया सामान्ये क्लीबता चेति वाच्यम्, कटं भीष्मं कुर्वित्यत्र कटोऽपि कर्म भीष्मादयोऽपि कर्मेत्यादिभाष्यस्य शेखरे प्रतिपादनस्य रीत्या साक्षात्परम्परया वा क्रियान्वयिनि कारकविभक्तीनां साधुत्वबोधनाद् द्वितीयाया एव युक्तत्वात्। प्रतिपादिता चैषा शैली विस्तरेण कौस्तुभतट्टीकयोः। अथवा चैत्र इव मैत्रो गच्छतीत्यादौ नैयायिकग्रन्थशैल्या आख्यातार्थसंख्यायाश्चैत्रेऽन्वयाभावेन चैत्रमैत्राविव यज्ञदत्तो गच्छतीत्यादिविरुद्धवचनकस्य प्रयोगस्येव विभिन्नविभक्तिकस्यापि सत्यभिधाने इष्टापत्तेः। अन्यथाऽनभिधानाद् वारणम्। चक्रवर्तिप्रभृतिटीकाकाराणामपि मत एवमेव समन्वयस्य दृष्टत्वात्। अत एव विश्वेश्वरविदुषा 'उपमानादिवृत्तित्वविशिष्टनियतशाब्दबोधविषयत्वम्, उपमानादिप्रतियोगित्वानुयोगित्वविशिष्टनियतशाब्दबोधविषयत्वं श्रौतीत्वम्' इति काव्यप्रकाशग्रन्थस्य निष्कर्षः प्रदर्शितः। केचित्तु अन्विताऽभिधानमाश्रित्येमं विभागं वर्णयन्ति। तथाहि इवेत्यस्य सादृश्यपरत्वे चन्द्रस्य सादृश्यमितिवत् चन्द्र इवेत्यत्रापि षष्ठ्यापत्तेः, एवं घटस्याभाव इतिवद् घटस्य नेत्यस्यापत्तेस्तत्राप्यन्विताभिधानम्। न च निपातपदजन्यसादृश्याभावयोरुपस्थितौ प्रतियोगित्वस्य संसर्गतया तद्भिन्ननामजन्योपस्थितौ तु प्रकारतया भानमिति नियमाङ्गीकारान्न षष्ठ्यापत्तिरिति वाच्यम्, समानविषयकोपस्थित्योरभेदाद् भिन्नपदजन्यत्वमात्रेण भेदासम्भवात् तादृशनियतशाब्दबोधानापत्तेस्तत्तत्समभिव्याहारस्यापि कारणत्वोक्तौ फलतः समभिव्याहृते तादृशशाब्दबोधसामर्थ्यस्य, तादृशान्वितार्थविषयककार्यस्य चाङ्गीकारापत्तावन्विताभिधाने पर्यवसानात्। एकत्र संसर्गतयाऽन्यत्र प्रतियोगितायाः प्रकारतया भानम्, नोभयत्र प्रकारतया भानम् इत्यत्र विनिगमकाभावाच्च। प्रकारतया भानानुभवेऽन्विताभिधानस्य गले पतितत्वाच्च। एवञ्च चन्द्र इवेत्यत्रेवपदार्थश्चन्द्रप्रतियोगिकसादृश्यवान्। तत्र च प्रतियोगित्वस्यैवपदशक्यतया न षष्ठ्यपेक्षा। तच्चान्विताभिधानमव्ययस्थल एव। तुल्यादिपदस्थले तदभावात् प्रतियोगित्वोपस्थापिकाया विभक्तेरावश्य-

कत्वात् । तथा च यत्र सादृश्यप्रतियोगित्वरूपमुपमानत्वं पदेनैवोच्यते प्रकारतया वा भासते तत्र श्रौती, यत्र तु विभक्त्युपस्थाप्यं संसर्गतया वा भासमानं तत्रार्थी इति ।

न्यायपञ्चाननप्रभृतयस्तु यत्पदार्थविशेषणस्य नियमेनोपमानत्वप्रतीतिस्तच्छब्दयोगे श्रौती । भिन्नस्थले आर्थीति । इवादिशब्दयोगे नियमेनोपमानत्वप्रतीतेः । सदृशादिशब्दस्थले तु क्वचित् प्रतीतावपि चन्द्रमुखयोः सादृश्यमित्यत्र प्रतीतेरभावान्ननियम इत्याहुः ।

अलङ्कारकौस्तुभकृतां महता शास्त्रार्थेन निर्णीतस्तु श्रौत्यार्थीत्वविभाग इत्थम् । धर्मबोधकं पदमेव यत्र उपमानवृतित्त्वस्योपमेयवृत्तित्वस्य चोपस्थापकं तत्र श्रौती । यत्र च भिन्नेनोपस्थाप्यते तत्रार्थी । चन्द्र इव मुखमित्यत्र तद्भिन्नत्वे सति तद्गतधर्मस्य सादृश्यस्य घटका ये तद्भिन्नवृत्तित्वं तद्वृत्तित्वं धर्मश्च तेषां वाचक इवशब्दः । तेनोपमानोपमेयवृत्तित्वोपस्थापकत्वं तस्य । चन्द्रेण तुल्यं मुखमित्यादौ तुल्यशब्दस्य सादृश्याश्रयार्थकतया उपमेयवृत्तित्वोपस्थापकत्वं यद्यपि वर्तते, किन्तु उपमानवृत्तित्वोपस्थापकत्वं नास्ति । अपि तु वृत्तित्वार्थे विहितायास्तृतीयाया एव । चन्द्रवन्मुखमित्यादौ उपमानवृत्तित्वमपि प्रत्ययार्थः । प्रत्ययार्थे तत्र नामार्थस्य चन्द्रादेरन्वयसम्भवात् । तथा चार्थीत्वासङ्गतिरिति न शङ्कनीयम्, तुल्यार्थमात्रे विहितवतेरनुशासनविरोधाद् विभक्त्यर्थान्तर्भावासम्भवात् । तथा च तत्र चन्द्रपदस्यैव चन्द्रवृत्तित्वे लक्षणा । तत्तु 'पूर्ववत्सन' इति सूत्रस्थात् कैयटादप्यायातीति संक्षेपः ।

काव्यमालाग्रथितायां चित्रमीमांसायान्तु 'सादृश्यमात्रबोधकशब्दयोगे श्रौती । तादृशविशिष्टधर्मिपर्यन्तवाचकशब्दप्रयोगे आर्थी' इत्युपलभ्यते । यद्यपि द्वितीये वाचकपदं न मुद्रितमस्ति तथापि, तद्घटित एव पाठः समीचीनः ।

पण्डितराजस्याप्यत्रैव निर्भरः, विरोधिनोऽखण्डनात् । वतेस्तत्र तस्येवेत्यनेन सादृश्ये विधानाच्छ्रौती । तेन तुल्यमित्यनेन विहितस्य सदृश्यवदर्थकतया तद्योगे आर्थीत्युक्तेश्च ।

यद्यपि साम्यसादृश्यशब्दयोः सादृश्यमात्रवाचकत्वम्, तथापि भावप्रत्ययानालिङ्गितस्य यस्य सादृश्यमात्रवाचकत्वं तच्छब्दयोगे श्रौतीत्यादितात्पर्यमवसेयम् । केचन तु नात्र विभागे पण्डितेन्द्राणां तात्पर्यमनुगताया व्यवस्थाया असम्भवात् । अत एव प्राचामिति पददानेनारुचिः सूचिता । सादृश्यादतिरिक्त एवोपमा, अत एवेवादिस्थले उपमा श्रौती, सादृश्यप्रतीतिस्त्वार्थीत्यादिना भाष्यव्याख्याकुशलैर्नागोजीभट्टैर्वर्णनात् सादृश्यरूपोपमामतं पण्डितेन्द्राणां भाष्य-

तत्र पूर्णा श्रौती वाक्यगता यथा—

'ग्रीष्मचण्डकरमण्डलभीष्मज्वालसंसरणतापितमूर्तेः ।
प्रावृषेण्य इव वारिधरो मे वेदनां हरतु वृष्णिवरेण्यः ॥'

अत्र प्रावृषेण्य इत्यनेन वारिधरविशेषणेन नैराकाङ्क्ष्यात्, इवेन समास इत्येव पाठान्नित्यत्वाभावाद् वारिधरेणापि नेवस्य समासः । एषा चोपमानोपमेययोर्वारिधरभगवतोर्वेदना-हरणकर्तृत्वस्य साधारणधर्मस्य सादृश्यबोधकस्येवशब्दस्य चाभिधानात् पूर्णा सादृश्यस्य श्रुत्या बोधनाच्छ्रौती ।

---

विरुद्धमिति तु न, शङ्क्यम् उपमानानि सामान्यवचनैरित्यादिसूत्रस्थभाष्याद्भेदे उपमायाः असम्भवात्; तद्भिन्नवृत्तित्वविशिष्टतद्वृत्तिधर्मरूपे सादृश्ये तात्पर्यस्य स्फुटप्रतीतेः । अलङ्कारकौस्तुभकृतां व्यवस्थायाः सादृश्यस्यातिरिक्तत्वेऽसम्भवान्न तत्खण्डनेऽभिनिविशे । न्यायपञ्चाननमतमपि कठिनम् । कस्यचित् कारणस्य विकलावस्थायां विपरीततादशायाञ्चेवादिस्थलेऽपि समीहितस्योपमानत्वा-प्रतीतेरन्यस्य प्रतीतेः । भ्रमघटितसामग्रया तुल्यादियोगेऽपि तत्प्रतीतेश्च नियतत्वानियतत्वविवेकस्य दुर्वचत्वात् ।

कथञ्चिद् व्यवस्थायाः सम्भवेऽव्ययमात्रस्थले अन्विताभिधानमतावलम्बन-मपि ग्रन्थकृद्भ्यो न रोचते, अतः प्रकारान्तरेण व्यवस्थापि तैः । तदभिप्रायेण चोदाहरणम्—ग्रीष्मेत्यादि ● । ग्रीष्मर्तौ ग्रीष्मस्य वा सूर्यमण्डलस्य भीष्मा ज्वाला यस्मिन् देशे तत्र गमनेन संतप्तं शरीरं यस्य पुरुषस्य तस्य प्रावृषि भवो वारिधरो यथा सन्तापवेदनां हरति, तथा श्रीकृष्णो मम वेदनासामान्यं हरत्वि-त्यर्थः । चण्डकर इत्यत्र बहुव्रीहिः । बहुव्रीहित्वेन ज्वालेत्यत्र ह्रस्वः । प्रावृष् इति शब्दादेण्यप्रत्ययान्तः प्रावृषेण्यः । पचाद्यन्तेन षष्ठीतत्पुरुषाद्वारिधरशब्दः सिद्धः । वृञएण्यप्रत्ययेन निष्पन्नो वरेण्यशब्दः श्रेष्ठवाचकः । कर्तरि षष्ठ्या समासः । वाक्यगात्वं समर्थयितुं इवेन सह समासाभावं सम्पादयति । नैराकाङ्क्ष्यात् ● अन्यविशेषणस्यान्यत्रान्वयायोगादिवार्थेन सममन्वयाभावात् सामर्थ्याभाव इति भावः ।

यत्रोपमानोपमेययोः साधारणधर्मस्योपमाबोधकस्य चोपादानं तत्र पूर्णेति लक्षणं योजयति एषा ● । इत्यादिना संसरणस्य संसारयात्राया अपि ज्वालानाम् विशेषणम्, अत एवात्र वेदनापदम् ।

पूर्णा आर्थी वाक्यगता यथा—

'प्राणापहरणेनासि तुल्यो हालाहलेन मे।
शशाङ्क केन मुग्धेन सुधांशुरिति भाषितः ॥'

पूर्णा श्रौती समासगा यथा—

'हरिचरणकमलनखगणकिरणश्रेणीव निर्मला नितराम्।
शिशिरयतु लोचनं मे देवव्रतपुत्रिणी देवी ॥'

अत्रेवेन समासः ।

---

**प्राणाप०** । हालाहल उपमानम्, शशाङ्क उपमेयम्, प्राणापहरणं साधारणो धर्मः । सादृश्यवाचकस्तुल्यशब्दः । एषामुपादानात् पूर्णा, सादृश्यमात्रावाचकस्य सादृश्याश्रयवाचकस्य तुल्यशब्दस्य योगादार्थी । अत्रत्य 'सादृश्यबोधकत्वाभावात्' इति मर्मप्रकाशस्य सादृश्यमात्रशक्तत्वाभावे तात्पर्यम् । सदृशार्थकस्यापि सादृश्यस्य विशेषणतया बोधकत्वात्, इवादीनामपि पदान्तरसमभिव्याहारे सादृश्यमुख्यविशेष्यकबोधजनकत्वाभावादसङ्गत्यापत्तेः । समासाभावाद् वाक्यगा । प्राणापहारकेषु सुधाभाषणमतिमुग्धस्येति चतुर्थपादसूचितो विरोधस्तु प्रधानीभूतोपमाया अङ्गत्वात् संकरेणाप्राधान्याद्वा व्यपदेशं नार्हति । कस्याश्चिद्विरहिण्या उक्तिरियम् ।

**हरिचरण०** हरेश्चरणकमलयोर्ये नखगणास्तेषां किरणानां पङ्क्तिरिव स्वयमेवाकृत्रिमनिर्मला देवव्रतेन भीष्मेण पुत्रवती गङ्गा ( दृष्टा सती ) मम लोचनं शीतलं करोत्विति भागीरथीभक्तस्य प्रार्थना ।

किरणश्रेणिरुपमानम्, गङ्गोपमेया, नैर्मल्यं साधारणधर्मः पूर्ववच्छ्रौती पूर्णा च । इवेन सह समासात् समासगात्वम् । यद्यपि समासो वैकल्पिकःफलाभावो वा तथाप्यौत्सर्गिकप्रवृत्त्या समासे तात्पर्यसत्त्व उदाहरणता सम्पद्यते । पूर्वंतु वारिधरशब्दात् पूर्वं व्यवहिते च पाठात् तादृशतात्पर्याभावः स्फुट एव । देवव्रतपुत्रिणीत्यत्र तत्कृतार्थतृतीयया समासः । स चार्थो बहुव्रीहिणा न प्रतिपद्यते अतो बहुव्रीहीतरसमासपरककर्मधारयपदघटितस्य न कर्मधारयान् मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः' इति न्यायस्य न विरोधः । असुव्वत इति पतञ्जलिप्रयोगात् पाणिनीयैः स्फुटमनाश्रयणात् । शिशिरशब्दात् तत्करोतीत्यर्थे णिचा शिशिरयत्विति ।

पूर्णा आर्थी समासगा यथा—

'आनन्दनेन लोकानामातापहरणेन च ।
कलाधरतया चापि राजन्निन्दूपमो भवान् ॥'

पूर्णा श्रौती आर्थी च तद्धितगा यथा—

'निखिलजगन्महनीया यस्याभा नवपयोधरवत् ।
अम्बुजवद्विपुलतरे नयने तद्ब्रह्म संश्रये सगुणम् ॥'

---

आनन्देत्यादि ● लोकानाम् आनन्दनेन आसमन्तात् तापहरणेन कलानां धारणेन च हे राजन् ! भवान् इन्दुसदृश इत्यर्थः । आङा श्लिष्टकलाधरपदोपदानेन च व्यज्यमानः पूर्णश्चन्द्र उपमानं राजोपमेयः । आनन्दनं तापहरणञ्च स्फुटमेव साधारणम्; विभिन्नयोरपि कलयोरेकपदोपस्थापितयोः साधारण्यम् । अन्ये च द्वितीयस्यापि तथैव साधारणतां मन्यन्ते । तथा च पूर्णा । सदृशवाचकेन समासात् समासगात्वम् आर्थीत्वम् । न चोपमाशब्दस्य सादृश्यार्थवाचकत्वात्कथमार्थीति न शङ्कनीयम्' इन्दोरूपमायस्येति बहुव्रीहिसमासेन ह्रस्वान्तस्य धर्मिणि शक्तत्वात् । अथवा कर्मप्रत्ययान्त उपमशब्दः सदृशार्थः । कर्तृकरणे कृतावहुर्लमिति समासः । प्रथमपक्षे तु समुदायस्य धर्मिणि शक्तस्य सदृशार्थत्वेऽपि केवलोपमाशब्दस्य सादृश्यमात्रवाचकत्वमव्याहतमिति कश्चित्संदिह्यात् । द्वितीयपक्षे तु न कश्चिद् दोषः । इति मर्मप्रकाशस्याभिप्रायः । तत्रत्योपमशब्दमुपमाशब्देन शोधयन्तः कविशिरोमणयः प्रष्टव्याः । कर्मप्रत्ययान्तस्य अकारान्तत्वसम्भवात् ।

निखिलेत्यादि ● सम्पूर्णजगतः पूजनीया नूतनजलधरस्यामा इव यस्याभा, तथा कमलेन तुल्ये विपुलतरे च यस्य नयने तद् कृष्णस्वरूपं सगुणं ब्रह्म संसेवे । पूर्वार्धे पयोधरपदस्य तदाभायां लाक्षणिकत्वात् पयोधराभा उपमानं कृष्णकान्तिरुपमेया । पूजनीयत्वं साधारणम् । उत्तरार्धे अम्बुजमुपमानं कृष्णनयने उपमेये । विपुलतरत्वं साधारणम् । पूर्वोक्तसादृश्यपर्याप्तशक्तिमत्पदसंयोगे श्रौती, सादृशशक्तपदयोगे आर्थीति सङ्गमयति । अत्र नैयायिकानुयायिनः, चन्द्रेण तुल्यं मुखमित्यादौ तुल्यार्थस्य नामार्थतया निपातातिरिक्तार्थतया च मुखेन सह भेदान्वयासम्भवात् कथमपि तुल्यादिशब्दानां सदृशार्थकत्वमङ्गीकर्तव्यम् । वतिप्रत्ययान्तस्य चाव्ययतयानिपातातिरिक्तत्वमिव अव्ययातिरिक्तत्वस्यापि निवेशनीयतया तदर्थस्य भेदान्वयस्य मुखादौ सम्भवात् किमनुरोधेन सदृशे

शक्तत्वं गौरवमङ्गीकर्तव्यम् । तथा च सादृश्यमात्रशक्तत्वाच्छ्रौतीत्वसम्भवादार्थीत्वादिकल्पनं केवलं गड्डुलिकाप्रवाह एव ।

अव्ययातिरिक्तविशेषणञ्च आख्यातवादशिरोमणिविवरणे ज्ञानवदिच्छेत्यत्र धात्वर्थे वत्यर्थस्यान्वयाय मथुरानाथभट्टाचार्यैः स्फुटं प्रतिपादितम् । एवं लीलावत्यां सामान्यप्रकरणे एकव्यक्तिवदिति मूलव्याख्यावसरे 'व्यक्तञ्च व्यक्तिज्ञानयोर्वतिप्रत्ययेन सादृश्यमभिधीयत इति वर्धमानचरणैरभिहितम् । किञ्च प्रत्ययान्तस्य नामत्वेऽपि प्रत्ययमात्रस्य नामत्वाभावान्न भेदान्वयानुपपत्तिरिति वदन्ति । तत्रालङ्कारकौस्तुभकृतः, सत्यं न चन्द्रेण तुल्यमित्यादौ सदृशार्थानुरोधेनार्थीत्वं कल्प्यते, प्राप्ताप्राप्तविवेकन्यायेन सादृश्यमात्रस्य विधेयत्वात्, अपि तु तृतीयया वृत्तित्वं सादृश्यांशाऽन्तरञ्च तुल्यशब्देनेति वृत्तित्वस्य धर्मस्य चोपस्थापकमेकं पदं नास्ति । तथैव तुल्यार्थे वतिप्रत्ययानुशासनानुरोधेन यावान् तुल्यशब्दार्थस्तावानेव वतिप्रत्ययार्थो न तु वृत्तित्वमपि । किन्तु वृत्तित्वे प्रकृतेर्लक्षणैव । तथा च वृत्तित्वधर्मयोरुभयोरेकोपस्थापकत्वाभावाद् न व्यवस्थाहानिः । पूर्ववत्सन इति सूत्रे 'किमिदं पूर्वग्रहणं सन्नपेक्षं प्राक् सनायेभ्य आत्मनेपदयुक्तं तेभ्यः सन्नन्तेभ्योऽपि भवति' इति भाष्यमादाय पक्षद्वयेऽपि तेन तुल्यमिति तृतीयान्ताद्वतिर्न तु पञ्चम्यन्ताल्लक्षणाभावात्, तुल्यार्थे विहिता तृतीया सर्वविभक्त्यर्थानन्तर्भावयतीति पञ्चम्यर्थस्यापि ग्रहणमुपपन्नमेवेति कैयटेन प्रतिपादनाद् वतिप्रकृतेर्विभक्त्यर्थे लक्षणा स्फुटमेव पदमादधाति इति स्वमतेन समादधते । नापि प्रकृत्यर्थतया चन्द्रवृत्तित्वस्योपमानत्वापत्तिः, प्रत्ययोत्पत्तिदशायां यादृशः प्रकृत्यर्थस्तादृशस्यैवोपमानत्वनियमात् । एतेनैव ब्राह्मणादिव वैश्यादधीत इत्यादौ ब्राह्मणोपादानकाध्ययनस्यापादानत्वम् । एतेन प्रत्ययार्थानुरोधेनापि भेदान्वयसम्भवे दोष इति ब्रुवते । परमेषां व्यवस्था सादृश्यस्यातिरिक्तत्वे न सम्भवतीति स्फुटमेव प्रागपि प्रतिपादितमस्ति । तथाहि सादृश्यस्यातिरिक्तत्वे चन्द्रेण तुल्यमित्यादौ तृतीयार्थः प्रतियोगिता तन्निरूपकत्वं वा न तु वृत्तित्वं चन्द्रवृत्तिसादृश्यस्य बोधानङ्गीकारात् । साधारणधर्मरुपत्वेऽपि निरूप्यनिरूपकभावेन भानात् संसर्गतासमकक्षतया स्वीकारोऽभ्युपेय एव । किञ्चानुशासनोल्लङ्घनमपि न परिहीयते । तुल्यशब्दप्रयोगे नामार्थतयाऽभेदान्वयानुरोधेन सदृशार्थस्य भानस्य तदर्थकस्य वतेर्योगे तादृशार्थत्यागस्य समापतितत्वात् । प्रकृतेर्वृत्तित्वे लक्षणायां प्रमाणाभावाच्च । तुल्यार्थे विहिता तृतीया सर्वविभक्त्यर्थानन्तर्भावयतीति पूर्वोक्तकैयटग्रन्थोऽपि भाष्यसन्दर्भतदुदाहरणपर्यालोचनेन न तां लक्षणां

**अत्र पूर्वार्धे वतेः 'तत्र तस्येव' इति सादृश्ये विधानाच्छ्रौती, उत्तरार्धे 'तेन तुल्यम्' इति विधानात् सादृश्यवदर्थकतया आर्थी ।**

---

स्पृशति । तुल्यार्थं निरूपितसम्बन्धार्थिका तृतीया सर्वविभक्त्यर्थानुपमानघटकी करोतीति तद् ग्रन्थार्थः । पूर्वप्रकृत्यवधिकात्मनेपदसदृशं सन्नन्तावधिकात्मनेपदमिति भाष्यसन्दर्भार्थः । ब्राह्मणवद् वैश्यादधीत इति तदुदाहरणेनापि पञ्चम्यर्थावधित्वकुक्षिकस्य ब्राह्मणापादानकाध्ययनस्योपमानत्ववर्णनेन मम कुतोऽर्थः पोष्यते । प्रत्ययोत्पत्तिदशायां यदर्थबोधकत्वं तस्योपमानत्वनियमादिति व्यवस्थाऽपि न निर्वचनं सहते । तदानीं कल्पितेऽलौकिके वाक्ये तृतीयायाः प्रयोगाद् वृत्तित्वार्थस्य प्रकृत्या क्रोडीकारासम्भवात् ।

तस्मादस्यामविवेकपरम्परारजन्यां पण्डितराजस्य 'विधानात्' इति करपात एव विराजते ।

अयं भावः—शक्तिग्राहकशिरोमणिमहर्षिप्रणीतं व्याकरणानुशासनं सर्वथैव नोल्लङ्घनीयम् । तेन चेवार्थे विहितवतेः सादृश्यं तुल्यार्थे विहितस्य च सदृशोऽर्थः । तथा च नामार्थतयाऽभेदान्वयोऽप्युपपद्यते । प्राप्ताप्राप्तविवेकन्यायेन विधेयांशनिर्णयसमर्थेनापि महर्षिसिद्धशक्तिविपर्यासो न कर्त्तुं शक्यते । निपातस्थानेऽव्ययशब्दविपर्यासोऽपि बहूनामव्ययानामभेदान्वयोपयोगिनां सम्भवे तदर्थं तदतिरिक्तत्वेन संकोचे गौरवमप्रामाणिकमफलञ्च । नामार्थान्वयसंकोचे धात्वर्थे च पुनः संकोचे गौरवपरम्परया च । आदृतञ्च सर्वत्र नव्यनैयायिकैरपि गदाधरादिभिर्निपातातिरिक्तविशेषणमेव । नापि पूर्वोक्तो लीलावतीप्रकाशो मया विरुध्यते, सदृशाभिधानेऽपि सादृश्याभिधानस्य पर्यवसानात् । प्रत्ययार्थत्वमपि प्रकृत्यर्थस्य कुत्रचिद् भेदान्वयसाधकं कथञ्चिद् भवदपि न नामान्तरार्थेन सह भेदान्वय इति न तिरोहितं शब्दार्थकुशलानाम् । मम्मटवैयाकरणादिसम्मतस्य मार्गस्य कतिपयनामनुशासनोल्लङ्घिनामप्यापाततः प्रतीतमर्थमादाय यथामति व्यवस्थापयतां नैयायिकानामनुरोधेन त्यक्तुमशक्यत्वादित्यलमधिकेन । अभेदान्वय इवार्थवति योगेऽपि नामर्थतया यद्यप्यङ्गीक्रियेत, तथापि लक्षणया, सादृश्यशक्तत्वरूपश्रौतीत्वस्य न हानिः ।

वद्वा यथा तथैवमित्यादौ नामप्रकरणे प्रत्ययमात्रपाठस्यानुचितत्वाद् ववेत्यादिपाठः कतिपयटीकासम्मतो भट्टोजिदीक्षितैर्व्यवस्थापितः । यत्तु अलङ्कारकौस्तुभटीकायाः स्थाल्वतिप्रत्ययोर्विषयभेदप्रदर्शनमात्रेण मनोरमाविरोधसदृसं तत्तु साहसमात्रमेवेति सुधीभिराकलनीयम् ।

उपमानलुप्ता वाक्यगा यथा—

'यस्य तुलामधिरोहसि लोकोत्तरवर्णपरिमलोद्गारैः ।
कुसुमकुलतिलक चम्पक न वयं तं जातु जानीमः ॥'

यत्तुलनामधिरोहसीत्याद्यचरणनिर्माणे इयमेव समासगा ।

उपमानाभावेन सादृश्याभावस्य पर्यवसानात् सादृश्यपर्यवसानस्य चोपमाजीवितत्वादलङ्कारान्तरमेवात्र, नोपमालुप्तेति नाशङ्कनीयम्। 'यस्य तुलामारोहसि न तं वयं जानीमः' इत्युक्त्या अस्माकमसर्वज्ञत्वादस्मदगोचरः कोऽपि तवोपमानं भविष्यतीति सादृश्यपर्यवसानमस्तीत्युपमानलुप्तैवेयमुपमा, नालङ्कारान्तरम् ।

---

क्रमप्राप्तां लुप्तामुदाहरन्नाह—उपमानलुप्तेत्यादि ● ।

हे पुष्पकुलानां श्रेष्ठ चम्पक ! विलक्षणरूपैर्विलक्षणैश्च सुरभिप्रसारैर्यस्य सादृश्यमधिगच्छसि तं वयं कदापि न जानीम इत्यर्थः ।

अत्र यस्य तुलामधिरोहसि वाक्यप्रदानेनोपमानसत्त्वेन सादृश्यपर्यवसानमुक्तम् । अतोऽग्रेतनो विवादप्रसारो नेमं स्पृशतीति ध्येयम् ।

तद्धितप्रत्ययानामुपमानवाचकोत्तरविधानेन तद्धितगाभेदस्यासम्भवात् पद्येनैकेनोपमानलुप्तामुपसजिहीर्षुः समासेन समासगां दर्शयति। यत्तुलनामित्यादि ● नालङ्कारान्तरम् ● उपमानसत्त्वात् सादृश्यपर्यवसानेनोपमाकुक्षिनिक्षिप्तमेवेति भावः । स अलंकरणपरवीसामेत्यादिप्राकृतोदाहरणे सर्वथोपमानासत्त्वं न विवक्षितम्, किन्तु उपमानतावच्छेदकरूपेणोपमानोपादानाभाव इत्यादि नैवमेव काव्यप्रकाशटीकायां जयरामभट्टाचार्यैरभिहितम् ।

सम्यग्विरचितेऽनुरूपेऽत्रोदाहरणे पूर्वोक्तप्रकाशटीकायां महेश्वरकृतस्य शङ्कासमाधानस्य प्रदीपस्य च नावसरः सम्यगिति नेह प्रतन्यते तत एव विवेचनीयं विद्वद्भिः । परं प्रदीपकृताम् 'स्वप्रतियोगिसादृश्यानुयोगिनिषेधस्याप्युत्कर्षपर्यवसायित्वात्' इति लेखनेन भ्रान्ता अलङ्कारकौस्तुभकृतो रसगङ्गाधरपद्यमिदमाक्षिपन्तन्न समीचीनमिति प्रतीमः।

अयं भावः—प्रदीपकृतां सरसकाव्यस्य सदृशं दृश्यते न वा श्रूयते इत्यादिपद्ये काव्यस्योपमानस्योक्ततया कथमुपमानलुप्तोदाहरणमिति शङ्कायां प्रकृतस्य काव्यस्योत्कर्षायोपमेयत्वमेव विवक्षितमित्यन्येषां क्लिष्टं व्याख्यानमाश्रित्येदमुक्तं

एतेन
'ढुंढुंणंतो हि मरीहसि कंटककलिआइं केअइवणाइं ।
मालइकुसुमसरिच्छं भमर भमंतो न पावहिसि ॥'
इत्यत्रासमालङ्कारोऽयमुपमातिरिक्त इति वदन्तोऽलङ्कार-रत्नाकरादयः परास्ताः ।

---

भगवता यदुपमाननिषेधैनैव न प्रकृतस्योत्कर्षः सिद्ध्यति, अपि तु उपमेय-निषेधेनापि प्रकृतस्योत्कर्ष इति । परं सा चर्चा यत्र सादृश्यपर्यवसानं न जायते तत्रोदेति, न तु स्फुटतया पर्यवसितसादृश्यके पण्डितेन्द्रपद्ये । किन्तु सिद्धान्तितयोदाहृते कौस्तुभपद्ये—

चन्द सरिसं मुहंसे अमअस्स मुहरसो निस्सा ।
सक अग्गहरहसा अलचुव्वणं कस्स सरिसं से ॥

सादृश्यपर्यवसानाभावादुपमाभेदत्वं नायातीति दूषणमवशिष्यत इति शम् ।

एतेन ● यत्र सादृश्यं पर्यवसितं तत्रोपमाभेद एव सर्वथा सदृशनिषेधेऽसमालङ्कारस्य विषय इति पूर्वोक्तेन वक्ष्यमाणेन वा व्यवस्थापनेनेत्यर्थः ।

ढुं ढुं कृत्वा मरिष्यसि कण्टककलितानि केतकीवनानि ।
मालतीकुसुमसदृक्षं भ्रमर भ्रमन् न प्राप्स्यसि ॥

इतिच्छाया ।

हे भ्रमर मालतीकुसुमसौरभमिव केतकी सौरभमितिभ्रान्तोऽसि । मालत्यां कण्टकानि न सन्ति केतकी तु कण्टकाविद्धाऽतो मालतीकुसुमसदृशं नैव प्राप्स्यसि इत्यभिप्रायः ।

अत्र प्रतीयमानो व्यतिरेको हेतुहेतुमद्भावो वा पराङ्गतया नाङ्कुरतीत्युपमैव ।

अत्र मालतीकुसुमस्योपमानताप्रतीतिशङ्कायां सरसकाव्यस्य सदृशमित्यादौ प्रकाशटीकायां जयराममहेश्वरोक्तौ प्रकारावनुसन्धेयौ, विस्तरभयान्नेह प्रतन्यते ।

इदमवधेयं श्रीमद्भिः रक्षासीति पुराऽपि संश्रृणुमहेवीरस्तु कस्तादृशो यो जागर्ति जगत्रयीविपदलङ्कर्मीणदोर्विक्रम । शश्वद्द्वारभुवि प्रशस्तिरचनावर्णीय-मानेक्षण-श्रेणिसम्भृतगोत्रभिन्मयजयस्तम्भो यथा रावणः ॥

इति अनर्घराघवपद्ये कस्तादृश इति वर्णनम्, त्वमिव कोऽपि परापकृतौ कृती न ददृशे न च मन्मथ शुश्रुवे' इति नैषधीये, यस्य तुलामित्यादौ पण्डितेन्द्रपद्ये च न सामान्यतो निषेधवर्णनमपि तु दर्शनश्रवणज्ञानानामभाव-स्य वर्णनम् । अनयोर्यदि वैचित्र्यमनुभवपथम् तदा पण्डितराजानां व्यवस्थैव विराजते इति ।

धर्मलुप्ता श्रौती वाक्यगता यथा—

'कलाधरस्येव कलावशिष्टा विलूनमूला लवलीलतेव ।
अशोकमूलं परिपूर्णशोका सा रामयोषा चिरमध्युवास ॥'

'ग्रीष्मचण्डकरमण्डल' इति प्रागुदाहृते पूर्णाया उदाहरणे प्रावृषेण्यो वारिधर इव यो वृष्णिवरेण्यः स मे वेदनां हरत्विति वृष्णिवरेण्यमात्रगतत्वेन वेदनाहरणकर्तृत्वं विवक्षितम्, वारिधरसादृश्यं च श्यामत्वादिना यदि, तदा तत्राप्येषा बोध्या ।

इयांस्तु विशेषः—यत्पूर्णायां वृष्णिवरेण्यमात्रमुद्दिश्य प्रावृषेण्यवारिधरसादृश्यप्रयोजकं तादृशवारिधरसादृश्याभिन्नं वा वेदनाहरणकर्तृत्वं विधेयमित्युपमाविधेयिका धीः, धर्म-

---

कलाधरस्य● चन्द्रस्य अवशिष्टा कला इव कार्श्यमागता छिन्नं मूलं यस्याः सा । मर्मप्रकाशप्रकाशिता 'हरफारेवड़ी' इति लोकप्रसिद्धा लवलीलता इव म्लानिमाश्रिता अशोकवृक्षस्य मूले परिपूर्णशोका सती सा प्रसिद्धा सीता चिरं निवासं चकारेत्यर्थः । मूलमित्यस्याधारस्य 'उपान्वध्याङ्वसः' इति सूत्रेण कर्म संज्ञा । उपमानोपमेयौ स्फुटौ । उपमानवाचकादिपदसमभिव्याहारेण प्रतीयमानौ कार्श्यम्लानिधर्मौ नोपात्तावतो लुप्ता धर्मलोपेन । अशोकशोकरामपदानि साभिप्रायाणि ।

विवक्षाविशेषमाश्रित्यव्याख्यानभेदेनैकस्मिन्नपि पद्ये कतिपयभेदसमन्वयविशेषव्युत्पत्तये अन्यत्रापि समन्वयं दर्शयति—यत् पूर्णायां● विधि प्रत्ययप्रकृत्यर्थस्य विधेयतायाः प्रथममुपस्थितत्वादतिरिक्तस्य विधेयतायां प्रमाणाभावाद् वेदनाहरणकर्तृत्वं विधीयते । एतेन वेदनाहरणक्रियावत्त्वेन प्रार्थनाविषयो वृष्णिवरेण्यो वारिधर इवेति योजनायाः सादृश्यविधेयिकायाः शङ्कासमाहिता । भावप्रधानमाख्यातमिति यास्कवचनेन धात्वर्थस्य प्राधान्यात्तस्य च विधेयत्वानुगुणत्वात् च । व्यापारवत्त्वस्य कर्तृत्वस्य शाब्दिकसरणिसिद्धत्वाद् वेदनाहरणं विधेयमिति समायाति । प्रार्थ्यमानत्वादसिद्धत्वञ्च तस्य स्फुटमेव । नैयायिकनयेन प्रत्ययार्थभूतकर्तृत्वपर्यन्तस्य विधेयत्वे तस्योद्देश्यभूते कर्तरि विशेषणीभूतस्य प्राप्ताप्राप्तविवेकन्यायेन विधेयत्वकल्पनायां काठिन्यमिति पदवाक्यप्रमाणज्ञाविवेचयन्तु । सादृश्यप्रयोजकं सादृश्याभिन्नमिति सन्दर्भं क्रमशः सादृश्यस्यातिरिक्तत्वे धर्मरूपत्वे च योजयन्ति, वयं तु विशिष्टधर्मरूपस्य सादृश्यस्य

लुप्तायां तु वारिधरसादृश्यावच्छिन्नवृष्णिवरेण्यमुद्दिश्य वेदना-हरणकर्तृत्वमात्रं विधेयमित्युपमोद्देश्यतावच्छेदिका ।

धर्मलुप्ता आर्थी वाक्यगता यथा—

'कोपेऽपि वदनं तन्वि तुल्यं कोकनदेन ते ।
उत्तमानां विकारेऽपि नापैति रमणीयता ॥'

धर्मलुप्ता समासगा श्रौत्यार्थी तद्धितगार्थी च यथा—

'सुधेव वाणी वसुधेव मूर्त्तिः सुधाकरश्रीसदृशी च कीर्तिः ।
पयोधिकल्पा मतिरासफेन्दोर्महीतलेऽन्यस्य नहीति मन्ये ॥'

---

शुद्धोधर्मः प्रयोजकः, विशिष्टः शुद्धान्नातिरिच्यत इति न्यायेनाभिन्नोऽपि तेनेत्याकल्पयामः। लुप्तायान्तु ● तुनाऽस्वरसः सूचितः। सा चोपात्तधर्मस्योपमा-प्रयोजकत्वे सम्भवति । अनुपात्तधर्मेण सादृश्यं न सम्पादनीयम् अन्यथा बहुत्र धर्मलुप्ताप्रसङ्ग इत्यालङ्कारिकसमयः। तादृशस्य च वेदनाहरणस्योपात्तत्वाच्छथा-मत्वादिना तत्कल्पने मानाभावरूपः ।

कोपेऽपि ● वदनमुपमेयं कोकनदस्योपमानता। कोकनदं कमलम्, कोपो विकारस्तथापि रमणीयतां न ह्रासयति, यत उत्तमं तव वदनमिति भावः ।

अर्थान्तरन्यासेनोत्तमत्वं दृढीक्रियते । साधारणं सौन्दर्यादिकं नोपात्तम्, अत एव प्रतीयमानस्य तस्य लुप्तता । न चोत्तरार्धेन कोकनदस्योत्तमस्य विकारे रमणीयत्वं नापैति, तथा तव वदनमुत्तममिति उत्तमत्वं साधारणमुक्त-मेवेति वाच्यम्, कोकनदे विकारस्यावर्णितत्वात्, वदनकोकनदयोरुत्तमत्व-सम्बन्धस्यावाच्यत्वात् कथमपि योजनयाऽपि प्रतीयमानत्वस्याक्षतेश्च ।

अत्रार्थान्तरन्यासेन चमत्कृता सहोपमाऽपि विच्छित्तिविधायिनी न विरोधविद्धेति ध्यातव्यम् । अथवा कथमन्यो भजेतेदं पूर्वपुण्यचयोदयमिति विपरिणयनीयम् ।

सुधेव ● आसफमहाराजस्य वाणी मूर्तिः कीर्तिर्मतिश्चोपमेयाः क्रमशः सुधा वसुधा चन्द्रश्रीः पयोधिश्चोपमानानि । प्रतीयमानानि माधुर्यविशालता-धवलतागाम्भीर्यादीनि साधारणानि नोपात्तानि ।

इवेन समासस्य सत्त्वात् प्रथमे द्वे समासगे श्रौत्यौ, तृतीया समासगा सती सदृशपदोपात्ता आर्थी । पयोधेरिषन्न समाप्तिर्यस्यां मतावित्युक्तावधिकस्य पयोधेः समाप्तिस्तुल्यवित्तिवेद्यतया प्रतीयते । अधिकस्य समाप्तिश्च भूयोधर्मवत्त्वेनेति

ईषदसमाप्तिरपि भङ्गयन्तरेण सादृश्यमेव।

वाचकलुप्ता समासगा—'दलदरविन्दसुन्दरम्' इति प्रागुदाहृते पद्ये।

कर्माधारक्यज्गता क्यङ्गता च यथा—

'मलयानिलमनलीयति मणिभवने काननीयति क्षणतः।
विरहेण विकलहृदया निर्जलमीनायते महिला॥'

---

सादृश्यं पर्यवस्यति। भङ्गयन्तरेणेत्यस्य व्यञ्जनयेत्यर्थः। अत्र नागेशभट्टमहोदयाः सादृश्यविशिष्टार्थप्रतिपादकत्वादार्थीति व्याचख्युः। वयं तु व्यञ्जनया सादृश्यबोधनेऽपि तत्र शक्तेरभावादार्थीत्वं समर्थयामः। प्राक् तैरपि महोदयैः सादृश्यशक्तत्वाशक्तत्वाभ्यां तद्विभागमतं ग्रन्थकारस्यावावर्णि। सिद्धान्तकौमुद्यामपीषदसमाप्तेरिषदून इत्येवार्थो वर्णितो न तु सादृश्यं सदृशं वा। तत्र तस्येवेति वतेः षष्ठयर्थसम्बन्धिनि साधारणे गुणादावेवान्वयान्न तद्धिते धर्मलोपे श्रौती सम्भवः। कुशाग्राच्छ इति विहिते छप्रत्ययेऽपि फलतः सदृशे विधानात् सादृश्यमात्रवाचकत्वाभावात्। वस्तुतः प्रतिकृतौ विहितस्य व्यञ्जनया सादृशार्थकत्वमिति न विस्मरणीयम्।

तुल्यार्थवति योगे आर्थ्यपि न शङ्कनीया, भाष्यादिषु भूषणादिषु क्रियान्वयस्य प्रतिपादितत्वात् क्रियाधर्मस्योक्तत्वादत उपसंहरति—**वाचकलुप्तेत्यादिना** ● वाचकस्याप्रयोगो वाचकलुप्तत्वम्। गुरुजनभयेत्यादिपद्यस्य तृतीयपादोदरदलदेत्यादि, अरविन्दमिव सुन्दरमिति विग्रहे उपमानानि सामान्यवचनैरिति सूत्रेण समासात् समुदायेन मतान्तरेण पूर्वपदेन वा अरविन्दसादृश्यस्याभिधानादिवस्याप्रयोगाल्लुप्तता। एतेन कोकिलाऽलापिनीत्यादिदीक्षितोक्तस्य णिनिप्रत्ययान्तस्य पृथक्त्वेनोक्तस्य नासंग्रहः। उपपदमतिङ्सूत्रेण समस्तस्य तस्य समासत्वेनैव क्रोडीकारात्।

**मलयानिलम्** ● विरहेण खिन्नहृदया कामिनी मलयवायुमुद्दीपकत्वेन तापजनकत्वादग्निमिवाचरति मलयपवनो मां दहतीत्यनुभवतीत्यर्थः। मणिभवने तत्रत्यवस्तुषु जनेषु विरतेर्मणिभवने रतिं न भजते हृद्यगतहृदया रहस्यमनुभवतीत्यर्थो वा। जलं विना मीन इव जीवनालम्बनं विना भवतीतिं निर्जले मीन इवाचरतीत्यस्यार्थः।

मलयानिलानलयोस्तापजनकत्वम्, मणिभवनकाननयोर्विरती रहस्यं वा, मीनमहिलयोर्जीवनालम्बनविरहः साधारणो धर्मः। स चा चारकुक्षि-

अत्रानलमिवाचरतीत्यर्थेऽनलशब्दात् 'उपमानादाचारे' इति सूत्रेण, कानन इवाचरतीत्यर्थे काननशब्दाच्च तत्सूत्रस्थेन 'अधिकरणाच्च' इति वार्त्तिकेन क्यच्। निर्जलमीनशब्दाच्च 'कर्तुः क्यङ् सलोपश्च' इति क्यङ्।

आचारमात्रार्थकतया क्यचक्यङोः प्रकृत्यैव लक्षणया स्वस्वार्थसादृश्यप्रतिपत्तिरिति नये सादृश्यवाचकाभावाद् वाचकलुप्ता। अनलीयतीत्यादिसमुदायस्यैवानलादिसादृश्य-प्रयोजकाचरणकर्तृशक्तत्वमिति नयेऽपि सादृश्यसादृश्यविशिष्ट-मात्रवाचकाभावाद् वाचकलुप्ता।

---

निक्षिप्तः क्यजादिनोच्यते इति न धर्मलोपोऽपि तु सादृश्यवाचकस्य लोप इति सङ्गमयति। आचारमात्रेत्यादिना ● ।

अयमत्राभिसन्धिः --अनलीयतीत्यादौ क्यच आचारमात्रमर्थः। अनल-पदादेर्लक्षणया अनलसादृश्यमर्थः। सादृश्यस्य च स्वप्रयोजके साधारणधर्मे क्यजर्थाचारे तस्य च व्यापाररूपस्य आख्यातार्थे कर्तृत्वेऽन्वयः। तथा चानलादिसादृश्यप्रयोजकोय आचारस्तदनुकूलकृतिमान् मलयानिलादिरिति समुदायशक्तिमनङ्गीकुर्वतो नैयायिकस्य मतेन वाक्यार्थविचारः। तथा चात्र मते सादृश्यलक्षिका यद्यपि प्रकृतिः, तथापि सादृश्यवाचकं पदं नास्तीतिवाचकलुप्ता। वैयाकरणास्तु नामधातोरपि पदविधितया तस्यापि समर्थाश्रिततया तत्राप्येकोपस्थितिजनिकामेकार्थीभावशक्तिं ब्रुवते। तन्मते समुदायस्यैवानलादिसादृश्यप्रयोजकाचारणकर्ता अर्थः। तन्मते सादृश्यवाचकं पदं समुदाय एव वर्तते, तथाप्यनलादिमिश्रिताधिकस्यार्थस्य वाचकत्वात् सादृश्यमात्रवाचकं नास्ति श्रौतीस्थले। आर्थीस्थले च सादृश्यविशिष्टमात्र-वाचकाभावाल्लुप्तताव्यवहारः।

अत्र मर्मप्रकाशस्य शङ्कासमाधाने। वाचकानां लोपे वाचकलुप्तेत्याग्रहो न कार्यः। इवादीनां द्योतकतामतेऽपि तदापत्तेः। प्रतिपक्षादीनां सादृश्यलक्षकानां समभिहारेऽपि लोपापत्तेश्च। तस्माद् वाचकपदमत्र बोधकपरम्, सादृश्यमात्रबोधकस्य सदृशमात्रबोधकस्य वा अप्रयोगे वाचकलुप्ततेति। एवञ्चात्र क्यजादीनां योगे श्रौतीति समायाति। नैयायिक-मतेन लक्षणापक्ष आर्थी, वैयाकरणमतेन तु श्रौतीत्यपि ध्येयम् समुदायस्य सादृश्यविशेषणे विशेष्यादौ कर्तृत्वे च शक्तिसत्त्वेऽपि सादृश्यनिष्ठसाक्षाच्छक्य-

कर्तृकर्मणमुलगता यथा—

'निरपायं सुधापायं पयस्तव पिबन्ति ये।
जह्नुजे निर्जरावासं वसन्ति भुवि ते नराः॥'

अत्र सुधापायमिति सुधामिव, निर्जरावासमिति निर्जरा इवेति 'उपमानात् कर्मणि च' इति कर्मणि, चकारात्कर्तर्युपममाने उपपदे णमुल्।

---

तावच्छेदकत्वानिरूपिता सादृश्यनिरूपिता च या शक्तिस्तादृशशक्तिमच्छब्दयोगे श्रौतीति पण्डितराजस्य मतवर्णने श्रौतीत्वनिर्वाहः। यद्यपि काव्यप्रकाशप्रसिद्धेष्वेषु वाचकलुप्ताभेदेषु श्रौतीत्वादिविभागो न कृतः। कतिपयटीकाकृद्भिश्च द्योतकसत्त्व एव श्रौतीत्वार्थीत्वविभागः सम्भवति द्योतकाप्रयोगायाञ्च वाचकलुप्तायां नानयोरवसर इति समर्थितश्च। अन्यैश्च तदनुसारिभिरेव अर्थात् सिद्धाया उपमाया आर्थीत्वञ्च समाख्यातम्, तथापि जयरामभट्टाचार्यैर्विभिन्नक्यजाद्यर्थनिरूपणेन न्यायपञ्चाननैश्च पूर्ववर्णिततन्मतरीत्या पौरं सुतीयतीत्यादौ श्रौत्या अभ्युपगमादालङ्कारिकसम्प्रदायविरोधो मयि नापादनीयः, किन्तु रसगङ्गाधरप्रतिज्ञातप्रणाल्या यदि न स्पृश्यते श्रौतीत्वम्, तदैव ग्रन्थास्वरसः सम्भावनीयः। स च न सम्भवति, तथाहि—यदि द्योतकाभावाच्छ्रौतीत्वाभावः, तदा नास्ति द्योतकस्य क्यजादेः सत्त्वात्। न च विशिष्टशक्तिपक्षे सा न सम्भवति इति वाच्यम्, इवादिना समासेऽपि विशिष्टशक्तिपक्षे श्रौतीत्वानापत्तेरित्यलं बहुतरवर्णनेन। अनयैव दिशा सुधियो विभावयन्तु।

**निरपायम्** ● निर्विघ्नं यथा स्यात्तथा सुधामिव ये तव पयः पिबन्ति ते नरा भुवि वर्तमाना अपि निर्जरा इव वसन्ति।

सुधा उपमानं पय उपमेयम्; निर्जरा उपमानं नरा उपमेयाः। पूर्वत्र कर्मणि परत्र च कर्तर्युपपदे णमुल्। क्रमशो माधुर्यं क्लेशालिप्तजीवनञ्च साधारणो धर्मः। स च निरपायमिति शब्देन सूच्यते। अथवा सुधापयसोर्बिम्बप्रतिबिम्बभावापन्नतया उत्तरार्धे निरपायं सुधापानमेव साधारणो धर्मः पूर्वार्धे साधारणधर्मस्य लोपः। निरपायमित्यस्य क्रियाविशेषणतया सुधापयसोः साधारणतां सम्यग् न भजत इति चिन्तनीयमलङ्कारकृतिभिः। एतादृशस्थलेऽलङ्कारकौस्तुभ कृतः कषादिषु यथाविध्यनुप्रयोग इति सूत्रे णमुल् प्रकृतिभूतधातोरेवानुप्रयोगविधानेन प्राय उभयोरेकस्य वैयर्थ्यादनुप्रयुक्तस्याख्यातार्थान्वययानुरोधेन वैयर्थ्यस्याशक्यतया णमुल् प्रकृतिभूतस्यैव निरर्थकत्वं साधुत्वमात्रार्थकत्वमिति वर्णयन्तः पुनरुक्तदोषं

दूरयन्ति । प्रायोऽत्रापि पण्डितराजस्य लेखेनोभयोः सार्थकता न प्रतीयते। तत्र शाब्दिका विमृशन्तु । सिद्धाप्रयोगस्थले योगान्तरेण स्फुटमुक्तत्वादत्र चानुक्ते-रन्यतरस्य वैयर्थ्यं पाणिनीयतां भजते न वा । सिद्धान्तकौमुद्यां समूलकाषं कषती-त्यादौ सामान्यविशेषभावसम्पादनद्वारोभयोरभेदान्वयः प्रदर्शितः । अत एव कैश्चिदलाङ्कारिकैरेव पार्थसञ्चारं सञ्चरतीत्यादौ पार्थकर्तृकसञ्चारसजातीय-सञ्चारवानित्यादिरर्थो वर्णितः । तद्रीत्या सुधाकर्मकपानाभिन्नं पयःकर्मकं पानमित्यर्थ आयाति । सुधापयसोरभेदाध्यवसायेनाभेदस्यायोग्यता । तादृशस्य पानस्य च साधारणतया सुधापयसोरुपमा व्यज्यते । एवमेव निर्जरावास-मित्यत्रापि । सूत्रवर्णितस्य कर्तुः कर्मणश्चोपमानत्वस्यैवमपि निर्वाहात् ।

अत्र केचन णमुलोर्भेदः सजातीयश्चार्थः । भेदश्च सकर्मकधातुसमभिहारे कर्मणि अकर्मकयोगे च कर्तरि अन्वेति । सजातीयश्च पानयोरन्वेति । तथा च सुधाभिन्नपयःकर्मकं यत्सुधाकर्मकपानसजातीयं पानमित्यादिरीत्या बोधः। भेदस्य प्रत्ययार्थत्वादेव सुधापाय सुधां पिबन्तीति न प्रयोगः। प्रकृत्यर्थस्यान्वयिता-वच्छेदकावच्छिन्नप्रतियोगितैव संसर्गस्तेन नोभयभेदमादाय प्रसक्तिः । अनन्व-यालङ्कारे वक्ष्यमाणे संरब्धदाशरथिदर्शं दाशरथिमित्यत्र भेदस्यानन्वयादेवा-नन्वयनिर्वाहः । अथवा तत्र लक्षणया सजातीयमात्रमेव णमुलर्थः । तथा च सादृश्यस्योपात्तत्वात् पूर्णोपमैषेति वदन्ति । तत्तु सकलालङ्कारिकवचोविरोधा-दुपेक्ष्यम् । नापि च युक्तमव्ययकृतो भाव इत्यनुशासनेन भावे शक्तस्यातिरिक्तार्थ-कल्पनायां व्याकरणविरोधाद् गौरवाच्च । उपमानत्वरक्षायै गम्यमानं लक्ष्यं वा सादृश्यमादाय पर्यवसानात् । लङ्कापुरादित्यादौ वाचकलुप्तस्यैवानन्वयस्य सम्भवः। सजातीयत्वस्य क्रिययोरेवान्वयाद् भेदान्वयिन उपमानत्वस्य सूत्रसम्मतस्या-प्राप्तेश्च । यदि क्यजादिस्थलवर्णितग्रन्थकाररीत्या पायमित्यस्य भावप्रत्ययान्तस्य पानमर्थः सुधापदस्य चोपमानत्वरक्षायै लक्षणया सुधानिष्ठसादृश्यमर्थस्तस्य च प्रयोजकतासंसर्गेण पाने तस्य च पयःकर्मके पानेऽन्वयोऽथवा सुधापायमिति समुदायस्यैव सुधानिष्ठसादृश्यप्रयोजकपानमर्थ इति वर्ण्यते, तदाऽनुशासनसम्म-त्तस्य सुधायाः कर्मत्वस्योपपत्तिर्न जायते । तदर्थं पयसाऽभेदाध्यवसायेन कर्मत्व-मारोपितं ग्राह्यं भवेत् । सर्वथाऽपि पूर्वं लक्षितस्य वाचकलुप्तालक्षणस्यान्वयापायो न जायत इति ध्येयम् । इदमपि चिन्तनीयं विद्वद्भिर्यदग्रेऽनन्वयालङ्कारे संरब्ध-दाशरथिदर्शं दाशरथिमित्यत्र वैयाकरणसर्वस्वैर्नागोजिमहोदयैः संरब्धदाशरथि-रिव दृश्यत इति विजगृहे । तद्रीत्या कर्मणि प्रत्ययो न तु कर्मोपपदे । तथा च कर्मणः कर्तुश्च विशेषणं णमुलन्तम् । तदा सुधामिवेति विग्रहः कथमिव ।

धर्मोपमानलुप्ता वाक्यगा समासगा च यथा—

'गाहितमखिलं विपिनं परितो दृष्टाश्च विटपिनः सर्वे।
सहकार न प्रपेदे मधुपेन तथापि ते समं जगति॥'

'तथापि ते समम्' इति हित्वा 'भवत्समम्' इति यद्यार्या शुद्धैव विधीयते, तदेदमेवोदाहरणं समासगायाः।

वाचकधर्मलुप्ता क्विब्गता यथा—

'कुचकलशेष्वबलानामलकायामथ पयोनिधेः पुलिने।
क्षितिपाल कीर्तयस्ते हारन्ति हरन्ति हीरन्ति॥'

---

अथवा दृश्यत इति भावप्रत्ययस्य विवरणम्, प्रथमा तु कथञ्चित् तद्योगे समाधेयेत्यलं विशेषवर्णनेन।

वाक्ये वाचकलुप्ता न संभवति मुखं चन्द्रो रमणीयमित्यादिवाक्यात् सादृश्यस्याप्रतीतेरित्याशयेनोपसंहरति।

**गाहितम्●** यद्यपि मधुपेन सकलं विपिनमालोडितम्, सर्वे वृक्षा अपि दृष्टाः तथापि हे सहकार! तव समं तेन न प्राप्तम्। सहकारस्योपमानमन्वेषणेनापि न लभ्यत इत्युपमानस्य लोपः। न च सर्वथोपमानाभावो विवक्षितः, येन सादृश्यापर्यवसानं शङ्कनीयमिति पूर्वरीत्याऽवसेयम्। धर्मोऽपि न कश्चिदुपात्त इति धर्मस्यापि लोपः।

लाघवमनुरुध्य तत्रैव चतुर्थपादपरिवर्तनेन समासगां योजयति— **तथापीत्यादिना●**। पूर्वत्रार्यागीतिमिश्रिता आसीदेषा तु शुद्धेति भावः।

**कुचकलशेषु●** हे क्षितिपाल! तव कीर्तयः अबलानां कलशेषु हारान् इवाचरन्ति, अथ अलकायां हर इवाचरन्ति, पयोनिधेः पुलिने हीराणीवाचरन्ति।

कीर्तेर्धवलतायाः कविसम्प्रदायसिद्धतया तादृशा हारा हरो हीराणि चोपमानानि। धवलताया अनुपात्तत्वाद् धर्मलोपः। तथाऽचारस्यापि धर्मस्य वाचकः क्विप् लुप्त एव। क्विप आचारमात्रार्थकतया सादृश्यवाचकमपि नास्ति, सर्वत्र सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्य इति वार्त्तिकेण विहितस्य क्विपः सर्वापहारिलोपात्।

अत्र हारहरहीरशब्दा आचारार्थके क्विपि लुप्ते धातवः। तत्र हारादिशब्दा लक्षणया हारादिसादृश्यं बोधयन्ति। लुप्तोऽपि स्मृतः क्विबाचारमिति पक्षे वाचकधर्मलोपः स्पष्ट एव। हारादिशब्दा एव लक्षणया तादृशसादृश्याभिन्नमाचारमिति पक्षे सादृश्यस्येव धर्मस्यापि तन्मात्रबोधकाभावाल्लोप एव।

वाचकधर्मलुप्ता समासगा यथा—

'शोणाधरांशुसंभिन्नास्तन्वि ते वदनाम्बुजे।
केसरा इव काशन्ते कान्तदन्तालिकान्तयः॥'

---

**धातवः** तावन्मात्रस्य क्रियावाचित्वम्। **हारादिसादृश्यम्** तस्य च प्रयोजकतासम्बन्धेन क्विवर्थाचारेऽन्वयः तथा च हारादिसादृश्यप्रयोजकाचारकर्तृत्ववन्त्य इति बोधः। क्विपोऽस्मरणेऽपि बोधानुभवानुरोधेन वृत्तेरेकोपस्थितिजनकत्वानुरोधेन वा आह—**हारादिशब्दा एवेत्यादि** पूर्वत्र शक्तस्य क्विपो लोपादुत्तरत्र तु शक्तत्वाभावात् तन्मात्रबोधकत्वाभावाद् वाचकलुप्तता।

**शोणाधरेत्यादि** हे तन्वि! ते वदनाम्बुजे शोणैरधरस्यांशुभिः संभिन्ना याः सुन्दराणां दन्तानामालेः कान्तयस्ताः केसरा इव काशन्ते।

वदनमम्बुजमिवेति 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासेन वदनस्य प्राधान्यात् तस्याम्बुजसादृश्योपपत्तये वदनीयदन्तालिकान्तीनां केसरसादृश्यं प्रतिपादितम्। तथा हि अम्बुजे यथा केसराः काशन्ते, तथा वदने दन्तालिकान्तयः। केसरकान्त्योश्च शोणत्वं साधर्म्यम्। तथा च कान्तीनां केसरौपम्यं विधेयम्। उपमितयोः केसरकान्त्योश्चाधिकरणं वदनमम्बुजञ्च तत्र वर्तमाना उपमाऽधिकरणतावच्छेदिका। तत्रेवशब्दस्याभावात् साधारणधर्मस्याभावाच्च वाचकधर्मलुप्तता। विधेये सर्वेषामुपादानात् पूर्णा श्रौती। केसराः कान्तयश्च पृथगेव वदनाम्बुजयोर्धर्मा उपात्ता न तु साधारण्यं केषुचिदपि, पश्चान्मनसा सादृश्यमूलकाभेदारोपेण कथञ्चिद् व्यज्यमानमपि सामान्यं नोपात्ततां भजते। सूत्रे चाप्रयोगग्रहणादुपात्तत्वमेव निवार्यते, न तु सद्भावः, अतः सामान्यस्य वर्णनादुपमितसमासाभावो न शङ्कनीयः।

अत्र वदनाम्बुजयोरभेदविवक्षया विशेषणसमासे दन्तालिकान्तीनां केसरसादृश्योक्तिरसङ्गता स्यात्। यतो ह्यम्बुजतादात्म्यसाधकं दन्तालिकान्तीनां केसरतादात्म्यम्, न तु केसरसादृश्यम्। उपमितसमासे तु वदनाम्बुजयोर्धर्मिणोरौपम्ये केसरदन्तालिकान्तीनामपि तद्धर्माणामौपम्योक्तिरुचितैव। अतोऽधिकरणतावच्छेदकोपमामादाय वाचकधर्मलुप्तोदाहृता। विधेयतावच्छेदिका तु पूर्णैव।

वाचकोपमेयलुप्ता क्यज्गता धर्मोपमानवाचकलुप्ता समासगा च यथा—

'तया तिलोत्तमीयन्त्या मृगशावकचक्षुषा।
ममायं मानुषो लोको नाकलोक इवाभवत्॥'

तिलोत्तमीयन्त्येति तिलोत्तमामिवात्मानमाचरन्त्येत्याचारार्थके क्यचि तिलोत्तमापदस्य तिलोत्तमासादृश्ये लाक्षणिकतया

---

विशेषणसमासं वारयति—अत्रेत्यादिना● विशेषणस्योत्तरप्रयोगाय मयूरव्यंसकत्वं प्रकल्प्योपमानोपमेययोः समासेन तादात्म्यस्य प्रतिपित्सितत्वे तत्साधनाय वदनाम्बुजगतवस्तुनोस्तादात्म्यमेवोपयुज्यत इति भावः। न हीयं वाक्ये सम्भवति, मुखं चन्द्र इत्यादावुपमाया अप्रतीतेः। नापि तद्धिते वत्यादेरेव वाचकस्य सम्भवात्, अत उपसंहृत्यान्यं भेदमुदाहरति—तयेत्यादिना●।

आत्मानं तिलोत्तमामिवाचरन्त्या तिलोत्तमासदृश्या मृगशावकस्य चक्षुषी इव चञ्चले चकिते दीर्घे वा चक्षुषी यस्यास्तया स्वर्गप्राप्यायास्तिलोत्तमाया अत्रैव लाभाद् मम अयं मानुषो लोकः सुराणां लोक इवाभवत्। तिलोत्तमोपमानमेतन्नायिकात्मोपमेयः। गम्यमानमतुलानन्दविधायित्वं साधारणम्। क्यच आचारमात्रार्थकतया वाचकस्य लोपः। लाक्षणिकतया● अत एव वाचकलोपः। समुदायशक्त्या

वाचकस्य, स्फुटत्वेनाप्रतीयमानतया आत्मन उपमेयस्य चानुपादानाल्लोपः। स्वयं तु सा नोपमेया, आचारकर्मण उपमानस्य तिलोत्तमारूपस्य तत्कर्त्र्यामुपमेयायामुपमानत्वासङ्गतेः। अत आत्मैवात्रोपमेयतयोन्नेयः। मृगशावकचक्षुषेति मृगशावकस्य चक्षुषी इव चक्षुषी अस्या इति 'सप्तम्युपमानपूर्वस्य' इति समासोत्तरपदलोपौ। मृगशावकपदस्य मृगशावकचक्षुःसदृशलाक्षणिकत्वपक्षे वृत्तेर्विशिष्टार्थवाचकतापक्षेऽपि स्वस्वमात्रबोधकपदाभावात् त्रयाणां लोपः।

इति पञ्चविंशतिरुपमाभेदाः।

---

आत्मन उपमेयस्य प्रतीतावपि तन्मात्रप्रत्यायकपदाभावादाह **स्फुटत्वेनाप्रतीयमानतयेति**। प्रतीयमानस्येति नञ्रहितोऽपि पाठः। आत्मनोऽनुपादानाल्लोप एव। उपमानवाचकधर्मलुप्तां समन्वेतुमाह **मृगचक्षुषेति**। अत्र सर्वत्र मृगपदादिशावकपदं ग्राह्यम् पद्ये मृगशावकचक्षुष उपमानत्वोक्तेः। शावकचक्षुषी उपमानं नायिकाचक्षुषी उपमेये साधारणं पूर्वोक्तं गम्यमानमिवपदाप्रयोगात् त्रयाणां लोपः। अत्राङ्कुरन्त्यपि विभावना तिलोत्तमारूपकारणसम्पत्तेर्नातिस्फुरतीति उपमैव विजयते। सप्तम्युपमानपूर्वपदो बहुव्रीहिरुत्तरपदलोपश्चेति वार्त्तिकम्। सप्तमीपूर्वपदस्योपमानपूर्वपदस्य च बहुव्रीहिर्वाच्यः। उत्तरेषामुपमानार्थकानां पदानां लोपश्चेत्यर्थः। सप्तम्यन्तपूर्वपदस्य करे स्थितं धनं यस्य स करधन उदाहरणम् तत्र स्थितपदस्य लोपः। उष्ट्रो मुखं यस्य स उष्ट्रमुख इति विग्रहः कैयट वर्णित उपमानपूर्वपदस्य उदाहरणम्। अत्र विग्रहे कैयटः, अप्रयोग एवात्र लोपशब्देनोच्यते। न च प्राणी प्राण्यन्तरावयवो भवतीति उष्ट्रशब्दस्य तन्मुखे लक्षणा इति। अनेनात्र चक्षुषी इत्यस्याप्रयोग एव प्रतीयते, न लोप इति वाच्यम्, तथापि अप्रयोगे उपमानलोपस्य न क्षतिः। यस्याप्रयोगेऽपि यदर्थोऽवगम्यते, तस्यात्र लुप्तत्वेन व्यवहारात्। यत्त्वत्र अलङ्कारकौस्तुभकृतः कथमपि कल्पनया उपमेयलोपमाहुः, तत्तु वैयाकरणसम्प्रदायविरोधावहमिति न प्रपञ्च्यते। अनयोरपि भेदयोरन्यत्र वाक्यादावभाव उह्यः।

इहान्यानपि भेदानन्ये निगदन्ति—वाचकलुप्ता षड्विधोपवर्णिता। 'कर्तर्युपमाने' इति णिनौ सप्तम्यपि दृश्यते। कोकिल इवालपति कोकिलालापिनीति। तथाष्टम्यपि—'इवे प्रतिकृतौ' इति कनि 'लुम्मनुष्ये' इति लुपि चञ्चेवेत्यर्थे 'चञ्चा पुरुषः सोऽयं यः स्वहितं नैव जानीते' इत्यत्र। नवम्यपि-आचारक्विपि पदान्तरेण प्रतिपादिते समाने धर्मे दृश्यते। 'आह्लादि वदनं तस्याः शरद्राकामृगाङ्कति' इत्यादौ।

उपमानलुप्ता वाक्यसमासयोर्द्विविधोपवर्णिता, तृतीयापि दृश्यते—

'यच्चोराणामस्य च समागमो यच्च तैर्वधोऽस्य कृतः।
उपनतमेतदकस्मादासीत् तत्काकतालीयम्॥'

इत्यत्र काकतालशब्दयोर्लक्षणया काकागमनतालपतनबोधकयोरिवार्थे 'समासाच्च तद्विषयात्' इति ज्ञापकात् समासे

---

**कोकिलालापिनीति** ● 'यं पश्यन् दीपदर्शं सपदि मनसिजः कीटनाशं प्रनष्टः' इत्यादिपद्यस्य तृतीयपादे।

**यच्चोराणामिति** ● काकागमनतालपतने उपमानं चोराणां देवदत्तस्य च समागम उपमेयः। छप्रत्ययविधायकसूत्रसामर्थ्यात् सह सुपेत्यनेन वा समासे तालपतनजन्यकाकबधः समासार्थं उपमानं चौरकृतो देवदत्तबध उपमेयः। द्वितीयायामुपमायां सादृश्यार्थकस्य छप्रत्ययस्य सत्त्वात् केवलं बधरूपस्योपमानस्य लोपः। पूर्वायां समासार्थोपमायां गमनपतनसमागमस्योपमानस्य इवस्य वाचकस्य च लोपाद् वाचकोपमानलुप्ता। तृतीयचरणोक्तमहेतुकसंघटनारूपमुभयत्रोपमायां साधारणम्। तृतीयचरणस्थाने कथमपि कस्य च दोषादित्यादिनिर्माणे साधारणधर्मस्यापि लोपाद् वाचकोपमानधर्मलुप्ता पूर्वैव।

चित्रमीमांसायां तु काकागमनं देवदत्तसमागमस्य तालपतनं चोराणामागमनस्योपमानं वर्णितम्। छप्रत्ययान्ते वाचकलुप्तताभ्रममादाय कौस्तुभे रसगङ्गाधरादीनां खण्डनमाचरितम्। अस्मिन् ग्रन्थे तु छप्रत्ययप्रकृत्यर्थे एव

२४५ तुजि च पालने भिन्नस्तुञ्जति स तुतुञ्ज च।
गजादयश्च शब्दार्थाः ज्ञायन्ते इह धातुषु ॥
२४६ गजाद गजति रूपं स्याद् २४७ गजेश्च गञ्जति भवेत्।
२४८ गर्जति गर्जधातोः स्याद् गृञ्जति २४९ गृजितो भवेत्॥
२५० मुजात्तु मोजति रूपं मुञ्जति २५१ मुजितो भवेत्।
मदने गजधातोश्च गजति स जगाज च॥
गेजतुर्गेजुरित्यादि गजिता स गजिष्यति।
अगजत् स गजेद् गज्यादगाजीदगजील्लुङि॥
२५२ वज २५३ व्रजौ गतौ ख्यातौ वजति व्रजतीति च।
अव्राजील्लुङि रूपं स्यादव्राजिष्टां व्रजेस्तसि॥
अवाजीदवजीदत्र वृद्धिर्वेति विचार्यताम्॥

अथ षट्त्रिंशदित्यत्र टवर्गीयान्ताः—

प्रख्याता अनुदात्तेत आत्मनेपदिन इमे।
अतिक्रमे च हिंसायाम् २५४ अष्टधातुस्ततोऽट्टते॥
आनट्टे अट्टितासे त्वमट्टिष्यतेऽट्टतामिति।
आट्टत रूपमट्टेत दोपधस्तोपधोऽप्ययम्॥
वेष्टने वर्तते २५५ वेष्ट वेष्टते लटि जायते।
विवेष्टे वेष्टिता रूपमवेष्टिष्ट स लुङ् पदम्॥
चेष्टायां २५६ चेष्ट धातोः स्याच्चेष्टतेऽचेष्टिष्ट लुङि।
२५७ गोष्ट २५८ लोष्टेति संघाते गोष्टते लोष्टते लटि॥
स जुगोष्टे लुलोष्टेऽपि अगोष्टिष्ट स लुङ्पदम्।
२५९ घट्ट धातुश्च चलने घट्टते लटि तंशपौ॥
जघट्टे स जघट्टाते अघट्टिष्ट लुङि भवेत्।
२६० स्फुटि विकसने तस्य स्फोटते पुस्फुटे लिटि॥
स्फुटिषीष्टाशिषि स्यादस्फोटिष्टेति लुङ्पदम्।
२६१ अठि गतौ तस्य रूपमण्ठते जायते लटि॥
आनण्ठे अण्ठिता रूपमण्ठिषीष्ट आण्ठिष्ट च।
२६२ वठिस्तु एकचर्यायां वण्ठते लटि पूर्ववत्॥
स ववण्ठे ववण्ठाते लुङ्यवण्ठिष्ट पठ्यते।
२६३मठि २६४कठीति शोके स्तः शोक आध्यानमत्र वै॥
मण्ठते कण्ठते रूपं ममण्ठेऽमण्ठिष्ट लुङि॥

पालने २६५ मुठिधातोश्च मुण्ठते लटि जायते ॥
२६६ हेठधातुर्विवाधायां हेठते हेठसे लटि ।
जिहेठे हेठिता हेठिष्यतेऽहेठिष्ट लुङि कथ्यते ॥
२६७ एठोऽप्यस्ति विवाधायामेठते लटि शब्यदा ।
एठाञ्चक्रे स एठिता ऐठिष्ट लुङि पठ्यते ॥
२६८ हिडेस्तु हिण्डते रूपं जिहिण्डे गत्यनादरे ।
संघाते २६९ हुडिधातोश्च हुण्डते हुण्डिता लुटि ॥
जुहुण्डे लिटि जायेत हुण्डिषीष्ट स आशिषि ।
२७० कुडि दाहेस्ति तद्रूपं कुण्डतेऽथ चुकुण्डिरे ॥
२७१ वडि विभाजने प्रोक्तो वण्डते लटि कथ्यते ।
ववण्डे वण्डिता रूपमवण्डिष्ट लुङ्पदम् ॥
२७२ मडेस्तु मण्डते रूपं ममण्डे मण्डिता लुटि ।
परिहासे २७३भडिः प्रोक्तः बभण्डे भण्डिता भवेत् ॥
संघाते २७४ पिडिधातोर्नुम् पिण्डते लटि पूर्ववत् ।
पिपिण्डे पिण्डिता पिण्डिष्यतेऽपिण्डिष्ट लुङ्पदम् ॥
२७५ मुडिस्तु मार्जने प्रोक्तो मार्जनं शुद्धिरुच्यते ।
न्यग्भावोऽपि भवेदर्थः मुण्डते मुण्डिता लुटि ॥
तोडने २७६ तुडिधातोर्नुम् दारणं हिंसनञ्च तत् ।
तुण्डते स तुतुण्डे च अतुण्डिष्ट लुङि भवेत् ॥
२७७ हुडिस्तु वरणे प्रोक्तः स्वीकारो वरणं भवेत् ।
हुण्डते स जुहुण्डे च हरणेऽप्ययमुच्यते ॥
२७८ चडि कोपेऽस्य नुम् कार्यं चण्डते चण्डिता लुटि ।
रुजायां २७९ शडि संघाते तस्य च लटि शण्डते ॥
२८० तडि च ताडने प्रोक्तस्तण्डते तण्डितादि च ।
२८१ पडि गतौ स पण्डते पपण्डे पण्डिता लुटि ॥
२८२ कडि भेदेऽस्य कण्डते चकण्डे कण्डिषीष्ट सः ।
खण्डते २८३ खडि मन्थेऽस्य चखण्डे खण्डिषीष्ट सः ॥
हेडते होडते रूपं २८४ हेडृ २८५ होडृ अनादरात् ॥
जिहेडेऽथ जुहोडे सः हेडितासे च होडिता ।
आप्लाव्ये २८६ वाडृधातोस्तु रूपं लटि स वाडते ॥

२८७ द्राडृ २८८ ध्राडृ विशरणे द्राडते ध्राडते ततः ।
श्लाघायां २८९ शाडृधातुर्हि शाडते शाडिषीष्ट सः ॥
परस्मैपदिनश्चाथ द्व्यशीतिर्धातवः स्मृताः ।
टवर्गीयान्तसमाप्ति यावदत्र स्थिताः समे ॥

२९० शौट गर्वेऽस्य रूपं स्यात् शौटति शौटतः क्रमात् ।
स शुशौट शुशौटतुः शौटिता शौटतु क्रमः ॥
२९१ यौट वन्धनेऽस्य रूपं यौटति स युयौट च ।
२९२म्लेडृ २९३म्रेडृ च उन्मादे म्लेडते म्रेडते लटि ॥
२९४ कटे वर्षावरणयोः कटति स चकाट च ॥

ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् । ७ । २ । ५

हमयान्तस्य ण्यन्तस्य क्षणादेः श्वयतेस्तथा ।
एदितश्च न वृद्धिः स्यादिडादौ सिचि तिङ्पदे ॥
एदित्वादकटीदत्र तस्माद् वृद्धिर्न जायते ।
गत्यर्थकौ २९५अट २९६पटौ धातू द्वौ विदिताविह ॥

अटति आट अटिता पटति स पपाट च ।
पेटतुः पेटुरित्यादि पटिता च पटिष्यति ॥
परिभाषणवाची २९७ रट रटति स रराट च ।
रेटतुः रेटुरित्येवं रटिता स रटिष्यति ॥

अरटत् स रटेद् रट्यादराटीदरटील्लुङि ।
२९८ लट बाल्येऽस्य लटति ललाट लेटतुस्तथा ॥
रुजायां विशरणेऽवसादने गतावपि ।
२९९ शटधातुस्ततो रूपं शटति स शशाट च ॥

वेष्टने ३०० वटधातोस्तु वटति स ववाट च ।
ववटतुश्च ववटुर्ववटिथादि पठ्यताम् ॥
त्रासे ३०१ किट ३०२ खिटौ प्रोक्तौ केटति खेटति क्रमः ।
अनादरे ३०३ शिट ३०४ षिटौ शेटति सेटति क्रमः ॥
शिशेट शिशिटतुरेवं सिषेट सिषिटतुर्लिटि ।
संघाते स्तौ ३०५ जट ३०६ झटौ जटति झटति क्रमात् ॥
३०७ भटभृताविहैत्वं स्याद् भेटति भेट भेटतुः ।
उच्छ्रायेऽयं ३०८ तटप्रोक्तस्तटति तेट तेटतुः ॥

काङ्क्षायां ३०९ खटधातोस्तु खटति स चखाट च ।
३१० नट नृतौ ततो रूपं नटति स ननाट च ॥
नेटतुर्नेटुरित्यादि अनाटीदनटील्लुङि ।
३११ पिट शब्दे च संघाते पिटति स पिपेट च ॥
हटति ३१२ हटदीप्तेः स्यात् जहाट हटिता लुटि ।
३१३ शटधातुरवयवे शटति शेटतुर्लिटिः ॥
३१४ लुट विलोडने तस्माल्लोटति स लुलोट च ।
३१५ चिटधातुः परप्रेष्ये चेटति स चिचेट च ॥
३१६ बिटशब्देऽस्य विटति विबेट वेटितादि च ।
३१७ आक्रोशे बिट तद्रूपं बेटति स बिबेट च ॥
बशादिरयमत्रास्ति हिटेत्येके वदन्ति च ।
हेटति हेटतश्चैवं जिहेट हेटितादि च ॥
गतावर्थे समाख्याताः ३१८ इट ३१९ किट ३२० किटी त्रयः ॥
एटति केटति रूपं कटति कण्टतीति च ॥
अन्ते इ ई च प्रश्लिष्य अयति अयतस्ततः ।
लिटि रूपमियाय स्यादियतुरियुरित्यथ ।
इययिथ इयेथ त्वम् इयाय इययोत्तमे ॥
दीर्घस्य तु इजादेशम् अयाञ्चकार लिट्परे ।
मण्डति ३२१ मडि भूषायां ममण्ड लिटि जायते ॥
वैकल्ये ३२२ कुडिधातोस्तु कुण्डति स चुकुण्ड च ।
मर्दने स्तो३२३मुड ३२४ प्रुडौ मोडति प्रोडति ततः ॥
अल्पीभावे ३२५ चुडिः प्रोक्तश्चुण्डति स चुचुण्ड च ।
३२६ मुडिस्तु खण्डने प्रोक्तो मुण्डति स मुमुण्ड च ॥
एके वदन्ति पुडि च तन्मते पुण्डति क्रिया ।
३२७रुटि ३२८ लुटि द्वयं स्तेये रुण्टति लुण्टति क्रिया ॥
अत्र केचिद्रुठि लुठि रुण्ठति लुण्ठति क्रिया ।
रुडि लुडीति केचिद्वै रुण्डति लुण्डति ततः ॥
विशरणे ३२९ स्फुटिं-र्तस्मादुदित्वादङ् विकल्पतः ।
स्फोटति लटि रूपं स्यादस्फोटीदस्फुटन् लुङि ॥
स्फुटि इत्यपि केषाञ्चिन्मतेन स्फुण्टति ततः ।
व्यक्तान्यां वाचि ३३० पठधातुः पठति पठतस्ततः ॥

पपाठ पेठतुः पेठुरपाठोदपठील्लुङि ।
३३१ वठ स्थौल्ये ततो रूपं वठति स ववाठ च ॥
ववठतुर्ववठिथ अवाठीदवठील्लुङि ।
मठति मठतश्चादि ३३२ मठनिवासवाचिनः ॥
३३३ कठधातुरयं कृच्छ्रजीवने कठति ततः ।
परिभाषणवाची ३३४ रट् रटति स रराट च ॥
रठति रठतश्चापि केचिदत्र वदन्ति वै ।
शठतायां प्लुतौ ३३५ हठ हठति हठतस्ततः ॥
जहाठ जहठतुश्च हठिता स हठिष्यति ।
उपघाते ३३६ रुठ ३३७ लुठौ ३३८ उठ ऊठेति वा स्थितः ।
३३९ पिठ संक्लेशने हिंसायां कैतवे पुनः ॥
प्रतिघाते ३४० शुठः प्रोक्तः शोठति स शुशोठ च ।
३४१ शुठीति स्वामिना प्रोक्तं शुण्ठति स शुशुण्ठ च ॥
३४२ कुठि च केचिदत्राहुः कुण्ठति स चुकुण्ठ च ।
आलस्ये प्रतिघाते च ३४३ लुठिधातुरिह स्मृतः ॥
लुण्ठति स लुलुण्ठेति लुण्ठितादि च पठ्यताम् ।
३४४ शुठेश्शोषणार्थकस्य शुण्ठति स शुशुण्ठ च ॥
गतौ ३४५ रुठि ३४६ लुठी द्वौ स्तः रुण्ठति लुण्ठति क्रिया ।
३४७ चुड्डधातुरभिप्राय-सूचने चुड्डति लटि ॥
३४८ अड्डोऽयमभियोगेऽस्ति अड्डत्यानड्ड अड्डिता ।
काकर्श्ये ३४९ कड्डधातोः कड्डति संचकड्ड च ॥
चुड्डादयस्त्रयोऽप्येते दोपधास्तेन क्विब्बिधौ ।
चुदत्कदादि रूपं स्यात् प्रयुञ्जीत विचार्य वै ॥
३५० क्रीडृधातुर्विहारेऽस्ति क्रीडति क्रीडिता लुटि ।
३५१ तुडृ च तोडने ख्यातस्तोडति स तुतोड च ॥
केचिन्मतेऽत्र तूडति तुतूडादि प्रयुज्यते ।
३५२हुडृ ३५३ हूडृ ३५४ तथा होडृगतौ सन्ति इमे त्रयः ॥
होडति हूडति रूपं होडति स जुहोड च ।
रौडृ ३५५ अनादरे धातुस्तस्य रौडति लट्पदम् ॥
उन्मादे ३५६ रोडृ ३५७ लोडृ द्वौ रोडति लोडति ततः ।
३५८ अडधातुरुद्यमेऽस्ति अडति आड आडिथ ॥

विलासे ३५९ लडधातोर्हि लडति ललतीत्यपि ।
लडयोर्ललयोश्चैक्यं जानीयाच्छास्त्रसंमतम् ॥
३६० कडमदेऽस्य कडति कण्डतीत्यपि स्यात्कडेः ।
३६१ गडि वदनैकदेशे गण्डति स जगण्ड च ॥

धातवोऽथ पवर्गान्ताः प्रदर्श्यन्ते यथाक्रमम् ।
स्तोभत्यन्ताश्चतुस्त्रिंशद् आत्मनेपदिनश्च ते ॥
३६२तिपृ३६३तेपृ३६४ ष्टिपृ ३६५ ष्टेपृ चत्वारः क्षरणार्थकाः ।
तेपते तितिपे रूपं तितिपाते तितिपिरे ॥

क्रादिनियममाश्रित्य इड् विधानं विशेषतः ।
लुटि तेप्ता च तेतारौ तेप्स्यते तेपतां तथा ॥

**लिङ्सिचावात्मनेपदेषु । १ । २ । ११**

इक्समीपाद्धलः पश्चाज् झलादी लिङ्सिचाविह ।
स्यातां कितौ स तिप्सीष्ट तिप्सीयास्तामिति वदेत् ॥

लुङि रूपमतिप्तेति झलो झलि सलोपतः ।
तेपते स तितेप स्यात् स्तेपते तिष्टिपे लिटि ॥
तिष्टपाते तिष्टिपिरे तिष्टेपे लिटि च वदेत् ।
कम्पनेऽस्ति तेपृधातुस्तेपते लटि पूर्ववत् ॥

३६६ ग्लेपृ दैन्येऽस्य रूपं स्याद् ग्लेपते निर्धनो जनः ।
जिग्लेपे ग्लेपितासे त्वमग्लेपिष्ट लुङि क्रिया ॥
३६७ टुवेपृ कम्पने धातुस्तरुरेषोऽत्र वेपते ।
आदिर्जिटुडवः सूत्रात् टु भवेदित्संज्ञकः ॥
३६८केपृ३६९गेपृ गतौ ३७०ग्लेपृ कम्पमाने त्रयस्त्विमे ।
केपते गेपते रूपं ग्लेपते च क्रमेण वै ॥
३७१मेपृ ३७२ रेपृ ३७३ लेपृ गतौ मेपते रेपते लटि ।
मिमेपे स रिरेपे च लिलेपे लेपिता लुटि ॥
३७४ त्रपूषस्त्रपते रूपं लज्जायां कथितस्य वै ।

**तृफलभजत्रपश्च । ६ । ४ । १२२**

तृफलोश्च भजत्रपोरभ्यासलोप इष्यते ।
अत एत्वं किति परे लिटि सेटि थलि तथा ॥

तस्मात् त्रेपे च त्रेपाते त्रेपिरे लिटि जायते ।
ऊदित्वादिड् विकल्पेन त्रप्ता स त्रपिता पुनः ॥
त्रेपिषीष्टाथ त्रप्सीष्ट अत्र स अत्रपिष्ट च ।
चलने ३७५ कपिधातोर्हि कम्पते कम्पसे लटि ॥
चकम्पेऽथ चकम्पाते चकम्पिरे च कम्पिता ।
३७६रबि३७७लबि३७८अबि शब्दे रम्बते लम्बतेऽम्बते ॥
ररम्बे स ललम्बेऽथ आनम्बे लिटि पठ्यते ।
अवस्रंसनतात्पर्ये ३७९ लबेश्च लम्बते लटि ॥
३८० कबृवर्णेऽस्य कबते चकबे कबिता लुटि ।
अधाष्टर्च्ये क्लीबृ३८१धातोर्हि क्लीबते क्लीबिता लुटि ॥
३८२ क्षीबृ मदेऽस्य रूपं स्यात् क्षीबते क्षीबिता लुटि ।
कत्थने ३८३ शीभृ ३८४ चिभृ द्वौ शीभते चीभते लटि ॥
शिशीभे स चिचीभेऽपि लिटि रूपं प्रदर्शयेत् ।
रेभते ३८५ रेभृ शब्देऽस्य रिरेभे रेभिता लुटि ॥
क्वचिदभिरभी प्रोक्तावम्भते रम्भते ततः ।
प्रतिबन्धे ३८६ष्टभि३८७स्कभी धातू स स्तम्भते उत्तम्भते ॥
स्तन्भेः सूत्रेण षत्वं न विस्तम्भते स जायते ।
स्तुविधौ कथितस्यैव सौत्रस्य ग्रहणं यतः ॥
३८८जभी३८९जृभि गात्रविमाने जम्भते जृम्भतेऽनयोः ॥

## रभिजभोरचि । ७ । १ । ६१

अनयोरचि जायेत नुमागमः सदैव हि ।
जजम्भे जम्भिता रूपं जजृम्भे जृम्भिता लुटि ॥
कत्थने ३९०शल्भधातोस्तु शल्भते शल्भसे लटि ।
शशल्भे शल्भिता रूपं शल्भिषीष्ट शुभाशिषि ॥
३९१गल्भधाष्टर्च्ये ततो रूपं गल्भते गल्भतामिति ।
भोजने३९२बल्भधातोश्च बल्भते बल्भितादिकम् ॥
प्रमादे३९३श्रम्भ धातोश्च श्रम्भते श्रम्भितादिकम् ।
दन्त्यादिरपि एषोऽस्ति स्रम्भतेऽपि च स्यात्ततः ॥
३९४ष्टभु स्तम्भे स्तोभते स विष्टोभते स तुष्टुभे ।
व्यष्टोभिष्ट व्यष्टोभिषातां व्यष्टोभिषत लुङ्पदम् ॥

परस्मैपदिनश्चाथ धातवोऽष्टात्रिंशदिह ।
रक्षणेऽस्ति ३९५गुपू धातुरूकारान्तोऽत्र तस्य च ॥

**गुपूधूपविच्छिपणिपनिभ्य आयः । ३ । १ २८**

आयः प्रत्यय एतेभ्यो जायते स्वार्थमात्रके ।
युगन्ते तिगुणे जाते गोपाय इति जायते ॥

**सनाद्यन्ता धातवः । ३ । १ । १३२**

सनादयो णिङन्ताश्च यस्यान्ते ते च धातवः ।
धातुत्वाल्लडादिः स्याद् गोपायत्यादि साध्यते ॥

**आयादय आर्धधातुके वा । ३ । १ । ३१**

आर्धधातुकविवक्षायामायादयो विकल्पतः ॥

**कास्प्रत्ययादाममन्त्रे लिटि । ३ । १ । ३५**

कास्धातोः प्रत्ययान्ताच्च भवेदाम् लिटि च परे ।
मन्त्रभिन्नार्थके एव प्रवर्तते विशेषतः ॥
कास्यनेकाज्ग्रहणं कर्तव्यमिह भाषितम् वा
सूत्रेऽत्र प्रत्ययपदं त्यक्त्वाऽनेकाच इष्यते ।
इत्युक्तं भाष्यकारेण तदेव मन्यतां समैः ॥

**आर्धधातुके । ६ । ४ । ४६**

इत्यधिकृत्य—

**अतो लोपः । ६ । ४ । ४८**

आर्धधातुकोपदेशे यदकारान्तप्रत्ययः ।
तदकारस्य लोपः स्यात् परे सत्यार्धधातुके ॥

**लिटि रूपसाधनम्—**

गुपेरायप्रत्ययः स्यात् पुगन्तेति गुणे कृते ।
धातुसंज्ञा ततश्चामस्तस्याकारश्च लुप्यति ॥
कृञ्चानुप्रयुज्यते लिटि लिटस्तिपां णलादयः ।
द्वित्वाभ्यासादिकार्येन्ते कुहोश्चुर्वृद्धिरत्र च ॥

अनुस्वारादिकार्येण स गोपायाञ्चकार माम् ।
स गोपायांबभूवेति गोपायामास मां प्रभुः ।।
कृभ्वसामनुप्रयोगात् साध्यतां लिटि पूर्ववत् ।
गोपायाञ्चक्रतुस्तौ गोपायाञ्चक्रुरत्र ते ।।
गोपायाञ्चकर्थादि रूपमग्रे विचारयेत् ।
गुपेर्लिट् तिप् णलादि स्याद् द्वित्वाभ्यासादिकार्यतः ।।
जुगोप जुगुपतुः स्याद् यदा न आयप्रत्ययः ।
लुटि गोपायिता रूपं यदा स्यादायप्रत्ययः ।।
पक्षेऽत्र गोपिता गोप्ता ऊदित्वादिड् विकल्पते ।
गोपायिष्यति रूपं स्याद् गोपिष्यति स गोप्स्यति ।।
गोपायतु अगोपायद् गोपायेद्विधि लिङ्क्रिया ।
गोपाय्यात् स तथा गुप्यादाशिषि द्विप्रकारतः ।।
अगोपायीदगोपीत् स अगौप्सीदिति लुङ्क्रिया ।
द्विधा रूपं चलेदत्र विकल्पद्वयकारणात् ।।
अगोपायिष्यदेषो मामगोपिष्यदगोप्स्यदिति ।
सन्तापे३९६धूप धातोर्हि आयप्रत्यय इष्यते ।।
धूपायेति भवेद् धातुस्ततो धूपायति लटि ।
अनेकाच्त्वाद् भवेदामो लिटो लुक् तत्परं पुनः ।।
लिट्पराः कृभ्वसो ज्ञाता लिटतिपां स्युर्णलादयः ।।
कृञो दित्वादिकार्येण स धूपायाञ्चकार तम् ।
पक्षे दुधूप रूपं स्याद् दुधूपतुर्दुधूपुरिति ।।
धूपायिता स धूपिता लुटि रूपं द्विधा वदेत् ।
धूपायिष्यति पक्षेऽत्र धूपिष्यति स धूप्स्यति ।।
३९७जप३९८जल्पौ च व्यक्तायां वाचि जपति जल्पति ।
मानसोच्चारणेऽप्यस्ति तस्माज्जपति मन्त्रकम् ।।
जजाप जेपतुर्जेपुः जेपिथ जेपथुस्तथा ।
सान्त्वने३९९चप आख्यातश्चपति चपतः क्रिया ।।
चचाप चेपतुश्चेपुश्चेपिथ चपिता लुटि ।
व्यक्तायां वाचि धातुश्च४००रप इत्यत्र विद्यते ।।
रपति स ररापेति रेपतुः रपिता लुटि ।
समवायश्च संबन्धस्तस्मिन् ४०१षपः प्रदर्शितः ।।

सपति स ससापेति सेपतुः सपितादिकम् ।
मन्दायां च गतौ धातू वर्ततेऽत्र ४०२लप४०३चुपौ ।।
लपति स ललापस्याल्लेपतुर्लेपिता लुटि ।
चोपति स चुचोपेति चुचुपतुश्श्च चोपिता ।।
४०४, ४०५, ४०६, ४०७, ४०८, ४०९, ४१०, ४११
तुप तुम्प त्रुप त्रुम्प तुफ तुम्फ त्रुम्फ त्रुम्फाः ।
हिंसायां सन्ति एतेऽष्टौ रूपं तोपति तुम्पति ।।
तुतोप लिटि तुतुम्प तुतुम्पतुश्च तौ सदा ।
कित्वाभावान्नलोपो न लिट संयोगात्परोऽस्ति यत् ।।
तुप्यादाशिषि रूपं स्यात् कित्वमत्रास्ति यासुटः ।
प्रात्तुम्पत्तौ गति कर्तरि सुट् पारस्करपाठतः ।।
प्रस्तुम्पति च गौरेषा प्रयोगस्तेन दर्शितः ।
शितपानिर्देशतः सत्त्वं यङ्लुकि न प्रवर्तते ।।
प्रतोतुम्पीति रूपं हि तस्मादत्र प्रदर्शितम् ।
त्रोपति त्रुम्पति रूपं तोफति तुम्फति तथा ।।
त्रोफति त्रुम्फति सर्वं सरलं सर्वमूह्यताम् ।
४१२, ४१३, ४१४, ४१५, ४१६, ४१७, ४१८, ४१९,
पर्पो रफ रफी अर्ब पर्व लर्व वर्व मर्व ।
कर्व खर्व गर्व शर्व षर्व चर्वा गतौ स्मृताः ।।
४२०, ४२१, ४२२, ४२३, ४२४, ४२५,
पर्पति पर्पतश्चाथ रफति रम्फति तथा ।
अर्बति लिटि आनर्ब पर्वति लर्वति क्रमः ।।
वर्बति मर्बति पश्चात् कर्बति खर्बति पुनः ।
गर्बति शर्बति रूपं सर्बति चर्बति वदेत् ।।
लिटि रूपं पपर्पेति रराफ रफतुस्ततः ।
ररम्फ अर्बधातोश्च आनर्ब नुड्विधानतः ।।
पपर्बाथ ललम्बेति जगर्ब च शशर्ब च ।
ससर्व स चचर्व स्यात् लुटि तु पर्पितादि च ।।
४२६कुबि आच्छादने धातुः कुम्बति स चुकुम्ब च ।
अर्जने स्तो४२७लुबि४२८तुबी लुम्बति तुम्बति क्रिया ।
४२९चुबि वक्रस्य संयोगे चुम्बति स चुचुम्ब ताम् ।।

४३०षुभु४३१षृम्भ् च हिंसायां सर्भति सृम्भति क्रिया।
ससर्भ सर्भिता रूपं ससृम्भ सृम्भिता लुटि ॥
षिभु षिम्भु च हिंसार्थौ सेभति सिम्भति लटि।
भाषणे ४३२शुभ४३३शुम्भौ स्तः हिंसायां भाषणेऽपि च ॥
शोभति शुम्भति रूपं शुशोभ स शुशुम्भ च ॥
अथानुनासिकान्तां प्रदर्शनमतः परम्।
अनुदात्तेत इह पूर्वमात्मनेपदिनो दश ॥
४३४घिणि४३५घुणि४३६घृणिग्रहणे नुम् ष्टुत्वञ्च भविष्यतः।
घिण्णते लटि रूपं स्याज्जिघिण्ये लिटि जायते ॥
घुण्णते स जुघुण्णे च घृण्णते ते जघृण्णिरे।
भ्रमणे४३७घुण ४३८घूर्णौ स्त घोणते घूर्णते ततः।
परस्मैपदिनावेतौ तुदादावपि दर्शितौ ॥
व्यवहारे स्तुतौ चापि ४३९पणधातुः४४०पन स्तुतौ।
पणायति स पणायाञ्चकार लिटि पक्षतः ॥
स पेणे तौ च पेणाते पेणिरे त्वञ्च पेणिथ।
पणायितासि पणिता पणाय्यादाशिषि भवेत् ॥
व्यवहारे स पणते पेणे स पणिता लुटि।
पनायति स पनायाञ्चकार पनितादि च ॥
क्रोधार्थे ४४१भामधातोश्च भामते भामिषीष्ट सः।
४४२क्षमूष सहने धातुः क्षमते च क्षमे ततः।
चक्षमिषेऽथ चक्षंसे चक्षमिध्वे चक्षन्ध्वे पुनः ॥

म्वोश्च । ८ । २ । ६५

धातोर्मान्तस्य नो मस्य वमयोः परयोरिह।
इडभावे चक्षण्वहे सतीटि चक्षमिवहे ॥
एवं चक्षण्महे रूपं पक्षे तु चक्षमिमहे ॥
लुटि च क्षमिता क्षन्ता क्षमिष्यते च क्षंस्यते।
क्षमतां सोऽक्षमत क्षमेत क्षमिषीष्ट च ॥
क्षंसीष्ट आशिषि स्यादिडागमविकल्पतः।
अक्षमिष्ट स अक्षंस्त अक्षमिष्यत लृट्क्रिया ॥
४४३क्रमु कान्तौ च प्रख्यातः कान्तिरिच्छा प्रकीर्तिता।

**कमेर्णिङ् । ३ । १ । ३०**

कमेर्णिङ् प्रत्ययः पश्चादनुबन्धोऽत्र लुप्यति ॥
उपधावृद्धितः कामि - धातुसंज्ञाऽस्य जायते ।
कामेर्लट् तत्र तङ्कार्यं ङित्वादिति प्रकीर्तितम् ॥
शप्गुणायश्च टेरेत्वं रूपं कामयते लटि ॥

**अयामन्ताल्वाय्येत्न्विष्णुषु । ६ । ४ । ५५**

आमन्ताल्वाय्येत्न्विष्णुषु णेरयादेश इष्यते ।
वक्ष्यमाणस्य लोपस्य अपवादोऽयमस्ति वै ॥
कामेर्लिट्यामयादेशो लिट्परः कृपुनस्ततः ।
द्वित्वमभ्यासकार्यञ्च कुहोश्चुस्तस्य ए यदा ॥
यणि कृते स कामयाञ्चक्रेऽनुस्वारकार्यतः ।
आमाभावे तु चकमे चकमाते चकमिरे ॥
कामयिता स कमिता कमिष्यते कामयिष्यते ।
कामयतामकामयत कामयेत विधिलिङि ॥
आशिषि कामयिषीष्ट कमिषीष्ट द्वयं भवेत् ।
कामिधातोर्लुङः स्थाने तप्रत्ययः समागतः ॥
तदाऽग्रेतनं कार्येण रूपं साधयतु क्रमात् ।

**णिश्रिद्रुस्रुभ्यः कर्तरि चङ् । ३ । १ । ४८**

कर्त्रर्थे लुङि णिश्रिद्रुस्रुभ्यश्चङ्प्रत्ययो भवेत् ।
चङोऽनुबन्धलोपेन अमात्रमवशिष्यते ॥

**णेरनिटि । ६ । ४ । ५१**

णेरनीटीति सूत्रेणानिडादावार्धधातुके ।
णेर्लोपः स्यात् ततः काम् अ त इति स्थितिरभूत् ॥

**अत्र फक्किका—**

एरनेकाच इत्यस्माद् यण् कार्यं णेर्न जायते ।

**ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन । वा**

पूर्वविप्रतिषेधेन ण्यल्लोपौ पूर्वमत्र स्तः ॥

इयङ्यण्भ्यां गुणवृद्धिदीर्घेभ्य इति वार्तिकात् ।
तस्माण्णेर्लोप एवात्र चङ्परे लुङ्लकारके ॥
अततक्षत्क्रियायाश्च णिलोपः स्यादियङ् नहि ।
आटिटदत्र यण् नैव णिलोप एव जायते ॥
कारणाकारकादौ च गुणो वृद्धिश्च बाध्यते ।
कार्यतेऽत्र च दीर्घो न णिलोपो वार्तिकादितः ॥

**णौ चङ्युपधाया ह्रस्वः । ७ । ४ । १**

चङ्परे णौ यदङ्गं तदुपधाह्रस्व इष्यते ।
कम् अ त स्थितिरस्त्येवं द्वित्वं ततः कमोऽभवत् ॥

**चङि । ६ । १ । ११**

चङि द्वित्वमनभ्यासधात्ववयवकस्य वै ।
एकाचः प्रथमस्यैवाजादौ द्वितीयकस्य च ॥

**सन्वल्लघुनि चङ्परेऽनग्लोपे । ७ । ४ । ९३**

अङ्गसंज्ञा निमित्तं यत् चङ्परं णिरिति स्थितौ ।
तत्परं लघुकं यच्च संभवेत् पदसाधने ॥
तत्परेऽङ्गस्य योऽभ्यासस्तस्य कार्यं सनीव स्यात् ।
णावग्लोपे ह्यसत्येव एतत्सूत्रं प्रवर्तते ॥
अभ्यासकार्यं चुः कोश्च चकमत इति स्थितिः ।

**सन्यतः । ७ । ४ । ७९**

सन्यतोऽभ्याससंज्ञस्य इत्वं भवति वै सनि ।
चिकमतेति सञ्जाते दीर्घो लघोः प्रवर्तते ॥

**दीर्घो लघोः । ७ । ४ । ९४**

अभ्यासस्य लघोर्दीर्घस्ततश्चाडागमो भवेत् ।
अचीकमत रूपं स्यादचीकमत भोजनम् ॥

**कमेश्च्लेश्चङ् वक्तव्यः । वा**

णिङभावे कमेश्च्लेश्चङ् कर्तव्यस्तेन सिद्ध्यति ।
अचकमत कमिधातोर्द्वित्वाभ्यासादिकार्यतः ॥

संज्ञायाः कार्यकालत्वादङ्गं यत्र द्विरुच्यते ।
तत्रैव दीर्घः सन्वच्च नानेकाक्ष्विति माधवः ॥
चकास्त्यर्थापयत्यूर्णोत्यादौ नाङ्गं द्विरुच्यते ।
किन्त्वस्यावयवः कश्चित्तस्मादेकाक्ष्विदं द्वयम् ।
वस्तुतोऽङ्गावयवो योऽभ्यास इति वर्णनात् ॥
ऊर्णौ दीर्घोऽर्थापयतौ द्वयं स्यादिति मन्महे ।
चकास्तौ तूभयमिदं न स्यात् स्याच्च व्यवस्थया ।
णेर्विशेष्यं सन्निहितं लघूनीत्यङ्गमेव वा ॥
इति व्याख्या विकल्पस्य कैयटेनैव वर्णनात् ।
णेरग्लोपेऽपि सम्बन्धस्त्वगितामपि सिद्धये ॥
सोऽकामयिष्यत रूपमकमिष्यत पक्षतः ।
परस्मैपदिनश्चाथ क्रम्यन्तास्त्रिंशदत्र वै ।
४४४ अण ४४५ रण ४४६ वण ४४७ भण-
४४८ मण ४४९ कण ४५० क्वण ४५१ व्रण,
४५२ भ्रण ४५३ ध्वण दशैतेऽत्र शब्दार्थकाश्च धातवः ।
अणति रणति रूपम् आण रणाण रेणतुः ।
जणति लटि ववाण ववणतुर्ववणुर्लिटि ॥
एत्वाभ्यासादिलोपश्च वादित्वान्नैव जायते ।
धणति स दधाणेति धेणतुर्धेणुरादि च ॥
अस्त्यपनयने४५४ओणृ ओणत्योणाञ्चकार सः ।
वर्णगत्योरिह४५५शोणृ शोणति स शुशोण च ॥
संघाते४५६श्रोणृधातोर्हि श्रोणति श्रोणतः क्रिया ।
४५७श्लोणति श्लोणृधातोः स्यात् शुश्लोण च शुश्लुणतुः ॥
गतिप्रेक्षणश्लेषेषु ४५८पैणृ प्रैणृ इति स्मृतौ ।
पैणति स पिपैणाथ पिपैणतुः पिपैणुरिति ।
ध्रणति४५९ध्रण शब्देऽस्य दध्राण दध्रणतुर्लिटि ।
वणति केचिदत्राहुः वेणतुर्वेणिथ लिटि ॥
४६०कनी दीप्तौ गतिकान्त्योः कनति स चकाम च ।
शब्दार्थकौ ४६१वन४६२ष्टनौ वनति स्तनतीति च ॥
४६३वन४६४षणौ च संभक्तौ वनति स ववान च ।
सनत्ययं ससान सः सेनतुः सेनिथ लिटि ॥

**ये विभाषा । ६ । ४ । ४३**

जन-सन-खनामात्वं यादौ ङ्किति विकल्पतः ।
४६५अमगत्यादिषु प्रोक्तः अमति आम आमतुः ।।
४६६द्रम४६७हम्म तथा ४६८मीमृ गतावर्थे इमे त्रयः ।
द्रमति द्रमतश्चाथ हम्मति हम्मतस्तथा ।।
हम्यन्तक्षणेति वृद्धिर्न अद्रमील्लुङि जायते ।
जहम्म हम्मिता रूपमहम्मीदिति पठ्यते ।।
मीमति स मिमीमेति मीमिता लुटि च भवेत् ।
४६९चमु४७०छमु४७१जमु४७२झमु चत्वारश्चादने स्मृताः ।।

**ष्ठिवु-क्लमु-चमां शिति । ७ । ३ । ७५**

एषामचो भवेद्दीर्घश्शिति च प्रत्यये परे ।

**आङि चम इति वाच्यम् । वा**

आङ्पूर्वस्य हि चमे दीर्घो न केवलस्य च ।।
आचामति भोजनान्ते सत्क्रियाकर्मणि द्विजः ।
चमति चमतो रूपं विचमति प्रयुज्यते ।।
चचाम चेमतुश्चेमुरचमील्लुङि च भवेत् ।
जिमि च भोजने ख्यातो जेमति स जिजेम च ।।
४७३ क्रमु चरणविक्षेपे दीर्घोऽस्य सार्वधातुके ।

**वा भ्राश-भ्लाश-भ्रमु-क्रमु-क्लमु-त्रसि-त्रुटिलषः । ३ । १ । ७०**

एतेभ्यः श्यन् विकल्पेन कर्त्रर्थे सार्वधातुके ।।

**क्रमः परस्मैपदेषु । ७ । ३ । ७६**

क्रमेदीर्घः शिति परे परस्मैपदके सदा ।
क्राम्यति क्रामति रूपं चक्राम लिटि चक्रमुः ।।
स क्रमिता क्रमिष्यति क्राम्यतु क्रामतु द्वयम् ।।

**स्नुक्रमोरनात्मनेपदनिमित्ते । ६ । २ । ३६**

स्नुक्रमोरिड् विकल्पेनात्मनेपदिनोस्तयोः ।।

अक्रमीदक्रमिष्टाञ्च अक्रमिषुर्लुङि भवेत् ।
रेवत्यन्तानुदात्तेतस्त्रयस्त्रिशत् तङा सह ।।
३७४, ४७५, ४७६, ४७७, ४७८, ४७९, ४८०,
अय वय पय मय चय तय णम गतौ ।
अयते सः अयेते तौ अयन्ते अयसे लटि ।।

**दयायासश्च । ३ । १ । ३७**

दयायासस्त्रिधातुभ्य आम् भवेल्लिटि च परे ।
अयाञ्चक्रेऽयिता रूपमयीत अयिषीष्ट सः ।।

**विभाषेटः । ८ । ३ । ७९**

इणः परश्च य इट् तत्परेषां क्रियापदे ।
षीध्वं लुङ्लिटां धस्य मूर्धन्यः स्याद्विकल्पतः ।।
अयिषीढ्वमयिषीध्वमायिष्ट आयिढ्वमिति ।
आयिध्वञ्चापि पक्षे स्याद् यथेच्छं वक्तुमर्हसि ।।

**उपसर्गस्यायतौ । ८ । २ । १९**

उपसर्गस्य रस्यात्र लत्वं स्यादयतौ परे ।
रूपं स प्लायते ग्रामात् पलायते च जायते ।।
निरयते दुरयते रोरसिद्धत्वेन लं नहि ।
निलयते दुलयते निर्दु रोरान्तपूर्वयोः ।।
लत्वमेतेन सूत्रेण भवेदेव न संशयः ।

**अत्र शङ्का—**

उदयति विततोर्ध्वरश्मावििति कथं भवेत् ? ।।

**उत्तरम्—**

इट किट कटीत्यत्र प्रश्लिष्टेन भविष्यति ।

**अथवा—**

**अनुदात्तेत्वलक्षणमात्मनेपदमनित्यम् । वा**

अनुदात्तेत्वलक्षणमात्मनेपदमत्र वै ।
अनित्यं विद्यते तस्मादयतीति सिद्धयति ।।

अत्रोपमानोपमेयगतस्यार्थस्यैकस्याभावाच्छब्द एव धर्मः। एवमेतेषां धर्माणां व्यामिश्रणं च सम्भवति।

यथा—

'श्यामलेनाङ्कितं भाले बाले केनापि लक्ष्मणा।
मुखं तवान्तरा सुप्तभृङ्गफुल्लाम्बुजायते॥'

अत्र भालगताङ्कप्रसुप्तभृङ्गौ बिम्बप्रतिबिम्बभावमापन्नौ क्यङर्थे आचारेऽनुगामिन्यभेदमापद्य स्थितौ।

यथा वा—

'सिन्दूरारुणवपुषो देवस्य रदाङ्कुरो गणाधिपतेः।
सन्ध्याशोणाम्बरगतनवेन्दुलेखायितः पातु॥'

अत्र सिन्दूरसन्ध्याभ्यां गणाधिपगगनाभ्यां च बिम्बप्रति-

---

स्यार्थस्यैकस्या● समदृष्टिसमादरत्वयोः समानशब्दः। बिम्बप्रतिबिम्बभावानुगामिनोरुदाहरणमाह।

श्यामलेनेति● भाले केनाऽपि श्यामलेन लक्ष्मणा अङ्कितं तव मुखमुपमानम्, अन्तरा सुप्तं भृङ्गं यस्यैवं फुल्लाम्बुजमुपमेयम्। आचारश्च तयोरनुगामी धर्मः, स चाचारः पदार्थान्तरविशिष्टो नाना तादृशस्य च न साधारणताऽतो विशेषणयोर्भालगताङ्कितत्वप्रसुप्तभृङ्गयोर्बिम्बप्रतिबिम्बभावः। वस्तुप्रतिवस्तुभावबिम्बप्रतिबिम्बभावानुगामिनामुदाहरणमाह—

सिन्दूरेत्यादि● सिन्दूरेणारुणं वपुर्यस्यैवंभूतस्य गणाधिपतेर्देवस्य दन्ताङ्कुर उपमेयः, सन्ध्यायां शोणेऽम्बरे नवा इन्दुलेखा उपमानम्। अनुगामी चाचार उपमेये सिन्दूरप्रयुक्तः। परत्र च सन्ध्याप्रयुक्त इति तयोरभेदाय बिम्बप्रतिबिम्बभावः। एवं सम्बन्धिभेदादाचारभेदनिरासाय गणाधिपगगनयोरपि सः। एवं वस्तुतोऽभिन्नारुणत्वशोणत्वयोः शब्दभेदेन भिन्नत्वेनावभासमानयोरपेक्षयाऽऽचारेऽपि भेदः समापतित इति तयोरपि वस्तुप्रतिवस्तुभावः। यद्यप्ययं स्फुटतया नोपात्तस्तथापि विशिष्टधर्मेणेत्यादिमूलाक्षरानुसारं मर्मप्रकाशप्रकाशितो युक्त एव प्रतिभाति। प्रसिद्धौज्ज्वल्यशोभाविशेषादिकमादायाप्याचारोऽनुगामी

बिम्बभावमापन्नाभ्यां [ धर्माभ्याम् ] सम्पादिताभेदेन विशिष्ट-धर्मेणाभेदेनावस्थितः क्यङर्थोऽनुगामी ।

क्वचिद्धेतुहेतुमद्भावेन । यथा—

'खलः कापट्यदोषेण दूरेणैव विसृज्यते ।
अपायशङ्किभिर्लोकैर्विषेणाशीविषो यथा ॥'

अत्र कापट्यं विषं च बिम्बप्रतिबिम्बतां गतं दूरतो विसर्जनेऽनुगामिनि हेतुः ।

यथा वा—

रूपवत्यपि च क्रूरा कामिनी दुःखदायिनी ।
अन्तःकाटवसम्पूर्णा सुपक्वेवेन्द्रवारुणी ॥'

अत्र रूपवत्त्वदुःखदायित्वयोर्द्वयोरनुगामिनोर्मध्ये क्रौर्य-काटवे बिम्बप्रतिबिम्बभावापन्ने दुःखदायित्वेन सह हेतुहेतुमद्-भावेन मिश्रिते, अपरेण तु शुद्धसामानाधिकरण्येन ।

एवमन्यैरपि व्यामिश्रणं बोध्यम् ।

प्रकारान्तरं च लक्ष्यानुसारेण सुधीभिः स्वयमुन्नेतुं शक्यम् ।

यथा—

'यथा लतायाः स्तबकानतायाः स्तनावनम्रे नितरां समाऽसि ।
तथा लता पल्लविनी सगर्वे शोणाधरायाः सदृशी तवापि ॥'

---

कर्तुं शक्यते, परं तस्य समाधानमनुपदमेव तर्हीत्यादिभवभूतिपद्येन मूल एवोक्तम् । समाधानान्तरं मर्मप्रकाशे तादृशशोभयोरैक्यप्रतिपत्तये तयोरेकतेति प्रति-पादितम् ।

**खल**● खल इत्यादि स्पष्टम् ।

**रूपवतीत्यादि**● रूपवत्त्वं दर्शनीयत्वम् । इन्द्रवारुणी फलविशेषः । अपरेण = रूपवत्त्वेन ।

**यथा लताया इति**● अत्र तिस्र उपमाः । यथातथापदप्रतिपाद्या प्रकृतवाक्यार्थस्योपस्कारकत्वेनालङ्कारतामापन्ना यस्याः कान्तोपमानं लता चोप-

अत्र स्तनावनम्राहं स्तबकानतायाः लतायाः उपमानमस्मीति गर्वं मा विदध्याः। यतः शोणाधरायाः उपमेयायास्तवापि पल्लविनी लतोपमानं भवतीति वाक्यार्थे यथातथापदप्रतिपाद्या कान्तोपमानिका लतोपमेयिकोपमा निष्पादिका। अस्यां चोपमायां निरूपकतासम्बन्धेनोपमानोपमेयगते द्वे उपमे समसदृशशब्दाभ्यां प्रतिपादिते बिम्ब-प्रतिबिम्बभावमापन्ने साधारणधर्मतया स्थिते।

तत्र निरूपकतत्सम्बन्धेन प्रधानीभूतोपमोपमानकान्तागतायामुपमायां प्रतिबिम्बभूतायां गुच्छस्तनयोर्वस्तुप्रतिवस्तुभावापन्ननमनन्नीभवनविशेषणयोर्बिम्बप्रतिबिम्बभावमापन्नयोः

---

मेयतां गता प्रथमा। द्वितीया प्रथमार्धगता समशब्दप्रतिपाद्या लतोपमेयककान्तोपमानिका। तृतीया द्वितीयार्धगता समपदप्रतिपाद्या कान्तोपमेयकलतोपमानिका। द्वितीया स्वप्रतियोगिन्यामुपमानकान्तायां प्रतियोगितानामकेन निरूपकतासम्बन्धेन वर्तते, तथैव तथाभूतायां लतायां तृतीया। तयोर्द्वितीयतृतीययोरूपमानोपमेयगतयोः परस्परभिन्नयोर्बिम्बप्रतिबिम्बभावेनाभेदमापन्नयोः साधारणधर्मतया प्रथमोपमासम्पादकत्वम्। न च प्रतिपादनशैल्यैव भिन्नतयाऽवभासमानयोर्वस्तुतोऽभिन्नयोर्वस्तुभाव एव समुचित इति वाच्यम्, केवलयोरुपमयोस्तथासम्भवेऽपि विशेषणविशिष्टयोः सर्वथा भिन्नत्वात्। तथाहि उपमानोपमेयभेदेन साधारणधर्मभेदेन चोपमा भिद्यते। तयोश्च सद्भावः स्फुट एव। अत्रत्यमर्मप्रकाशस्य शोणाधरनायिकास्तवकावनम्रलतयोर्बिम्बप्रतिबिम्बभावादित्यादेः कथञ्चिदुपमाया एव बिम्बप्रतिबिम्बभावे तात्पर्यं योजनीयम्। नायिकालतयोरभेदस्यानुपयोगात्। उपमाप्रतिकूलत्वादुपमयोरपेक्षितत्वाच्च तयोश्च बिम्बप्रतिबिम्बभावार्थं सादृश्यानुयोगित्वस्य साधारण्यं तत्रैवाभिहितम्। द्वितीयायां गुच्छस्तनौ बिम्बप्रतिबिम्बभावापन्नौ साधारणो धर्मः। बिम्बप्रतिबिम्बभावावपि साधारणधर्ममपेक्षेतेऽतस्तद्विशेषणयोरवनमननम्रीभवनयोर्वस्तुप्रतिवस्तुभावः। तृतीयायान्तु अधरपल्लवयोर्बिम्बप्रतिबिम्बभावात् साधारण्यम्। सगर्वपदव्यङ्ग्यं दर्शितं वृत्तौ भवतीत्यन्तेन।

निरूपकतेत्यादि● उपमाननिरूपितं सादृश्यमुपमेये इति व्यवहारात्

साधारणधर्मत्वम् । एवं तेनैव सम्बन्धेन लतारूपोपमेयगतायां बिम्वभूतायामुपमायामधरपल्लवयोः ।

न च तेन सदृश इत्यादौ तन्निरूपितसादृश्याश्रयस्योपमेयस्य, तस्य सदृश इत्यादौ च तत्सम्बन्धिसादृश्याश्रयस्योपमानस्य प्रतीतेः सिद्धत्वात् प्रकृते च सदृशीतिशब्दान्निवेद्यमानेऽप्युपमानभावे कथं नाम लताया उपमेयतेति वाच्यम्, सदृशशब्दप्रतिपाद्यधर्मभूतोपमायामुपमानत्वेऽपि यथातथाशब्दवेद्योपमायां लताया उपमेयभावे बाधकाभावात् ।

एवमन्येऽपि प्रकाराः ।

'यथा तवाननं चन्द्रस्तथा हासोऽपि चन्द्रिका ।
यथा चन्द्रसमश्चन्द्रस्तथा त्वं सदृशी तव ॥'

---

सादृश्यनिरूपकमुपमानमित्यायाति । फलति च प्रयोगितासम्बन्धः । यतः सादृश्यस्य प्रतियोग्युपमानमनुयोग्युपमेयमिति व्यवहारात् ।

**तन्निरूपितेत्यादि** ● तत्प्रतियोगिकसादृश्यानुयोगिन इत्यर्थः, तत्सम्बन्धिसादृश्येत्यादेस्तदनुयोगिकसादृश्यप्रतियोगिन इत्यर्थः । यद्यपि 'तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्' इत्यनेन प्रतियोगित्वसम्बन्ध एव तृतीयाषष्ट्योर्विधानात् समानार्थकतैवोचिता, तथापि सम्बन्धसामान्यार्थिकायाः शैषिकषष्ठ्या अनुयोगित्वमप्यर्थो भवितुमर्हतीति हृद्यम् ।

**यथा तथेति** ● प्रथमायामित्यर्थः ।

**यथा तवाननमित्यादि** ● उपमाद्वयी स्फुटा । प्रथमा पूर्वार्धगता । द्वितीयोत्तरार्धगता । प्रथमायाश्चन्द्राननयो रूपकमुपमानं हासचन्द्रिकयो रूपकमुपमेयम् । द्वितीयायाश्चन्द्रानन्वय उपमानं नायिकानन्वय उपमेयः ।

अत्र द्वितीयायामनन्वययोर्बिम्बप्रतिबिम्बभावेन साधारण्यमादाय चन्द्रनायिकयोरुपमा व्यज्यते । नायिकायां सौन्दर्यातिशयस्य व्यङ्ग्यत्वेऽस्ति चेत् सहृदयानां हृदयं साक्षि तदा तस्या अङ्गत्वमन्यथा तूपस्कार्यत्वमेव । अनन्वययोरुपमा तु बिम्बप्रतिबिम्बभावस्थानमाश्रिता तयोः साधारण्याय । पूर्वार्धे रूपकयोरुपमां विना उपमानान्तरस्य सम्भवो न प्रतिभासते । रूपकयोः कथमपि साधारण्य-

एभिर्भेदैः प्रागुक्तानां सधर्माणां भेदानां यथासम्भवं गुणने बहुतरा भेदा भवन्ति ।

तथा धर्माणां वाच्यतायां वाच्यधर्मा बहुधोक्ताः । व्यङ्ग्यत्वे व्यङ्ग्यधर्मा धर्मलोपे गदितैव । लक्ष्यतायां यथा—

'सर्प इव शान्तमूर्तिः श्वेवायं मानपरिपूर्णः ।
क्षीब इव सावधानो मर्कट इव निष्क्रियो नितराम् ॥'

इत्यत्रोपमानमहिम्ना शान्तमूर्त्यादिशब्दैर्विरुद्धा धर्मा लक्ष्यन्ते ।

इयं चोपमा मुख्यार्थस्य क्वचित्साक्षादुपस्कारिणी क्वचिच्चोपस्कारकान्तरोपस्करणद्वारा । तत्र साक्षादुपस्कारिणी प्राग् बहुधोदीरिता ।

---

सम्पादनेऽपि चन्द्रचन्द्रिकयोर्मुखहासयोर्वोपमाया अप्रकृतत्वात् । यद्यपि केनचित् प्रतिपादितमनन्वययोरुपमायां पूर्वार्धोपात्तोपमा साधारणमिति तदपि न हृदयमधिरोहति, अनन्वयेनैव निर्वाहात् चन्द्रचन्द्रिकादीनामुपमाया अनपेक्षितत्वाच्च । कथमप्युपकार्योपकारकभावस्तु सम्भवति ।

**सधर्माणाम्** साधारणधर्मभेदभिन्नानाम् । अर्थात् साधारणधर्मास्त्रिविधाः—वाच्या व्यङ्ग्या लक्ष्याश्च । द्विविधा उक्ताः । लक्ष्यमाह—

**सर्पइवेत्यादि** कमपि पुरुषमाक्षिपन् कश्चिद्वर्णयति । सर्पे च चपलस्वभावाच्छान्तमूर्तेरभावाद् मुख्यार्थबाधाच्चपलशरीरत्वं लक्ष्यते । शुनि मानविहीने पूर्णं मानं बाधितमिति अपमानं लक्ष्यते । उन्मत्तेऽवधानाभावान्मत्तत्वं लक्ष्यते । एवमेव मर्कटमहिम्ना सक्रियत्वं लक्ष्यीकृत्य तैर्लक्षितैः साधारणधर्मैश्चतसृभिरुपमाभिर्मालोपमा । अत्र नूतनचन्द्रिकाया लक्ष्यतावच्छेदके लक्षणावर्णनमज्ञानमूलम् । व्यङ्ग्यस्य प्रयोजनीभूतस्य तत्तद्धर्मांशस्योपस्कारिका ।

पुनश्चोपमा द्विधा साक्षादुपस्कारिणी परम्परा च । तत्र प्रथमा बहुधा प्रागुक्ता, द्वितीयामाह—**नदन्ति**

परम्परया यथा—

'नदन्ति मददन्तिनः परिलसन्ति वाजिव्रजाः
पठन्ति विरुदावलीमहितमन्दिरे बन्दिनः ।
इदं तदवधि प्रभो यदवधि प्रवृद्धा न ते
युगान्तदहनोपमा नयनकोणशोणद्युतिः ॥'

---

अहितमन्दिरे मत्ता गजाश्चीत्कारं कुर्वन्ति । अश्वसमूहाः शोभन्ते । बन्दिनः स्तुतिं गायन्ति । परं हे प्रभो सर्वमिदं यावत्तव प्रलयाग्निसदृशी नयनयोः कोणे रक्ता द्युतिर्न जायते तावदेव । कोपवशात्तादृशी द्युतिर्जायमानैव विनाशसूचनया सर्वमुत्सवं समापयति ।

अत्र व्यज्यमाना राजविषया कविनिष्ठा रतिर्मुख्यवाक्यार्थतया उपस्कार्या । तदुपस्कारकश्च यदैव तव कोपोदयस्तदैव रिपूणां सम्पदो भस्मसाद्भवन्तीति व्यङ्ग्यं वस्तु । तदुपस्कारिका चोपमेति मुख्यवाक्यार्थस्योपस्कृतवस्तुद्वारोपस्कारिणी ।

इवेत्यादावादिशब्दग्राह्याः काव्यादर्शे द्वितीयपरिच्छेदे संगृहीताः ।

इववद्वायथाशब्दाः समाननिभसन्निभाः ।
तुल्यसंकाशनीकाशप्रकाशप्रतिरूपकाः ॥ १ ॥
प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिनः ।
सदृक्सदृशसंवादिसजातीयानुवादिनः ॥ २ ॥
प्रतिबिम्बप्रतिच्छन्दसरूपसमसंमिताः ।
सलक्षणसदृक्षाभसपक्षोपमितोपमाः ॥ ३ ॥
कल्पदेशीयदेश्यादिः प्रख्यप्रतिनिधी अपि ।
सवर्णतुलितौ शब्दौ ये चानन्यार्थवाचिनः ॥ ४ ॥
समासश्च बहुव्रीहिः शशाङ्कवदनादिषु ।
स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति ॥ ५ ॥
आक्रोशत्यवजानाति कदर्थयति निन्दति ।
विडम्बयति संधत्ते हसतीर्ष्यत्यसूयति ॥ ६ ॥
तस्य मुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति ।
तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति ॥ ७ ॥
तत्पदव्यां पदं धत्ते तस्य कक्षां विगाहते ।
तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति ॥ ८ ॥
तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः ।

अत्र मुख्यार्थस्य राजविषयायाः कविरतेरुपस्कारकस्य यदैव तव कोपोदयस्तदैव रिपूणां सम्पदो भस्मसाद् भविष्यन्तीति वस्तुन उपस्कारिका नयनकोणशोणद्युतेर्युगान्तदहनोपमा ।

इयं चेवयथावादिशब्दैर्वाचकैः प्रतिपादिता वाच्यालङ्कारः । लक्ष्यापि चालङ्कुर्वाणा दृश्यते, यथा—

'नीवीं नियम्य शिथिलामुषसि प्रकाश-
　　मालोक्य वारिजदृशः शयनं जिहासोः ।
नैवावरोहति कदापि च मानसान्मे
　　नाभेर्निभा सरसिजोदरसोदरायाः ॥'

अत्रैकोदरप्रभवत्वरूपस्य मुख्यार्थस्य बाधात् तदीयशोभा-लक्षणसमानांशहरत्वस्य प्रयोजनस्य सत्त्वात् सोदरपदेन सदृशो

---

अत्र केचन सादृश्यमात्रस्य वाचका यथेवादयः । केचन सादृश्यविशिष्ट-वाचकाः सदृशतुल्यादयः । केचन लक्षकाः स्पर्धत्यादयः । व्यञ्जकाश्च मुष्णा-त्यादयः । अस्य सूक्ष्मविचारे बहूनां व्याख्यातॄणां दोषः सम्भाव्यते, परं विस्तर-भिया न प्रतन्यते । कश्चिन्मित्रं प्रति नायिकां वर्णयति—

नीवीमित्यादि ● विलम्बेन निद्रितायाः एव प्रातः प्रकाशे सञ्जाते ससम्भ्रममेव शिथिलां नीवीं हस्ते गृहीत्वा शयनं हातुमभिलषन्त्याः कमलवदनायाः कमलसदृशी नाभेः कान्तिर्मम मानसान्नावतरति सततं स्मृतिपथमारुढैवेत्यर्थः । सोदरशब्दः समानोदरयोर्बहुव्रीहिसमासे समानस्य सादेशे निष्पन्नः, यद्यपि विभाषोदरे इति सूत्रं सादेशसम्पादकं यतिप्रत्यये विवक्षित एव प्रवर्तते, तथापि समानस्य छन्दस्येत्यादिसूत्रे समानस्येति योगविभागात् 'सोदराद्य' इति निर्देशज्ञापनाद्वा सादेशः । भानुदीक्षितास्तु सोदरजादिशब्दे सहशब्दस्य तुल्या-र्थतामाश्रित्य तुल्ये उदरे जात इत्यर्थे अन्येभ्योऽपि दृश्यन्ते' इति डान्तं 'सह उदरेण वर्तते' इत्यर्थे वोपसर्जनस्य' इति सादेशञ्च शासति । एकोदरादुत्पद्य-मानत्वं शक्यार्थः । उदरसरसिजयोर्विभिन्नादुत्पद्यमानतया सोऽर्थो बाधितः । शोभारूपः साधारणो धर्मः शक्यार्थसम्बन्धः । सदृशो लक्ष्यार्थः, यथा सोदरस्य समानदायभागित्वं तथा नाभेरपि सरसिजसमानशोभाधायकत्वमिति लक्षणायाः

लक्ष्यते । आर्थी च तत्रोपमा प्रतीयमाना । अवरोहतिलक्ष्यस्य विषयतया स्मृतिशून्यीभवनस्य निषेधेन प्रतीयमानायाः स्मृतेरुपस्कारिका ।

एवं प्रतिभटप्रतिमल्लादिशब्दानां तदीयन्यग्भवनतदीयशोभारूपसर्वस्वापहरणादेः प्रयोजनस्य सत्त्वात् सादृश्यवति लक्षणैव, न व्यञ्जना; मुख्यार्थस्य बाधात् । प्रयोजने पुनर्व्यञ्जनैवेति ।

क्वचिद् व्यङ्ग्यापि चेयमुपमालङ्कारः, यथा—

'अद्वितीयं रुचात्मानं मत्वा किं चन्द्र हृष्यसि ।
भूमण्डलमिदं मूढ केन वा विनिभालितम् ॥'

कस्यचिद्विदेशस्थितस्य किरणैरात्मानं सन्तापयन्तं चन्द्रं प्रत्येषोक्तिः ।

---

प्रयोजनम् । अभिधया सादृश्यस्य तद्विशिष्टस्य चानुपस्थानादुपमा आर्थी । अवरोहशब्दः सोपानादिभ्योऽवतरणे शक्तः, मानसपदसमभिहाराद्विस्मृतेर्लक्षकः निषेधेन सततं स्मृतिपथमारोहतीत्यर्थः । उपमयोपस्कृता स्मृतिः । सैव वाक्यार्थः, तदुपस्कृता नायिकाविषयिणी रतिर्वा ।

**विषयतया**● नायिका स्मर्यते तदा विषयतासम्बन्धेन स्मृतिर्नायिकायाम् । विषयतासम्बन्धेन स्मृतिर्नास्तीत्याकारकोऽभावः स्मृतिशून्यीभवनशब्दार्थः ।

**अद्वितीयमि**● रुचेत्यत्र 'इत्थंभूतलक्षणे' इत्यनेनोपलक्षणे तृतीया । यथा च रुक्प्रयोज्याद्वितीयत्वम्, रूचा सजातीयद्वितीयरहितमात्मानमित्यन्वयः ।

**मत्वा**● मननं भ्रमः उत्तरार्धोदितं विशेषदर्शनमन्तरेण सञ्जातम् । किमाक्षेपे । हर्ष आक्षिप्यते, हर्षकारणवस्त्वभावेऽपि सञ्जातत्वात् । न केवलं भूरेव पार्श्वस्थिता, किन्तु तस्या मण्डलम् । **केन**● न केनापि तेन त्वयाऽपि। **निभालितम्**● विशेषरूपेण साक्षात्कृतम् ।

अत्र च अस्ति मम प्रियायाः कदापि बहिरनिर्गतायाः, अत एव त्वयाप्यदृष्टाया आननं त्वत्सदृशमिति प्रतीयमाना उपमा मूढपदेन ध्वन्यमानायां चन्द्रविषयायां वक्तृगतायामसूयायामलङ्कारः ।

एतेनाप्पयदीक्षितैरुपमालक्षणे दत्तमव्यङ्ग्यत्वविशेषणमयुक्तमेव । नहि व्यङ्ग्यत्वालङ्कारत्वयोरस्ति कश्चिद्विरोधः । प्राधान्येन व्यङ्ग्यतायां तु प्रधानत्वालङ्कारत्वयोर्विरोधादलङ्कारलक्षणं तत्र मातिप्रसाङ्क्षीदित्युपस्कारकत्वेन पुनर्विशेषणीयम्, न त्वव्यङ्ग्यत्वेन, प्रागुक्तायामसूयालङ्कारोपमायामव्याप्त्यापत्तेः ।

विशिष्टोपमादिस्थले विशेषणाद्युपमानां वाच्यसिद्ध्यङ्गतया गुणीभूतव्यङ्ग्यत्वम्, सिद्धार्थस्योपस्करणाभावात्तु नालङ्कारत्वमिति न काप्यसङ्गतिः ।

---

प्रतीयमाना ● वाचकलक्षकपदाभावाद् व्यज्यमाना ।

मूढपदेन ● अन्यथा मननं भ्रमो न स्यात् ।

असूयायाम् ● चन्द्रेण सन्तप्यमानस्योक्तेः । अत्र मंप्रकाशः मूढपदस्वारस्यात् किं हृष्यतीत्युपपादनात् चमत्कारातिशयाच्च प्रतीपस्यैव व्यङ्ग्यत्वमिति केचित् । अत्र प्रतीपमुपमायामन्तर्भूतमिति विवेचनेनैव ग्रन्थसमर्थनं जातमिति तत्समाधानान्तरापेक्षा नावशिष्यते । विवेचितश्चेदं प्रागुपमासामान्यलक्षणप्रस्तावे, पश्चाच्च प्रतीपाऽवसरे विवेचयिष्यते ग्रन्थकृता । तत्रापि प्रसिद्धोपमानचन्द्रस्योपमेयत्वकल्पनायां प्रतीपाशङ्का । उपमेयविशेषव्यञ्जनया चोपमाया अवसरः । सद्वितीयत्वञ्चोपमेयेनोपमानेन च द्वितीयेन भवितुमर्हति । अतः सद्वितीयत्वव्यञ्जनामात्रेण न प्रतीपस्योद्रेक इति विवेचनीयं सुधिभिः ।

विशिष्टोपमादीति ● यत्र बिम्बप्रतिबिम्बभावापन्नः साधारणो धर्मः, तत्र

यच्चापि "सेयमुपमा संक्षेपतस्त्रिविधा—क्वचित् स्ववैचित्र्य-मात्रविश्रान्ता, यथा 'सच्छिन्नमूलः क्षतजेनरेणुः' इत्यादौ। क्वचिदुक्तार्थोपपादनपरा, यथा 'अनन्तरत्नप्रभवस्य' इत्यादौ। क्वचिद् व्यङ्ग्यप्रधाना सा" इति तैरेव द्रविडशिरोमणिभिर-भ्यधीयत, तदप्यहृद्यमेव; 'नयने शिशिरीकरोतु मे शरदिन्दु-प्रतिमं मुखं तव' इति वाच्यवस्तूपस्कारिकायाः शरदिन्दूपमाया अक्रोडीकरणात्, अलङ्कारभूतोपमासु स्ववैचित्र्यमात्रविश्रान्ताया उपमायाः सङ्ग्रहे को नाम ध्वन्यमानायास्तस्या निरासाया-व्यङ्ग्यत्वविशेषणदानदुराग्रहः ? अहो महदेवेदमन्याय्यं यद-लक्षणीयायाः सङ्ग्रहः, लक्षणीयायाश्चासङ्ग्रह इति।

प्राचीनानां तूपमासामान्यं लक्षयतां ध्वन्यमानाया

---

बिम्बप्रतिबिम्बयोरौपम्यं प्रतीयते, परं तदौपम्यं वाच्यस्य साधारणधर्मादेः साधकमुपस्करणं तु सिद्धस्य शोभाधायकत्वम् अतो न तस्यालङ्कारत्वमिति भावः।

**सच्छिन्नमूलः●** रघुवंशसप्तमसर्गेऽजस्य युद्धवर्णने—

> सच्छिन्नमूलः क्षतजेन रेणुस्तस्योपरिष्टात् पवनावधूतः।
> अङ्गारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इवावभासे ॥ १ ॥

इत्यत्र रेणुधूमयोरुपमा कवेः कल्पनाप्रौढिं प्रसारयन्त्यपि न किमपि प्रकृत-मुपस्करोति। अतः स्ववैचित्र्यमात्रे विश्रान्ता। कुमारसम्भवस्य हिमालयवर्णने 'अनन्तरत्नप्रभवस्य तस्य' इत्यादिपद्ये इवपदोपात्तोपमाऽपि न किमप्यु-पस्करोति, किन्तु उक्तार्थस्य 'गुणसमूहे एकस्य दोषस्य शोभाऽपकर्षकता नास्ति' इति वस्तुनः समर्थनाय एव चन्द्रकिरणगतकलङ्कोपमोपात्ता, न तु प्रकृतमुपमेय-मुपस्करोतु। तेन हिमेन हिमालयसौन्दर्यं नापकृष्टमिति यद्यपि प्रतीयते, परं न तत्कार्यमुपमायाः।

**नयने●** मुखस्य शिशिरीकरणं यद्वाच्यन्तन्मुखस्येन्दूपमत्वं विना नोप-पद्यते। इति।

एवं वर्णयतां प्राचामप्येष दोष इति शङ्कां निरस्यति प्राचीनानामित्यादिना।

इवास्या अपि सङ्ग्रहो नानुचितः । न तु स्वस्य यत्नेन ध्वन्यमानोपमां निरस्य कण्ठरवेणालङ्कारभूतोपमालक्षकस्य । यदि च प्रबन्धव्यङ्ग्योपस्कारकत्वेनेयं सङ्गृह्यत इत्युच्यते, तदा 'स्ववैचित्र्यमात्रविश्रान्ता' इति स्वोक्तिविरुद्धा स्यात् । 'अनन्तरत्नप्रभवस्य' इत्यत्र गुणसमूहसमानाधिकरण एको दोषो दोषत्वेन न स्फुरतीत्यस्यार्थस्य पूर्वार्धप्रतिपादितार्थ-समर्थनात्मकस्य सामान्यरूपस्य विशेषरूपोदाहरणप्रदर्शनमन्तरेण सम्यगनाकलनादिन्दुकिरणसमानाधिकरणोऽङ्क उदाहृतः, न तूपमानतया निर्दिष्टः, सामान्याद्विशेषस्य भेदाभावेनोपमिति-क्रियाया अनिष्पत्त्या उपमालङ्कृतेरत्रानवतारादुदाहरणा-लङ्कारोऽयमतिरिक्तः, यथा 'इको यणचि' इति वाक्यार्थस्य सामान्यस्य विज्ञानायोदकोकारे दधीकारस्य य इति वाक्यान्तरेण तद्विशेष उदाह्रियते तद्वदत्रापीति तत्प्रसङ्गे विवेचयिष्यामः ।

---

**यत्नेन●** अव्यङ्ग्यत्वविशेषणरूपेण । अत्र मर्मप्रकाशः उपमासामान्य-स्यापि प्रकृतत्वात्तस्यैव विभागश्चित्रमीमांसायाम् । अत एव सेयमुपमेत्येवोक्तम्, न त्वलङ्कार इति । उक्तार्थोपपादनपरेत्यनेन उक्तार्थे उक्तार्थस्य वेति द्विवि-धोऽर्थः । मुखस्य नयनशिशिरीकरणं इन्दूपमयाऽपि सिद्धेस्तदपि संगृह्यते इति ।

एवं संयोजने व्यङ्ग्या प्रधानीभूता चोपमा संग्राह्या नैतास्वन्तर्भवतीति चित्रमीमांसोदाहृतपद्यानामवलोकनेन प्रतीयते न्यूनतेति सुधियो विभावयन्तु ।

**सामान्याद्विशेषस्य●** उपमाया भेदघटितत्वात् सामान्यविशेषयोश्च भेदा-भाव इति भावः ।

**उकारे●** उदकोकारे दधीकारस्य य इति मर्मप्रकाशपाठः । अत्र मर्मप्रकाशकृतः परस्परमभिन्नयोरपि सामान्यविशेषयोरपि व्यापकव्याप्य-धर्मयोर्भेदादुपमितिः संभवति । धर्मिणोरभेदेऽपि गुणसन्निपातत्वकिरणसमूह-त्वयोः, दोषत्वाङ्कत्वयोश्च भेदान्न दोषः, अत एव

ग्रामं ग्राममटन् भिक्षुः भिक्षत्येवं न याचते ।
अदत्त्वा मादृशो मा भूर्दत्त्वा त्वं त्वादृशो भव ॥

यच्चाप्पयदीक्षितैः 'लुप्तायां तु नैवं भेदाः । तस्यां साधारणधर्मस्यानुगामितानियमात्' इत्युक्तम्, तन्न । मलय इव जगति पाण्डुर्वल्मीक इवाधिधरणि धृतराष्ट्रः' इत्यत्रानुगामिधर्मस्याप्रत्ययाच्चन्दनानां पाण्डवानाम्, सर्पाणां दुर्योधनादीनां च बिम्बप्रतिबिम्बभावस्यैव प्रतिपत्तेः ।

न च शब्देनोपात्तत्वं बिम्बप्रतिबिम्बभावे तन्त्रमित्याग्रहो विदुषामुचितः, श्रौतत्वार्थत्वाभ्यां बिम्बप्रतिबिम्बभावस्य द्वैविध्यौचित्यात् ।

अत एवाप्रस्तुतप्रशंसादौ प्रकृताप्रकृतवाक्यार्थयोरौपम्यमवयव-बिम्बप्रतिबिम्बभावमूलं सङ्गच्छते ।

इयमपि रूपकवत्केवलनिरवयवा, मालारूपनिरवयवा, समस्तवस्तुविषयसावयवा, एकदेशविवर्तिसावयवा, केवलश्लिष्टपरम्परिता, मालारूपश्लिष्टपरम्परिता, केवलशुद्धपरम्परिता, मालारूपशुद्धपरम्परिता चेत्यष्टधा ।

तत्रोपमायां केवलत्वं मालानन्तर्गतत्वं निरवयवत्वं चोपमान्तरनिरपेक्षत्वम् ।

---

इत्यादौ युष्मत्पदार्थस्यैकस्यापि दानादानोत्तरकालिकत्वेन भेदमाश्रित्योपमा निष्पाद्यते ।

उदाहरणालङ्कारस्तु नोपमातिरिक्त इति दीक्षितस्याशय इति समर्थयन्ते, तत्तु उपमालङ्कारगतार्थत्वे उदाहरणस्य युक्तमिति तन्निरूपणप्रसङ्गे एव स्फुटीभविष्यति । परं त्वं तादृश इत्यादौ अर्थान्तरन्यासमपि केचन मन्वत इति न विस्मर्तव्यम् । दत्वा एव दाता भवतीत्यत्र त्व त्वादृश इत्युदाहरणम् । समर्थकवाक्येऽपि इवादीनां प्रयोगो भवति महानसमिवेत्यादौ ।

**मलय इव** ● मलयोयथा चन्दनसौरभेण जगतां हितावहस्तथा पाण्डुरपि पुत्रान् पाण्डवान् द्वारीकृत्य । धरण्यां यथा वल्मीक उत्पादितोरगैर्जगदुद्वेजयति तथा धृतराष्ट्रः स्वपुत्रैरिति वाक्यार्थः । तदुपस्कारिकोपमाद्वयी । तत्र साधारणो धर्मो न प्रतिपादितः, अपि तु पाण्डवचन्दनौ दुर्योधनादिसर्पौ बिम्बप्रतिबिम्बभावापन्नौ । इति भावः ।

**अतएव** ● आर्थस्य बिम्बप्रतिबिम्बभावस्य साधारणताप्रयोजकत्वा-

इयं च शतशः प्रागेवोदाहृता ।

मालारूपनिरवयवा यथा—

'आह्लादिनी नयनयो रुचिरैन्दवीव
कण्ठे कृतातिशिशिराम्बुजमालिकेव ।
आनन्दिनी हृदि गता रसभावनेव
सा नैव विस्मृतिपथं मम जातु याति ॥'

यथा वा —

'कलेव सूर्यादमला नवेन्दोः कृशानुपुञ्जात् प्रतिमेव हैमी ।
विनिर्गता यातुनिवासमध्यादध्याबभौ राघवधर्मपत्नी ॥'

पूर्वमनुगामिना धर्मेण भिन्नदेशकालावच्छेदेन, अत्र तु बिम्बप्रतिबिम्बभावमापन्नेनैकदेशकालावच्छेदेनेति विशेषः ।

अत्राधिकदीप्तिरूपे वाक्यार्थे उपमे उपस्कारिके । आत्यन्तिक-

---

देव । अप्रस्तुतप्रशंसादौ अनुगामिधर्मस्यानुक्तेरित्यर्थः । प्रस्तुताप्रस्तुतावयववस्तूनां बिम्बप्रतिबिम्बभावाभ्युपगमाच्च ।

**आह्लादिनी●** सा नायिकोपमेयभूता, तिस्रः उपमाः इन्दोः कान्तिरिव आह्लादजनिका कण्ठेकृता अतिशिशिरा कमलमालेव हृदि गता रसभावनेव आनन्ददायिनी । क्रमश आह्लादनम्, अतिशिशिरत्वमानन्दनञ्च साधारणम् कश्चिन्मित्राय नायिकां वर्णयति ।

अत्र विस्मरणाभावद्वारा व्यङ्ग्यस्य नायिकोत्कर्षस्य तिस्रोऽप्युपमा उपस्कारिकाः । अत्र धर्मा अनुगामिनः ।

बिम्बप्रतिबिम्बभावापन्नधर्मघटितामुदाहरति **यथा वा●**

**कलेव●** 'अमायां चन्द्रमण्डलं सूर्यमण्डलं समन्वेति पुनः प्रतिपदि तस्मादुदेति' इति सिद्धान्तात् सूर्यमण्डलादमला नवेन्दोः कलेव अग्निसमूहात् सुवर्णस्य प्रतिमा इव राक्षसनिवासमध्याद्विनिर्गता राघवधर्मपत्नी सीता अध्याबभौ ।

प्रथमपद्याद् भेदमाह **पूर्वम्●** आह्लादनादयोऽभिन्ना अपि देशकालभिन्नभेदवशाद्भिन्नतयाऽवभासमाना अनुगामिनः । द्वितीये पद्ये तु न देशकालयोर्भेदः । अमायां रावणवधेन प्रतिपदि सीताया निर्गमस्तदानीमेव सूर्यादिन्दोः कलाया आविर्भावः । सूर्येण कृशानुपुञ्जेन च साकं लङ्काया बिम्बप्रतिबिम्बभावः ।

विनाशहेतुत्वेन देदीप्यमानत्वेन च साधारण्येन सूर्यमण्डलस्य, निष्कलङ्कताभिव्यञ्जकत्वेन भस्मीभवनहेतुत्वेन कृशानुपुञ्जस्य च लङ्काप्रतिबिम्बतां।

मालारूपत्वं चात्रैकोपमेयकानेकोपमासामानाधिकरण्यात्।

समस्तवस्तुविषया सावयवा यथा—

'कमलति वदनं यस्यामलयन्त्यलका मृणालतो बाहू।
शैवालति रोमावलिरद्भुतसरसीव सा बाला॥'

यथा वा—

'ज्योत्स्नाभमञ्जुहसिता सकलकलाकान्तकान्तवदनश्रीः।
राकेव रम्यरूपा राघवरमणी विराजते नितराम्॥'

अत्र सर्वेषामुपमानानां शब्दैरेवाभिधानात् समस्तवस्तुविषया, अङ्गोपमाभिर्निष्पाद्यमानत्वाच्च साङ्गा भवति।

एकदेशविवर्तिनी सावयवा यथा—

---

तस्य च प्रयोजकं साधारणधर्ममाह—आत्यन्तिक विनाशहेतुत्वेन● चन्द्रकलाविनाशहेतुत्वस्य सूर्ये, सीताविनाशहेतुत्वस्य लङ्कायाम्, देदीप्यमानत्वञ्च स्फुटमेव। सीतायाः सुवर्णप्रतिमायाश्च निष्कलङ्कताभिव्यञ्जकत्वं कृशानुपुञ्जस्य। सीताया भस्मीभवनहेतुत्वस्य लङ्कायां सत्त्वादुभयोः समन्वयः।

मालोपमात्वं दर्शयति—एकोपमेयेत्यादि● अनेकोपमाननिरूपतैकोपमेयवृत्तिसादृश्यं मालोपऽमा।

कमलति● यस्या वदनं कमलमिव अलका अलय इव, बाहू मृणालाविव, रोमपङ्क्तिः शैवालमिव आचरन्ति सा बाला अद्भुतसरसी इवेत्यन्वयः।

सर्वत्रैवाचारार्थे क्विपा वाचकधर्मलुप्तत्वम्। चतुर्थपादोक्तोपमायाः प्रागुक्ताश्चतस्र उपमाः साधिकाः।

ज्योत्स्नाभ● ज्योत्स्नाभं मञ्जुहसितं यस्याः सा राका पौर्णमासीव राघवरमणी नितरां विराजते इत्यन्वयः।

पूर्वापेक्षया वाचकधर्मोपादानाभ्यां विशेषः।

अवयवावयविन्योरुपमयोः शब्दोपात्तत्वरूपं समस्तवस्तुविषयत्वं सङ्गमयति—अत्रेत्यादिना● सावयवत्वं सङ्गमयति—अङ्गोपमेत्यादिना●। साङ्गा● सावयवा।

'मकरप्रतिमैर्महाभटैः कविभी रत्नसमैः समन्वितः ।
कविताऽमृतकीर्तिचन्द्रयोस्त्वमिहोर्वीरमणासि कारणम् ॥'

अत्रोत्तरार्धे उपमित समास एव, विशेषणसमासवेद्यस्य तादात्म्यस्य प्रकृतेऽनुपयोगात् । राज्ञो जलधेरुपमा शब्देनानभिहिताऽप्यङ्गोपमाभिराक्षिप्ता प्रतीयते, इत्येकदेशविवर्तनादेकदेशविवर्तिनी ।

---

**मकर●** मकर सदृशैं वीरै:, रत्नसदृशैः कविभिश्चसमन्वितः हे उर्वीरमण त्वम् इह अमृतमिव कवितायाः. चन्द्र इव कीर्तेः कारणम् असि ।

पूर्वार्धे समासस्य स्फुटतया उत्तरार्धे कवितामृतयोः कीर्तिचन्द्रयोश्च मयूरव्यंसकादयश्च, उपमितं व्याघ्रादिभिः सामान्याप्रयोगे, इत्यनयोः कतरेण समास इति संदिग्धतया स्फोरयति **उपमितेत्यादिना●**

इदमत्रावधेयम्—उपमानोपमेययोः, कर्मधारयसमासाय साधारणतया तिस्रो गतयः । साधारणधर्मवाचकेन सह समासाय "उपमानानि सामान्यवचनैः" यथा घन इव श्यामो घनश्यामः । द्वितीया उपमानवाचकस्योपमानसदृशे लक्षणां कृत्वा तस्यैव पूर्वनिपातो 'विशेषणं विशेष्येण बहुलम्' इत्यनेन समासः । तत्र प्रायो रूपकमेव व्यवहरन्ति आलङ्कारिकाः । तत्रैव यदि उपमेयस्य पूर्वनिपातः, तदा 'मयूरव्यसकादयश्च' इत्यनेन समासात् तृतीया मयूरो व्यंसक इवेत्यादौ । अत्र सर्वत्र सादृश्यमहिम्ना उपमानोपमेययोस्तादात्म्यमारोप्यते । तत्र यदि उत्तरपदार्थान्वयिनि पूर्वपदार्थान्वयरूप उपयोगोऽपेक्ष्यते तदैषा । यदि पूर्वपदार्थान्वयस्य नोपयोगस्तदा 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यनेन समासाच्चतुर्थी गतिः । यथा पुरुषो व्याघ्र इव पुरुष व्याघ्र इत्यादौ । प्रकृते च उर्वीरमणकारणतायाम् अमृतचन्द्रयोरन्वयस्यायोग्यतया कविताकीर्त्योश्च योग्यतया पूर्वपदार्थान्वयस्यापेक्षिततया उपमितसमास इत्यभिप्रायः ।

अत्र लुप्तोपमाना राज्ञो जलधे- रुपमा निष्पाद्या निष्पादिकाश्च चतस्र उपात्ता उपमाः । तत्र निष्पाद्या शब्देन नोपात्ता किन्तु आक्षिप्ता । अत एकदेशभूता निष्पादिका उपमा एकदेशेन निष्पाद्योपमया विवर्तते परिणमतीति एकदेशविवर्तिनी इत्येवोक्तं **राज्ञोजलधेरित्यादिना●** । अत्र रमणोऽसीत्यपि पाठः । तत्र यदि समन्वितेति निर्विसर्गः पाठस्तदा त्वंशब्दमहिम्ना प्रतीयमानः सम्बोधनान्तः समीचीनः पाठः । सन्धिस्तु पुत्रेति तन्मथतयेत्यादि-

केवलश्लिष्टपरम्परिता यथा—

'नगरान्तर्महीन्द्रस्य महेन्द्र महितश्रियः ।
सुरालये खलु क्षीबा देवा इव विरेजिरे ॥'

अत्र श्लेषोपस्थापितेन सुमेरुणा मदिरागारस्योपमा क्षीबानां देवोपमाया उपाय इति श्लिष्टपरम्परिता, अन्योन्योपायतारूपस्यैव परम्परितत्वस्येह परिभाषणात् । मालारूपताविरहाच्च केवला ।

मालारूपश्लिष्टपरम्परिता यथा—

'महीभृतां खलु गणे रत्नसानुरिव स्थितः ।
त्वं काव्ये वसुधाधीश वृषपर्वेव राजसे ॥'

---

रीत्या समेषां प्लुतानां विकल्पतया मनोरमोक्तदिशा सम्भवत्येव । यदि तु समन्वित इत्यत्र सविसर्गः पाठस्तदा रमण इति पाठोऽपि सम्यक् ।

**नगरान्तरिति**● महेन्द्रस्येव प्रमिता महिता वा श्रीर्यस्य तस्य महीन्द्रस्य नगरस्य अन्तः सुरालये क्षीवा देवा इव विरेजिरे । क्षीवा मत्तास्तत्पक्षे सुरालयो मदिरागृहम् , देवपक्षे सुमेरुः । सुरालयशब्दस्य श्लिष्टतया श्लिष्टा ।

परम्परितत्वं सङ्गमयति—**अत्रेत्यादिना**●

ननु उपायोपेयभावः सावयवायामपीति कुतोऽस्याभेद इत्याशङ्क्याह **अन्योन्येत्यादि**● सुरालयवृत्तित्वमेव क्षीबदेवयोः साधर्म्यम् । क्षीबदेवयोश्चाभेदमन्तरा मदिरालयसुमेर्वोः सुरालयत्वं नायातीति परस्परोपायता । सावयवायां ज्योत्स्नाभेत्यादौ तु नैवं ज्योत्स्नाहसितयोरभेदमन्तराऽपि प्रसिद्धौज्ज्वल्यादिना राकासीतयोरुपमासिद्धेः । अत्र तु क्षीबदेवयोर्न तादृशं साधर्म्यं प्रसिद्धमितिभावः, मर्मप्रकाशतस्तु 'सावयवायां प्रतीयमानोऽपि न वस्तुत उपेयोपाय भावः । एकां विनाप्यन्यस्याः सम्पत्तेः । अत्र तु अन्यामृतेऽन्यस्या अनुपपत्तिरेवेति प्रकाशते ।

केवलत्वमाह **मालारूपता**● अन्योन्याश्रयोऽपि चमत्करोति ।

**महीभृताम्**● पर्वतानां गणे सुमेरुरिव राज्ञां गणे त्वं स्थितः । हे वसुधाऽधीश ! त्वं शुक्रे वृषपर्वा दैत्यराज इव काव्ये राजसे ।

अत्र श्लेषोपस्थिताभ्यां पर्वतशुक्राभ्यां राजकाव्ययोरुपमे मेरुवृषपर्वभ्यां राज्ञ उपमयोरुपायः।

नन्वत्र पर्वतानामिव राज्ञां शुक्र इव कवित्वे इत्येवंरूपा उपमा कथं प्रत्येतुं शक्या? उपमानोपमेयशब्दयोः पार्थक्याभावादिति चेत्, श्लेषे ह्येकशब्दोपात्तत्वेन रूपेणाभेदाध्यवसानस्येव तेनैव साधर्म्येण सादृश्याध्यवसानस्यापि सुवचत्वात्, तस्यैव च प्रकृते प्रयोज्योपमानुकूलत्वात्।

केवलशुद्धपरम्परिता यथा—

'राजा युधिष्ठिरो नाम्ना सर्वधर्मसमाश्रयः।
द्रुमाणामिव लोकानां मधुमास इवाभवत्॥'

मालारूपशुद्धपरम्परिता यथा—

'मृगतां हरयन्मध्ये वृक्षतां च पटीरयन्।
ऋक्षतां सर्वभूतानां त्वमिन्दवसि भूतले॥'

---

सङ्गमयति—अत्र● शब्दसाधर्म्येण पर्वता यदि राजानः, तदा तन्मध्यस्थिततया प्रकृतो राजा सुमेरुर्भवेत्। एवं काव्यं यदि शुक्राचार्यः स्यात्, तदा कवितायां प्रकृतो राजा वृषपर्वा भवेत्। पार्थक्याभावात्● पृथक्पदोपस्थितत्वाभावादित्यर्थः। भिन्नपदाभावादुपमानोपमेययोरभेद एव समुचितः, अतो भेदघटितसादृश्याभावात् कथमुपमेति शङ्काभिप्रायः। समानशब्दोपात्तत्वेनाभेद इव सादृश्यसम्पत्तौ बाधकाभावः। प्रकृते च सादृश्यमुपयुज्यते उपमाङ्गत्वात्, न त्वभेद इत्युत्तराभिप्रायः। उपमाद्वयस्य उपायत्वाद् मालापरम्परितत्वम्। महीभृत्काव्यशब्दयोश्श्लिष्टत्वाच्च श्लिष्टत्वम्।

राजा● सर्वेषां धर्माणामेकं स्थानम्। द्रुमाणां मधुमास इव लोकानामाह्लादकोऽभवत्। अत्र मालारूपत्वाभावात् केवलत्वं श्लेषाभावाच्छुद्धत्वमुपायोपेयघटितत्वाच्च परम्परितत्वम्। लोकद्रुमयोरुपमोपायः सुरभिमासयुधिष्ठिरोपमा चोपेयः।

मृगतामिति● मृगा इवाचरतां सर्वभूपानां मध्ये हरिरिवाचरन् वृक्षा इवाचरतां तेषां मध्ये पटीरयन् चन्दनद्रुरिवाचरन्, नक्षत्राणीवाचरतां तेषां मध्ये त्वं भूतले चन्द्रमा इवाचरसि। क्विपो लुप्तत्वाद् वाचकधर्मयोर्लोपः।

उपमानयोः परस्परमुपमेययोश्चानुकूल्ये उपमयोरेषोपायता निरूपिता ।

प्रातिकूल्ये उपायता यथा—

'राजा दुर्योधनो नाम्ना सर्वसत्त्वभयङ्करः ।
दीपानामिव साधूनां झञ्झावात इवाभवत् ॥'

अत्रोपमानयोर्दीपझञ्झावातयोरन्योन्यमुपमेययोश्च साधुदुर्योधनयोः प्रातिकूल्येऽप्युपमयोः परस्परमानुकूल्यादुपायतैव ।

एवम्—

'सरोजतामथ सतां शिशिरर्तवताधुना ।
दर्भतां सर्वधर्माणां राज्ञानेन विदर्भितम् ॥'

इत्यादौ मालारूपतायामपि ।

---

'हरयन् पटीरयन्' इत्यादौ सादृश्यवाचकस्य णिचः सत्त्वेऽपि सादृश्यमात्रवाचकत्वाभावाद् वाचकधर्मयोर्लुप्तता। प्रथमे कातरत्वस्य, द्वितीये स्थावरत्वस्य, तृतीये प्रकाशमानत्वस्य साधारण्यमुपायोपमाङ्गं गम्यमानम् । उपेयायान्तु प्रथमेन शौर्यं द्वितीयेन यशः सौरभम् तृतीयेन चोपमानेन प्रकाशमानत्वं गम्यम् । अत्र तिसृणामुपमानां माला । अर्थादेकोपमेयकर्त्रितयोपमानिका । हरिपटीरेन्दव उपमानानि । सर्वे भूपा यदा मृगा इव तदैव प्रकृतो राजा हरिरिति रीत्योपायोपेयभावः ।

अत्र सर्वभूपानामित्यस्य स्थाने सर्वभूतानामित्यपि पाठ उपलभ्यते । प्रकृतस्य राज्ञो वर्णनीयतया तत्सजातीयस्यैवोपादानं निर्धारणषष्ठीस्वारस्यमावहति ।

**राजेत्यादि●** सर्वसत्त्वभयंकरो नाम्ना दुर्योधनो राजा साधूनां कृते दीपानां कृते झञ्झावात इवाभवत् । साधूनामुपमानं दीपाः दुर्योधनस्य च झञ्झावातः । तयोः प्रातिकूल्यमेवमुपमेययोः साधुदुर्योधनयोश्च । दीपसाधूनामुपमामन्तरा झञ्झावातदुर्योधनयोरुपमाया असम्भवादुपायोपेयभावः । इति वृत्त्यर्थः । इयं केवलशुद्धपरम्परिता ।

**सरोजतामिति●** अथ अधुना सरोजाणीवाचरतां सतां कृते शिशिरऋतुरिवाचरता अनेन राज्ञा दर्भाणामिव धर्माणां कृते विदर्भ इवाचरितम् । चतुर्ष्वपि क्विप्प्रत्ययाः । द्वितीयः शत्रन्तः, चतुर्थो भावार्थक्तान्तः । सरोजशिशिरयोरिव सद्राज्ञोः, दर्भविदर्भदेशयोरिव सर्वधर्मनृपयोः प्रातिकूल्यम् । विदर्भदेशश्च विगतदर्भः ।

उपमेयानां स्वस्वोपमानानुपमानानामुपमानतायां रशनोपमा ।

यथा—

'वागिव मधुरा मूर्तिर्मूर्तिरिवात्यन्तनिर्मला कीर्तिः ।
कीर्तिरिव जगति सर्वस्तवनोया मतिरमुष्य विभोः ॥'

इयं धर्मभेदे ।

धर्मैक्ये तु—

'भूधरा इव मत्तेभा मत्तेभा इव सूनवः ।
सुता इव भटास्तस्य परमोन्नतविग्रहाः ॥'

धर्मलोपे तु तस्येत्यस्यानन्तरम् 'भटा इव युधि प्रजाः' इति बोध्यम् ।

इयमेवंभेदा प्राचीनैर्भेदैर्गुणने वागगोचरं भूमानं भजमाना नेयत्तामर्हतीति दिक् ।

एषैव च यदा सकलेन वाक्येन प्रधान्येन ध्वन्यते, तदा परिहृतालङ्कारभावा ध्वनिव्यपदेशहेतुः ।

अस्यां चालङ्कारव्यपदेशः कदाप्यलङ्कारभावमप्राप्तेषु मञ्जूषादिगतेषु कटकादिष्विवालङ्कुर्वाणगतधर्ममात्रसंस्पर्शनिबन्धनः ।

---

उपमेयेति● स्वस्योपमानानां नोपमानभूता य उपमेयास्तेषामुपमानतायां दशायां रशनोपमा, सादृश्यविशिष्टं सादृश्यमिति यावत् । वै स्वानुयोगिप्रतियोगिकत्वस्वप्रतियोगिभिन्नानुयोगिकत्वोभयसम्बन्धेन । यथा प्रथमोदाहरणे वाङ्मूर्तिसादृश्येऽनुयोगिन्या मूर्तेर्द्वितीयसादृश्ये प्रतियोगित्वम् । प्रथमसादृश्यप्रतियोगिभिन्नायाः कीर्तेर्द्वितीये सादृश्येऽनुयोगित्वम् । वागिव मूर्तिर्मूर्तिरिव वागित्यादिरीत्योपमेयोपमायां द्वितीयः सम्बन्धो नास्ति, प्रतियोगिन्या वाचोऽनुयोगित्वात् । सम्बन्धयोः स्थाने स्वप्रतियोग्यनुयोगिकत्वस्वानुयोगिभिन्नप्रतियोगिकत्वयोरपि निवेशनं सम्भवतीति न विस्मर्तव्यम् । प्रथमं स्पष्टं द्वितीयञ्च ।

वागगोचरं● अनन्तम्, भूमानम्● बहुत्वम्, इयत्ता● परिमाणम् । परिहृत● उपस्कारकत्वाभावात् । अलंकुर्वाण● कुत्रचिदलंकारभावमापन्ना

क्वचिदसौ शब्दशक्तिमूलानुध्वननविषयः। क्वचिदर्थशक्तिमूलानुध्वननविषयः।

आद्यो यथा—

'अविरलविगलद्दानोदकधारासारसिक्तधरणितलः।
धनदाग्रमहितमूर्तिर्जयतितरां सार्वभौमोऽयम् ॥'

यथा वा—

'विमलतरमतिगभीरं सुपवित्रं सतत्त्ववत्सुरसम्।
हंसावासस्थानं मानसमिह शोभते नितराम् ॥'

अत्रानेकार्थानामपि शब्दानां प्रकरणेन कृतेऽपि शक्तिसङ्कोचे तन्मूलकेन ध्वननेन प्रतीयमानस्य, सरोवररूपस्यार्थान्तरस्या-

---

या काचिदुपमा तस्या धर्म उपमात्वं तस्य स्पर्शस्तद्धर्मवत्त्वं तन्निबन्धनस्तत्प्रयोज्यः। **शब्दशक्ति●** शब्दानां शक्तिरनेकार्थप्रकाशकता तन्निबन्धनमनुरणनमर्थान्तरव्यञ्जनं तद्विषय उपमा। शब्दशक्तिमाहात्म्येन व्यङ्ग्या प्रथमा, अर्थसमाजवशाद् व्यङ्ग्या द्वितीयोपमा इति भावः।

**अविरल●** अविरलं विगलद् यद् दानोदकं सङ्कल्पजलं मदश्च तस्य या धारावद्धा वृष्टिस्तया सिक्तं धरणितलं येन सः, तथा धनदैर्धनदातृभिः सामन्तजनैः कुवेरेण च पूजिता मूर्तिर्यस्य सः, अयं सर्वभूमेरीश्वरः, प्रकृतो राजा सार्वभौमनामा उतरदिग्गजश्च अतिशयेन जयति सर्वोत्कर्षेण वर्तते। इत्यर्थः।

धारापदसार्थक्यम् इन्द्रः सहस्रनयन इत्यादौ प्रथमाननोक्तरीत्याऽवसेयम्। अत एव वाऽरुचेराह **यथा वेति●** मानसं मनः सरोवरञ्च। अतिशयेन विमलं रागादिकषायशून्यं रजस्तृणादिमलरहितञ्च, अतिशयेन गम्भीरं क्षुद्रतारहितमगाधञ्च, सुन्दरं पवित्र दैवीसम्पत्तिसम्पन्नं मुनिजनधार्मिकक्रियासम्पादकम्, सत्त्वं मत्स्यादिप्राणिबलञ्च यस्मिन् विद्यते, सुन्दरं शृङ्गारादिरसोजलञ्च यस्य तत् हंसानां पक्षिणां परमात्मनश्चावासं स्थानं मनः सरोवरञ्च इह नितरां शोभते, सत्त्वस्थाने तत्त्वशब्दोऽपि कुत्रचित् सम्पठ्यते।

**अनेकार्थानाम्●** पूर्वस्मिन् पद्ये दानोदकधनदसार्वभौमशब्दाः, उतरत्र च प्रायः सर्वे शब्दा अनेकार्थका उपमानोपमेयान्वय्यर्थकाः। परं प्रकरणस्य शक्तिसंकोचकतया प्रकृतार्थान्वयिन्येव विश्रान्तिस्तेषाम्,

प्रस्तुतस्याभिधानं मा भूदिति प्रकृताप्रकृतयोरुपमानोपमेयभावः प्रधानवाक्यार्थतया कल्प्यते ।

द्वितीयो यथा—

अद्वितीयं रुचात्मानं दृष्ट्वा किं चन्द्र दृप्यसि ।
भूमण्डलमिदं सर्वं केन वा परिशोधितम् ॥'

अत्र मूढादिपदाप्रयोगादसूयादेरप्रत्ययान्मुख्यतयोपमैव व्यङ्ग्या ।

---

तथापि व्यञ्जनावृत्त्याऽप्रकृतार्थस्य प्रतीतिः सम्भवत्येव । उपस्कारकत्वाभावं प्रदर्शयितुं प्रधानवाक्यार्थतयेति● ।

अर्थशक्तिमूलानुध्वननविषयामुपमामाह—अद्वितीयम्● हे चन्द्र रूचा आत्मानमद्वितीयं दृष्ट्वा किं दृप्यसि । इदं सर्वं भूमण्डलं केन परिशोधितमित्यन्वयः। अन्योऽपि कश्चित् सम्भवेत्, विस्तीर्णा पृथिवी जनश्च विविधः किं किं न सम्भाव्यते इति न्यायेन । तथा च नायिकाचन्द्रयोरुपमानोपमेयभावो व्यज्यते ।

अत्र मर्मप्रकाशः मूढादिपदाप्रयोगेऽपि किं चन्द्र दृप्यति इत्याक्षेपेणासूया व्यङ्ग्या न वेति सहृदयैर्विभावनीयमित्याक्षिपति । विभावना तु गुरोश्छात्रेष्वप्याक्षेपस्य दर्शनान्नाक्षेपमात्रेण गुणेषु दोषारोपणरूपाया असूयायाः सम्भवः, किन्तु शात्रवे सति । शात्रवञ्च क्लेशयत्नु । अतो यदि चन्द्रविभावेन कामाक्रान्तस्य वचनम्, तदा सत्यमाक्षेपेणासूयाया व्यञ्जनम् । यदि तु स्वनायिकायाः सौन्दर्यातिशयं भावयतश्चन्द्रं दृष्ट्वोक्तिः, तदा नासूयाया अवसरः । मूढादिपदाप्रयोगेण शात्रवाभावोऽभिप्रेयते इति । पदार्थान्तरेति● नव्य नैयायिकरीत्येदम् । इदं हि तेषां मतम् । अधिकरणप्रतियोगित्वादीनामिव सादृश्यमपि अखण्डोपाधिः पदार्थान्तरम् । तत्त्वज्ञानोपयोगिनामेव वर्णनान्नार्षिवचनानां विरोधः । अथवा समानानां भावः सामान्यं पदार्थो द्विविधो जातिरखण्डोपाधिश्च । तद्भिन्नत्वे सति तद्गतभूयोधर्मत्त्वस्य सादृश्यत्वे भेदस्यावधिनिरूपितत्वेन चन्द्रात् सदृश इति व्यवहारापत्तेः । धर्माणामाश्रयभेदाद् भेदेनोत्कर्षापकर्षभावाभावप्रसङ्गश्च । सादृश्यञ्च प्रत्याश्रयं नाना । नागोजिभट्टास्तु मञ्जूषायां सदृशपदशक्यतावच्छेदकतया संस्कारोद्बोधजनकतावच्छेदकतया च सादृश्यं धर्मान्तरम् । भेदघटितत्वेन नञिवयुक्तमन्य-

अथात्र सादृश्यस्य पदार्थान्तरत्वे बोधो विचार्यते—

सदृशाधिकरणेत्यादिभाष्येऽन्यपदं व्यर्थं स्यात् इति ब्रुवते। प्रसिद्धञ्च मीमांसकानां सादृश्यमतिरिक्तमिति। बोधः● शाब्दबोधप्रकार इत्यर्थः। शाब्दबोधश्च परोक्षानुभवविशेषः शाब्दयामीत्यनुव्यवसायसिद्धजातिविशिष्टो बोधः। पृथगुपस्थितानां वाक्यान्तर्गतप्रकृतिप्रत्ययपदार्थानां परस्परसंसृष्टतया ज्ञानस्य केनचिच्छब्देन अभिलापे ग्रन्थेषु शाब्दबोध इति व्यवह्रियते। शाब्दशब्दजशाब्दबोधवाक्यार्थबोधान्वयबोधादिशब्दाः समानार्थकाः। स्फोटनिरूपणे मञ्जूषायां नरकं श्रृणोमि इति प्रत्ययाद् नरकमनुभवामीत्यप्रत्ययात् शाब्दज्ञानं नानुभव इति व्यवस्थापितम्। शाब्दबोधे कारणानि प्रथमं शक्तिलक्षणान्यतररूपाया पदानाम् इदं पदमेतदर्थबोधकमित्याद्याकारकवृत्तेर्ज्ञानं तस्मात्तज्जन्यसंस्काराद्वोद्बुद्धाद्रुपस्थितिनामकं तत्तत्पदार्थस्मरणम्। आसत्तिनाम्ना कारणेन शाब्दबोधजनने शीघ्रता सम्पाद्यते। आकाङ्क्षया चास्य पदस्यार्थस्यामुकपदार्थेनाय सम्बन्धः सम्भवतीति निर्णीयते। योग्यतया च पदार्थानां परस्परान्वयासम्भवो निवार्यते। तात्पर्येण तु अनेकार्थकानि पदानि प्रकृतार्थे पर्यवस्यन्ति। उपस्थितिश्च स्मरणरूपा अन्यत्र प्रसिद्धा प्रायोऽत्रापि सैव समादृताः। नागोजिमहोदयाश्च प्रत्येकपदार्थज्ञानमपि खण्डशाब्दबोध एव, न तु स्मरणम्। वृत्तिविषयक उद्बुद्धसंस्कार एव शाब्दबोधकारणम्, न तु वृत्तिज्ञानजन्योपस्थितिरिति व्यवस्थापयन्ति। यथा नीलो घट इत्यत्र शाब्दबोधप्रकारः।

अत्र मतद्वयम्—नीलपदोत्तरं सुविभक्तेर्न कश्चिदर्थः। निपातातिरिक्तनामार्थयोरभेदान्वयः अतो नीलस्य घटेऽभेदसम्बन्धेनान्वयः।

नीलो विशेषणमभेदः संसर्गः, घटो विशेष्यः, तत्र समुच्चितं संक्षिप्तञ्च शाब्दबोधस्वरूपम्। अभेदसम्बन्धेन नीलवान् घटः, अभेदसम्बन्धेन नीलविशिष्टो घट इत्यादि। अत्र विषये बहवो नीलाभिन्नो घट इति व्यवहरन्ति, मयाऽपि तदनुरोधेन व्यवहरिष्यते, परं न तत्समीचीनम्. तस्याभेदप्रकारकशाब्दबोधाकारत्वात्। प्रकारविशेषणे समानार्थे, संसर्गसम्बन्धौ च। शाब्दबोधस्य क्रमशो विस्तृतस्वरूपाणि, यथा—१. अभेदसम्बन्धावच्छिन्ननीलनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यताकः। २. अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकः। ३. नीलत्वावच्छिन्नप्रकारतानिरूपिता याऽभेदनिष्ठा संसर्गता तन्निरूपिता घटत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताकः। ४. नीलत्वनिष्ठा या अवच्छेदकता तन्निरूपिता याऽ-

अरविन्दसुन्दरमित्यत्रारविन्दनिरूपितसादृश्यप्रयोजकं लक्ष्यते। तच्च सुन्दरपदार्थैकदेशेन सौन्दर्येणाभेदसंसर्गेणान्वेति।

---

भेदसम्बन्धावच्छिन्ना नीलनिष्ठा प्रकारता तन्निरूपिता घटत्वनिष्ठावच्छेदकता-निरूपिता विशेष्यता तादृशविशेष्यताकः। इत्यादिबहुविधानि। क्रमशो व्याख्यानम्। नीलः प्रकारस्तत्र प्रकारता घटे विशेष्ये विशेष्यता तयोर्नित्य-सापेक्षतया मध्ये निरूपितत्वं सम्बन्धः। अभेदादिसम्बन्धश्च प्रकारतावच्छेदकः, अतस्तत्सम्बन्धावच्छिन्ना प्रकारतोच्यते। विशेष्यतावच्छेदकः सम्बन्धो न भवति। तादृशविशेष्यता यस्य बोधस्येति समासः। साधारणतस्तिस्रो विषयताः प्रकारता, विशेष्यता, संसर्गता च। ज्ञाननिरूपिता विषयता विषयता-निरूपकञ्च ज्ञानमिति व्यवह्रियते, अतो विशेष्यताकेत्यस्य स्थाने विशेष्यतानिरूपकः शाब्दबोध इत्याद्यपि व्यवहारः। २ नीलनिष्ठप्रकारताया अवच्छेदकं नीलत्वं तदवच्छिन्ना प्रकारता। घटनिष्ठविशेष्यतावच्छेदकं घटत्वं विशेष्यता घटत्वा-वच्छिन्ना। अन्यत्पूर्ववत्। ३ अभेदे संसर्गे संसर्गता प्रकारतया विशेष्यतया च निरूपिता भवति। अतोऽभेदसम्बन्धावच्छिन्नेत्यपहाय नीलनिष्ठप्रकारता निरूपिताऽभेदनिष्ठसंसर्गतेत्यपि व्यवहारः। ४ यथा नीलत्वावच्छिन्नेत्युच्यते तत्र नीलत्वेऽवच्छेदकेऽवच्छेदकता वर्तते तया निरूपिता प्रकारता भवति। एवं विशेष्यतायामपि बोध्यम्। इति प्रथममतम्।

द्वितीयन्तु नीलोत्तरविभक्तेरभेदोऽर्थः स च घटे स्वरूपेणान्वितोऽत्र नीलाभेदवान् इत्यादिरीत्या शाब्दबोधाकारः। एवं राज्ञः पुरुष इत्यादौ भेद-सम्बन्धस्थले पुरुषे स्वत्वसम्बन्धेन राजा प्रकारोऽतो राजनिरूपितस्वत्ववान् पुरुषइत्यादिरीत्या शाब्दप्रकार उह्यताम्। विस्तरभिया न विस्तार्यते।

कुत्रचिद् धर्मितापदमायाति। धर्मिता च विशेष्यताविशेषः। केनचिद् धर्मेण विशिष्टे धर्मिणि विद्यमाना विशेष्यता धर्मिता सावच्छिन्नेति यावत्। यथा नीलो घट इत्यत्र नीलनिष्ठप्रकारतानिरूपिता विशेष्यता घटत्वविशिष्टे वर्ततेऽतः सा धर्मिता। घटे घटत्वनिष्ठप्रकारता निरूपिता च विशेष्यता शुद्धेऽतः सा विशेष्यता न धर्मितेत्यादि न विस्मरणीयमिति कृतं पल्लवनेन।

प्रयोजक● सादृश्यस्यातिरिक्तपदार्थत्वं नाम साधारणधर्मभिन्नत्वम्। अरविन्दसुन्दरं मुखमित्यादौ मुखचन्द्रयोः सादृश्यस्य सौन्दर्यप्रयुक्ततया सौन्दर्यं सादृश्यप्रयोजकमुक्तम्। साधारणरूपे सादृश्ये तु सौन्दर्येण सह सादृश्यस्या-भेदः, सुन्दरन्तु मुखं सदृशं न तत्सादृश्यप्रयोजकम्। सुन्दरशब्दस्यार्थः सौन्दय-

**तेनारविन्दनिरूपितसादृश्यप्रयोजकाभिन्नसौन्दर्यवदभिन्नमिति धीः। निपातातिरिक्तनामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वादभेदानुसरणम्।**

---

वान्। तदेकदेशः तत्पदजन्योपस्थितिप्रकारस्तत्पदस्य अर्थस्यैकदेशः। सुन्दरपदेन सौन्दर्यवत उपस्थानाद् प्रकारीभूतं सौन्दर्यं पदार्थैकदेशः। अरविन्दसुन्दरमित्यत्र अरविन्दमिव सुन्दरमिति विग्रहे 'उपमानानि सामान्यवचनैः' इत्यनेन समासात् सादृश्यमपि तस्यार्थः। सादृश्येन सौन्दर्यस्य च प्रयोज्यप्रयोजकभावरूपो भेदसम्बन्धो न सम्भवतीति निपातातातिरिक्तेत्यादिना वक्ष्यति ग्रन्थकारः। अतोऽरविन्दपदस्य लक्षणा उक्ता। तेन अरविन्द● मुखेऽभेदसम्बन्धेन सौन्दर्यवान् विशेषणम्। सौन्दर्यवति सौन्दर्यम्। सौन्दर्येऽभेदसम्बन्धेन प्रयोजकान्तम्। सादृश्ये च निरूपितत्वसम्बन्धेन अरविन्दं विशेषणम्। द्वयोरभेदयोरेव संसर्गताया भानम्। अन्यसम्बन्धानां शब्दार्थतया प्रकारत्वेन भानमिति विशेषः। यद्यपि व्युत्पत्तिवादादौ शब्दार्थस्यापि संसर्गतया भानं समर्थितम्, तथापि शब्दार्थस्य न संसर्गतेत्येव प्रसिद्धिरधिका। अत्रापि ग्रन्थे सैव प्रसिद्धिरनुसन्धेया। अरविन्दनिरूपितसादृश्यमित्यस्य निरूपितत्वसम्बन्धेन प्रतियोगिता सम्बन्धेन वा अरविन्दविशिष्टसादृश्यमर्थोऽनुसन्धेयः। तथा च अरविन्दनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नप्रकारतानिरूपिता सादृश्यनिष्ठा विशेष्यता तत्समानाधिकरणनिरूपितत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितप्रयोजकत्वनिष्ठा विशेष्यता तत्समानाधिकरणस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपितप्रयोजकनिष्ठाविशेष्यता तत्समानाधिकरणाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितसौन्दर्यनिष्ठा विशेष्यता तत्समानधिकरणस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपितसुन्दरनिष्ठा विशेष्यता तत्समानाधिकरणाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितमुखनिष्ठविशेष्यताकः शाब्दबोधः। अत्र शाब्दबोधे सौन्दर्यवति सौन्दर्यस्य स्वरूपसम्बन्धेन प्रयोजके प्रयोजकत्वस्य च स्वरूपसम्बन्धेन विशेषणता वर्णिता। प्रयोजकत्वे सादृश्यस्य निरूपितत्वसम्बन्धेन विशेषणता। एकत्र वस्तुनि प्रकारता विशेष्यता च भवति। तत्र तयोः समानाधिकरण्यव्यवहार इति जगदीशतर्कालङ्कारस्य मतम्। तदनुसारेणेदं वर्णितम्। गदाधरभट्टाचार्याणां मते तु सामानाधिकरणविषयतयोरभेदाद् विशेष्यताऽभिन्नप्रकारतेत्यादि निवेशनीयम्।

**निपातातिरिक्तेति●** नामपदेन प्रातिपदिकस्य ग्रहणम्। निपातोऽपि प्रातिपदिकम्। नामार्थस्य नामार्थेन सह अभेद एव सम्बन्धो भवति।

**एकदेशान्वयस्तु देवदत्तस्य नप्तेत्यादाविवात्राप्यभ्युपेयः ।**

---

यदि निपातार्थस्तदा तेन भेदोऽपि सम्बन्धो भवतीत्यर्थः । राजा पुरुष इति वाक्ये कारणकूटसत्त्वेऽपि पुरुषे राज्ञः स्वस्वामिभावः सम्बन्धो न भवति किन्त्वभेद एवेत्यस्य नियमस्य फलम् । अस्य नियमस्याङ्गीकारे राजपुरुष इत्यादिसमस्तस्थलेऽपि विभक्तिस्मरणं विनाऽपि शाब्दबोधानुभवात् स्वस्वामिभावादिसम्बन्धस्यापि अनेन नियमेन वारणाद् राजपदस्य राजसम्बन्धिनि लक्षणामुररीकृत्य पुरुषेऽभेदान्वयं नैयायिका वर्णयन्ति। वैयाकरणास्तु समुदायस्यैव स्वत्वसम्बन्धेन राजविशिष्टपुरुषे शक्तिर्नान्वयस्य चर्चेति ब्रुवते । पटो न घट इत्यत्र घटप्रतियोगिकभेदवानिति शाब्दबोधः। नञर्थे भेदे घटस्य प्रतियोगित्वसम्बन्धेनान्वयाद् भेदस्य च पटेऽनुयोगित्व सम्बन्धेनान्वयात्, प्रतियोगित्वानुयोगितयोश्च भेदसम्बन्धाद् नियमे निपातातिरिक्तेति विशेषणम् । अस्य नियमस्य भावार्थस्तु प्रातिपदिकार्थो भेद सम्बन्धेन निपातार्थे विभक्त्यर्थे वा विशेषणं भवति, न तु प्रातिपदिकार्थे । राज्ञः पुरुष इत्यत्रापि राजपदार्थो विभक्त्यर्थे स्वत्वे विशेषणम्, न तु पुरुष इति ध्येयम् । तदनुसारी कार्यकारणभावश्च अभेदसम्बन्धातिरिक्तसम्बन्धावच्छिन्ननामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति निपातप्रत्ययान्यतरजन्योपस्थितिः कारणम्। शाब्दबोधः कार्यम्. उपस्थितिः कारणम् । द्वयोः केनापि सम्बन्धेनैकाधिकरण्यं सम्पादनीयम् । शाब्दबोधश्चोक्तविशेष्यतासम्बन्धेन विशेष्ये वर्तते। उपस्थितिरपि विशेष्यतासम्बन्धेन विशेष्ये वर्तते। राज्ञ इत्यस्य राजनिरूपितं स्वत्वमर्थः। अर्थात् स्वत्वे निरूपितत्वसम्बन्धेन राजा विशेषणम् । तथा च निरूपितत्वसम्बन्धावच्छिन्नराजनिष्ठप्रकारतानिरूपितस्वत्वनिष्ठविशेष्यतासम्बन्धेन शाब्दबोधः स्वत्वे वर्तते, तत्रोपस्थितिरपि विशेष्यतासम्बन्धेन विभक्तिजन्या वर्तते। एवं घटोनेत्यत्र घटः प्रतियोगित्वसम्बन्धेन भेदे विशेषणमिति तत्रापि समन्वयः कार्यः।

**एकदेशान्वयस्तु**● पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेनेति न्यायः। तत्पदेनोपस्थितौ यो विशेष्यः स पदार्थः उपस्थितौ प्रकारः पदार्थैकदेशः। घटपदस्य घटत्वविशिष्टोऽर्थः। विशेष्योऽनित्यो घटत्वं नित्यम् । तत्र घटत्वेऽन्वयतात्पर्येण नित्यो घट इति प्रयोगवारणायाऽयं न्यायः। न्यायेन च पदार्थैकदेशे घटत्वे नित्यत्वान्वयो वार्यते घटेऽनित्ये च नित्यत्वान्वयोऽयोग्यतया न जायत इति तादृशप्रयोगो न भवति । अस्य निर्दोषः कार्यकारणभावस्तु शक्तिवाद-

**'समासस्यैव विशिष्टार्थे शक्तिः' इत्येके ।**

---

व्युत्पत्तिवादटीकादिषु वर्तमानो विस्तरभिया न वर्ण्यते । साधारणस्तु अन्य-पदार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति विशेष्यता-सम्बन्धेनोपस्थितिः कारणमिति । यथा नित्यार्थनिष्ठप्रकारतानिरूपितविशे-ष्यतासम्बन्धेन शाब्दबोधो घटत्वे सम्पादनीयः । तत्र विशेष्यतासम्बन्धेनोप-स्थितिर्नास्तीति तस्य प्रयोगस्य वारणम् । प्रकृते च अरविन्दनिरूपितसादृश्य-प्रयोजकस्य सुन्दरपदार्थैकदेशे सौन्दर्येऽन्वयः सम्पाद्यते । स चोक्तन्यायेन प्रयोज-कान्तनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन सौन्दर्ये विशेष्यतासम्बन्धेनो-पस्थितेरभावाद् वार्यते । **देवदत्तस्य नप्तेति** नप्ता पुरुषः स्वपितुर्न तु पितामहस्य किन्तु नप्तृनिष्ठं नप्तृत्वं देवदत्तनिरूपितम् । अतस्तत्रैकदेशे नप्तृत्वे यथा देवदत्तनिरूपितत्वस्यान्वयस्तथा सुन्दरपदार्थैकदेशे सौन्दर्ये प्रयोजकान्त-स्यान्वय इति भावः । नित्यसापेक्षे एकदेशेऽपि पदार्थान्तरान्वयो भवति । नप्तृत्वं नित्यसापेक्षम् । नप्तेत्युक्तौ कस्येति नियमेनाकाङ्क्षा जायतेऽतो नित्य-सापेक्षम् । पूर्वोक्तकार्यकारणभावे कार्यतावच्छेदकसम्बन्धघटकविशेष्यतायां नित्यसापेक्षावृत्तित्वं देयमिति भावः । नित्यसापेक्षत्वञ्च व्युत्पत्तिवादगूढार्थतत्त्वा-लोके स्वान्वयिनोऽर्थस्य या जिज्ञासारूपा आकाङ्क्षा तन्नियता प्रतिबन्धकाभावे सति यस्य प्रतिपत्तिः तत्त्वम् । वस्तुतो नेदं ग्रन्थकृतामभिप्रेतं प्रतिभाति । नप्तृत्वस्य नित्यसापेक्षत्वेऽपि सौन्दर्यस्यातथात्वात् ।

अत एव शाब्दिकतार्किकोभयमतेन 'एके' 'अन्ये' विशिष्टार्थत्वमित्यपि वदन्ति । गूढार्थतत्त्वालोके समासशक्तिखण्डनावसरे व्युत्पत्तिवैचित्र्यादेवैकदेशान्वयः समर्थितः । नियतैकदेशान्वयविषयकशाब्दबोधप्रयोजकतात्पर्यानुपपत्तिसहकृत-तादृशपदसमभिव्याहारज्ञानमेकदेशान्वयप्रयोजकमिति तस्यार्थः । वयन्तु नित्यसापेक्षे समासानुशासकवार्त्तिकं नियतसापेक्षे एकदेशान्वयतात्पर्यग्राहकमिति प्रतीमः । एकदेशान्वयानुपपत्त्याह **समास्यैव** उक्तञ्च भूषणे 'समासे खलु भिन्नैव शक्तिः पङ्कजलक्षणा' इत्यादिना, अयं भावः— यथा पङ्कजशब्दस्य पङ्कोत्पत्ति-कर्तृशक्त्यैव प्रयोगे शैवालेऽपि स्वारसिकः प्रयोगः प्रसज्येतातः पद्मत्वेन पद्मेऽपि रूढिशक्तिः स्वीक्रियते, तथा राजपुरुषपदयोः शक्तिज्ञानं च समुदायशक्ति-ज्ञाने कारणम् । अत एव चित्रगुशब्दात् चित्राभिन्नगोस्वामिनो बोधः । अन्यथा चित्रागोपदाभ्यां स्वामिनो बोधो न स्यात् । यत्तु राजपुरुषपदयोर्न कश्चिदर्थः, किन्तु समुदायस्यैवेति व्याख्यानं तत्तु अपव्याख्यानम्, पङ्कजपदोपमानानुपपत्तेः । प्रतिपादितञ्चैतद् दर्पणादिटीकायाम् । न च लक्षणया निर्वाहः, ग्रन्थोक्तरीत्या

**'अरविन्दपदमेव लक्षणया सर्वार्थबोधकम्, सुन्दरपदं तु तात्पर्यग्रहकम्' इत्यपरे ।**

---

लक्षणास्वीकारे सौन्दर्यरूपैकदेशान्वयापत्तिः । सुन्दरपदस्यैव लक्षणया सर्वार्थबोधकत्वेऽरविन्दपदस्य वैयर्थ्यापत्तिः । तात्पर्यग्राहकत्ववर्णनेऽपि निरूप्यनिरूपकभावापन्नविषयताप्रयोजकत्वाभावेन व्यपेक्षारूपसामर्थ्याभाव इति व्याकरणमतदिग्दर्शनम् , त न समीचीनम् ; परस्परान्वितराजपुरुषपदार्थाभ्यामन्यस्यार्थस्याननुभवात् क्लृप्तान्तरशक्तिकल्सनायां मानाभावाद् गौरवाच्च । पङ्कजशब्दे त्ववयवार्थे शैवाले स्वारसिकप्रयोगाभावात् पद्मत्वेन पद्मबोधानुभवाच्च रूढिशक्तिकल्पना । अत्र तु अरविन्दपदमेव लक्षणया अरविन्दनिरूपितसादृश्यप्रयोजकसौन्दर्यवद् बोधकम् । सुन्दरपदं तात्पर्यग्राहकम् । नापि व्यपेक्षाभावः, सुन्दरपदेन तादृशार्थबोधने अरविन्दपदसमभिव्याहारज्ञानकारणताया एव व्यपेक्षाप्रयोजकत्वात् । विस्तरस्तु व्युत्पत्तिवादगूढार्थतत्त्वालोकेऽवालोकेलिममिति न प्रतन्यते । तदेवाह **अरविन्दपदम्** ● अत्र वैयाकरणसिद्धान्तलघुमञ्जूषाकृतस्तदनुयायिनो वामनादय आलङ्कारिकाश्चैवं शाब्दबोधमभीप्सन्ति । उपमानानीत्यादिसूत्रेण समासादुपमानत्वस्य, शस्त्रीश्यामेत्यत्रासामानाधिकरण्याशङ्काया 'तस्यामेवोभयं वर्तते' उपमेयायां देवदत्तायामेव शस्त्रीश्यामा शब्दौ वर्तेते इत्यर्थक द् भाष्यादुपमानोपमेययोरभेदस्य, एवं बहूनामेव सामान्यं सामान्यं भवतीत्याशङ्क्य 'श्यामत्वस्योभयत्र शस्त्र्यां देवदत्तायाञ्च भावाद्' इति भाष्याद् युगपदुभयत्र साधारणधर्मस्य, च भानावश्यकत्वाद् उपमानसुन्दरारविन्दाभिन्नं मुखमिति शाब्दबोधः समुचितः । किञ्चाभेदान्वयमन्तरा सामानाधिकरण्याभावात् समासोऽप्यनुपपन्नः । एवञ्च महाभाष्याद्यपरिशीलनं पण्डितराजस्यापततीति चेदेवं सुधियो विवेचयन्तु । उपमानवाचकेन सह समासविधानाच्चेदुपमानस्य भानं शाब्देऽपेक्षितञ्चेत् तस्य कस्येति शब्दैर्जायमाने शाब्दबोधे अनुभवविरुद्धं सर्वादित्वसर्वनामत्वादिभानं कथन्नाङ्गीक्रियते । अत उपमानत्वेनोपमानस्य भानं सर्वादित्वादिभानमिव न सूत्राभिप्रेतम् । सौन्दर्ये उभयगतत्वमन्तरा सादृश्यप्रयोजकत्वासम्भवेन सादृश्यप्रयोजकत्वकथनादेवोभयवृत्तित्वमायाति, न तु द्विधा युगपद्भानमनुभवविरुद्धं कल्पनीयम् । भाष्यमपि सामान्यवचनत्वायोभयगतत्वमेव ब्रूते, न तु द्विधाभानम् । सामानाधिकरण्यायाभेदश्चेदपेक्षितो ग्रन्थकृता लक्ष्येण सादृश्यप्रयोजकेन सौन्दर्यस्याभिहित एव । एकदेशेन कृत इति चेत् 'श्यामत्वस्योभयत्र' इत्यादिभाष्यात् सौन्दर्यस्यैवोभयत्र प्रतीते-

तथा अरविन्दमिव सुन्दरमित्यत्रेवार्थे सादृश्येऽरविन्दस्य निरूपितत्वसंसर्गेणान्वयः। तस्य च प्रयोजकतासंसर्गेण सौन्दर्ये। एवं चारविन्दनिरूपितसादृश्यप्रयोजकसौन्दर्यवदभिन्नमिति। अरविन्दमिवेत्यत्र त्वरविन्दनिरूपितसादृश्यवदिति।

---

रिष्टतया एकदेशान्वयस्य भाष्यसम्मतत्वात्। न च 'तस्यामेवोभयं वर्तते' इति भाष्यादुपमानाभेद उपमेये समीहित इति वाच्यम्, विकल्पासहत्वात्। लक्षणया अभिधया वा ?। नाद्यः स्वार्थाभिन्नसौन्दर्यद्वारा मुखवृत्तित्वस्य ग्रन्थकारमतेऽपि सुसम्पन्नत्वात्। न द्वितीयोऽरविन्दमुखयोरभेदबोधस्याहार्यत्वप्रसङ्गात्। अनारोपितार्थबोधसम्भवे आरोपितार्थबोधस्यानुचितत्वात्। लाक्षणिकार्थबोधमन्तरा शस्त्रीशब्दः कथं देवदत्ताया वर्तेत। अभेदान्वयस्थलेऽपि घटो नील इत्यादौ नील शब्दो नीले वर्तते इत्येव व्यवह्रियते, न तु घटे इति। किञ्च सामान्यवचनैः सह समासं ब्रुवत् सूत्रं सामान्यवता तदभिन्नेन वाऽन्वयं कथं प्रतिपादयेत्?। तस्यामेवेत्यादिभाष्यस्य शङ्काभाष्यन्तु शस्त्रीशब्दः शस्त्र्यामेव, श्यामाशब्दो देवदत्तायामेवेति सामानाधिकरण्यानुपपत्तिः? तस्य तात्पर्यन्तु शस्त्रीशब्दाभिधेयस्य लक्षणां विना श्यामेन सहान्वयासम्भव इति। तस्यामेवेत्यादिभाष्यस्य तदनुसारि तात्पर्यमिदम्। शस्त्रीशब्दोऽपि देवदत्तावृत्तिश्यामत्वान्वय्येव। विग्रहोऽपि सर्वानुभवसिद्धः 'अरविन्दमिव सुन्दमित्येव सुन्दरः। तत्रापीवार्थसादृश्ये तथैवान्वयानुभवात्। न च तत्राभेदान्वयो न भवति निपातघटितत्वादिति वाच्यम्, विग्रहविग्रह्यमाणयोः समुदायाभिधेयस्यैव समानत्वनियमः, नत्ववयवाभिधेयस्य, प्राप्तमुदकं यमिति विग्रहस्य यत्कर्मकप्राप्तिकर्तृ उदकमिति बोधः, प्राप्तोदकमित्यस्य उदककर्तृकप्राप्तिकर्मेति बोधो वैयाकरणैरङ्गीकृतत्वात्। सम्पूर्णभाष्यसन्दर्भव्याख्यानन्तु विस्तरभिया परित्यज्यते। तस्मात् पण्डितराजव्याख्यानं भाष्यानुसारीति ध्येयम्।

पूर्वोक्तस्य व्यासवाक्यमाह तथा **अरविन्दमिव** ● निपातानां वाचकतानये इवार्थः सादृश्यं तस्मिन् अरविन्दपदार्थस्य निरूपितत्वसम्बन्धेनान्वयः। सुन्दरपदार्थैकदेशे सौन्दर्ये सादृश्यस्य प्रयोजकतासम्बन्धेनान्वयः, सौन्दर्यवतः सुन्दरपदार्थस्य मुखे अभेदसम्बन्धेनान्वयः।

पर्यवसितमाह—**एवञ्च** ● इदन्त्ववधेयम्, समासे पूर्वोक्ते निरूपितत्वप्रयोजकत्वे प्रकारौ व्यासस्थले च संसर्गौ। निरूपितत्वसम्बन्धावच्छिन्नारविन्दनिष्ठप्रकारतानिरूपितासादृश्यनिष्ठा विशेष्यता तत्समानाधिकरणा प्रयोजकत्वसम्बन्धावच्छिन्ना

निपातजन्योपस्थितिप्रयोज्यप्रकारतानिरूपितविशेष्यता निपातजन्योपस्थितिप्रयोज्यविशेष्यतान्यतरभिन्नविशेष्यतासंसर्गेण नामार्थप्रकारकबोध एव विशेष्यतया विभक्तिजन्योपस्थितेर्हेतुत्वादिवार्थस्य नञर्थस्येव भेदसंसर्गेण नामार्थविशेष्यत्वे विशेषणत्वे च न दोषः ।

---

या प्रकारता तन्निरूपिता सौन्दर्यनिष्ठा विशेष्यता तत्समानाधिकरणा स्वरूपसम्बन्धावच्छिन्ना या प्रकारता तन्निरूपिता सुन्दरनिष्ठा विशेष्यता तत्समानाधिकरणा अभेदसम्बन्धावच्छिन्ना प्रकारता तन्निरूपिता मुखनिष्ठविशेष्यताको बोधः । अनयैव दिशाऽरविन्दमिवेत्यत्रापि बोध्यम् ।

निपातेति● एतादृशे मदनमोहनपण्डितो मुह्यतीति सुधीभिरवधेयम् ।

एषोऽत्राभिसन्धिः—चैत्रेण पच्यते इति प्रयोगो भवति । तत्र चैत्रः कर्तृत्वे विशेषणं कर्तृत्वं धात्वर्थपाके विशेषणम् । तथैव चैत्रः पच्यत इति प्रयोगः कथन्न भवति ? तृतीयाया अभावेऽपि कतृत्वसंसर्गेण चैत्रस्य साक्षाद् धात्वर्थपाकेऽन्वयसम्भवात् । संसर्गस्य केनचिच्छब्देनोपस्थितिर्नापेक्षिता भवति । अतस्तस्य प्रयोगस्य वारणाय प्रातिपादिकार्थो विभक्त्यर्थ एव विशेषणमिति नियमोऽङ्गीक्रियते । अतश्चैत्रस्य धात्वर्थे साक्षाद्विशेषणत्वाभावाच्चैत्रः पच्यते इति प्रयोगो न भवति । तस्यैव नियमस्य शब्दान्तरं प्रातिपदिकार्थापेक्षया विभक्त्यर्थो विभक्तिजन्योपस्थितिविषय एव विशेष्यं भवति । तत एव नामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति विशेष्यतासम्बन्धेन विभक्तिजन्योपस्थितिर्हेतुरिति कार्यकारणभावः फलति । भवति चास्य नियमानुकूलकार्यकारणभावस्य प्रक्तनशाब्दबोधे व्यभिचारः । तथाहि अरविन्दनामार्थ इवार्थसादृश्ये विशेषणीकृतः । एवं सादृश्यमपि नामार्थः सौन्दर्ये विशेषणीकृतः । सादृश्यं सौन्दर्यञ्च न विभक्त्योपस्थितम् । तथा च नामार्थारविन्दनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधः सादृश्ये जायते । सादृश्ये च विशेष्यता सम्बन्धेन विभक्तिजन्योपस्थितिर्नास्ति । एवं नामार्थसादृश्यनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधकार्यं सौन्दर्ये जायते । तत्रापि विभक्तिजन्योपस्थितिर्नास्तीति कारणाभावेऽपि कार्यसत्तारूपव्यतिरेकव्यभिचार आपतति, तद्वारणाय सङ्कुचितकार्यकारणभावोऽनेन ग्रन्थेन प्रदर्श्यते । तस्याप्ययं सरलार्थः । यथा उक्तप्रयोगमनुसृत्य कार्यकारणभावो वर्णितस्तथा अरविन्द-

मिव मुखमिति प्रयोगस्यापि साधुतया नामार्थो विभक्त्यर्थ इव निपातार्थेऽपि विशेषणं भवति। एवं नामार्थोऽपि निपातार्थो विभक्त्यर्थातिरिक्ते नामार्थ-धात्वर्थादौ साक्षाद् विशेषणं भवति, किन्तु निपातार्थभिन्नो नामार्थ एव विभक्त्यर्थातिरिक्ते विशेषणं न भवतीति स्वीकार्यम्। तथा च पूर्वप्रदर्शित-कार्यकारणभावे शाब्दबोधकार्यस्य सम्बन्धे कार्यतावच्छेदकसम्बन्धे या विशेष्यता सा अन्यतरविशेष्यताभिन्नत्वेन विशेषणीया। प्रथमाया इदं तात्पर्यम्। निपातपदेनोपस्थितः शाब्दबोधे प्रकारो भवति। यो हि पदार्थ उपस्थितो भवति स एव शाब्दबोधे प्रकारो विशेष्यो वा भवति, अतः प्रकारता विशेष्यता च उपस्थितिप्रयोज्योच्यते। तथा च प्रकृते सादृश्ये प्रकारता निपातजन्योपस्थितिप्रयोज्या तन्निरूपिता सौन्दर्यनिष्ठा विशेष्यता न ग्राह्या, तेन द्वितीयो व्यभिचारो वार्यते। एवं निपातजन्योपस्थितिप्रयोज्या अरविन्दनिष्ठप्रकारतानिरूपिता सादृश्यनिष्ठा विशेष्यता साऽपि न ग्राह्या, अतः प्रथमव्यभिचारो वार्यते। इमे विशेष्यते यदि गृह्णीत तदा तेन सम्बन्धेन शाब्दबोधस्तत्रोत्पद्यते, तदा तत्र कारणाभावे व्यभिचारः प्रस्फुरेत्। तद्भिन्नत्वनिवेशे उक्तकार्यकारणभावस्य विषय एव न भवतीति भावः। अत्र निपातार्थनिष्ठा प्रकारता विशेष्यता इत्येवमनुक्त्वा निपातजन्योपस्थिति-प्रयोज्येति कथं पण्डितराजेनोच्यत इति शङ्कायामिदमवधेयम्—सदृशशब्देनो-पस्थितमपि सादृश्यं निपातार्थ एव, किन्तु सादृश्यनिष्ठा प्रकारता विशेष्यता वा निपातजन्योपस्थितिप्रयोज्या न भवति, किन्तु सदृशनामजन्योपस्थिति-प्रयोज्येति सिद्धान्तः। एवञ्च सौन्दर्येण अरविन्दसादृश्यं मुख इति प्रयोगे सौन्दर्यस्य तृतीयार्थप्रयोज्यत्वद्वारा सादृश्येऽन्वय; सादृश्यस्य च विभक्त्यर्थ-सप्तम्यर्थवृत्तित्वेऽन्वयः। एवं विभक्त्यर्थस्य संसर्गतया भानं कृत्वा सौन्दर्यम् अरविन्दं सादृश्यं मुखम् इति प्रयोगस्यापि साधुता प्रसज्यते। तथानिवेशे तु सादृश्यस्य निपातजन्योपस्थितेरभावादुक्तनियमान्तर्गततया विभक्त्यर्थे एव विशेषणतया उक्तप्रयोगो न साधुर्भवति। **नञर्थस्येव** ● घटो न पट इत्यत्र नञो भेदरूपोऽभावोऽर्थः। तत्र प्रतियोगित्वसम्बन्धेन घटस्यान्वयः, भेदस्यानुयोगित्वसम्बन्धेन पटेऽन्वयः। तथा च घटप्रतियोगिकभेदवान् पट इति बोधः। अत्र घटरूपनामार्थापेक्षया विभक्त्यर्थभिन्नस्य भेदस्य विशे-ष्यत्वम्। भेदरूपनामार्थापेक्षया विभक्त्यर्थभिन्नस्य पटस्य विशेष्यत्वं तथेत्यर्थः। नञ् निपातः। एतादृशेवशब्दयोगेऽपि। मञ्जूषाकृतां मते सुन्दरोपमानार-विन्दाभिन्नसुन्दरं मुखम् इति शाब्दबोधः। इवशब्दार्थस्थलेऽपि अभेदान्वय ते समीहन्ते। अन्यथा शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसान् इव इत्यादौ

अरविन्दमिव भातीत्यत्रारविन्दनिरूपितसादृश्यस्य प्रकारता-सम्बन्धेन धात्वर्थेऽन्वयादरविन्दसादृश्यप्रकारकधीविशेष्य इति ।

तत्रैव सौन्दर्येणेति धर्मोपादाने तृतीयार्थः प्रयोज्यत्वं धात्वर्थे भाने इवार्थे सादृश्ये वान्वेति । तेन सौन्दर्यप्रयोज्यार-विन्दनिरूपितसादृश्यप्रकारकधीविशेष्य इति ।

---

उपमानोपमेययोः समानविभक्तिकत्वानुशासनमन्तरेणाऽपि अभेदान्वयवशात् समानविभक्तिकत्वं न स्यादिति । उक्तपद्येऽभेदान्वयनिर्वाहायैव भूषणादिषु शरपदस्य तत्सदृशलक्षकतायां तात्पर्यग्राहकत्वरूपं द्योतकत्वमिवादिनिपातानामङ्गीकृतम् । तथा च लक्षणां विनैव वाचकत्वमतेन शाब्दबोधं वर्णयतां पण्डितराजानां मते कथं समानविभक्तिकत्वनिर्वाह इति शङ्कायाम् आलङ्कारिकाणां वैद्यनाथसूरीणामधस्तन समाधानं सम्यगाभाति । लिङ्गसंख्याविभेदेऽपि ह्युपमानोपमेयता । विभक्तिपुनरेकैव उपमानोपमेययोः । इत्यनुशासनं प्रमाणयन्ति । कृष्णमित्रभट्टाचार्यास्तु यूयमिवाचरति इति महाभाष्यप्रयोगात्, ईश्वर इव मुनय इत्याद्यनुभवाच्च समानवचनकतायां न मानम् इति ब्रुवते । अभेदान्वये च नियतसमानवचनकत्वापत्तेरिति मञ्जूषाकृतां मतं न समीचीनम् । किन्तु संख्याभेदे यत्र चमत्कारापकर्षस्तत्रैव तस्य दोषत्वम् इत्यलं विशेषेण । यत्तु कौस्तुभे अरविन्दसुन्दरस्थलीयशाब्दबोधखण्डनं तत्तु असारम्, न वितन्यते । यदपि अरविन्दमिव सुन्दरमित्यादौ सादृश्यमनुयोगिनि एव विशेषणमिति निष्फलं नियमं स्वीकृत्य खण्डनं तदपि मुखं न चन्द्र इवेत्यत्र नञर्थे प्रतियोगितया प्रकारत्वात् चन्द्रसादृश्यं मुखवृत्ति इति स्थलेषु विशेष्यतया सादृश्यस्य भानाद् व्यभिचारादसदेव । **अरविन्दमिव** ● मुखमित्यादिः । भाधातोर्धीर्ज्ञानमर्थः । इवार्थः सादृश्यम् । तत्र अरविन्दस्य निरूपितत्वसम्बन्धेनान्वयः । सादृश्यस्य च प्रकारकत्वसम्बन्धेन धात्वर्थज्ञानेऽन्वयः । आख्यातार्थो विशेष्यता तस्या आश्रयतासम्बन्धेन कर्तरि मुखेऽन्वयः । अथवा धीविशेष्यता धात्वर्थः । आश्रयत्वमाख्यातार्थः, नैयायिकरीत्या प्रथमान्तार्थमुख्यविशेष्यकः शाब्दबोधः । शाब्दिकसरण्या व्यापारमुख्यविशेष्यकस्तु अरविन्दनिरूपितसादृश्यप्रकारिका मुखविशेष्यिका धीरिति शाब्दबोधः । अत्र मते धात्वर्थो धीमात्रम् । **धात्वर्थे भाने** ● करणतृतीयायाः कारकविभक्तित्वाद् धात्वार्थान्वय्यर्थाभिधायित्वात् केवलाया धियः सौन्दर्याप्रयोज्यत्वेऽपि सादृश्यप्रकारकत्वविशिष्टायास्तस्याः प्रयोज्यत्वे

तथा गज इव गच्छति, पिक इव रौतीत्यादावुपमान-पदानां तत्कर्तृकक्रियायां लक्षणया गजादिगमनादिसदृशगमना-द्यानुकूलकृतिमानिति ।

ननु घटो न पश्यतीत्यत्र घटान्विताभावस्य दर्शने कर्मता-संसर्गेणान्वयवारणाय धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारता-संसर्गेण शाब्दबोधं प्रति विशेष्यतया विभक्त्यर्थोपस्थितेर्हेतु-त्वम् । एवं च गज इव गच्छति, पिक इव रौतीत्यादौ नेवाद्य-र्थस्य सादृश्यस्य धात्वर्थेऽन्वयः सम्भवति । तस्माद् गजादि-सादृश्यस्य गमनादिकर्तर्येवान्वयः स्वगमनादिसदृशगमनादिकर्तृ-त्वेन समानधर्मेण ।

---

बाधकाभावः । हेतुतृतीयाऽभिप्रायेणाह **इवार्थे** । **गज इव●** गम्धातो-र्गनमर्थः । आख्यातस्य कृतिः, गजपदार्थस्य लक्षणया गजकर्तृकगमनस्य इवार्थ-सादृश्ये सादृश्यस्य धात्वर्थगमने गमनस्य आख्यातार्थकृतौ कृतेश्चोपमेये कर्तर्यन्वय इति फलितमाह **गजादीति●** रौतीत्यत्रापि तथैव पिककर्तृक-रवसदृशरवानुकूलकृतिमान् इति शाब्दबोधः । **घटो न पश्यति●** नञोऽभावोऽर्थः । घटस्य प्रतियोगितासम्बन्धेनाभावेऽन्वयः । यथा घटाभावं पश्यतीत्यादौ घटाभावस्य कर्मत्वेऽन्वयः । कर्मत्वस्य च दर्शनेऽन्वयः । तथैव विभक्तेरभावेऽपि कर्मत्वं संसर्गं कृत्वा दर्शने साक्षादन्वयं स्वीकृत्य घटो न पश्यतीत्यस्याप्यापत्तिरतः पूर्ववर्णितरीत्या धात्वर्थे साक्षाद्विभक्त्यर्थ एव विशेषणं न नामार्थो निपातार्थो वेति नियमोऽङ्गीक्रियते । तेन दर्शने साक्षान्नञर्था-भावान्वयाभावेन घटो न पश्यतीति न भवति तथा गज इवेत्यादिवाक्ये इवार्थसादृश्यस्य धात्वर्थगमने साक्षादन्वयो न सम्भवतीति सरलार्थः । **धात्वर्थनिष्ठ●** घटं पश्यतित्यादौ घटकर्मकं दर्शनमित्यादिबोधाद् धात्वर्थ-दशननिष्ठविशेष्यतानिरूपितप्रकरतासम्बन्धेन शाब्दबोधः कर्मत्वे, तत्र द्वितीयाविभक्तिजन्योपस्थितिर्विशेष्यतासम्बन्धेन यथा वर्तते तथा प्रकृते धात्वर्थगमननिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन शाब्दबोधः सादृश्ये तत्र विशेष्यतासम्बन्धेन विभक्तिजन्योपस्थितिर्नास्ति, किन्त्विवपद-जन्याऽतोऽनुपपत्तिरिति भावः । **तस्माद्●** गच्छतीत्यस्य गमनकर्ताऽर्थः

इत्थमेव चाख्यातवादशिरोमणिव्याख्यातृभिरपि सिद्धान्तितमिति चेत्, नैवम्; गज इव गच्छतीत्यत्र सादृश्यस्य विधेयतया प्रतीतेरपलापापत्तेः। गज इव यः पुरुषः स गच्छति, पुरुषो यः स गज इव गच्छतीति वाक्याभ्यां भिन्नप्रतीत्योरानुभविकत्वात्। एवं वनं गज इव गृहं देवदत्तो गच्छतीत्यादौ वनादेः सर्वथैवानन्वयापत्तेश्च। एवं बिम्बप्रतिबिम्बभूतस्य कारकमात्रस्यानन्वयो बोध्यः। तस्माद् गजनिरूपितसादृश्यप्रयोजकगमनाश्रय इत्येव गज इव गच्छतीत्यत्र धीः। कारकोपादाने तूपमानपदानां तत्कर्तृकक्रियायां लक्षणेत्येव साधु।

न च प्रागुक्तकार्यकारणभावस्य धात्वर्थनिष्ठेत्यादेर्व्यभिचारः, तस्यानङ्गीकारात्। अङ्गीकारे च तूष्णीमारात्पृथगित्याद्यर्थानां धात्वर्थान्वयोऽनुभवसिद्धोऽपलपनीयः स्यात्।

---

स च गजसदृशः। गजसादृश्यञ्च गमनकर्तरि गजकर्तृकगमनसदृशगमनकर्तृत्वरूपसमानधर्मेण। **गज इव यः** ● अनेन प्रथमे गजसदृशं पुरुषमुदिश्य गमनकर्तृत्वं विधीयते, अतः सादृश्यमुद्देश्यकोटिप्रविष्टम्। **पुरुषो यः** ● अत्र च पुरुषमुदिश्यगजकर्तृकगमनसदृशगमनकर्तृत्वं विधीयते। अत्र च सादृश्यं विधेयकोटिप्रविष्टमिति तात्पर्यम्। **एवं वनमिति** ● गजसदृशो गमनकर्तेत्येव बोधस्तैरङ्गीक्रियते। वनस्य च गजकर्तृके गमन एवान्वयस्य समीहितत्वात्, तस्य चानुपस्थानात्। गजसादृश्यप्रयोजकस्य स्वकर्तृकगमनसदृशगमनकर्तृत्वस्य पदानुपस्थानात्, संसर्गतया वा तत्रत्यगमने वनकारकस्यान्वयासम्भवात्। अत्र च वनगृहयोर्बिम्बप्रतिबिम्बभावः। **कारकमात्र** ● वनगृहयोरत्रैव बिम्बप्रतिबिम्बभावः। गजनिरूपितं यत्सादृश्यं तत्प्रयोजकं यद् गमनं तदाश्रयः। आख्यातार्थः आश्रयता। धात्वर्थगमने इवार्थसादृश्यस्य प्रयोजकतासंसर्गेणान्वयः। सादृश्ये च गजस्य निरूपितत्वसम्बन्धेनान्वयः। सादृश्यस्य प्रयोजकत्वे गमने लब्धे तस्य साधारण्यप्रतीतौ गजेऽपि गमनस्य प्रतीतिसम्भवः। परमत्र गजकर्तृकगमनबोधमन्तरा वनादिकर्मत्वस्य नान्वयः सम्भवतीति लक्षणामाह—**लक्षणेत्येव** ● तथा च वनकर्मकगजकर्तृकगमन-

कथं तर्हि घटो न पश्यतीत्यादौ घटाभावं पश्यतीति नान्वयबोधः ? धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंसर्गेणा-न्वयबोधं प्रति नञ्जन्योपस्थितिमात्रस्य प्रतिबन्धकत्वकल्पनात् । धात्वर्थस्य नामार्थभिन्नत्वेन विशेषणं तु द्वयोस्तुल्यम् । तेन पाको न याग इत्यादौ न व्यभिचारः । इत्यलमप्रसक्तविचारेण ।

---

सदृशगेहकर्मकगमन श्रयो देवदत्तः । प्रतिबन्धकत्वकल्पनात् ● न चात्र तथापत्तिवारणेऽपि कर्मतासम्बन्धेन धात्वर्थेऽन्वयतात्पर्येण तण्डुलः पचतीति प्रयोगवारणाय तादृशकार्यकारणभावोऽपेक्षित इति वाच्यम्, निपातातिरिक्त• नामार्थः साक्षाद् भेदेन विभक्त्यर्थे एव विशेषणमिति तात्पर्यकस्य निपातातिरिक्तनामार्थनिष्ठभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्द-बोधं प्रति विभक्तिजन्योपस्थितिर्विशेष्यतासम्बन्धेन हेतुरिति कार्यकारण-भावान्तरस्य सत्त्वान्न दोषः । नञो भिन्नानां निपातानामर्था धात्वर्थेऽनुयन्ति, अन्ये नामार्था नञर्थश्च धात्वर्थे न विशेषणीभवन्ति इति निष्कर्षः ।

ननु पाक इति घञ्प्रत्ययान्तस्य धात्वर्थे साधोरर्थस्य नञर्थेनान्वयो न भवेदिति चेदाह धात्वर्थस्य ● यत्तु प्रतिबन्धकत्वकल्पने न कलञ्जं भक्षयेदित्यत्र दोषप्रदर्शनं कौस्तुभकृतां तदापततः । इष्टसाधनत्वादिविभक्त्यर्थ एव नञर्थ-स्यान्वयः, न तु धात्वर्थे । दीधितिव्याख्यायां मर्मप्रकाशकृतोऽक्षराणि । वस्तु-तस्तु वनं गज इव रणभूमिं शूरो गच्छति इत्यादौ वनकर्मकगमनानुकूल-कृतिमत्सदृशः समरभूमिकर्मकगमनानुकूलकृतिमान् शूर इत्यादि बोधः । इवशब्देन च बिम्बप्रतिबिम्बभावापन्नवनसमरभूमिविशेषकगमनमेव धर्मत्वेन बोध्यते । इवादयश्च धर्मत्वेन बोधका इति सर्वसम्मतम् । गज इव यः पुरुषः स गच्छतीत्यत्र इवेन गमनान्वित एव शूरत्वादि धर्मत्वेन बोध्यते । पुरुषो यः स गच्छति इत्यत्र तु गमनमेव तथेति तयोर्विशेषोऽप्युपद्यते एव । उपमाया विधेयत्वं चैतदेव यद्विधेयस्यैव धर्मत्वेनोपमाबोधकबोध्यत्वमिति चिन्त्यमिदम् । वैया-करणमते तु क्रिययोरेवोपमानोपमेयभावः । गच्छतीत्यस्य चावृत्त्योभयत्रान्वयः । गजादिपदानां स्वकर्तृकक्रियायां लक्षणा वेति दिग् इति वर्णयन्ति । इदन्तु बोध्यम्—वनं गज इवेत्यादौ द्वितीयार्थकर्मकारकत्वस्य भूषणादिव्यवस्थापित-

अथारविन्दतुल्यो भातीत्यत्र कथं धीः ? तुल्यपदार्थस्य निपातभिन्ननामार्थत्वेन धात्वर्थे भेदेनान्वयायोगात्। तादृश-तुल्यत्वादेर्भानोद्देश्यतावच्छेदकत्वे भानमात्रविधेयतायां विवक्षितार्थाप्रतीतिः।

न च तुल्यपदेन तुल्यत्वप्रकारको लक्षणयोपस्थापितो ऽभेदेन धात्वर्थेऽन्वेष्यतीति वाच्यम्, क्रियाविशेष-

---

रीत्या धात्वर्थे एवान्वायः समुचितः। स च वैयाकरणमते क्रियापदस्यावृत्त्या बोध एव सम्भवति, न तु मूलरीत्या लक्षणया गजपदोपस्थिते गमने, नापि टीकोट्टङ्कित-रीत्येवादिपदोपस्थितधर्मरूपे गमने। किन्तु मूलाभिप्रायो गजपदस्य वनकर्मक-गजकर्तृकगमने लक्षणा वनपदं तात्पर्यग्राहकमिति नैयायिकरीत्यावसेयः। मर्मप्रकाशे तु धर्मत्वेन निपातपदेन गमनमुपस्थाप्यते। तत्र वनमित्यस्यान्वयो न सम्भवतीति। उपमायाः किन्नाम विधेयत्वमित्यत्र मूलटीकयोर्दृष्टिर्दीयते। पण्डितराजस्तु विधेयस्य सादृश्यानुयोगितया यत्र भानं तत्रोपमाया विधेयत्व-मभिप्रैति। टीकाकृत्तु यत्र विधेयस्य साधारणधर्मत्वेन इवादिबोध्यत्वं तत्रेति युक्तायुक्तत्वे सुधीभिर्विभावनीये। वयन्तु शूरमुद्दिश्य गजकर्तृकगमनसदृशं गमनं विधीयत इति पर्यालोचनया यथाकथमपि शूरविशेषतापन्नमुद्देश्यकोटि-कवलितं न विधेयतार्हमिति बुध्या बनकर्मकगमनानुकूलकृतिमदित्यादिबोधवर्णने नोपमाया विधेयतास्पर्श इति मूलकृतां सम्यग्भ्रमः। प्रथमान्तार्थमुख्यविशेष्यक-शाब्दसम्पादने न गमनं विधेयतामञ्चतीति सहृदयहृदयसाक्षिकन्तदा नैयायिक-मते दोषः। व्यापारमुख्यविशेष्यक एव शाब्दिकसरणीसिद्धः शाब्दोऽङ्गी-क्रियताञ्चमत्कारैकप्रियैरालङ्कारिकैः।

अथारविन्द● भाने कर्तृत्वेनान्वये चैत्रः पच्यते इत्यस्यापि कर्तृतया धात्वर्थेऽन्वयेन साधुत्वापत्तिः। **विवक्षितार्था इति**● अरविन्दसदृशं भानं विधेयम्। तुल्यत्वस्योद्देश्यतावच्छेदकत्वे अरविन्दसदृशं करमुद्दिश्य भानमात्रस्य विधेयत्वं स्यादिति तत्र चमत्काराऽभावाद् न विवक्षितमिति भावः। अत्र स्फुटमेवोद्देश्यकोटिप्रविष्टस्याविधेयत्वमुक्तम्।

तुल्यत्वप्रकारक● अरविन्दतुल्यत्वप्रकारकं करादिविशेष्यकं भानमिति धात्वर्थविशेष्यको बोधः। ज्ञानार्थकधातुयोगे विशेष्यताऽऽख्यातार्थ इति भावः।

णत्वेनारविन्दतुल्यशब्दस्य नपुंसकत्वापत्तेरिति चेत्, व्याकरणस्य सिद्धानुवादकत्वेन स्तोकं पचतीत्यादिमात्रविषयत्वेन क्रियाव्ययविशेषणानां क्लीबतेष्यते इत्यस्योपपत्तेः। धातोरेव लक्षणया सकलार्थबोधकत्वमितरस्य तात्पर्यग्राहकतेत्यपिकेचित्।

अरविन्दवत्सुन्दरमित्यत्र वतेः 'तेन तुल्यम्—' इति विहि·

---

**नपुंसकत्वापत्ते** ● न च क्रियाविशेषणत्वे कर्मत्वापत्तिरपि वक्तुमुचितेति वाच्यम्, कर्मत्वस्यापाणिनीयत्वेनादोषात्। उक्तञ्च व्युत्पत्तिवादस्य कृष्णं मह्यां नास्ति पाणिनीयमनुशासनं द्वितीयाविधायकम्। कान्तन्त्रमनुसृत्य मनोरमाशेखरादौ फलेऽभेदान्वयेन कर्मत्वस्य समर्थनेऽपि भाष्यादावपि स्फुटतया कुत्रचिदनुक्तेर्न मुनित्रयसम्मतम्। सवत्रैव क्रियाविशेषणे द्वितीयावर्णनम्. काव्यपाठिनां तु कौमुदीविरुद्धमपि मृदु पचतीत्यादौ व्यापारविशेषणत्वे प्रथमाया एवोपपादितत्वात्। तथा च पण्डितराजमनुसरद्भिरालङ्कारिकैरेवंविषये प्रथमात्वेनैव स्वकीयः सिद्धान्त उद्घोषणीयः। प्रसिद्धेऽलङ्कारग्रन्थान्तरेऽपि स्फुटं द्वितीयाया अनुक्तेश्च। अन्ये तु रूपभेदाभावादेव द्वितीयापत्तिर्नोक्तेति समादधति। यदि क्रियान्वय एव चमत्कारानुभवस्तदा तादृशार्थप्रकाशकशब्दान्तराभावादमरभारत्येव न्यूनतां गच्छेत्। कदाचिदिमामेवानुपपत्तिमाशंक्य वचनं महर्षिभिर्न प्रणीतं भवेदित्याद्यभिसन्धायाह—**सिद्धानुवादकत्वेन** ● अनुशासनभयात् लक्षणामनुसृत्याप्याह—**धातोरेव** ● परं बहूनां पदानां तात्पर्यग्राहकतारीतिर्नैयायिककुटीरप्रसिद्धेति द्योतयितुमाह **केचित्** ● अत्र मर्मप्रकाशः उपमाविधेयकबोधे तात्पर्येऽरविन्दतुल्यमित्येव प्रयोगः। उपमाया उद्देश्यकोटिप्रविष्टत्वे भानभिन्नस्य वा साधारण्ये अरविन्दतुल्य इत्येव साधुः।

यदि च पूर्वोक्तरीत्या भानस्य साधारण्येन तुल्यपदप्रतिपादनमात्रेणैवोपमाया विधेयत्वम्, तत्तु प्राधान्ये ग्रहिलता तदोपमाया विधेयत्वमत्रोद्देश्यदलप्रविष्टत्वेऽप्यक्षतमिति प्रकाशयति। विधेयोपमायाः प्राधान्य एव चमत्कारानुभवस्तदा पण्डितराजगतिरेव गतिरिति विभावनीयम्। यत्तु निर्मितिमादधतीत्यादौ काव्यप्रकाशप्रयोगे क्रियाविशेषणेऽपि नपुंसकत्वादर्शनाद् नोक्तनियम इति तदत्यन्तमज्ञानमूलकम्। उक्तप्रयोगे निर्मितेः कर्मत्वाद् नियमस्य चाभेदेन धात्वर्थविशेषणविषयत्वात्।

**तेन तुल्यम्** ● अव्ययत्वेऽपि निपाताभावात् सुन्दरमित्यनेनाभेदान्वयपरकस्य शक्तिग्राहकशिरोमणेः सामानाधिकरण्यव्यवहारस्य जागरूकतया

**तस्य सादृश्यवदर्थकस्य सादृश्ये लक्षणा। तस्य च सुन्दरपदार्थैकदेशेन सुन्दरत्वेनान्वयादरविन्दमिव सुन्दरमित्यत्रेव बोधः। एकत्र शक्त्या, अपरत्र लक्षणया च सादृश्यप्रतिपादनाच्छ्रौत्यार्थी च।**

---

सादृश्यविशिष्ट एव शक्तिरिति भावः। अरविन्दवत् सुन्दरमित्यत्र अरविन्दसदृशाभिन्नं सुन्दरमिति बोधे सादृश्यस्य साधारणधर्मप्रयोज्यत्वेन सौन्दर्येण साधारणेनान्वयो न स्यात्। साधारणधर्मान्तरस्य च प्रतिभासः स्यात्। सौन्दर्यस्योपात्तस्य साधारण्यं विहायान्यस्य कल्पनायां चमत्कारो विलुप्यते। अनुभूयते चारविन्दवत्सुन्दरं मुखमित्यादौ सौन्दर्यस्यैव साधारण्यम्। अतः सादृश्यस्य सौन्दर्यान्वयचिकीर्षया अन्वयानुपपत्तिमनुसन्धाय वतेः सादृश्ये लक्षणाऽङ्गीक्रियते। वत्यर्थसादृश्ये अरविन्दस्य निरूपितत्वसम्बन्धेन, सादृश्यस्य प्रयोजकतासंसर्गेण सौन्दर्ये तद्गतश्च मुखेऽभेदेनान्वयः। तथा च अरविन्दनिरूपितसादृश्यप्रयोजकसौन्दर्यवदभिन्नं मुखमित्याकारको बोधः। सादृश्यविशिष्टबोधकत्वं नार्थीत्वप्रयोजकम्, अपि तु सादृश्यविशिष्टशक्तत्वम्, अतो लक्षणया आर्थीत्वं समर्थयते। लक्षणया च ● ननु निपातातिरिक्तनामार्थयोरभेदातिरिक्तसम्बन्धोऽव्युत्पन्न इति नियमे निपातातिरिक्तस्थानेऽव्ययातिरिक्तत्वमेव वाच्यम्, तद्धितश्चासर्वविभक्तिरिति सूत्रव्याख्यानेन वत्यन्तस्याव्ययत्वात्, आख्यातशिरोमणिव्याख्यायां माथुर्यां युक्त्युदाहरणैः साधितमपि। प्रयुक्तञ्च वर्धमानाचार्येण लीलावतीप्रकाशे 'व्यक्तं च वतिप्रत्ययेन व्यक्तिज्ञानयोः सादृश्यमभिधीयते' अतो मुखादौ सौन्दर्यादौ च भेदेनान्वयेन निर्वाहे वतेः सादृश्यार्थकतयायाः सम्भवे लक्षणा दुर्घटैवेति चेन्न, शक्तिग्राहकेण व्याकरणेनापि तुल्यार्थे एव विधानात्, अव्ययातिरिक्तत्वेन संकोचे मानाभावात्। सुन्दरेति पदाप्रयोगे मुखान्वये सदृशार्थस्यापेक्षितत्वाच्च। तत्प्रदर्शितप्रयोगाणां प्रकारान्तरेणाप्युपपादनसम्भवात्। साम्यार्थप्रतिपादकोऽमरस्तु ईदूदेद्द्विवचनमित्यादिसूत्रे मनोरमायां भट्टोजीदीक्षितैर्मारितः। अत्र नागोजीमहाभागाः वस्तुतस्तु क्रियायास्तुल्यत्व एव तेन तुल्यमिति वतिविधानादरविन्दमिव सुन्दरमितिवद् बोध इति चिन्त्यमिदम्। अत एव ब्राह्मणवदधीते इत्यत्र ब्राह्मणकर्तृकाध्ययने ब्राह्मणपदस्य लक्षणेति महाभाष्यकारादयः। अरविन्दवत्सुन्दरं मुखमित्यत्र च भवतिक्रिया अध्याहार्या। अरविन्दपदेन सुन्दरारविन्दभवनं लक्ष्यते। सुन्दरार-

अरविन्दवन्मुखमित्यत्र त्वरविन्दनिरूपितसादृश्यवदभिन्न-मिति ।

अरविन्दवत्सौन्दर्यमस्येत्यत्रारविन्दशब्दस्यारविन्दसौन्दर्य-लाक्षणिकतयाऽरविन्दसौन्दर्यनिरूपितसादृश्याधिकरणमेतत् -

---

विन्दभवनसदृशं सुन्दरमुखभवनमिति शाब्दबोधे वृत्ते अरविन्दमुखयोः सौन्दर्यधर्मकृतं सादृश्यं व्यञ्जनया बोध्यते। एवमरविन्दवन्मुखमित्यत्रापि अरविन्दभवनसदृशं मुखभवनमित्येव बोधो युक्त इति ध्येयम्—इत्याहुः। तत्रेदं विवेचनीयं सूरिभिः—तेन तुल्यमिति सूत्रे तुल्यशब्दस्य नपुंसकता प्रथमान्तता च सामान्ये नपुंसकमिति नियमेन कैयटनागेशाभ्यामङ्गीकृता। यदि क्रियायास्तुल्यत्वं सूत्राक्षरानुमतं स्यात्, तदा पाणिनिस्तुल्या क्रिया चेदिति कथन्न सूत्रयेत्। अतः क्रियायास्तुल्यत्वं सूत्राक्षरविरुद्धमित्यवसेयम्। अतस्तेन तुल्यमित्यर्थे वतिः प्रत्ययो भवति क्रिया चेदित्यर्थः। क्रिया चेदित्यस्य सम्बन्धोऽन्ततः-सादृश्यसम्पादकतया विधेयः। ब्राह्मणवदधीते क्षत्रिय इत्यत्र ब्राह्मणक्षत्रिययोरेवोपमा अध्ययनधर्मावलम्बिनी। उपमेयेऽध्ययनोक्तावपि उपमानेऽध्ययनमन्तरा कथं साधारण्यमित्यनुपपत्त्यैव ब्राह्मणपदस्य तत्कर्तृकाध्ययने लक्षणा, गुणसमुदायो ब्राह्मण इत्यादिना ब्राह्मणवृत्तित्वमध्ययनस्य प्रतिपादितं भाष्यकृता। तुलया समितमिति विग्रहं प्रदर्श्याऽपि एकत्र क्रियाया उपादानेऽपि तुल्यपदमहिम्नैव उभयत्र क्रियायाः सत्तां द्योतितवन्तो भाष्यकृतः। न च गुणतुल्येऽतिव्याप्तिरिति विस्तरभिया भाष्याक्षरयोजनाऽत्र मते परिहीयते। काव्यप्रकाशटीकायामपि एवमेव व्याख्यातमस्ति। श्रीमम्मटाचार्यसम्मतोऽप्ययं मार्गः। तथाहि—धर्मलोपे तद्धिते वतौ सम्भवाभावात् कल्पबादावुदाजहार। क्रिययोरुपमायाः साधारणस्य सौष्ठवादेः सम्भवात् काव्यप्रकाशो विरुध्यते। तथाऽपि साधारणधर्मत्वस्य क्रियाया अभावात् ग्रन्थासङ्गतिस्तदवस्थैव इति वाच्यम्, सौन्दर्यभवने सौन्दर्यस्य तात्पर्यकल्पनायामनुपपत्त्यभावात्। ।तिप्रत्ययाभिधेयस्य सदृशस्य लक्षणां विनैव मुखेनाभेदान्वयरूपपूर्वापेक्षया वैलक्षण्यद्योतनाय तु पदम् ● । अरविन्दवत्सौन्दर्यम् ● अरविन्दसौन्दर्ययोर्द्रव्यगुणयोरुपमा न सम्भवतीति अरविन्दपदस्य अरविन्दसौन्दर्ये लक्षणा अरविन्दसौन्दर्यप्रतियोगिकं यत्सादृश्यं तद्वदभिन्नमेतत्सम्बन्धि सौन्दर्यमिति प्रथमो बोधः। पश्चात् सादृश्यमूलकाभेदाध्यवसायेन सौन्दर्यं साधारणीकृत्य मुखारविन्दयो र्वैयञ्जनिकी

सम्बन्धि सौन्दर्यमिति मुखारविन्दसौन्दर्ययोः सादृश्यबोधे शाब्दे, तयोरभेदाध्यवसायादभिन्नधर्ममूला पश्चान्मुखारविन्दयोरपि सादृश्यधीः ।

अरविन्देन तुल्यमित्यत्र तृतीयार्थो निरूपितत्वम् । तस्य च सादृश्येऽन्वयादरविन्दनिरूपितसादृश्याश्रयाभिन्नमिति ।

तत्रैव सौन्दर्येणेति धर्मनिर्देशे तृतीयार्थः प्रयोज्यत्वम् । तेनारविन्दनिरूपितसौन्दर्यप्रयोज्यसादृश्यवदभिन्नमिति ।

अरविन्दमाननं च सममित्यत्र प्रथमं शब्दात् सादृश्यवदभिन्नमिति बोधे पश्चान्मानसी वैयञ्जनिकी वा परस्परनिरूपितसादृश्यस्य प्रतीतिः प्रसिद्धनिरूपितसादृश्यस्य वा ।

बिम्बप्रतिबिम्बभावापन्ने तु—

---

सादृश्यधीः । अत्र मर्मप्रकाशः । तत्र तस्येवेति वतेरिवार्थे विहितत्वेन सादृश्यार्थकस्य तत्प्रयोजके लक्षणयारविन्दसादृश्यप्रयोजकमेतत्सम्बन्धितसौन्दर्यमिति बोधे उपपन्ने अरविन्दपदस्य लक्षणानिष्फलेति प्राह । भाषानुवादकस्तत्र नागेशमहोदस्याग्रहमवर्णयत् । यतोऽहि मतेऽस्मिन्नपि लक्षणागलस्पर्शेऽपि केवलखण्डनबुद्ध्यैव तथा व्याख्यातम् । केचन च स्फुटया सौन्दर्योपमयाऽपि चमत्कारविशेषं समीहन्ते । वयन्तु इवार्थवतौ नागोजीमतस्य सत्त्वेऽपि तुल्यार्थवतौ ग्रन्थरीतिरेव गरीयसीति विद्मः । पण्डितराजस्तु विभक्ताविव तत्समशीले वति प्रत्ययेऽपि लक्षणायां सङ्कुकोच । सरलातु असुद्धा । **अरविन्देन तुल्यम्** ● तुल्यार्थैरतुलोपमाभ्यामित्यादिविहितस्य प्रत्ययस्य निरूपितत्वमर्थः । तस्य तुल्यसादृश्यवदेकदेशसादृश्येऽन्वयः । तस्य सदृशे सादृश्यवतश्च नामार्थे मुखादावभेदेनान्वयः । तथा च अरविन्दनिरूपितसादृश्यवदभिन्नं मुखमिति बोधः । सौन्दर्येण अरविन्देन तुल्यं मुखमित्यादिसाधारणधर्मवाचकतृतीयान्तप्रयोगे साधारणधर्मभिन्नस्य सादृश्यत्वे सादृश्यस्य च साधारणधर्मप्रयोज्यत्वात् सौन्दर्योत्तरतृतीयार्थप्रयोज्यत्वस्य सादृश्येऽन्वयात् पूर्वरीत्या च अरविन्दनिरूपितम्, सौन्दर्यप्रयोज्यञ्च यत्सादृश्यं तद्वदभिन्नं मुखमिति बोधः । **परस्पर** ● कमलसदृशं मुखम्, मुखसदृशञ्च कमलमिति बोधः । **प्रसिद्धः** ● कमलसदृशं मुखमित्याकारको बोधः । मुखसंनियोगे कमलस्योपमानत्वप्रसिद्धेरिति भावः ।

'कोमलातपशोणाभ्रसन्ध्याकालसहोदरः ।
कुङ्कुमालेपनो याति काषायवसनो यतिः ॥'

इत्यादौ कुङ्कुमालेपनादिविशिष्टो यतिः कोमलातपादिविशिष्टसन्ध्याकालसदृशाभिन्न इति शक्त्या बोधे पश्चात्सादृश्यप्रयोजकधर्माकाङ्क्षायां श्रुतानां कोमलातपादीनामुपमानोपमेयविशेषणानां सादृश्यमूले तादात्म्याध्यवसाने साधारणत्वनिष्पत्तिः ।

कुङ्कुमालेपकाषायवसनाभ्यामयं यतिरित्यत्र कुङ्कुमालेपवसनयोरसाधारणयोरपि साधारणत्वज्ञानजननद्वारा कल्पनीयसादृश्यनिष्पत्तिप्रयोजकत्वात् प्रयोज्यत्वेन सादृश्येऽन्वयः । एकदेशान्वयः पुनरेषु पक्षेष्वगतिकतयाश्रीयत इत्युक्तमेव ।

---

**कोमलातप**● संध्याकाल उपमानं यतिरुपमेयः । साद्दश्यसम्पादकं संध्याकाले कोमलातपः यतौ केसरलेपः, उपमाने रक्तमेघस्तत्स्थाने उपमेये वकषायवसनं विशेषणम् । सहोदरपदस्य लक्षणया सदृशोऽर्थः । कोमलातपशोणाभ्रसंध्याकालसदृशाभिन्नः कुङ्कुमालेपनः कषायवसनो यतिः याति इति बोधः । शोणाभ्रकषायवसनयोः कोमलातपकुङ्कुमालेपयोश्चाश्रयतः स्वरूपतश्च भिन्नयोरपि सदृशे विद्यमानयोः सदृशतयाऽवभासमानयोरभेदमारोप्य साधारणधर्मत्वम् ।

कुङ्कमालेपकषायवसनाभ्यामयं यतिः ॥
कोमलातपशोणाभ्र संध्याकालसहोदरः ।

इति परिणामेऽपि सैव व्याख्या । केवलं सौन्दर्येणेत्यादिधर्मवाचकपदोत्तरतृतीयाविभक्तौ तृतीयार्थप्रयोज्यत्वस्य यथा सादृश्येऽन्वयस्तथा सहोदरपदार्थैकदेशसादृश्ये कुङ्कमालेपकषायवसनप्रयोज्यत्वं भासते । तथा च कुङ्कुमालेपकषायवसनप्रयोज्यं यत् कोमलातपशोणाभ्रसंध्याकालसादृश्यं तद्वदभिन्नो यतिरिति शाब्दबोधाकारः । धर्मयोः साधारण्यसम्पादनन्तु पूर्ववदेव ।

सादृश्यन्न साधारणधर्मभिन्नं तथाऽङ्गीकारेऽपि साधारणधर्माणां सादृश्यव्यञ्जकत्वाङ्गीकारे पुनर्गौरवापत्तेः । न च सादृश्यस्य समानधर्मत्वे अरविन्दमिव सुन्दरमित्यादौ इवपदादेव सौन्दर्यत्वेन सौन्दर्यस्योपस्थित्या पुनरुक्तिरनन्य-

सादृश्यस्य समानधर्मरूपत्वे तु अरविन्दसुन्दरं वदनमित्यत्र लक्षणयाऽरविन्दवृत्तिसमानधर्मः प्रतीयते। तस्य चाभेदेन सुन्दरपदार्थैकदेशेन सुन्दरत्वेनान्वयः।

अरविन्दमिव सुन्दरमित्यत्रारविन्दपदार्थ आधेयतया संसर्गेण इवपदार्थेन समानधर्मेणान्वेति। शेषं प्राग्वत्।

सौन्दर्येणारविन्देन सममित्यत्र सौन्दर्योत्तरतृतीयया धान्येन धनीत्यत्रेव अभेदार्थिकया अन्यया च निरूपितत्वार्थिकया सौन्दर्याभिन्नमरविन्दनिरूपितं यत्सादृश्यं तद्वदभिन्नमिति धीः।

---

श्चेतिवाच्यम्, इवादीनां सामान्यतस्तद्वृत्तिधर्मत्वेन बोधकता सप्रतियोगिकत्वादिना च। सामान्यत उपस्थिते धर्मे सौन्दर्यादीनामन्वयसम्भवाच्च। यत्र च विशेषपदसमभिव्याहारवशादेव विशेषत एव धर्माणामवभासस्तत्र सौन्दर्यादिपदं न प्रयुज्यते। इत्यभिप्रेत्याह **समानधर्मत्वे तु**●। **अरविन्दसुन्दरं वदनम्**● अरविन्दपदस्य अरविन्दसादृश्ये "तद्वृत्तिधर्मे लक्षणा। तस्य च सौन्दर्ये पदार्थैकदेशेऽन्वयः। सौन्दर्यवतश्च वदनादिनाऽभेदान्वयः। अरविन्दवृत्तिधर्माभिन्नं यत्सौन्दर्यं तद्वदभिन्नं वदनादिकमिति बोधाकारः। **अरविन्दमिव**● इवार्थः समानधर्मः, धर्म इवार्थे अरविन्दपदार्थस्य वृत्तितयाऽन्वयः। धर्मेण च सौन्दर्यस्याभेदस्तथाऽरविन्दवृत्तिधर्माभिन्नं यत्सौन्दर्यं तद्वदभिन्नं वदनादिकमिति बोधः। **सौन्दर्येणारविन्देन**● यथा धान्येन धनवान् गोत्रेण गार्ग्य इत्यादौ 'प्रकृत्यादिभ्य उपसंख्यानम्' इति विहिततृतीयाया अभेदार्थत्वेनैकदेशान्वयेन च धान्याभिन्नधनवान्, गोत्राभिन्नगर्गवान् इति बोधः। तथा सौन्दर्येणेति तृतीयाया अभेदः समपदार्थैकदेशधर्मरूपसादृश्यान्वय्यर्थः। तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्यामिति विहिततृतीयाया निरूपितत्वं तादृशसादृश्यान्वयि अर्थः। तथा च सौन्दर्याभिन्नमरविन्दनिरूपितं यत्सादृश्यं तद्वदभिन्नं वदनादिकमिति बोधः।

**क्यङर्थाचारो धर्ममात्रम् । तस्य चोपमानपदेन लक्षणयोपस्थितं तन्निरूपितसादृश्यं प्रयोजकतासंसर्गेणाभेदेन वा विशेषणम् । विशेष्यं चाश्रयतयोपमेयम्, क्यजर्थाचारश्चानुरूपक्रियादिः—इति दिक् ।**

---

मलयानिलमनलीयति मणिभवने काननीयति क्षणतः ।
विरहेण विकलहृदया निर्जलमीनायते महिला ॥१॥

इत्यत्र शाब्दबोधप्रकारमाह—**क्यङर्थ आचारो धर्ममात्रम्** ● मात्रपदेन जयरामादिसम्मतसादृश्यभेदयोर्व्यवच्छेदः । निर्जलमीनायत इत्यत्र निर्जलमीनशब्दस्य निर्जलमीनसादृश्यमर्थः । तादृशसादृस्यस्य च सादृश्यस्य धर्मभिन्नत्वपक्षे प्रयोजकतासम्बन्धेन क्यङर्थाचारेऽन्वयः । आख्यातार्थश्च कृतिस्तत्रानुकूलत्वसम्बन्धेन आचारो विशेषणम् । कृतिश्चाश्रयतासम्बन्धेन महिलायाम् । अतो निर्जलमीनप्रतियोगिकसादृश्यप्रयोजको य आचारस्तदनुकूलकृत्याश्रयो महिलेत्याकारकः शाब्दबोधः । सादृश्यस्य धर्मरूपत्वेन च निर्जलमीनसादृश्याभिन्नाचारानुकूलकृत्याश्रयो महिलेत्याकारकः क्यङर्थ आचारा धर्मरूपः । क्यजर्थश्च सदृशक्रियादीति भेदं दर्शयति । **क्यजर्थश्च** ● मलयानिलमनलमिवाचारति । अनलपदस्यानलकर्मकाचारसादृश्यमर्थः । आचारः क्यचोऽर्थः । तत्रा ारे मलयानिलकर्मकत्वस्यान्वयः । अनलकर्मकाचारसदृशमलयानिलकर्मकाचाराश्रयो महिलेति शाब्दबोधः । काननाधिकरणकाचारसादृश्यं काननपदस्यार्थो लक्षणया, क्यजर्थाचारे मणिभवनाधिकरणकत्वस्यान्वयः । तथा च काननाधिकरणकाचारसदृशमणिभव ाधिकरणकाचाराश्रयो महिलेति बोधः । सादृश्यबोधेऽपि यथा लुप्तता तथा तत्पद्यव्याख्यानावसरे मूले मर्मप्रकाशे मम व्याख्याने च व्याख्यातम् । अत्र कुत्रचिदालङ्कारिकटीकासु आचारानुकूलकृत्याश्रय इत्यादिरीत्या शाब्दबोधवर्णनं दृश्यते । प्रसिद्धञ्च नैयायिकनये आख्यातस्य कृत्यर्थत्वम्, तथापि पण्डितेन्द्रस्य आचारस्य आश्रयतया उपमेयविशेषणतोक्तिमनुसृत्य तथा मया न व्याख्यातम् । नैयायिकनयेऽपि न सर्वत्र तथा आख्यातार्थत्वं प्रसिद्धम्, किन्तु विशेषधात्वर्थयोगे एव । तथा च यत्र आचारो ज्ञानेच्छागमनादिरूपस्तत्र न कृतिराख्यातार्थ इति बोध्यम् । अत्रालङ्कारकौस्तुभकृतः आक्षिप्तेवशब्दार्थमादाय आचारमात्रं क्यजर्थं ब्रुवाणा लुप्ततां समर्थयन्ते, तत्र आक्षिप्तार्थस्य प्रकृत्यर्थान्वये क्लेशबाहुल्येन न सौष्ठवम् । काव्यप्रकाशव्याख्यायां जयरामभट्टाचार्यास्तु आचारमात्रे क्यजर्थे एकस्मिन् द्वयोरुपमानोपमेययोरन्वयो न सम्भवति, आचारसादृश्यप्रतीतेश्च आचारसजातीय आचारो भेदश्च क्यजर्थ इति व्याचख्युः । भेदार्थत्वादेव सुतं

तत्रेवादीनां द्योतकत्वमेव, न वाचकत्वम्, निपातत्वादुपसर्गवत्। द्योतकत्वं च स्वसमभिव्याहृतपदान्तरेण शक्त्या लक्षणया वा तादृशार्थबोधेन तात्पर्यग्राहकत्वेनोपयोगित्वमिति वैयाकरणाः। उपसर्गाणां द्योतकत्वमावश्यकम्, अन्यथा—उपास्यते गुरुः, अनुभूयते सुखम्, गुर्वादेर्लेनाभिधानं न स्यात्। धात्वर्थकर्मताविरहाद्, इवादीनां तु वाचकत्वम्, बाधका-

---

सुतीयतीति न प्रयोगः। तथा च सादृश्यवाचकपदसत्त्वात् श्रौती उपमेति तदनुयायिनः। भेदनिवेशाच्च सुतं सुतयतीति न प्रयोगः। एवमेव क्यचः सादृश्यवाचकतामनुसृत्य वस्तुत इति विविच्य आर्थीविभागे प्राचीनरूढिमेव प्रमाणयन्ति। पण्डितराजविचारे पाणिनीयानुशासनमनुकूलमिति विशेषः।

निपातानां द्योतकत्ववाचकत्वे **तत्रेवेति** ● सादृश्ये इवादीनां द्योतकत्वम्, न वाचकत्वमिति भावः। अर्थादिवादयः सादृश्याद्यर्थानां द्योतकाः, न तु वाचकाः। अनुमानप्रयोगश्चेत्थम् इवादयो द्योतका निपातत्वादुपसर्गवत्। उपसर्गाणां द्योतकताया नैयायिकसम्मततया दृष्टान्तता। अनर्थका अपि चवैत्वादयः, अतोऽद्योतकेषु तेषु निपातत्वस्य सत्त्वाद् व्यभिचारात्साध्यान्तरं वाचकत्वाभावमाह—न वाचकत्वमित्यनेन। चवैप्रभृतयोऽपि वाक्यार्थे कमपि विशेषं द्योतयन्तीति उभौ साध्यौ वैचित्र्यायेत्याह कश्चिद्वैयाकरणः। द्योतकत्वमाह—**द्योतकत्वम्** ● यथा चन्द्र इव मुखमित्यत्र चन्द्रपदस्य लक्षणया चन्द्रप्रतियोगिकसादृश्यमर्थः, तत्र चन्द्र पदं चन्द्रप्रतियोगिकसादृश्यबोधनेच्छयोच्चरितमिति तात्पर्यं ग्राहयतीवपदम्। **उपास्यते गुरुः** ● अयमभिसन्धिः। अत्र लः कर्मणि च भावे चाकर्मकेभ्य इति सूत्रेण कर्मणि लकारेण गुरुगतं कर्मत्वमुच्यते, अतः प्रथमा। तत्रोपासनारूपोऽर्थ उपसर्गस्य धातोरुभयोर्वा, नाद्यो धातुसंज्ञाया अभावेन कर्माख्यातानुपपत्तेः। तत्त्वे वाऽडागमद्वित्वाद्यापत्तेः। न द्वितीयोऽनुशासनाभावात्, सकर्मकत्वापत्तेरुपासमभिव्याहारेऽपि कर्मान्वयापत्तेश्च। न तृतीयः प्रथमपक्षोक्तदोषापत्तेः। अतः उपसमभिव्याहृतास्धातोरुपासनायाम् अनुसमभिव्याहृतस्य भूधातोश्चानुभवे शक्तिर्लक्षणा वा अङ्गीकर्तव्या। इयमेव चोपसर्गाणां द्योतकता। **धात्वर्थकर्मता** ● अकर्मकत्वादिति भावः। एवञ्चोपस्योपासनार्थतायां यथोक्तकर्मणि लकारानुपपत्तिस्तथा चन्द्र इव मुखमित्यादौ इवादिपदस्य सादृश्यार्थकतायां न काप्यनुपपत्तिर्बाधिका। तथा च अनुभवबलादेवेवादीनां वाचकत्वमुपेयते।

भावात् । प्रागुक्तहेतुस्त्वप्रयोजकत्वान्न साधकः, अन्यथा अव्ययत्वादिति हेतुना अव्ययमात्रस्यैव द्योतकतापत्तिरिति नैयायिकाः ।

अथास्याश्चमत्कारस्यापकर्षकं यावत्तत्सर्वमपि दोषः । कविसमयप्रसिद्धिराहित्यम्, उपमानोपमेययोर्जात्या प्रमाणेन

---

अनुभवरूपविनिगमकसत्त्वादेव वैयाकरणभूषणोक्तविनिगकाभावप्रतिपादनं परास्तम् । वाचकत्वे स्वीकृते नामार्थयोरभेदः सम्बन्ध इत्यादौ निपातातिरिक्तत्वादिनिवेशनं फलमुखमिति न गौरवगणनामर्हति । **अप्रयोजकत्वात्**● अनुकूलतर्कविरहात् । यथा धूमो यदि वह्निव्यभिचारी स्यात्तर्हि वह्निजन्यो न स्यात्, अस्ति च वह्निजन्यस्तस्मान्न वह्निव्यभिचारीति अनुकूलस्तर्कस्तथा निपातो यदि वाचको भवेत्, तदा किं स्यादित्यापाद्यमानस्य कस्यचिदभावेनानुकूलतर्कविरह इति भावः । अप्रयोजकानुमानाङ्गीकारे आह-— **अन्यथा**● इष्टापत्तौ स्वरादिनिपातानामपि द्योतकतापत्त्या स्वातन्त्र्येण प्रयोगानुपपत्तेः । यत्तु साक्षात्क्रियते इत्यादौ उपसर्गभिन्नस्यापि कर्मणि लकारानुपपत्तेर्द्योतकतया नोपसर्गत्वं द्योतकतावच्छेदकम्, अपि तु निपातत्वम् इति, तन्न; उपसर्गत्वनिपातत्वयोर्जातित्वे मानाभावाद् उपसर्गनिपातसंकेतयोरज्ञानेऽपि प्रचादिभ्यः प्रकर्षादेर्द्योत्यस्य समुच्चयादेर्वाच्यस्योपस्थितेः प्रत्वचत्वादेरेव द्योतकतावाचकताऽवच्छेदकतयोरनुभवसिद्धत्वात् ।

### उपमादोषनिरूपणम्

**चमत्कारस्यापकर्षकम्**● इदमेव सर्वत्र दोषताया नियामकम् । क्वचित् कविसमयप्रसिद्धिराहित्यम् । वस्तुतः तत्राऽपि चमत्कारापकर्ष एव कारणम् । अतश्चमत्कारापकर्षस्य उदाहरणानि कविसमयप्रसिद्धिराहित्यजातिप्रमाणन्यूनतादीनि । चमत्कारापकर्षश्च सत्कविहृदयानुभवसिद्धः । अत एव ईश्वर इव मुनय इत्यत्र वचनभेदे यथा चमत्कारो न, तथा ईश्वरा इव मुनय इत्यत्र समाने वचने । यूयमिवाचरतीति भाष्यप्रयोगादपि न समानवचनकत्वं शास्त्रनियन्त्रितमपि तु चमत्कारापकर्ष एव दोषत्वप्रयोजकः । अतएव भग्नप्रक्रमादिदोषवर्णनं काव्यप्रकाशकृतामेवंस्थले युज्यते, अन्यथा च्युतसंस्कृतिरेव वर्ण्येत । अलङ्कारदोषान् काव्यदोषान् वर्णयतो रसापकर्षकत्वं दोषाणामङ्गीकुर्वतश्च तस्य मते चमत्कारापकर्ष एव पर्यवसानम् । दण्डिमहोदयैस्तु स्फुटं न्यरूपि

लिङ्गसंख्याभ्यां चाननुरूप्यम्, बिम्बप्रतिबिम्बभावेधर्माणामुपमानोपमेयगतानां न्यूनाधिकत्वम्, अनुगामितायामनुपपद्यमानकालपुरुषविध्याद्यर्थकत्वम्, एवमादि।

क्रमेण यथा—

'प्रफुल्लकह्लारनिभा मुखश्री रदच्छदः कुङ्कुमरम्यरागः।
नितान्तशुद्धा तव तन्वि वाणी विभाति कर्पूरपरम्परेव ॥'

'मुनिः श्ववदयं भाति सततं पर्यटन् महीम्।
विनिवृत्तक्रियाजातः श्वापि लोके शुकायते ॥'

'सरसि प्लवदाभाति जम्बीरं सुपचेलिमम्।
आदिकारणतोयौघ इव ब्रह्माण्डमण्डलम् ॥'

---

न लिङ्गवचने भिन्ने न न्यूनाधिकतापि च।
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥१॥
स्त्रीव गच्छति षण्डोऽयं वक्तीयं स्त्री पुमानिव।
प्राणा इव प्रियोऽयं मे विद्याधनमिवार्जिता ॥२॥

**आननुरूप्यम्** ● असदृशम्। विध्यर्थः प्रार्थनादि। कविसमयप्रसिद्धिराहित्यस्योदाहरणमाह—**प्रफुल्ल** ● कह्लारः, पुष्पविशेषस्तत्सदृशी। **रदच्छदः** ● रदा दन्ताश्छाद्यन्तेऽनेन। संज्ञायां घञि छादेर्घेऽद्व्युपसर्गस्येत्यनेन ह्रस्वे सिद्ध ओष्ठे शक्तः। कुङ्कुमस्य केसरस्येव रम्यो रागो यस्य सः। कर्पूरपरम्परा कर्पूरपङ्क्तिः। मुखश्रिय उपमा चन्द्रकमलादिना न तु कह्लारेण ओष्ठस्य विम्बादिना न तु केसरेण वाण्याश्च सुधादिना न तु कर्पूरेण कविसमयसिद्धेति भावः। जात्या उपमानस्य न्यूनतायां पूर्वार्धम्, उपमेयस्य न्यूनतायामुत्तरार्धमुदाहरति—**मुनिः** ● मुनिरुपमेयः, श्वा उपमानम्। उत्तरार्धे श्वा उपमेयः, शुकमुनिः उपमानम्। क्रियाजातः क्रियासमूहः। प्रमाणेन न्यूनस्योपमेयस्योदाहरणमाह—**सरसि** ● सरसि प्लवत्, सुपचेलिमम्, बाहुलकाद् भूतार्थकं सुपक्वं जम्बीरम् आदिकारणे जलसमूहे 'अप एव ससर्जादौ तासु बीजमवासृजत्' इति श्रुतिमनुसृत्य ब्रह्माण्डमण्डमिव आभाति। यथा आदिकारणे जलप्रवाहे ब्रह्माण्डं तथा सरसि पक्वतयाऽप्यतिसूक्ष्मं जम्बीरं वर्ण्यते तच्च न सम्भवति, आदिकारणजलसरसो-

एतस्यैव किञ्चित् पदव्यत्यासे ब्रह्माण्डस्योपमेयतायां चायमेव दोषः ।

'द्राक्षेव मधुरं वाक्यं चरितं कौमुदी यथा ।
सदैवार्द्राणि चेतांसि सुधेव सुमहात्मनाम् ॥'

'बामाकल्पितवामाङ्गो भासते भाललोचनः ।
शम्पया सम्परिष्वक्तो जीमूत इव शारदः ॥'

अत्र जीमूतगतो भालस्थलोचनप्रतिबिम्बो नोपात्त इति न्यूनत्वम् ।

'भगवान् भवः' इति कृते तु बिम्बस्यैवाभावान्न प्रतिबिम्बापेक्षेति साधुः ।

---

ब्रह्माण्डजम्बीरयोः प्रमाणेन कणशोऽपि सादृश्याभावात् । अत्र प्लवदित्यस्य चञ्चलम्, इति मर्मप्रकाशः । अनुवादसरलयोस्तु प्लवत् तरत्, सुपक्वतया पीतत्वं वर्तुलत्वञ्चाभिप्रेतम् । चाञ्चल्यमतिसूक्ष्मत्ववर्णनञ्च सरला आक्षिपति । तत्रेत्थं मर्मप्रकाशस्याभिप्रेतं स्यात्, प्लवनं चेतनस्यैवान्येषां पराधीनानां प्रवहणमेव । किञ्च, चाञ्चल्ये धातोर्गत्यर्थत्वं न प्रतिकूलम्, ङितोर्धातोः शतुरसंभवाद् नामधातुरेव; प्लवनसादृश्यस्य चाञ्चल्ये पर्यवसानाच्च । न वा ब्रह्माण्डस्य तदानीं चाञ्चल्यं नास्तीति वक्तुं शक्यते । ब्रह्माण्डस्य न पीतवर्णत्वं निम्नोन्नतत्वाभावत्त्वञ्च प्रसिद्धम्, अतिपाकस्य शुष्कप्रायत्वमायात्येव, सरसस्य गुरुताय· पर्यवसानापत्तेश्च ।

सरसीव समाभाति जम्बीरं सुपचेलिमम् ।
आदिकारणतोयोघे प्लवद् ब्रह्माण्डमण्डलम् ।

पूर्वोक्तस्य जम्बीरस्योपमानत्वे ब्रह्माण्डस्योपमेयत्वेऽपि उपमेयापेक्षया उपमानस्य प्रमाणेन न्यूनतादोषं प्रतिपादयति—**एतस्यैव**● पूर्वार्धेन लिङ्गवैपरीत्यस्योत्तरार्धेन लिङ्गसङ्ख्याभ्यां वैपरीत्यस्योदाहरणमाह—**द्राक्षा**● बिम्बप्रतिबिम्बभावप्रयोज्योपमायामुपमाने धर्मस्य न्यूनतामाह—**वामा**● शुभ्राङ्गोभाललोचन उपमेयः । शरत्कालिको मेघ उपमानम् । मेघे विद्युत्, शिवे वामा पार्वती, परं शिवे ललाटनेत्रं तत्स्थाने मेघे किमपि वस्तु नास्ति तद्दोषः । परिवर्तने दोषाभावमाह—**भगवान्**● । उपमाने धर्माधिक्योदा-

'विष्णुवक्षःस्थितो भाति नितरां कौस्तुभो मणिः ।
अङ्गारक इवानेकतारके गगनाङ्गणे ॥'

अत्र तारकाणां बिम्बाभावादाधिक्यम् ।

'विष्णोर्वक्षसि मुक्तालिभासुरे भाति कौस्तुभः' इत्यर्थे तु न दोषः ।

अत्र विशेषणविशेषणयोर्मुक्तालितारकागणयोर्बिम्बप्रतिबिम्बभावेन वक्षोगगनाङ्गणयोर्विशेषणयोर्बिम्बप्रतिबिम्बभावः, तन्मूला चोपमा ।

'रराज राजराजस्य राजहंसः करस्थितः ।
हस्तनक्षत्रसंसक्त इव पूर्णो निशाकरः ॥'

अत्र रराजेति प्रतिपाद्ये भूतकालावच्छिन्नक्रियाविशेषे राजहंसस्यान्वय इव न निशाकरस्येत्यनुपपद्यमानकालघटितत्वं धर्मस्य ।

रणाङ्गणे रावणवैरिणो विभोः
शराः समन्ताद् बलिता विरेजिरे ।

---

हरणमाह **विष्णु**● । अङ्गारकः कुजो भौमः । अनेकतारक इत्यस्य बिम्ब उपमेये नास्ति । परिवर्तने दोषाभावमाह **विष्णो**● अङ्गारककौस्तुभयोरुपमायां बिम्बप्रतिबिम्बभावादभेदमुपगता वक्षोगगनाङ्गणधर्मौ साधारणौ । तयोश्चाभेदाय मुक्तावलितारकागणयोर्बिम्बप्रतिबिम्बभावः । तदेवाह **अत्र**● भूतकालिकक्रियारूपसाधारणधर्मस्योपमाने अन्वयाभावं दोषमाह—**रराज**● भूतकालिकी दीप्तिक्रिया, राजृदीप्तौ धातुः । राजराजः कुवेरः हस्तनक्षत्रे शरदि यदा सूर्यो भवति तत्कालिकः चन्द्रः । **अनुपपद्यमान**● अनुपपद्यमानः कालो भूतकालस्तद्घटिता तदवच्छिन्ना दीप्तिक्रिया तादृशस्य निशाकरस्य दीप्तिक्रिया वर्तमानैव, न भूतकालिकीति भावः । एतादृशमेवोदाहरणान्तरमाह—

निदाघमध्यंदिनवर्तिनोऽम्बरे
सहस्रभानोः प्रखराः करा इव ॥'

यथा वा—

'आगतः पतिरितीरितं जनैः शृण्वती चकितमेत्य देहलीम् ।
कौमुदीव शिशिरीकरिष्यते लोचने मम कदा मृगेक्षणा ॥'

अत्र शृण्वतीति शत्रा प्रत्यायितेन श्रवणसमकालमेव प्रियया देहल्यागमनमित्यर्थेनातिशयोक्त्यात्मना गमितस्त्वरातिशयस्तद्गतमौत्सुक्यातिशयं पुष्णाति । कौमुद्युपमा तु तत्परिपोषितं प्रधानीभूतं प्रियगतमौत्सुक्यम् । चकितमित्यागमनविशेषणमपि वस्तुतो विचार्यमाणमीक्षणविशेषणीभवत्तस्यैवानुकूलम् । इति स्थिते भविष्यत्कालावच्छिन्नशिशिरीकरणस्य साधारणधर्मस्योपमेयान्वितत्वमिव नोपमानान्वितत्वम् ।

---

**रणाङ्गणे**● रावणवैरिणो रामस्य बलितास्तीक्ष्णाः, **निदाघ**● ग्रीष्ममध्याह्नवर्तिनः प्रखरास्तीक्ष्णाः सहस्रभानोः सूर्यस्य कराः किरणाः । ध्वनिकाव्ये दोषमिमं ददाति **आगतः**● कस्यचिद्विदेशस्थितस्य नायकस्य स्वनायिकादर्शनोत्सुकतावर्णनपरम् । पतिः आगत इति वचः जनैः ईरितं कथितं चकितं ससंभ्रमं द्वारमेत्य शृण्वती मृगेक्षणा, कौमुदी ज्योत्स्ना इव मम लोचने कदा शिशिरीकरिष्यते तर्पयिष्यति । शृण्वतीत्यत्र वर्तमानकालार्थशत्रा वचःश्रवणद्वारागमनयोः कार्यकारणभूतयोः पूर्वोत्तरभावेन वर्तमानयोः समकालिकत्वं द्योत्यते । सैवातिशयोक्तिरलङ्कारः । तया त्वरातिशयस्तेनापि नायिकाया औत्सुक्यातिशयो व्यज्यते । स च कौमुद्युपमया व्यज्यमानस्य प्रधानीभूतस्य वाक्यार्थस्य नायकौत्सुक्यस्य पोषकः । चकितमिति आगमनविशेषणमपि विचारपर्यवसाने ईक्षणविशेषणमेव प्रतिभाति । अतः ससम्भ्रमेक्षणमपि नायिकौत्सुक्यमेव पुष्णाति । अतो नायिकौत्सुक्यपोषितं नायकौत्सुक्यं प्रधानीभूतं व्यङ्ग्यम्, अतो ध्वनिकाव्यमिदम् । दोषसमन्वितं करोति एवं, **स्थिते**● उपमाने उपमेयान्वितमध्यमपुरुषा-

'एतावति महीपालमण्डलेऽवनिमण्डन ।
तारकापरिषन्मध्ये राजन् राजेव राजसे ॥'

अत्र क्रियायां सम्बोध्योपमेयान्वय इव नोपमानान्वयः ।

'राजेव सम्भृतं कोषं केदारमिव कर्षकः ।
भवन्तं त्रायतां नित्यं भयेभ्यो भगवान् भवः ॥'

अत्र प्रार्थ्यमानत्राणकर्तृत्वमुपमेये भव इवोपमानयो राज-कर्षकयोर्नास्ति, तयोस्त्राणकर्तृत्वस्य सिद्धत्वात् ।

यदि तु त्रायते इति प्रार्थनानिर्मुक्तं त्राणकर्तृत्वमुच्यते तदा धर्मस्य साधारणत्वान्न दोषः ।

अथ त्रायत इति प्रार्थ्यमानतानिर्मुक्तेऽपि त्राणकर्तृत्वे न साधारणत्वम्, प्रार्थ्यमानताया इव विधेयतानुवाद्यत्वयोर्भेद-कत्वादिति चेत् । सत्यम् । इह हि धर्मलोपरहितायामुपमायां धर्मवाचकशब्दप्रतिपाद्यैः प्रार्थनाभूतभविष्यद्वर्तमानत्वादिभि-र्विशेषणैर्विशिष्टधर्मस्योपमानोपमेयसाधारण्याभावे प्रयोजका-भावान्नोपमानिष्पत्तिरिति निर्विवादम् । तत्र विधेयत्वानुवाद्य-त्वाभ्यां शब्देनानिवेदिताभ्यां विषयताभ्यां विशिष्टस्य धर्मस्य

---

न्वयानुपपत्तिं दोषमाह—एतावति● राजा इव चन्द्र इव । उपमाने उपमेया-न्वितविध्यर्थप्रार्थनायाः सम्बन्धाभावं दूषणमाह—राजेव● राजा संभृतम् अर्जितं कोषं यथा त्रायते । कर्षकः कृषीवलः । त्रायते इति पाठेऽपि उद्देश्य-विधेयभेदेन त्राणकर्तृत्वस्य भेदं शङ्कते—अथ● राजकर्षकनिष्ठस्य त्राण-कर्तृत्वस्यानुवाद्यत्वाद् भवनिष्ठस्य च विधेयत्वात् । अस्ति हि उद्देश्यविधेययो-र्भेदकता, परं न तत् काव्यसरणिसिद्धम्, साधारणधर्मस्यासाधारण्यसम्पादक-मित्याशयेनाह—सत्यम् इह हि● यदि उद्देश्यत्वविधेयत्वयोरपि असाधारण्य-सम्पादकताङ्गीक्रियेत तदा सर्वत्रोपमाननिष्ठस्यानुवाद्यत्वात्, उपमेयनिष्ठस्य विधेयत्वात् प्रसिद्धे क्वाप्युपमायां धर्मः साधारणतां न भजेतेत्यभिप्रायवानाह—

यदि नास्ति साधारण्यम्, मास्तु नाम। न ह्युदासोनैर्विशेषणैर्विशिष्टस्य धर्मस्य साधारण्यमपेक्षितम्, अपि तु धर्मवाचकशब्दनिवेदितैः। एवं चन्द्रवत् सुन्दरं मुखमित्यत्रापि सुन्दरत्वस्योपमानेऽनुवाद्यत्वे उपमेये च विधेयत्वेऽपि न साधारण्यहानिः।

ननु—

'नीलाञ्चलेन संवृतमाननमाभाति हरिणनयनायाः।
प्रतिबिम्बित इव यमुनागभीरनीरान्तरेणाङ्कः॥'

---

**एवम्** ● उद्देश्यतां विधेयताञ्च मूलोक्तविषयताशब्देन न जानाति म० मो० पण्डित इति ध्येयम्। पूर्वोक्तेषु कालघटितधर्मस्यानन्वये ममप्रकाशकारः। एषु सर्वेषु भूतभविष्यत्तत्तत्पदार्थानामेवोपमानीकरणेनान्वयस्य सम्भवोऽस्त्येवेति चिन्त्यान्येतान्युदाहरणानि। त्यक्ष्यामि वैदेहसुतां पुरस्तात् समुद्रनेमिं पितुराज्ञयेव इत्याद्युदाहर्तुमुचितम् इत्याह। पण्डितराजस्य तु एषोऽभिप्रायः प्रतिभासते। उक्तेषु पद्येषु साधारणतयोपात्ताः पदार्था उपमानीकृताः, कथं भूतभविष्यत्तया भासेरन्निति विचारे कालान्वयस्यानुपपत्त्या कल्प्यते तादृशमुपमानमिति वाच्यम्, तदा उपमाकृतचमत्कारे तादृशमानसव्यापारव्यवधानसम्पादनमेव दोष इति। त्यक्ष्यामीत्यादिपद्येऽपि त्यागवीरस्य पूर्वकृतत्यागस्योपमानता यथा भविष्यति त्यागे सत्यत्वद्योतनेन दृढतां सम्पादयति न तथा भविष्यत्यागस्योपमानता। स्वयमपि असिद्धतया वीरत्वख्यापकत्वासम्भवात्। कृतसमरसमारम्भविजयस्य विजयान्तरप्रयाणवर्णने स्थिरोत्साहस्य स्फूर्तिर्यथा न तथा अकृतविजयस्य विजयाय भीषणसङ्गरस्यापीति सहृदहृदयानुभवसिद्धम्। अतोऽत्र भूतकालिकोपमानस्य चमत्कारोत्कर्षकतैव। एवञ्च पूर्वकालिकः पितुराज्ञाप्रयोज्यो मम यथा समुद्रनेमित्यागस्तथा भविष्यत्कालिको वैदेहसुतात्याग इति वाक्यार्थबोधः। अवश्यंभावित्वादिसाधारणमूह्यम्।

उपमाने साक्षादुपात्तस्य प्रतिबिम्बस्य उपमेये साक्षादुपात्त एव धर्मो बिम्बतां भजते उत परम्परयाप्युपात्तो मानसबोधविषयोऽपि। इति विचारमवतारयति नीलाञ्चलेन **प्रतीक** ● हरिणनयनया नीलाञ्चलेन नीलशाट्या संवृतमाच्छादितम् आननमुपेयम्। यमुनाया गभीरे नीरे प्रतिबिम्बित एणाङ्कः मृगाङ्कः

इत्यत्रोपमाने चन्द्रे योगमर्यादया भासमान एणरूपोऽङ्क आननरूपोपमेयविशेषणस्वबिम्बाभावात् कस्य प्रतिबिम्बः स्यात् । अत आधिक्यापादकतया दोषः । न च हरिणनयनसदृशस्य नयनस्योपादानात्तस्यैव बिम्बस्य प्रतिबिम्बः स्यादिति वाच्यम्, तादृशनयनस्य बहुव्रीह्यर्थकान्ताविशेषणतया आननाविशेषणत्वेन बिम्बत्वाभावादिति चेत्, मैवम्; शब्देनाननविशेषणत्वेन तादृशनयनस्याप्रतिपादनेऽपि कान्ताविशेषणत्वेनैवाननवृत्तित्वस्यापि प्रतिपत्तेः । न ह्याननमविषयीकृत्य कान्तां विशेष्टुमीष्टे नयनम्, अनुभवविरोधात् ।

तथापि समभिव्याहारविशेषमापन्नेन शब्देनाप्रतिपादनाच्छाब्दे बोधे नाननस्य नयनविशिष्टत्वेन विषयत्वमिति चेत् ।

संसर्गत्वे बाधकाभावात् स्वविशिष्टाननसंर्गेण तादृशनयनस्य कान्ताविशेषणत्वात् । यथाकथञ्चिदुपमेयवृत्तिताज्ञानस्य बिम्बताप्रयोजकत्वात् ।

---

उपमानम्, आभाति साधारणम् । **योगमर्यादया●** बहुव्रीहिसमासेन, **आनन●** आननरूपं यदुपमेयं तद्विशेषणं स्वस्य एणाङ्कस्य बिम्बकस्य प्रतिबिम्ब एणाङ्क इति शेषः । प्रतीक **शब्देनाननविशेषणेत्वेन●** आननं कान्ता विशेषितं कान्ताया विशेषणं नयनमतः परम्परया आनने विशेषणं नयनं संजातमतः सम्भवति बिम्बतेति भावः । ननु भवतु परम्परा आनने नयनं विशेषणं परं तादृशं शब्दान्नोपस्थाप्यते इति शङ्कते **तथापि●** । **संसर्गत्वे●** शाब्दबोधीया विषयता त्रिविधा प्रकारता विशेष्यता संसर्गता च, आद्ययोर्नयनविशिष्टाननेऽभावेऽपि संसर्गता अक्षतैव । अतः शाब्दविषयो नयनविशिष्टमाननं सञ्जातमतो बिम्बता तस्य निर्वहतीति भावः । नायं नियमो बिम्बः प्रकारविशेष्यान्यतर एव, किन्तु संसर्गोऽपि इत्याह यथाकथञ्चित् 'नहि संसर्गतया भासमानस्य शाब्दत्वमिति मर्मप्रकाशकृतो भ्रामकस्तदनुवादिनो भाषा-

यद्वा कान्ताविशेषणतया ता शनयनयोः शाब्दे बोधे वृत्ते पश्चादाननस्य तद्विशेष्यतया वैयञ्जनिके मानसे वा बोधे बाधकाभावात्। एवं च तादृशवाक्यप्रयोज्ये ज्ञाने उपमेयविशेषणतया भानस्य तादृशनयनस्य बिम्बस्य सत्त्वात्तदर्थं च चन्द्रगतस्यैणरूपस्याङ्कस्य प्रतिबिम्बतयोपादानमावश्यकमेवेति नाधिक्यं दोषः।

कविसमयसिद्धतया चमत्कारापकर्षकत्वाभावेन लिङ्गभेदोऽपि नात्र दोषः।

एवं च कविसमयसिद्धतया प्रकारान्तरेण वा प्रागुक्तानां दोषाणां चमत्कारानपकर्षकत्वे नास्त्येव दोषत्वम्।

यथा—

'नवाङ्गनेवाङ्गणेऽपि गन्तुमेष प्रकम्पते।
इयं सौराष्ट्रजा नारी महाभट इवोद्भटा ॥'

---

कुतश्च शाब्दसरणिसेवाविरहविजृम्भितः। शाब्दत्वं शाब्दविषयता सा च संसर्गता नाम्नी वर्तत एव, संसर्गस्य पदार्थद्वयस्यापि वाक्यशक्यता वैयाकरणनये, पदशक्यता चाभिहितान्वयवादादीनां प्रसिद्धैव। अतः शब्दादुपस्थितिः संसर्गस्याक्षतैव, नैयायिकैरपि पदार्थद्वयस्यसं सर्गः शब्दान्नोपतिष्ठत इत्यभ्युपेयते। विशिष्टशक्तिस्थले विशेषणविशेष्यसम्बन्धस्तु शक्य एव तेषामपि मते। प्रकृते समासे तु विशिष्टे लक्षणामङ्गीकुर्वतां नैयायिकानामपि मते संसर्गस्य शब्दादुपस्थितिरस्त्येवेति। किन्तु टीकास्थशाब्दत्वमित्यस्य शब्दप्रसिद्धवृत्त्यननुकूलत्वम्। प्रसिद्धा वृत्तिरमिधा निरूढलक्षणा च। सा च तादृशेऽर्थे नास्ति। स्वारसिकलक्षणा तु अगतिकगतिः परकीयपद्ये न समीचीना, दोषान्तरेण दोषोद्धारणं न समीचीनमत आह—यद्वा● व्यञ्जनावृत्त्यनङ्गीकर्तॄणां मते मानसे तथा चोपमेयविशेषणतया न शाब्दबोधविषयतया नियता बिम्बता, अपि तु यथाकथञ्चिदपि उपमेयविशेषणतया ज्ञातता नियतेति भावः। लिङ्गभेददूषणमुद्धरति कवि●। नवाङ्ग● एष पुरुष उपमेयः, नवाङ्गनोपमानम्।

एवमन्यत्रापि ज्ञेयम्।
शेषं स्मरणालङ्कारप्रकरणे विकल्पप्रकरणे च वक्ष्यामः।
इत्युपमानिरूपणसंक्षेपः।
अथास्या एव भेद उपमेयोपमा निरूप्यते—

---

एवञ्च लिङ्गभेदो न सर्वत्र दूषणमिति भावः। **शेषम्**● स्मरणालङ्कारप्रकरणे सामान्यतो दोषस्य विकल्पप्रकरणे लिङ्गवचनभेददोषस्य च विचारः। **इत्यु**●। ननु चन्द्रालोके विचारितयोः 'अनेकस्यार्थयुग्मस्य सादृश्यस्तबकोपमा। श्रितोऽस्मि चरणौ विष्णोर्भृङ्गस्तामरसाविव ॥१॥ स्यात्सम्पूर्णोपमा यत्र द्वयोरपि विधेयता। पद्मानीव विनिद्राणि नेत्राण्यासन्नहर्मुखे ॥ २ ॥ अविचारणान्न्यूनते-त्याशङ्क्याह **संक्षेपः**● अयं भावः विशेषेण विचारणीया विशेषा अत्र विचा-रिताः। तत्साहाय्येनान्येऽपि भेदाः स्वयमूहनीयाः। सूक्ष्मातिसूक्ष्मविचारे तु अनन्ता भेदाः विवेचितुमशक्या एव। द्वितीये उदाहरणे तु उभयोर्विधेयता न स्फुटा, अहर्मुखे विनिद्राणि पद्मानीव नेत्राणि तादृंशि इति व्याख्यानेऽपि क्षतिविरहः। इत्युपमानिरूपणम्।

## २ अथ उपमेयोपमानिरूपणम्

ननु प्रकाशादिषु उपमाया अनन्तरमनन्वयं निरूप्यैवोपमेयोपमा निरूपिता। द्वितीयसदृशव्यवच्छेदफलकस्यानन्वयस्य निरूपणानन्तरमेव तृतीयसदृशव्यवच्छेद-फलिकाया अस्या निरूपणं सङ्गतञ्चेति कथं व्युत्क्रमः क्रियते इति शङ्कां निर-सितुमाह **अथास्याः**● उपमाया इत्यर्थः। तथा च प्रक्रान्तायामुपमायां तद्-भेदस्य निरूपणं यथा सङ्गतं न तथा तद्भिन्नस्यानन्वयस्य। प्रकाशादिषु च उपमाभिन्नैवोपमेयोपमा। अत्र च उपमालक्षणे उपमात्वेन प्रतिज्ञातेति भावः। उपमेयेनोपमा उपमेयप्रतियोगिकं सादृश्यमित्यर्थः। उपमेयता च तत्सादृश्य-निरूपितैव प्रत्यासत्त्या ग्राह्या। अयं भावः—अस्या उदाहरणेषु वाक्यद्वयेनापि प्रतिपाद्यं सादृश्यमेकमेव। यश्च प्रतियोगी स एवानुयोगी धर्मभेदेन सादृश्यं भिद्यते। धर्मभेदे नेयमङ्गीक्रियते इति स्फुटं मूलम्। उपमायां सादृश्यप्रतियोग्य-नुयोगिनोर्भेदः। अनन्वये तयोरभेदेऽपि प्रतियोगितावच्छेदकानुयोगितावच्छेद-कयोरप्यभेदः। अत्र च तयोर्भेद इति विवेकः। तथा चोपस्कारकं साधारण-धर्मैकप्रयोग्यं धर्मविशिष्टं सादृश्यं सुन्दरमस्याः लक्षणं निष्पन्नम्। वैशिष्ट्यञ्च

तृतीयसदृशव्यवच्छेदबुद्धिफलकवर्णनविषयीभूतं परस्परमुपमानोपमेयभावमापन्नयोरर्थयोः सादृश्यं सुन्दरमुपमेयोपमा ।

'तडिदिव तन्वी भवती भवतीवेयं तडिल्लता गौरी' इत्यत्र परस्परोपमायामतिव्याप्तिवारणाय भूतान्तम् ।

अत्र तानवगौरिमभ्यामनुगामिधर्माभ्यां प्रयोजितमुपमाद्वयं न तृतीयं सदृशं व्यवच्छिनत्ति । एकेन धर्मेणैकप्रतियोगिके परानुयोगिके सादृश्ये निरूपितेऽपरप्रतियोगिकस्यैकानुयोगिकस्यापि तेन धर्मेण सादृश्यस्यार्थतः सिद्धतया शब्देन पुनस्तदुक्तिः स्वनैरर्थक्यपरिहाराय तृतीयसदृशव्यवच्छेदमाक्षिपति । प्रकृते चैकेन तानवरूपेण धर्मेण तडित्प्रतियोगिके कामिन्यनुयोगिके सादृश्ये निरूपिते तेनैव धर्मेण कामिनीप्रतियोगिकस्य तडिदनुयोगिकस्य सादृश्यस्यार्थतः सिद्धावपि न गौरत्वेन धर्मेण सिद्धिरिति तदर्थमुपात्तस्य द्वितीयसादृश्यवचनस्य न तृतीयसदृशव्यवच्छेदफलकत्वम् ।

'सदृशी तव तन्वि निर्मिता विधिना नेति समस्तसम्मतम् ।
अथ चेन्निपुणं विभाव्यते मतिमारोहति कौमुदी मनाक् ॥'

---

स्वावच्छिन्नप्रतियोगित्वानुयोगित्वनिरूपकत्वम्, स्वभिन्नधर्मावच्छिन्नप्रतियोगित्वानुयोगित्वनिरूपकत्वम् उभाभ्यां सम्बन्धाभ्याम् । द्वितीयसम्बन्धाभावादनन्वयव्यवच्छेदः । भूतान्तस्य लक्षणस्थपदस्य साधारणधर्मैक्ये तात्पर्यम् । परस्परादिपदस्य सम्बन्धद्वये तात्पर्यम् । सादृश्यद्वयस्योपमेयोपमात्वाङ्गीकारे तु सादृश्यविशिष्टं सादृश्यं परिष्कारः । वैशिष्ट्यञ्च स्वोपमानोपमेयकत्वं स्वोपमेयोपमानकत्वं स्वप्रयोजकधर्मप्रयोज्यत्वमेतत्त्रितयसम्बन्धेन । **तृतीय**● तृतीयस्य स्वप्रतियोग्यनुयोगिभिन्नस्य सदृशस्य यो व्यवच्छेदोऽभावस्तद्विषयिणी या बुद्धिस्तदेव फलं यस्य वर्णनस्य तद्विषयीभूतमित्यर्थः । प्रथमविशेषणस्य धर्मैकप्रयोज्यत्वतात्पर्येण फलं दर्शयति **तडिदिव**● । **उपमाद्वयम्**● अनेनोपमेयोपमायामेकैवोपमेति ध्वनिता । धर्मैकप्रयोज्यस्य सादृश्यस्य वर्णने एव सदृशान्तरस्य व्यवच्छेद इति स्फोरयति **एकेनेत्यादिना**● । **सदृशी**● हे तन्वि तव

इति तृतीयसदृशव्यवच्छेदफलकवर्णनविषये सादृश्येऽतिव्याप्तिवारणाय परस्परमिति ।

लिङ्गवचनभेदादिदुष्टसादृश्यवारणाय सुन्दरमिति

अथेदमुदाह्रियते—

'कौमुदीव भवती विभाति मे कातराक्षि भवतीव कौमुदी ।
अम्बुजेन तुलितं विलोचनं लोचनेन च तवाम्बुजं समम् ॥'

इयं च तावद् द्विविधा—उक्तधर्मा व्यक्तधर्मा च । उक्तधर्मा तावदनुगाम्यादिभिः प्रागुक्तैर्धर्मैरनेकधा ।

अनुगामी धर्मो यथा—

'निखिले निगमकदम्बे लोकेष्वप्येष निर्विवादोऽर्थः ।
शिव इव गुरुर्गरीयान् गुरुरिव सोऽयं सदाशिवोऽपि तथा ॥'

---

सदृशी विधिना न निर्मिता इति सर्वेषां सम्मतम् । अथ निपुणं यथा स्यात्तथा विचार्यते तदा मनाक् ईषत् कौमुदी मतिमारोहति बुद्धिविषयोभवति कौमुद्येव किञ्चित्सादृश्यं धत्ते नान्यदिति भावः । तथा च कौमुद्या सह उपमानोपमेयभाववर्णनाभावान्नातिव्याप्तिरिति भावः । **कौमुदी**● हे कातराक्षि ! भयेन विह्वलाक्षि, भवती मे चन्द्रिका इव विभाति । चन्द्रिका च भवती इव । विभाति । तव नयनं कमलेन तुलितम्, कमलञ्च लोचनेन सदृशमित्यर्थः । अत्र तुलितं सममिति उपमावाचकवैलक्षण्यं दोष इति मर्मप्रकाशकारः । अन्ते श्रौत्यार्थीवैलक्षण्यस्यैव दोषतयोक्तत्वेन शब्दभेदे न दोषः, किन्तु श्रौत्यार्थ्यादिवैलक्षण्ये एवेति ग्रन्थकृतां तात्पर्यं प्रतीमः । कातरे अक्षिणी यस्याः, सेति बहुव्रीहौ समासान्तोऽच् । **उक्त**● अभिधया प्रतिपादितो धर्मो यस्याः सा । **व्यक्त**● व्यञ्जनाप्रतिपादितधर्मा । **अनुगाम्यादीति**● आदिना बिम्बप्रतिबिम्बोपचरितशब्दात्मकाः । **निखिले**● सम्पूर्णे वेदसमूहे लोकेषु अपि एष अर्थो निर्विवादसिद्धो यत् शिव इव गुरुः अतिशयेन गुरुः तथा सोऽयं सदाशिवोऽपि भगवान् गुरुरिव गरीयान् । इति गरीयानित्यत्र प्रियस्थिरेत्यादितद्धितसूत्रेण गरादेशे इयसुन्नन्तः । अत्रैकैव गुरुता भिन्नतयोपात्ता न

बिम्बप्रतिबिम्बभावमापन्नो यथा—

'रमणीयस्तबकयुता विलसितवक्षोजयुगलशालिन्यः ।
लतिका इव ता वनिता वनिता इव रेजिरे लतिकाः ॥'

अत्र रमणीयत्वविलसितत्वाभ्यां विशेषणाभ्यां युतत्वशालित्वाभ्यां च विशेष्याभ्यां परस्परं वस्तुप्रतिवस्तुभावमापन्नाभ्यां पुटितः स्तबकस्तनरूपः परस्परं बिम्बप्रतिबिम्बभावापन्नो धर्मः।

उपचरितो यथा—

'कुलिशमिव कठिनमसतां हृदयं जानीहि हृदयमिव कुलिशम्।
प्रकृतिः सतां सुमधुरा सुधेव हि प्रकृतिरिव च सुधा ॥'

केवलशब्दात्मको यथा—

'अविरतचिन्तो लोके वृक इव पिशुनोऽत्र पिशुन इव च वृकः ।
भारतमिव सच्चित्तं सच्चित्तमिवाथ भारतं सकृपम् ॥'

---

वस्तुतो भिन्नेति अनुगामिनी। **रमणीय**● रमणीयैस्स्तवकैर्युता लतिका इव विलासयुतेन वक्षोजयोस्स्तनयोर्युगलेन शोभाशालिन्यो वनिता रेजिरे शुशुभिरे। तादृश्यो लतिकाश्च वनिता इव रेजिरे। **वस्तुप्रतिवस्तु**● वस्तुतोऽभेदेऽपि विशेषणविशेष्यभेदप्रयुक्तभेदमापन्नयोरभेदादित्यर्थः। **बिम्बप्रति**● वस्तुतो भिन्नयोरपि स्तबकस्तनयोः साधारण्यसम्पादनायाभेदारोप इति भावः। **कुलिशम्**● असतां दुर्जनानां हृदयं वज्रमिव कठिनं जानीहि। असतां हृदयमिव कुलिशं कठिनं जानीहि। काठिन्यमन्यत्र स्थितं हृदयेऽप्रसिद्धं हृदय आरोप्यते। अत उपचरितो धर्मः। सतां स्वभावः सुधा इव सुमधुरः, सुधाऽपि सज्जनस्वभाव इव सुमधुरा। अत्रापि प्रकृताववर्तमानस्य माधुर्यस्य प्रकृतावारोपः। **अवि**● लोके पिशुनः वृकः शृगालो मेषो वा तत्सदृशः न विरता चिन्ताऽस्यैवंभूतः। वृकश्च अवौ मेषे रता चिन्ता यस्य तादृशो भवति। अत्र साधारणधर्मान्तरं नास्ति, किन्तु अविरतचिन्ता इति शब्दमात्रस्य साधारण्यम्। सतां चित्तं महाभारतमिव कृपया सहितम्।

व्यक्तधर्मो यथा—

'वारिधिराकाशसमो वारिधिसदृशस्तथाऽकाशः ।
सेतुरिव स्वर्गङ्गा स्वर्गङ्गेवान्तरा सेतुः ॥'

अत्रापारत्वादिर्व्यज्यमानो धर्मः ।

एषा सर्वाऽपि स्फुटे वाक्यभेदे प्रपञ्चिता ।

आर्थे तु वाक्यभेदे—

'अभिरामतासदनमम्बुजानने नयनद्वयं जनमनोहरं तव ।
इयति प्रपञ्चविषयेऽपि वैधसे तुलनामुदञ्चति परस्परात्मना ॥'

अत्र परस्परात्मना तुलनामुदञ्चतीति संक्षिप्ताद्वाक्या-दिदमेतेनैतच्चानेन तुलनामुदञ्चतीति वाक्यद्वयं विचारकमुल्लसति।

एवं पूर्णालुप्तादयोऽप्यस्या उपमाया इव प्रायशः सर्वेऽपि भेदाः सम्भवन्ति । ते चामुनैव दिशा सुबुद्धिभिरुन्नेतुं शक्या इति नेह निरूप्यन्ते ।

चित्रमीमांसाकृतस्तु प्राचीनं लक्षणमव्याप्त्यतिव्याप्त्यादिभि-र्दूषयित्वा—

---

भारतञ्च तथा सतां चित्तमिव वर्तते । अत्र महाभारते कृपाचार्यः सतां चेतसि च दयेति साधारणधर्मान्तरस्याभावात् सकृपेति शब्दस्यैव साधारण्यम् ।

वारिधि● समुद्र आकाशसमः, तथा आकाशश्च वारिधिसदृशः । अत्र च पूर्वोक्ताः केचिदपि धर्मा नोपात्ताः, किन्तु अपारत्वादिधर्मो व्यञ्जनया बुध्यतेऽतो व्यक्तधर्मस्योदाहरणम् । अन्तरा आकाशमध्ये स्वर्गगङ्गा सेतुरिव, तथा वारिधिमध्ये सेतुः स्वर्गङ्गेव वर्तते । अत्रापि साधारणो धर्मो नोपात्तः, अपि तु व्यञ्जनया दुर्घटत्वादिः प्रतीयते, अतो व्यक्तधर्मस्योदाहरणम् । **अभिराम●** हे अम्बुजानने अभिरामतायाः सौन्दर्यस्य स्थानं जनमनसां रमणं तव नयनयुग्मम् इयति एतावति महति वैधसे ब्रह्मनिर्मिते प्रपञ्चविषये जगत्यपि सम्पूर्णे परस्परात्मना अन्योऽन्येन सादृश्यं गच्छति, न तु अन्यत् किमपि अनयोः सादृश्यं भजते इति भावः । परस्परपदे गर्भितं वाक्यभेदं स्फोरयितुं विवरणं प्रदर्शयति । **अत्र●** । **प्राचीनम्●** उपमानोपमेयत्वं द्वयोः पर्यायतो

'अन्योन्येनोपमा बोध्या व्यक्त्या वृत्त्यन्तरेण वा ।
एकधर्माश्रया या स्यात् सोपमेयोपमा मता ॥'

इति स्वयं लक्षणमाहुः । अस्यार्थः संक्षेपेण सपदकृत्य-स्तदुक्तरीत्या सहृदयानां सौकर्यायोच्यते—अन्योन्येनेति । अन्योन्य-प्रतियोगित्वविशिष्टा व्यक्त्या व्यञ्जनाव्यापारेण वृत्त्यन्तरेण शक्त्या वा बोध्या वेद्या एकधर्माश्रया एकधर्मप्रयोज्या या उपमा सा उपमेयोपमा मतेत्यन्वयः । अन्योन्येनेति विशेषणादिदं तच्च सममित्युभयविश्रान्तोपमाया निरासः । अत्रान्योन्यप्रतियोगिकत्वस्य व्यञ्जनव्यापारमात्रगम्यत्वेनोप-मायाश्च शक्तिवेद्यतया परस्परनिरपेक्षेणैकेन व्यापारेणान्योन्य-प्रतियोगिकत्वविशिष्टायास्तस्या अबोधनात्, परस्परनैरपेक्ष्य-स्यात्र वाकारेणाभिधानात् । एकधर्माश्रयेति विशेषणात् 'रजोभिर्भूरिव द्यौर्घनसन्निभैर्गजैश्च द्यौरिव भूः' इति कस्यचित् पद्यस्यार्थे परस्परोपमायां नातिव्याप्तिः, तत्रोपमाप्रयोजक-धर्मैक्याभावात् । भूतलोपमानिकायां प्रयोजकस्य रजसामनु-

---

यदि । उपमेयोपमा सा स्याद्द्विविधैषा प्रकीर्तिता । क्वचित् 'उपमेयोपमा सा स्यादव्यङ्ग्यत्वविशेषिता' इत्यपि पाठः । अत्र पर्यायत इत्यस्य क्रमश इत्यर्थः । उपमानोपमेयत्वस्य युगपत्प्रतिपादके अग्रे उदाहरिष्यमाणे तद्वल्गुनेति पद्येऽव्याप्तिः । उपमयोरेकधर्मप्रयोज्यत्वे एवोपमेयोपमाया इष्टत्वात्, भिन्न-धर्मप्रयोज्यायां परस्परोपमायां रजोभिः स्यन्दनोद्धूतैरित्यत्रातिव्याप्तिर्लक्षणे एकधर्मप्रयोज्यत्वस्यानिवेशात् । **अन्योन्येन** ● तृतीयार्थः प्रतियोगित्वम् । वाशब्दो निरपेक्षत्वद्योतकः । आश्रयपदस्य प्रयोज्यत्वमर्थः । तथा च परस्पर-मुपमानोपमेयौ प्रतियोगिनौ यस्या एकधर्मप्रयोज्या केवलया व्यञ्जनया अभिधया वा तादृश्या वेद्या उपमेयोपमेति लक्षणार्थः । इदं **तच्च** ● अत्रोभयोरनु-योगित्वमेव प्रतीयते । व्यञ्जनया परस्परप्रतियोगिकत्वस्य भानेऽपि दोषं वारयति **परस्परनिरपेक्षे** ● । **अर्थे** ● अर्थभूतायामुपमायामित्यर्थः । **रजसाम्** ● रजोरूपानुगामिधर्मस्य । न चाभेदे समानवचनकत्वं शङ्क्यम्, वेदाः प्रमाणं

गामिधर्मस्य, नभस्तलोपमानिकायां प्रयोजकस्य घनसदृश-गजानां बिम्बप्रतिबिम्बभावापन्नधर्मस्य च भेदात्। व्यक्त्येति च विशेषणं व्यङ्ग्योपमेयोपमासङ्ग्रहार्थमितीदमुपमेयोपमात्व-प्रयोजकं लक्षणमिति।

तन्न।

'अहं लतायाः सदृशीत्यखर्वं गौराङ्गि गर्वं न कदापि यायाः।
गवेषणेनालमिहापरेषामेषापि तुल्या तव तावदस्ति॥'

अत्रान्योन्यप्रतियोगिकत्वविशिष्टाया उपमायास्तनुत्वादि-रूपैकधर्माश्रयाया वृत्त्यन्तरेण शक्त्या बोधनादुपमेयोपमा-त्वापत्तेः।

न चात्रान्योन्यप्रतियोगिकत्वमुपमायां न प्रतीयते, लतादि-सम्बन्धिसादृश्याश्रयत्वस्यैवास्मत्पदार्थेऽन्वयादिति वाच्यम्, 'मुखस्य सदृशश्चन्द्रश्चन्द्रस्य सदृशं मुखम्' इत्युपमेयोपमाया-मव्याप्तेः।

---

शतं ब्राह्मणा इत्यादावभेदान्वयदर्शनात्। **नभस्तलोप●** व्योमेव भूतल-मित्यत्र। हे गौराङ्गि? अहं लतायाः सदृशी इति कदापि अखर्वं महान्तं गर्वं न यायाः। इह विषये तव सदृशवस्तुनि गवेषणेनालम्, गवेषणेनापि न मिलिष्यति। तावत् तथापि एषा लता तव तुल्या अस्ति। गौराङ्गीत्यत्र नासिकोदरेत्यादिसूत्रस्थादनुक्तसमुचयार्थकाच्चकाराद् ङीष्। अहं लताया इत्यादेः लताप्रतियोगिकसादृश्याश्रयोऽहमित्यर्थः। एषाऽपि तव तुल्येत्यादे-स्त्वत्प्रतियोगिकसादृश्यानुयोगिनीत्यर्थः। अत एव परस्परप्रतियोगिकत्वमस्ति। **तनुत्व●** व्यङ्ग्येति शेषः। ननु लतायाः सदृशीत्यत्र सादृश्यविशिष्टे शक्तं सदृशीपदं विद्यते, सदृशीपदार्थस्तु न सप्रतियोगिकः, अपि तु सादृश्यमेवतः सदृशशब्दयोगे षष्ठ्या न प्रतियोगित्वमर्थः, किन्तु सम्बन्धसामान्यम्। प्रति-योगित्वार्थकरणे सदृशीपदार्थैकदेशसादृश्येऽन्वयापत्तेरित्याशङ्कते **न चात्र●**। **मुखस्य●** अत्रापि सदृशशब्दसत्त्वादव्याप्तिस्तेन सदृशीशब्दयोगेऽपि प्रति-योगिता षष्ठ्यर्थोऽगत्या चैकदेशान्वयः कार्य इति भावः।

न ह्यहं लताया इत्यत्रोपमेयोपमा भवितुमर्हति । गर्वमात्र-निरासपरत्वेनोत्तरार्धोपमायास्तृतीयसदृशव्यवच्छेदाप्रतिपत्तेः । अत एव अन्यान्यपि तव सदृशानि सन्त्येव तेषां गवेषणेन किं फलमित्येतदर्थकं गवेषणेनेत्युत्तरार्धं सङ्गच्छते । तृतीयसब्रह्म-चारिव्यवच्छेदो ह्युपमेयोपमाजीवितमित्यालङ्कारिकसिद्धान्तः । अन्यथा 'भुवस्तलमिव व्योम कुर्वन्व्योमेव भूतलम्' इत्यत्राप्युपमेयोपमात्वनिवारणप्रयासवैयर्थ्यापत्तेः ।

न च तृतीयसदृशव्यवच्छेदफलकत्वमुपमाविशेषणं वाच्यम्, विशेषणान्तरवैयर्थ्यापत्तेः । विशेषणव्यावर्त्यानामाधुनिकविशे-षणेनैव वारणात् ।

---

इष्टापत्तिं निरस्यति—**न ह्यहम्** । **संगच्छते** अन्यथोत्तरार्धैकदेशस्य तृतीयपादस्य वैयर्थ्यं स्यात् । **सब्रह्मचारि** सदृशः । उपमेयोपमा-**जीवितम्** उपमेयोपमात्वप्रयोजकमित्यर्थः । **सिद्धान्तात्** पञ्चम्यर्थहेतुत्वान्वयिनः परम्पराऽन्वेषणे क्लेशाद् यद्यस्ति तदा सिद्धान्त इत्येव सम्यक् पाठः। **अन्यथा** तादृशसिद्धान्तानङ्गीकारे, **प्रयास** एकधर्माश्रयनिवेशरूपः । साधारणधर्मस्यैक्यं विना तृतीयसदृशव्यवच्छेदाप्रतीतेरेव तत्रोपमेयोपमाया अनिष्ट-त्वात् । अहं लतायाः सदृशीत्यत्रोपमेयोपमात्वाङ्गीकारे भुवस्तलमिवेत्यादावपि तथाङ्गीकारे बाधकाभाव इत्यर्थः । दूषणमिदं मर्मप्रकाशोऽङ्गीचकार, यतो हि अनुगतानतिप्रसक्तलक्षणमात्रं तु 'सदृशस्य तृतीयस्य व्यवच्छेदाय यद्द्वयोः । अन्योन्येनोपमेयत्वमुपमेयोपमा मता' ।। इति द्रष्टव्यम् । अन्योन्येनेति विशेषणम् 'अहमेव गुरुः सुदारुणानामिति हालाहल मा स्म दृप्यः । ननु सन्ति भवा-दृशानि भूयो भुवनेऽस्मिन् वचनानि दुर्जनानाम् ।।' इति बभाण । किञ्च उपमायां विधेयत्वविशेषणेन अहं लतायाः सदृशीत्यादौ प्रसक्तिं वारयतां विश्वेश्वरविदुषां कौस्तुभटीकाऽपि प्रक्षेपिता । विधेयत्वस्य विशेषणत्वे तेनैव गर्वनिराकरण-विधेयके अहमेव गुरुरित्यादावतिप्रसक्तावप्रसक्तायाम् अन्योन्यनिवेशप्रयोजनं मर्मप्रकाशो न स्पृशेत् । अपरञ्च विधेयान्तरसत्त्वेऽपि तृतीयसदृशव्यवच्छेदफलके परस्परमुपमानोपमेयभावे उपमेयोपमां समीहमानानां पण्डितराजानां नैता-

अन्योन्यप्रतियोगिकत्वविशिष्टा उपमा एकवृत्तिमात्रवेद्येत्यप्ययुक्तमेव। 'खमिव जलं जलमिव खम्' इत्यादौ खजलयोः सादृश्यान्वये प्रतियोगित्वस्य संसर्गत्वेन वृत्त्यविषयत्वात्। वृत्तिवेद्यानां पदार्थानां संसर्गो वृत्त्यवेद्य इत्यभ्युपगमात्। अन्यथा प्रकारतापत्तेः।

यदप्यलङ्कारसर्वस्वकृतोक्तम् 'द्वयोः पर्यायेण तस्मिन्नुपमेयोपमा। तच्छब्देनोपमानोपमेयत्वप्रत्यवमर्शः। पर्यायो यौगपद्याभावः। अत एवात्र वाक्यभेदः' इति तन्न, अत्र द्वयोरिति व्यर्थम्, एकस्योपमानोपमेयात्मकत्वे 'गगनं गगनाकारम्' इत्यादौ वाक्यभेदाभावेन पर्यायाभावादेवाप्रसक्तेः।

---

वताऽविधेयत्वेन खण्डनं सम्भवति, अन्यथा मुखस्य सदृशश्चन्द्रश्चन्द्रोऽपि मुखसदृशः। उभावेव जगत्यस्मिन् पश्यामि रत्नतां गतौ। इत्यादौ रत्नताविधेयकेऽव्याप्तिप्रसङ्गः। इति विवेचनीयं सुधीभिः। **खवमिव** ● इवार्थः सादृश्यम्। खस्य सादृश्ये प्रतियोगित्वसंसर्गेणान्वयः। तच्च प्रतियोगित्वं न खपदस्य इवपदस्य वा वृत्त्या उपस्थितम्, अपि तु परस्परसमभिहाररूपाकाङ्क्षया प्रतीयते, यच्च पदादुपतिष्ठते स तु प्रकारतां विशेष्यतां वा भजते। अतोऽन्योन्यप्रतियोगिताया वृत्त्यवेद्यत्वेन अव्याप्तिदोषः। अत्र मर्मप्रकाशः कौस्तुभटीका च एकवृत्तिमात्रवेद्यत्वं वृत्तिद्वयवेद्यत्वाभावं बोधयति। तथा च प्रतियोगिताया वृत्त्यवेद्यत्वेऽपि वृत्तिद्वयवेद्यत्वं नास्त्येव। अथवा निरपेक्षैकवृत्तिजन्यप्रतीतौ यथाकथञ्चिद् भासमानत्वम् इति समर्थयामासतुः। तदपि सम्यक् परिष्कारमर्हति। इदं तच्च सममित्यत्र दोषोद्धारस्तावदालोच्यताम्। तत्रापि उपमामात्रं तु निरपेक्षयाऽभिधया प्रतिपाद्यमिति कथं दोषापगमः? प्रतियोगित्वविशिष्टा उपमा नाभिधामात्रेण प्रतिपाद्यत इति चेत्, व्यञ्जनयाऽपि प्रतियोगित्वबोधिन्या न विशिष्टं बोध्यत इति वृत्तिद्वयवेद्यत्वं विशिष्टे कथमायाति? द्वितीयमपि तथैव यथाकथञ्चिच्छब्देन वृत्त्यन्तरस्य ग्रहणे सर्वथा व्यर्थं स्यात्। तात्पर्यवृत्त्यभ्युपगन्तॄणां मते संसर्गस्य वृत्तिविषयत्वे एकवृत्तिमात्रवेद्यत्वं दुरभिधेयत्वमापतेत्। **द्वयोः** ● उपमानोपमेययोः क्रमेण परस्परमुपमानो-

यदि च स्फुटत्वार्थमुपमानोपमेयत्वयोग्यतासम्पादकलिङ्ग-वचनभेदराहित्यप्रतिपत्त्यर्थं कविसमयसिद्धिस्फोरणार्थं वा द्वयोरिति ग्रहणं स्यात्, अथापि प्रागुदीरिते 'अहं लतायाः सदृशीत्यखर्वम्' इति पद्ये प्रतिपाद्यायामुपमायामतिव्याप्तेः।

'तद्वल्गुना युगपदुन्मिषितेन तावत्सद्यः परस्परतुलामधिरोहतां द्वे।
प्रस्पन्दमानपरुषेतरतारमन्तश्चक्षुस्तव प्रचलितभ्रमरं च पद्मम्॥'

इति कालिदासपद्ये प्रतिपाद्यायामुपमानोपमेययोर्युगपदुप-मेयोपमानभावायामुपमेयोपमायां वाक्यभेदाभावादव्याप्तेश्च।

न चात्रापाततः शब्दैक्येऽपि पर्यवसितो वाक्यभेदोऽस्तीति वाच्यम्। तथापि—

'सविता विधवति विधुरपि सवितरति दिनन्ति यामिन्यः।
यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि॥'

---

पमेयभावे उपमेयोपमेति भावः। **अत एव●** पर्यायग्रहणेनैव। **अतिव्याप्तेः●** **तद्वल्गु●** तृतीयसदृशव्यवच्छेदस्य पूर्वोक्तरीत्या अप्रतीतेरिष्टापत्तेरसम्भवात्। अजावबोधाय सुतानां प्रभातवर्णनम्। तत् तस्मात्कारणाद् वल्गुना सुन्दरेण 'वल्गु स्थाने मनोज्ञे च वल्गु भाषितमन्यवत्, इति विश्वः। युगपद् उन्मि-षितेन उन्मीलितेन द्वे अपि तावत् परस्परतुलामधिरोहतां प्राप्नुताम्। एकं प्रस्पन्दमानाः कोमलाः तारा कनीनिका यस्मिन् तत् तव चक्षुषोऽन्तरमपरं प्रचलितो भृङ्गो यस्मिन् तत् कमलञ्च युगपद्विकासेन पूर्णसादृश्यलाभो भविष्य-तीति भावः। **युगपद●** पर्यायेणेति विशेषणाभावः। सविता सूर्यो विधुरिवा-चारति सर्वत्र क्विप् उद्दीपकत्वेन दुःखं ददाति। चन्द्रोऽपि सविता इव सन्तापयति। यामिन्य निशा दिनानि इव सन्तापवत्यः। दिनानि च यामिनी इव अन्यव्यावृतमनस्तया रहस्यसरण्या उद्दीपकानि। सुखदुःखवशीकृते मनसि सर्वाणि तदनुकूलानि जायन्ते। दुःखिते मनसि दुःखानुकूलानि सुखिते

इति कस्यचित् कवेः पद्ये परस्परोपमायामतिव्याप्तेः। न चेयमुपमेयोपमेति शक्यते वक्तुम्, सुखसमये दुःखदोऽपि सुखयति, दुःखसमये च सुखदोऽपि दुःखयति इत्येतावन्मात्रस्यार्थस्य विवक्षितत्वात्तृतीयसदृशव्यवच्छेदाप्रतिपत्तेः।

एवम्—

'रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसन्निभैः।
भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम्॥'

इत्यत्र परस्परोपमायामतिव्याप्तिः।

सदृशान्तरव्यवच्छेदफलकत्वेन विशिष्यमाणे तु तस्मिन्नस्मदुक्त एव पर्यवसानम्।

---

च सुखानुकूलानि भवन्ति। **विवक्षितत्वात्** ● तथा चार्थान्तरन्यास एव तात्पर्यमिति भावः। **रजोभिः** ● स्यन्दनोद्धूतै रजोभिरनुगामिधर्मैः व्योम भुवस्तलमिव कुर्वन्, तथा घनसन्निभैः गजैः बिम्बप्रतिबिम्बभावमापन्नैः भूतलं व्योमेव कुर्वन् रघुर्जगामेति शेषः। पूर्वोक्तरीत्या एकधर्मप्रयोज्यत्वाभावादुपमयोस्तृतीयसदृशव्यवच्छेदाप्रतीतेरिति भावः। सविता विधवतीत्यादिपद्ये न दोषः, सविता विधवतीत्यंशे सुखप्रदत्वस्य विधुरपि सवितरतीत्यत्र दुःखप्रदत्वस्य साधारणधर्मस्य भिन्नतया एकधर्मप्रयोज्यत्वाभावादिति अलङ्कारकौस्तुभटीका। तत्रेदं चिन्तनीयम्। यदि विरहिणामिदं वचनं तदा दुःखप्रदत्वमेव सर्वत्र साधारणम्। तदातिव्याप्तिस्तिष्ठत्येव। किञ्च तृतीयसदृव्यच्छेदफलकत्वस्यावश्यं निवेशनीयत्वे पुनरेकधर्मप्रयोज्यत्वनिवेशनं कुत्र फले व्यावर्त्यं लभेत? यत्तु कौस्तुभे रजोभिरित्यादिपद्ये घनसन्निभैरित्यस्य रजोभिरित्यत्रापि अन्वयः। तथा च घनसन्निभै रजोभिरेकत्रान्यत्र च घनसन्निभैः गजैरिति। तेन घनसन्निभत्वेन रजसां गजानाञ्च सादृश्याद्बिम्बप्रतिबिम्बभावापन्नावेव धर्मौ उभयत्र प्रयोजकाविति प्रतिपादितम्, तत्तु पण्डितराजखण्डनाभिनिवेशमात्रम्। तथाहि प्रसिद्धकविकृतौ प्रसादगुणगुम्फितेऽप्यस्मिन् पद्ये घनसंनिभैरित्यस्य रजोभिरित्यत्रान्वयः कस्मै सहृदयाय रोचते? किं वा रजसा गजस्योपमां कालिदासवर्णितां कः सचेताः विश्वसिति? किञ्च साक्षाद् भूतले

यच्च विमर्शिनीकारेणोक्तम् "स च वाक्यभेदः शाब्द आर्थश्च। तत्र शाब्दो यथा—'रजोभिः स्यन्दनोद्धूतैः' इत्यादिः। अस्याश्चोपमानान्तरतिरस्कार एव फलम्। अत एवोपमेयेनोपमेत्यन्वर्थाभिधत्वम्" इति, तत्तुच्छम्। न हि 'रजोभिः स्यन्दनोद्धूतैः' इत्यत्रोपमानान्तरतिरस्कारः प्रतीयते। द्वयोरुपमयोरेकधर्मकत्वाभावात्, आद्याया उपमाया अनुगामिधर्मप्रयोज्यत्वात्, द्वितीयायाश्च बिम्बप्रतिबिम्बभावापन्नधर्मप्रयोज्यत्वात्।

यदपि 'परस्परमुपमानोपमेयत्वमुपमेयोपमा' इति लक्षणं विधाय 'सविता विधवति—' इत्यादि प्रागुक्तपद्यं रत्नाकरेणोदाहारि, तच्च तदीयेनैव 'स चोपमानान्तरनिषेधार्थः' इति ग्रन्थेन विरुद्धम्। न ह्यस्मिन् पद्ये उपमानान्तरनिषेधः प्रतीयत इति प्रागेवावेदनात्। प्रतीयत एवेति चेत्, पुनरपि पृच्छ हृदयमेव स्वकीयम्।

इत्यलं विवादेन।

इयं चोपमेयोपमा यदि कस्याप्यर्थस्योत्कर्षाधायिका तदालङ्कारः। अन्यथा तु स्ववैचित्र्यमात्रपर्यवसितेति।

एवमलङ्कारान्तरेऽपि ज्ञेयम्।

अथ ध्वन्यमानेयमुदाह्रियते—

'गाम्भीर्येणातिमात्रेण महिम्ना परमेण च।
राघवस्य द्वितीयोऽब्धिरम्बुधेश्चापि राघवः॥

---

वर्तमानानां रजसां स्फुटे साधारण्ये साधारण्यसम्पादनायैव गजघनसादृश्यवर्णनं न १.विकुलं कोमलं स्पृशत्यलमसद्विवेचनविद्रोहणावेशेन। **उपमेयेनोपमा●** पूर्वं कस्यचिदुपमानस्योपमेयमिदानीमुपमानं भवेदिति भावः। **आवेदनात्●** अर्थान्तरन्यासे तात्पर्यात्। **गाम्भीर्येण●** अगाधतया

द्वितीयशब्दस्य सादृश्यविशिष्टे शक्त्यभावाद् व्यक्तिरेव।

यदि तु लक्षणा तदेदमुदाहरणम्—

'सुधासमुद्रं तव रम्यवाणी वाचं क्षमाचन्द्र सुधासमुद्रः।
माधुर्यमध्यापयितुं दधाते खर्वेतरामान्तरगर्वमुद्राम्॥'

अत्र वागादिकर्तृकस्य परस्पराध्यापनस्य बाधान्माधुर्यसंक्रान्तिविशेषस्य लक्षणया बुध्यमानस्य प्रयोजनं स्वप्रयोज्यान्योन्योपमानोपमेयभावः।

अथ दोषाः—

तत्र तावत् प्रागुक्ता यावन्त उपमाया दोषाः अनुक्ताश्च विस्तृतिभयात्, ते सर्वेऽप्युपमात्वाक्रान्तत्वादस्यामपि बोध्याः। अयं पुनरन्योऽपि दोषः—यदेकोपमावैलक्षण्यमपरस्यामुपमायाम्। यथा—'कमलमिव वदनमस्या वदनेन समं तथा कमलम्' अत्र श्रौत्यार्थीकृतं वैलक्षण्यम्। 'कमलति वदनं यस्याः कमलं वदनायते जगति' क्विप्क्यङ्कृतमत्र वैलक्षण्यम्। एवमत्रैव 'पद्मं वदनायते' इति निर्माणे 'वक्त्रायते' इति वा उपमानोपमेयवाचकवैलक्षण्यम्। एवंप्रकारैरनेकैर्वैलक्षण्यं यदि सहृदयोद्वेजकं तदा दोषः।

इति रसगङ्गाधरे उपमेयोपमाप्रकरणम्।

---

अचिन्त्यशक्त्या च अतिमात्रेण अत्यधिकेन परमेण उत्कृष्टेन महिम्ना विस्तारयशसा ऐश्वर्येण च राघवस्य सदृशः समुद्रः, समुद्रस्य न सदृशो राघव इति।

लक्षणया गतार्थतामाशङ्क्योदाहरणान्तरमाह—सुधासमुद्रम् ● । हे क्षमाचन्द्र! तव रम्यवाणी सुधासमुद्रं माधुर्यम् अध्यापयितुं खर्वेतराम् आन्तरगर्वमुद्रा धत्ते। सुधासमुद्रश्च वाचं माधुर्यमध्यापयितुं तादृशीं मुद्रां धत्ते इति परिच्छेदः। खर्वेतरां महतीम् आन्तरगर्वमुद्रां मनोनिष्ठं गर्वं सूचयितुम् आकृतिम्।

अनयोर्मुख्याध्यापनस्य बाधात् सङ्क्रमणे लक्षणा प्रयोजनवत्याश्च तस्या व्यञ्जनाबोध्यामुपमेयोपमाञ्च प्रकटयति अत्र●

सहृदयोद्वेजकम्● यदि चेतसि प्रतिकुलतामुपैति, तदैव दोषः, अन्यथा न। अत एव महाकविकाव्येऽपि कुत्रचिदेतेऽवभासन्ते।

इत्युपमेयोपमाप्रकरणम्।

## अथानन्वयः

**द्वितीयसदृशव्यवच्छेदफलकवर्णनविषयीभूतं यदेकोपमानोपमेयकं सादृश्यं तदनन्वयः ।**

---

### ३. अनन्वयनिरूपणम्

**अथ** ● उपमात्वमापन्नाया उपमेयोपमायास्तृतीयसदृशव्यवच्छेदफलकवर्णनविषयीभूताया निरूपणानन्तरमुपमाभिन्नानां निरूपणप्रसङ्गे द्वितीयसदृशव्यवच्छेदफलकवर्णनविषयीभूतस्यानन्वयस्य स्मृतस्योपेक्षाऽनर्हत्वात् तन्निरूपणं प्रति जानीते।

**विषयीभूतम्** ● यस्य वर्णनेन द्वितीयसदृशस्य व्यवच्छेदो व्यज्यत इत्यर्थः।

**एकोप** ● अत एवानन्वय इति पदस्य नास्ति अन्वयो भेदघटितस्य सादृश्यस्य यत्रेति योगार्थो घटते। सादृश्यं भेदघटितमुभयोरेव भवितुमर्हति, न त्वेकस्मिन्नपि । एकमेवोपमानमुपमेयञ्चेत् सादृश्यस्यान्वयो नास्ति ।

यत्तु अलङ्कारकौस्तुभे भेदाघटितस्य सादृश्यस्य पर्यवसानमनन्वयेऽपि जायते, अन्यस्मिन् सादृश्यप्रतियोगित्वाभावप्रतीतिमात्रेणानन्वयशब्दस्य योगार्थः संघटते इति, तन्न भेदाघटितस्य सादृश्यस्यालीकत्वात्। अत एव काव्यप्रदीपे आरोपितसाधर्म्यमुक्तम्, तत्र ह्याहार्यारोपोऽपि भेदेन, आपाततः सादृश्यप्रतीतिः पर्यन्ते तु तस्य बाधप्रतिसन्धानेन द्वितीयसदृशव्यवच्छेदः फलतीत्युद्योते व्याख्यातम् ।

तथा चानन्वये सादृश्यस्य वर्णनमात्रम्, न तु सादृश्यं वस्त्विति सिद्धम्। अत एव पण्डितराजस्य प्रतिनायकोऽपि दीक्षितश्चित्रमीमांसायाम् "स्वस्मिन् सादृश्यस्याप्यसंभवादुपमानान्तरनिवृत्तिः" इत्याह। तथा च पण्डितराजलक्षणस्थस्यापि सादृश्यपदस्य सादृश्यवर्णने लक्षणां कृत्वा व्याख्यानमुचितम् । नास्त्यन्वयोऽस्येति योगार्थविरहेणेत्यादिग्रन्थेन अनन्वितसादृश्यवर्णनतात्पर्येण तादृशस्य सादृश्यस्यासम्भवात्। एवमेव तात्पर्यग्रहात् । अनन्वययोगमहिम्ना द्वितीयसदृशव्यवच्छेदफलानुरोधेन चोपमानोपमेयविशेषणधर्माणामैक्यमपि फलत्येव । अत एव बिम्बप्रतिबिम्बभावापन्नधर्मेण सादृश्यमत्र न स्थान लभत इत्यग्रे मूले स्फुटीभविष्यति । तत्र वस्तुतो धर्माणां भेदात् । तथा च स्वविशिष्टं वर्णनमनन्वय इति लक्षणं फलितम् । वै० स्वावच्छिन्नप्रतियोगिताकत्वेन ज्ञायमानसादृश्यविषयकत्वम्, स्वावच्छिन्नानुयोगिताकत्वेन ज्ञायमानसादृश्यविषयकत्वम्, स्वविशिष्टसादृश्यनिषेधव्यञ्जनोद्बोधकत्वम्, एतत्त्रितयसम्बन्धेन । तत्र वै० स्वावच्छिन्नप्रतियोगितानिरूपितस्वभिन्नधर्मावच्छिन्नानुयोगिताकत्वम्, स्वावच्छिन्नानुयोगितानिरूपितस्वभिन्नधर्मावच्छिन्नप्रतियोगिताकत्वमेतदन्यतरसम्बन्धेन । यथा गङ्गेव गङ्गेत्यादौ गङ्गात्वावच्छिन्ना सादृश्यस्य प्रतियोगिता अनुयोगिता च।

स च कस्याप्युपस्कारकत्वेऽलङ्कारः, अन्यथा तु शुद्धः ।

'लोहितपीतैः कुसुमैरावृतमाभाति भूभृतः शिखरम् ।
दावज्वलनज्वालैः कदाचिदाकीर्णमिव समये ॥'

अत्र लोहितपीतकुसुमावृतं भूभृतः शिखरं स्वेनैव कस्मिश्चित् समये दावज्वालाकीर्णनोपमीयते इति तत्सादृश्यवारणाय भूतान्तम् ।

---

वस्तुतः सादृश्यस्याभावाद् ज्ञानमात्रं द्योतयितुं ज्ञायमानत्वविशेषणेन निवेशः । यमुना गङ्गेव गङ्गा वा यमुनेवेति द्विविधसादृश्यनिषेधफलद्योतनाय तृतीयसम्बन्धस्य निवेशः । फलीभूतस्य तस्य लक्षणे प्रवेशे फलाभाव इति न वाच्यम्, गङ्गेव स्वर्गङ्गेत्यादावधिकधर्मप्रवेशस्थलीयोपमायामपि प्रथमद्वितीययोः समन्वयात् । धर्मभेदे तादृशफलस्यासिद्ध्या फलनिवेशे धर्मभेदप्रयुक्तोपमाया निरासः स्फुटति । असमाया सादृश्यनिषेधस्यैव वर्णनम्, न तु सादृश्यस्येति न दोषः । तृतीयसम्बन्धमनिवेश्य धर्मभेदप्रयुक्तोपमाया विशेषणेन वारणीयत्वे तृतीयचतुर्थौ निम्नलिखितौ सम्बन्धौ निवेशनीयौ । स्वभिन्नधर्मावच्छिन्नप्रतियोगिताकत्वेनाज्ञायमानत्वम् ; स्वभिन्नधर्मावच्छिन्नानुयोगिताकत्वेनाज्ञायमानत्वम् ।

**शुद्धः** ● वैचित्र्यमात्रपर्यवसायी ।

**लोहित** ● लोहितैः पीतैः कुसुमैरावृतं भूभृतः शिखरं कदाचित् समये दावज्वलनज्वालैः दावाग्निज्वालैः आकीर्णमिव आभातीत्यर्थः ।

भूभृतः शिखरमुपमानमुपमेयञ्च वस्तुत एकमेव, परं समयभेदेन कुसुमदावानलविशेषणाभ्यां भिन्नतया सादृश्यस्य पर्यवसानात् सदृशान्तरव्यवच्छेदो न व्यज्यते । अनुपपद्यमानं किमपि अन्यत्कल्पयति । सादृश्यस्यापर्यवसाने तद्वर्णने च कवेर्द्वितीयसदृशस्य निषेधे तात्पर्यमवबुध्यते । अन्यथोपमानान्तरमेव कथं नाददीतोपमाव्यसनी कुशलः कविरिति भावः ।

**भूतान्तम्** ● तथा 'च' व्यङ्ग्यनिषेधफलानुरोधेनैव धर्मभेदे नानन्वयोऽङ्गीक्रियत इति भावः ।

इदं वा प्रत्युदाहरणम्—

'नखकिरणपरम्पराभिरामं किमपि पदाम्बुरुहद्वयं मुरारेः ।
अभिनवसुरदीर्घिकाप्रवाहप्रकरपरीतमिव स्फुटं चकासे ॥'

अत्रापि नखकिरणपरम्पराभिरामं हरेः पदाम्बुजं स्वात्मनैव सुरदीर्घिकाप्रवाहप्रकरपरीतेनोपमीयते ।

सम्प्रति सुरदीर्घिकाप्रवाहेण भगवत्पादाम्बुरुहस्य सम्बन्धाभावात् सुरनिम्नगोत्पत्तिकालावच्छिन्नस्य तस्योपमानतावगमायाभिनवेति प्रवाहविशेषणम् ।

न ह्यत्र सादृश्यवर्णनस्य फलं द्वितीयसब्रह्मचारिव्यवच्छेदः, तस्याप्रतिपत्तेः ।

'स्तनाभोगे पतन् भाति कपोलात् कुटिलोऽलकः ।
सुधांशुबिम्बतो मेरौ लम्बमान इवोरगः ॥'

इति कल्पितोपमानिकायामुपमायामतिप्रसङ्गवारणायैकोपमानोपमेयकमिति ।

अत्रासत उपमानस्य कल्पनया सदुपमानं नास्तीति द्वितीयसदृशव्यवच्छेदस्यास्ति प्रतीतिः ।

उदाहरणममृत( पीयूष )लहर्याख्ये मदीये गङ्गास्तवे—

कृतक्षुद्राघौघानथ सपदि सन्तप्तमनसः,
समुद्धर्तुं सन्ति त्रिभुवनतले तीर्थनिवहाः ।

---

स्फुटं कालभेदेनोपमानोपमेययोर्भेदस्य स्फुटम् प्रत्युदाहरणमाह—**नखकिरण**● मुरारेः किमपि अलौकिकं नखकिरणानां परम्पराभिः समुदायैः अभिरामं सुन्दरं चरणकमलयुगलम् अभिनवेन स्वर्गङ्गाप्रवाहसमुदायेन व्याप्तमिव स्फुटं चकासे दिदीपे ।

**तस्य**● पदाम्बुरुहद्वयस्य ।

**सब्रह्मचारी**● सदृशः ।

**स्तनाभोगे**● उपमारम्भे व्याख्यातं पद्यमिदं दर्शनीयम् । **अस्ति प्रतीतिः**● सुधांशुबिम्बे उरगस्यासम्भवात् । यदि लोकसिद्धमुपमानं भवेत्, तदा तदेव कविना दीयेत नास्ति अत एवासतः कल्पनाऽऽदृतेति भावः ।

**कृतक्षुद्र**● अथ कतिपयपापाचरणानन्तरमेव कृतः क्षुद्राणामघानामोघो-

अपि प्रायश्चित्तप्रसरणपथातीतचरितान्,
नरानूरीकर्तुं त्वमिव जननि त्वं विजयसे ॥'

यथा वा—

'इयति प्रपञ्चविषये तीर्थानि कियन्ति सन्ति पुण्यानि।
परमार्थतो विचारे देवी गङ्गा तु गङ्गेव ॥'

पूर्वपद्ये वाच्योऽनुगामी धर्मः, इह तु व्यङ्ग्य इति विशेषः।

तुशब्दोऽयं तीर्थान्तरेभ्यो वैलक्षण्यं प्रतिपादयंस्तत्प्रयोजकं भगवद्वासुदेवात्मकत्वं धर्मं श्रीगङ्गायां व्यनक्ति।

उभयत्रापि श्रीगङ्गाविषयकरत्युपस्कारकत्वादलङ्कारोऽयम्।

बिम्बप्रतिबिम्बभावापन्नो धर्मस्त्वत्र नास्ति। तस्मिश्च सति किञ्चिद्धर्मावच्छिन्नेन स्वेन सादृश्यस्य धर्मान्तरावच्छिन्ने स्वस्मिन्नन्वये बाधकाभावात् सदृशान्तरव्यवच्छेदाप्रतिपत्तेश्चानन्वय एव न स्यात्।

स च पूर्णो लुप्तश्चेति तावद् द्विविधः। पूर्णस्तूपमावत् षड्विधोऽपि सम्भवति।

यथा—

---

यैस्तान् सपदि प्राक्तनपुण्यवशतस्तत्क्षण एव संतप्तानि अनुतापयुतानि मनांसि येषां तान् समुद्धर्तुं निष्पापान् विधातुं त्रिभुवनतले तीर्थसमुदायाः पदे पदे विराजन्ते। यतोऽहि—क्षुद्राः पापाः अनुतापयुतत्वेन प्रमादवशसम्पन्नाः सरलाः। अपि तु किन्तु अथवा अपि समुच्चयार्थः। पापपरिहाराय यानि प्रायश्चित्तानि तेषां प्रधारणपथेभ्योऽतीतानि महापातकरूपाणि प्रायश्चितविषयाणि चरितानि येषां तान् नरान् ऊरीकर्तुं निष्पापान् विधातुं हे जननि ! त्वं त्वमिव विजयसे, सर्वोत्कर्षेण वर्तसे।

अत्र व्यतिरेकोऽनन्वयकुक्षिनिक्षिप्तो नालङ्कारव्यपदेशं वहते। अत्र विजयसेपदप्रतिपाद्यः सर्वोत्कर्षोऽनुगामी।

'गङ्गा हृद्या यथा गङ्गा, गङ्गा गङ्गेव पावनी ।
हरिणा सदृशो बन्धुर्हरितुल्यः परो हरिः ॥
गुरुवद् गुरुराराध्यो गुरुवद् गौरवं गुरोः ।'

लुप्तेष्वपि धर्मलुप्तः पञ्चविधोऽपि सम्भवति, प्रागुक्ते सार्धपद्ये धर्मवाचकपदमपहाय पदान्तरदाने ।

वाचकलुप्तः—

'रामायमाणः श्रीरामः सीता सीतामनोहरा ।
ममान्तःकरणे नित्यं विहरेतां जगद्गुरू ॥'

इत्यत्र क्यङ्समासयोः ।

'लङ्कापुरादतितरां कुपितः फणीव
निर्गत्य जातु पृतनापतिभिः परीतः ।
क्रुद्धं रणे सपदि दशरथिं दशास्यः
संरब्धदाशरथिदर्शमहो ददर्श ॥'

---

व्यङ्ग्यानुगामिधर्मस्योदाहरणमाह—यथा वा● गङ्गा● गङ्गा हृद्या यथा गङ्गेत्यत्र श्रौतो वाक्यगः पूर्णः । गङ्गा गङ्गेव पावनीत्यत्रेवेन समासात् समासगः श्रौतः पूर्णः । हरिणा सदृशो बन्धुर्हरिरित्यत्र वाक्यग आर्थः पूर्णः । हरितुल्यः परोहरिरित्यत्र समासग आर्थः पूर्णः । गुरुवद् गुरुराराध्य इत्यत्र तुल्यार्थवति तद्धितग आर्थः पूर्णः । गुरुवद् गौरवं गुरोरित्यत्र चेवार्थवति तद्धितगः श्रौतः पूर्णः ।

संक्षेपेण लुप्तानुदाहरति—प्रागुक्ते●

गङ्गा राजन् यथा गङ्गा गङ्गा गङ्गेव सर्वदा ।
हरिणा सदृशो विष्णुर्विष्णुतुल्यः सदा हरिः ॥
गुरुवद् गुरुरास्तेऽस्मिन् मण्डले गुरुवद् गुरोः ॥

रामायमाणो राममिवाचरन्नित्यर्थे क्यङन्ताच्छानचि मुमागमः । इवार्थस्य लोपाद्वाचकलोपः । सीता इव मनोहरेत्यत्रोपमानानि सामान्यवचनैरित्यनेन समासादिवस्य वाचकस्य लोपः ।

कर्मणमुलि लुप्तामाह—लङ्का● कदाचित् सर्प इव अत्यन्तं कुपितः सेनापतिभिः सार्धं रावणो लङ्कानगरीतो निर्गत्य सपदि निर्गमकाल एव रणे क्रुद्धं श्रीरामम् अहो दाशरथिदर्शं ददर्श । अर्थाद् नान्य एवंविधो दृश्यते कश्चित्, अयमेवैतादृशो वीरः । दशरथस्यापत्यं दाशरथिरत इञ् इतीञन्तः । संरब्धः साहसी

एवं कर्तृणमुलादावप्यूह्यम् ।

'अम्बरत्यम्बरं यद्वत् समुद्रोऽपि समुद्रति ।
विक्रमार्कमहीपाल तथा त्वं विक्रमार्कसि ॥'

अत्र वाक्यार्थावयवेष्वनन्वयेषु धर्मवाचकयोर्लोपः। मुखवाक्यार्थस्त्वनन्वयफलेन निरुपमत्वेन समानधर्मेण प्रयोजितो मालोपमैव । एषा च ज्ञानसौकर्यायात्रैव निरूपिता ।

'एतावति प्रपञ्चेऽस्मिन् सदेवासुरमानुषे ।
केनोपमीयतां तज्ज्ञै रामो रामपराक्रमः ॥'

अत्र वाचकधर्मोपमानानां लोपः ।

अत्र चोपमानलुप्तादयोऽन्ये भेदा असम्भवादहृद्यत्वाच्च नोदाहृताः ।

यत्तु—"तेन तदेकदेशेनावसितभेदेन वोपमानतया कल्पितेन सादृश्यमनन्वयः ।

---

दाशरथिरिव दृश्यत इति विग्रहे कर्मणि उपमाने कर्मणि चेत्यनेन णमुलन्तः ।

अत्रेवस्य लोपात् लुप्तोदाहरणम् । कर्तृणमुलादौ यथोपरितनस्य पद्यस्य तृतीयचतुर्थपादयोः क्रुद्धं समीक्ष्य हृदि दाशरथिं प्रतप्तो लङ्केशकोपमकुपीत, तदा दशास्य इति परिवर्तने लङ्केश इव कुप्यति इत्यर्थे बोध्यमुदाहरणम् ।

**अम्बरम्** ● हे विक्रमार्क महीपाल ! आकाशमाकाशमिवाचरति, तथा समुद्रः समुद्र इवाचरति । तथैव त्वं विक्रमार्क इवाचरसि । सर्वत्राचारार्थः क्विप् । अम्बर-समुद्र-विक्रमार्काणां मालोपमा मुख्यो वाक्यार्थः । तत्र साधारणो धर्मो निरुपमत्वम्, तच्चानन्वयत्रितयेन व्यज्यत इति वक्ति—**मुख्य** ● ननु मालोपमा उपमाप्रकरणे निरूपणीया, अत्र कथं निरूप्यत इत्यत आह—**एषा च** ● ।

**एता** ● देवैरसुरैर्मानुषैश्च सहिते एतावति विस्तृते प्रपञ्चे राम इव पराक्रमो यस्यैवंभूतो रामः केनोपमीयेत उपमानान्तरं नास्तीति भावः । उपमानिषेधादुपमानस्यापि लोपः ।

**यत्तु** ● तेन उपमानतया कल्पितेन, तदेकदेशेन उपमानतया कल्पितेन अवसितभेदेन बिम्बप्रतिबिम्बमहिम्ना एकस्यैव निश्चितभेदेन उपमानतया कल्पितेनेत्यन्वयः । उपमानोपमेययोरभेदेऽपि क्वचित् सर्वथाऽभिन्नमुपमेयमेवोपमानतया कल्पितम् । क्वचिच्च उपमेयस्यैकदेश एवावयवः कश्चिदुपमानतया

उपमेयेनैवोपमानतया कल्पितेनोपमेयस्यामुखावभासमानसाधर्म्यापादानमेकोऽनन्वयः, उपमेयैकदेशस्य तथैवोपमानताकल्पनमपरः। उपमेयस्यैव प्रतिबिम्बत्वादिना भेदेनावसितस्य तत्त्वकल्पनं तृतीयः।

आद्यो यथा—

'युद्धेऽर्जुनोऽर्जुन इव प्रथितप्रतापः' इत्यादि।

द्वितीयो यथा—

'एतावति प्रपञ्चे सुन्दरमहिलासहस्रभरितेऽपि।
अनुहरति सुभग तस्या वामार्धं दक्षिणार्धस्य॥'

तृतीयो यथा—

'गन्धेन सिन्धुरधुरन्धरवक्त्रमैत्री-
मैरावणप्रभृतयोऽपि न शिक्षितास्ते।
तत्त्वं कथं त्रिनयनाचलरत्नभित्ति-
स्वीयप्रतिच्छविषु यूथपतित्वमेषि॥'

---

कल्पितः। अन्यत्र च एकमेवोपमानोपमेयं बिम्बप्रतिबिम्बभावमापन्नैर्भेदमापन्नम्, उपमानमुपमेयञ्च भवतीत्यनया रीत्याऽनन्वयस्त्रिविध इति भावः।

प्रथमस्य व्याख्यानमुप**मेयेने**● द्वितीयस्य **उपमेयैक**●। तृतीयस्य **उपमेयस्यैव**●

**एतावति**● सुन्दरीणां महिलानां सहस्रेण भरिते अपि एतावति प्रपञ्चे महिलानामभावे तु महिलैव नास्ति, कुत उपमानं भवेत्। असंख्यमहिलासत्त्वेऽपि काचिदुपमानतां न दधातीति सर्वापेक्षयोत्कर्षः प्रकृतनायिकायाः सिध्यति। हे सुभग! केवलं तस्या वामार्धं दक्षिणार्धस्य अनुहरति अनुकरोति। कर्मणः शेषत्वविवक्षायां षष्ठी।

अत्रावयविनी नायिकोपमेयेति रत्नाकरस्याभिप्रायः। अत एव नायिकाया उपमानान्तरं नास्तीति व्यज्यते इति स मनुते। नायकं प्रति कस्याश्चिद् नायिकदूत्या उक्तिरियम्।

उपमेयैकदेशस्य दक्षिणार्धस्योपमानतया कल्पनमिति द्वितीयस्योदाहरणम्।

सिन्धुराणां गजानां धुरन्धरस्य श्रेष्ठस्य वक्त्रमिव वक्त्रं यस्य गणेश! ते त्वया, कर्तरि शेषत्वविवक्षायां षष्ठी। अथवा कर्तृपदमध्याहार्यम्। त इति तच्छब्दस्य प्रभृतय इत्यस्य विशेषणं प्रसिद्धार्थद्योतकम्। गन्धेन सुगन्धेन

"एषूपमानान्तरविरहस्त्रिष्वपि भेदेषु गम्यते । इत्यन्वयस्त्रिविधः ।" इति रत्नाकरेणोक्तम् ।

तन्न, उपमानान्तरविरहप्रतीतिमात्रादेवानन्वयत्वे 'स्तनाभोगे पतन्भाति' इत्यत्रोपदर्शितायाः कल्पितोपमाया अपि तथात्वापत्तेः । यद्यर्थातिशयोक्तावतिप्रसक्तेश्च ।

तादृशप्रतीतिफलकैकोपमानोपमेयकसादृश्यस्य तत्त्वे पुनः कथं नाम वामार्धदक्षिणार्धयोर्भिन्नयोः सादृश्ये तद्भेदत्वोपन्यासः? न च स तदेकदेशस्तत्प्रतिबिम्बश्चेत्येतदन्यतमप्रतियोगिकसादृश्यमनन्वय इति क्वाव्याप्तिरतिव्याप्तिर्वेति वाच्यम्, नास्त्यन्वयोऽस्येति योगार्थविरहेण तदेकदेशसादृश्यस्यानन्वयपदार्थत्वासम्भवात् ।

---

ऐरावतप्रभृतयोऽपि । अपिशब्दात् किमुत साधारणा गजाः मैत्रीं सहचरतां साजात्यं सदृशसुन्दरगन्धवत्त्वमिति यावत् । न शिक्षितास्तथा च स्वयं सादृश्याभावाद् भवताऽपि न शिक्षितास्तदा कथमपि साजात्यं न भजन्ते । अथवा गन्धेनेत्यस्य सम्बन्धेनेत्यर्थे सम्बन्धमात्रमपि न कृतं कुतः— साजात्यम् । लेशेनेत्यर्थे लेशतोऽपि सादृश्यं न शिक्षितम्, अतः कुत उपमानं भवेयुः । गर्वेणेत्यर्थे पूर्वमेव तदीयक्षुद्रत्वमपेक्ष्य यदि स्वीयोत्कृष्टत्वाभिमानः, तदाऽधुना कथं साजात्यमिति तात्पर्यम् । शिक्षिता इत्यत्र हेतुमण्णिजन्तात् कर्मणि क्तः । ऐरावणप्रभृतयः प्रयोज्यकर्तारः कर्मतामुपगताः, तत् तस्माद् हेतोः त्रिनयनाचलस्य कैलाशस्य प्रतिदिशं रत्नैः खचितासु भीत्तिषु नानाभूतेषु स्वीयप्रतिच्छविषु गजतया कल्पितेषु कथं यूथपतित्वमेषि । सजातीयेषु सदृशेषु अनेकेषु सत्सु प्रधानो यूथपतितामेति, भवतां तु ऐरावणप्रभृतयोऽपि प्रसिद्धा गजाः न सादृश्यं भजन्ते, तर्हि कथं यूथपतित्वं भवतामिति प्रश्नः । अन्यसदृशामभावेन बिम्बस्य भवतः प्रतिबिम्बभूता एव गजतया कल्पिता उपमानतया कल्पिता इति उपमानान्तरव्यवच्छेदस्य प्रतीतिरिति रत्नाकरस्याभिप्रायः । कल्पितोपमा ● शशाङ्कबिम्बतो लम्बमान उरगो भवेत्, तदोपमानं स्यात् । स च नास्ति इति सदृशान्तरव्यवच्छेदः प्रतीयते । यद्यथातिशयो ● यदिशब्दघटितं सम्भाव्यमानया वर्णितमुपमानं यत्रैवभूतातिशयोक्तौ यथोदाहरिष्यमाणे— 'तिमिरशारदचन्द्रिरतारकाः कमलविद्रुमचम्पककोरकाः । यदि मिलन्ति कदापि तदाननं खलु तदा कलया तुलयामहे ।' इत्यादौ यदि मिलेयुस्तदोपमानम् । न च मिलितुं सम्भावना अतो निरुपमत्वप्रतीतिः ।

अपि चानन्वये 'गगनं गगनाकारम्' इत्यादावुपमेयस्यैवोपमानत्वेनोपन्यासादुपमेयातिरिक्तोपमानविरहप्रतीतिद्वारा निरुपमत्वमुपमेयगतं सिद्ध्यति ।

अत्र च वामार्धस्योपमेयस्य दक्षिणार्धरूपोपमानकथनेन निरुपमत्वं विरुद्धमेव । कान्तागतनिरुपमत्वप्रत्ययस्तु नानन्वयस्य फलं भवितुमर्हति, तस्या अनुपमेयत्वात् ।

यदपि चालङ्कारसर्वस्वकृता 'अनन्वयध्वनित्वमत्र भविष्यति । अन्यथाऽलङ्कारध्वनेर्विषयापहारः स्यात्' इत्युक्तम्, तदपि तुच्छम् । अस्य ह्युपमाननिषेधफलकमभिन्नोपमानोपमेयकं सादृश्यं स्वरूपमित्युक्तम् । प्रकृते च वामार्धदक्षिणार्धयोस्तद्बाधितमित्युक्तमेव । कान्तायाः पुनरुपमाननिषेधस्य व्यङ्ग्यत्वेऽपि अभिन्नोपमानोपमेयकसादृश्यस्य स्वरूपस्याप्रत्ययात् ।

नहि निरुपमत्वप्रतीतिषु सर्वास्वभिन्नोपमानोपमेयकसादृश्यप्रतीतिपूर्वकत्वमिति नियमोऽस्ति । कल्पितोपमातिशयोक्त्योरसमालङ्कारध्वनौ च व्यभिचारात् । तस्मान्नास्त्येवात्रानन्वयगन्धोऽपि ।

यच्च 'अयमनन्वयो व्यङ्ग्योऽप्यस्ति' ।

---

**उपमेयातिरिक्त** ● उपमेयातिरिक्तोपमानविरहादेव निरुपमत्वप्रतीतिरनन्वयत्वप्रयोजिका ।

**विरुद्धमेव** ● भिन्नयोरुपमा अबाधिता न निरुपमत्वं प्रयोजयेत् । **अनुपमेयत्वात्** ● उपमेयस्योपमानान्तरं नास्तीति वर्णनेनोपमेय एव निरुपमत्वप्रतीतिः, न तु अवयवयोरुपमया अवयविनो निरुपमत्वप्रतीतिः ।

अनन्वयध्वनित्वं ● निरुपमत्वप्रतीतिद्वारेति शेषः । **उक्तमेव** ● उपमानान्तरव्यवच्छेदव्यञ्जकमेकोपमानोपमेयकसादृश्यं यदि व्यज्येत, तदा अनन्वयध्वनिः स्थानमत्र लभेत, न तु निरुपमत्वव्यक्तिमात्रेण । सादृश्यञ्च तादृशमबाधितमिति नानन्वयलेशसम्भावना । **अप्रत्ययात्** ● कान्तैकोपमानोपमेयकं सादृश्यं न वर्णितम्, न वा व्यञ्जनया प्रत्येतव्यम् ।

**कल्पितोपमा** ● स्तनाभोगे, तिमिरशारदचन्दिर इत्यादौ । **असमाध्वनौ** ● मयि त्वदुपमाविधौ वसुमतीश वाचंयमे इत्यादौ, एकोपमानोपमेयकसादृश्यस्याप्रतीतावपि तत्र निरुपमत्वप्रतीत्या व्यभिचार इति भावः ।

यथा—

'अद्य या मम गोविन्द जाता त्वयि गृहागते ।
कालेनैषा भवेत् प्रीतिस्तवैवागमनात् पुनः ॥'

अत्र गृहागतं श्रीकृष्णं प्रति विदुरवाक्ये इयं त्वदागमनप्रभवप्रीतिर्बहुकालव्यवहितेन पुनरपि त्वदागमनेनैव भवेत्, नान्येन इत्युक्तिभङ्ग्या त्वदागमनप्रभवप्रीतेः सैव सदृशी, न त्वितरप्रभवा इति व्यज्यते' इत्यप्पयदीक्षितैरभिहितम, तदपि न; अमुष्यास्त्वदागमनप्रभवायाः प्रीतेर्वारान्तरत्वदागमनप्रभवा प्रीतिः सदृशीति प्रत्ययस्य सर्वजनसिद्धतया श्रीकृष्णागमनजन्यप्रीतिसामान्यावयवयोर्द्वयोः प्रीतिव्यक्त्योः सादृश्यस्याबाधितत्वाद् योगार्थाभावेनानन्वय एव नायं भवितुमर्हति, 'स्वस्मिन् सादृश्यस्यान्वयाभावादनन्वयः' इत्युपमाप्रकरणे स्वयमेवाभिधानात् । उपमेयस्य प्रीतिव्यक्तिविशेषस्य सदृशान्तरव्यवच्छेदबाधात्, तादृशप्रीतिसामान्यस्य चावयविनो निरुपमतया प्रतीयमानस्यानुपमेयत्वात् पूर्वोदाहरणतुल्यमेवैतत् । क्वचिदवयवयोरुपमाप्यवयविगतनिरुपमत्वव्यञ्जिकेति स्थिते सामान्यस्य श्रीकृष्णागमन-

---

अद्य ● हे गोविन्द ! अद्य त्वयि गृहागते या मम प्रीतिर्जाता एतादृशी प्रीतिः कदापि न जाता, एषा पुनस्तवैव कालेनागमनाद् भवेत् ।

**गमनप्रभव** ● आगमनं प्रभवः कारणं यस्याः सा । **सर्वजनसिद्ध** = भिन्नप्रीतिव्यक्त्योरुपमाया अबाधितत्वादित्यर्थात् प्रीतिव्यक्त्योर्निरुपमत्वप्रतीतिर्न सम्भवति । प्रीतिसामान्यतया द्वयोर्ग्रहणम्, अर्थात् समुदायेत्यर्थः । परं न समुदिता प्रीतिरुपमेया अपि तु समुदायावयवप्रीतिव्यक्ती उपमानोपमेयभावमापन्ने । **योगार्थाभावेन** ● भेदघटितस्य सादृश्यस्यैकस्मिन्नन्वयाभावाद्योगार्थः समन्वेति । भिन्नयोरवयवयोस्तु सादृश्यस्यान्वय एव । स्वग्रन्थविरोधमपि दर्शयति **स्वस्मिन्** ● स्वस्येति शेषः ; **निरूपमतया** ● यदुपमेयं तस्यैव निरुपमत्वप्रतीतिः, प्रीतिसामान्यं तु नोपमेयम् । **पूर्वोदाहरणं** ● वामार्धं दक्षिणार्धस्येत्यस्य । **ईष्टे** ● सामाग्र्यभावात् ।

जन्यप्रीतेः सैव सदृशीति मध्ये स्वसादृश्यप्रत्ययकल्पनं पुनर्न सहृदयहृदयमारोढुमीष्टे। रत्नाकरोक्तस्यैवानन्वयप्रकारस्यात्र व्यङ्ग्यतेत्यपि न युक्तम्, तस्य प्रागेव दूषितत्वात् प्रकृतेऽवाच्यत्वात्, स्वयमनन्वयप्रकरणे तस्य प्रतिपादनविरहाच्च।

इदं पुनरनन्वयध्वन्युदाहरणम्—

'पृष्टाः खलु परपुष्टाः परितो दृष्टाश्च विटपिनः सर्वे।
भेदेन भुवि न पेदे साधर्म्यं ते रसाल मधुपेन॥'

अत्र भेदेनेत्युक्त्याऽभेदे सादृश्यमनन्वयात्मकं तु पेदे इति ध्वन्यते।

यथा वा—

'नगेभ्यो यान्तीनां कथय तटिनीनां कतमया
पुराणां संहर्तुः सुरधुनि कपर्दोऽधिरुरुहे।
कया वा श्रीभर्तुः पदकमलमक्षालि सलिलै-
स्तुलालेशो यस्यां तव जननि दीयेत कविभिः॥'

अत्र कया वा त्वदितरया श्रीभर्तुः पदं सलिलैरक्षालि यस्यामितरस्यां कविभिस्तव तुलालेशोऽपि दीयेतेत्यर्थेन त्वयि

---

ननु तर्हि अनन्वयध्वनेर्विषयापहार एव इष्टः किमिति प्रश्ने आह—**पृष्टाः**● हे रसाल ? आम्रवृक्ष ! मधुपेन तव सादृश्यान्वेषिणा भ्रमरेण परपुष्टाः कोकिला निश्चयेन पृष्टाः किं सदृशः, कश्चिद् रसालस्येति शेषः। परितः सर्वे विपटिनः वृक्षाश्च दृष्टाः। परं ते साधर्म्यं भुवि भेदेन न पेदे प्राप्तम्। रसालस्य सदृशो रसाल इति तु पेदे एवेति भेदेन पदमहिम्ना व्यज्यते। भेदेनेति पदाभावे तु उपमानलोपः प्रतीयेत निरुपमत्वमात्रं वा व्यज्येत।

असाधारणधर्मप्रयुक्तमनन्वयत्वं ध्वन्यमानमाह—**नगेभ्यः**● हे सुरधुनि ! गङ्गे कथय, पर्वतेभ्योऽवतरन्तीनां तटिनीनां नदीनां मध्ये कतमया नद्या पुराणां संहर्तुः शिवस्य कपर्दः जटाजूटः अधिरुरुहे आरूढः, न कयाऽपि त्वदितरयेति भावः। हे जननि कया वा इतरया श्रीभर्तुः पदं सलिलैः अक्षालि। न कयाऽप्यन्यया, किन्तु त्वयैव। कविभिः तव तुलालेशः यस्यां दीयेत। तथा च नगावतरणतटाभ्यां साधारणाभ्यां साधर्म्यभाजो बह्व्यो नद्यः परं कपर्दिकपर्दा-

पुनः सलिलक्षालितश्रीरमणचरणायां तव तुला दीयेतैवेत्यर्थोऽनन्वयात्मा श्रीगङ्गागतनिरुपमत्वपर्यवसायी इतरपदमहिम्ना व्यज्यते ।

इति रसगङ्गाधरेऽनन्वयप्रकरणम् ।

**सर्वथैवोपमानिषेधोऽसमाख्योऽलङ्कारः**

**अयं चानन्वये व्यङ्ग्योऽपि तच्चमत्कारानुगुणतया रूपक-**

---

रोहण-पुरुषोत्तमपदप्रक्षालनाभ्यां नान्या नदी तव तुलां धत्ते, अतः कविभिः तवोपमा त्वयैव दीयत इत्यनन्वयध्वनिः ।

इत्यनन्वयप्रकरणम् ।

## ४. असमानिरूपणम्

**सर्वथैव**● उपमाननिषेधादिना तु नोपमानिषेधोऽस्य विषयोऽपितु उपमानलुप्तोपमायाः, यत्तु कतिपयकाव्यप्रकाशटीकाकृतः, उपमानलुप्तायामेवास्यान्तर्भावमाहुस्तन्न सादृश्यस्य कथमपि निषेधास्पृष्टत्वे वर्णनविषयीभूतेऽसमाया अभावात् । काव्यप्रकाशाभिप्रायस्तु प्राचीनमतवर्णनावसरेऽत्रैव स्फुटतां गमिष्यति । अर्थाद्यत्र उपमानस्याप्राप्त्योपमानिषेधो गम्यते ततोभिन्न एवोपमानिषेधोऽसमाया विषयः । उपमाननिषेधोऽपि उपमानिषेधान्वित एव यत्र प्रतीयते सएवास्या विषयः । तथा च द्वितीयसदृशव्यवच्छेदफलकवर्णनविषयीभूतः सादृश्यनिषेध इति ग्रन्थकाराभिप्रायः । उपमानिषेधमात्रस्य लक्षणत्वे मुखसदृशं नास्तीति वाक्येऽतिव्याप्तिः । अनन्वयादेतावानेव विशेषो यदसौ सादृश्यमियञ्च सादृश्यनिषेधः ।

ननु एवमनन्वयध्वनेर्विषयापहारस्तत्रासमाया एव प्रसक्तत्वादिति समाधत्ते **अयं**● । **तच्चमत्कारा**● अनन्वये एकोपमानोपमेयकसादृश्यप्रयुक्तोयथा चमत्कारस्तथा सादृश्यनिषेधप्रयुक्तोऽपीति भावः ।

यत्तु अलङ्कारकौस्तुभटीकायां चमत्कारजनकम् . उपमानान्तरव्यवच्छेदमात्रं तच्चानन्वये व्यङ्ग्यं चमत्कारित्वादुभयोः प्रसङ्गेऽनन्वयस्यैव स्थानदानं सम्यक् । किञ्च कालत्रये उपमानानिषेधोऽसमाया विषयः । तदन्तर्भाव्यैवोपमाननिषेधोऽनन्वयस्य । तथा च व्यापकानन्वयेनैव समालिङ्गिता असमेति तन्न, व्यङ्ग्यापेक्षया न्यूनस्यापि वाच्यचमत्कारस्यानपह्नुतस्य सम्पादनाय

दीपकादावुपमेव न पृथगलङ्कारव्यपदेशं भजते। वाच्यतायां तु स्वातन्त्र्येण चमत्कारितया पृथग् व्यपदेशभाक्।

यथा—

'भूमीनाथ शहाबदीन भवतस्तुल्यो गुणानां गणै-
रेतद्भूतभवत्प्रपञ्चविषये नास्तीति किं ब्रूमहे।
धाता नूतनकारणैर्यदि पुनः सृष्टिं नवां भावये-
न्न स्यादेव तथापि तावकतुलालेशं दधानो नरः॥'

---

असमाया अवश्यं वरणात्। किञ्च अनन्वये उपमाननिषेधोऽसमायाञ्चोपमानिषेध इति विषयविभागस्य स्फुटत्वात्। व्यङ्ग्यतादशायां विवादेऽपि निर्विवादस्थानं दर्शयति—वाच्यतायां तु● । स्वातन्त्र्येण● उपमानिषेधस्य मुख्यत्वेऽनन्वयस्याप्रसङ्गात्।

भूमिनाथ● हे शहाबदीननामन् भूमिनाथ? भवतो गुणानां गणैः (गुणगणप्रयुक्तेत्यस्य तुल्यपदार्थैकदेशतुल्यतायामन्वयः) एतस्य विद्यमानस्य भूतस्य च भवस्य सृष्टेः प्रपञ्चविषये विस्तारविषये भवस्य विधातुर्वा पञ्चभूतोद्भवस्येति तदाऽर्थः। भवदिति पाठे तस्यैव विद्यमानोऽर्थः, तथा पाठे कालद्वयस्य निर्देशः पश्चाद् भविष्यता वर्णनेन संगच्छते। भवतस्तुल्यो नास्तीति किं ब्रूमहे। कथनं विनाऽपि विद्यमाने जगति प्रत्यक्षेण भूतैश्चैतिह्यादिना ज्ञायमानत्वात्। किन्तु भविष्यति कालेऽपि न भविष्यतीत्याह—धाता● यदि धाता नूतनकारणैः पुनर्नवां सृष्टिं भावयेद् उत्पादयेत्, तथापि तावकतुलालेशं सादृश्यमात्रामपि दधानो नरो न स्यादेव।

तथा च तवोपमा नास्त्येवेति सर्वथैवोपमानिषेधादसमालङ्कारः। भूतभवत्कारणानां भवदसदृशसृष्टिसम्पादने दृष्टसामर्थ्यानां विलक्षणसृष्टेरसम्भवात् पूर्वेणैवाकथनेन गतार्थमित्याशङ्कां समाधातुं नूतनेति कारणानां विशेषणम्। पुन इत्यनेन अभ्यासपरम्परा व्यज्यते। विलक्षणैरपि कारणैः पुनरेतादृशसृष्टिसमुत्पादने गतार्थतामुत्सादयितुं नवामिति सृष्टेर्विशेषणम्। उत्पत्त्यर्थकभूधातोर्ण्यन्ते भावयेदिति। तावकत्यत्र तव इयमिति विग्रहेऽपि तवकममकावेकवचन इत्यनेन तवकादेशः। कर्मधारयसमासे पुंवद्भावश्च। तावकी चासौतुलेति वाक्यम्। धाधातोः शानचि दधान इति।

यथा वा—

'भुवनत्रितयेऽपि मानवैः परिपूर्णे विबुधैश्च दानवैः ।
न भविष्यति नास्ति नाभावन्नृप यस्ते भजते तुलापदम् ॥'

राजस्तुत्युत्कर्षकत्वादत्रासमालङ्कारः ।

आत्यन्तिकः क्वाचित्कश्च सदृशनिषेधोऽसमोपमानलुप्तयोर्विषयः । सर्वथैवोपमाननिषेधेन सादृश्याप्रतिष्ठानान्नोपमागन्धोऽपि ।

यत्तु—

'ढुण्ढुलन्तो मरीहसि कण्टक कलिआइं केअइवणाइं ।
मालइकुसुमसरिच्छं भमर भमंतो न पाविहिसि ॥' इति ।

'नेयमुपमानलुप्तोपमा, तस्याः सम्भवदुपमानानुपादानविषयत्वात् । अपि त्वसमालङ्कारः' इति रत्नाकरेणोक्तम्, तदसत्; मालतीकुसुमसदृशं भ्रमर भ्रमन्नपि न प्राप्स्यसीत्युक्त्या वर्ततां नाम तत्सदृशं क्वापि, त्वया तु दुष्प्रापमेवेति प्रत्ययादात्यन्तिकोपमाननिषेधाभावादुपमानलुप्तोपमैवेयं भवितुमर्हति, नासमालङ्कारः; अन्यथा मालतीकुसुमसदृशं नास्तीत्येव ब्रूयात्, न तु प्राप्स्यसीति ।

---

स्फुटं कालत्रयासत्त्वस्य लोकत्रयासत्त्वस्य चोदाहरणमाह—भुवनः● हे नृप ! भुवनत्रितयेऽपि यस्तव तुलां भजते, स न भविष्यति नास्ति न चाभवत् । न च भुवनत्रितयं रिक्तं येनैवं स्यात् किन्तु मानवैः देवैः दानवैश्चपरिपूर्णे कालत्रयेऽपि मनुष्यो देवो राक्षसो वा तव सदृशो नास्तीत्युपमानिषेधादसमा । सर्वालङ्कारताप्रयोजक मुत्स्कारकत्वमाह—राजस्तुति●

आत्यन्तिकः● यथासङ्ख्यमन्वयः । उपमानलुप्तयोपमया गतार्थयतां प्रकाशटीकाकृतां मतं खण्डयितुमाह सर्वथैव● । गन्धोऽपि● ।

ढुं ढुंल्लन्तः● उपमाप्रकरणे व्याख्यातमिदं पद्यम् ।

संभवदुपमान● नपावहिसि इत्येवोक्तम् । आत्यन्तिकोपमाननिषेध● सदृशं न प्राप्स्यतीत्येवोक्तं न तु नास्तीति । प्राप्तिनिषेध एवोक्तः, न तु उपमाननिषेधः । तथा च सादृश्यपर्यवसानादुपमायाविषयोऽविषयश्चासमायाः ।

अथासमालङ्कारध्वननेनैव चमत्कारोपपत्तेरनन्वयस्य पृथगलङ्कारता कथमिति चेत्, सत्यम्; दीपकादेरप्युपमाभिव्यक्त्यैव चमत्कारोपपत्तौ कथं नाम पृथगलङ्कारत्वमिति तुल्यम्। न च दीपकादावुपमाया व्यङ्ग्यत्वेऽपि गुणीभावात् प्रकृते तु स्वसादृश्यस्य स्वस्मिन्नतितमां तिरस्कारेणासमालङ्कारस्यैव मुख्यतया ध्वननाद् वैषम्यमिति वाच्यम्, यथा हि दीपकसमासोक्त्यादौ गुणीभूतव्यङ्ग्यसत्त्वेऽप्यलङ्कारत्वं न हीयते, एवमनन्वये प्रधानव्यङ्ग्यसत्त्वेऽपीति न किञ्चिद्विरुद्धम्। अनन्वयशरीरस्य स्वसादृश्यमात्रस्य वाच्यत्वेन वाच्यालङ्कारव्यपदेशोऽपि सुस्थ एव। दीपकाद्यलङ्कारकाव्ये गुणीभूतस्य व्यङ्ग्यस्य सत्त्वादस्तु नाम गुणीभूतव्यङ्ग्यत्वम्, ध्वनित्वं पुनर्न क्वाप्यलङ्कृतिकाव्ये दृष्टमिति चेत्, पर्यायोक्तसादृश्यमूलाप्रस्तुतप्रशंसादिकाव्ये ध्वनित्वस्य स्फुटत्वात्।

प्राञ्चस्तु नेदमलङ्कारान्तरमित्यप्याहुः।

---

**प्रधानव्यङ्ग्य** ● प्रधानव्यङ्ग्यस्यासमाविषयत्वेऽपि तद्विशेषणीभूतस्य स्वस्मिन् स्वसादृश्यस्यानन्वयविषयतया अनन्वयविषयताऽप्यस्त्येवेति भावः। **पर्यायोक्त** ● यथा

त्वां सुन्दरीनिवहनिष्ठुरधैर्यगर्वनिर्वासनैकचतुरं समरे निरीक्ष्य।
केषामरिक्षितिभृतां नवराज्यलक्ष्मीः स्वामिव्रतात्वमपरिस्खलितं बभार॥

इत्यत्र पर्यायोक्तौ सर्वाऽपि शत्रूणां राज्यलक्ष्मीस्त्वां प्राप्तेति वस्तुनो ध्वनिः

पुरा सरसि मानसे विकचसारसालिस्खलत्परागसुरभिकृते पयसि यस्य यातं वयः। सपल्वलजलेऽधुना मिलदनेकभेकाकुले मरालकुलनायकः कथय कथं रे वर्तताम्॥

इति अप्रस्तुतप्रशंसोदाहरणेऽप्रस्तुतेन मरालवृतान्तेन प्रस्तुतस्य कस्यचिदुत्तमस्य दुर्गतिवस्तुनो ध्वनिः।

**प्राञ्चस्तु** ● काव्यप्रकाशादय इति। तदभिप्रायो व्यतिरेकालङ्कारे निम्नलिखितः प्रकाशयिष्यते। तथाहि रत्याद्यनुकूलतया कुतश्चिदङ्गाद् भूषणापसारणं यथा शोभाविशेषाय भवति। एवं प्रकृते उपमाऽलङ्कार दूरीकरणमात्रमेव रसानुगुणतया रमणीयं न व्यतिरेकः। अत एवासमालङ्कारं प्राञ्चो न मन्यन्ते इत्यादि। एवं काव्यप्रकाशटीकाप्रटीकाणां भाषानुवादविधायिनाञ्चान्यथाऽभिप्रायवर्णनं न युक्तम्।

अयं चासमालङ्कारो व्यज्यमानो यथा—

'मयि त्वदुपमाविधौ वसुमतीश वाचंयमे
न वर्णयति मामयं कविरिति क्रुधं मा कृथाः।
चराचरमिदं जगज्जनयतो विधेर्मानसे
पदं नहि दधेतरां तव खलु द्वितीयो नरः॥'

अत्र य एतावन्तं समयं विधातुर्मानसं नाधिरूढः, सोऽग्रेऽपि मानाभावान्नाधिरोहेत्, अतः सर्वथैव नास्तीति गम्यते।

एवं च व्यज्यमानोऽप्यसमोऽत्र प्रधानीभूतराजस्तुत्युत्कर्षकतयालङ्कार एव।

मुख्यतया ध्वन्यमानोऽयं यथा—

'सदसद्विवेकरसिकैरालोक्य समस्तलोकमथ कविभिः।
गणिता गगनलतादेर्गणनायां तन्वि! तव सदृशी॥'

---

च ग्रन्थानुकूलमिति ध्येयम्।

मयि● हे वसुमतीश नराधिप? त्वदुपमाविधौ मयि वाचंयमे सति मौने सति अयं कविर्मां न वर्णयतीति बुद्ध्या कोपं मा कृथाः। यतो मम बुद्धौ तवोपमानमेव नास्ति। न ममैव बुद्धौ, अपि तु इदं स्थावरजङ्गमात्मकं जगत् जनयतो विधेर्मानसेऽपि तव द्वितीयो नरः पदं नहि दधेतरां खलु। यदि मानसे वर्तेत, तदा कदाचित् सृजेत्। कदाचिदपि तव द्वितीयं नरं न स्रक्ष्यतीत्यतस्तवोपमानाभावादुपमैव नास्तीत्यस्य व्यज्यमानतया व्यङ्ग्याऽसमा।

वाचंयम इत्यत्र वाचि यमो व्रते इत्यनेन व्रतार्थे खचि वाचंयमपुरन्दरौ चेत्यनेनामन्तत्वं निपात्यते वाचंयमो मौनव्रती, प्रकृते लक्षणादिना सङ्गतिर्विधेया। कृथा इत्यत्र माङो योगादडभावः। लोडर्थे सर्वलकारापवादो लुङ्। दधेतरामित्यत्र तिङन्तात् तरप् अम् च। द्वितीयेत्यस्य व्यङ्ग्यरूपप्रयोजनवत्या लक्षणया सदृशोऽर्थः।

व्यङ्ग्यस्यापि अलङ्कारतां दर्शयति प्रधानीभूत●।

मुख्यतया● अलङ्कारापेक्षया प्रधानस्य व्यङ्ग्यस्य अभावादुपस्कार्यासम्भवेन अलङ्कारध्वनिमात्रम्, ब्राह्मणश्रमणन्यायेन चालङ्कारत्वव्यपदेशः।

अथ अनन्तरं हे तन्वि? सताम् असताञ्च गगनलतादीनां च विवेके रागवद्भिः कविभिः समस्तं लोकमालोक्य तव सदृशी नायिका असम्भविनीनां

अयं क्वचिदुपमानस्य निषेधात्क्वचिच्च साक्षादुपमाया एव । आद्यस्तूपदर्शितः ।

द्वितीयो यथा—

'पूर्णमसुरै रसातलममरैः स्वर्गो वसुन्धरा च नरैः ।
रघुवंशवीरतुलना तथापि खलु जगति निरवकाशैव ॥'

एवं पूर्णतया लुप्ततया चास्यापि यथासम्भवं भेदा उन्नेयाः ।

इति रसगङ्गाधरेऽसमानिरूपणम् ।

सामान्येन निरूपितस्यार्थस्य सुखप्रतिपत्तये तदेकदेशं निरूप्य तयोरवयवावयविभाव उच्यमान उदाहरणम् ।

अर्थान्तरन्यासवारणायोच्यमान इति । वचनं च इव-यथानिदर्शन-दृष्टान्तादिशब्दैः काव्येषु स्फुटम् । न च इवयथा-शब्दयोः सादृश्यवचनयोरवयवावयविभावे विशेषसामान्यात्मके

---

गगनलतादीनां गणनायां गणिता । यथा गगनलता असती, तथा तव सदृशी नास्तीति यावत् ।

न च नायिकाविषयकरत्युत्कर्षकतया कथन्नालङ्कारत्वमिति वाच्यम्, अलङ्कारमपेक्ष्य तादृशरतेर्गुणतयाऽनुभवात् ।

**पूर्णम्** ● असुरै रसातलं पूर्णम्, एवममरैः स्वर्गः पूर्णः, नरैश्च पृथ्वी पूर्णा । तथापि एतावति जगति रघुवंशवीरस्य रामचन्द्रस्य तुलना निरवकाशा एव खलु । अत्र तुलनाया अवकाशाभाववर्णनेन साक्षादेवोपमा निषिद्धेति भावः ।

इत्यसमानिरूपणम् ।

### ५. उदाहरणालङ्कारनिरूपणम्

**सामान्येन** ● अर्थस्य सामान्यार्थस्य, **सुख** ● सामान्यविशेषपदार्थनिरूपणयोः समर्थ्यसमर्थकभावेन विशेषनिरूपणेन सामान्यस्य स्फुटतया प्रतीतिः सुखप्रतीतिशब्देनोक्ता । निरूप्येत्यत्र ल्यबर्थः समानकालिकत्वमेव, न तु उत्तर-कालिकत्वम्; एकदेशनिरूपणावयवावयविभाववचनयोर्भिन्नकालिकत्वा-विवक्षणात्, उदाहरणेषु तथैव दर्शनाद् 'मुखं व्यादाय स्वपिति' इत्यादावनुत्तर कालेऽपि ल्यपो दर्शनाच्च ।

**अर्थान्तरन्यास** ● तत्र समर्थ्यसमर्थकभावस्य सत्त्वेऽपि शब्दत

नास्ति वृत्तिरिति वाच्यम्, लक्षणायाः साम्राज्यात् । अन्यथा ह्युत्प्रेक्षाबोधकतापि दुर्घटा स्यात् ।

उदाहरणम्—

'अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति ।
निखिलरसायनराजो गन्धेनोग्रेण लशुन इव ॥'

न चात्र पदार्थलशुनयोरुपमा शक्या वक्तुम्, तयोः सामान्यविशेषभावेन सादृश्यस्यानुल्लासात् । तथात्वे तु इवशब्दादीनामिव सदृशादिशब्दानामप्यलङ्कारेऽस्मिन् प्रयोगः स्यात् ।

यथा वा—

'अतिमात्रबलेषु चापलं विदधानः कुमतिर्विनश्यति ।
त्रिपुरद्विषि वीरतां वहन्नवलिप्तः कुसुमायुधो यथा ॥'

---

उपादानाभावाद् अवयवावयविभावस्य लक्षणे निर्विवादोदाहरणेषु चास्पर्शनात् । उत्प्रेक्षा● सम्भावनाबोधकताऽपि लक्षणां विना न सम्भवति ।

अमित● न परिमिताः गुणा यस्यैवंभूतोऽनन्तसद्गुणसम्पन्नोऽपि पदार्थ एकेन दोषेण निन्दितो भवति। निखिलानां रसायनानामोषधिप्रकाराणां राजाऽपि लशुनो यथा एकेन उत्कटेन दुर्गन्धेन निन्द्यते ।

शक्या● इवपदसत्तामात्रेण । सादृश्यस्य● सादृश्यस्य भेदघटितत्वात् सामान्यविशेषयोश्चाभेदात् । तथात्वे● उपमया तुल्ययोगक्षेमत्वे उदाहरणस्य पूर्णलुप्तासु उपमासु सर्वासु यथा सदृशशब्दस्य प्रयोगः, तथोदाहरणोदाहरणेऽपि सदृशशब्दप्रयोगेण भाव्यम् । कथमपि सामान्यविशेषयोरपि भेद प्रकल्प्येत्थमुपमायाः स्थानं प्रतिपाद्यते, तदा अनन्वयोऽप्युपमयाऽन्वीयताम् कथं तस्य पृथक्त्वम्? यदि परम्परया सादृश्यपर्यवसानादुपमास्पर्शमात्रेणैवोपमाजातीयं सम्पद्यते, तदा सादृश्यस्पृष्टानां दीपकतुल्ययोगितादीनामपि तज्जातीयताबहिर्भावः कथं शोभेत? यदि उपमाकृतचमत्कारमपेक्ष्य विलक्षणचमत्कारानुभवस्ते तेष्विति चेदत्रापि समर्थ्यसमर्थकभावेन सामान्यविशेषयोरङ्गाङ्गिभावोक्त्या च विलक्षणं चमत्कारं सहृदयहृदयं पृच्छ । इवमेवारूचिरग्रिमप्राचीनमतेऽपि द्रष्टव्या ।

यथा पदघटितमुदाहरणमाह—अतिमात्र● दुर्मतिः पुरुषः अतिमात्रमधिकं बलं येषां तेषु चापलं विदधानः कुर्वन् विनश्यति। तत्र दृष्टान्तः, यथा

अत्र त्रिपुरद्विड्वीरते अतिमात्रबलचापलयोर्विशेषौ। अवलेपकुसुमायुधौ च कुमतिरित्यत्र गुणप्रधानयोः।

यथा वा—

'उपकारमेव कुरुते विपद्गतः सद्गुणो नितराम्।
मूर्च्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः॥'

दृष्टान्तो वा।

इवादिशब्दप्रयोगे सामान्यार्थप्राधान्यं वाक्यैक्यम्, निदर्शनादिशब्दप्रयोगे तु विशेषप्राधान्यं वाक्यभेदश्चेति विशेषः।

---

अहङ्कारी कुसुमायुधः शिवे वीरतां प्रदर्शयन् विननाश।

**अत्र●** अतिमात्रबलो यः पूर्वार्धे सामान्यतया प्रतिपादितस्तस्य विशेषः त्रिपुरद्विट्। चापलस्य च वीरता विशेषः। कुत्सिता मतिर्यस्येति विग्रहेण विशेषणतया कुमतिरन्यपदार्थत्वेन तत्प्रधानतया च पुरुषः प्रयुक्तः। तत्र विशेषणस्य कुमतेर्विशेषोऽवलेपः। अन्यपदार्थस्य च विशेषः कुसुमायुधः। गुणशब्देन विशेषणं प्रधानशब्देन च अन्यपदार्थः सूच्यते।

निदर्शनपदघटितमुदाहरणमाह—**उपकारमेव●** सद्गुणो विपद्गतोऽपि सर्वथा उपकारमेव कुरुते। मूर्छां गतो मृतो वा पारदोऽत्र निदर्शनम्। मूर्छा काचित् पारदस्यावस्था। मृतस्तेजश्शून्यतां गतः।

संक्षेपेण दृष्टान्तपदघटितमाह—**दृष्टान्तो वा●** दृष्टान्तः पारदोऽत्र रस इति चतुर्थचरणेनेदमेव पद्यमुदाहार्यम्। मर्मप्रकाशे उपलभ्यमानो 'वाशब्द एवार्थे' इति पद्यस्थस्य वाशब्दस्य कृते प्रतिभाति।

अन्वयप्रकारभेदमाह—**इवादि●** सामान्येऽर्थेऽवयविनि अवयवतां गतो विशेषपदार्थवाक्यार्थो यत्र तत्। **वाक्यैक्यम्●** वाक्ययोरेकवाक्यतापन्नमेकं वाक्यम्। **विशेषप्राधान्यम्●** वाक्यभेदेनैकत्र सामान्यस्य, अन्यत्र च विशेषस्य प्रवेशादित्यर्थः। **वाक्यभेदश्च●** प्रथमतः पृथग्वाक्यं कृत्वा पश्चाद् वाक्यैकवाक्यतारीत्यैकवाक्यता। सर्वथैकवाक्यताविरहे अनन्वितार्थतया काव्यत्वमेव न स्यात्। पदैकवाक्यता च निरूप्यनिरूपकभावापन्नविषयताप्रयोजकपदघटितत्वरूपा। निरूप्यनिरूपकभावापन्ने विषयते प्रकारत्वविशेष्यत्वे। प्रकारतानिरूपितविशेष्यताविशेष्यतानिरूपितप्रकारतेत्यादिव्यवहारात्। इवादि-

तत्र तावद् 'अमितगुणः' इति पद्ये क्रियाप्रधानमाख्यात-मिति नयेऽमितगुणपदार्थकर्तृकमेकदोषहेतुकं निन्दाविषयीभवनं निखिलरसायनराजलशुनकर्तृकोग्रगन्धहेतुकनिन्दाविषयीभवनाव-

---

शब्दस्थले सामान्यविशेषवाक्यघटकपदार्थयोः परस्परं विशेष्यविशेषणभावेनान्वयात् तथा पदैकवाक्यता। वाक्यैकवाक्यता च उपजीव्योपजीवकभावापन्नविषयताप्रयोजकत्वरूपा। विशेषवाक्यार्थबोधं विना सामान्यवाक्यार्थस्य समर्थ्यता न भवति, सामान्यवाक्यार्थबोधं विना विशेषवाक्यार्थस्य समर्थकता न भवतीति समर्थ्यसमर्थकभावाय द्वयोर्विषयतयोरुपजीव्योपजीवकभावः कल्प्यते। 'क्रियाप्रधानमाख्यातम्' इति न्यायवार्त्तिकं तत्समञ्च भावप्रधानमाख्यातमिति निरुक्तम्। उभयोः समन्वयाय भावरूपक्रियायाः सर्वापेक्षया प्राधान्यं गम्यते। तथा च तण्डुलं पचति चैत्रः' इत्यत्र तिबर्थः कर्ता, तस्य अभेदेन चैत्रो विशेषणम्। द्वितीयार्थः कर्म तत्राभेदेन तण्डुलो विशेषणम्। तिबर्थः संख्या चैत्रे विशेषणम्। कालश्च व्यापारे विशेषणम्। विक्लृतिजनक व्यापारो धात्वर्थः। व्यापारश्च क्रिया। एवञ्च चैत्राभिन्नक कर्तृको यस्तण्डुलाभिन्नकर्मकविक्लृत्यनुकूलो वर्तमानकालिको व्यापार इति व्यापारमुख्यविशेष्यकः शाब्दबोधः। नैयायिकास्तु क्रियाप्रधानेति वाक्ये आख्यातमिति वर्तते। आख्याताश्च तिङः। तथा च क्रियाप्रधानं यत्रैवंभूत आख्यातार्थो भवति। आख्यातार्थः संख्याकालौ तदपेक्षया क्रियायाः प्राधान्यबोधक वाक्यमिदम्। वाक्यार्थापेक्षया प्राधान्यञ्चेद् विवक्षितमाचार्ययोः, तदा भावप्रधानं वाक्यमिति उदचरिष्यताम्। सत्त्वप्रधानानि नामानि इति निरुक्तशेषोऽप्येवमेव व्याख्याने। सत्त्वं द्रव्यं कर्तृकर्मरूपम्। कर्तृकर्मणी च प्रत्ययार्थौ। तथा च पाचक इत्यादौ प्रकृत्यर्थापेक्षया प्रधान्यं बोधितुं सत्त्वप्रधानानीति वाक्यम्, तथा तत्प्रतिद्विन्दि पूर्ववाक्यं तु प्रत्ययार्थापेक्षया प्रकृत्यर्थस्य प्राधान्यबोधकमिति निश्चीयते। एवमेव प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानमिति न्यायोऽपि वैयाकरणानामनुगृह्यते। तथा च तन्मते प्रथमान्तार्थमुख्यविशेष्यको बोधः। चैत्रस्तण्डुलं पचतीत्यत्र तिबर्थः कृतिस्तस्याश्चैत्रे आश्रयत्वेनान्वयः। संख्या च तथैव चैत्रे कालश्च व्यापारे। द्वितीयार्थो वृत्तित्वं तस्य विक्लृतावन्वयः। एवञ्च तण्डुलवृत्तिविक्लृतिजनको वर्तमानकालिको यो व्यापारस्तदनुकूलकृत्याश्रय एकत्वाश्रयश्च चैत्र इति बोधः। **भवनम्** ● भूधातोर्भवनमर्थस्तिबर्थः-कर्ता कर्तुश्च सामान्ये विशेषे च कर्तरि अन्वयः। तृतीयार्थो हेतुः। तस्य

यवकमिति धीः । प्रथमान्तविशेष्यकबोधवादिनां तूग्रगन्धहेतुक-निन्दाविषयीभवनाश्रयतादृशलशुनावयवकस्तादृशपदार्थं एकदोष-हेतुकनिन्दाविषयीभवनाश्रय इति ।

तत्रापि विशेषवाक्यार्थे क्रियान्वयो मृग्यते हेत्वन्तरान्वयार्थम्। अन्यथा तादृशलशुनावयवके तादृशपदार्थ एव क्रियान्वयेनोपपत्तिः स्यात् । एवं यथाशब्दस्थलेऽपि । उपकारमेवेत्यत्र-तु विपद्गताभिन्नः सद्गुण उपकारानुकूलकृतिमानिति पूर्व-वाक्यार्थः । अत्रास्मिन्नर्थे मूर्च्छाङ्गतो मृतो वा पारदो निदर्शन-मेकदेश इत्युत्तरवाक्यार्थे गुणइति केषाञ्चित् ।

इतरेषां तु तादृशकर्तृका तादृशक्रियेति पूर्वं वाक्यार्थे

---

क्रियायामन्वयः । **तादृशपदार्थ●** अमितगुणः । अत्र नैयायिकनये कृतेरर्थस्य बाधितत्वात् आश्रयमात्रं तिबर्थः । स च लशुने अमितगुणे च विशेषणम् ।

ननु एक एव निन्दित इति पदं कथमुभयत्रान्वय इति समाधत्ते— **तत्रापि●** मृग्यमानश्च पूर्ववाक्यस्थक्रियापदं प्रत्यासत्त्या आवृत्त्या चात्राप्यन्वेति । युक्तश्चैकक्रियाकर्तृत्वमेव सामान्यविशेषयोः । विभिन्नक्रिया-कर्तृत्वे सामान्यविशेषभावाप्रतीत्या समर्थ्यसमर्थकभावानुपपत्तिः। **अन्यथा●** लशुनावयवकोऽमितगुण इति प्रतीतावपि समर्थ्यसमर्थकभावानुपपत्तिः, विशेष-निरूपणस्य प्रकृतानुपयोगश्च । **यथाशब्द●** अतिमात्रेत्यादौ । पूर्वत्र हेतु-बोधिका साक्षात्तृतीया, अत्र तु लक्षणादिना तथाऽर्थो विधेयः । यथा अतिमात्र-बलेषु चापलकर्मकविधानकर्तृकृतकः कुमतिहेतु कोनाशः, त्रिपुरद्विड्विषयक-वीरताकर्मकवहनकर्तृकुसुमायुधकर्तृकावलेपहेतुकविनाशावयवक इति शाब्दिक-सरण्याम्। नैयायिकनये तु त्रिपुरद्विषि वीरतां वहन् अवलेपहेतुकं विनाशमासः कुसुमायुधोऽवयवो यस्य एवंभूतः, अतिमात्रबलेषु चापलकर्मकविधानकर्ता कुमतिहेतुकविनाशकर्ता इति । **अत्र●** पद्यस्थात्रशब्दस्य व्याख्यानम् । **गुणः●** विशेषणम् । **केषां●** नैयायिकानाम् ।

**इतरेषां●** वैयाकरणानां मते विपद्गताभिन्नसद्गुणकर्तृका उपकार-कर्मिका क्रिया, अस्मिन्नर्थे मूर्छितमृताभिन्नपारदकर्तृका उपकारकर्मिका क्रिया एकदेशः ।

तादृशः पारद एकदेश इति। प्रधानावयवस्येव गुणावयवस्यापि विशिष्टार्थावयवत्वात्, घटमानयेत्यत्र नीलघटवत्।

'अर्थिभिश्छिद्यमानोऽपि स मुनिर्न व्यकम्पत।
विनाशेऽप्युन्नतः स्थैर्यं न जहाति द्रुमो यथा॥'

अत्र दधीच्यालम्बनायां तदीयलोकोत्तरचरितस्मरणोद्दीपितायामेतत्पद्यप्रयोगानुभावितायामेतत्पद्यनिर्मातृगतायां रतौ प्रधानीभूतायामर्थ्यालम्बनस्तत्कृतयाच्ञाश्रवणोद्दीपितो गात्रच्छेदाभ्यनुज्ञानानुभावितो धृत्या सञ्चारिभावेन पोषितो मुनिगत

---

ननु पारदक्रिया कथं सामान्यकर्तृकक्रियाया अवयवः। सामान्यविशेषयोरवयवावयविभावेऽपि क्रिययोस्तत्त्वासम्भवादित्याशङ्क्य समाधत्ते **प्रधानावयव**● यथा सामान्यक्रियायास्तद्विशेषणीभूताः सामान्यादयोऽवयवाः, तथा सामान्यावयवा अपि विशेषा विशिष्टवाक्यार्थरूपसामान्यक्रियाया अवयवाः। एवं विशेषावयवतया स्थिता क्रियाऽपि विशिष्टवाक्यार्थरूपतादृशक्रियाया अवयवः। **घटमानय**● आनयनक्रियाया अवयवो घटस्तदवयवो नीलत्वमपि विशिष्टवाक्यार्थानयनक्रियाया अवयवः।

नीलघटवदिति चिन्त्यमिति मर्मप्रकाशः। तस्य अयमभिप्रायः—आनयनक्रियायां गुणः कर्म कर्मणि च घट एतावतैव सामञ्जस्यम्। अन्ये च ततोऽप्यधिकपरम्पराप्रदर्शनाय तथोक्तिरिति समादधति। पद्यद्वयमग्रिमं कुवलयानन्दस्य विकस्वरालङ्कारोदाहरणम्।

**अर्थिभिः**● स दधीचिः मुनिः अर्थिरूपधारिभिः देवैः छिद्यमानोऽपि न व्यकम्पत न धैर्यमजहात्। यथा उन्नतः द्रुमः विनाशेऽपि स्थैर्यं न जहाति। व्यङ्ग्या कविगता दधीचिविषयिणी रतिः प्रधानं वाक्यार्थः। तस्यां रत्यां याचकविषयको दधीचिगत उत्साहो विशेषणम्। उत्साहस्योपस्कारकोऽर्थान्तरन्यासः। अर्थान्तरन्यासश्चालङ्कारोत्त्युदाहरणमिति विषयमर्यादा। रतेर्दधीचिरालम्बनम्, तदीयलोकोत्तरचरितस्मरणमुद्दीपनम्। एतत्पद्यार्थभावना अनुभाव इति भावाः। इयं रतिः स्थायितामावहन्त्यपि योग्यालम्बनाभावात् सामग्र्यभावाच्च न रसतया परिणमति, अपि तु भावतामेव भजते। मुनिगतस्योत्साहस्य याचका आलम्बनम्, तत्कृतयाच्ञाश्रवणमुद्दीपनम्, शरीरच्छेदस्वीकारोऽनुभावः, धृतिश्च सञ्चारिभाव इति भावः। वीरस्य स्थायिभावोऽप्ययमुत्साहो रतेरङ्गतां गतो न प्राधान्यमावहन् रसतया न वर्णितः। **अध्यर्ध**●

उत्साहो गुणः । तत्र चाध्यर्धतृतीयचरणगतस्यार्थान्तरन्यासस्योत्कर्षकतया स्थितस्य विवेचनद्वारालङ्करणं चतुर्थचरणशकलगतमुदाहरणम् ।

एवमेव—

अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥'

इति कालिदासपद्येऽपि बोध्यम् ।

अस्मिश्चालङ्कारेऽवयवावयविभावबोधकस्येवशब्दादेः प्रयोगः, सामान्यविशेषयोरेकरूपविधेयान्वयश्चार्थान्तरन्यासभेदाद् वैलक्षण्याधायक इति तत्प्रकरणे निपुणतरमुपपादयिष्यामः ।

प्राञ्चस्तु "नायमलङ्कारोऽतिरिक्तः, उपमयैव गतार्थत्वात् । न च सामान्यविशेषयोः सादृश्यानुल्लासात् कथमुपमेति वाच्यम्, 'निर्विशेषं न सामान्यम्' इति सामान्यस्य यत्किञ्चिद्विशेषं बिना प्रकृतत्वायोगात् तादृशविशेषमादाय विशेषान्तरस्य सादृश्यो-

---

साधंत्रितयचरणं जहातिपर्यन्तम् । द्रुमोयथेत्युदाहरणम् । अत्रैकेनैवालङ्कारेण कथन्न निर्वाह इत्यर्थान्तरन्यासप्रकरणेऽनयोर्भेदः प्रदर्शयिष्यता ग्रन्थकृता प्रकटीकरिष्यते ।

**अनन्त●** कुमारसंभवस्य पद्यम् । अनन्तानां रत्नानामुत्पत्तिहेतुभूतस्य यस्य हिमाचलस्य एकं दूषणं हिमं सौन्दर्यनाशकं न जातम् । यत एकोदोषो गुणसमुदाये निमज्जति । इन्दोः किरणेषु अङ्क इव ।

अत्रापि हिमालयाम्बना अनन्तप्रभवत्वादिज्ञानोद्दीपना कविगता रतिः प्रधानं वाक्यार्थः । तस्योपस्कारको निमज्जतीत्यन्तो भागोऽर्थान्तरन्यासः । तस्य चोपस्कारकमन्तिमपादगतमुदाहरणम् ।

नन्वेवं सङ्कीर्णतायामुभयोरर्थान्तरन्यासविशेष एवास्तु उदाहरणमित्याशङ्क्य समाधत्ते **अस्मिंश्च●** एकरूपविधेयान्वयोऽर्थान्तरन्यासभेदक इति ध्येयम् ।

**प्राञ्चस्तु●** तुना सूचिताऽरुचिः पूर्वमेव वर्णिता मया । **प्रकृतत्व●** प्रकृतश्च विशेष एव । स च सामान्यालिङ्गितो यावन्न ज्ञायते तावन्न सामान्य-

ल्लासे बाधकाभावादिवादिभिरामुखे प्रतीयमानस्यापि सामान्यविशेषभावस्य परिणामे सादृश्य एव विश्रान्तेः' इत्यप्याहुः।

इति रसगङ्गाधरेउदाहरणालङ्कारनिरूपणम् ।

**सादृश्यज्ञानोद्बुद्धसंस्कारप्रयोज्यं स्मरणं स्मरणालङ्कारः।**

**यथा—**

**'दोर्दण्डद्वयकुण्डलीकृतलसत्कोदण्डचण्डध्वनि-**
**ध्वस्तोद्दण्डविपक्षमण्डलमथ त्वां वीक्ष्य मध्येरणम् ।**
**वल्गद्गाण्डिवमुक्तकाण्डवलयज्वालावलीताण्डव-**
**भ्रश्यत्खाण्डवरुष्टपाण्डवमहो को न क्षितीशः स्मरेत् ॥'**

---

ज्ञानम् । नहि कमपि घटमपश्यतां घटसामान्यज्ञान नाम । **आमुखे●** आदौ। अलङ्कारकौस्तुभटीकायामुदाहरणमर्थान्तरन्यासेऽन्तर्भावं निरस्य निदर्शनाविशेषत्वमुक्तम्, तत्तु सहृदयहृदयैः परीक्षणीयम् । निदर्शनायां वाक्यार्थयोरुपमानोपमेयभावः । अत्र च समर्थ्यसमर्थकभावानुकूलोऽवयवावयविभाव इति विशेषं ध्यायद्भिरित्यलं विस्तरेण ।

इत्युदाहरणालङ्कारनिरूपणम्

### ६. अथ स्मरणालङ्कारनिरूपणम्

**सादृश्य●** स्मरण स्मरणालङ्कार इत्युक्तौ भावस्मृतावतिव्याप्तिः, अतः प्रयोज्यान्तम् । प्रयोज्यपदेन साक्षाज्जन्यं परम्पराजन्यञ्च गृह्यते । अतो जन्य पदं विहाय प्रयोज्यमिति निवेशितम् । एकीभवदित्यादिपद्ये परम्पराजन्ये स्मरणे मूल एव समन्वयो विधास्यते । उद्बुद्धसंस्कारप्रयोज्या सर्वाऽपि स्मृतिरिति तथैवातिव्याप्तिरिति सादृश्यज्ञानस्य निवेशः । उद्बोधश्च सहकारिसमवधानम् । तथा च सादृश्यज्ञानसहकारिणा संस्कारेण प्रयोज्यं स्मरणम् इति लक्षणम्, जन्यत्वप्रवेशे ज्ञानत्वेन स्मरणस्य निवेशः प्रयोज्यत्वनिवेशे स्मरणत्वेन प्रवेशः, अनुभवभिन्नत्वेन निवेशः ।

**दोर्दण्डः●** अथ दण्डयोरिव दोष्णोः करयोः द्वयेन कुण्डलसदृशं कृतं यत् लसत् कोदण्डं तस्य यश्चण्डो भयंकरो ध्वनिस्तेन ध्वस्तं विपक्षाणां शत्रूणां मण्डल येनैवभूतं त्वा रणस्य मध्ये वीक्ष्ये अहो कः क्षितीशः वल्गता सुन्दरेण गाण्डीवेन मुक्ताः काण्डवलया बाणपुञ्जास्तेषां ज्वालापङ्क्तीनां ताण्डवेन नृत्यवद् भ्रमणेन भ्रश्यत् यत्खाण्डवनामवनं तस्मिन् रुष्टं पाण्डवमर्जुनं न

यथा वा—

'भुजभ्रमितपट्टिशोद्दलितदृप्तदन्तावलं
भवन्तमरिमण्डलक्रथन पश्यतः सङ्गरे।
अमन्दकुलिशाहतिस्फुटविभिन्नविन्ध्याचलो
न कस्य हृदयं झगित्यधिरुरोह देवेश्वरः॥'

अनयोः पद्ययोः प्रधानीभूताया राजविषयककविनिष्ठरतेरुत्कर्षकतया स्मरणमलङ्कारः।

आद्ये वाच्यम्, द्वितीये तु लक्ष्यमिति विशेषः। वीररसोऽपि चात्र प्रधानोत्कर्षकतयालङ्कार एव।

'एकीभवत्प्रलयकालपयोधिकल्प-
मालोक्य सङ्गरगतं कुरुवीरसैन्यम्।
सस्मार तल्पमहिपुङ्गवकायकान्तं
निद्रां च योगकलितां भगवान् मुकुन्दः॥'

---

स्मरेत्। विलक्षणबाणव्यापारवतो राज्ञोऽर्जुनसादृश्यात् तस्य राज्ञो ज्ञानेन अर्जुनस्मरणम्।

**भुजभ्रमित●** हे अरेर्मण्डलस्य हिंसक ! भुजाभ्यां भ्रमितानि पट्टिशनामानि शस्त्राणि तैर्दलिताः मदान्धा दन्तावला हस्तिनः येनैवंभूतं भवन्तं संग्रामे पश्यतः कस्य हृदयम् अमन्दया पाठभेदे करालया वा करालेति कुलिशविशेषणं वा कुलिशाहृत्या वज्राघातेन स्फुटं विभिन्नस्त्रोटितो विन्धाचलो येनासौ देवेश्वरः शीघ्रं नाधिरुरोह ?

**आद्ये●** स्मरेदिति पदेनां **लक्ष्यं●** अधिरुरोहशब्देन।

**अत्र●** उभयोरुदाहरणयोः। **प्रधानी●** राजविषयकरतेः। रसवदलङ्कारः।

**एकीभवत्●** भगवान् मुकुन्दः, एकीभवन् सम्मिलन् यः पयोधिस्तत्सदृशम्, इषद्समाप्तौ कल्पप्। सादृश्ये पर्यवसानम्। संग्रामगतं कुरुवीरसैन्यम् आलोक्य अहिपुङ्गवस्य शेषस्य कायेन कान्तं तल्पं शयनं समुद्रं योगवशात्कलितां प्राप्तां प्रलयकालिकीं वा निद्रां सस्मार।

अत्र पद्ये पयोधिसादृश्यज्ञानात्सैन्येन एकसम्बन्धिज्ञानमपरं सम्बन्धिनं स्मारयति इति न्यायेन सैन्यदर्शनेन पयोधिस्मरणं जातम्। पयोधिस्मरणेन तत्सम्बन्धिन्योस्तल्पनिद्रयोः स्मरणम्।

अत्र तल्पनिद्रयोः स्मरणं यद्यपि न तल्पनिद्रासादृश्यदर्शनोद्बुद्धसंस्कारप्रयोज्यम्, तथापि सैन्यगतपयोधिसादृश्यदर्शनोद्बुद्धपयोधिविषयकसंस्कारजन्यपयोधिस्मरणाधीनत्वाद् भवत्येव यत्किञ्चित् सादृश्यदर्शनोद्बुद्धसंस्कारप्रयोज्यम्। न हि सादृश्ये स्मर्यमाणसम्बन्धित्वं विवक्षितम्। एवं वाच्ययोस्तल्पनिद्रास्मरणयोः एतत्कारणतया आक्षिप्तस्य पयोधिस्मरणस्य चाविशेषेण सङ्ग्रहाय लक्षणे जन्यत्वमपहाय प्रयोज्यत्वमुपात्तम्।

केचित्तु सदृशज्ञानोद्बुद्धसंस्कारजन्यं सदृशविषयकमेव स्मरणमलङ्कारः। भुजगेन्द्रनिद्रास्मृतिस्तु नालङ्कार इत्याहुः।

'इत एव निजालयं गताया वनिताया गुरुभिः समावृतायाः।
परिवर्तितकन्धरं नतभ्रु स्मयमानं वदनाम्बुजं स्मरामि॥'

अत्र स्मरणं चिन्तोद्बुद्धसंस्कारप्रयोज्यत्वान्नालङ्कारः, व्यङ्ग्यत्वविरहाच्च न भावः।

---

तथा च पयोधिसैन्यसादृश्यज्ञानं परम्परया तल्पनिद्रयोः स्मरण उपयुक्तम्। न तु तल्पनिद्रयोः सादृश्यज्ञानात्तयोः स्मरणम् इत्याह—**अत्रेत्यादिना** ● फलाभावादव्याप्तिसम्पादकत्वाच्चाह **नहि** ● स्मर्यमाणमेतत्पद्ये तल्पनिद्रारूपं तस्य सादृश्यमत्र पद्ये न वर्णितमतोऽव्याप्तिः स्यादिति भावः। **एतत्कारणतया** ● तल्पनिद्रास्मरणस्य पयोधिस्मरणं कारणम् तेन पयोधिस्मरणं स्वतन्त्रमलङ्कारः। **इत्याहुः** ● अत्रारुचिर्मर्मप्रकाशप्रकाशिता। सादृश्ये स्मर्यमाणसम्बन्धित्वस्यैवं सति फलाभावः। नहि तादृशं संस्कारजन्यं स्मरणं विसदृशविषयकं संभवति। तथा पयोधिस्मरणस्य सदृशज्ञानत्वेन तेन तल्पस्मरणानुकूलसंस्कारोद्बोधसम्भवेन तज्जन्यत्वसम्भवादलङ्कारत्वमेव तस्य इति। संस्कारोद्बोधस्य व्यापारतया व्यापारेण व्यापारिणोऽनन्यथासिद्धत्वाच्च तादृशजन्यत्वमहतमित्यस्य भावः प्रतिभाति। **इत एव** ● गुरुभिः श्वश्र्वादिभिः समावृताया इतएव निजालयंगताया वनिताया लज्जारक्षणपराया अपि प्रीत्या द्रष्टुं परिवर्तितं कन्धरं यस्मिन् तत् नते भ्रुवौ यस्मिन् तत् स्मयमानं हासं कुर्वत् वदनाम्बुजं स्मरामि। सादृश्यज्ञानं नात्रोपयोगि, किन्तु चिन्तैवेत्याह **अत्र** ● भावत्वं निवारयति **व्यङ्ग्यत्व** ●। दरानमत् ● बहूनां निश्वासानां भरेणा-

एवम्--

'दरानमत्कन्धरबन्धमीषन्निमीलितस्निग्धविलोचनाब्जम् ।
अनल्पनिःश्वासभरालसाङ्ग्याः स्मरामि सङ्गं चिरमङ्गनायाः ॥'

इहापि स्मृतिर्न भावः, नाप्यलङ्कारः; व्यङ्ग्यस्यैव व्यभिचारिणो भावत्वात् । यथा—'सा वै कलङ्कविधुरा मधुराननश्रीः ।'

अयं चालङ्कारिकाणां सम्प्रदायो यत् सादृश्यमूलकत्वे स्मरणं तयोरभावे निदर्शनादिवदलङ्कारः । तस्याभावे व्यङ्ग्यतायां भावः । तयोरभावे तु वस्तुमात्रम् ।

अप्पयदीक्षितास्तु—

'स्मृतिः सादृश्यमूला या वस्त्वन्तरसमाश्रया ।
स्मरणालङ्कृतिः सा स्यादव्यङ्ग्यत्वविशेषिता ॥'

यथा—

अपि तुरगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं बाणलक्ष्यीचकार ।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियायाः ॥'

---

लसमङ्गं यस्यास्तस्या अङ्गनायाः इषदानमन् कन्धररबन्धो यस्मिन् सङ्गमे इषत् निमीलिते स्निग्धे विलोचने अब्जे इव यस्मिन् एवं भूतं सङ्गं चिरं स्मरामि । सावै● साशब्देनैव स्मृतिर्व्यज्यते । स्मृतिः● सादृश्यज्ञानंमूलं प्रयोजकं यस्याः भिन्नवस्तुविषयिणी अव्यङ्ग्या स्मृतिः स्मरणालङ्कार इत्यर्थः । अपि● रघुवंशे दशरथमृगयावर्णनम् । दशरथः किमुत दूरे तुरगसमीपादुत्पतन्तं शोभनकलापं मयूरं न बाणलक्ष्यीचकार, न बाणेन जघान तत्र कारणं सदृशमयूरकलापदर्शनेन स्मृते चित्रैः पुष्पैर्युक्ते रतिविगलितबन्धे प्रियायाः केशपाशे सपदि गतं मनो यस्यैवं भूतः संजातः। शृङ्गारासक्तमनसा क्षणं मृगयाविरतोऽभूदिति भावः। लक्ष्मीति च्विप्रत्ययान्तः। मनस्क इत्यत्र

यथा वा—

'दिव्यानामपि कृतविस्मयां पुरस्तादम्भस्तः स्फुरदरविन्दचारुहस्ताम्।
उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्तीमस्मार्षीज्जलनिधिमन्थनस्य शौरिः॥'

एकत्र सदृशदर्शनात् तत्सदृशकर्मिका स्मृतिः। इतरत्र सदृशदर्शनात् तत्सदृशलक्ष्मीसम्बन्धिनो जलनिधिमन्थनस्य स्मृतिः। उभयत्रापि सादृश्यमूलकवस्त्वन्तरस्मृतित्वमविशिष्टम्। अत एव सदृशासदृशसाधारण्यार्थतया लक्षणे वस्त्वन्तरग्रहणमर्थवत्।

'सौमित्रे ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते
चण्डांशोर्निशि का कथा रघुपते चन्द्रोऽयमुन्मीलति।
वत्सैतद्विदितं कथं नु भवता धत्ते कुरङ्गं यतः
क्वासि प्रेयसि हा कुरङ्गनयने चन्द्रानने जानकि॥'

अत्र श्रुतकुरङ्गसम्बन्धिनस्तन्नयनस्य स्मरणात् तत्सदृश-

---

समासान्तः कप्। शिशुपालवधे जलक्रीडावर्णने **दिव्यानामपि**● शौरिः कृष्णः सौन्दर्येण दिवि भवानां देवानामपि कृतो विस्मयो यया स्फुरद्भ्यामरविन्दाभ्यां चारुहस्तौ यस्याः पुरस्ताज्जलात् उत्तरन्तीं काञ्चिन्नायिकां श्रियमिवोद्वीक्ष्य जलनिधिमन्थनस्य अस्मार्षीत्। अधीगर्थेति सूत्रेण कर्मणः शेषत्वविवक्षायां षष्ठी। **एकत्र**● प्रथमे कलापकेशपाशयोः सादृश्यं सदृशस्य कलापस्य दर्शनात् केशपाशकर्मिका स्मृतिः। **इतरत्र**● दिव्यानामपीत्यत्र लक्ष्मीनायिकयोः सादृश्यन्तत्र नायिकादर्शनेन न तत्सदृश्या लक्ष्म्याः स्मरणमपितु सदृश सम्बन्धिनो जलनिधिमन्थनस्य स्मरणम्। **अविशिष्टम्**● समानम्। अव्यङ्ग्यत्व विशेषणमाह **सौमित्रे**● हनुमन्नाटके सीताविरहिणो रामस्य लक्ष्मणेन सहोक्तिप्रत्युक्ती। हे लक्ष्मण सुमित्रासुत ननु निश्चयेन तरुतलं सेव्यतां सूर्यस्तपति। इति रामस्य वचनान्तरं लक्ष्मण आह हे रघुनाथा निशिचण्डांशोः का कथा अयं चन्द्र उदयते। तदनन्तरं रामः हे वत्स! नु वितर्के भवता एतत् कथं विदितम्? ततः लक्ष्मणः, यतो मृगं धारयति। तदनन्तरं कुरङ्गनयनायाः कुरङ्गनाममात्रश्रवणेन सीतायाः स्मृताया विषये रामस्य विलापः हे प्रेयसि? जानकि? मृगनयने? चन्द्रानने? हा क्वासि? **तन्नयनस्य**●

सीतानयनस्मृतिस्तत्सम्बन्धिसीतास्मृतिश्चेति। किं त्वेषा व्यङ्ग्या अलङ्कार्यंभूता च। तद्व्यावृत्त्यर्थमव्यङ्ग्यत्वविशेषणम्।

'अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाऽम्भोधय-
स्तानेतानपि बिभ्रती किमपि न श्रान्तासि तुभ्यं नमः।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद् भुव-
स्तावद् बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः॥'

अत्र 'स्तूयमानभूसम्बन्धिनो भूभृतः स्मृतिर्न सादृश्यमूलेति नात्र स्मरणालङ्कारः, किं तु स्मृतेः सञ्चारिभावस्य भूभृद्विषयकरति-भावाङ्गत्वात् प्रेयोऽलङ्कारः। एतद्व्यावृत्तये सादृश्यमूलेति

---

कुरङ्गनयनस्य **अलङ्कार्यभूता●** उपस्कार्यान्तराभावान्नोपस्करोति। **अत्युच्चाः●** परित अत्युच्चा गिरयः स्फुरन्ति। तथा स्फारा अम्भोधयः स्फुरन्ति। तानेतान् महतोऽपि बिभ्रती त्वं किमपि न श्रान्तासि। एवं भूतायै तुभ्यं नमः। आश्चर्येण महुर्मुहुरेवं प्रकारां यावद् भुवः स्तुतिं करोमि तावदा-धाराधेयभावसम्बन्धेन एकसम्बन्धिन्या भुवो ज्ञानेनापरसम्बन्धी तव भुजः स्मर्यते, इमां बिभ्रत् तव भुजः स्मृतः। ततोऽपि भुवो महतस्तव भुजस्य स्मरणेन भुवस्स्तुतिरवरुद्धेत्याह-ततो वाचः मुद्रिताः। भूभुजयोः सादृश्य सम्बन्धो नास्त्यपि तु आधाराधेयभावः। इत्याह न **सादृश्य●** केशपाश-स्मरणे साक्षात्सादृश्यज्ञानमुपयुज्यते, जलनिधिमन्थनस्मरणे च परम्परया एतावान् विशेषः सादृश्यमूलत्वञ्चोभयत्राप्यक्षतम्। मूलपदस्वारस्यञ्च परम्परया उपयोगे साधुतामावहति। अन्यथा जन्यत्वमेवोपाददीत। एतेन सादृश्य-पदस्य नित्यसम्बन्धिकतया सम्बन्धिन आकाङ्क्षायाम् उपस्थितस्मर्यमाण-स्यैवान्वयापत्तिः। नहि जनकत्वमूला पूज्यते इत्युक्ते पुत्रजनकत्वेन भार्या पूज्यते। वस्त्वन्तरसमाश्रयेत्यावश्यकमिति चिन्त्यमिदमिति लिखन् दीक्षित-समर्थनग्रहिलो मर्मप्रकाशः परास्तः। अननुकूलदृष्टान्तत्वात् सपद्येव केचित्तुमतेऽरुचिप्रकाशने सादृश्यज्ञानेन निद्रातल्पस्मरणस्य प्रतिपादनाच्च। किञ्च संस्कारोद्बोधने स्मरणे वा न स्वरूपेण सादृश्यं कारणमपितु सादृश्य-ज्ञानमत एव पण्डितराजेन तथैवाभ्यधात्। तथा च सादृश्येन परम्परयैव-

विशेषणम्' इत्याहुः, तदेतत् सर्वमरमणीयम्। यत्तावदुच्यते सदृशासदृशयोः केशपाशजलनिधिमन्थनयोः सङ्ग्रहाय लक्षणे वस्त्वन्तरग्रहणमर्थवदिति। तत्र सादृश्यमूला स्मृतिः स्मरणालङ्कार इत्येतावतैव केशपाशस्मरणस्येव जलनिधिमन्थनस्मरणस्यापि सङ्ग्रहाद् वस्त्वन्तरसमाश्रयत्वविशेषणमनर्थकम्। एकत्र-सादृश्यदर्शनोद्बुद्धसंस्कारजन्यत्वेन, अपरत्र च सादृश्यदर्शनोद्बुद्धसंस्कारजलक्ष्मीस्मरणोद्बुद्धसंस्कारजन्यत्वेन च सादृश्य-मूलत्वाविशेषात्। नहि सादृश्यमूलेत्युक्ते सदृशविषयेति लभ्यते, येन जलनिधिमन्थनस्मृतेरसङ्ग्रहः स्यात्। यदपि 'सौमित्रे ननु सेव्यताम्' इत्यत्र स्मृतिर्व्यङ्ग्या अलङ्कार्यभूता च तद्व्यावृत्तयेऽव्यङ्ग्यत्वविशेषणमित्युक्तम्। तत्र नेयं स्मृतिरलङ्कार्यभूता, किन्तु जानक्यालम्बनो निशासमयोद्दीपितः सन्तापादिनानुभावित उन्मादेन सञ्चारिणा परिपोषितो विप्रलम्भः प्रधानत्वेनालङ्कार्यः। तस्य च—स्मृतिरुत्कर्षहेतुत्वादलङ्कार एव। अतो नितरां तद्व्यावृत्त्यर्थमव्यङ्ग्यत्वविशेषणदानमनुचितम्। नहि व्यङ्ग्यत्वालङ्कारत्वयोर्विरोध इति वक्तुं शक्यम्, नित्यव्यङ्ग्यानां रसभावादीनामपि पराङ्गतायामलङ्कारत्वाभ्युपगमात्। प्रधानव्यङ्ग्यव्यावृत्त्यर्थं पुनरुपस्कारकत्वं सर्वेष्वलङ्कारलक्षणेषु देयमिति प्रागेवावेदितम्। यदप्युक्तम् 'अत्युच्चाः परितः स्फुरन्ति गिरयः' इत्यत्र स्मृतेः सञ्चारिभावस्य भूभृद्विषय-

---

जन्यं किमपि स्मरणं सम्पादनीयं तदा इयती परम्परा ग्राह्या इयती नेति नियामकपदाभावात् परम्पराग्रहणाय पदान्तरदानं मुधैव। आवेदितम् ● अत्रापि 'हा क्वासि' इति पदेन स्मृतिर्व्यज्यते। विप्रलम्भ एव स्मृतिमलङ्करोती' त्यादिना मर्म विध्यति मर्मप्रकाशः परं तयोः प्राधान्याप्राधान्ये युक्तिविरहितो विप्रलम्भशृङ्गारप्रधानकाव्यघटकपद्ये विप्रलम्भस्यैव प्राधान्यमिति युक्त्या

रतिभावाङ्गत्वात् प्रेयोऽलङ्कार इति, तन्न; भावस्य हि भावाद्यङ्गतायां प्रेयोऽलङ्कारत्वम्। न ह्यत्र स्मृतिर्भावः, तस्याः स्मरतिना वाचकेनाभिधानात्। नहि वाच्यस्य व्यभिचारिणो भावत्वं वक्तुं युक्तम्, 'व्यभिचार्यञ्जितो भावः' इति सिद्धान्तविरोधात्। तथा चोक्तं सर्वस्वकृता—"प्रेयोऽलङ्कारस्य तु सादृश्यव्यतिरिक्तनिमित्तोत्थापिता स्मृतिर्विषयः। तत्रापि विभावाद्यागूरितत्वे, यथा 'अहो कोपेऽपि कान्तं मुखम्' इति, न तु स्वशब्दनिवेद्यत्वे। यथा—

अत्रानुगोदं मृगयानिवृत्तस्तरङ्गवातेन विनीतखेदः।
रहस्त्वदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तम्॥

इत्यादाविति।" ननु भावाद्यङ्गीभूतभावत्वं न प्रेयोऽलङ्कारलक्षणम्, अपि तु भावाद्यङ्गीभूतसञ्चारित्वमात्रम्। तथा च प्रकृते स्मरणस्य स्वशब्दनिवेद्यत्वेन भावत्वविरहेऽपि सञ्चारित्वानपायात् प्रेयोऽलङ्कारत्वमविरुद्धमेवेति चेत्, एवं तर्हीतराङ्गीभूत-

---

खण्डितः। **स्मरतिना** ● स्मृधातुना। **व्यभिचार्यञ्जितः** ● काव्यप्रकाशस्य लक्षणम् अञ्जितोऽभिव्यक्तः। स्मरणालङ्कारवारणाय **सादृश्यव्यतिरिक्त** ● उत्थापिता व्यक्ता न तु वाच्या लक्ष्या वा। **आगूरितत्वे** ● **आविस्कृतत्वे**। स्वशब्दनिवेद्यत्वस्य पुष्पकेण लङ्कातोऽयोध्यां गच्छतः श्रीरामस्य सीतां प्रत्युक्तिं रघुवंशस्थां दर्शयति **अत्रानुगोदम्** ● अत्र गोदायाः समीपे सामीप्येऽव्ययीभावात् मृगया निवृतः तरङ्गवातेन विनीतश्रमः रहसि तव उत्सङ्गे निषण्णो मूर्धा यस्यैवं भूतः वेत्रलतागृहेषु यत्सुप्तं स्वापं तत्स्मरामि। अत्र स्मरामीत्यनेनोक्ता स्मृतिर्न भावोऽव्यङ्ग्यत्वात्। नालङ्कारः सादृश्यज्ञानाप्रयोज्यत्वात्। किन्तु साधारणसम्बन्धिदर्शनजन्या भावाङ्गीभूता। सञ्चारित्वमात्रं प्रेयोऽलङ्कारताप्रयोजकं न तु सञ्चारिभावत्वमित्याशङ्कते **ननु** ● तुल्यक्षेमयोगयोः सत्त्वात्प्रतिबन्द्युत्तरमाह **एव तर्हि** ● इष्टापत्तिं परिहरति अपसिद्धान्तादित्यन्तेन। स्थावरजङ्गमोभयाकारस्य जगतः कारणं विग्रहो

स्थायित्वमात्रं रसालङ्कारत्वम्, न तु व्यज्यमानत्वविशिष्टम्, इत्यस्यापि सुवचत्वात् ।

एवं च—

'चराचरोभयाकारजगत्कारणविग्रहम् ।
कल्पान्तकालसंक्रुद्धं हरं सर्वंहरं नुमः ॥'

इत्यत्र क्रोधस्य स्वशब्दनिवेदितत्वेऽपि देवताविषयकरतिभावाङ्गीभूतस्थायित्वानपायाद् रसालङ्कारता स्यात् । न चेष्टापत्तिः, अपसिद्धान्तात् । तस्माद् व्यज्यमानस्यैव स्थायिनः पराङ्गत्वे यथा रसालङ्कारत्वम्, एवं व्यज्यमानस्यैव सञ्चारिणो भावाद्यङ्गतायां प्रेयोऽलङ्कारत्वमिति नात्र स्मृतिमादाय प्रेयोऽलङ्कारता वाच्या, किं तु भूविषयकरतेः पूर्वार्धव्यङ्ग्याया उत्तरार्धव्यङ्ग्यभूभृद्विषयरतिभावाङ्गत्वाद् युक्ता प्रेयोऽलङ्कारता वक्तुम् । उक्तं च मम्मटभट्टैः—'अत्र भूविषयो रत्याख्यो भावो राजविषयरतिभावस्य' इति । अपि च महदिदमाश्चर्यं यत् स्वेनैव निर्मितः कुवलयानन्दाख्यः सन्दर्भो विस्मृतः । उक्तं च तत्र—"विभावानुभावाभ्यामभिव्यञ्जितो निर्वेदादिर्भावः, स यत्रापरस्याङ्गं स प्रेयोऽलङ्कारः," इति ।

यदपि 'सदृशानुभवाद्वस्त्वन्तरस्मृतिः स्मरणम्' इत्यलङ्कारसर्वस्व-रत्नाकरयोः स्मरणालङ्कारलक्षणमुक्तम्, तदपि न । सदृशस्मरणादुद्बुद्धेन संस्कारेण जनिते स्मरणेऽव्याप्तेः ।

---

यस्य तं कल्पस्यान्तकाले संक्रुद्धं सर्वहरं हरं नुमः । त्वद्रीत्या क्रोधो वाच्योऽपि रौद्ररसस्य स्थायितां दधत् हरविषयकनतपुरुषनिष्ठरतेः प्रधानाया अङ्गतां भजन् रसवदलङ्कारतां दधीत । तुल्ययोगक्षेमौ दर्शयति **तस्माद्**● । **किन्तु**● भूभृद्विषया रतिः प्रधानं भूविषया तदङ्गभूता । अतो भावस्य भावाङ्गत्वे प्रेयोऽलङ्कारता । **सदृशस्मरणाद्**● तथा च न तत्स्मरणमनुभवजन्यम् किन्तु

यथा—

'सन्त्येवास्मिञ्जगति बहवः पक्षिणो रम्यरूपा-
स्तेषां मध्ये मम तु महती वासना चातकेषु ।
यैरध्यक्षैरथ निजसखं नीरदं स्मारयद्भिः
स्मृत्यारूढं भवति किमपि ब्रह्म कृष्णाभिधानम् ॥'

अत्र च चातकदर्शनादेकसम्बन्धिज्ञानादुत्पन्नेनापरसम्बन्धिनो जलधरस्य भगवत्सदृशस्य स्मरणेन जनितं भगवतः स्मरणं भगवद्विषयरतिभावाङ्गम्। यदि च 'सदृशानुभवात्' इत्यपहाय 'सदृशज्ञानात्' इति लक्षणे निवेश्यते, तदा भवत्यस्यापि सङ्ग्रह इति दिक् ।

अथास्य ध्वनिः । यथा—

इदं लताभिः स्तबकानताभिर्मनोहरं हन्त वनान्तरालम् ।
सदैव सेव्यं स्तनभारवत्यो न चेद्युवत्यो हृदयं हरेयुः ॥

---

स्मरणजन्यम् । ननु न्यायनये स्मृतेः कार्यकारणभावे मार्गद्वयम् । प्रथमं स्मृतिं प्रति ज्ञानत्वेन कारणता, अपरञ्च स्मृतिं प्रति अनुभवत्वेन कारणता । प्रथमे ज्ञानेनोत्पन्नः संस्कार एकां स्मृतिं सम्पाद्य विनश्यति, स्मृत्या च पुनः संस्कारान्तरमुत्पाद्य कालान्तरे स्मृतिरुत्पाद्यत इति संस्कारानन्तकल्पना-कुलिततया गौरवम् । द्वितीये च अनुभव एकं संस्कारमुत्पाद्य सर्वां स्मृतिमेकेन संस्कारेण सम्पादयतीति विभिन्नसंस्काराकल्पनेन लाघवमिति तत्मतेनैवेदं लक्षणमिति वाच्यम् । भवतु नाम यथा कथमपि स्मृतिं प्रति कारणत्वम्, पर न संस्कारजनकस्य ज्ञानस्य लक्षणे प्रवेशः फलाभावात् सर्वोऽपि येन केनाऽपि ज्ञानेन जायत एव । अपि तु संस्कारस्योद्‌बुद्धतासम्पादकस्य । तथा च यत्र सादृश्यस्मृत्या संस्कार उद्‌बुध्यते तत्राव्याप्तिरेव ।

**सन्त्येवास्मिन्●** पादद्वयमतिस्फुटम् । प्रत्यक्षीभूतैर्यैश्चातकैर्निजसुहृदं मेघं श्यामं स्मारयद्भिः श्यामत्वरुपसादृश्यसम्बन्धज्ञानेन कृष्णनाम ब्रह्म स्मृतिविषयो भवति ।

**इदं लताभिः●** हन्त स्तबकैरानताभिर्लताभिः सुन्दरमिदं वनमध्यं सदैव

अत्र स्तबकानताभिर्लताभिः स्तनभारवतीनां युवतीनां स्मरणमलङ्कार्यंस्यान्यस्याभावादनुपसर्जनम्, स्तनस्तबकरूपस्य बिम्बप्रतिबिम्बभावमापन्नस्य साधारणधर्मस्य वाच्यत्वेऽपि तत्प्रयोजितसादृश्यमूलकस्य स्वस्य शब्दवाच्यत्वविरहाद् व्यङ्ग्यं च ।

युवत्य इति च 'सर्वतोऽक्तिन्नर्थात्' इति ङीषि साधुः ।

यथा वा—

'इदमप्रतिमं पश्य सरः सरसिजैर्वृतम् ।
सखे मा जल्प नारीणां नयनानि दहन्ति माम् ॥'

अत्रापि सरसिजज्ञानाधीनतत्सदृशस्मृतिः प्राधान्येन ध्वन्यते ।

अथास्मिन् स्मरणालङ्कारे उपमादोषाः प्रायशः सर्वं एव दोषाः । विशेषतश्च नियमेनास्मिन् व्यज्यमानसादृश्यके सादृश्यस्य शब्दवाच्यतायां दोषः ।

---

रसिकैः सेवनीयम् । न सर्वदा, किन्तु स्तनभारवत्यो युवत्यो हृदयं न हरेयुः । सादृश्यात् स्मृताभिर्युवतीभिर्हृतहृदया वनं न सेवन्ते इति भावः । स्तबकस्तनयोर्बिम्बप्रतिबिम्बभावः । **अनुपसर्जनम्**● प्रधानम् । **स्वस्य**● स्मरणस्य, न स्मरणं न वा सादृश्यं वाच्यमिति भावः ।

**सर्वतो**● क्तिन्नर्थप्रत्ययभिन्नप्रत्ययान्तात् सर्वस्मात् ङीष् इत्यर्थः । युधातोरौणादिकाद् बाहुलकात् कतिप्रत्ययान्ताद् युनस्ति इति तिप्रत्ययान्ताद्वा ङीपि साधुः । यत्तु यौतेः शत्रन्तादुगितश्चेति ङीपा सिद्धेरेतत्पर्यन्तानुधावनं व्यर्थं दुष्टञ्चेति मर्मप्रकाशसाधनं तत्तु गुरुद्रुहो भट्टोजीदीक्षितस्यानुसरणेन शत्रर्थवर्तमानत्वाविवक्षाक्लेशादर्शनेन । प्राचीनार्वाचीनवृत्तिग्रन्थतत्त्वबोधिन्योरनुसारि पण्डितराजस्य मतम् । अमरकोशटीकाकृतो मुकुटस्य सम्मतञ्च । गणे यौवतमिति प्रयोगसाधन एवमेवाक्लेशश्चेत्यलमधिकेन ।

**इदम्**● मित्रं प्रति मित्रस्य सरोवर्णनम् । अप्रतिमम् स्वसदृशसरोन्तररहितम् । सदृशसरसिजदर्शनेन नयनानि स्मृतवान्, आह—**सखे**● ।

यथा—

'उपकारमस्य साधोर्नैवाहं विस्मरामि जलदस्य ।
दृष्टेन येन सहसा निवेद्यते नवघनश्यामः ॥'

अत्र स्मृत्यैव घनसादृश्यं भगवतः प्रतीयमानं वाच्यवृत्त्या कदर्थितं निवेद्यते । देवकीतनय इति तु साधु ।

अत्र सादृश्यप्रयोजकस्य साधारणधर्मस्य साक्षादुपादानानुपादानयोरुपमायामिवात्रापि व्यवस्था । तथा हि उपमायां तावत् क्वचिद्धर्मो नियमेन प्रतीयमानः साक्षान्नोपादेय एव । यथा 'शङ्खवत् पाण्डुरच्छविः' इत्यत्र पाण्डुरत्वम् । 'शङ्खवत् पाण्डुरोऽयम्' इत्यादौ तु नानाविधेषु धर्मेष्वनेनैव धर्मेण सादृश्यमित्यस्य दुरवगमत्वात्, सर्वत्रोपमानोपमेयसाधारणस्य श्लिष्टशब्दात्मकस्यान्यस्य वा स्वानभिप्रेतस्य साधारणधर्मस्योपमाप्रयोजकत्वसम्भवात् तद्वारणाय पाण्डुरत्वादिधर्मो वाच्यतां नीयते । यथा वा 'अरविन्दमिव सुन्दरं मुखम्' इत्यादौ सुन्दरत्वादिः । न नीयते च क्वचित्, वक्तुरन्यस्यानुपस्थानात् प्रसिद्धेः प्राबल्यात् । यथा 'अरविन्दमिव मुखम्' इत्यादौ स एव । अप्रसिद्धश्च धर्मोऽवश्यं साक्षादुपादेयः, अन्यथा तस्याप्रतिपत्तौ कवेस्तदुपमानिर्माण-

---

**उपकार●** अस्य साधोः जलदस्योपकार न विस्मरामि । उपकारमाह-येन दृष्टेन सहसा नवघनश्यामो निवेद्यते स्मर्यते ।

**वाच्यवृत्त्या●** घन इव श्याम इति समासेन । देवकीतनय इति दाने न सादृश्यमुच्यत इति भावः ।

**साक्षात्●** उपमानोपमेयविशेषणतया । **शङ्खवत्●** छवेर्विशेष्यत्वे शङ्खस्य पाण्डुरत्वमुपादानं विनैव साधारणतया प्रतीयते इति तस्य वाच्यतानयनं न समीचीनम् । **पाण्डुरोऽयम्●** यत्र विशेष्यस्य छविविभिन्नस्य सत्त्वे पाण्डुरत्वेनैव साधारणेनै भाव्यमिति निर्णयो पुष्करः । **स्वानभि●** कविनाऽनभिप्रेतस्य उपमाप्रयोजकत्वे सौन्दर्यानिर्वाहकस्य । **क्वचित्●** वाच्यतामिति शेषः । **तस्याप्रती●** अप्रसिद्धस्य साधारणस्य,

प्रयासवैयर्थ्यापत्तेः । यथा 'नीरदा इव ते भान्ति बलाकाराजिता भटाः' इत्यादौ श्लिष्टशब्दात्मकः । इत्थं च कश्चित् साधारणो धर्मः साक्षादनुपादेय एव; कश्चिदुपादेयानुपादेयश्च; कश्चिदुपादेय एवेति सहृदयसम्मतः समयः । एवमेवोपमाजीवातुकेऽस्मिन् स्मरणालङ्कारेऽपि बोध्यम् ।

तत्रानुगामिनि धर्मे 'स्मृत्यारूढं भवति किमपि' इत्यादौ पद्ये निवेदितमेव स्मरणम् । बिम्बप्रतिबिम्बभावापन्नेऽपि धर्मे 'भुजभ्रमितपट्टिश—' इत्यादिपद्ये निरूपितम् । कुलिशपट्टिशयोर्भूधरदन्तावलयोश्च बिम्बप्रतिबिम्बभावात् ।

उपचरिते यथा—

'क्वचिदपि कार्ये मृदुलं क्वापि च कठिनं विलोक्य हृदयं ते ।
को न स्मरति नराधिप नवनीतं किं च शतकोटिम् ॥'

यथा वा—

'अगाधं परितः पूर्णमालोक्य स महार्णवम् ।
हृदयं रामभद्रस्य सस्मार पवनात्मजः ॥'

अत्र मृदुलत्वादयो धर्मा हृद्युपचरिताः ।

---

**वैयर्थ्याप** साधारणधर्मप्रतीतिं विना उपमाया अप्रतीत्या वैयर्थ्यम् । **बलाका** नीरदे बकपङ्क्तिभिः शोभिता । भटे बलेन आकारेण च न जिताः । **नुपादेय एव** अरविन्दमिव मुखम् । **पादेयश्च** पूर्वोक्तः पाण्डुरत्वादिः । उपादेय एव बलाकाराजितेत्यादौ । **जीवातुके** उपमाधीने **निवेदितमेव** सन्त्येवास्मिन्नित्यादिपद्ये, श्यामत्वं घनकृष्णयोः ।

**कुलिश** देवेश्वरे कुलिशं राज्ञि च पट्टिशम् । एवं देवेश्वरेण विन्ध्याचलश्चूर्णितो राज्ञा च हस्ती ।

**क्वचिदपि** राजविषयकरतेरुपस्कारकं स्मरणम् । कस्यचिद् दैन्यं वीक्ष्य मृदुलं शत्रुषु च कठिनम् । मृदुलत्वेन सादृश्यं नवनीतस्य काठिन्येन च शतकोटेर्वज्रस्य । वैचित्र्यायान्यदाह **अगाधम्** समुद्रमुल्लङ्घयतो हनुमतो वर्णनम् । **हृद्युपचरिताः** मृदुलत्वं नवनीतस्य कठिनत्वमुपलस्य हृदि आरोपिताः ।

इयांस्तु विशेषः—यदेकत्रानुभूयमाने हृदये स्मर्यमाण-नवनीतादेः सादृश्यस्य सिद्धिः, अपरत्र तु स्मर्यमाणे हृदयेऽनु-भूयमानसमुद्रस्येति, सादृश्यस्योभयाश्रयत्वात् ।

केवलशब्दात्मके यथा—

'ऋतुराजं भ्रमरहितं यदाहमाकर्णयामि नियमेन ।
आरोहति स्मृतिपथं तदैव भगवान् मुनिर्व्यासः ॥'

अत्र भ्रमरहितशब्दो व्यासवसन्तयोः साधारणः ।

एवमन्येऽपि प्रभेदाः सुधीभिरुन्नेयाः । इह पुनर्दिङ्मात्रमुप-दर्शितम् ।

इति रसगङ्गाधरे स्मरणालङ्कारनिरूपणम् ।

अथाभेदप्रधानेषु रूपकं तावन्निरूप्यते ।

उपमेयतावच्छेदकपुरस्कारेणोपमेये शब्दान्निश्चीयमानमुप-मानतादात्म्यं रूपकम् । तदेवोपस्कारकत्वविशिष्टमलङ्कारः ।

---

वैचित्र्यं दर्शयति यदेकत्र● प्रथमे पद्ये । एकस्य सदृशस्य ज्ञानेनान्यस्य सदृशस्य स्मरणं भवति । यथा हृदयज्ञानेन नवनीतं शतकोटिश्च स्मर्यते । एवं द्वितीये पद्ये समुद्रस्य सदृशस्य ज्ञानेन हृदयस्य स्मरणम् । तत्र तृतीयान्तेन यज्ज्ञानमुक्तं तदनुभवरूपम् । एवं प्रथमे उपमेयमनुभूतमुपमानञ्च स्मृतम्, द्वितीये च उपमानमनुभूतमुपमेयञ्च स्मृतम् । उपमेये च उपमानस्य सादृश्य-मिति विवरणग्रन्थस्य सरलार्थः ।

ऋतुराजम्● यदा अहं भ्रमराणां नानापुष्पसम्पादकत्वेन हितम् ऋतुराजं शृणोमि तदैव भ्रमरहितत्वधर्मप्रयोज्यसादृश्यवशाद् भ्रमेण रहितो भगवान् व्यासो मुनिः स्मृतिपथमारोहति ।

इति स्मरणालङ्कारनिरूपणम् ।

### ७. अथ रूपकनिरूपणम्

प्रसङ्गसङ्गतिं प्रदर्शयति । अथ● पूर्वं सादृश्यप्रधाना अलङ्कारा वर्णिताः । सादृश्यमूलकाभेदवर्णनद्वारा चमत्कारका अलङ्कारा अधुना वर्णनीयाः, तत्रोपमानाभेदमूलकं रूपकं निरूपयति ।

उपमेयतावच्छेदकपुरस्कारेणेति विशेषणादपह्नुतिभ्रान्ति-मदतिशयोक्तिनिदर्शनानां निरासः। अपह्नुतौ स्वेच्छया

---

ननु नाभेदो रूपकम्, अपि तु सूत्रानुसारितादात्म्यम्, तच्च मञ्जूषायां वैयाकरणानां भेदाभेदोभयरूपम्, सर्वथा भेदे घटपटयोः, सर्वथाऽभेदे चैकस्मिन् घटे तादात्म्यव्यवहारो नास्ति। अस्ति च नीलत्वेन अभेदे नीलत्वत्वघटत्वाभ्यां भेदे नीलघटयोरिति चेदत्र केचित्। तादृशेऽपि तादाम्येऽभेदो वर्तते एवेति तदादायैव ग्रन्थसङ्गतिरित्याहुः। अन्ये तु तादात्म्यमभेद एव। एकस्मिन् घटेऽपि तादात्म्यव्यवहारोऽस्त्येव। क्वचिदभावोऽपि भिन्नयोर्द्वयोरेव सम्बन्धित्व-व्यवहारस्य नियततया भेदग्रहाभावमूलकः। अन्यथा पटेऽपि घटस्य प्रमेयत्वेन भेदो नास्तीति कथन्नाभेदव्यवहारः। किन्तु विशेषणतावच्छेदकावच्छिन्नप्रति-योगिताकभेदाभावः। अस्ति च नीले घटे नीलत्वावच्छिन्नप्रतियोगिताक-भेदाभावः। भेदाभावरूपाभेद एव पण्डितेन्द्रस्य सम्मतिरिति 'उपमैव तिरोभूतभेदेत्यादि' प्राचीनग्रन्थसंवादपरेणाग्रिमग्रन्थेन प्रतीयते। व्युत्पत्तिवादे विवेचितमभेदस्वरूपन्तु विस्तरभयान्न विविच्यते।

**उपमेयतावच्छ**● पुरस्कारश्च उपमेयतावच्छेदकावच्छिन्ने उपमान-तादाम्यवर्णनम्, न तु इदन्त्वावच्छिन्ने सुन्दरत्वावच्छिन्ने मुखे चन्द्रतादात्म्यम्, अपि तु मुखत्वावच्छिन्ने। उपमेयतावच्छेदकावच्छिन्नविषयतेति यावत्। सा च विषयता क्वचित् प्रकारतारूपा, क्वचिच्च विशेष्यतारूपा। सा च विषयता शाब्दबोधीया ग्राह्या, न तु प्रत्यक्षादेरित्यत्र तात्पर्यग्राहकं शब्दादिति। शाब्द-बोधश्च निश्चयस्वरूपो ग्राह्यः, न तु सम्भावनात्मकः। सम्भावना च अप्रामाण्य-शङ्काकवलितं ज्ञानम्।

एवञ्च शाब्दबोधे अप्रामाण्यशङ्काऽनास्कन्दितत्वं विशेषणं देयमित्यत्र तात्पर्यं सूचयति निश्चीयमानपदम्। लक्षणञ्च अप्रामाण्यशङ्काऽनास्कन्दित-शाब्दबोधीयोपमेयतावच्छेदकावच्छिन्नविषयताविशिष्टा या विषयता तदाश्रय-स्तादात्म्यं रूपकम्। मुखं चन्द्र इत्यादौ उपमेयतावच्छेदकावच्छिन्ने मुखे चन्द्रस्तादात्म्येन विशेषणम्। वैशिष्ट्यञ्च स्वनिरूपितत्वस्वनिरूपितोपमान-तावच्छेदकावच्छिन्नविषयतानिरूपितत्वाभ्याम्। तादात्म्यनिष्ठा संसर्गता नाम्नी विषयता मुखत्वावच्छिन्नविशेष्यतया चन्द्रत्वावच्छिन्नप्रकारतया च निरूपिता इति लक्षणसमन्वयः। उपमेयतावच्छेदकावच्छिन्ना विषयता मुखं चन्द्र इत्यादौ विशेष्यता रूपा। वक्ष्यमाणात्र वदन्तिकल्पेन मुखचन्द्र इत्यादिसमासस्थले चन्द्रे मुखस्य विशेषणतया प्रकारतारूपा बोध्या। द्वितीया विषयता संसर्गतारूपा, क्वचित् प्रकारता विशेष्यता च। सा च विषयतात्वेनानुगमय्य निवेशिता।

**निषिध्यमानत्वात्, भ्रान्तिमति च तज्जनकदोषेणैव प्रतिबध्यमानत्वात्, अतिशयोक्तिनिदर्शनयोश्च साध्यवसानलक्षणामूलकत्वादुपमेयतावच्छेदकस्य नास्ति पुरस्कारः, शब्दादिति विशेषणात् 'मुखमिदं चन्द्रः' इति प्रात्यक्षिकाहार्यनिश्चयगोचरचन्द्रतादात्म्यव्यवच्छेदः। निश्चीयमानमिति विशेषणात् सम्भावनात्मनो 'नूनं मुखं चन्द्रः' इत्याद्युत्प्रेक्षाया व्यावृत्तिः। उपमानोपमेयविशे-**

---

मर्मप्रकाशस्तु केषाञ्चिन्मतेन अतिशयोक्तौ चन्द्रपदादपि मुखत्वेन मुखोपस्थितिमनुरुध्य पूर्वोक्तलक्षणे उपमेयतावच्छेदकमात्रावच्छिन्नविषयतेति मात्रपदनिवेशं रोचयते। परं चन्द्रपदान्मुखत्वेन मुखोपस्थितौ चन्द्रोपस्थानाभावादुपमानतादात्म्यस्यैवाप्रतीतेर्नास्ति प्रसङ्गः। चन्द्रत्वेन रूपेण मुखत्वविशिष्टस्योपस्थितिरिति तात्पर्येणैकविशेष्यतावच्छेदकत्वं चन्द्रत्वमुखत्वयोः। तादृशमतसत्त्वेऽपि उपमानतावच्छेदकानवच्छिन्ना विषयता निवेशनीयेति विवेचनीयं सुधीभिः।

**निषिध्यमानत्वात्** ● 'स्मितं नैतत्प्रकृतिरमणीयं विकसितम्' इत्यादौ स्मितत्वस्य कविनैव निषिध्यमानत्वाद् नास्ति पुरस्कारः।'

कनकद्रवकान्तिकान्तया मिलितं राममुदीक्ष्य कान्तया।
चपलायुतवारिदभ्रमान्ननृते चातकपोतकैर्वने॥

इत्यत्र कान्तायां चपलातादात्म्यप्रत्यायकसादृश्याद् दोषवशात् तत्र सीतात्वज्ञानं प्रतिबद्धम्, अतो नास्ति सीतात्वस्य पुरस्कारः।

इदं रजतमिति प्रसिद्धभ्रान्तावपि इदन्त्वेन धर्मिण उल्लेखेऽपि शुक्तित्वस्य नास्त्येवोल्लेख इत्यनुभवसिद्धम्।

**साध्यवसान** ● अपृथङ् निर्दिष्टे विषये विषयिण आरोपोऽध्यवसानम्। तेन सह वर्तते इति साध्यवसानम्। यथा स्मृताऽपि तरुणातपमिति पद्ये विषय उपमेयः कृष्णो न पुरस्क्रियते।

त्वामन्तरात्मनि लसन्तमनन्तमज्ञास्तीर्थेषु हन्त मदनान्तक शोधयन्तः।
विस्मृत्य कण्ठतटमध्यपरिस्फुरन्तं चिन्तामणिं क्षितिरजस्सु गवेषयन्ति॥

इत्यादिनिदर्शनायाम्, तीर्थेषु भगवच्छोधनं क्षितिरजस्सु चिन्तामणेर्गवेषणाऽभिन्नमिति प्रतीतावपि मदनान्तकचिन्तामण्योस्तादात्म्यं न विवक्षितम्। **व्यवच्छेदः** ● प्रत्यक्षविषयतादात्म्यस्यालङ्कारत्वव्यवच्छेदः।

षणाभ्यां सादृश्यलाभात् 'सुखं मनोरमा रामा' इत्यादिशुद्धारोपविषयतादात्म्यनिरासः। सादृश्यमूलकमेव च तादात्म्यं रूपकमामनन्ति।

तथा चाहुः—

'तद्रूपकमभेदो य उपमानोपमेययोः।'

'उपमैव तिरोभूतभेदा रूपकमुच्यते॥' इति।

तच्च यत्र विषयविषयिणोरेकविभक्त्यन्तत्वेन निर्देशस्तत्र संसर्गः, अन्यत्र तु शब्दार्थतया क्वचिद् विशेषणं विशेष्यं चेति विवेचयिष्यते।

यत्तु 'सादृश्यप्रयुक्तः सम्बन्धान्तरप्रयुक्तो वा यावान् भिन्नयोः सामानाधिकरण्यनिर्देशः स सर्वोऽपि रूपकम्, सारोपलक्षणामूलकत्वस्य तुल्यत्वेन सादृश्यप्रयुक्तस्य तादात्म्यस्येव सम्बन्धान्तरप्रयुक्तस्यापि तादात्म्यस्य संग्रहीतुमौचित्यात्। तस्मात् दुराग्रह एवायं प्राचाम्—'उपमानोपमेययोरभेदो रूपकम्, न तु कार्यकारणयोः' इति रत्नाकरेणोक्तम्, तन्न; अपह्नुत्यादौ भिन्नयोः सामानाधिकरण्यस्य सत्त्वात् तत्रातिव्याप्तेः।

किञ्च 'सादृश्यमूलकं स्मरणं स्मरणालङ्कारः न तु

---

**सादृश्यलाभात्** ● सादृश्यसत्त्वे एवोपमानोपमेयभावादित्यर्थः। **शुद्धारोप** ● शुद्धत्वं सादृश्यामूलकत्वम्।

काव्यप्रकाशस्य अभेदस्य रूपकत्वे, अभेदस्य च सादृश्यमूलकत्वे सम्मतिमाह—**तद्रूपकम्** ● अत्रापि उपमानोपमेयभावादेव सादृश्यमूलकत्वं लभ्यत इति भावः।

अन्येषां प्राचां दण्डिनां संवादमाह—**उपमैव** ● उपमायां या सामग्री अपेक्ष्यते सा सर्वा अपेक्षणीया केवलं भेदांशस्य तिरोधानं जायते, अर्थादभेदो भवति। अन्यसामग्रीवशात् सादृश्यमूलकत्वं स्फुटमुक्तम्। यत्तु कौस्तुभे तिरोहितभेदस्य साधर्म्यमर्थ उक्तस्तन्न समीचीनम्, साधर्म्यपदार्थस्य सादृश्यगर्भितत्वाद् भेदस्य तिरोधानाभावात्। **संसर्गः** ● अयमेव पक्षः समीचीनः। **शब्दार्थतया** ● समासादौ विशिष्टशक्तिपक्षे। विशेषणमप्रधानं विशेष्यं प्रधानम्। विवेचयिष्यते अत्र वदन्तिनव्यास्तु कल्पाभ्याम्।

**सारोपलक्षणा** ● उपात्ते विषये विषयिण आरोपः। तन्मूला लक्षणा।

चिन्तादिमूलम्' इति भवतैव पूर्वमुदितम्। तत्र यदि सादृश्यामूलकस्यापि कार्यकारणादिकयोः कल्पितस्य ताद्रूप्यस्य रूपकत्वमभ्युपेयते, तदा सादृश्यामूलकस्य चिन्तादिमूलस्य स्मरणस्याप्यलङ्कारत्वमभ्युपेयताम्।

न च स्मरणस्य भावत्वमुच्यमानं निर्विषयं स्यादिति वाच्यम्, तस्य व्यज्यमानविषयत्वेनोपपत्तेः।

अप्पयदीक्षितास्तु—

'बिम्बाविशिष्टे निर्दिष्टे विषये यद्यनिह्नुते।
उपरञ्जकतामेति विषयी रूपकं तदा॥'

अत्र बिम्बाविशिष्ट इति विषयविशेषणात्।

'त्वत्पादनखरत्नानां यदलक्तकमार्जनम्।
इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः॥'

इति निदर्शनाया निरासः, तत्र विषयस्य मार्जनस्यालक्तकादिरूपबिम्बविशिष्टत्वात्। निर्दिष्ट इति विशेषणान्निगीर्णविषयायाम् 'कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम्' इत्याद्यतिशयोक्तौ नातिव्याप्तिः। अनिह्नुते निषेधा-

---

**बिम्बाविशिष्टे** ● बिम्बप्रतिबिम्बभावापन्नसाधारणधर्मानवच्छिन्न उपात्तोऽनिषिद्धो विषय· उपमेयो विशेष्यं यस्मिन्। एवंभूतो य आहार्यनिश्चयस्तद्विषयो विषयिण उपमानस्य ताद्रूप्यं तादात्म्यं रूपकमिति लक्षणार्थः।

**त्वत्पादनख** ● स्वयमेव रक्तानां नखाना यदलक्तकैर्मार्जनं तत् स्वयं शुभ्रस्य चन्द्रस्य श्वेतलेपेन शुभ्रीकरणमस्ति। अर्थादुभयं व्यर्थमिति कविविवक्षितम्। स्वयमेवातिरक्तं नखमिति भावः। श्रीखण्डश्चन्दनम्।

अत्र नखचन्द्रयोस्तत्साधकतया अलक्तकचन्दनयोश्च बिम्बप्रतिबिम्बभावः।
**निगीर्णविषयायां** ● साध्यवसानायाम्। **कमलम्** ● मुखकमलमजले-तस्मिन् मुखकमले नेत्ररूपे द्वे कुवलये, तानि त्रीण्यपि कनकलतिकायाम्। अत्र कमलस्य विषयो मुखं कुवलययोर्नेत्रे कनकलताया नायिका नोपात्ता।

स्पृष्ट इति विशेषणादपह्नुतौ नातिव्याप्तिः। उपरञ्जकतामाहार्य-ताद्रूप्यनिश्चयगोचरतामेतीत्यनेन सन्देहोत्प्रेक्षासमासोक्तिपरिणाम-भ्रान्तिमत्स्वतिव्याप्तिनिरासः। ससन्देहोत्प्रेक्षयोर्निश्चयस्यैवा-भावात्। समासोक्तिपरिणामयोर्विषयिताद्रूप्यस्यागोचरत्वात्, समासोक्तौ व्यवहारमात्रसमारोपात्। परिणामे चारोप्यमाणस्यैव विषयताद्रूप्यगोचरत्वात्। भ्रान्तिमति च सतः कल्पितस्य वा प्रवृत्त्यादिपर्यन्तिकस्वारसिकभ्रमस्यैव निबन्धनेन तस्याना-हार्यत्वात्" इत्याहुः, तन्न; 'त्वत्पादनखरत्नानाम्' इत्यादि निदर्शनाव्यावृत्त्यर्थं बिम्बाविशिष्टत्वं विषयविशेषणं तावदयुक्त-मेव। यद्यत्र 'मुखं चन्द्रः' इत्यादि रूपकान्तर इव सत्यपि श्रौतारोपे नेदं रूपकम्, अपि तु निदर्शनेत्युच्यते, तदा 'मुखं चन्द्रः' इत्यपि निदर्शनेत्युच्यताम्। निरस्यतां च रूपक-दाक्षिण्यकौपीनम्।

किं च 'त्वत्पाद'—इत्यत्र किं पदार्थनिदर्शना, आहोस्विद् वाक्यार्थनिदर्शना?

---

व्यवहारमात्र● व्यवहारयोः समारोपेऽपि विषयविषयिणोः शब्दत आरोपा-प्रतीतेः। परिणामे● उपमाने उपमेयतादात्म्यप्रतीतिः, न तूपमानतादात्म्यस्य उपमेये। तस्यानाहार्यत्वा● यथा सीतायां चपलाया रामे वारिदस्य भ्रमे सादृश्यादिदोषवशात् सीतात्वं रामत्वं न भासते। तदा चपलामात्रस्य राम-मात्रस्य वा प्रतीतौ नाहार्यत्वम्। अर्थाद् बाधकालिकमिच्छाजन्यं ज्ञान-माहार्यम्। अभेदेनस्य भेदस्य बाधः। यदा भेदभानं वर्तते तदा अभेदज्ञानं-चेदाहार्यं स्यात्। भेदज्ञानञ्च सीतात्वेन सीताया ज्ञानमन्तरा न संभवति। सीतात्वेन सीताया वर्णनाभावेन भेदज्ञानाभावादभेदज्ञान नाहार्यम्। सतः● भ्रमवशाल्लोके सम्भविनः प्रवृत्त्यादेः। कल्पितस्य● लोकेऽसम्भविनोऽपि कविना कल्पितस्य। अयुक्तमेव● अत्र रूपकस्यैव युक्तत्वात्। यदिदं शब्दाभ्यां श्रौतस्यैवारोपस्य सत्त्वात्। अन्यथा मुखं चन्द्र इत्यत्रापि त्वत्समीहितरूपकानापत्तेः। निरस्यताम्● निर्लज्जत्वात् मुखं चन्द्र इत्यादौ रूपकाङ्गीकारौदार्यं त्यज्यताम्।

नाद्यः, बिम्बप्रतिबिम्बभावापन्नपदार्थघटितविशिष्टार्थयोरेवात्राभेदप्रतीतेः। कुवलयानन्दगतनिदर्शनाप्रकरणे त्वयोक्तमार्गेण धर्म्यन्तरे पदार्थे तद्वृत्तिधर्मस्य पदार्थस्य भेदेनारोपस्याभावाच्च।

न द्वितीयः, वाक्यार्थरूपकोच्छित्त्यापत्तेः। इष्टापत्तौ वैपरीत्यस्य सुवचत्वाच्च।

अस्माभिर्निदर्शनाप्रकरणे वक्ष्यमाणया सरण्या अभेदस्य श्रौतत्वार्थत्वाभ्यामुद्देश्यविधेयभावालिङ्गनानालिङ्गनाभ्यां च रूपकनिदर्शनयोर्वैलक्षण्येन सकलव्यवस्थोपपत्तेः। तस्मादत्र वाक्यार्थरूपकमेव, न वाक्यार्थनिदर्शना। तस्याश्चैवमुदाहरणं निर्मातव्यम्—

'त्वत्पादनखरत्नानि यो रञ्जयति यावकैः।
इन्दुं चन्दनलेपेन पाण्डुरीकुरुते हि सः॥'

अत्र कर्त्रोरभेदस्य शाब्दत्वेऽपि क्रिययोरभेदस्याशाब्दत्वात् तस्यैव च समग्रभरसहिष्णुत्वान्निदर्शनैव।

---

विशिष्टार्थयोः● विशेषणविशिष्टयोर्मार्जनपाण्डुरीकरणयोरेवाभेदप्रतीतेः। न तु कयोश्चित् पदार्थयोः, किन्तु वाक्यार्थयोः। अभावाच्च● नात्र पदार्थे पदार्थस्यारोपः अपितु वाक्यार्थे वाक्याथस्य। नापि भेदेन समानविभक्तिकत्वेनाभेदस्यैव प्रतीतेरित्यादेः समुच्चायकश्चः। तथा च त्वदीयग्रन्थोऽपि विरुद्धः किमुतान्यग्रन्थाः सिद्धान्तश्च।

च्छित्त्यापत्तेः● तदीयो विशेषविचारो वाक्यार्थरूपकनिरूपणावसरे द्रष्टव्यः। युक्तिं विनेष्टापत्तौ मया वाक्यार्थनिदर्शनोच्छेद एव कथन्नेष्यताम्।

व्यवस्थामाह—अस्माभिः● रूपके श्रौतोऽभेदो निदर्शनायामार्थः। रूपकेऽभेदस्य उद्देश्यविधेयभावालिङ्गनं निदर्शनायां नेति भावः। यत्तच्छब्दाभ्यां परामृष्टयोस्तिप्प्रत्ययार्थकयोरभेदः श्रौतः। रञ्जनपाण्डुरीकरणयोः प्राधान्येनानुपादानात् नाभेदः श्रौतः, किन्तु क्रियाभेदेन कर्त्तृभेदात् क्रिययोरभेदमन्तरा कर्त्रोरभेदो न सम्भवतीत्यर्थादायायाति क्रिययोरभेद इत्यार्थ इत्याह अत्र● ननु भवतु नाम क्रिययोरभेदः, परन्तस्यालङ्कारता कथमित्याशङ्कायामाह समग्रभर● क्रिययोरभेदेनैव चमत्कारः न तु कर्त्रोरभेदेन समग्रं चमत्कारो-

ननु यदीदमुदाहरणं निदर्शनायां न स्यात्, तदा कथमलङ्कारसर्वस्वकृता तत्प्रकरण उदाहृतमिति चेत्, भ्रान्तेनैव प्रतारितोऽसि। नहि प्रामाणिकेन भवता कदापि परेणानुक्तं किञ्चिदुच्यते। यदपि रूपके बिम्बप्रतिबिम्बभावो नास्तीत्युक्तम्, तदपि भ्रान्त्यैव। तथा च सर्वस्वटीकायां विमर्शिन्यामुदाहृतं बिम्बप्रतिबिम्बभावेन रूपकम्—

'कन्दर्पद्विपकर्णकम्बुमलिनैर्दानाम्बुभिर्लाञ्छितं
　　संलग्नाञ्जनपुञ्जकालिमकलं गण्डोपधानं रतेः।
व्योमानोकहपुष्पगुच्छमलिभिः सञ्छाद्यमानोदरं
　　पश्यैतच्छशिनः सुधासहचरं बिम्बं कलङ्काङ्कितम्॥'

अत्र कलङ्कस्य दानाम्ब्वादिभिः प्रतिबिम्बनम्, लाञ्छितत्वाङ्कितत्वयोः शुद्धसामान्यरूपत्वमित्युक्तं चेत्यास्तां तावत्।

---

त्पादनभारं स एव वहतीत्यर्थः। भ्रान्तेनैव ● कुत्रचिद् आतेनैव इत्यपि पाठः। तस्यापीदमशुद्धमिति भावः। परानुकरण उपहासमाह नहि ●।

कन्दर्पद्विप ● नायकस्य नायिकां प्रति चन्द्रोदयवर्णनमिदम्। सुधासहचरं सुधासदृशं श्वेतं कलङ्काङ्कितं शशिनो बिम्बं पश्य। श्वेतत्वादिदं बिम्बं कन्दर्पस्य द्विपस्य कर्णयोः शङ्खः। ननु स सर्वथा श्वेतोऽप्ययन्तु कालिमाङ्कित इत्याशङ्कायां कलङ्कस्य प्रतिबिम्बमाह मलिनैर्दानवारिभिर्लाञ्छितम्। रूपकान्तरञ्च रतेः कामपत्न्या गण्डोपधानम्। तत्र कलङ्कस्य प्रतिबिम्बः संलग्नस्य अञ्जनपुञ्जस्य कालिम्ना कलं रमणीयं कालिम्नः कला यत्रेति वा। तृतीयं रूपकं व्योमानोकहानामाकाशशालवृक्षाणां पुष्पगुच्छम्। तत्र कलङ्कप्रतिबिम्बो भ्रमरैः सञ्छाद्यमानमुदरमन्तर्यस्य तत्। शुद्धसामान्यरूपत्वम् ● शुद्धं बिम्बप्रतिबिम्बभावानापन्नम्, सामान्यमभेदापन्नम्। अत्र दीक्षितकुलकरङ्किणो मर्मप्रकाशनाम्नो तत्कन्या च कौस्तुभटीका। अङ्कितत्वलाञ्छितत्वयोर्वस्तुप्रतिवस्तुभावः। अङ्कितत्वे कलङ्कं विशेषणं लाञ्छितत्वे च दानाम्बादयः। कलङ्कदानाम्बुनोश्च यद्यपि बिम्बप्रतिबिम्बभावस्तथापि तद्विशिष्टत्वमङ्कितत्व लाञ्छितत्वयोरेव न तु विषयस्य शशिबिम्बस्य, विषयस्य तदा बिम्बविशिष्टत्वं स्याद्यदा कलङ्काङ्कितं शशिबिम्बं विषयं विधाय दानाम्बुलाञ्छितकर्णकम्बु-

तथा निर्दिष्टे शब्देनाभिहिते इत्यस्य येन केनचिद् रूपेण शब्देनाभिहित इत्यर्थः, उताहो उपमेयतावच्छेदकरूपेण शब्देनाभिहिते ? आद्ये 'सुन्दरं कमलं भाति लतायामिदमद्भुतम्' इत्यत्रातिप्रसङ्गः, सुन्दरपदेन सुन्दरत्वेन रूपेण इदंपदेन च विषयस्याननस्य प्रतिपादनात् । न चात्र सुन्दरपदार्थस्यारोप्यमाणकमलान्वय एव, न तु वदनरूपविषयान्वय इति वाच्यम्, कमलपदेन कमलताद्रूप्येणाननस्यैव लक्षणयोपस्थानात् तत्रैव सुन्दरादिपदार्थान्वयो युक्तः, न तु विशेषणीभूते कमले । अथ तादृशं विषयमुद्दिश्य विषयिताद्रूप्यं यत्र विधीयते इत्यपि लक्षणवाक्यार्थः । प्रकृते च सुन्दरत्वावच्छिन्नमुद्दिश्य कमलताद्रूप्यस्याविधानान्नातिप्रसङ्ग इति चेत्, न 'मुखचन्द्रस्तु सुन्दरः'

---

तादात्म्यस्य विधानं स्यात्तत्र विषये कलङ्कस्य बिम्बस्य प्रवेशात् । किन्तु शुद्धे शशिबिम्बे कर्णकम्बुतादात्म्यस्य विधानं कलङ्कदानाम्बुनोः पृथगेवाभेदो बुध्यते । यद्यपि अङ्कितत्वविशेषणतापन्नकलङ्केन परम्परया विशिष्टो भवति विषयः, तथापि साक्षादेव बिम्बविशिष्टत्वं रूपकस्य विरोधीति दीक्षिताऽभिप्रायः। न तु परम्परयाऽपि । तत एव त्वत्पादनखरत्नानामित्यादौ तद्ग्रन्थसंगतेरित्याह । तत्र साक्षादिति विशेषणं केवलदीक्षितग्रन्थयोजनाग्रहिलतयैव, न तु वस्तुतोऽनुभवमनुरुध्येति विवेचनीयं सुधीभिः ।

किञ्च, बिम्बं कलङ्काङ्कितमिति स्फुटमुपात्तं विषयं विशिष्टमुपेक्ष्य बाधकं विना शुद्धविषयत्वकल्पना करङ्कितावशादापन्नेत्यलमाग्रहिलालोचनया । **इत्यत्रातिप्रसङ्ग** ● 'मुखं कमलमाभाति लतायामिदमद्भुतम्' इत्यादिना मुखत्वेन मुखस्योपादान एव रूपकताया इष्टत्वात् । **कमलान्वय एव** ● तेन च विषयस्योपमेयस्य सर्वथैवोपादानाभावान्नातिप्रसङ्ग इति भावः । **योपस्थानात्** ● कमलाभिन्नमुखोपस्थितेः । पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेनेति न्यायेन विशेष्ये पदार्थे मुखेऽन्वयो युक्तः, न तु मुखविशेषणे पदार्थैकदेशे कमले । **स्याविधानात्** ● आभातीत्यनेनाभानक्रियाया एव

इत्यादिरूपके समासगतयोर्विषयविषयिणोः पृथग्विभक्तिमन्तरेणोद्देश्यविधेयभावाभावादव्याप्त्यापत्तेः। द्वितीये त्वनिह्नुत इति विशेषणवैयर्थ्यम्। अपह्नुतावुपमेयतावच्छेदकस्य निषिध्यमानतया तेन रूपेण विषयस्यानिर्दिष्टत्वादेव लक्षणस्याप्रसक्तेः।

निश्चयगताहार्यत्वविशेषणवैयर्थ्यं च। भ्रान्तिमति दोषविशेषेण प्रतिबध्यमानतया नास्त्युपमेयतावच्छेदकसंस्पर्श इति तावतैव वारणात्। अपि च 'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' इति कुवलयानन्दे त्वयोक्तायामपह्नुतावतिप्रसङ्गः। अत्र सुधांशौ सुधांशुत्वनिह्नवेऽप्यारोपविषयस्यानिह्नवात्। न चेदं

विधानात्। पृथग्विभक्ति● उद्देश्यविधेयभावेन बोधे विभिन्नविभक्तिजन्योपस्थितेर्हेतुत्वात्। मुखचन्द्र इत्यादौ तु मुखचन्द्रमुद्दिश्य सौन्दर्यस्यैव विधानान्न तु मुखे चन्द्रतादात्म्यस्येति भावः। तथा चाव्याप्तिः।

उपमेयतावच्छेदकरूपेणोपमेयस्योपादान इति द्वितीयपक्षे दूषणान्तरं ददाति निश्चयगतम्● उपरञ्जकशब्दार्थघटकम्। तद्धि भ्रान्तिमदलङ्कारेऽतिप्रसङ्गवारणाय तच्च अनेन द्वितीयपक्षाश्रयणेनैव वारितमित्याह भ्रान्तिमति●। आरोपविषयस्य● अर्थपदेन निर्दिष्टस्य।

अलङ्कारकौस्तुभटीकायामेवमेवाहार्यत्वविशेषणस्य वैयर्थ्यमङ्गीकृतम्। परम् 'नायं सुधांशुः किन्तर्हि सुधांशुः प्रेयसीमुखम्' इत्यादौ प्रसिद्धे चन्द्रे सुधांशुपदवाच्यताया निरासे मुखे च सुधांशुपदवाच्यताविधाने तात्पर्यं वर्णयन्ती दीक्षितसमर्थनाय प्रयतते, परं सुधांशुपदवाच्यस्य सुधांशुत्वं ज्ञायते न वा? प्रथमे ग्रन्थोक्त एव विरोधः। द्वितीये चमत्कारविरह इति सहृदयाः प्रष्टव्याः।

मर्मप्रकाशस्तु असमर्थोऽस्य विशेषणस्यास्मिन्नर्थे तात्पर्यमिति वदन् स्वीकुरुते प्रायोवैयर्थ्यं परमाहार्यत्वविशेषण इत्थमभिदधातिअतिशयोक्तावभेदस्य नाहार्यारोपः। लक्षणामाहात्म्यात्। शक्यतावच्छेदकलक्ष्यतावच्छेदकयोर्युगपद्भानेऽपि पूर्वं बाधज्ञानाभावादनाहार्यत्वे न विरोधः। रूपके तु आहार्यैवाभेदधीः। किञ्चातिशयोक्तौ न चन्द्रपदस्य लक्ष्यतावच्छेदकं मुखत्वम्, किन्तु चन्द्रवृत्तिगुणवत्त्वमेव तस्य च न चन्द्रत्वेन विरोधः। तथा चातिशयोक्तिवारणाय तदिति। तत्र न विशेषतो विचारणीय प्रतीयते, यतो ग्रन्थे ग्रन्थकृतः पुरस्कारनिवेशेन निवारयन्ति अनेन प्रकारेण, दीक्षितास्त्वाहार्यत्व-

रूपकमेवेति वाच्यम्, त्वदुक्तिविरोधापत्तेः।

यच्चाप्युक्तमव्यङ्ग्यत्वविशेषणाच्चेदमेवालङ्कारभूतस्य रूपकस्य लक्षणमिति, तदपि न। नहि व्यङ्ग्यत्वालङ्कारत्वयोर्विरोधोऽस्ति। प्रधानव्यङ्ग्यरूपकवारणाय पुनरुपस्कारकत्वं विशेषणमुचितमित्यसकृदावेदनात्। अनलङ्कारत्वस्य तुल्यतया प्रधानव्यङ्ग्यरूपकस्येव प्रधानवाच्यरूपकस्यापि वारणीयत्वेन तद्वारकविशेषणाभावेन तत्रातिप्रसङ्गाच्च।

यच्च 'तद्रूपकमभेदो य उपमानोपमेययोः' इत्यादि प्राचीनैरुक्तम्, तच्चिन्त्यम्, अपह्नुत्यादावुपमानोपमेययोरभेदस्य प्रतीतिसिद्धतया तत्रातिप्रसङ्गात्। अथोपमानोपमेययोरित्युक्त्या उपमेयतावच्छेदकं पुरस्कृत्योपमानतावच्छेदकावच्छिन्नाभेद इत्यर्थलाभादपह्नुतौ चोपमेयतावच्छेदकस्य पुरस्काराभावान्नाति-

---

निवेशेन। परं बाधबुद्धेरेव न प्रतिबन्धकत्वम्, अपि तु बाधनिश्चयजनकसामग्र्या अपि। अन्यथा घटाभाववद् भूतलं घटवच्चेति समुच्चयस्याप्यनाहार्यत्वापत्तेः। किञ्चेति द्वितीयपक्षेऽपि यदि तादृशं लक्ष्यतावच्छेदकं तदा समीचीनम्, परं तादृशाङ्गीकारे सादृश्यप्रयुक्त एव चमत्कारः स्फुरेत्, नत्वतिशयप्रयुक्त एवेति ध्येयम्। नायं सुधांशुः किन्तर्हि सुधांशुः प्रेयसीमुखमित्यत्रापि रूपकमिश्रितापह्नुतेरलङ्कारान्तरत्वं सर्वस्मिन् अपह्नुतेः सत्त्वेऽपि अंशे रूपकस्यापि स्थानं नारोचयतैषः। तदपि न मनोरमम्, यतः स्वकृतलक्षणमनुरुध्य अलङ्कारान्तरत्वस्य अंशांशिभावस्य वा कल्पनाया स्थाने लक्षणपरिवर्तनस्यैव युक्ततावत्। प्रसङ्गाच्चेत्यन्तं स्फुटं बहुधा समागतं व्याख्यातञ्च।

काव्यप्रकाशलक्षणं खण्डितुमुपक्रमते **तद् रूपकमित्यादि●**। **अभेदस्य●** 'नायं सुधांशुः किन्तर्हि व्योमगङ्गासरोरुहम्' इत्यादौ सुधांशुत्वेन सुधांशुपदार्थस्य निषेधेऽपि इदंपदोक्तपुरोवर्तिनि सुधाशावेव सरोरुहतादात्म्यस्यारोपः। **पुरस्कृत्य●** तथा च उपमेयतावच्छेदकस्य निषेध एव, न तु पुरस्कारः। पुरस्कृतश्चेदन्त्वं नोपमेयतावच्छेदकम्, अतो न दोषः।

प्रसङ्ग इति चेत्, न; 'नूनं मुखं चन्द्रः' इत्याद्युत्प्रेक्षायां तथाप्यतिप्रसक्तेः।

न च

'प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः।'
'सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्॥'

इत्याद्यपह्नुत्युत्प्रेक्षादीनां बाधकत्वात्तत्परिगृहीतविषयातिरिक्तो रूपकस्य 'मुखं चन्द्रः' इत्यादिर्विषयः स्यात्। यथा 'शरमयं बर्हिः' इत्येतद्विषयातिरिक्तः 'कुशमयं बर्हिः' इत्यस्य। यथा वा क्सादेशविषयातिरिक्तो विषयः सिचः। लोकेऽपि यथा 'ब्राह्मणेभ्यो दधि देयम्, तक्रं कौण्डिन्याय' इत्यत्र तक्रसम्प्रदानातिरिक्तं दध्नः सम्प्रदानमिति वाच्यम्, वैषम्यात्। विशेषशास्त्रं हि स्वविषयातिरिक्तं विषयं ग्राहयत्सामान्यशास्त्रस्य बाधकमित्युच्यते। प्रकृते च रूपकस्य लक्षणं धर्मः। स यद्युत्प्रेक्षादिवृत्तिः स्यात्, कस्तस्माद्विषयान्निरस्य विषयान्तरं ग्राहयेत्। नहि घटत्वं

---

प्यतिप्रसक्तेः● अत्र मुखत्वेन मुखस्य पुरस्कारात्।

प्रकृतम्● प्रकृतमुपमेयं निषिध्य यदन्योपमानतादात्म्यमुपपाद्यते सा अपह्नुतिः। सम्भावनम्● अथ प्रकृतस्योपमेयस्य समेन उपमानेन यत्तादात्म्यसम्भावनं सा उत्प्रेक्षेत्यर्थः। तद् रूपकमित्यादौ उपमानोपमेयाभेदस्य रूपकत्वम्। स चाभेदोऽपह्नुत्युत्प्रेक्षादावप्यस्ति। अतो रूपकस्य विषयो व्यापकः, अतः सामान्यशास्त्रत्वं तस्य। अपह्नुतेरुत्प्रेक्षायाश्च विषयो निषेधविशिष्टोऽभेदः सम्भाव्यमानोऽभेदश्च, न तु सर्वोऽप्युपमानोपमेययोरभेदोऽतो विशेषः। एवं कुशमयं बर्हिरिति शास्त्रस्य सर्वोऽपि यागो विषयः। अतः सामान्यशास्त्रं शरमयं बर्हिरित्यस्य विषयः केवलमभिचारादिः, अतो विशेषशास्त्रम्। तथा च्लेः सिजिति सामान्यम्। शल इगुपधादनिटः क्स इति विशेषः। ब्राह्मणसम्प्रदानकं दधिदानं सामान्यं कौण्डिन्यब्राह्मणेऽप्यतिप्रसक्तम्। कौण्डिन्यब्राह्मणमात्रं विषयस्तक्रदानस्य, अतस्तद्विशेषः। तत्र त्रिषु दृष्टान्तेषु विशेषशास्त्रविषयातिरिक्तत्वेन सामान्यशास्त्रविषये सकोचरूपो बाधो भवति। यथा अभिचाराद्यतिरिक्ते यागे कुशमयं बर्हिः। शलन्तेगुपधानिटः परस्माच्च्लेर्भिन्नश्च्लिः। कौण्डिन्यब्राह्मणातिरिक्तो ब्राह्मणो दधिदानस्य।

स्वाधिकरणात् पृथिवीत्वं द्रव्यत्वं वा निरस्य विषयान्तरं ग्राहयितुमीष्टे। तस्मादतिप्रसक्तिर्लक्षणेऽस्मिन् दोषः।

ननु सम्भावनात्मिकोत्प्रेक्षा, कथं तस्यामभेदत्वात्मकरूपकलक्षणातिप्रसक्तिरिति चेत्, न; विनिगमकाभावेन सम्भाव्यमानाभेदस्याप्युत्प्रेक्षास्वरूपत्वात्। विषयसम्भावनाऽभेदाभ्यामुत्प्रेक्षायामलङ्कारद्वयव्यवहारापत्तेश्च। निश्चीयमानत्वेनाभेदो विशेषणीय इति चेदस्मदुक्त एव तर्हि पर्यवसतिरिति दिक्।

तदिदं रूपकं सावयवं निरवयवं परम्परितं चेति तावत्त्रिविधम्। तत्राद्यं समस्तवस्तुविषयमेकदेशविवर्ति चेति द्विविधम्। द्वितीयमपि केवलं मालारूपकं चेति द्विविधम्। तृतीयं च श्लिष्टपरम्परितं शुद्धपरम्परितं चेति द्विविधं सत् प्रत्येकं केवलमालारूपत्वाभ्यां चतुर्विधमित्यष्टविधमाहुः।

तत्र—

**परस्परसापेक्षनिष्पत्तिकानां रूपकाणां संघातः सावयवम्।**

तत्रापि—

**समस्तानि वस्तून्यारोप्यमाणानि शब्दोपात्तानि यत्र तत् समस्तवस्तुविषयम्।**

---

**तस्मादतिप्रशक्तिः●** उद्देश्यविधेयभावे शास्त्रद्वयविरुद्धविषयस्यैकत्र प्रसक्तौ बाध्यबाधकभावो भवति, न तु धर्माणामेकत्र विरोध इति भावः।

**नाभेदस्यापि●** अभेदस्य सम्भावना सम्भाव्यमानोऽभेदो वा। एवमेवालङ्कारद्वयप्रसक्तिश्च। दिगर्थस्तु तादृशेऽभेदे रूपकत्वं विधीयते। अपह्नवसामानाधिकरणे चाभेदे अपह्नतिः। एव सम्भाव्यमानाभेदे उत्प्रेक्षेत्यादितात्पर्यं वर्ण्यते, तदा कथञ्चिन्निर्वाहेऽपि लक्षणवाक्यस्य स्फुटतयोक्तिरेव ज्यायसी स्फुटकरणे च मदुक्ते पर्यवसानम्।

स्वयमनेकविधं वर्णयिष्यन् प्रकाशादीनां मतेन वर्णयति—**तदिदम्●**। **परस्परसापेक्ष●** एकं रूपकं स्वनिष्पत्तौ अपरस्य रूपकस्य निष्पत्तिमवश्यमपेक्षत एवमपरमपि।

यत्र च क्वचिदवयवे शब्दोपात्तमारोप्यमाणं क्वचिच्चार्थसामर्थ्याक्षिप्तम्। तदेकदेशे शब्दानुपात्तविषयिके अवयवरूपके विवर्तनात् स्वस्वरूपगोपनेनान्यथात्वेन वर्तनादेकदेशविवर्ति।

यद्वा—

एकदेशे उपात्तविषयिके अवयवे विशेषेण स्फुटतया वर्तनादेकदेशविवर्ति॥

समस्तवस्तुविषयं सावयवं यथा—

'सुविमलमौक्तिकतारे धवलांशुकचन्द्रिकाचमत्कारे।
वदनपरिपूर्णचन्द्रे सुन्दरि राकासि नात्र सन्देहः॥'

अत्र समुदायात्मकस्य सावयवरूपकस्यावयवानां सर्वेषामपि वस्तुतः समर्थ्यसमर्थकभावस्य परस्परं तुल्यत्वेऽपि कवेराकारूपस्यैव समर्थ्यत्वेनाभिप्रेतत्वात् समर्थकतयोपादानमितरेषामिति गम्यते।

---

यत्र च क्वचिदवयवे● सावयवो रूपकसंघातो वर्तते। संघातस्यावयवा रूपकाणि अनेकानि केचन शब्दत उपात्ताः, केचन आक्षिप्यन्तेऽर्थानुपपत्तिवशात् तदेकदेशविवर्ति रूपकम्। योगार्थं समर्थयते सूत्रे तदेकदेशे● विषयि आरोप्यमाणञ्चोपमानम्। विपरीतवर्तनं विवर्तनम्। तच्च स्वस्वरूपगोपनमन्तरा न भवतीति वक्ति स्वस्व● रूपकस्य स्फुटतया अभेदप्रकाशनं रूपम्। तच्चानुपात्तोपमानके न प्रकाशते। अंशे स्फुटमस्फुटञ्चेति भावः। विशेषेण वर्तनम् उपात्तोपमानके स्फुटतया वर्तनमिति योगार्थायाह यद्वा●

सुविमल● हे सुन्दरि त्वं राका असि, नात्र सन्देहः। सुन्दरीपदेनोपात्ते विषये राकातादात्म्यमाह। समर्थकरूपकाणि नायिकागतानां सुविमलमौक्तिकानां तारातादात्म्यम्, धवलांशुकानां चन्द्रिकाचमत्कारस्य, वदने परिपूर्णचन्द्रस्य तादात्म्यम्। मौक्तिकादीनां तारादिरूपतामन्तरा सुन्दरी राका न भवितुमर्हति। एवं सुन्दर्या राकातामन्तरा मौक्तिकादीनां तारादिता न सिध्यति, अतः समर्थ्यसमर्थकभावः, परस्परसापेक्षेण निष्पत्तिश्च। राका च पौर्णमासी रात्रिः, कविसमीहितत्वात् सुन्दर्या राकात्वं समर्थ्यम्, मौक्तिकादौ तारात्वादीनि समर्थकानि रूपकाणीति व्यवस्थापयति गम्यत इत्यन्तेन।

एवं स्थिते समर्थकरूपकाणां विषयविषयिणोः पृथग्-विभक्तेरश्रवणादनुवाद्यत्वेऽपि समर्थ्यरूपकस्य तयोः पृथग्-विभक्तिश्रवणाद् विधेयतया तदादाय सङ्घातात्मकस्य सावयव-रूपकस्यापि विधेयत्वमत्र व्यपदिश्यते। यथा भटसङ्घातान्तर्गतस्य मुख्यस्य कस्यापि भटस्य जय-पराजयाभ्यां भटसङ्घातो जितः पराजितश्चेत्युच्यते ।

व्योमाङ्गणे सरसि नीलिमदिव्यतोये
तारावलीमुकुलमण्डलमण्डितेऽस्मिन् ।
आभाति षोडशकलादलमङ्कभृङ्गं
सूराभिमुख्यविकचं शशिपुण्डरीकम् ॥

अस्य तु सावयवरूपकस्यानुवाद्यत्वमेव ।

अत्र वर्ण्यस्य पूर्णचन्द्रस्य सूर्याभिमुख्यं ज्योतिःशास्त्रसिद्धम् । तेन सूर्याभिमुख्ये चन्द्रस्य कथं विकास इति न शङ्कनीयम् ।

एकदेशविवर्ति सावयवं यथा—

---

राकासुन्दर्यो रूपकं विधेयम्, समानविभक्त्यन्तपदोपस्थापितत्वात् । मौक्तिक-तारादीनाञ्च तथाऽभावादनुवाद्यम् । परं विधेये समर्थ्ये रूपके समर्थकत्वे-नान्तर्हितानामप्यनुवाद्यानां संघातरूपकात्मना विधेयत्वमेवेत्याह **एवं स्थिते●** व्यपदिश्यतेऽन्तेन । दृष्टान्तमाह **भट●** भटसंघातोऽजितपराजितघटितः । तथा चेदं विधेयरूपकस्योदाहरणमिति भावः ।

अनुवाद्यं रूपकमुदाहरति **व्योमाङ्गणे●** शशिनि पुण्डरीकतादात्म्यम्, समर्थ्यमन्यापेक्षया प्रधानं परं भा॰ क्रियाया विधानात् शशिपुण्डरीकस्यानु-वाद्यत्वम् । तदन्तर्गततया समुदायस्यापि पूर्ववदनुवाद्यत्वम् । समर्थकरूपकाणि व्योम्नि अङ्गणस्य व्योमनीलिम्नि दीव्यतोयस्य तारावल्यां मुकुलमण्डलस्य चन्द्रमसः षोडशकलासु कमलदलानाम् अङ्के भृङ्गस्य सूर्याभिमुख्यं चन्द्रे पुण्डरीके च वस्तुप्रतिवस्तुभावापन्नम् ।

सूर्याऽभिमुख्यमाह—**अत्र●** ।

'भव-ग्रीष्म-प्रौढातप-निवह-सन्तप्त-वपुषो
बलादुन्मूल्य द्राङ्निगडमविवेक-व्यतिकरम् ।
विशुद्धेऽस्मिन्नात्मामृतसरसि नैराश्य-शिशिरे
विगाहन्ते दूरीकृतकलुषजालाः सुकृतिनः ॥'

अत्र सहचरैर्निगडादिरूपकैः सुकृतिषु गजरूपकमाक्षिप्यते । यथा वा—

'रूपजला चलनयना नाभ्यावर्ता कचावलीभुजगा ।
मज्जन्ति यत्र सन्तः सेयं तरुणीतरङ्गिणी विषमा ॥'

पूर्वं तु कवेः समर्थ्यत्वेनाभिमतस्य रूपकस्याक्षेपः, इह तु समर्थकत्वेनाभिमतस्य नयनयोर्मीनरूपकस्येति विशेषः ।

---

भवग्रीष्म● सुकृतिषु विषयेषु अनुपात्तस्य विशेषणार्थमहिम्ना आक्षिप्तस्य गजस्य तादाम्यं रूपकं समर्थ्यम् । भवरूपो यो ग्रीष्मप्रौढातपस्य निवहस्तेन संतप्तं वपुर्येषां तेषां सुकृतीनां भवे ग्रीष्मप्रौढातपनिवहस्य तादात्म्यम्, अविवेकसम्बन्धे निगडतादात्म्यम्, नैराश्ये शिशिरस्य विशुद्धात्मनि सरसः कलुषे शेवालजालस्य तादात्म्यम् । सुकृतिनो ज्ञानशीलाः संसारप्रपञ्चेन दुःखिता ज्ञानद्वारा अविवेकं विधूय सांसारिकविषयाशानिरासेन शान्ते आत्मनि स्थिता ज्ञानाग्निः सर्वकर्माणीति न्यायेन कलुषकर्माणि दूरीकृत्य विगाहन्ते विभावात्मनि एकीभवन्ति । गजश्च प्रौढातपेन संतप्तः निगडं शृङ्खलां त्रोटयित्वा शिशिरे स्वच्छे सरसि शेवालजालानि दूरीकुर्वन् क्रीडति ।

सहचरैः● गजताक्षेपकगजसम्बन्धिभिः ।

रूपजला● कठिनायां तरुण्यां नदीतादात्म्यम् । तदेव समर्थ्यम् । प्रधानं शब्दत उपात्तं न त्वाक्षिप्तम् । समर्थकानि रूपकाणि रूपजलयोः, चञ्चलमीन-नयनयोः, नाभ्यावर्तयोः, कचावलिभुजङ्गयोः, चञ्चलमीननयनयो रूपकं नोपात्तम्, किन्तु चलपदमहिम्ना आक्षिप्तमत एकदेशविवर्ति । भुजङ्गवशाद् विषमा । पूर्वत्रात्र च विगाहन्ते मज्जन्तीति अनुगामिभूतम् ।

एकदेशविवर्तिताप्रयोजकमाक्षेपमुदाहरणद्वये वर्णयति पूर्वन्तु● भव-ग्रीष्मेत्यादौ । अभिमतस्य● गजरूपकस्य । ननु वस्तुसमुदायस्तद्वस्त्वेव न । नहि घटसमुदायो घटविशेषः । अथवा घटसमुदाये घटत्वं न पर्याप्तम्, अपि तु प्रत्येकं घटे तथा रूपकसमुदायात्मके सावयवे कथं रूपकत्वमित्याशङ्क्य रूपकवच्चमत्कारजनकत्वाद् निरवयवरूपकापेक्षया चमत्कारातिशायकत्वाच्च

अत्र च चमत्कारविशेषजनकतया रूपकसङ्घातात्मकमपि सावयवरूपकं रूपकालंकृतिभेदगणनायां गण्यते। यथा मौक्तिकालंकृतिभेदगणनायामेकं नासामौक्तिकमिव सङ्घातात्मकमौक्तिकमञ्जर्यादयोऽपि गण्यन्ते। अन्यथा मालारूपस्योपमादेस्तद्भेदगणनेऽगणनप्रसङ्गात्। एतेन 'गवां सङ्घातो गोभेदानां कपिलादीनां गणनायां यथा न गण्यते, तथा रूपकभेदगणनाप्रस्तुतौ न तत्सङ्घातात्मकं सावयवं गणनीयम्' इति परास्तम्।

एवमस्मात् सङ्घातात्मकात् सावयवान्मालारूपकस्य सङ्घातात्मकत्वेनाविशेषेऽप्येकविषयकत्व-परस्परनिरपेक्षत्वाभ्यामस्ति महान् विशेषः।

निरवयवं केवलं यथा—

'बुद्धिर्दीपकला लोके यया सर्वं प्रकाशते।
अबुद्धिस्तामसी रात्रिर्यया किञ्चिन्न भासते॥'

अत्र रूपकद्वयमपि सापेक्षरूपकसङ्घातात्मकत्वविरहाद्निरवयवम्, मालात्मकत्वविरहाच्च केवलम्।

निरवयवं मालारूपकं यथा—

'धर्मस्यात्मा भागधेयं क्षमायाः सारः सृष्टेर्जीवितं शारदायाः।
आज्ञा साक्षाद् ब्रह्मणो वेदमूर्त्तेराकल्पान्तं राजतामेष राजा॥'

---

रूपकभेद इत्याशयेन समाधत्ते—**अत्र च**● व्यतिरेके दोषमाह **अन्यथा**● सिद्धान्तविरोधः। शङ्कामुपपादयति **एतेन**● परासे अलङ्कृतिवैचित्र्यशरणीभूतं चमत्कारवैचित्र्यम्।

सावयवरूपकान्मालारूपकस्य भेदं शास्ति **एवम्**●। **एकविषयकत्व**● मालारूपके एकविषयकत्वप्रयोज्यश्चमत्कारः। सावयवे च परस्परापेक्षाप्रयोज्यः।

**तामसी**● गाढान्धकारा।

**सापेक्ष**● निरवयत्वे बीजम्। **विरहाच्च**● एकविषयकत्वस्य समुच्चयः।

**धर्मस्यात्मा**● राजा विषयस्तत्र धार्मिकतया धर्मात्मत्वम्, पृथिव्या ईश्वरत्वेन भागधेयत्वम्, सौन्दर्यात् सृष्टेः सारत्वम्, वैदुष्याच्छारदाजीवनं

एकविषयकनानापदार्थारोपरूपत्वान्मालारूपमिदम्। पर-स्परसापेक्षत्वविरहाच्च निरवयवम्।

यत्र चारोप एवारोपान्तरस्य निमित्तं तत्परम्परितम्। तत्रापि समर्थकत्वेन विवक्षितस्यारोपस्य श्लेषमूलकत्वे श्लिष्टपरम्परितम्। यथा—

'अहितापकरणभेषज नरनाथ भवान् करस्थितो यस्य।
तस्य कुतो हि भयं स्यादखिलामपि मेदिनीं चरतः॥'

अत्र द्वयोरप्यारोपयोः समर्थ्यसमर्थकभावस्य वस्तुतस्तुल्य-त्वेऽप्यहितानामपकरणमेवाहीनां तापकरणमिति श्लेषमूलकेना-रोपेण राजनि भेषजतादात्म्यारोपस्य समर्थनीयतया कवेरभि-प्रायः। अत एव भङ्गश्लेषनिवेदितोऽहिभयाभावोऽपि सङ्गच्छते।

इदमेव मालारूपं यथा—

'कमलावासकासारः क्षमाधृतिफणीश्वरः।
अयं कुवलयस्येन्दुरानन्दयति मानवान्॥'

---

प्रभावितया ब्रह्मण आज्ञात्वं मूर्तौ वेदत्वमारोप्यते। वेदरूपब्रह्मणो वा।

**अहितापकरण●** अहितानां शत्रूणां तेषामभिमानशमाय अपकरणं विनाशनमेव तदर्थमौषधिस्वरूप हे नरनाथ, अहीनां सर्पाणां तापकरणाय भेषजं यस्य करस्थितं वशीभूतो हस्तगतश्च तस्य पुरुषस्य कुतो भयं स्यात्, न कुतश्चिदिति भावः। पक्षे अहेः सर्पाद् भयम्, कथं भूतस्य पुरुषस्य, राज-प्रियतया औषधिवशाच्च सरीसृपादिभयनिवृत्तेर्निर्भयमखिलां मेदिनीं चरतः।

अत्र राज्ञि औषधतादात्म्यं शत्रूणामपकरणे सर्पतापकरणतादात्म्यमारोप्यते, तत्र प्रथमारोपं विना द्वितीयो न भवितुमर्हति; द्वितीयं विना प्रथमोऽपि। समर्थ्यत्वे कवितात्पर्यं विनिगमकम्। विषयतार्थकसप्तम्या समर्थनीयतायामित्येष पाठोऽपि समीचीनः। **भङ्ग●** पदस्य खण्डशः करणेन।

**कमलावास●** अयं वर्ण्यो राजा कमलानां पद्मानामावासाभिन्नो यः कमलायाः श्रियो वासस्तदभिन्नः, अत एव कासारः सरोरूपः। तथा क्षमा शान्तेर्धृतेर-

शुद्धपरम्परितं केवलं यथा—

'देवाः के पूर्वदेवाः समिति मम नरः सन्ति के वा पुरस्ता-
देवं जल्पन्ति तावत्प्रतिभट-पृतना-वर्तिनः क्षत्र-वीराः।
यावन्नायाति राजन्नयनविषयतामन्तकत्रासिमूर्ते
मुग्धारिप्राणदुग्धाशनमसृणरुचिस्त्वत्कृपाणो भुजङ्गः॥'

अत्रापि भुजङ्गारोपो दुग्धारोपसमर्थ्यत्वेनाभिमतः।

तदेव मालारूपं यथा—

'प्राचीसन्ध्या समुद्यन्महिमदिनमणेर्मानमाणिक्यकान्ति-
ज्वालामाला कराला कवलितजगतः क्रोधकालानलस्य।

---

भिन्ना या पृथिव्या धृतिस्तया फणीश्वरः शेषः। कुवलयात् कुमुदादभिन्नो यः पृथ्वीमण्डलस्तेनेन्दुरूपो मानवानानन्दयति। राज्ञि कासाराद्यारोपे कमलावासयोरारोपस्य निमित्तत्वात् परम्परितम्। कमलावासक्षमाकुवलयपदानां श्लिष्टत्वाच्छ्लिष्टम्। एकस्मिन् राज्ञि विषये त्रितयारोपान्माला।

**शुद्धं●** श्लेषरहितम्।

**देवाः के●**। हे अन्तकस्य त्रासिनी मूर्तिर्यस्य स तत्सम्बुद्धौ राजन्! तावत् क्षत्रवीराः समिति संग्रामे मम पुरस्ताद् देवाः के, पूर्वदेवा देवेभ्यः प्रागुत्पन्ना दैत्याः के, वा नरः पुरुषाः के, प्रतिभटपृतनावर्तिनः शत्रुसेनानिविष्टाः सन्तो जल्पन्ति यावद् मुग्धानामरीणां प्राणाभिन्नस्य दुग्धस्य अशनेन भक्षणेन मसृणा उज्वला रुचिर्यस्यैवंभूतस्तव कृपाणाभिन्नो भुजङ्गो नयनविषयतां नायाति।

अत्र च कविप्रौढोक्तिसिद्धेन कृपाणे भुजङ्गारोपेण रूपकेण त्वयि उद्यतकरवाले शत्रूणां न जीवनस्याशेति वस्तु व्यज्यत इति प्राङ्मूले स्पष्टम्।

परम्परितमाह **समर्थ्यत्वेन●** तदेव शुद्धपरम्परितम्।

**प्राची●** हे क्षोणीन्दो संगरे संग्रामे ते नयनयोरुत्कटा कठिना शोणिमश्री रक्तिमशोभा लसति। तत्र शोणिमश्रियि विषये सन्ध्याज्वालामालाज्ञानामारोपः, अतो मालेयम्। सन्ध्यारोपश्च राज्ञि दिनमणेरारोपमपेक्षते, एवं ज्वालारोपः कालानलारोपम्, अतः परम्परितम्। श्लेषाभावात् केवलम्। उद्यन्महिमा यस्यैवंभूतस्य राजाभिन्नस्य दिनमणेः प्राची सन्ध्या उदयस्थानम्। सा च सन्ध्या अतो माणिक्यकान्तिरेवेति रूपकं वा। किं वा राजा यदि

आज्ञा कान्तापदाम्भोरुहतलविगलन्मञ्जुलाक्षारसाभा
क्षोणीन्दो सङ्गरे ते लसति नयनयोरुद्गटा शोणिमश्रीः ॥'

यद्यपि सावयवेऽप्यारोप आरोपान्तरस्योपायः, तथापि तत्रारोपातिरिक्तेन कवि-समय-सिद्ध-सादृश्येनाप्यारोपान्तरसिद्धिः सम्भवति । तथा प्रागुक्ते 'सुन्दरि राकासि नात्र सन्देहः' इत्यत्र मौक्तिकादीनां तारात्वाद्यारोपं विनाप्यौज्ज्वल्यमात्रेणापि सुन्दर्यां राकारोपसिद्धेः, इह तु नयनशोणिम्नि ज्वालाद्यारोपोऽनलसमारोपं नियमेनापेक्षते ।

---

दिनमणिस्तदा तदीयं मानं माणिक्यं तस्य कान्तिरिति शोणिमश्रियि आरोप्यते । एवं व्याख्याने माने माणिक्यारोपो राज्ञि दिनमणेरारोपमपेक्षते चेत्, मालापरम्परितस्यानुकूलमेव । कवलितं शत्रुजगंद्येन क्रोधेन राज्ञाभिन्नस्य कालानलस्य कराला ज्वालामालेति श्रियो विशेषणम् । सा च शोणिमश्रीः। कान्तापदाम्बुरुहाणां तलेभ्यो विगलन्यो मञ्जुलो लाक्षारसस्तत्सदृशी आज्ञा शोणितश्रिया प्रसृतशासनत्वं राज्ञो व्यज्यते । वश्येष्वेव तथासम्भवात् । अथवा शृङ्गारिणो नृपस्य आज्ञा क्रीडारूपैवेति व्यज्यते । परमत्रांशे परम्परितं नास्तीति ध्येयम् । यदि श्लेषेण लाक्षायां रसो यस्य स इत्यन्विष्यते, तदा तादृशलाक्षारसस्य राज्ञ आज्ञेति व्यञ्जनासहकारेण परम्परितं कथञ्चित् समर्थितं भवति । क्वचिल्लाक्षारसानामिति पाठः । तत्पक्षेऽप्येनमंशमादाय परम्परितमालात्वं नास्ति । एकस्मिन् विषये आरोपान्तरसापेक्षोऽनेकविध आरोपो वर्ण्यते चेत् तत्स्यात् ।

केचन व्याख्यातारो मर्मप्रकाशमेवं प्रकाशयन्तमाक्षिपन्तः क्रोधेऽनलमारोपयन्ति, ते तु स्थलदृशोऽपि स्थूलमप्याशयं ग्रन्थस्य न स्पृशन्ति । यतो हि नेयं रूपकस्य माला येनैकधा शोणिमश्रियि आरोपदर्शनेन सा सम्पद्येत, किन्तु परम्परितरूपकस्य । सा च शोणिमश्रियि कतिपयारोपनिमित्तं नैकधाऽरोप एकस्मिन् विषये स्यात् ।

किञ्च राजसम्बन्धिनो शोणिमश्रीर्दिनमणेः सन्ध्या तदा राज्ञि दिनमणित्वे किं बाधकम् । तेशब्देन राज्ञः सम्बन्धश्च स्फुटमुक्तः । प्रथमपादेन राज्ञि दिनमणित्वारोपे द्वितीयेऽपि तथैवारोपः क्रमानुसारात्प्राप्तः । शोणिमश्रियां ज्वालामालात्ववर्णनाय शोणिमश्रीसम्बन्धिनि राज्ञि अनलता समारोपोऽपेक्ष्यत एव, परं क्रोधवशसम्पन्नायामपि शोणिमश्रियि क्रोधस्य न कश्चित् सम्बन्धः शब्दोपात्तः । तस्मादसङ्गसोऽयं सम्प्रदायः ।

सावयवरूपकात् परम्परितस्य सापेक्षारोपसाम्येऽपि वैशिष्ट्यं दर्शयति यद्यपि● ।

एवं 'कारुण्यकुसुमाकाशः खलः' इत्यत्राकाशखलयोः सादृश्यस्याप्रसिद्धतयाऽऽरोपसिद्धचर्थमारोप एवोपाय इति वैलक्षण्यम्। कश्चित् तु बह्वारोपात्मकात् सावयवादारोपद्वयात्मकमेवास्य वैलक्षण्ये बीजमित्याह।

'काव्यं सुधा रसज्ञानां कामिनां कामिनी सुधा।
धनं सुधा सलोभानां शान्तिः संन्यासिनां सुधा॥'

अत्र विषयमालाकृतो न कश्चिच्चमत्कारविशेष इति न पृथग्भेदगणनायां गण्यते। आरोप्यमाणमाला तु चमत्कारविशेषशालित्वाद् गण्यत एव।

अथ कथं नाम श्लिष्टपरम्परिते 'कमलावासकासारः' इत्यादावेकस्यारोपस्यारोपान्तरोपायत्वम्। यतः श्लेषेण कमलानामावासस्य कमलाया वासस्य चाभेदमात्रमत्र प्रतीयते, नैकत्रान्यारोपः, तस्य स्वतन्त्रविषयनिर्देशापेक्षत्वात्।

न च शुद्धाभेदप्रत्यय एवारोपः, विषयनिगरणात्मिकायामतिशयोक्तावपि तत्प्रसङ्गात्।

---

एवं● । एवं वक्ष्यमाणप्रातिकूल्योदाहरणे। कारुण्ये कुसुमारोपः खले सर्वथा कारुण्याभावाय। स च तदा सफलो यदा खल आकाशो भवेत्, येन तत्र सुमासम्भवेन कारुण्याभावः स्थिरतां भजेत्।

कश्चित्● अवश्यापेक्षीयारोपान्तरोपायत्वस्य स्फुटत्वेऽगतितयेत्थं समाधानमरुचिग्रस्तम्।

विषयमालाकृतभेदान्तरवारणायाह काव्यम्● काव्यकामिनीधनशान्तीनां विषयाणामनेकत्वेऽपि सुधैवैका आरोप्यमाणा विषयिणीति न चमत्कारविशेषः।

स्वतन्त्रविषय● असमासे समानविभक्तिकत्वेन निर्देशे सति आरोपप्रत्ययो भवति। अथवा श्लिष्टशब्दैरुपस्थितयोरर्थयोः समानत्वात् कस्मिन् कस्य आरोपः स्यात्। एकशब्दोपस्थितयोः परस्परं विशेष्यविशेषणभावे मानाभावः, आरोपे विशेष्यविशेषणभावस्यापेक्षणात्।

शयोक्तावपि● अत्रापि शुद्धारोपस्य सत्त्वात्।

न च शुद्धाभेदप्रत्ययेनात्रार्थः, यत्सम्बन्धिनि यत्सम्बन्ध्यभेदस्तस्मिंस्तदभेद इति 'कमलावासकासारः' इत्यादौ राजनि कासारारोपो राजसम्बन्धिनि लक्ष्म्याश्रयत्वे कासारसम्बन्धिसरोजाश्रयत्वाभेदारोपेण समर्थयितुं शक्यः, श्लेषेण तु पुनर्लक्ष्म्याश्रयत्वसरोजाश्रयत्वयोरभिन्नत्वेन प्रत्ययादभिन्नधर्मनिबन्धनो राजकासारयोरप्यभेदप्रत्ययः स्यात, न तु राजनि विषये कासारविषयिकस्यारोपस्य प्रकृतस्य सिद्धिः। इमावत्रभिन्नावित्याद्याकारस्य शुद्धाभेदप्रत्ययस्याप्रकृतत्वात् प्रागुक्त आरोपो मृग्यः।

स च न श्लेषसाध्य इति। सत्यम्; श्लेषेण शुद्धाभेदप्रतीतौ सत्यां प्रकृतारोपसमर्थनायान्तरा मानसस्य राजसम्बन्धिनि कासारसम्बन्ध्यभेदारोपस्य कल्पनान्नानुपपत्तिः।

कथं तर्हि परम्परितरूपके 'सौजन्यचन्द्रिकाचन्द्रो राजा' इत्यादौ रूपकत्वम्, अभेदारोपस्य सत्त्वेऽपि तस्य सादृश्य-

---

कासारारोपो ● आरोपमन्तरेण शुद्धाभेदमात्रेण न रूपक इति भावः। आरोपात्मक रूपकस्य आरोप एव निमित्तम्, न त्वभेदः।

मानसस्य ● अनुमितिरूपस्येत्यर्थः। शाब्दबोधस्य शब्दमर्यादानियन्त्रितस्यारोपबोधनासमर्थत्वेऽपि भिन्नयोरभेदस्यारोपव्याप्ततयाऽनुमित्या सेत्स्यतीति भावः। अनुमितिरनाहार्येति सिद्धान्ते ज्ञानान्तरमेवेति।

अत्र मर्मप्रकाशः अलङ्कारकौस्तुभश्च गाम्भीर्येण समुद्रोऽयमित्यादौ साधारणज्ञानमात्राद्यथा रूपकम्, तथा कमलवासयोरभेदप्रत्ययेन साधारण्यज्ञानाद् रूपकनिष्पत्त्या व्यर्थोऽयं प्रयासः।

समर्थकस्यारोपरूपत्वमेवेत्यत्र न मानम्। समर्थके रूपकत्वव्यवहारो भाक्त इदि वदतः। तत्रेदं चिन्तनीयम्—सत्यं साधारण्यसम्पत्तिरभेदमात्रेण तेन च रूपकस्यापि निष्पत्तिः। परं परम्परितरूपकमिति ध्येयम्। तत्र रूपकद्वयं समर्थ्यसमर्थकभावापन्नमवश्यमपेक्ष्यते। यदि समर्थ्यरूपकमारोपात्मकम्, तर्हि समर्थकेनाप्यारोपात्मनैव भाव्यम्। नहि अन्येन केनचित् समर्थ्यं परम्परितं भवति, किन्तु रूपकेणैव। अत एव द्वयोः सामान्ये कवेरभिप्रायेण समर्थ्य-

मूलकत्वाभावादिति चेत्, न; समर्थकारोपेण धर्मैक्यसम्पादने सादृश्यस्य निष्प्रत्यूहत्वात् ।

स्यादेतत् । सौजन्यचन्द्रिकाचन्द्र इत्यत्र तत्पुरुषावयवे समानाधिकरणतत्पुरुषे चन्द्रिकायामभेदसंसर्गेण सौजन्यस्य विशेषणत्वात् प्रतीयमानश्चन्द्रिकागतः सौजन्याभेदो न राजनि चन्द्राभेदात्मकं रूपकं समर्थयितुं प्रभवति, यत्सम्बन्धिनि यत्सम्बन्ध्यभेद इत्यादिप्रागुक्तन्यायात् । अपि तु सौजन्ये विषये चन्द्रिकाभेदः । यथा—'सौजन्यं ते धराधीश ! चन्द्रिका त्वं सुधानिधिः ।' स च दुरुपपाद एव ।

---

समर्थकभावः पण्डितराजेन परिस्फोटितः ।

**समर्थकारोपेण**● सौजन्यचन्द्रिकयोरभेदारोपे तयोरेव बिम्बप्रतिबिम्बभाव इव साधारण्यसम्भवात् ।

चन्द्रिकायाश्चन्द्रेण सह तत्पुरुषः । सौजन्यचन्द्रिकयोः कर्मधारय इत्याह **सौजन्यचन्द्रिका**● 'विशेषणं विशेष्येण बहुलम्' इत्यनेन समासे विशेषणस्य पूर्वनिपातात् सौजन्यस्यैवाभेदसम्बन्धश्चन्द्रिकायाम् । **न्यायात्**● चन्द्रसम्बन्धिन्यां चन्द्रिकायां राजसम्बन्धिनः सौजन्यस्याभेदश्चन्द्रे राजतादात्म्यमुपपादयतां नाम, न तु राजनि चन्द्रतादात्म्यम् । यथा - **सौजन्यं ते धराधीश**● अत्र सौजन्यचन्द्रिकयोः स्वातन्त्र्येण निर्देशान्निष्प्रत्यूहमारोपसम्भवात् ।

ननु भवतु नाम शाब्दश्चन्द्रिकायां सौजन्याभेदस्य ! तदनन्तरं मानसेन सौजन्ये चन्द्रिकाभेदेन शाब्दं राजनि चन्द्ररूपकं सेत्स्यति । व्यवस्थापितश्चालङ्कारकौस्तुभ एवमेवेत्याशङ्क्याह **स च दुरुपपादः**● समर्थ्यसमर्थकयोश्शाब्दत्वमनुभवसिद्धं भज्येत । अन्यथा मानसेन केनचित् समर्थकारोपेण मुखं चन्द्र इत्यत्रापि परम्परितं प्रसज्येत । क्षणिकविलम्बश्च दुस्सहः स्यादिति भावः ।

यत्तु कौस्तुभस्य यत्सम्बन्धिनीत्यादिन्यायेनैव उपपादनं तदप्यसमादरणीयम् । न राजचन्द्रावभिन्नाविति प्रत्ययमात्रेण रूपकविच्छित्तिः, अपि तु राजा चन्द्र इत्याकारकेण । अत एव 'इमावभिन्नावित्यन्तेन शुद्धाभेदप्रत्ययस्य' इत्यादिनानुपदमेव पण्डितराजेनाभाणि ।

ननु ग्रन्थकृताऽपि तादात्म्यमेवोक्तम् त्वयाऽभेदरूपत्वञ्च व्यवस्थापितमिति वाच्यम्; आरोपिततादात्म्ये आरोपिताभेदे च तात्पर्यमुन्नीय पठनीयम् ।

न चानयोः समानवित्तिवेद्यत्वान्नानुपपत्तिरिति शक्यं वक्तुम्, प्रात्यक्षिके हि सामग्र्यास्तुल्यत्वात्तत्। न तु शाब्दबोधे व्युत्पत्तिवैचित्र्यनियन्त्रिते।

एवमन्यत्रापि कथं समासगत-शुद्ध-परम्परिते द्वयोरारोपयोर्निर्वाह्य-निर्वाहकभावः ? कथं च शशिपुण्डरीकमित्यादौ पुण्डरीकरूपकमुच्यते ? पुण्डरीकाभेदात्मकस्य पुण्डरीकताद्रूप्यस्याभानात्। शश्यभेदप्रत्ययाच्च पुण्डरीकं शशीत्यत्रेव शशिरूपकमुच्यताम्।

एवं नीलिमदिव्यतोये तारावलीमुकुलमण्डलमण्डिते षोडशकलादलमङ्कभृङ्गमित्यत्राप्युत्तरपदार्थे पूर्वपदार्थाभेदस्यैव भानात् पूर्वपदार्थरूपकापत्तिः।

तथा—

'सुविमलमौक्तिकतारे धवलांशुकचन्द्रिकाचमत्कारे।
वदन-परिपूर्णचन्द्रे सुन्दरि! राकासि नात्र सन्देहः॥'

इत्यत्र सुन्दर्यां विषयभूतायां राकातादात्म्यावगमात् स्फुटमेव तावद्राकारूपकम्। तत्र चरणत्रयगतानि रूपकाणि राकारूपकानुगुणतयोपात्तान्यपि नानुगुण्यमाचरन्ति। ताराचन्द्रिकापूर्णचन्द्राणां मौक्तिक-धवलांशुक-वदनाभिन्नत्वे सिद्धेऽपि न सुंदर्यां राकातादात्म्यं सेद्धुमीष्टे प्रत्युत विपरीतं राकायां सुन्दरीताद्रूप्यम्, तेषां राकासम्बन्धित्वात् सर्वमेव व्याकुलमिति।

---

सामग्र्यास्तुल्यत्वात् ● तुल्या या वित्तिर्ज्ञानं तस्य वेद्यं विषय इति तदर्थः। तुल्यता च वित्त्योः सामग्रीतुल्यताधीना। प्रत्यक्षे चेन्द्रियसन्निकर्षस्य विशेषणविशेष्ययोः सहभावात् सम्भवति प्रकारविशेष्यभेदमात्रेण भिन्ना वित्तिः। शाब्दबोधे एतादृशसमभिव्याहारादेतदेव ज्ञानमिति नियन्त्रितं वर्तते। शश्यभेदप्रत्ययाच्च ● चो हेतौ यतः शशिनः पुण्डरीकेऽभेदप्रत्ययस्ततः पुण्डरीकस्य शशिनि नाभेदप्रत्यय इति भावः।

एवं ● गते व्योमाङ्गणे इत्यादिपद्येऽप्युत्तरपदार्थे ● भृङ्गेऽङ्करूपकापत्तिः। इष्यते तु अङ्के भृङ्गरूपकम्।

स्फुटमेव ● समासाभावेन स्वातन्त्र्येण निर्देशात्। प्रत्युत ● यत्सम्बन्धिनीत्यादिन्यायेन राकासम्बन्धितारादिषु सुन्दरीसम्बन्धिमौक्तिकादेरभेदस्य राकायां सुन्दर्या अभेदसाधनत्वात्।

अत्र वदन्ति—अभेदस्तावद्विशेषणस्य संसर्गो भवति। स च यथा मुखं चन्द्र इत्यादौ वाक्यगते रूपके स्वप्रतियोगिनश्चन्द्रस्य स्वानुयोगिनि मुखे विशेषणताया निर्वाहकः, तथैव समासगते मुखचन्द्र इत्यादौ रूपके स्वानुयोगिनो मुखस्य प्रतियोगिनि चन्द्रे विशेषणतायाः। एवं चोभयत्रापि वस्तुतश्चन्द्राभेद एव संसर्गः। क्वचिदनुयोगित्वमुखः, क्वचिच्च प्रतियोगित्वमुखः, विशेषण-विशेष्यभाववैचित्र्यात्। न तु मुखचन्द्र इत्यत्र मुखाभेदः संसर्गः। तथा सति चन्द्ररूपकतानापत्तेः, मुखरूपका-

---

केचनैवं समासे आर्थं रूपकं व्यस्ते शाब्दम्। न च आर्थी चन्द्ररूपकताऽपत्तिस्तात्पर्यवशान्मुखरूपकाङ्गीकारादिति व्यवस्थापयन्ति, तेषामपि अव्यवस्थैव। सुन्दरि राकासीत्यत्र शाब्दरूपकस्यैव समर्थनीयत्वात्।

किञ्च तात्पर्यं लक्षणादीनामुद्‌बोधकम्, न तु स्वातन्त्र्येण कृतकृत्यम्। लक्षणयाऽपि कीदृशोऽर्थ इति व्याख्यानमपेक्षते लक्षणाङ्गीकारे गौरवञ्च। यदपि चन्द्रनिष्ठाभेदश्चचन्द्रप्रतियोगिकाभेदश्च रूपकम्, तदप्येवमेव मुखनिष्ठाभेदस्यापि मुखरूपकापत्तेश्च।

एवं 'विषयिनिष्ठाभेदप्रत्यायितं विषयस्य रञ्जनं रूपकम्। अत एव काशकृताऽपि अभेदस्यैव रूपकत्वमुक्तन्तु प्रतियोगिकत्वादि विशिष्टस्य, मुखप्रतियोगिकाभेदवाँश्चन्द इति बोधेऽपि न क्षतिः, इति मतं खण्डनीयम्, परस्परं रूपकव्यवहारापत्तेः। रञ्जनमित्यस्यार्थ एव विषयितादात्म्येनावभासनम्। इदं सर्वमभिप्रेत्याह **सर्वमेव व्याकुलमिति●**।

**चन्द्रे विशेषणतायाः●** निर्वाहक इत्यनुकर्षः। **चन्द्राभेदः●** चन्द्रप्रतियोगिकाभेदः। **अनुयोगित्वमुख●** अनुयोगिनो विशेष्यसम्पादकः। अत्र मुखशब्दार्थे प्रायः सर्वे टीकाकारा मुह्यन्ति। एवमग्रेऽपि। **वैचित्र्यात्●** व्यस्ते मुखस्य विशेष्यतया चन्द्रस्य विशेषणतया भानम्। समासे च वैपरीत्यम्। **मुखाभेदः●** मुखप्रतियोगिकाभेदः। नैयायिकनये तदनुयायि-

**पत्तेश्च। स्वप्रतियोगिकाभेद एव विशेषणसंसर्गः, न तु स्वानुयोगिकाभेद इति तु दुराग्रहः। एवं च सौजन्यचन्द्रिकेत्यादौ वस्तुतः सौजन्याभेदो न सौजन्यस्य चन्द्रिकाविशेषणस्य संसर्गः, अपि तु चन्द्रिकाभेद एव।**

---

वैयाकरणपरिष्कारे च सम्बन्धप्रतियोगिनो विशेषणत्वं सम्बन्धानुयोगिनो विशेष्यत्वमतिप्रसिद्धम्, नत्वार्षयुक्तिभिः सिद्धमिदमित्याशयेनाह दुराग्रहः● अत एव व्यावर्तकं विशेष्यस्येत्यादि प्रसिद्धम्। कर्मधारयस्थलेऽपि वैयाकरणैरपि द्रव्यस्य गुणक्रियादिसमभिव्याहारस्थले विशेष्यतैवान्यत्र खञ्जकुब्जादिषु कामचारानुज्ञा। अत एव तत्र पूर्वनिपातोऽपि अनियत एवेत्यादि।

किञ्च 'युज्यते ब्रह्मचारी योगम्, तप्यते तपस्तापसः' इत्यादिकर्मकर्तृस्थलव्याख्याग्रन्थानवधूय केवलानि ऋषिवचनान्येव पर्यालोच्येरन्, तदा पण्डितराजमतमेव आर्षमिति मन्येत। यतः कर्तरि कर्मकर्तरि चैकैव धात्वर्थक्रिया आवश्यकीया भवति। किन्तु अनुयोगित्वप्रतियोगित्वाभ्यामेव विशेषणविशेष्यभावो विचित्रितस्तत्र स्फुटन्तु विस्तरभयाच्छात्राणां कृते दुरूहत्वाच्च न लिखामि।

एवञ्च खण्डनपरः कौस्तुभो दुराग्रहपतित एव, किन्तु महावैयाकरणत्वं पण्डितराजस्य न जानाति। प्रसिद्धमतानुसरणेऽपि ग्रन्थोऽयमेवं योज्यः।

तथा हि मुखं चन्द्र इत्यत्र अभेदमात्रम् अनुयोगित्वविशिष्टश्चन्द्रस्य सम्बन्धः। समासे तु प्रतियोगित्वविशिष्टो मुखस्य चन्द्रे सम्बन्धः। अभेदस्यानुयोगि मुखं प्रतियोगित्वविशिष्टाभेदस्य प्रतियोग्येव। प्रतियोगित्वविशिष्ट एवाभेदो विशेषणस्य संसर्गः, नानुयोगित्वविशिष्ट इति दुराग्रहान्तार्थः। तादात्म्यरूपस्याभेदस्य रूपकेऽनुयोगिनि उपमेयता, प्रतियोगिनि उपमानता। विशेषणविशेष्यभावस्तु विशिष्टाभेदस्य प्रतियोगित्वानुयोगित्वाभ्याम्। तथा च समीचीनोऽयं पन्थाः, परमेवमभिप्रायमबुध्वैव कौस्तुभस्य कपोलकल्पना। पर्वते वह्निर्धूमः पर्वतो वह्निमान् धूमवान् इति साध्यताहेतुतावच्छेदकसम्बन्धे जागदीशी द्रष्टव्या। यत्तु मयूरव्यंसकादेराकृतिग्रहणत्वाद्विशेष्यस्यापि मुखस्य पूर्वप्रयोगे भ्रमोऽयं विशेषणतायाः। उक्तञ्च महाभाष्ये विशेष्यस्य पूर्वनिपातार्थं सूत्रमिति प्रतिपादितम् इति। तदपि स्थूलं मर्मप्रकाशस्य। सत्यं तत् सूत्रं पूर्वनिपातार्थम्, परं मयूरव्यंसक इत्यत्र व्यंसकस्य गुणवाचितया विशेषणता निश्चिता तदर्थं सूत्रं मयूरस्य पूर्वनिपाताय। समानयोर्द्रव्यवाचकयोर्मुखचन्द्रयोर्विशेषणविशेष्यभावः केन पथा निर्णीयेत? यदि विवक्षावशाद् ब्रूषे, तदा आकृतिगणत्वकल्पनामुपेक्ष्य मुख्यतां चन्द्रस्यैव कथं रोचयेः? मुखस्य

तथा च सौजन्यनिष्ठाभेदप्रतियोगिनी चन्द्रिकेति पर्यवसिते<ऽर्थे, भङ्ग्यन्तरेण सौजन्ये चन्द्रिकाऽभेदसिद्धौ जातायां राजनि चन्द्राभेदोऽपि निष्पद्यते इति परम्परिते नानुपपत्तिः। शशिपुण्डरीकमित्यादावपि शशिनिष्ठाभेदप्रतियोगिपुण्डरीकमिति पर्यवसितेऽर्थे पुण्डरीकाभेदस्य भानात् पुण्डरीकरूपकमव्याहतम्।

एवमन्येष्वप्यवयवरूपकेषु बोध्यम्।

---

विशेषणतायामपि प्रयोगः सिध्यत्येव। विशेषणं विशेष्येणेत्यादिनैव समासः सुलभः। तदानीमपि मुखस्योपमेयत्वविषयत्वयो रक्षायै पण्डितराजस्यासाधारणः प्रयासः। अथवा पूर्वनिपातार्थं सूत्रमिति भाष्ये पूर्वपदार्थे विशेषणता कल्पनाद्वारेति शेषः। नेयमप्रसिद्धकल्पना व्युत्पत्तिवादादिषु समासस्थले पूर्वपदार्थस्य अभेदेनोत्तरपदार्थे विशेषणत्वमुक्तम्। न तु क्वचिदुत्तरपदार्थाभेदः पूर्वपदार्थे। मयूरव्यंसक इत्यादयोऽसंगृहीता भवेयुः। महाभाष्यं यावदुद्धरतो गदाधरस्य सूत्राशानं न कल्पितुं प्रभूयते। तथा च सूत्रमिदं पूर्वपदार्थे विशेषतयास्तात्पर्यग्राहकमिति तस्य मतमवसेयम्। तदेव मतं पण्डितराजस्यापीति अनुमीयते। परं रूपकस्थले सादृश्यमूलकाभेदस्य सादृश्यप्रतियोग्येव प्रतियोगि, सादृश्यानुयोग्येवानुयोगि इति उपमानोपमेयभावस्य यथावदवस्थित्यै अङ्गीकर्तव्यम्। काव्यप्रकाशलक्षणेनापि विशेषणविशेष्यभावविपर्यासेऽपि उपमानोपमेयभावस्तूपमादेव व्यवस्थित इति प्रतीयते। भवतु नाम वैयाकरणानां सूत्रव्याख्यादिभावनया यथाकथमपि बोधः, परं साधारणानां नीलोत्पलमित्यादिवासनया मुखचन्द्र इत्यादौ मुखरूपश्चन्द्र इति मुखस्य प्रकारतयैव भानम्। तदनुरोधेनैव शक्तेर्निर्णयः।

**सौजन्यनिष्ठाभेद**● अभेदसम्बन्धेन सौजन्यविशिष्टश्चन्द्र इति बोधाकारः, लिखितस्तु न बोधाकारः, परं समासार्थस्य पदार्थस्य स्फुटतया प्रतिपादनाय वाक्यम्। तादृशं बोधाकारं मत्वा कौस्तुभकर्तुः प्रलापो विस्तरभयान्न वितन्यते। **भङ्ग्यन्तरेण**● तस्याः सामग्र्या एव सामर्थ्येन, न तु कारणान्तरसन्निधानापेक्षया। **पुण्डरीकाभेदस्य**● शशिनि इति शेषः। अनुवाद्यत्वम्, उपमानं यत्र विशेषणं तत्र विधेयता। यत्र च विशेष्यं तत्रानुबाधता।

एवं सुविमलमौक्तिकतारे इत्यादावपि ताराद्यभेद एव मौक्तिकादिगतो मौक्तिकादीनां तारादिविशेषणानां संसर्गीभवन् राकारूपकस्य समर्थको भवतीति सर्वं सुस्थम्। सोऽयमभेदो यत्रानुयोगित्वमुखस्तत्र रूपकस्य विधेयता। यत्र च प्रतियोगित्वमुखस्तत्रानुवाद्यत्वमिति दिक्।

तत्र 'प्राची सन्ध्या समुद्यन्महिमदिनमणेः' इत्यत्रारोप्यमाणयोः परस्परमारोपविषययोश्चानुकूल्ये रूपकयोरनुग्राह्यानुग्राहकभावो दर्शितः।

प्रातिकूल्ये यथा—

'आनन्दमृगदावाग्निः शीलशाखिमदद्विपः।
ज्ञानदीपमहावायुरयं खलसमागमः॥'

यथा वा—

'कारुण्यकुसुमाकाशः शान्तिशैत्यहुताशनः।
यशःसौरभ्यलशुनः पिशुनः केन वर्ण्यते॥'

---

आरोपविषययोः● अधुनैव व्याख्याते पद्ये राजसम्बन्धिशोणिमश्रियि-दिनमणेः सन्ध्यायाः कालानलस्य ज्वालामालाया आरोपो राज्ञि दिनमणि-कालानलारोपाभ्यामनुगृह्यते।

आनन्दमृग● खलानां समागम आनन्दाभिन्नानां मृगाणाम् (नाशको) दावाग्निः, शीलस्य सदाचाररूपस्य शाखिनो वृक्षस्य (उत्पाटयिता) मत्तगजः। ज्ञानाभिन्नस्य दीपस्य (निर्वापको) महावायुरस्ति। आनन्दमृगयो रूपक खलसमागमे दावाग्निरूपकस्य शीलशाखिनोर्मदद्विपरूपकस्य ज्ञान-दीपकयोर्महावायुरूपकस्यानुग्राहकम्। यतो यद्यानन्दो मृगो भवेत्तदैव आनन्द-नाशकस्तादृशसमागमो दावाग्निः सम्पद्येत। रूपकयोरनुग्राह्यानुग्राहकयोरुपमेय-भूतयोरानन्दखलसमागमयोरुपमानभूतयोर्मृगदावाग्न्योर्नाश्यनाशकभावः। एवं द्वितीयतृतीयपादस्थयोरपि। अत्यन्तमसंसृष्टयोरुपमेययोरुपमानयोश्चोदाहरण-माह—कारुण्य कुसुम● कारूण्यस्य सर्वथाऽसंसर्गी पिशुनः कारूण्याभि-न्नस्य कुसुमस्य आकाशः। शान्तिरूपस्यैवमेव शैत्यस्य हुताशनः। यशोऽभि-न्नस्य सौरभ्यस्य लशुनः। कारूण्यं कुसुमं स्यात्तदा सादृश्यात् पिशुन आकाशः

एकत्र नाश्यनाशकभावरूपमपरत्र चात्यन्तिकसंसर्गशून्यतारूपं प्रातिकूल्यमुपमानयोस्तथैवोपमेययोश्च। अनुग्राह्यानुग्राहकभावः पुनरारोपयोरविशिष्ट एव।

तथा—

'अयं सज्जनकार्पासरक्षणैकहुताशनः।
परदुःखाग्निशमनमारुतः केन वर्ण्यते॥'

अत्र रक्षणशमनपदे विरोधिलक्षणया विपरीतार्थबोधके।

एवं पदार्थरूपकं लेशतो निरूपितमेव।

वाक्यार्थे विषये वाक्यार्थान्तरस्यारोपे वाक्यार्थरूपकम्।

यथा हि विशिष्टोपमायां विशेषणानामुपमानोपमेयभाव आर्थः, तथात्रापि वाक्यार्थघटकानां पदार्थानां रूपकमर्थावसेयम्।

'आत्मनोऽस्य तपोदानैर्निर्मलीकरणं हि यत्।
क्षालनं भास्करस्येदं सारसैः सलिलोत्करैः॥'

---

स्यादिति रीत्या पादत्रयेऽनुग्राह्यानुग्राहकभावो द्रष्टव्यः। उपमेययोः कारुण्यपिशुनयोरत्यन्तमसंसर्गः। उपमानयोः कुसुमाकाशयोश्च तथैवासंसर्गः। एवमेव द्वितीयतृतीयपादयोरनुसन्धातव्यम्। **अयमिति** ● अयं पिशुनः केन वर्ण्यते। कीदृशः? सज्जनरूपस्य कार्पासस्य रक्षणाय एकः प्रधानो हुताशनोऽग्निः। अत्र कार्पासरक्षाया हुताशनेनासम्भवात् लक्षणया विपरीतो नाशो रक्षणशब्दार्थः। एवं तृतीये पादे उत्तेजकः शमनशब्दार्थः। परदुःखरूपस्याग्नेः शमनाय मारुतः। अत्रापि सज्जनकार्पासयोर्दुःखाग्निमारुतयोश्च रूपकयोः पिशुने हुताशनमारुतरूपकाभ्यामनुग्राह्यानुग्राहकभावः। विशेषं दर्शयति **अत्र** ●। विच्छित्तिविशेषादुपमावदनन्तभेदसत्त्वादाह लेशतः संक्षेपेण। **आर्थः** ●। इवपदाभावात्। **अर्थावसेयम्** ● आर्थं ज्ञेयम्। वाक्यार्थयोश्च रूपकं श्रौतम्। **आत्मनोऽस्य** ● स्वतः शुद्धतया श्रुतिस्मृतिप्रतिपादितस्यास्य आत्मनो यत् शरीरशोधकैस्तपोऽभिः धनशोधकैर्दानैः। शरीरादिषु आत्माभिमानिना पुरुषेण निर्मलीकरणं तदिदं भास्करस्य सरःसम्बन्धिभिः सलिलसमूहैः क्षालनम्। अत्र तपोदानादिकरणकात्मकर्मकनिर्मलीकरणभास्करकर्मकक्षालनयोः वाक्यार्थयो

अत्रात्मनि तपोदानेषु चारोपविषयविशेषणतया बिम्ब-भूतेषु, भास्करस्य सलिलोत्करादीनां च विषयि-विशेषणत्वेन प्रतिबिम्बानां रूपकं गम्यमानं प्रधानीभूतविशिष्टरूपकाङ्गम् ।

'नेदं रूपकम् । रूपके बिम्ब-प्रतिबिम्बभावो नास्ति' इति केनाप्यालङ्कारिकम्मन्येन प्रतारितस्य दीर्घश्रवसो द्रविडस्योक्तिरश्रद्धेयैव, ययोरिवादिशब्दप्रयोगे उपमा तयोरेकत्रान्यारोपे रूपकमिति नियमात् । अत्र यदि रूपकं नाङ्गीकुरुषे मैवाङ्गीकुरु, तर्हि तत्रैव यथादिशब्दप्रयोगे उपमामपि । एवं 'त्वयि कोपो महीपाल सुधांशाविव पावकः' इत्यादौ स्वकल्पितेन विशिष्टेन धर्मिणा सादृश्यस्य प्रत्ययादुपमां ब्रूषे, ब्रूहि तर्हि तत्रैवेवस्य निरासे 'त्वयि कोपो महीपाल सुधांशौ हव्यवाहनः' इत्यादौ रूपकमपि ।

तथा—

कुङ्कुमद्रवलिप्ताङ्गः काषायवसनो यतिः ।
कोमलातपबालाभ्रः सन्ध्याकालो न संशयः ॥'

---

रूपकं प्रधानम्, विषयविषयिणोः समानविभक्त्या स्वातन्त्र्येण निर्देशात् यत्तद्भ्यां परामृष्टस्याभेदात् । वाक्यार्थघटकानां पदार्थानां बिम्बप्रतिबिम्बभावो यथा सलिलस्य तपोदाने क्षालनस्य निर्मलीकरणम् बिम्बभूतम् । सलिलक्षालने च प्रतिबिम्बभूते । यद्यपि बिम्बभूतयोस्तपोदानयोर्विषयविशेषणतया उपस्थितेः स्वातन्त्र्येण निर्देशाभावात् श्रौतं रूपकं नास्ति, तथापि आर्थं रूपकं वर्तते एवेत्याह **अत्रात्मनि**● **चारोपविषय**● प्रथमवाक्यार्थरूपस्यारोपविषयस्य **गम्यमान**● आर्थम् । **विशिष्ट**● वाक्यार्थः । अलङ्कारसर्वस्वकारेण वाक्यार्थ-रूपकस्य निदर्शनात्वं रूपके बिम्बप्रतिबिम्बत्वानाक्रान्तत्वञ्च व्यवस्थापितं दृष्ट्वा अपय्यदीक्षितेनानुकृतं तदेवोपन्यस्यन्नाह **नेदम्**● दीर्घश्रवसो लम्बकर्णस्य । **कुङ्कुमद्रव**● विशिष्टयतौ विशिष्टस्य सन्ध्याकालस्य रूपकं श्रौतम् । कुङ्कुमद्रव-बालाभ्रयोरार्थं पूर्ववद् बोध्यं बिम्बप्रतिबिम्बभावश्च । **बालाभ्र**● शोणाभ्रः ।

इत्यादावपि विशिष्टरूपकं बोध्यम् ।

त्वयि कोप इत्यत्र विषयिणः स्वबुद्धिकल्पितत्वात् कल्पितं विशिष्टरूपकम्, इह तु न तथेति विशेषः ।

न चैवमादौ प्रतीयमानोत्प्रेक्षा वक्तुं शक्या, अभेदस्य निश्चीयमानत्वात् । उत्प्रेक्षायां च सत्यां सम्भाव्यमानता स्यात् । अन्यथा मुखं चन्द्र इत्यादावपि प्रतीयमानोत्प्रेक्षापत्त्या रूपक-विलोपापत्तेः ।

अथ बोधो विचार्यते-तत्र प्राञ्चः—"विषयिवाचकपदेन विषयि-वृत्तिगुणवतो लक्षणया सारोपयोरुपस्थितौ, विषये तस्याऽभेदेन संसर्गेण विशेषणतयाऽन्वयः । एवं च मुखं चन्द्र इत्यत्र चन्द्रवृत्ति-

---

**कल्पितत्वात्●** सुधांशौ हव्यवाहनस्याग्नेरसम्भवात् । वाक्यार्थरूपक-खण्डनाय महान् ग्रन्थविस्तरः कौस्तुभकृता सम्पादितस्तद्युक्त्याभासानां तद्ग्रन्थपठनेनैव विविच्य आभासता स्फुरत्यतो न विस्तार्यते । किञ्चिच्चानुद्य खण्ड्यते । इद हि तेषां कथनम् । आत्मनोऽस्येत्यादौ निर्मलीकरण-क्षालनयोर्वस्तुतो भेदाभावात् न भेदघटितस्य रूपकस्य स्थानम् । विशेषणै-र्विशिष्टस्य तस्य भेदाङ्गीकारोऽपि न सम्यक् विशेष्यस्याभेदे विशिष्टभेदस्य विशेषणभेदमात्रपर्यवसायित्वाद्विशेष्यभेदासम्भवात् । त्वत्पादनखरत्ना-मित्यादौ न रूपकसम्भवः । स्वतोनिर्मलेषु नखेषु यावकसम्बन्धस्य व्यर्थतामात्रे तात्पर्यात् । तादृशतात्पर्येण निषेधप्रतियोगितया मार्जनस्य उपमेयतया पुरस्काराभावाच्च । इति । तत्रेद चिन्तनीयं क्षालनस्य फलं निर्मलीकरणम्, न क्षालनरूपम् । विशिष्टभेदस्यातिरिक्तस्य स्वीकाराच्च । त्वत्पादनखरत्ना-मित्यादौ बिम्बप्रतिबिम्बभावापन्नत्वेन सादृश्यमूलकाभेदारोपसम्भवाद् रूपकत्वा-क्षतिः । निषेधे तात्पर्ये तात्पर्यार्थं रूपकमुपस्करोतीत्यत्र का क्षतिः ! व्यज्यमानस्य वैयर्थ्यस्य सत्त्वेऽपि शब्दतः पुरस्कारस्य स्फुटत्वात् ।

**विषयिवाचक●** चन्द्रपदेन । **गुणवतो●** चमत्कारोपयोगिगुणवतः ।

गुणवदभिन्नं मुखमिति धीः। अत एवालङ्कारभाष्यकारः 'लक्षणापरमार्थं यावता रूपकम्' इत्याह। न च चन्द्रसदृशं मुखमित्युपमातोऽस्य को भेदः? बोधवैलक्षण्याभावेन विच्छित्तिवैलक्षण्याभावात्। वृत्तिमात्रवैलक्षण्यस्याप्रयोजकत्वादिति वाच्यम्, लाक्षणिकबोधोत्तरं जायमानेन प्रयोजनीभूतेनाभेदबोधेनैव वैलक्षण्यात्। निरूढलक्षणातिरिक्ताया लक्षणायाः प्रयोजनवत्तानियमात्। अभेदबुद्धेश्च वृत्यन्तरवित्तिभाव्यत्वेन न बाधबुद्धिप्रतिबध्यत्वम्" इत्याहुः।

नव्यास्तु—"नामार्थयोरभेदसंसर्गेणान्वयस्य व्युत्पत्तिसिद्धत्वाच्चन्द्राभिन्नं मुखमिति लक्षणां विनैव बोधः। फलस्यान्यथैवोपपत्तेर्लक्षणाकल्पनस्यान्याय्यत्वात्। किञ्च यदि च रूपके लक्षणा स्यान्मुखचन्द्र इत्यत्रोपमितविशेषणसमासयोरुत्तरपदस्य

---

धीः● अभेदसम्बन्धावच्छिन्नचन्द्रवृत्तिगुणवत्त्वावच्छिन्नप्रकारतानिरूपितमुखत्वावच्छिन्नविशेष्यतानिरूपिकेत्यर्थः। लक्षणासम्प्रदायमाह **अत एव**● चन्द्रत्वेन मुखत्वेन भेदग्रहाद् बाधबुद्धेः शक्यार्थयोरभेदग्रहासम्भवात्। नापि आहार्यैवाभेदबुद्धिरुपेया आहार्यान्यज्ञानं प्रत्येव बाधबुद्धेः प्रतिबन्धकत्वादिति वाच्यम्, परोक्षज्ञानमनाहार्यमेवेति सिद्धान्तव्याकोपात्। ननु मुखे चन्द्रस्य स्ववृत्तिगुणसदृशगुणवत्त्वसम्बन्धेन भेदेनैवान्वयोऽस्त्विति वाच्यम्, न वाच्यम्, निपातातिरिक्तनामार्थयोरभेदातिरिक्तसम्बन्धेनान्वयस्याव्युत्पन्नत्वात्। ननूपमायां शक्तिरत्र रूपके च सारोपा लक्षणैव भेदिका भवेदित्याशङ्क्याह **वृत्ति**●। **प्रयोजनीभूतेन**● प्रयोजनवत्या लक्षणाया व्यञ्जनाजन्येन चन्द्राभिन्नं मुखमिति बोधेन। **वैलक्षण्यात्**● उपमायां लक्षणाभावेन व्यञ्जनाजन्याभेदबोधाभावात्। व्यञ्जनाजन्यबोधस्तु न बाधबुद्धिप्रतिवध्य इत्याह **वृत्यन्तर**●। **आहुः**● अत्र मर्मप्रकाशः एतन्मते ह्येव रूपकस्य लक्षणम् अनिह्नुतविषयक पुरस्कृतविषयतावच्छेदकं वा आहार्याभेदप्रतीतिफलकोपमानबोधकपदजन्यप्रतीतिविषयीभूतं साधर्म्यम् इति। **फलस्य**● अभेदान्वयबोधस्य। **मुखचन्द्र**● मुखं चन्द्र इवेत्यर्थे उपमितं व्याघ्रादिभिः सामान्याप्रयोगे इत्यनेन समासे सामानाधिकरण्य-

लाक्षणिकत्वाविशेषादेकस्योपमात्वमन्यस्य रूपकत्वमिति व्याहतं स्यात्। अपि च मुखं न चन्द्रसंदृशम्, अपि तु चन्द्र इत्यादौ सादृश्यव्यतिरेकमिश्रिते सादृश्यबुद्धेरयोगात्। एवं देवदत्तमुखं चन्द्र एव यज्ञदत्तमुखं तु न तथा, अपि तु चन्द्रसदृशमित्यादौ नञर्थस्य लक्ष्यमाणचन्द्रसदृशान्वयित्वात् 'न चन्द्रसदृशश्चन्द्रसदृशम्' इति बोधकदर्थनापत्तेश्च। नहि नञः फलीभूतज्ञानविषयेणाभेदेनान्वयो युक्तः, एतदन्वयवेलायां तस्यानुपस्थितेः। तादृशाभेदबोधस्य चाहार्यत्वान्न बाधबुद्धिप्रतिबध्यत्वम्। यद्वा

---

सम्पादनाय चन्द्रपदस्य चन्द्रसदृशे लक्षणया उपमाङ्गीक्रियते। विशेषणसमासे रूपकेऽपि तथैव बोधश्चेत्, क उपमारूपकयोर्भेदः स्यात्। सादृश्यव्यतिरेकमिश्रिते● चन्द्रीयसादृश्याभावविशिष्टे मुखे। तथा च येन बाधबुद्धिप्रतिबध्यत्वभयेन शक्यार्थयोरभेदः प्राग्भिः परित्यक्तस्तदेव बाधबुद्धिप्रतिबध्यत्वं लक्षणामप्यञ्चति, तदा बाधबुद्धिरेव चिकित्स्या, न तु अभेदोऽपसारणीय इति भावः। **कदर्थनापत्तेः**● भवतां प्राचां मते देवदत्तमुखं चन्द्र इत्यस्य देवदत्त मुखं चन्द्रसदृशमित्यर्थः। यज्ञदत्तमुखं न तथा, अपि तु चन्द्रसदृशमित्यस्य पूर्ववाक्यवन्नञर्थाभावस्य चन्द्रसदृशान्वयितया च चन्द्रसदृशाभिन्नं यज्ञदत्तमुखं न चन्द्रसदृशमिति कुत्सितो लक्षणाजन्योऽपि आहार्य आपतति, तदा अकुत्सितो लक्षणां विनाऽपि सम्पद्यमानोऽभेदस्याहार्यबोधः कथनाङ्गीक्रियते। ननु व्यञ्जनया योऽभेदो बुध्यते तेनैव सह नञोऽन्वयाद् यज्ञदत्तमुखं न तथेत्यस्य यज्ञदत्तमुखं चन्द्राभेदाभाववदित्यर्थ इत्याशङ्कां निरस्यति **नहि**● वेलायां लक्षणाजन्यबोधवेलायाम्। तदानीमेव नञर्थान्वयस्य सम्भवादन्यथा वाक्यार्थानिष्पत्तेः। प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमाविति युक्त्यनुभवाभ्यां सिद्धस्य न्यायस्य विरोधश्च। **तादृशाभेद**● मम सम्मतशक्त्यधीनाभेदबोधस्य। आहार्यस्य च बाधबुद्धिसमकालिकतया बाधबुद्धेरप्रतिबध्यत्वं स्वभावसिद्धमेव। ननु परोक्षज्ञानमनाहार्यमेवेति सिद्धान्तव्याकोपः, अन्यथा अनुमितौ शाब्दादिपरामर्शस्य हेतुतायामनाहार्यत्वविशेषणे गौरवम्। आहार्यस्य चेच्छाधीनतया अनुमितिशाब्दसामग्रीषु बाधकालिकेच्छायाः प्रवेशे गुरुतरञ्च। अतो मानसिकमेव मनोव्यापाराधीनमाहार्यं प्रत्यक्षमङ्गीकार्यम् इत्यत आह **यद्वा**● तथा च

**आहार्यान्यत्वस्येव शाब्दान्यत्वस्यापि बाधनिश्चयप्रतिबध्यतावच्छेदककोटौ निवेशः। सति च बाधनिश्चये तद्वत्ताशाब्दबुद्धेरनुत्पादः, योग्यताज्ञानविरहात्। सति च क्वचिदाहार्ये योग्यताज्ञाने तद्बुद्धेरिष्टत्वात्। अत एव योग्यताज्ञानस्य बाधनिश्चयपराहतस्यापि शाब्दधीहेतुत्वम्। तस्मादन्यतर-**

---

शाब्दान्यं प्रत्येव बाधबुद्धेः प्रतिबन्धकत्वात् प्रतिबन्धकसमानकालिकत्वविरहाच्च नाहार्यत्वम्। ननु तर्हि वह्नौ सेककरणकत्वाभावनिश्चयेऽपि वह्निना सिञ्चतीत्यतः शाब्दबोधापत्तिरत आह **सति च** ● अत्र मर्मप्रकाशः इदन्तु चिन्त्यम्। शाब्दबोधो हि भवत्येव। अत एव वह्निना सिञ्चतीति वाक्यप्रयोक्तुरद्रवेण वह्निना कथं सेकं ब्रवीषीत्युपहासः संगच्छते। अबोधे हि एतदर्थकद्रविडभाषाश्रवणोत्तरं पाश्चात्यस्येव मूकतैव स्यात्। ननु पदार्थस्मरणमेव न शाब्दबोध इति चेत्, किमनेन श्रद्धाजाड्येन ? बाधज्ञानादीनाञ्च तद्बोध्येऽप्रमाण्यज्ञानजननद्वाराप्रवृत्तिप्रतिबन्धकत्वम्। योग्यताज्ञानादीनाञ्च तज्जनकत्वमेव नेति रमणीयः पन्था इति। एवमेव व्यवस्था वैयाकरणसिद्धान्तमञ्जूषायाम्। तत्रेदं चिन्ताबीजम् —योग्यताज्ञानस्य कारणत्वं तावत्तिष्ठतु, परं लौकिकसन्निकर्षजन्यदोषविशेषाजन्यानाहार्यविशिष्टबुद्धिमात्रं प्रति क्लृप्तप्रतिबन्धकभावबाधनिश्चयरूपस्य अयोग्यतानिश्चयस्य शाब्दबोधं प्रति प्रसक्तस्य प्रतिबन्धकत्वस्यापसारणाय पूर्वोक्तविशिष्टबुद्धौ प्रतिबध्यायां शाब्दान्यत्वविशेषणदाने बाधनिश्चयस्य शाब्दं प्रति आप्रामाण्यज्ञानजनकत्वाङ्गीकारे गौरवं स्फुटमेव, अन्यथा अनुमितिं प्रत्यपि बाधनिश्चयप्रतिबन्धकत्वानापत्त्या बाधस्य प्रसिद्धस्य हेत्वाभासताऽपि विलोयेत। किञ्च शाब्दबोधात्प्राग्द्वितीयक्षणे जातेन शाब्दबोधक्षणे विनश्यता बाधेन अकिञ्चित्करेण वैयर्थ्यमासाद्येत। तस्मादयोग्यतानिश्चयस्थले शाब्दबोधोनाङ्गीकर्तव्यः, उपहासस्तु पदार्थोपस्थित्यनन्तरमयोग्यार्थकपदोच्चारणादपि संगच्छते। द्राविडवाक्यश्रवणोत्तरं पाश्चात्यस्य मूकता तु पदार्थोपस्थितेरभावात्, न तु बोधाभावात्। अयोग्यतानिश्चयस्तु पदार्थोपस्थित्या मानस इति संक्षेपः। **रिष्टत्वात्** ● तथा च द्विविधः शाब्दबोधः—आहार्योऽनाहार्यश्च। शाब्दे आहार्यत्वन्तु आहार्ययोग्यताधीनम्। **अत एव** ● आहार्यत्वस्य शाब्देऽनुरोधादेव। एतेन योग्यताज्ञानं न शाब्दबोधे कारणमिति मतम् परास्तम्। शाब्दबोधे बाधबुद्धेरप्रतिबन्धकतया न प्रतिबन्धककालिकत्वं शाब्दे आहार्यत्वप्रयोजकम्। शाब्दबोध एव परोक्ष-

प्रकारेण काव्ये सर्वत्र बोधोपपत्तिः। अपि च तद्गतधर्मवत्त्व-बुद्धेः कथं तदभेदबुद्धिः फलं स्यात्। नहि साधारणधर्मावच्छिन्ना-भेदज्ञानस्य तत्तदसाधारणधर्मावच्छिन्नाभेदज्ञाने हेतुत्वं क्वाप्यव-गतम्। घटपटयोर्द्रव्यत्वेनाभेदग्रहेऽपि घटत्वादिना भेदग्रहात्। तदभिन्नत्वेन ज्ञानस्य पुनस्तद्धर्मप्रतिपत्तिः फलं स्यात्। प्रवाहा-भिन्नज्ञानस्येव शैत्यपावनत्वादिप्रतिपत्तिः।

अत एव—

'कृपया सुधया सिञ्च हरे मां तापमूर्च्छितम्।
जगज्जीवन तेनाहं जीविष्यामि न संशयः॥'

इत्यादावमृताभिन्नत्वबोधे सत्येव कृपायाः सेके कारणत्वेनान्वयः। तादृशसेकस्य जीवने हेतुत्वेन इति दिक्।

अथ कथं 'गाम्भीर्येण समुद्रोऽयं सौन्दर्येण च मन्मथः' इत्यत्र बोधः शृणु—प्राचां तावल्लक्ष्यमाणैकदेशे सादृश्ये

---

ज्ञानेऽप्याहार्योऽङ्गीकर्तव्यः, अनुमित्यादिस्तु न। परामर्शकारणतागौरवन्तु फल-मुखत्वान्न दुःसहम्। प्राचीनमतेऽप्रयोजकत्वमाशङ्कते **अपि च** ● व्यभिचारमपि दर्शयति **घटपटयो** ● प्रत्युत अभेदज्ञानेन तद्धर्मप्रतिपत्तिर्दृश्यत इत्याह **तदभिन्नत्वेन** ● लक्षणया प्रवाहत्वावच्छिन्नाभेदस्य तटे प्रवाहगतशैत्यपावनत्व प्रतीतिः। अन्ये चमत्कारि तद्गतधर्मवत्त्वज्ञानं बाधबुद्धिप्रतिबन्धकतायामुत्तेजक-मिति वदन्ति, तदपि एतादृशमेव प्रकारान्तरं तेन नायं प्रकारो दुष्यति। येऽपि चमत्कारिसाधारणधर्मसादृश्यज्ञान एव फलबलात्तादृशशक्तिं कल्पयन्ति, ते कल्प-यन्तु नाम न क्लृप्तम्। भिन्नयोरभेदज्ञाने तद्धर्मप्रतीतिस्तु क्लृप्ता। उपमानोप-मेययोरभेदज्ञानेन उपमानस्य तत्तत्कारकत्वेन यत्र क्रियायामन्वयस्त त्रोपमेयस्यापि तत्कारकत्वेनान्वयः। उपमानकारकसमानविभक्तिश्च सिध्यति। अन्यथा किमनुरोधेन उपमानोपमेययोः समानविभक्तित्वे कवयो यतन्ते इत्यभिप्रेत्याह **अत एव** ● । **तादृशसेकस्य** ● तेन शब्देनोपात्तस्य। **लक्ष्य माणैकदेशे** ● समुद्रपदस्य समुद्रसदृशे लक्षणापक्षे सादृश्यमेकदेशस्तत्र तृतीयार्थप्रयोज्यत्वस्यान्वयः। इत्थंभूतलक्षणे इत्यनेन तृतीया। समुद्रवृत्ति-

प्रयोज्यताया अभेदस्य वा तृतीयार्थस्यान्वयाद् गाम्भीर्यप्रयोज्य-समुद्रसादृश्यवदभिन्नोऽयम्, गाम्भीर्याभिन्नसमुद्रवृत्तिधर्मवद-भिन्नोऽयमिति वा धीः। लक्षणां विनैव अभेदसंसर्गेणान्वय-वादिनां पुनरित्थम्—कविना स्वेच्छामात्रादुपकल्पिता असन्तोऽप्यन्तःकरणपरिणामात्मका अर्था उपनिबध्यन्ते मुख-चन्द्रादयः। तेषु च साधारणधर्माणामस्त्येव प्रयोजकत्वम्, तद्दर्शनाधीनत्वात् तन्निर्मितेः। एवं च गाम्भीर्यादिप्रयोज्यसमुद्रा-द्यभिन्न इति बुद्धिरप्रत्यूहेति। यद्वा ज्ञानजन्यज्ञानप्रकारत्वं तृतीयार्थः, वह्निमान् धूमादित्यादौ पञ्चम्यर्थतया तस्य

---

गुणसदृशगुणवति लक्षणापक्षे सदृशगुण एकदेशः। तत्र तृतीयान्तार्थस्य गाम्भीर्याभेदस्यान्वयः। प्रकृत्यादिभ्य उपसंख्यानम् इत्यनेन तृतीया। नव्यानां मते सादृश्यस्य गुणस्य वानुपस्थानात् कुत्र तृतीयार्थान्वय इत्याशङ्कायामाह **लक्षणां विना** ● साधारणधर्मा यथा सादृश्यस्य प्रयोजकास्तथा सादृश्य-मूलकाभेदस्यापि। तथा चाभेद एव तृतीयार्थप्रयोज्यत्वस्यान्वय इति भावः। **असन्तोऽपि** ● मुखाभिन्नचन्द्रादयो बहिरसन्तः। अन्तःकरणं बुद्धिः। **प्रयोजकत्वम्** ● अन्यथा मुखे एव कथं चन्द्रकल्पना नेङ्गालेषु। **तद्-दर्शना** ● अत्र चन्द्रिका अभिनवा मुह्यति तृतीयार्थसमन्वयेऽपीति अवधेयं सुधीभिः। साधारणधर्मं दृष्ट्वा मुखे चन्द्रनिर्माणम्। **गाम्भीर्यादि** ● गाम्भीर्य-प्रयोज्यो यः समुद्रस्याभेदस्तद्वान्। ननु नेदं युक्तम्, विषयविषयिणोः समान-विभक्तित्वेऽभेदस्य संसर्गतया भानाभ्युपगमात्तस्य चाकाङ्क्षाभास्यत्वेना-पदार्थतया पदार्थः पदार्थेनान्वेति, न तु अपदार्थेनेति न्यायविरोधाद् नाभेदे तृतीयार्थप्रयोज्यत्वान्वयः सम्भवति इति चेत्, वैयाकरणमते वाक्यशक्त्यङ्गी-कारेण आकाङ्क्षाभास्यत्वाभावात्। गाम्भीर्येणेत्यस्य तात्पर्यग्राहकत्वमात्रेण गाम्भीर्यप्रयोज्याभेदस्य संसर्गतायां तात्पर्यात् तादृशाकाङ्क्षाविषयैव गाम्भी-र्येणेत्यस्योपयोगाच्च। अत एवारुचेर्वाह **यद्वा** ● नृपसमुद्रयोर्गाम्भीर्यज्ञानेन जन्यं अभेदसम्बन्धेन समुद्रप्रकारकनृपविशेष्यकं नृपः समुद्र इति ज्ञानं तत्र-प्रकारः समुद्रः। तथा च विभक्त्यर्थप्रकारत्वस्य स्वरूपसम्बन्धेन समुद्र एवा-न्वयो न त्वभेदेऽतो न पूर्वोक्तदोषस्यावकाशः। **पञ्चम्यर्थतया** ● धूम-

कल्पनात् । एवं च गाम्भीर्यंज्ञानजन्यज्ञानप्रकारसमुद्राभिन्न इत्यादिर्बोधः ।

तदिदं रूपकं विषयविषयिणोः सामानाधिकरण्ये अपदार्थतया संसर्गः । यथा 'बुद्धिर्दीपकला' इत्यादौ ।

वैयधिकरण्ये च शब्दार्थतया क्वचिद् विशेष्यम् । यथा—

'कैशोरे वयसि क्रमेण तनुतामायाति तन्व्यास्तना-
वागामिन्यखिलेश्वरे रतिपतौ तत्कालमस्याज्ञया ।
आस्ये पूर्णशशाङ्कता नयनयोस्तादात्म्यमम्भोरुहां
किं चासीदमृतस्य भेदविगमः साचिस्मिते तात्त्विकः ॥'

अत्र शशाङ्कता-तादात्म्य-भेदविगमशब्दैरभिधीयमानं रूपकं प्रथमान्त-विशेष्यतावादिनां मते विशेष्यम् । क्रियाविशेष्यता-

---

ज्ञानेन जन्यं पर्वतो वह्निमान् इति ज्ञानं तत्र वह्निप्रकारः । **बोधः** ● स्फुटस्वरूपन्त्वस्य उपमाप्रकरणदर्शितदिशैवावसेयम् । सर्वत्र लेखने ग्रन्थाधिक्यं स्यात् । **अपदार्थतया** ● न त्वशब्दार्थतया । वैयाकरणनये वाक्यार्थतयाङ्गीकारात् । **कैशोरे** ● तन्व्यास्तनौ अखिलेश्वरे रतिपतौ आगामिनि सति कैशोरे बाल्ये वयसि क्रमेण तनुतामायाति सति यौवनारम्भकालमेव अस्य रतिपतेराज्ञया सन्मानार्थमिति भावः । आस्ये पूर्णशशाङ्कता शशाङ्कतादात्म्यम् नयनयोरम्भोरुहां कमलानां तादात्म्यम् । किञ्च साचीस्मिते तिर्यक्हासरूपे तात्त्विको वास्तविकः, भेदविगमोऽभेद आसीत् । किशोरशब्दाद् भावे इदमर्थे वा अण् । आयातीत्यत्र या धातोः शतरि सप्तमी । आगामिनि णिनिः । आवश्यकेऽर्थे णिनिः सम्यक् प्रतिभाति येन भविष्यदर्थः प्रतिभासेत । पूर्णशशाङ्कस्य भाव इत्यर्थेऽपि तलस्तादात्म्यमर्थः । भावस्यासाधारणधर्मरूपतया तद्व्यक्तित्वादिरूपस्य तादात्म्यत्वं प्रतिपादितं व्युत्पत्तिवादे । विगमोऽभावः । **विशेष्यम्** ● आस्यवृत्ति भूतकालिकसत्ताश्रयः शशाङ्कतादाम्यमिति रीत्या त्रयाणां तादाम्यानां बोधे विशेष्यता । **क्रियाविशेष्यता** ● वैयाकरणानामाख्यातस्थले क्रियामुख्यविशेष्यकशाब्दबोधेऽपि कृदन्तस्थले नामार्थतयाऽभेदान्वयाय कर्तरि कृदिति शास्त्रस्वारस्याच्च कारकाणामेव क्रियामपेक्ष्य प्राधान्यात् ।

वादिनां तु तत्रैव किञ्चिद् व्यत्यासेन निष्ठान्तक्रियादाने ।

क्वचिच्च विशेषणम्। यथा—

'अविचिन्त्यशक्तिविभवेन सुन्दरि प्रथितस्य शम्बररिपोः प्रभावतः।
विधुभावमञ्चतितमां तवाननं नयनं सरोजदलनिर्विशेषताम् ॥'

इह द्वितीयार्थे विशेषणीभूतं विधुत्वादि विध्वभेदात्मकतया रूपकम् ।

एवं मुखचन्द्र इत्यादावुपमितसमासे तावदुपमैव। विशेषण-समासे तु रूपकम्। बोधश्च शशिपुण्डरीकमित्यादाविव प्राक्-प्रतिपादितदिशा बोध्यः ।'

---

**निष्ठान्तक्रिया●** सम्पन्नो ह्यमृतस्येति। लिङ्गपरिवर्तनेन शशाङ्कतातादात्म्ययो-रन्वयः। आस्ये पूर्णशशाङ्कता सम्पन्नेत्यस्य आस्यवृत्तिभूतकालिकसम्पत्त्या-श्रयाभिन्नं पूर्णशशाङ्कतादात्म्यमिति बोधः। अकर्मकत्वात्कर्तरि क्तस्याश्रयोऽर्थः। अन्ययोस्त्वेवमेव विधेयम् ।

**अविचिन्त्य●**हे सुन्दरि अचिन्त्यायाः शक्तेः प्रभावेण प्रसिद्धस्य शम्बररिपोः कामस्य प्रभावतः यौवनोद्गमे' तवाननं विधुभावम् अतिशयेन अञ्चति तथा तव नयनं सरोजस्य दलेन निर्विशेषतामभेदम् अञ्चतितमाम्। विधुभावं विधुतादात्म्यम्। तिङश्चेत्यनेन तमप्, किमेतिङव्ययधादाम्वद्रव्य-प्रकर्षे इत्यनेनामन्तः। नैयायिकनये विधुतादात्म्यकर्मकं यदतिशयितमञ्चनं तदाश्रयाभिन्नमाननं तद्विशेष्यको बोधः। वैयाकरणमते तु आननकर्तृकं विधुतादात्म्यकर्मकं यदतिशयितमञ्चनमिति क्रियाविशेष्यको बोधः।

मतद्वयेऽपि कर्मणि तादात्म्यस्य विशेषणतामाह **इह●** ।

समाने शब्दे रूपकोपमयोर्व्यवस्थामाह **एवम्●** उपमित व्याघ्रादिभि-रित्यादिना समासे लक्षणया चन्द्रसदृशाभिन्नं मुखमिति बोधः, रूपके तु मुख-निष्ठाभेदप्रतियोगी चन्द्र इति रीत्या प्रतियोगित्वविशिष्टाभेदसम्बन्धेन मुख-विशिष्टश्चन्द्र इति बोधः। अन्यच्च अत्र वदन्ति कल्पोक्तरीत्याऽवसेयम्। मुखस्य विशेषणत्वात् पूर्वनिपातवैपरीत्याशङ्का न कार्या। मयूरव्यंसकादितात्प-र्यमपि तत्रैव स्फुटम्। अत्रत्यमर्मप्रकाशस्य समाधानमपि तत्रैव टीकायां जातम्। इत्याशयेनाह **प्राक् प्रतिपादित●** ।

कल्पनात्। एवं च गाम्भीर्यज्ञानजन्यज्ञानप्रकारसमुद्राभिन्न इत्यादिर्बोधः।

तदिदं रूपकं विषयविषयिणोः सामानाधिकरण्ये अपदार्थतया संसर्गः। यथा 'बुद्धिर्दीपकला' इत्यादौ।

वैयधिकरण्ये च शब्दार्थतया क्वचिद् विशेष्यम्। यथा—

'कैशोरे वयसि क्रमेण तनुतामायाति तन्व्यास्तना-
वागामिन्यखिलेश्वरे रतिपतौ तत्कालमस्याज्ञया।
आस्ये पूर्णशशाङ्कता नयनयोस्तादात्म्यमम्भोरुहां
किं चासीदमृतस्य भेदविगमः साचिस्मिते तात्त्विकः॥'

अत्र शशाङ्कता-तादात्म्य-भेदविगमशब्दैरभिधीयमानं रूपकं प्रथमान्त-विशेष्यतावादिनां मते विशेष्यम्। क्रियाविशेष्यता-

---

ज्ञानेन जन्यं पर्वतो बह्निमान् इति ज्ञानं तत्र वह्निप्रकारः। **बोधः**● स्फुट-स्वरूपन्त्वस्य उपमाप्रकरणदर्शितदिशैवावसेयम्। सर्वत्र लेखने ग्रन्थाधिक्यं स्यात्। **अपदार्थतया**● न त्वशब्दार्थतया। वैयाकरणनये वाक्यार्थतयाङ्गीकारात्। **कैशोरे**● तन्व्यास्तनौ अखिलेश्वरे रतिपतौ आगामिनि सति कैशोरे बाल्ये वयसि क्रमेण तनुतामायाति सति यौवनारम्भकालमेव अस्य रतिपते-राज्ञया सन्मानार्थमिति भावः। आस्ये पूर्णशशाङ्कता शशाङ्कतादात्म्यम् न यनयोरम्भोरुहां कमलानां तादात्म्यम्। किञ्च साचीस्मिते तिर्यक्हासरूपे तात्त्विको वास्तविकः, भेदविगमोऽभेद आसीत्। किशोरशब्दाद् भावे इदमर्थे वा अण्। आयातीत्यत्र या धातोः शतरि सप्तमी। आगामिनि णिनिः। आवश्यकेऽर्थे णिनिः सम्यक् प्रतिभाति येन भविष्यदर्थः प्रतिभासेत। पूर्ण-शशाङ्कस्य भाव इत्यर्थेऽपि तलस्तादात्म्यमर्थः। भावस्यासाधारणधर्मरूपतया तद्व्यक्तित्वादिरूपस्य तादात्म्यत्वं प्रतिपादितं व्युत्पत्तिवादे। विगमोऽभावः। **विशेष्यम्**● आस्यवृत्ति भूतकालिकसत्ताश्रयः शशाङ्कतादाम्यमिति रीत्या त्रयाणां तादाम्यानां बोधे विशेष्यता। **क्रियाविशेष्यता**● वैयाकरणानामाख्यातस्थले क्रियामुख्यविशेष्यकशाब्दबोधेऽपि कृदन्तस्थले नामार्थतयाऽभेदा-न्वयाय कर्तरि कृदिति शास्त्रस्वारस्याच्च कारकाणामेव क्रियामपेक्ष्य प्राधान्यात्।

वादिनां तु तत्रैव किञ्चिद् व्यत्यासेन निष्ठान्तक्रियादाने ।

क्वचिच्च विशेषणम्। यथा—

'अविचिन्त्यशक्तिविभवेन सुन्दरि प्रथितस्य शम्बररिपोः प्रभावतः।
विधुभावमञ्चतितमां तवाननं नयनं सरोजदलनिर्विशेषताम् ॥'

इह द्वितीयार्थे विशेषणीभूतं विधुत्वादि विध्वभेदात्मकतया रूपकम् ।

एवं मुखचन्द्र इत्यादावुपमितसमासे तावदुपमैव। विशेषणसमासे तु रूपकम्। बोधश्च शशिपुण्डरीकमित्यादाविव प्राक्प्रतिपादितदिशा बोध्यः ।'

---

**निष्ठान्तक्रिया** ● सम्पन्नो ह्यमृतस्येति। लिङ्गपरिवर्तनेन शशाङ्कतातादात्म्ययोरन्वयः। आस्ये पूर्णशशाङ्कता सम्पन्नेत्यस्य आस्यवृत्तिभूतकालिकसम्पत्त्याश्रयाभिन्नं पूर्णशशाङ्कतादात्म्यमिति बोधः। अकर्मकत्वात्कर्तरि क्तस्याश्रयोऽर्थः। अन्ययोस्त्वेवमेव विधेयम् ।

**अविचिन्त्य** ● हे सुन्दरि अचिन्त्यायाः शक्तेः प्रभावेण प्रसिद्धस्य शम्बररिपोः कामस्य प्रभावतः यौवनोद्गमे' तवाननं विधुभावम् अतिशयेन अञ्चति तथा तव नयनं सरोजस्य दलेन निर्विशेषतामभेदम् अञ्चतितमाम् । विधुभावं विधुतादात्म्यम् । तिङश्चेत्यनेन तमप्, किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे इत्यनेनामन्तः। नैयायिकनये विधुतादात्म्यकर्मकं यदतिशयितमञ्चनं तदाश्रयाभिन्नमाननं तद्विशेष्यको बोधः। वैयाकरणमते तु आननकर्तृकं विधुतादात्म्यकर्मकं यदतिशयितमञ्चनमिति क्रियाविशेष्यको बोधः।

मतद्वयेऽपि कर्मणि तादात्म्यस्य विशेषणतामाह **इह** ● ।

समाने शब्दे रूपकोपमयोर्व्यवस्थामाह **एवम्** ● उपमित व्याघ्रादिभिरित्यादिना समासे लक्षणया चन्द्रसदृशाभिन्नं मुखमिति बोधः, रूपके तु मुखनिष्ठाभेदप्रतियोगी चन्द्र इति रीत्या प्रतियोगित्वविशिष्टाभेदसम्बन्धेन मुखविशिष्टश्चन्द्र इति बोधः। अन्यच्च अत्र वदन्ति कल्पोक्तरीत्याऽवसेयम्। मुखस्य विशेषणत्वात् पूर्वनिपातवैपरीत्याशङ्का न कार्या। मयूरव्यंसकादितात्पर्यमपि तत्रैव स्फुटम्। अत्रत्यमर्मप्रकाशस्य समाधानमपि तत्रैव टीकायां जातम्। इत्याशयेनाह **प्राक् प्रतिपादित** ● ।

'मीनवती नयनाभ्यां करचरणाभ्यां प्रफुल्लकमलवती।
शैवालिनी च केशैः सुरसेयं सुन्दरी सरसी ॥'

इत्यादौ तृतीयाया अभेदार्थकत्वात् तस्य च प्रागुक्तदिशा प्रतियोगित्वमुखस्यार्थवशादन्वये, नयननिष्ठाभेदप्रतियोगिमीनवतीति बोधः। मीनवत्त्वं च स्वाभिन्नद्वारकम्। एतत्स्फोरणायैव नयनाभ्यामित्युक्तम्। मीनाभिन्ननयनवतीति तु पर्यवसितम्। नयनाभेदे तु मीनेषु गृह्यमाणे सरसीरूपकापोषणादित्युक्तमेव।

साधारणधर्मश्चात्राप्युपमायामिव क्वचिदनुगामी क्वचिद् बिम्बप्रतिबिम्बभावापन्नः, क्वचिदुपचरितः क्वचिच्च केवलशब्दात्मा। सोऽपि क्वचिच्छब्दनोपात्तः, क्वचित् प्रतीयमानतया नोपात्तः।

उपात्तोऽनुगामी यथा—

'जडानन्धान् पङ्गून् प्रकृतिबधिरानुक्तिविकलान्
ग्रहग्रस्तानस्ताखिलदुरितनिस्तारसरणीन्।
निलिम्पैर्निर्मुक्तानपि च निरयान्तर्निपततो
नरानम्ब त्रातुं त्वमिह परमं भेषजमसि ॥'

---

**मीनवती●** नयननिष्ठाभेदप्रतियोगिमीनवती करचरणनिष्ठाभेदप्रतियोगिविकसितकमलवती केशनिष्ठाभेदप्रतियोगिशैवालवती रसपदेन शृङ्गारादेर्जलस्य च ग्रहणेन सुन्दरशृङ्गारादिनिष्ठाभेदप्रतियोगिजलवती सुन्दरीनिष्ठाभेदप्रतियोगिनी सरसीति बोधः।

**मुखस्या●** प्रतियोगिनो मीनादेः प्राधान्यद्योतकम्। **द्वारकम्●** नायिकायां मीनवत्त्वंञ्च स्वाभिन्नं मीनाभिन्नं नयनं तद्द्वारा। **त्युक्तमेव●** सरसीसम्बन्धिमीनादौ सुन्दरीसम्बन्धिनयनादीनामभेदे सरस्यां सुन्दर्या अभेदः सिध्येत्। इष्यते तु सुन्दर्यां सरस्या अभेदः।

**जडान●** हे अम्ब इह जगति नरान् त्रातुं त्वं परमं भेषजमसि इति भागीरथ्या वर्णनम्। भागीरथ्यां भेषजस्य रूपकम्। त्राणहेतुत्वमेकशब्दोपात्तमुभत्राप्यन्वेति। नराणां विशेषणम्—जडान्, अन्धान्, पङ्गून, जन्मतो

अत्र त्रातुमिति तुमुन्नन्तेन शब्देनोपात्तं जडान्धादित्राणं भेषजभागीरथ्योः ।

अयमेवानुक्तो यथा—

'समृद्धं सौभाग्यं सकलवसुधायाः किमपि तन्-
महैश्वर्यं लीलाजनितजगतः खण्डपरशोः ।
श्रुतीनां सर्वस्वं सुकृतमथ मूर्तं सुमनसां
सुधासाम्राज्यं ते सलिलमशिवं नः शमयतु ॥'

अत्र सौभाग्यभागीरथ्योः स्वाभावव्यापकदौर्भाग्यत्व परमोत्कर्षाधायकत्वादिरनुपात्तः—प्रतीयमानो धर्मः । एवमीश्वरासाधारणधर्मत्व-परमगोप्यत्वनिरतिशयसुखजनकत्वान्यापामरसकलजनजरामृत्युहरणक्षमत्वं चोत्तरोत्तरारोपेष्वनुगामीति।

बिम्बप्रतिबिम्बभावमापन्नो विशिष्टरूपकप्रसङ्गे निरूपितः।

---

बधिरान्, वचनरहितान् मूकान्, मन्दादिग्रहैर्ग्रस्तान्, अस्ता अविद्यमाना पापेभ्यो रक्षायाः सरणिर्येषान्तान्, दैवैरपि अधिकपापतया मुक्तान्, अशरणान्, अपि च तदानीमेव निरयस्य नरकस्यान्तः निपततो नरान् ।

**समृद्धम्** ● हे भागीरथि ते सलिलं नः अशिवममङ्गल शमयतु । क्रमशः सलिले पञ्चानां रूपकाणि । तव सलिलं किमपि अनिर्वचनीयं सकलवसुधायाः समृद्धं सौभाग्यम्, लीलया जनितं जगद्येन तस्य शिवस्य किमपि महदैश्वर्यम्, श्रुतीनां वेदानां गोपनीयं प्रतिपाद्यम्। अथ सुमनसां देवानां मूर्तं सुकृतम्, सुधायाः साम्राज्यम् ।

क्रमशः पञ्च साधारणधर्मान् अनुपात्तान् व्यञ्जयानाह **स्वाभाव** ● स्वस्य सौभाग्यस्य गङ्गासलिलस्य च यत्र यत्राभावस्तत्र तत्र दौर्भाग्यम्, ऐश्वर्येण सह परमोत्कर्षाधायकत्वम् । अथवा द्वयमपीदं सौभाग्येनैव सह साधारण्यवत् । द्वितीयस्येश्वरासाधारणधर्मवत्त्वम्, श्रुतिसर्वस्वस्य परमगोप्यत्वम्, सुकृतस्य निरतिशयेत्यादि, सुधासाम्राज्यस्य अन्यापामरेत्यादि ।

**निरूपितः** ● कुङ्कुमद्रवेत्यादीनि पद्यानि ।

उपचरितो यथा—

'अविरतं पर-कार्यकृतां सतां मधुरिमातिशयेन वचोऽमृतम्।
अपि च मानसमम्बुनिधिर्यशो विमलशारदचन्दिरचन्द्रिका ॥'

अत्रामृतरूपके विषये वचस्युपचरितो मधुरिमातिशयः शब्देनोपात्तः। अम्बुनिध्यादिरूपके च गाम्भीर्याद्यनुपात्तम्।

केवलशब्दात्मको यथा—

'अङ्कितान्यक्षसङ्घातैः सरोगाणि सदैव हि।
शरीरिणां शरीराणि कमलानि न संशयः ॥'

अत्र सरोगशब्दादिरुपात्त एव प्रतीयते, न लुप्तः। आद्यो ह्यभङ्गः, द्वितीयस्तु भग्नः।

अयमेव साधारणो यत्र युक्तिरूपेणोपन्यस्यते तद्धेतुरूपकम्। यथा—

'पञ्चशाखः प्रभो यस्ते शाखा सुरतरोरसौ।
अन्यथाऽनेन पूर्यन्ते कथं सर्वमनोरथाः ॥'

---

अविरतम् ● निरन्तरं परोपकाररतानां सतां वचो माधुर्यातिशयेन अमृतम्। मानसम् अम्बुनिधिः यशः शारदचन्दिरचन्द्रिका। चन्दिरश्चन्द्रः।

अमृतस्य धर्मो मधुरिमा वचसि आरोपितः। निध्यादि ● आदिपदेन चन्द्रिकारूपकस्य संग्रहः। गाम्भीर्यादि ● आदिना प्रकाशमानत्वम्। अनुपात्तम् ● उपचरितमिति शेषः।

अङ्कितान्य ● शरीरपक्षे इन्द्रियसंघातैरङ्कितानि चिह्नितानि रोगेण सहितानि, कमलपक्षे पद्माक्षैः सरसि गतानि।

अर्थयोः साम्याभावात् शब्दमात्रसाम्यम्। आद्यो ● अक्षशब्दः। द्वितीयस्तु ● सरोगशब्दश्लेषः।

पञ्चशाखः ● राजानं प्रत्युक्तिः। हे प्रभो यस्ते पञ्च शाखा अङ्गुलयो यस्मिन् हस्तः असौ सुरतरोः शाखा।

तत्र हेतुमाह अन्यथा ● कल्पवृक्षशाखानामेव मनोरथपूरकत्वात्। शाखाहस्तयो रूपकं शाखाशब्दः साधारणः।

एवम्—

'प्राणेशविरहक्लान्तः कपोलस्तव सुन्दरि ।
मनोभवव्याधिमत्त्वान्मृगाङ्कः खलु निर्मलः ॥'

इह श्लेषेण रसचन्द्रयोः कपोले ताद्रूप्यप्रत्ययाद् द्विरूपकं निरवयवम् । हेतुस्तु त्रिषु श्लिष्ट एव ।

एवमन्येऽपि प्रकारा ज्ञेयाः ।

'उल्लासः फुल्लपङ्केरुहपटलपतन्मत्तपुष्पंधयानां
निस्तारः शोकदावानलविकलहृदां कोकसीमन्तिनीनाम् ।
उत्पातस्तामसानामुपहतमहसां चक्षुषां पक्षपातः
सङ्घातः कोऽपि धाम्नामयमुदयगिरिप्रान्ततः प्रादुरासीत् ॥'

अत्रोपमेय उपमानस्य नारोपः, अपि तु कारणे कार्यस्येति रूपकं न भवतीति प्राञ्चः । एतन्मतानुसारेणैवास्माभिरपि लक्षितम् । उच्छृङ्खलाः पुनरारोपमात्रं रूपकं वदन्त इहापि

---

अत्रैव विषये श्लेषस्योदाहरणमाह **प्राणेश** ● हे सुन्दरि प्राणेशविरहेण हेतुना क्लान्तस्ते कपोलः निर्मलः, मृगाङ्कः खलु चन्द्रः । तत्र मनोभवव्याधिमत्त्वं हेतुः । यथा त्वयि मनसि जातो यो व्याधिस्तद्वत्त्वम्, तथा चन्द्रेऽपि मनोभव-कामसम्बन्धिराजयक्ष्मरूपव्याधिमत्त्वम् । अथवा मृगाङ्को रसविशेषः । सोऽपि मनसि भवां क्षयरूपां व्याधिं मथ्नातीति व्याधिमात् तत्त्वं मृगाङ्के रसे ।

रत्नाकरादिमतेन रूपकं स्वमतेन हेत्वलङ्कृतं प्रागुक्तत्वात्समन्वयायाह **उल्लासः** ● प्रफुल्लानां पङ्केरूहाणां पटलेभ्यः पततां मत्तानां पुष्परसं पिबतां भृङ्गाणामुल्लासः प्रसन्नताहेतुः । स्वभावाद् रात्रौ विरहशोकरूपेण दावानलेन विकलहृदां कोकसीमन्तीनीनां निस्तारो दुःखनिवारणकारणम् । तामसाना-मुत्पातो विनाशसूचकः, विनाशहेतुर्वा । उपहतमहसामन्धकारवशात् चक्षुषा पक्षपातः सहायकारणम् । कोऽपि विलक्षणोऽयं धाम्नां तेजसां संघात उदयगिरि-प्रान्ततः प्रादुः आसीद् उदियाय ।

उपमेये धामसंघाते नोपमानस्योल्लासादेरारोपः, किन्तु उल्लासादीनां कारणे धामसंघाते कार्याणामुल्लासादीनामतो न रूपकमित्याह **अत्रोपमेय** ● । **आरोपमात्रं** ● कार्यकारणभावादिमूलकमपि ।

रूपकमेवाचक्षत इति प्रागेव निरूपितम् ।

ननु—

'यशःसौरभ्यलशुनः शान्तिशैत्यहुताशनः ।
कारुण्यकुसुमाकाशः पिशुनः केन वर्ण्यते ॥'

इत्यत्र लशुनहुताशनाकाशैः पिशुनस्य किं साधर्म्यम्, येन तेषामस्मिन् रूपकमुच्यत इति चेत्, यशःसौरभ्ययोः शान्ति-शैत्ययोः कारुण्यकुसुमयोश्च ताद्रूप्ये शब्दादुपस्थापितेऽनन्तर-मुपस्थितं यशोरूपसौरभ्याद्यभाववत्त्वमेतत् ।

एवमपि लशुनखलयोस्ताद्रूप्यसिद्धौ सत्यां लशुनरूपखला-वृत्तित्वेन यशःसौरभ्ययोस्ताद्रूप्यं सिद्ध्येत्, यशःसौरभ्ययो-स्ताद्रूप्यसिद्धौ च यशोरूपसौरभ्यशून्यत्वेन लशुनखलयोस्ताद्रूप्यम् इत्यन्योन्याश्रयो नाशङ्कनीयः, सकलसिद्धेः कल्पनामयत्वेन, कल्पनायाश्च स्वप्रतिभाधीनत्वात् । शिल्पिभिः परस्परावष्टम्भ-मात्राधीनस्थितिकाभिः शिलेष्टकाभिर्गृहविशेषनिर्माणाच्च ।

---

यशोरूपसौरभ्याभाववत्त्वम् ● शान्तिरूपशैत्यनाशकत्वम्, कारुण्य-रूपकुसुमानुपादानत्वम्, अन्यत्र बोध्यम् ।

ननु यशःसौरभ्ययोरेव साधर्म्याभावात् कथं ताद्रूप्यम्, तदपि लशुन-रूपखलावृत्तित्वसाधर्म्येण साध्यम् । तथा च यशःसौरभ्ययोस्तादात्म्यं लशुन-पिशुनयोस्तादात्म्यमपेक्षते । तच्च यशःसौरभ्ययोस्तादाम्यमिति शङ्कते एवम् ● उत्तरमाह सकलसिद्धेः ● कल्पना च बाह्यसामाग्रीमनपेक्ष्यैव प्रवर्तते इति प्रसिद्धमेव । कल्पना च इच्छाप्रतिभे सहायीकृत्य प्रवर्तमाना विलक्षण-ज्ञानस्वरूपा, अतो न ज्ञानेऽप्यन्योन्याश्रयः । भाधीनत्वात् ● यद्विषयिणी कल्पना तद्विषयिणी स्फूर्तिरेवापेक्षिता न त्वन्यदनुकूलं बाह्यं प्रतिकूलाभाव-रूपम्वेत्यर्थः ।

अन्योन्याश्रयाण्यपि कार्याणि कुशलाः संघटयन्तीत्याह दृष्टान्तपूर्वकम् शिल्पिभिः ● ।

अथास्य ध्वनिः । तत्र शब्दशक्तिमूलो यथा—

'विज्ञत्वं विदुषां गणे सुकवितां सामाजिकानां कुले
माङ्गल्यं स्वजनेषु गौरवमथो लोकेषु सर्वेष्वपि ।
दुर्वृत्ते शनितां नृलोकवलये राजत्वमव्याहतं
मित्रत्वं च वहन्नकिञ्चनजने देव त्वमेको भुवि ॥'

अत्र शक्तिनियन्त्रणेऽपि बुधत्व-शुक्रत्वादीनि बुधाद्यभेदरूपाणि राजनि व्यज्यन्ते ।

यथा वा—

'अविरलविगलद्दानोदकधाराऽऽसारसिक्तधरणितलः ।
धनदाग्रमहितमूर्त्तिर्देव त्वं सार्वभौमोऽसि ॥'

अर्थशक्तिमूलो यथा—

'कस्तूरिकातिलकमालि विधाय सायं
स्मेरानना सपदि शीलय सौधमौलिम् ।
प्रौढिं भजन्तु कुमुदानि मुदामुदारा-
मुल्लासयन्तु परितो हरितो मुखानि ॥'

---

विज्ञत्वं हे देव राजन् भुवि त्वमेकः । तव सदृशो नास्ति । त्वयि बहूनां तादात्म्यसत्त्वात् । सर्वत्र त्वप्रत्ययस्य तादात्म्यमर्थो वहन् क्रियान्वयी । विज्ञत्वं पाण्डित्यम्, बुधग्रहतादात्म्यञ्च, सुकवितां शोभनां काव्यरचनां शुक्रतादात्म्यञ्च, माङ्गल्यमुत्सवसम्पादकत्वं भौमतादात्म्यञ्च, गौरवं जायस्त्वं बृहस्पतितादात्म्यञ्च, भङ्गश्लेषेण दुर्वृत्ते अशनितां वज्रतां शनितादात्म्यञ्च, राजत्वं राजधर्मं चन्द्रतादात्म्यञ्च, मित्रत्वं विश्वस्तत्वं सूर्यतादात्म्यञ्च ।

ननु नानार्थकानामपि शक्तिसंकोचे राजप्रकरणे कथं बुधग्रहादीनामवबोध इत्यत आह अत्र ● । व्यज्यन्ते ● प्रधानीभूतश्चेत्यर्थः ।

अत्र विशेषणतामापन्नानि रूपकाणि । विशेष्येऽपि रूपकस्य ध्वनिमाह अविरल ● पादत्रयं पूर्वं व्याख्यातमस्ति उपमाध्वनित्वेन । चतुर्थपादव्यत्यासेन सार्वभौमस्य विधेयतानिरूपणाद् रूपकध्वनिः ।

कस्तूरिका ● हे आलि सायं कस्तूरिकातिलकं विधाय स्मेरानना सती

अत्र त्वदीयमाननं कलङ्क-चन्द्रिका-विशिष्टचन्द्राभिन्नमिति रूपकं कुमुदविकासादिना ध्वन्यते, न तु भ्रान्तिमान्; कुमुदानां हरितां चाचेतनत्वात्। न चाचेतनेषु मुदामसम्भवादवश्यं कुमुदादिषु चेतनत्वारोपेण भाव्यम्, तेन च भ्रान्तिसिद्धिरिति वाच्यम्; मुत्पदस्य विकासे लाक्षणिकत्वात्।

इदं वा विविक्तमुदाहरणम्--

'तिमिरं हरन्ति हरितां पुरः स्थितं तिरयन्ति तापमथ तापशालिनाम्।
वदनत्विषस्तव चकोरलोचने परिमुद्रयन्ति सरसीरुहश्रियः॥'

इहापि वदनं चन्द्र इति गम्यते।

आनन्दनवर्धनाचार्यास्तु--

---

सपदि सौधमौलिं गृहशिखरं शीलय गच्छ। गृहान्तरवस्थाने तथा प्रकाशो न भविष्यतीति भावः।

चन्द्रवत्प्रकाशस्य प्रयोजनमाह ● कुमुदानि मुदां विकासान।मुदाराम् अतिशयेन प्रौढिं पूर्णविकासमिति यावत् भजन्तु। हरितो दिशः स्वमुखानि उल्लासयन्तु प्रकाशीकुर्वन्तु। हरितः सम्बन्धषष्ठ्यां सकर्मकस्य उल्लासयन्त्वि-त्यस्य कर्तृपदं दुर्लभं स्यात्। स्वार्थणिच्चि मुखानां कर्तृत्वात् षष्ठ्यपि।

तिलकप्रकाशादियुक्तायाः स्मेराननायाः सकाशात् चन्द्रकार्यस्य कुमुद-विकासदिक्प्रकाशादिवर्णनाद् मुखे चन्द्रारोपः प्रतीयते। तदाह—अत्र ●

भ्रान्त्या असंदिग्धमुदाहरणमाह—तिमिरम् ● हे चकोरलोचने तव वदनत्विषः हरितां पुरःस्थितं तिमिरं हरन्ति, अथ तापशालिनां तापं तिरयन्ति, सरसीरुहश्रियः कमलशोभाः परिमुद्रयन्ति, समापयन्ति।

वदनत्विषि चन्द्रमसस्तिमिरहरणादिकार्यवर्णनाद् वदनं चन्द्र इति व्यज्यते।

'प्राप्तश्रीरेष कस्मात् पुनरपि मयि तं मन्थखेदं विदध्या-
न्निद्रामप्यस्य पूर्वामनलसमनसो नैव सम्भावयामि।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात-
स्त्वय्यायाते विकल्पानिति दधत इवाभाति कम्पः पयोधेः॥

अत्र 'रूपकाश्रयेण काव्यचारुत्वव्यवस्थापनाद्रूपकध्वनिः' इत्याहुः, तच्चिन्त्यम्। अत्र च जलधिकम्पहेतुत्वेन विकल्पत्रयं कल्प्यते। तच्च प्रकृते राजविशेष्यिकां जलनिधिगतामनाहार्यविष्णुतादात्म्यज्ञानरूपां भ्रान्तिमेवाक्षिपति, न रूपकम्; तज्जीवातोरनाहार्यविष्णुतादात्म्यनिश्चयस्य कम्पाजनकत्वात्, कविजलधिगतत्वेन वैयधिकरण्याच्च। अज्ञातमेव केवलं विष्णुतादात्म्यं

रूपकसंदेहनिवृत्तये भ्रान्तेरुदाहरणमाह—**प्राप्तश्रीरेष**● राजानं प्रति कवेरुक्तिः। स्वाभाविकस्य वीचिचञ्चलस्य पयोधेः कम्पस्य हेतून् पयोधिगतान् त्रीन् विकल्पान् कविर्वर्णयति। हे राजन् त्वयि आयाते पयोधेः कम्प इति विकल्पान् ज्ञानानि दधत इवाभाति। सकलबलसमृद्धस्य नृपस्य बलावगाहनेन विलोडितस्य समुद्रस्य कम्प इति कवेरुत्प्रेक्षा, समुद्रगतश्च राजविशेष्यकविष्णुप्रकारकः संशयः। एष प्राप्तश्रीः कस्माद् हेतोः पुनरपि तं विलक्षणं मन्थखेदं मन्थनदुःखं विदध्यात्। सम्भावनायां लिङा उत्प्रेक्षा वाच्या, पुनर्मथनविरोधिप्राप्तश्रीत्वमतो निश्चयाभावात् संशयः।

कदाचिच्च शयितुमायाति चेदाह—**निद्रा**● अनलसमनसोऽस्य निद्रामपि न संभावयामि।

स्फुटं संशयमाह—**सेतुम्**● सकलैर्द्वीपाधिपैरनुयातो भूयः सेतुं बध्नाति किमिति।

एवञ्च वाच्यौ संदेहोत्प्रेक्षालङ्कारौ न काव्यचारुतां तथा निर्वहतो यथा व्यङ्ग्यं रूपकमिति दर्शयति **अत्र**●। **तच्चिन्त्यम्**● ननु समुद्रगतं राजविशेष्यकविष्णुविशेषणकमभेदसंसर्गकं ज्ञानम्, आहार्यमनाहार्यं वा प्रथमे सम्भावयामि किमिति पदानि नानुकूलानि। किञ्च न तेन कार्यं भवति इति कम्पाजनकत्वादित्यनेनोक्तम्। द्वितीयश्चेत् कार्यजनकत्वेन संदेहरूपाभावाद् भ्रान्तिरेव, न च रूपकम्; तस्याभेदाहार्यनिश्चयरूपत्वात्। न च कविगतं तादृशमनाहार्यमेव ज्ञानमिति चेदाह **कविगतत्वेन**● कविगतं ज्ञानं कवेः कम्पस्य कारणं न तु पयोधेः।

जलधेः कम्पेऽनुपयुक्तमेव। चमत्कारिण्यपि चात्र भ्रान्तिरेवेति ध्वनिरपि तस्या एव युक्तः।

अथास्यापि कविसमयविरुद्धतया चमत्कारापकर्षका लिङ्गभेदादयो दोषाः सम्भवन्ति। यथा—

'बुद्धिरब्धिर्महीपाल ! यशस्ते सुरनिम्नगा।
कृतयस्तु शरत्कालचारुचन्द्रिरचन्द्रिका॥'

अत्र विषयविषयिणोर्लिङ्गादिकृतं वैलक्षण्यं तयोस्ताद्रूप्य-बुद्धौ प्रतिकूलम्।

क्वचित् कविसमयसिद्धतया चमत्कारहानिराहित्ये तु नामी दोषाः। यथा—'सन्ताप-शान्तिकारित्वाद् वदनं तव चन्द्रमाः' इत्यादौ हेतुरूपके।

इति रसगङ्गाधरे रूपकनिरूपणम्।

---

ननु विष्णुतादात्म्यमेव विष्णुरूपकम्, न तु तस्य ज्ञानं कविगतं पयोधि-गतं वेति विवक्षितमिति चेद् **अज्ञातमेव**●। चमत्कारित्वनिर्वाहमप्याह **चमत्कारिण्यपि**●। तस्याः● भ्रान्तेः।

**बुद्धिर**● लिङ्गभेदस्य बुद्धिः अब्धिः यशः सुरनिम्नगा गङ्गा, वचनभेदस्य कृतयः शरत्कालचारुचन्द्रिरचन्द्रिका।

दूषणतामस्याह—**ताद्रूप्यबुद्धौप्रतिकूलम्**●।

**हेतुरूपके** चन्द्रमस उपमेयताया मुखवेदनादिनपुंसकस्य प्रयोगभूयिष्ठ-त्वात्। चन्द्रालोकोक्तानां सोऽधिरूपितरूपकादीनामुदाहरणानि ऐषु भेदेषु अन्तर्भवन्ति। सूक्ष्मभेदानुसरणे तु उपमादिवदनन्तानीति न प्रपञ्चितानि। अलङ्कारकौस्तुभटीकायान्तु आस्ये पूर्णशशाङ्कतेत्यादौ उपमानतावच्छेदकस्य शशाङ्कत्वादेरारोपादुपमानतावच्छेदकारोपरूपं रूपकान्तरं वर्णितम्। परं शशाङ्कतेत्यादेः शशाङ्कतादात्म्यमर्थ इति व्युत्पत्तिवादसंवादेन मया सम्पादि-तमिति न ततो न्यूनता पण्डितराजस्यारोपणीया।

**इति रूपकनिरूपणम्।**

**अथ परिणामः--**

**विषयी यत्र विषयात्मतयैव प्रकृतोपयोगो न स्वातन्त्र्येण, स परिणामः ।**

**अत्र च विषयाभेदो विषयिण्युपयुज्यते, रूपके तु नैवमिति रूपकादस्य भेदः ।**

---

## अथ परिणामनिरूपणम्

अभेदात्मतया रूपकप्रसङ्गात् परिणाममुदाहरति—विषयी उपमानं विषय उपमेयः विषयात्मतया उपमेयतादात्म्येन । एवकारेण अनुपयोगो व्यावर्त्यते । द्वितीयव्यावर्त्यमाह न स्वातन्त्र्येण । तथा च उपमानमुपमेयतादात्म्यापन्नमेव प्रकृतकार्योपयोगि, न तु स्वातन्त्र्येण तदा परिणाम इति सरलार्थः ।

अप्पयदीक्षितध्वन्युदाहरणखण्डनप्रस्तावे 'विषयिगतायाः प्रकृतकार्योपयोगिताया अवच्छेदकीभूतं विषयतादात्म्यम्' इति ग्रन्थार्थमिश्रणेन लक्षणन्तु विषयविशिष्टो विषयी परिणाम इति । वैशिष्ट्यञ्च स्वप्रतियोगिकतादात्म्यस्वप्रतियोगिकतादात्म्यावच्छिन्नप्रकृतकार्योपयोगितावत्त्वाभ्याम् । प्रथमस्य तात्पर्यन्तु स्फुटमेव । द्वितीयस्तु विषयतादात्म्यविशिष्टो विषयी प्रकृतकार्योपयोगी । उपयोगिता विषयिणि उपयोगितावच्छेदकं विषयतादात्म्यं तदवच्छिन्नोपयोगितेति ।

यदि तु भिन्ने विषयिणि न वस्तुतो विषयतादात्म्यं येनावच्छेदकं स्यात् किन्तु तथा ज्ञानमेव प्रकृतकार्योपयोगीति भण्येत, तदा विषयताविशिष्टो विषयी परिणाम इति लक्षणम् ।

वैशिष्ट्यं स्वावच्छेदकावच्छिन्नप्रतियोगिताकत्वप्रकारकाहार्यारोपविषयतादात्म्यवत्त्वतादृशतादात्म्यावच्छिन्नप्रकृतकार्योपयोगितावत्त्वाभ्याम् ।

यदि विषयिज्ञाने एवोपयोगिता विषयिणि विषयित्वसम्बन्धावच्छिन्नावच्छेदकतैवेत्युच्यते, तदा तादात्म्यविषयित्वनिष्ठावच्छेदकतानिरूपितविषयित्वसम्बन्धावच्छिन्नप्रकृतकार्योपयोगितावच्छेदकतावत्त्वमेव द्वितीयसम्बन्धो वाच्यः । विषयिपदाभावे विषयात्मना उपमानभिन्नस्यापि उपयोगे कार्यस्य कारणात्मना कार्यात्मना वा कारणस्योपयोगेऽतिव्याप्तिः । उभयोपादानात् सादृश्यमूलकं विषयतादात्म्यं विवक्षितम् । **नैवम्** किन्तु विषये विषयितादात्म्यम् ।

अयमुदाह्रियते—

'अपारे संसारे विषमविषयारण्यसरणौ
मम भ्रामं भ्रामं विगलितविरामं जडमतेः ।
परिश्रान्तस्यायं तरणितनयातीरनिलयः
समन्तात् सन्तापं हरिनवतमालस्तिरयतु ॥'

अत्र भगवदात्मतयैव तमालस्य संसारतापनिवर्तनक्षमत्वम्। मार्गश्रान्तजनसन्तापहारकत्वाद् रमणीयशोभाधारत्वाच्च तमालो विषयितयोपात्तः । अयं समानाधिकरणो वाक्यगः ।

---

अपारे हरितादात्म्यापन्नो नवतमालो वृक्षो भयसन्तापं समन्तात् तिरयतु । कीदृशो हरिः ? तरणितनया सूर्यतनयायां यमुनायास्तीरे निलयः स्थानं यस्य सः । कीदृशस्य मम ? परिश्रान्तस्य जडमतेश्च । जडमतित्वञ्च प्रागेव सन्तापहारिणो हरेश्चरणशरणानाश्रयणाद्विषयलम्पटत्वाच्च । परिश्रान्तिश्च विषमाणां दुर्विभाव्यफलानां विषयाणां रूपादीनामरण्ययुक्ता सरणिर्मार्गो यस्मिन्नेवंभूते अपारे विषयिणाङ्कृतेऽनन्ते संसारे विगलितविरामं निरन्तरं भ्रान्त्वा भ्रान्त्वा । वीप्सया अगणितभ्रमणं सूच्यते ।

एवं स्थले उपमितसमासेन उपमैव । न च सामान्यस्य प्रयोगात् कथमुपमितसमास इति वाच्यम्, प्रयुक्तेन धर्मेण नोपमा किन्तु अप्रयुक्तेन ।

उपमानिमित्तसामान्यस्याप्रयोगः सूत्राभिप्रेत इत्यादिकाव्यप्रकाशटीकाकृत्पञ्चाननभट्टाचार्यस्य मतं निरसितुमाह—भगवदात्मतयैव तमाले सन्तापनिवर्तनं श्रौतम्, किन्तु तमालस्य शुद्धस्योपमानस्य न तत्र सामर्थ्यम्, अपि तु हरितादात्म्यापन्नस्य ।

तादृशीमुपमां निरसितुं प्रयुक्तं साधारणमाह मार्ग तथा च श्रान्तसन्तापहारकत्वमुभयत्रोपात्तमिति नोपमितसमासस्यावसरः । प्रतीयमानं प्रसिद्धमप्याह रमणीय अप्रयुक्तेन साधारणधर्मेणोपमानिष्पादने प्रयुक्ताः साधारणधर्मा व्यर्थाः स्युरनन्वयिनश्च । प्रयत्नेन प्रयुञ्जानस्य कवेस्तत्रैवोपमानिष्पादकत्वे तात्पर्यात्, साधारणधर्मान्तरान्वेषणक्लेशे उपमाकृतचमत्कारह्रासाद् दोषश्चेति सहृदयाः प्रष्टव्याः । हरेर्विषयित्वसन्देहेन रूपकं निरसितुमाह विषयित अयम् तिरयतु पर्यन्तस्य प्रकृतकार्योपयोगस्य परिणामत्वात् । तेन च समासाभावादित्यर्थः ।

समासगो यथा--

'महर्षेर्व्यासपुत्रस्य श्रावं श्रावं वचःसुधाम्।
उप(अभि)मन्युसुतो राजा परां मुदमवाप्तवान्॥'

व्यधिकरणो यथा--

'अहीनचन्द्रा लसताऽननेन ज्योत्स्नावती चापि शुचिस्मितेन।
एषा हि योषा सितपक्षदोषा तोषाय केषां न महीतले स्यात्॥'

---

अन्ये तु हरिरिह तमाल इति पाठं वर्णयन्ति। मर्मप्रकाशस्तु उपमानप्रतियोगिकाभेदो रूपकम्। उपमेयप्रतियोगिकाभेदः परिणामः। तत्राभेदे उपमेयप्रतियोगिकत्वतात्पर्यग्राहकः प्रकृतकार्योपयोगः। न तु तच्छरीरेऽस्य प्रवेशः। एवं च यत्रोपमानस्य स्वात्मनैव प्रकृतकार्योपयोगः, यत्र चोदासीनता तत्र रूपकमेव। एवं च परिणामो विशेषणसमासायत्तः। रूपकं मयूरव्यंसकादिसमासायत्तं मुखचन्द्र इत्यादौ। यदि च चन्द्रमुखमिति विप्रयुज्यते, तदा विशेषणसमासायत्तमपि रूपकम्। यद्वा उपमानोपमेयपदानामुपमानप्रतियोगिकाभेदसंसर्गेणैव बोधकानां मयूरव्यंसकादिसमासेन विशेषणसमासबाधाच्चन्द्रमुखमित्यादिप्रयोग एव नेति ब्रूते। तत्र समासकलहस्तु रूपकप्रकरणे निपुणं निरूपित इति नोत्थाप्यते। तेनैव विशेषणसमासबाधोऽपि बाध्यते। समाने प्रयोगे रूपकपरिणामयोर्विनिगमकान्वेषणे प्रकृतकार्योपययोगितानिवेशस्य सार्थक्यं ब्रुवन्नपि तारानायकशेखरायेत्यादिदीक्षितोदाहृतपद्ये प्रकृतकार्योपयोगाभाववशात् खण्डनीये समर्थनैकपरवशतया लक्षणे प्रवेशं निषेधति, कथमन्यथा लक्षणे प्रवेशाभावे परिणामस्य तात्पर्यग्राहकताऽपि तस्याः पर्यवसीयते।

महर्षे● व्यासपुत्रस्य महर्षेः शुकदेवस्य वचोऽभिन्नां सुधां श्रावं श्रावं श्रुत्वा श्रुत्वा अभिमन्युसुतो राजा परीक्षितः परां मुदमवाप्तवान्।

अत्र सुधाया न स्वातन्त्र्येण श्रावमित्यादावन्वयः, किन्तु वचसस्तादात्म्येन। प्रकृतकार्योपयोगस्य निवेशाभावे रूपकत्वापत्तिः। यतो रूपकपरिणामयोर्व्यवस्थायां मर्मप्रकाशस्य समासव्यवस्था न लक्षणप्रविष्टा, अपि तु मनोमोदकमात्रमेव। अत्र चन्द्रिका टीकाऽपि वृथा क्लिश्यति।

अहीनचन्द्रा● तृतीयार्थाभेदवशात् लसदाननाभिन्नो यश्चन्द्रस्तेन परिपूर्णा शुचिस्मितरूपज्योत्स्नावती सितपक्षदोषा एषा योषा सती महीतले केषां तोषाय न भवेत्, अपि तु सर्वेषां विरहिणामपि।

अत्र सर्वेषामेव तोषाय स्यादित्यनेन विरहिजनतोषजनकत्वमपि लभ्यते । तच्चारोप्यमाणशुक्लपक्षरजन्याः स्वात्मना बाधितम्, योषारूपेण तु सङ्गच्छत इति भवति परिणामः । स च परस्परसापेक्षबहुसङ्घात्मकतया सावयवः । तत्राद्यार्धगतौ द्वाववयवौ व्यधिकरणौ द्वितीयार्धगतश्चैकः समानाधिकरणः ।

यच्चाप्पयदीक्षितैर्वैयधिकरण्येन परिणामे उदाहृतम्—

'तारानायकशेखराय जगदाधाराय धाराधर-
च्छायाधारककन्धराय गिरिजासङ्गैकशृङ्गारिणे ।
नद्या शेखरिणे दृशा तिलकिने नारायणेनास्त्रिणे
नागैः कङ्कणिने नगेन गृहिणे नाथाय सेयं नतिः ॥'

यथा वा—

---

अत्र समासाभावेन पूर्वनिपातकलहाभावेन योषायामेव सितपक्षरात्र्या रूपकमिति कौस्तुभकारः । स च न सम्यक्, योषासम्बन्धिन आननादेर्दोषासम्बन्धिनि चन्द्रादावभेदस्यारोपो दोषायामेव योषामेवारोपयेत्, न तु योषायां दोषामित्यभिप्रेत्य तदेवाह **तच्चेत्यादिना** ● तद् विरहिजनतापशमनं बाधितं दोषायाम् उद्दीपकत्वेन प्रत्युत तापजनकत्वात् । **योषारूपे** ● योषातादात्म्येन । शुद्धायाः सितपक्षदोषायास्तापजनकत्वेऽपि योषातादात्म्यविशिष्टायास्तस्यास्तापशमं प्रति हेतुत्वादिति भावः । रूपकवत् सावयवत्वमप्याह **स च** ● सापेक्षत्वं योषादोषयोराननचन्द्रयोश्चारोपयोः परस्परापेक्षत्वात् । **श्चैकः** ● योषादोषयोरित्यर्थः ।

**तारानायक** ● चतुर्थ्यन्तानि नाथायेत्यस्य विशेषणानि । चन्द्रशेखराय जगदाधाराय, धाराधरो जलधरस्तस्य च्छायाया धारकं कन्धरं यस्य तस्मै गिरिजायाः सङ्ग एकः केवलः शृङ्गारस्तद्वते । दीक्षितमते नद्यभिन्नशेखरिणे पण्डितराजमते नदीनिष्ठाभेदप्रतियोगिशेखरिणे एवमेव दृगभिन्नतिलकवते दृङ्निष्ठाभेदप्रतियोगितिलकवते नारायणाभिन्नास्त्रवते नारायणनिष्ठाभेदप्रतियोग्यस्त्रयुक्ताय । एवमग्रिमतृतीयान्तद्वयेऽपि बोध्यम् ।

'द्विर्भावः पुष्पकेतोर्विबुधविटपिनां पौनरुक्त्यं विकल्प-
श्चिन्तारत्नस्य वीप्सा तपनतनुभुवो वासवस्य द्विरुक्तिः।
द्वैतं देवस्य दैत्याधिपमथनकलाकेलिकारस्य कुर्व-
न्नानन्दं कोविदानां जगति विजयते श्रीनृसिंहक्षितीन्द्रः ॥' इति।

अत्र चिन्त्यते—तारानायकशेखरायेति पद्ये गिरिजासङ्गैक-शृङ्गारिणि भवे कविकर्तृका नतिः प्रक्रान्ता। शृङ्गारिता च शेखरादीनि भूषणान्यपेक्षत इति नद्या आरोप्यमाणशेखररूपतयैवोपयोगः, न स्वरूपेण। एवं दृशोऽपि तिलकरूपतयेति रूपकमेव शुद्धं भवितुमर्हति।

ननु परिणामे विषयाभिन्नतया विषय्यवतिष्ठत इत्युक्तम्। प्रकृते च विषयवाचकेभ्यो नद्यादिशब्देभ्यः परस्यास्तृतीयाया अभेदार्थकत्वाच्छेखरादेश्च तदन्वयित्वात् कथं नात्र परिणाम

---

द्विर्भावः● श्रीनृसिंहक्षितीन्द्रः पुष्पकेतोर्द्विर्भावः आवृत्तिः सुजन्तः। विबुधविटपिनां कल्पवृक्षाणां पौनरुक्त्यं पुनर्वचनम्, चिन्तारत्नस्य चिन्तामणेर्विकल्पो द्वितीयरूपम्, तपनतनुभुवः कर्णस्य वीप्सा अव्यभिचारिसम्बन्धः, वासवस्य इन्द्रस्य द्विरुक्तिर्द्विर्वचनम्। दैत्याधिपस्य रावणादेर्मथनकलया क्रीडाकारस्य देवस्य विष्णोर्द्वैतं भेदविशेषः। कोविदानां पण्डितानाम् आनन्दं कुर्वन् जगति विजयते सर्वोत्कर्षेण वर्तते। कोविदानन्दकृत्युत्कर्षौ प्रधानभूतौ।

शृङ्गारिता च● नतिप्रयोजकोत्कर्षाधायिका, तस्यानुपयोगात्। यत्तु शेखरादीनि नमस्यतासम्पादकान्येव, न तु शृङ्गारितोपस्कारकाणि नारायणेनाक्षिणे इत्यस्य शृङ्गारितायामनुपयोगादिति। तत्र ब्रूमः—नारायणेनेत्यादेः शृङ्गारितायामनुपयोगेऽपि अन्येषां भूषणरूपाणां तत्रोपयोगे को बाधकः? नमस्यतासम्पादकताऽपि शृङ्गारितासम्पादकयैव न साक्षात्। एषां भूषणानां शृङ्गारिताया असम्पादकत्वे न तादृशनत्युत्कर्षकता।

ननु नीचजनसाधारणस्य शेखरस्य न स्वातन्त्र्येणोत्कर्षाधायकता, किन्तु नद्यात्मनैव शेखरस्येति परिणाम एवायमिति वाच्यम्, शृङ्गारिताया अपि स्वातन्त्र्येण नोत्कर्षाधायकता नद्यादिप्रयोज्याया विलक्षणाया एवेति कथं

इति चेत्, न; विषयाभिन्नत्वेन विषयिणो ज्ञानेऽपि तेन रूपेण तस्यानुपयोगात्। द्विर्भावः पुष्पकेतोरिति पद्येऽपि कोविदानन्दजनन-जगदुत्कर्षौ कथ्येते राज्ञो नृसिंहस्य। तत्र कोविदानन्दजनकत्वमपि राज्ञ आरोप्यमाणद्वितीयमन्मथादितादूप्येण यथा सम्भवति न तथा केवलस्वरूपेण। तथाहि—अहो नयनानामस्मदीयानां साफल्यं यदयमपरो मन्मथोऽस्माभिरालोक्यत इति मन्यमानानां तेषां नयनानन्दस्तावत्पुष्पकेतुनैवोपपाद्यते, न तु राज्ञा। एवमपरोऽयं कल्पतरुश्चिन्तामणिर्द्वितीयः कर्ण इन्द्रश्च भूगतोऽयमन्यो दारिद्र्यमस्माकं परिहरिष्यति। हरिः खल्वयं संसारं हरिष्यतीत्यभिमानाज्जायमानस्तेषामानन्दोऽप्यारोप्यमाणैः कल्पवृक्षादिभिरेवेति न विषयात्मना विषयिण उपयोगः, अपि तु स्वात्मनैवेति कुत्रास्ति परिणामः ?

अलङ्कारसर्वस्वकारस्तु—'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' इति सूत्रयित्वा 'आरोप्यमाणं रूपके प्रकरणोपयोगित्वाभावात् प्रकृतोपरञ्जकत्वेनैव केवलेनान्वयं भजते। परिणामे तु प्रकृतात्मतयारोप्यमाणस्योपयोग इति प्रकृतमारोप्यमाणतया परिणमति' इति व्याख्यातवान्।

---

नावदधासि। तथा च भूषणानां शृङ्गारितयैव उत्कर्षाधायकता। शृङ्गारितायां च शेखरादीनां स्वात्मनैवोपयोग इति।

मर्मप्रकाशस्तु 'रूपकवैयधिकरण्यस्यैवोदाहरणं दीक्षितेन दत्तम्, अत्र सम्यक् परिणामाभावादस्वरसादेव द्वितीयमुदाहरणं द्विर्भाव इत्यादि ब्रुवन् खण्डितरीत्या परिणाममेव समर्थयति च।

**हरिष्यतीति●** हरतीति हरिरिति व्युत्पत्तिमभ्युपेत्य। **कुत्रास्ति परिणामः●** तथा च परिणामस्येदं नोदाहरणमिति शम्।

**प्रकृतोपरञ्जकत्वे●** प्रकृते विषये तादात्म्यापन्नत्वेनैव। **प्रकृतात्मतया●** विषयात्मतया।

अत्रापि चिन्त्यते— आरोप्यमाणस्य प्रकृतोपयोग इत्यस्य प्रकृतकार्ये उपयोगः, आहोस्वित् प्रकृतविषयात्मतया उपयोगोऽर्थः? न तावदाद्यः,

'दासे कृतागसि भवत्युचितः प्रभूणां
　　पादप्रहार इति सुन्दरि नास्मि दूये।
उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रै-
　　र्यत्खिद्यते तव पदं ननु सा व्यथा मे ॥'

इति त्वदुदाहृतरूपकोदाहरणे आरोप्यमाणानां कण्टकानां प्रकृतखेदव्यथारूपकार्ये उपयोगेनातिप्रसङ्गात्।

न द्वितीयः,

'अथ पक्त्रिमतामुपेयिवद्भिः सरसैर्वक्त्रपथाश्रितैर्वचोभिः।
क्षितिभर्तुरुपायनं चकार प्रथमं तत्परतस्तुरङ्गमाद्यैः ॥'

---

दासे● अनुभूतपादप्रहारस्य सापराधस्य नायकस्य नायिकां प्रत्युक्तिः। नायिकास्पर्शात् पुलकस्य चोद्गमः। हे सुन्दरि दासे त्वदधीने मादृशि कृतागसि कृतापराधे प्रभूणां सौन्दर्यादिगुणैः स्वायत्तीकृतयुवजनानां पादप्रहारो दण्डो भवति स उचितः। अतः अस्मि अहं न दूये। तथापि उद्यन्ति कठोराणि पुलकाङ्कुराण्येव कण्टकाग्राणि तैः अपराधिनो मम कठोरत्वात् पुलकस्य कठोरत्वम्। अतिकोमलत्वाद्यत् तव पदं खिद्यते ननु निश्चयेन सैव मे व्यथा नान्या। तव दुःखादेव दुःखम्। सर्वथाऽपि तव पारवश्यमिति भावः।

नातिप्रसङ्गात्● कण्टकानां खेदजनने पुलकतादात्म्यस्यानपेक्षणाद् नेष्टापत्तिः कर्तुं शक्यत इति भावः।

अथ● पक्त्रिमतां परिपक्वतामुपेयिवद्भिः प्रौढिमापन्नैरिति यावत्। सरसैः शृङ्गारादिध्वनयद्भिः वक्रपथाश्रितैः वचोभिः प्रथममुपायनं चकार। तत्परतः तुरङ्गमाद्यैरुपायनं चकार। अभेदस्य तृतीयार्थतया वचोऽभिन्नं तुरङ्गमाद्यभिन्नमुपायनमित्यादिरर्थः।

इत्यत्र स्वोक्तव्यधिकरणपरिणामोदाहरणासङ्गत्यापत्तेः। यतो राजसङ्घटने ह्युपायनस्यारोप्यमाणस्य स्वात्मनैवोपयोगः, न तु विषयवचोरूपतया। वचसां तु विषयाणामारोप्यमाणोपायनरूपत्वेन परमुपयोग इति प्रत्युत विपरीतम्। तस्मादस्मदुक्तमेव व्यधिकरणपरिणामस्योदाहरणं साधु। इदं तु पुनर्व्यधिकरणरूपकं भवितुमर्हति। तृतीयार्थाभेदोऽपि मीनवतीनयनाभ्यामित्यत्रेव प्रकृत्यर्थानुयोगिको बोध्यः।

केचित्तु "क्वचित् केवलो विषयः स्वात्मना न प्रकृतोपयोगीत्ययमारोप्यमाणाभिन्नतयाऽवतिष्ठते, तत्रारोप्यमाणपरिणामः। यथा—'वदनेनेन्दुना तन्वी शिशिरीकुरुते दृशौ'। अत्र वदनमिन्द्वभिन्नतयाऽवतिष्ठते, केवलस्य वदनस्य दृक्छिशिरीकारकत्वायोगात्। क्वचिच्चारोप्यमाणः स्वात्मना न प्रकृतकार्योपयोगीत्ययं विषयाभिन्नतयाऽवतिष्ठते, तत्र विषयपरिणामः। यथा—'वदनेनेन्दुना तन्वी स्मरतापं विलुम्पति'। अत्रेन्दुर्वदनाभिन्नतयाऽवतिष्ठते, केवलस्येन्दोः स्मरतापापनोदकत्वायोगात्।

---

राजसंघटने● राजसत्कारे राजसत्कारे उपायनस्यावश्यकीयत्वात् वचसामपि उपायनत्वेनैवोपयोगः। तथा चोपमानात्मनोपमेयस्योपयोगाद् रूपकम्।

ननु वचोभिरिति तृतीयया वचसामेवाभेद उपायने, न तूपायनस्याभेदो वचस्सु इति कथं रूपकमित्याशङ्कां समाधत्ते—तृतीयार्थाभेदोऽपि●। बोध्यः● रूपकप्रकरणनिर्दिष्टमीनवतीनयनाभ्यामित्यत्रेव वचोनिष्ठाभेदप्रतियोगि उपायनमित्यादिरीत्या बोधः।

अत्रत्यमर्मप्रकाशगत चिन्त्यमिति वचनं न चिन्तनीयं प्रतिभाति, किन्तूपेक्षणीयमेवेति त्यज्यते।

कियतां परिणामस्थलानामुपमितसमासेन उपमायामन्तर्भावयतां काव्यप्रकाशटीकाकर्तॄणां महेश्वरपञ्चाननभट्टाचार्याणां मतमाह—केचित्तु●।

एवं च परिणामद्वयात्मकमिदं रूपकमेव भवितुमर्हति, विषयतावच्छेदक-विषयितावच्छेदकान्यतरपुरस्कारेण निश्चीयमानविषयिविषयान्यतरत्वस्य तल्लक्षणत्वात्। अत एवोक्तम्—'तद्रूपकमभेदो य उपमानोपमेययोः' इति। तस्मान्न रूपकात् परिणामोऽतिरिच्यते" इति वदन्ति।

अथ बोधः—

हरिनवतमाल इत्यत्र भगवदभिन्नतमाल इति निर्विवादैव धीः। तथा श्रावं श्रावं वचःसुधामित्यत्र विशेषणसमासगतपरिणामे वचनाभिन्नां सुधामिति, पायं पायं वचःसुधामिति रूपके तु वचोनिष्ठाभेदप्रतियोगिनीं सुधामिति बुद्धिः।

एवं च 'वदनेनेन्दुना तन्वी स्मरतापं विलुम्पति' इति व्यस्तपरिणामे 'वदनेनेन्दुना तन्वी शिशिरीकुरुते दृशौ' इति व्यस्तरूपके च बोधवैलक्षण्यम्।

---

विषयतावच्छेदक● विषयतावच्छेदकावच्छिन्ने विषये निश्चीयमानं विषयितादात्म्यम्, एवं विषयितावच्छेदकावच्छिन्ने विषयिणि निश्चीयमानं विषयतादात्म्यमेतदन्यतरवत्त्वं रूपकम्। काव्यप्रकाशस्य प्रमाणमाह—तद्रूपकम्●। तस्मान्न● अभेदमात्रस्य रूपकत्वोक्तेः परिणामस्यालङ्कारान्तरत्वानुक्तेश्च। वदन्तीत्यनेनास्वरसः सूच्यते। सामान्यधर्मप्रयोगे उपमितसमासासम्भवात्, भाष्याब्धिः क्वाति गम्भीर इत्यादावपि रूपकपरिणामयोरन्यतरस्यैव व्यवस्थानात्। केवलं केनचिच्छब्देनानेकेषां संग्रहमात्रेण अन्येषां खण्डनं न जायते, अन्यथा सादृश्यप्रयुक्तचमत्कारित्वेन सर्वेषां सादृश्यमूलकानामभेदापत्तेः।

पायं पायमित्यादि● सुधात्मना वचसः पानकर्मत्वात् सुधाप्रतियोगिकाभेदस्यैव वचसि भानात्।

एवञ्च● रूपके वदननिष्ठाभेदप्रतियोगिनेन्दुना, परिणामे वदनप्रतियोगाभेदवतेन्दुनेत्यादिबोधवैलक्षण्यम्। रूपकपरिणामयोर्निर्वाहकं तु प्रकृतकार्योपयोगानुपयोगौ।

तथा—

'शान्तिमिच्छसि चेदाशु सतां वागमृतं शृणु ।
हृदये धारणाद् यस्य न पुनः खेदसम्भवः ॥'

इति परिणामे, शृण्विति विहाय पिबेति कृते तत्रैव रूपके,

'विद्धा मर्मणि वाग्बाणैर्घूर्णन्ते साधवः खलैः ।
सद्भिर्वचोऽमृतैः सिक्ताः पुनः स्वस्था भवन्ति ते ॥'

इति रूपके च बोधव्यवस्थितिः। तथा 'अहीनचन्द्रा लसताऽऽननेन ज्योत्स्नावती चापि शुचिस्मितेन' इति व्यधिकरणपरिणामेऽभेदस्य तृतीयार्थत्वाल्लसदाननाभिन्नहीनेतरचन्द्रयुक्तेति धीः। मीनवती नयनाभ्यामित्यत्र तु सरसीतादात्म्यारोपो बाधकाभावात् तावत्सिद्धः। तस्य च मीनयोर्नयनाभेदारोपेणासमर्थनान्नयनयोर्मीनाभेदारोपो मृग्यः। स च तृतीयायाः प्रकृत्यर्थाभेदार्थकतायां न सम्भवतीति यथाकथञ्चित् तस्याः प्रकृत्यर्थनिष्ठाभेदप्रतियोगित्वार्थकत्वं वाच्यम्। तेन नयननिष्ठाभेदप्रति-

---

**बोधव्यवस्थितिः●** वागमृतं शृणु इति परिणामे वागभिन्नममृतं रूपके वाङ्निष्ठाभेदप्रतियोग्यमृतम्, परिणामेऽनुयोगित्वमुखमनुयोगिनः प्रधानतासम्पादकम्, रूपके च प्रतियोगित्वमुखं प्रतियोगिनः प्राधान्यसम्पादकम्।

वाग्बाणैरित्यस्य बाणप्रतियोगिकाभेदो वाङ्निष्ठः। एवं वचोनिष्ठाभेदप्रतियोग्यमृतैः सिक्ता इत्यादिरीत्या बोधः।

अयं भावः—वाचामुपयोगो न स्वातन्त्र्येण वेधने, किन्तु बाणतादात्म्यापन्नानामेव। एवं सेकोऽपि न वचसा परममृताभिन्नवचसा। तथा चोपमानाभेदस्योपमेये उपयोगः। **णासमर्थनात्●** सुन्दरीसम्बन्धिनयनयोः सरसीसम्बन्धिमीनयोरारोप एव सुन्दर्यां सरसीतादात्म्यारोपानुगुणः। मीने नयनारोपस्तु सरस्यां सुन्दरीमारोपयेत्। **मीनाभेदा●** मीनप्रतियोगिकाभेदः। **प्रकृत्यर्थाभेदार्थकतायां●** अभेदे प्रकृत्यर्थप्रतियोगिकतायाम्। आरोप्यमाणे मीने विषयनयनप्रतियोगिकाभेदस्यासत्त्वाद् न परिणामः।

योगिमीनयुक्तेति धीः । एवं चारोप्यमाणे विषयप्रतियोगिका-भेदस्याभानान्न परिणामः, अपि तु रूपकमेव । इयमेव सरणिः 'नद्या शेखरिणे दृशा तिलकिने—' इति प्रागुक्ताप्पय्यदीक्षित-दत्तोदाहरणे, 'वचोभिरुपायनं चकार—' इत्यलङ्कारसर्वस्वो-दाहरणे च बोध्या । पुनरारोप्यमाणे यथाकथञ्चिद् विषयाभेद-प्रत्ययमात्रात् परिणामतोच्यते । नाद्रियते च प्रकृतोपयोगस्तदा 'प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम्' इति तदुदा-हृतरूपकस्य परिणामतापत्तिः, प्रेमलतिकामिति समासे प्रेम्णो विषयस्य लतिकायामारोप्यमाणायामभेदेन विशेषणत्वा-दिति दिक् ।

अथ परिणामध्वनिर्विचार्यते । तत्र यत्तावदप्पयदीक्षितैर्विद्या-धरोक्तं ध्वन्युदाहरणमनुद्य दूषितम्, "तथाहि—

'नरसिंह धरानाथ के वयं तव वर्णने ।
अपि राजानमाक्रम्य यशो यस्य विजृम्भते ॥'

---

विशेषणत्वात् ● प्रकृतोपयोगनिवेशे तु लतिकायां प्रेम तादात्म्यस्य प्रकृते उपयोगाभावान्न तथा तादात्म्यारोपः । सेकसम्पादनाय च प्रेम्णि लतिका-तादात्म्यस्यारोपाद् रूपकम् । पूर्णं पद्यं तु—

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्,
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् ।
अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवाम् ॥ इत्यादि ।

मर्मप्रकाशस्तु इत्थमप्यभिदधाति—मीनवती नयनाभ्यामित्यत्र सुन्दर्यां सरसीरूपकमिति तु सत्यम्, परं मीनवत्त्वं साधारणम् । सरस्यां मीनवत्त्वं तु वर्तते एव सुन्दर्यामपि नयनाभ्यां मीनवती कृत्वा नयनाभिन्नमीनवत्त्वं साधारणं सम्पाद्यम् । तत्र च मीनस्य नयनात्मनैवोपयोगात् परिणामो नयनमीनयोः । इति, समर्थकमिदं रूपकं प्रधानरूपकस्य, नयने मीनारोपः सरसीतादात्म्या-रोपस्याङ्गमिति मूलाभिप्रायः ।

अत्र राजपदेन चन्द्रे विषये निर्दिष्टे तत्रारोप्यमाणस्य नृपस्याक्रमणरूपकार्योपयोगिनः प्रतीतेः परिणामो व्यज्यते इति, तदयुक्तम् ; तत्र ह्यारोप्यमाणस्य नृपस्य नृपात्मनैवाक्रमणोपयोगः, न चन्द्रात्मना इति, तदसत् । अत्र विजृम्भणं नाम न केवलं प्रागल्भ्यमात्रं कवेरभिप्रेतम्, येन यशःकर्तृकाक्रमणे नृपस्य नृपात्मनैव कर्मतारूप उपयोगः स्यात्, अपि तु निरतिशयनैर्मल्यगुणवत्तायां स्वसमानजातीयद्वितीयराहित्यप्रयुक्तः प्रौढिविशेषः । आक्रमणं तु न्यग्भाव एव । एवं चैवंविधविजृम्भणे चन्द्रकर्मकमेवाक्रमणमुपयुज्यते, न तु नृपकर्मकमिति विषयितया व्यज्यमानस्यापि नृपस्य चन्द्रात्मनैवाक्रमणोपयोग इति रमणीयमेव विद्याधरेणोक्तं परिणामव्यङ्ग्यतायामुदाहरणम् ।

यद्यपि तैरेव परोक्तिं दूषयित्वा स्वयं परिणामस्य व्यङ्ग्यतायामुक्तम्—

---

**निर्दिष्टे** ● आरोपस्य विशेष्यप्रदर्शकः, न तु शाब्दबोधस्य शाब्दबोधे विषयप्रतियोगिकाभेदभानेन आरोप्यमाणस्यैव विशेष्यत्वात् । **प्रतीतेः** ● यतो हि शुभ्रं कविकुले प्रसिद्धं सजातीयमाक्रामेत, न त्विङ्गालादीन् । तथा च यशःकर्तृकाक्रमणकर्मता नृपस्य शुभ्रचन्द्रात्मनैवेति प्रतीतेरभिप्रायस्तमबुध्वैवाह **तदयुक्तम्** ● ।

**नृपात्मनैव** ● आक्रमणं कस्यचिच्चेतनस्यैव तिरस्काराय जायते, चन्द्राक्रमणेन किं स्यादत आक्रमणे चन्द्रस्य नोपयोग इति भावः ।

विद्याधराभिप्रायमाह—**अत्र** ● । **निरतिशय** ● नैर्मल्यं चन्द्रे, यशसि च तत्र निरतिशयं नैर्मल्यं नृपयशस्येव वर्तते । अतोऽधिकगुणवत्त्वाद् यशसि प्रौढिः । प्रौढिश्चाह **स्वसमान** ● **चन्द्रकर्मकमेव** ● न नृपकर्मकं सादृश्याप्रसिद्धेः ।

यत्तु प्रकरणस्य शक्तिनियामकस्यासम्भवाद् द्वयोर्द्वन्द्ववद्बोधः सर्वदोमाधव इत्यत्रेव श्लेष एवेति तन्न प्रकरणान्नृपेऽर्थे नियन्त्रिते व्यञ्जनया समुपस्थितस्य चन्द्रस्य परिणामे बाधकाभावः । द्वयोरन्वये राजानावित्याद्यापतेत् । तद्वारणे न ब्राह्मणं हन्यादिति दृष्टान्तो मर्मप्रकाशप्रदर्शितो न किञ्चित् साधयति । तत्र

"चिराद् विषहसे तापं चित्त ! चिन्तां परित्यज ।
नन्वस्ति शीतलः शौरेः पादाब्जनखचन्द्रमाः ॥

अत्र चिरतापार्तं प्रति हरिपादनखचन्द्रसद्भावप्रदर्शनेन तमेव निषेवस्व तन्निषेवणादयं तव तापः शान्तिमेष्यतिति परिणामो व्यज्यते" इति, तत्तूच्छम् । 'आरोप्यमाणस्य विषयात्मकत्वेन प्रकृतकार्योपयोगे परिणामः' इति स्वयमेवोक्तम् । तत्र प्रकृतकार्योपयोगमात्रं न परिणामशरीरम्, अपि तु विषयिगतायाः प्रकृतकार्योपयोगिताया अवच्छेदकीभूतं विषयताद्रूप्यम् । एवं चात्र नखचन्द्रसद्भावप्रदर्शनेन तन्निषेवणादयं तव तापः शान्तिमेष्यतीति प्रकृतोपयोगिताया व्यङ्ग्यत्वेपि तदवच्छेदकीभूतस्य विषयिणि विषयताद्रूप्यरूपस्य परिणामस्य वाक्यवाच्यत्वात् शक्यसंसर्गत्वाद्वा सर्वथैव न व्यङ्ग्यत्वं वक्तुमुचितम् ।

---

ब्राह्मणत्वं जातिरन्वयितावच्छेदिका सर्वब्राह्मणवृत्तिरेका नृपचन्द्रवृति न किञ्चिदेकमन्वयितावच्छेदकम् ।

चिराद् । हे चित्त चिरात्तापं विषहसे तापमूलां चिन्तां परित्यज ।

कुतस्तापनिवृत्तिरित्याह नन्वस्ति● यद्यपि तापशमनं चन्द्रात्प्रसिद्धं परं चिरतापार्तस्य संसाररूपतापस्य शमनं चन्द्रेण न सम्भवति किन्तु भगवच्चरणनखात्मना चन्द्रेण सेत्स्यतीति विषयिणि चन्द्रे विषयस्य नखस्याभेदः परिणामः । व्यङ्ग्यमंशं दर्शयति तमेवेत्यादीतीत्यन्तः ।

विषयिणि विषयात्मकत्वलक्षणवाच्यत्वात् सम्पूर्णस्य परिणामस्य ध्वनित्वोक्तिरसङ्गता किन्तु तदंशस्य तावतो वस्तुमात्रस्य वा ध्वनित्वं वक्तुमुचितमित्याशयेनाह तत्तुच्छम्● । अवच्छेदकीभूतम्● विषयी विषयतादात्म्यविशिष्टः प्रकृतकार्योपयोगी उपयोगिता तादृशे विषयिणि उपयोगितावच्छेदकं विषयतादात्म्यम् । वाक्यवाच्यत्वात्● वाक्यार्थः पदार्थसंसर्गः । पदे पदार्थनिरूपिता वाक्ये च वाक्यार्थनिरूपिता शक्तिरिति वैयाकरणानां मतम् । नैयायिकमते यद्यपि पदार्थसंसर्गो न वाच्यः, किन्तु आकाङ्क्षाभास्यस्तथापि

इदं तूदाहरणं युक्तम्—

'इन्दुना परसौन्दर्यसिन्धुना बन्धुना विना।
ममायं विषमस्तापः केन वा शमयिष्यते ॥'

अत्र वक्तुर्विरहितया व्यज्यमानरमणीवदनाभिन्नत्वेनेन्दुरभिप्रेतः। तेन रूपेणैव तस्य प्रकृतविरहसन्तापशमनहेतुत्वात्।

---

वाच्यवद् वाच्यसंसर्गोऽपि न ध्वनिः। तस्य ध्वनित्वाङ्गीकारे वाक्यगयोः समस्तयोर्वा समानाधिकरणयो रूपकं कुत्रापि वाच्यं न स्यात्, प्राधान्यये ध्वनितापत्तिश्च। इत्यभिप्रायेण सर्वथैव शक्यसंसर्गत्वाद्वेत्याद्युक्तम्। नेत्यस्य वक्तुमित्यत्रान्वयः। किन्त्वांशिकमिति भावः। चमत्कारातिशयस्यैव ध्वनित्वप्रयोजकत्वात्। चमत्कारातिशयश्च सर्वथैव वाच्यवृत्त्यनालिङ्गने इति शयिता सविधे इत्याद्युदाहरणे निपुणं विवेचितं पण्डितराजैरित्यनुसन्धातव्यम्।

यत्तु अलङ्कारकौस्तुभे—

धन्यासि या कथयति प्रियसङ्गमेऽपि विश्रब्धचाटुकशतानि रतान्तरेषु।
नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किञ्चिदपि स्मरामि।

इति पद्ये काव्यप्रकाशटीकायां त्वमधन्येत्यंशस्य लक्ष्यत्वेऽप्यहं धन्येत्यंशस्य व्यङ्ग्यत्वाद् ग्रन्थे व्यतिरेकालङ्कारो व्यज्यते इत्युक्त्यांशिकव्यङ्ग्यत्वेऽपि ध्वनित्वव्यवहार इति तदपि तुच्छमेव। उद्द्योतेऽशद्वयस्यापि व्यङ्ग्यत्वं स्फुटमुक्तम्। विषयिणि विषयताद्रूप्यं न परिणामशरीरमपि तु तदात्मना कार्योपयोगमात्रमिति तेषां कथनमतिसाहसम्, तत्र किं ब्रूमहे।

इन्दुना● इन्दुना केवलेन उत्कृष्टसौन्दर्यसागरेण बन्धुना सहायकेन विना केन प्रकारेण केन सहायेन विना वा मम अयं तापः शमयिष्यते। मुखेन्द्वोः सामानाधिकरण्येनानिर्देशात् ताद्रूप्यं सर्वथैव वाच्यवृत्त्यनालिङ्गितम्। वदनेन्दुर्मम तापममुं विरहजन्यमवश्यं शमिष्यतीति व्यङ्ग्यशरीरम्। एतेन उत्तरार्धस्य तथापि वाच्यतेति कौस्तुभोक्तिः खण्डिता। शक्त्या लक्षणया वा व्यङ्ग्यार्थस्यास्पृष्टत्वात्।

ननु विषयो न निर्दिष्टोऽतः कस्याभेदो विषयिणि भासतामित्याशङ्क्याह वक्तुर्विरहितया●। रूपेणैव● इन्दुना तापशमनेऽपि विरहतापशमनं

न चात्र विषयनिगरणात्मिकातिशयोक्तिर्वक्तुं शक्या, तस्यां ह्यारोप्यमाणाभिन्नत्वेन विषयस्य प्रत्ययात्। यथा 'कमलं कनकलतायाम्' इत्यादौ कनकलताऽभिन्नायां वनितायां कमलाभिन्नं मुखमिति।

इह तु मुखस्य चन्द्राभिन्नत्वेन प्रत्यये न पुनर्विरहतापशमनरूपप्रकृतकार्यसिद्धिरिति चन्द्रस्यारोप्यमाणस्य मुखरूपविषयाभिन्नत्वं मृग्यम्। तच्च व्यङ्ग्यतायामेव भवतीति परिणामध्वनिरेवायम्, नातिशयोक्तिः।

अयं त्वर्थशक्तिमूलः।

शब्दशक्तिमूलपरिणामध्वनिर्यथा —

'पान्थ मन्दमते किं वा सन्तापमनुविन्दसि।
पयोधरं समाशास्व येन शान्तिमवाप्नुयाः॥'

---

वदनतादात्म्यं विना नोपपद्यते। विषयनिगरण● वदनरूपस्य विषयस्याप्रयोगात्

नन्वत्रापि विषये मुखे एवेन्दुतादात्म्यमेवास्त्विति चेदत्राह इह तु●। मृग्यम्● मुखं विषयतया व्यञ्जनीयम्। मुखप्रतियोगिकाभेदश्च चन्द्रेऽवभासनीयः। अर्थवशात्प्रसृतया शब्दानां परिवृत्तिसहतया च व्यञ्जनया प्रतिपादनादर्थशक्तिमूल इति●।

पान्थ● हे मन्दमते! पान्थ ! मन्दमतित्वं वचनं विना चेष्टया भावानवबोधात्। पान्थत्वेन विरहः सूच्यते। किं वा किमर्थं सन्तापं ग्रीष्मसंतापं वाच्यं विरहतापो व्यङ्ग्यः। अनुविन्दसि लभसे। पयोधरं मेघं प्रतीक्षस्व। स्तनं दृष्ट्वा आश्वासनं कुरु। मेघस्य तापशामकत्वेन प्रसिद्धतया मेघ उपतिष्ठते। परं कान्तया बोधनीयोऽयं मन्दो विरहसन्तापवानिति सहृदयो यदैव जानाति तदैव स्तनरूपोऽप्यर्थोऽभिप्रेत इति वक्तृबोधव्यवैशिष्ट्यात् सहृदयो जानात्येव। तदा साधारणतया तापशामकत्व मेघे वर्ततां नाम, किन्तु विरहितापशमनं स्तनरूपेणैव मेघेनेति परिणामो व्यज्यते। केवलेन मेघेनोद्दीपकत्वात् ताप एव विरहिणां जायेत। सहृदयस्य व्यञ्जनोद्बोधकं मन्दपदमिति पयोधरस्य परिवृत्त्यसहतया च शब्दशक्तिमूलेत्युच्यते। अलङ्कार-

अत्र झगिति तापशमहेतुत्वेनोपस्थिते पश्चान्मन्द-(मति-पद)-बोधनीयविशेष्यकस्मरतापवत्तावैशिष्ट्यबुद्धौ सत्यां सहृदयस्य तादृशतापशमकरमणीस्तनरूपविषयताद्रूप्यबुद्धिर्भवति ।

दोषाश्चात्रापि पूर्ववदुन्नेयाः ।

इति रसगङ्गाधरे परिणामालङ्कारप्रकरणं समाप्तम् ।

**अथ ससन्देहः—**

**सादृश्यमूला भासमानविरोधका समबला नानाकोट्यवगाहिनो धी रमणीया ससन्देहालङ्कृतिः ।**

---

कौस्तुभकारस्तु पयोधरशब्दवाच्ययोरभेदान्वयान्नायं ध्वनिरिति प्राह, परं नासौ जानाति यत् प्रकरणान्मेघेऽर्थे निर्णीते स्तनरूपस्यार्थस्य शक्त्या बोधो न जायते किन्तु व्यक्त्येति। अन्यथा नैव वदेत्। पण्डितराजस्य कृतौ स्थूलदृष्टय एवाक्षिपन्ति तदुचितमेवेति। दोषाश्च● लिङ्गवचनभेदादयो रूपकवद् बोध्याः।

॥ इति परिणामालङ्कारप्रकरणम् ॥

अथ ससंदेहालङ्कारनिरूपणम्

सादृश्यमूलकत्वादेव प्रसङ्गादाह अथ●संदेहमात्रस्थालङ्कृतित्वेऽपि प्रसिद्ध्यनुरोधेन ससंदेहशब्दो भ्रान्तिवदौपचारिकः। केचन अनेकसंदेहस्थले एकस्य संदेहस्यान्येन संदेहेन सह वर्तमानत्वात्तन्मूलकोऽयं ससंदेहशब्द इति व्याचक्षते। **सादृश्यमूला●** सादृश्यञ्च प्रसिद्धयोरेवेति उपमानोपमेययोरेव संशयोऽलङ्कार इति भावः। स च अन्यधर्मिक उपमानोपमेयकोटिकः। उपमानधर्मिक उपमेयतदभावकोटिकः। उपमेयधर्मिक उपमानतदभावकोटिकः। उपमानधर्मिक उपमेयतावच्छेदकतदभावकोटिकः। उपमेयधर्मिक उपमानतावच्छेदकतदभावकोटिकश्चानेकविधः सम्भवति। **भासमानविरोधका●** भासमानो विषययोर्विरोधो यस्यां सा विरोधविषयिणीति यावत्। अस्य चन्द्रिकाया व्याख्यानं तत्कर्तुर्वैयाकरणत्व निन्दति सिद्धान्तकौमुदीमूलस्यापि व्युत्पत्तिं निषेधति, बहुपरिव्राजका नगरीवद् बोध्यम्। अत्र विषये मतद्वयम्। संशयं प्रति विरुद्धकोटिद्वयोपस्थित्योः कारणत्वमतोऽविरुद्धकोटिकः संशयो न

'अधिरोप्य हरस्य हन्त चापं परितापं प्रशमय्य बान्धवानाम् ।
परिणेष्यति वा न वा युवाऽयं निरपायं मिथिलाधिनाथपुत्रीम्॥'

अत्र मिथिलास्थजनोक्तौ तच्चिन्ताभिव्यञ्जके संशयमात्रेऽति-व्याप्तिवारणाय सादृश्यमूलेति । सादृश्यज्ञानरूपदोषजन्ये-त्यर्थः । तेन 'सिंहवत् प्रान्तरं गच्छ गृहं सेवस्व वा श्ववत्' इत्युपमाविकल्पे वाकारप्रतीतविरोधकप्रान्तरगमनगृहसेवन-रूपनानाधर्मावगाहिनि सादृश्यविषयकेऽपि नातिप्रसङ्गः । तस्य सादृश्यज्ञानरूपत्वात् । मालारूपकातिप्रसङ्गवारणाय भासमानविरोधकेति । उत्प्रेक्षाव्यावृत्तये समबलेति समानभासक-सामग्रीत्वार्थकम् । एतद्विशेषणद्वयप्राप्तस्यैवानेकत्वस्य स्फुटत्वार्थं नानेति । स्थाणुर्वा पुरुषो वेति लौकिकसंशयनिवृत्तये रमणी-येति, चमत्कारिणीत्यर्थः । एतच्च विशेषणं सामान्यालङ्कार-

---

जायते । संशये कोटिविशेषणतया विरोधस्य विषयतायां मानाभावस्तन्मतानु-सारेण यद्वेत्यग्रिमो निष्कर्षः । कारणे विरोधभाने कार्येऽपि संशये विरोधो विषय इति मतानुसारेणायं निवेशः । अन्येषां सपदकृत्यं व्याख्यानं स्वयमेव करोति ।

**अधिरोप्य●** हन्त अयं युवा रामचन्द्रः हरस्य चापमुनमय्य बान्धवानां विश्वामित्रादीनां तापं परिशमय्य निरपायं यथा स्यात्तथा मिथिलाधिनाथपुत्रीं जानकीं परिणेष्यति वा न वा ।

प्रशमय्येत्यत्र ल्यपि लघुपूर्वादित्यनेन णेरयादेशः । **संशयमात्रे●** साधारणे सादृश्यामूलके । संशयस्याप्रमाविशेषत्वादप्रमां प्रति दोषस्य **कारणत्वादाह दोषजन्ये●** ननु पूर्वातिव्याप्तेः सादृश्यविषयिणी धीरिति कथनेनैव वारणात् कथमेतावान् प्रयास इत्याशङ्क्य सादृश्यविषयिण्या अपि **व्यावर्तनीयतामाह तेन●** वानिपातस्य विरोधद्योतकतामाश्रित्याह **प्रतीतविरोध●** । माला-रूपकधर्मस्यात्माभागधेयं क्षमाया इत्यादि पूर्वोक्तपद्ये ।

**समबलेति●** समं बलं कोटिद्वयभासिका सामग्री यस्या धियः

लक्षणप्राप्तमेव। एवमुपस्कारकत्वमपि बोध्यम्। एतद्विशेषण-द्वयस्य सादृश्यमूलत्वस्य चाभावे संशयमात्रमेव।

यद्वा 'सादृश्यहेतुका निश्चयसम्भावनान्यतरभिन्ना धी रमणीया संशयालङ्कृतिः'।

सा च शुद्धा निश्चयगर्भा निश्चयान्ता चेति त्रिविधा।

आद्या यथा—

---

उत्प्रेक्षायाश्च विधेयकोटाविच्छावशादुत्कटा सामग्री। **द्वयस्य●** रमणीयत्वो-पस्कारकत्वयोः। **मात्रमेव●** नालङ्कारत्वमित्यर्थः। लाघवमनुसृत्याह **यद्वा●** निश्चयभेदनिवेशाद् रूपकस्य व्यावृत्तिः, सम्भावनभेदनिवेशाच्चो-त्प्रेक्षायाः। अत्रत्या सम्भावना तु उत्कटान्यतरकोटिकसंशय एव। पूर्वं मया लक्षितस्य सम्भावनाज्ञानस्य निश्चयरूपत्वात्। उत्कटत्वञ्चेच्छाविषयता-विशेषः प्राय एवमेव भवेदित्यादिप्रतीतिसाक्षिकः। निश्चयसम्भावनोभयभेद-निवेशे घटो न घटपटावित्यादिवदुभयभेदस्य प्रत्येकं सत्त्वादतिव्याप्तिः। प्रतियोग्यवृत्तित्वस्य भेदविशेषणत्वे तदीयपरिष्कारे च गौरवादन्यतरभेदस्य निवेशः। ननु निश्चयसम्भावनाऽन्यतरत्वमपि निश्चयभिन्नत्वे सति सम्भावना-भिन्नं यत्तद्भिन्नत्वमिति गौरवमेवेति न वाच्यम्। अवच्छेदकत्वनिरुक्ति-जागदीशीरीत्या अन्यतरत्वादेरखण्डोपाधित्वात्। सखण्डत्वे तु निश्चयभेद-विशिष्टसम्भावनाभेद इत्यादिरीत्या द्रष्टव्यम्।

**शुद्धा●** निश्चयासंस्पृष्टाः। **निश्चयगर्भाः●** संशयानन्तरं निश्चये पुनः संशयः सा संशयधीः। यत्र उपमेयतावच्छेदकाभावव्याप्यस्य धर्मस्य निर्देशस्तत्रैषा। यथा तरणितनयेति पद्ये रघुपतिकायच्छाया उपमेया। उपमेयतावच्छेदकं रघुपतिकायच्छायात्वं गङ्गाजले नास्ति तत्र तोयमयीत्वं वर्ततेऽतस्तोयमयीत्वस्य निर्देशेऽपि पुनः संशयः। यत्र तु उपमेयतावच्छेदक-व्याप्यस्य निर्देशस्तत्र न पुनः संशयः सैव तृतीया। यथा गुरुनिश्वासो वियोगिनीत्वव्याप्यस्तज्ज्ञानान्तरं वियोगिन्या निश्चय एव जायते न संशयो जागर्तीति निश्चयान्ता सा।

'मरकतमणिमेदिनीधरो वा तरुणतरस्तरुरेष वा तमालः ।
रघुपतिमवलोक्य तत्र दूरादृषिनिकरैरिति संशयः प्रपेदे ॥'

द्वितीया यथा—

'तरणितनया किं स्यादेषा न तोयमयी हि सा
मरकतमणिज्योत्स्ना वा स्यान्न सा मधुरा कुतः ।
इति रघुपतेः कायच्छायाविलोकनकौतुकै-
र्वनवसतिभिः कैः कैरादौ न सन्दिदिहे जनैः ॥'

तृतीया यथा—

'चपला जलदाच्च्युता लता वा तरुमुख्यादिति संशये निमग्नः ।
गुरुनिःश्वसितैः कपिर्मनीषी निरणैषीदथ तां वियोगिनीति ॥'

---

**मरकत●** श्रीरामस्य वनगमनसमये ऋषेरवलोकनम् । एत्र रामो मरकतमणेः पर्वतः, तरुणतरस्तमालस्तरुर्वा इति संशयः ।

**ऋषिनिकरैः●** ऋषिसमूहैः **प्रपेदे●** प्राप्तः **तरणितनया●** श्रीरामस्य वनगमनवर्णनमिदमपि । एषा रघुपतेः कायच्छाया तरणितनया श्यामतया सूर्यतनया यमुना किं स्यादिति संशयः । तस्य व्यावृत्तिर्यतः सा यमुना तोयमयी जलस्वरूपा इयं तु न तादृशी । पुनः प्रकाशसाधर्म्यात् मरकतमणिज्योत्स्ना वा स्यादिति संशयः । तस्यापि निवारणम्, सा—ज्योत्स्ना उपलसम्बन्धात् कुतो मधुरा । कायच्छाया तु मधुरा । अत्र मध्ये संशयव्यावर्तकनिश्चयस्य प्रवेशात् निश्चयगर्भता । प्रसङ्गमस्य संशयस्याह इति संदिदिहे । दिहो धातोः परोक्षे रूपम् । संशयं प्रापुः । कर्तुराङ्काक्षायामाह रघुपते रामस्य शरीरशोभाया विलोकने समुत्सुकैः कैः कैः ( अर्थात् ) सर्वैः वनवसतिभिर्वनवासैर्जनैः न संदिदिहे । सर्वैः संदिदिह इत्यर्थः ।

**चपला●** हृतायाः सीतायाः वनवाटिकायां हनुमताऽवलोकनम् । जलदात् च्युता चपला तरुमुख्यात् च्युता लता वा इति संशये निमग्नः मनीषी बुद्धिमान् कपिः अथ-अनन्तरं गुरुभिः निश्वासैः तां सीतां वियोगिनी इति वियोगिनीतया सीतेति निरणैषीत् निर्णयं कृतवान् । अन्ते निश्चयसत्त्वात् निश्चयान्तस्योदाहरणम् । एषूदाहरणेषु संशयैरुपस्कार्यस्याप्रतीतेः संशयाना-मुपस्कारकत्वलक्षणापेक्षोपस्कार्यत्वाभावाद् गौणमलङ्कारव्यवहारं दर्शयति ।

एषु संशयेषु मञ्जूषादिगतकटकादिष्विवालङ्कारव्यपदेशः।
एवं च—

'तं दृष्टवान् प्रथममद्भुतधैर्यवीर्य-
गाम्भीर्यमक्षणविमुक्तसमीपजानिम्।
वीक्ष्याथ दीनमबलाविरहव्यथार्तं
रामो न वाऽयमिति संशयमाप लोकः॥'

इत्यत्र सत्यपि चमत्कारे सादृश्यमूलत्वाभावान्न संशयस्यालङ्कारत्वम्।

एवमारोपमूलोऽयं सन्देहालङ्कारः।
अध्यवसानमूलोऽपि दृश्यते। यथा—

'सिन्दूरैः परिपूरितं किमथवा लाक्षारसैः क्षालितं
लिप्तं वा किमु कुङ्कुमद्रवभरैरेतन्महीमण्डलम्।
सन्देहं जनयन्नृणामिति परित्रातत्रिलोकस्त्विषां
व्रातः प्रातरुपातनोतु भवतां भव्यानि भासां निधेः॥'

---

**एषु●** यथा मञ्जूषागताः कटकादयो न नायिकामलङ्कुर्वन्ति, किन्तु अलङ्करणस्वरूपयोग्यतया अलङ्कारव्यपदेशं भजन्ते, तथैव एष्वपि उपस्कारकत्वयोग्यतया अलङ्कारत्वव्यपदेशः। उपस्कारकोऽपि सादृश्यमूलक एव संशयोऽलङ्कारो नान्यमूलक इति विप्रलम्भरतिपोषकमपि असादृश्यमूलमनलङ्कारं संशयमुदाहरति **तं दृष्टवान्●** विरहिणो रामस्य वर्णनम्। अथ लोकः रामो न वेति संशयमाप। धर्मभेदाद् धर्मिभेदशङ्का। कीदृशो लोक इति चेत् प्रथमम् अद्भुतानि धैर्यवीर्यगाम्भीर्याणि यस्य तं तथा न क्षणं विमुक्ता समीपे जाया येन तं रामं पूर्वं दृष्टवान्। विरुद्धधर्मं प्रथमस्याह दीनम्। द्वितीयस्य विरुद्धधर्मः, अबलाविरहस्य व्यथया आर्तं सीतापहरणोत्तरं वीक्ष्य संशयमाप।

**सादृश्यमूलत्वा●** किन्तु विरुद्धधर्मदर्शनात्। **एवम्●** पुनः संक्षेपेणायं संशयालङ्कारो द्विविधः—आरोपमूलः साध्यावसानमूलश्च। पूर्वोक्तमुदाहरणन्तु विषयविषयिणोरुपादानादारोपमूलम्। अग्रिमस्य साध्यावसानत्वं मूले स्फुटीभविष्यति। **सिन्दुरैः●** इति ईदृशं नृणां संदेहं जनयन् परित्रातत्रिलोकः भासां निधेः सूर्यस्य त्विषां व्रातः प्रातः भवतां भव्यानि उपातनोतु

अयं च संशयः सवितृविषयकविरतिपरिपोषकतया कामिनीकरगतकङ्कणादिरिव मुख्यतयाऽलङ्कृतिव्यपदेश्यः। अत्र च विवक्षितविवेचने क्रियमाणे किरणव्राते सिन्दूरत्वादि-कोटिकः संशयः पर्यवस्यति। स च न सारोपः, विषय-विषयिणोस्तदनुकूलविभक्तेरभावात्। अतः सिन्दूरत्वादिना संशयधर्मी किरणव्रातोऽध्यवसीयत इति। अत्र विचार्यते-सिन्दूरैः परिपूरितं किमथवेति पद्ये तावत्सिन्दूरादिकरणकपरिपूरित-त्वादिकोटिको जगन्मण्डलधर्मिकः संशयः शब्दात्प्रतीयते। तस्मिंश्च संशये किमिदं सिन्दूररजो वा स्यात्, आहोस्विल्लाक्षारसः, उताहो कुङ्कुमद्रव इति सूर्यकिरणधर्मिकं संशयान्तरमानुगुण्य-माधत्ते। यथा पुरोवर्तिनि तुरगे स्थाणुर्वा पुरुषो वेति संशयो भूतलमिदं स्थाणुमत्पुरुषवद्वेति संशये। एवञ्च सूर्यकिरणधर्मिकः

---

विस्तारयतु। पूर्वार्धोपात्तः संदेहाकारस्तु एतद् महीमण्डलं धर्मि सिन्दूरैः परि-पूरितम् अथवा लाक्षारसैः क्षालितं किमु कुङ्कुमद्रवभरैः क्षिप्तम्? उपस्कारकत्वं दर्शयति अयम् ● विवक्षितविवेचने ● तात्पर्यार्थान्वेषणे किरणव्रातेन व्याप्ते महीमण्डले सिन्दूरपरिपूरितत्वज्ञानं किरणव्राते सिन्दूरारोपमाक्षिपतीत्यर्थः। तथा च किरणव्रातः सिन्दूराणि किं? लाक्षारसो वा? कुङ्कुमद्रवो वा? इति संशये तात्पर्यमवसीयते। परं तादृशं समानविभक्तिकं नोपात्तम्, अतः साध्या-वसान इत्याह अध्यवसीयते ● इदञ्च विमर्शिनीकारमतं स्वमतमाह, अत्र विचार्य्यते ● महीमण्डले सिन्दूरादिपरिपूरितादिसंशयो वाच्यस्तस्योपपादकः किरणव्राते सिन्दूरत्वादेः संशयो गुणीभूतः। गुणीभूतश्च संशयो व्यञ्जनागम्यो व्यञ्जनाजन्यबोधे च न समानविभक्तित्वादिकं तन्त्रमिति समानविभक्तिं विनापि सारोप एव। इति सरलार्थः। संशये एको विशेष्यो भवति तस्य धर्मीति नाम। ययोर्द्वयोः संशयो जायते तौ कोटिशब्देन उच्येते। यथा महीमण्डलं सिन्दूरैः परिपूरितमथवा लाक्षारसैः क्षालितमिति संशयो महीमण्डलधर्मिकस्ता-दृशपूरितत्वकोटिको लाक्षारसक्षालितत्वकोटिकश्चोच्यते।

संशयो गुणीभूतो व्यञ्जनागम्यत्वाद्विषयविषयिणोरारोपानुकूल-विभक्तिकतां नापेक्षते। अपेक्षते च साक्षाच्छब्दवेद्यतायामिति कुत्राध्यवसानमूलता संशयस्य ? एतेनाध्यवसानमूलतां संशयस्य निरूपयतो विमर्शिनीकारस्योक्तिरपास्ता।

अप्पयदीक्षितास्तु—

'अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं स विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः॥'

---

अपास्ता● अत्रालङ्कारकौस्तुभकृतः। तच्चिन्त्यम्। मानससंशयेऽपि धर्मिणः इदन्त्वेनैवोपस्थितेः। सूर्यकिरणत्वस्य संशये विशेष्यतावच्छेदकत्वेना-भानात् सूर्यकिरणत्वं धर्मितावच्छेदकीकृत्याभेदससर्गकसिन्दूरादिप्रकारकसंदेह-स्यासंभवात्। तथा च प्राचामुक्तिः रमणीयैव—इति वदन्ति। अयमत्र सरलार्थः सम्भाव्यते। स्थाणुः पुरुषो न वेति सशयो न जायते किन्तु अयं पुरुषो न वेत्याकारकः। धर्मिणस्स्थाणुत्वेन ज्ञाने पुरुषसंशयासंभवात्। इदन्त्वेन ज्ञाने तु पुरुषसंशयो जायते। तथैव त्विषां व्रातः सिन्दूरो न वा इति संशयो न भवितुमर्हति, किन्तु अय सिन्दूरो न वेत्याकारकः। तथा च इदन्त्वेन त्विषां व्रातस्यारोपेऽपि त्विषां व्रातत्वेनाध्यवसानं दुर्वारमेवेति। परमिदमपि चिन्तनीयम्। त्विषां व्रातः सिन्दूरो न वेति संशयाकारस्य ग्रन्थकृताऽनुक्तत्वेन अयं सिन्दूरो न वेति संशये तात्पर्यस्य वर्णयितुं शक्यत्वात्। न च तदानीमप्य-ध्यवसानस्यावसरः प्रयोज्यसंशये त्विषां व्रातत्वेनोपादानात्। वस्तुतो व्यञ्जना-गम्यत्वस्य ग्रन्थकृता स्फुटमुक्तत्वेन संशयस्य शाब्दत्वात् मानसत्ववर्णनं भ्रम एव। व्यञ्जनामाहात्म्यस्य त्विषां व्रातः सिन्दूरो न वेति संशयसम्पादनं न दुःशकमिति विवेचयन्तु तद्विदः। अस्याः● विक्रमोर्वशीये प्रथमेऽङ्के पुरुरवसा उर्वशीवर्णनम्। अस्या उर्वश्याः सर्गविधौ निर्माणे प्रजापतिः स्रष्टा कान्तिप्रदः चन्द्रः किं ? सर्वत्र नुनिपातः शङ्काद्योतनार्थः। शृङ्गारैकरसः स्वयं मदनः

इत्यत्र चन्द्रादीनां सन्देहधर्मिणामेवानेकत्वम् । प्रकारस्तु वर्णनीयवनितास्रष्टृत्वमेकमेवेत्यनेककोटिकत्वाभावाद्विरोधेन परस्परप्रतिक्षेपकतया निबद्धानेककोट्यवगाहित्वरूपस्य संशयलक्षणस्याव्याप्तिमाहुः, तन्न; अत्र हि अस्याः सर्गविधौ यः प्रजापतिरभूत् स किं चन्द्रः, किं नु मदनः, किं वा नु वसन्त इति संशयः प्रजापतिधर्मिकश्चन्द्रत्वादिनानाकोटिक एवेति कुत्राव्याप्तिः ? न चात्र चन्द्रादिधर्मिकः संशयो युक्तो वक्तुम् । एवं च प्रजापतेः प्रथमोद्देशो न स्यात् ।

---

प्रजापतिः किम् ? पुष्पाकरोमासो वसन्तस्य चैत्रमासः प्रजापतिः किम् ? दीक्षितमते चन्द्रे प्रजापतित्वसंदेहः कामे प्रजापतित्वसंदेह एवं चैत्रेऽपि । ग्रन्थकारमते प्रजापतौ चन्द्रत्वादिसंदेह इति ध्येयम् । प्रसिद्धोब्रह्मा प्रजापतिः कथं नेत्याह वेदाभासजडः विषयेभ्यो व्यावृत्तं कौतुहलं यस्य निर्विषयी श्रृङ्गारानभिज्ञः । तत्रापि पुराणो वृद्धो मननशीलः । इदं मनोहरं रूपं कथं निर्मातुं प्रभवेत् । **नेकत्वम्** ● चन्द्रमदनवसन्ता धर्मिणः । **प्रकारस्तु** ● प्रजापतित्वमेकमेव कोटिः । संशयलक्षणञ्च एकधर्मिकं परस्परविरुद्धानेककोटि-(प्रकार) कं ज्ञानम् । **परस्पर** ● परस्परस्य विरोधितया । न केवलमव्याप्तेर्निरसनमेव किन्त्वसम्भव एवाव्याप्तेः । अयं स्थाणुर्वेत्यादौ संशये धर्मिणः प्रथममुपादानादत्र च प्रजापतेः प्रथमोपात्तस्य धर्मित्वेन चन्द्रादेर्धर्मित्वायोगादित्याह न **चात्र** ● अत्र जयरामभट्टाचार्याः । भावाभावकोटिकमेव संशयज्ञानं न तु अनेककोटिकम् । अयं स्थाणुर्वा पुरुषो वेति नैकः संशयः किन्तु स्थाणुत्वतदभावादिकोटिकं संशयद्वयमेव । एवंविधसंशयोत्तरं स्थाणुर्न वेति भावाभावकोटिकस्य संशयान्तरस्याननुभवात् ।

अतोऽस्यैव तत्कोटिकत्वमतश्चन्द्रो निर्माता न वेति त्रयः संशया अत्रेति वदन्ति । युक्तश्चैतदन्यथा एकसंशयत्वे भेदानुक्तिसमीहया काव्यप्रकाशोदाहरणं न सङ्गच्छेत । किन्तु प्रजापतेः प्रथमोपात्तस्योद्देश्यत्वात् प्रजापतिर्निर्माता न वेत्याकार एव भट्टाचार्यैर्वक्तव्यमासीत् । उद्द्योते च प्रजापतिधार्मिक एव संशय उक्तः ।

यदपि, 'साम्यादप्रकृतार्थस्य या धीरनवधारणा' इति प्राचां लक्षणं महता प्रबन्धेन त एव दूषितवन्तः, तदपि न। साम्यनिमित्ता निश्चयसम्भावनान्यतरभिन्ना या धीरिति तदर्थकरणे दोषाभावात्। निश्चयत्वं तु संशयाघटितमेव निर्वचनीयम्।

उक्तेषूदाहरणेषु सोऽयं संशयालङ्कारः स्वशब्दवेद्यत्वाद्वाच्यः।

लक्ष्यो यथा—

'साम्राज्यलक्ष्मीरियमृष्यकेतोः सौन्दर्यसृष्टेरधिदेवता वा।
रामस्य रामामवलोक्य लोकैरिति स्म दोला रुरुहे तदानीम्॥'

अत्र पर्यायेणोभयकोटयालम्बनतया दोलासादृश्यात् संशयोऽत्र दोलाशब्देन लक्ष्यते।

---

नानासंशयेऽपि अयं ग्रन्थः सुयुज्यत इत्यलमतिविस्तरेण। साम्याद● सादृश्यज्ञानजन्या या अर्थस्य धीः सा अनवधारणा संशय इत्यर्थः। दूषितवन्तः सादृश्यज्ञानजन्ये निश्चये सम्भावनायाञ्चातिव्याप्तेः। साम्यनिमित्त● साम्यनिमित्ता निश्चयसम्भावनान्यतरभिन्ना या धीः सा संशय इत्यर्थः। ननु संशयान्यज्ञानस्य निश्चयत्वात् संशयलक्षणेऽपि निश्चयभेदविशेषणेऽन्योन्याश्रय इत्याशङ्क्याह निश्चयत्वन्तु● अवधारयामीति प्रतीतिसाक्षिको जातिविशेष उपाधिर्वा। अथवा प्रकारताविशिष्टविशेष्यताकत्वं निर्वचनीयम्। वैशिष्ट्यञ्च स्वनिरूपितत्वस्वविरोधिप्रकारतानिरूपित्वाभाववत्त्वोभाभ्यां सम्बन्धाभ्याम्। स्वविरोधित्वञ्च स्वावच्छिन्नप्रतिवध्यतानिरूपितप्रतिवन्धकतावच्छेदकत्वम्। विस्तरस्तु पक्षतासत्प्रतिपक्षक्रोडपत्रादिषु अवलोकनीयः। साम्राज्य● सीताया वर्णनम्। लोकैः रामस्य रामामवलोक्य तदानीम् इति इत्थं दोलापदलक्ष्यं संशयं रुरुहे। दोलाधिरूढस्यापि स्थितिर्न भवति संशयेऽपि चित्तवृत्तिर्नैकत्रावतिष्ठते। संशयाकारस्तु इयं सीता ऋष्यकेतोश्चन्द्रस्य साम्राज्यलक्ष्मीः सौन्दर्यसृष्टेरधिदेवता वेति।

कुरङ्गपर्याये प्राय ऋश्य इत्येव पाठो दृश्यते तथापि कुत्रचिद् ऋष्यपाठमाश्रित्येदम्।

व्यङ्ग्योऽयं यथा—

'तीरे तरुण्या वदनं सहासं नीरे सरोजं च मिलद्विकासम् ।
आलोक्य धावत्युभयत्र मुग्धा मरन्दलुब्धालिकिशोरमाला ॥'

अत्र कमलधर्मिकोऽभेदेन संसर्गेण पुरोवर्तिव्यक्तिद्वय-प्रकारकः कमलमिदमिदं वेति भ्रमरगतः संशयो व्यङ्ग्यः । न च कमलाभेदबुद्धेर्भ्रमरप्रवृत्त्युपायतयाऽपेक्षणादिदंपदार्थभेदबुद्धिर्निरर्थिकेति वाच्यम् , एकपदार्थधर्मिकापरपदार्थभेदबुद्धेरपरपदार्थधर्मिकैकपदार्थभेदबोधप्रयोजकत्वेन कमलाभेदबोधसाम्राज्यात् । कमलत्वमेतद्वृत्ति तद्वृत्ति वेति संशयाकारः । सोऽयं संशयध्वनिः ।

---

ऋष्यकेतुशब्दस्य चन्द्रोऽर्थो न युक्तः 'ब्रह्मसूऋष्यकेतुः स्यात्' इत्यमरकोशात्कामदेवार्थस्य प्रसिद्धेः, कामिवर्गे तस्य साम्राज्यस्य कविसमयत्वाच्चेति ब्रुवाणा सरला नागेशोक्तिं खण्डयति । अत्रेदन्तात्पर्यं नागेशस्य प्रतिभाति । 'ब्रह्मसूर्विश्वकेतुः स्यात्' इत्येवामरपाठः प्रसिद्धः । क्वाचित्कं सन्धिजटिलं पाठमपेक्ष्य चन्द्रार्थताप्रसिद्धिमनुसरति । सत्यं साम्राज्यं कामस्य प्रसिद्धं पर सौन्दर्यविषये नायकवर्णन एव कामसाम्राज्यम्, नायिकावर्णने तु रतिसर्वस्वादिकमेवोच्यते । कामोद्दीपकतया नायिकावर्णने च आज्ञाचापयष्टित्वादिना वर्णनमायाति परं न जगज्जनन्याः सीताया वर्णने पण्डितेन्द्रस्य साभिप्रेता अपि तु सौन्दर्यमात्रमेव ! साम्राज्यशब्दस्य साकल्याभिप्रायेण बहुशः प्रयोगो जायते । सचिवस्यापि वसन्तस्य शोभायाः वसन्तलक्ष्मी शब्देनवर्णनमायात्येव । तीरे● तीरे तरुण्याः सहासं वदनं नीरे मिलद्विकासं विकसितञ्च सरोजम् आलोक्य मकरन्दलुब्धानामलिकिशोराणां माला मुग्धा सती उभयत्र सरोजे वदने च धावति ।

कमलाभेद● इदंपदार्थ इति शेषः । **इदंपदार्थ**● कमले इति शेषः । **एकपदार्थ**● न च पूर्वोक्तेन ग्रन्थेन शाब्दबोधसामग्र्या नियन्त्रितत्वकथनेन विरोधः शङ्कनीयः । अत्र व्यञ्जनाव्यापारसाम्राज्यात् । कमलत्वधर्मिकमेतद्वृत्तित्वतद्वृत्तित्वकोटिकं पर्यवसितं संशयमाह **कमलत्व**● एतद् वदनम्, तत् कमलमित्यर्थः ।

'आज्ञा सुमेषोरविलङ्घनीया किं वा तदीया नवचापयष्टिः ।
वनस्थिता किं वनदेवता वा शकुन्तला वा मुनिकन्यकेयम् ॥'

यद्यप्यत्रापि वाचकशब्दाभावाद् व्यङ्ग्य एव भवितुमर्हति संशयः, तथापि विषयनिरूपणेन स्फुटमावेदितत्वान्न ध्वनि-व्यपदेशहेतुः । अपि तु गुणीभूतव्यङ्ग्यप्रभेदव्यपदेशस्य, अनुगामी चात्र प्रतिप्रकारं पृथगेव निर्दिष्टः ।

यत्तु चित्रमीमांसायां संशयध्वन्युदाहरणप्रसङ्गे अप्पय-दीक्षिताः—

"काञ्चित् काञ्चनगौराङ्गीं वीक्ष्य साक्षादिव श्रियम् ।
वरदः संशयापन्नो वक्षःस्थलमवैक्षत ॥'

अत्र संशयस्य शब्दोपात्तत्वेऽपि तावन्मात्रस्यानलङ्कार-त्वात्तदलङ्कारताप्रयोजकस्य वक्षःस्थले स्थितैव लक्ष्मीस्ततोऽव-

---

अत्र कौस्तुभटीका । मुग्धः सुन्दरमूढयोरिति कोशात् मुग्धापदेन विपरीतज्ञानलाभादुभयत्र धावतीति समभिव्याहारेण संशयत्वस्य वाच्यत्वमिति ब्रूते । परं सैव मुग्धा संशये शक्तिमतः कस्यापि पदस्याभावाद्वाच्यत्वस्य दुर्घटत्वात् । मुग्धापदस्य उभयत्र धावतीति समभिहारेण संशयव्यञ्जकत्वस्यैव स्फुटत्वादिति । न केवलं वाचकशब्दाभावादेव ध्वनिव्यपदेशोऽपि तु स्फुटतया संशयद्योतकस्य निपातादेरभावादपि ।

एवञ्च वानिपातद्योत्यस्य व्यङ्ग्यस्यापि संशयस्य न ध्वनित्वमिति स्फुट-त्वायोदाहरणमाह आज्ञा● इयं मुनिकन्याधर्मिणी सुमेषोः कुसुमशरस्य कामस्य अविलङ्घनीया आज्ञा वा तदीया कामस्य नवधनुर्यष्टिः किम्, वन-स्थिता वनदेवता वा शकुन्तला वा इत्याकारकाश्चत्वारः संशयाः । वाचक-शब्दाभावा● वानिपातस्य द्योतकत्वेन । विषय● धर्मिकोटीनाम् । गुणी-भूत● गुणीभूतस्य यः प्रभेदोऽगूढत्वं तद्व्यपदेशस्य हेतुः इत्यर्थः । अनुगामी● अविलङ्घनीयत्व-नवत्व-वनस्थितत्वादीनि । प्रतिप्रकारं● आज्ञादौ । काञ्चित्● इदं पद्यमप्पयदीक्षितमूलपुरुषवक्षःस्थलाचार्यकृतवरद-राजवसन्तोत्सवस्थम् । वरदः काञ्चीदेवता विष्णुः । अनलङ्कारत्वा●

तीर्य पुरस्तिष्ठतीत्येवं संशयाकारस्य वक्षःस्थलमवैक्षतेत्यनेन व्यङ्ग्यत्वात् सन्देहालङ्कारध्वनिरत्रेति ।

यथा—

'दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः ।
वीक्ष्य बिम्बमनुबिम्बमात्मनः कानि कान्यपि चकार लज्जया ॥'

इत्यत्र कानि कान्यपीति सामान्यतो निर्दिष्टानुभाव-विशेषप्रतीत्यर्थं लज्जाशब्दप्रयोगेऽपि तस्याः स्वविभावानु-भावाभ्यां रसानुगुणाभिव्यक्तिरूपो ध्वनिः" इत्याहुः ।

तदेतद् ध्वनिमर्मज्ञैरुपहसनीयमेव ।

तथाहि संशयाविष्ट इत्यत्र संशयपदेनैकस्मिन् पदार्थे विरुद्धनानापदार्थसम्बन्धावगाहिज्ञानं साक्षादेव निवेद्यते । तत्र कोऽसौ विरुद्धो नानार्थं इति विशेषाकाङ्क्षायां वक्षःस्थलावेक्ष-णेन वक्षःस्थलस्यैव लक्ष्मीस्ततोऽवतीर्य किं पुरस्तिष्ठतीत्यादि-रर्थो व्यञ्जनाव्यापारेण बोध्यमानः शक्त्या संशयशब्दनिवेदित-

---

अचमत्कारित्वेन । दर्पणे च● कुमारसंभवे पार्वत्या रतिवर्णनम् । कदाचित् पार्वती दर्पणे परिभोगदर्शिनी संभोगचिह्नानि नखक्षतादीनि अवलोकयन्ती पृष्ठभागे निषेदुष उपविष्टस्य प्रणयिनः शिवस्य बिम्बमनु आत्मनो बिम्बं वीक्ष्य लज्जया कानि कानि अपि चकार । अत्र संभोगशृङ्गारः । तदनुकूलानुभावो लज्जा । सा वाच्या यद्यपि प्रतिभाति तथापि तस्या ध्वनिः । कानि कानीति शब्दैः सामान्यतोऽनुभावप्रतीतावपि विशेषाकारविशिष्टस्य सामान्यस्यानुभावस्य व्यञ्जनयैव गम्यमानतया ध्वनित्वमिति भावः । एकेन धर्मेण वाच्यस्यापि अर्थस्य अपरेण रूपेण व्यङ्ग्यस्य ध्वनिव्यपदेशहेतुत्वमिति दीक्षितमतम् । तदभि-प्रायेण पद्यद्वयमुदाहृतं तेन । पण्डितराजस्तु कथमपि वाच्यवृत्तिस्पृष्टो न ध्वनिव्यपदेशयोग्य इति मनुते । तेन दीक्षितमतं खण्डयति, स्वमतं ध्वन्या-लोकलोचनसंवादेन पुष्णाति च ।

तदेतद् ध्वनितत्त्व● तत्त्वज्ञांशतोऽपि ध्वन्यमानस्य वाच्यवृत्त्यनालि-

ज्ञानविशेषणीभूतेन सामान्यार्थेन साकमभेदेन पर्यवस्यति। एवं च संशयमात्रस्य शक्त्या बोधनाद्वक्षःस्थलस्थितैवेत्यादि-विषयभागस्यापि विरुद्धनानार्थत्वेन सामान्याकारेणावलीढतया तयैव कवलीकरणाद्वाच्यार्थसंशयपर्यवसायकत्वाच्च न कस्यापि ध्वनिव्यपदेशहेतुत्वं युक्तम्। सर्वथा वाच्यवृत्त्यचुम्बितस्यैव तथात्वमिति ध्वनिमार्गप्रवर्तकैः सिद्धान्तितत्वात्।

तथा च द्वितीयोद्द्योते—

"शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः।
यत्राविष्क्रियते स्वोक्त्या साऽन्यैवालङ्कृतिर्ध्वनेः॥'

इति सूत्रयित्वा।

'सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्॥'

---

ङ्गितत्वम्। **पर्यवस्यति**● संशयस्य सामान्यांशोऽभिधया प्रकाश्यते विशेषश्च व्यञ्जनया। विशिष्टश्च संशयः संपद्यते। **सामान्या**● विशेषो यदि सामान्यं विना न भवति।

यदि सामान्यं वाच्यवृत्तिचुम्बितं तदा सामान्याकारेण विशेषोऽपि अभिधया समालिङ्गितः। तथा च न संशयस्य वाच्यवृत्त्या अस्पर्शः। ध्वनित्व-विरोधिनं द्वितीयं हेतुमाह **वाच्यार्थसंशय**● व्यञ्जनावृत्त्यवगम्यो विशेषाकारो वाच्यार्थसंशयाङ्गपूरकत्वाद्वाच्याङ्गं न तु प्रधानमिति भावः। **संकेतकाल-मनसम्**● कश्चिद्विटः संकेतकालं ज्ञातुमागतः। विदग्धा चतुरा च नायिका सहवासिभिः संगोप्य हसद् यथा स्यात्तथा नेत्राभ्यामर्पितम् आकूतं यस्मिन् तत्तथा अथवा हसद्भ्यां नेत्राभ्यामर्पितम् आकूतं यस्मिन् तत्तथा लीलापद्मं निमीलितम्। तेन पद्मनिमीलनकालः प्रदोष आवयोरतिकाल इति सूचितम्।

यदि कविः संकेतकालमनसं विटं ज्ञात्वेति नावक्ष्यत् तदा विदग्धया हसन्ने-त्रार्पिताकूतं लीलापद्मं निमीलतमित्युक्त्यैव कमपि विटं संकेतकालमसूचयदिति स्फुटं प्रतिभासते। व्यज्यमानः संकेतकालः कविना स्वोक्त्यैव अभिधयैव

अत्र सङ्केतकालमनसं ज्ञात्वा लीलापद्मं निमीलितमिति वदता कविना लीलापद्मनिमीलनस्य प्रदोषाभिव्यञ्जकत्वं स्वोक्त्यैव निवेदितमिति ध्वनिमार्गादयमपर एव गुणीभूतव्यङ्ग्यस्य मार्गः ।

यथा वा—

"अम्बा शेतेऽत्र वृद्धा परिणतवयसामग्रणीरत्र तातो
　निःशेषागारकर्मश्रमशिथिलतनुः कुम्भदासी तथाऽत्र ।
अस्मिन् पापाहमेका कतिपयदिवसप्रोषितप्राणनाथा
　पान्थायेत्थं तरुण्या कथितमवसरव्याहृतिव्याजपूर्वम् ॥'

अत्र निःशङ्कं रन्तुमायाहीत्यर्थश्चरणत्रयव्यङ्ग्योऽप्यवसरव्याहृतेर्व्याजत्वं ब्रुवता कविना स्फुटं स्वोक्त्या निवेदित इत्ययमपि न ध्वनेर्मार्गः" इत्याहुरानन्दवर्धनाचार्याः ।

तृतीयोद्द्योते च गुणीभूतव्यङ्ग्यनिरूपणे 'व्यङ्ग्यस्यार्थस्य यदि मनागप्युक्त्या प्रकाशनं तदा गुणीभाव एव शोभते ।

---

प्रकाशित इति नायं ध्वनिः इति भावः । इति वदता● ज्ञात्वान्तं वदता । स्वोक्त्यैव● ज्ञात्वोक्त्यैव । प्रकृतानुकूलं स्फुटं दृष्टान्तमाह यथावा● कश्चित्पान्थः स्थानयाचनायै समायातः । संभोगमिच्छन्ती च विदग्धा नायिका गृहजनैर्न भेतव्यम् । मम पत्युश्चेति व्याजपूर्वं वक्ति अम्बा● अत्र वृद्धा अम्बा शेते । शेत एव न तु मम चरितं प्रतीक्षते वृद्धतया वैदग्ध्याभावात् । अत्र परिणतवयसां वृद्धानामग्रणीः अतिवृद्धस्तातः शेते । स तु उत्थातुमपि न प्रभवति । तथा निःशेषस्य आगारकर्मणः गृहकर्मणः सम्पादने श्रमेण शिथिला तनुर्यस्या सा उत्थातुमलसा श्रमवशाद् गाढं निन्द्रिता कुम्भनामिका दासी, अथवा जलाद्याहरणार्थं कुम्भं सेवमाना कुम्भस्यैव दासी न तु क्रीडादासी । अथवा कुम्भेति पान्थस्य सम्बोधनम् । अत्र स्थाने शेते । अस्मिन् स्थाने वियोगात् पापा दुःखितजीवना एका तेन रहस्यं दुःखञ्च । कतिपयैर्दिवसैस्तेन शीघ्रं नागमनसम्भावना प्रोषितः प्राणानामेव नाथः शरीरस्य तु भवादृश एव । शये । तरुण्या इत्थं पान्थाय अवसरे समये व्याहृतेर्व्याजस्तत्पूर्वं कथितम् । स्वोक्त्या● व्याजशब्देन । प्युक्त्या● अभिधया ।

तस्माद्यत्रोक्तिं विना व्यङ्ग्योऽर्थस्तात्पर्येण प्रतीयते तत्र तस्य प्राधान्याद् ध्वनित्वम्' इति तद्युक्तिविवेचनेऽभिनवगुप्तपादाचार्याः ।

एवं चैवंविधेषु व्यञ्जकत्वस्य व्यङ्ग्यस्य वा मनागुक्तिसंस्पर्शमात्रेण ध्वनित्वं निराकुर्वाणाः 'काञ्चित् काञ्चनगौराङ्गीं–' इति पद्ये शब्दाभिहितव्यङ्ग्ये ध्वनित्वं कथमिव स्वीकुर्वीरन् । एतेन 'दर्पणे च परिभोगदर्शिनी' इति प्रागुक्तपद्ये लज्जाध्वनित्वं यद्दीक्षितैरभ्यधीयत तदप्यपास्तमिति दिक् ।

अस्मिश्च संशये नानाकोटिषु क्वचिदेक एव समानो धर्मः, क्वचित् पृथक् । सोऽपि क्वचिदनुगामी, क्वचिद् बिम्बप्रतिबिम्बभावमापन्नः; क्वचिदनिर्दिष्टः, क्वचिन्निर्दिष्टः ।

तत्र 'मरकतमणिमेदिनीधरो वा' इति प्रागुदाहृतपद्ये श्यामाभिरामत्वं धर्मिणो रामस्य कोट्योश्च तमाल-मरकतभूधरयोरेक एवानुगामी धर्मः प्रतीयमानत्वादनिर्दिष्टः ।

स एव निर्दिष्टो यथा—

'नेत्राभिरामं रामाया वदनं वीक्ष्य तत्क्षणम् ।
सरोजं चन्द्रबिम्बं वेत्यखिलाः समशेरत ॥'

अत्र नेत्राभिरामत्वरूपस्त्रिष्वेक एवानुगामी धर्मो निर्दिष्टः, पृथगनुगामी निर्दिष्टो यथा प्रागुदाहृते 'आज्ञा सुमेषोः' इत्यादौ ।

यथा वा—

'सम्पश्यतां तामतिमात्रतन्वीं शोभाभिराभासितसर्वलोकाम् ।
सौदामिनी वा सितयामिनी वेत्येवं जनानां हृदि संशयोऽभूत् ॥'

---

यत्रोक्तिं● अभिधां लक्षणाञ्च । तात्पर्येण● व्यञ्जनया । संपश्यताम्● तां नायिकाम् अतिमात्रतन्वीं शोभाभिराभासितः सर्वलोको यया तां संपश्यतां जनानां हृदि इयं सौदामिनी वा शुक्लपक्षयामिनी वेति संशयः

अत्रातिमात्रतनुत्वं सौदामिन्या, शोभाभिराभासितसर्वलोकात्वं च सितयामिन्या सह कान्तायाः पृथगनुगामी समानो धर्मः ।

अत्रैव पूर्वार्धगतविशेषणद्वयत्यागे स एवानिर्दिष्टः ।

बिम्बप्रतिबिम्बभावमापन्नो यथा 'तीरे तरुण्या वदनं सहासम्' इत्यादौ प्रागुक्ते ।

यथा वा—

'सपल्लवा किं नु विभाति वल्लरी सफुल्लपद्मा किमियं नु पद्मिनी।
समुल्लसत्पाणिपदां स्मिताननामितीक्षमाणैः समलम्भि संशयः ॥'

अत्र पल्लवफुल्लपद्मे पाण्याननयोः प्रतिबिम्बकोट्योः पृथङ्निर्दिष्टे ।

'इदमुदधेरुदरं वा नयनं वाऽत्रेरुतेश्वरस्य मनः ।
दशरथगृहे तदानीमेवं संशेरते स्म कवयोऽपि ॥'

---

अभूत् । अत्रानुगामिनः पृथक्त्वं दर्शयति अत्राति● प्रागुक्ते● हासविकाशयोर्बिम्बप्रतिबिम्बभावः ।

**सपल्लवा●**समुल्लसत्पाणिपदां स्मिताननां तां नायिकाम् ईक्षमाणैः इयं सपल्लवा वल्लरी लता किन्नु विभाति इयं सफुल्लपद्मा पद्मिनी, किन्नु, इति संशयः समलम्भि संलब्धः । **प्रतिबिम्बकोट्योः●** वल्लरीपद्मिन्योः । यद्यपि पादप्रतिबिम्बो नोक्तस्तथाप्युपलक्षणं बोध्यम् ।

**इदमु●** तदानीं रामाविर्भावसमये दशरथगृहे कवयोऽपि एवं संशेरते स्म । रामो बिम्बश्चन्द्रश्च प्रतिबिम्बः । तयोर्बिम्बप्रतिबिम्बयोरभेदाद् रामोत्पत्तिस्थाने चन्द्रोत्पत्तिस्थानस्य भ्रमः । चन्द्रोत्पत्तेः स्थानञ्च त्रयम्पुराणादुपलभ्यते समुद्रमध्यम् अत्रेर्नयनं परमेश्वरस्य मनश्च । तदेव संशयत्रयं प्रथमार्धेनाह । इदं ( दशरथगृहम् ) उदधेरुदरं वा अत्रेर्नयनं वा, उत ईश्वरस्य मनः ।

अत्र तदानीमिति प्रकरणसाहाय्यवशाद्दशरथगृहेण धर्मिणाऽक्षिप्तस्य तत्कालजातस्य भगवतो रामस्य जलध्युदरादिसंशयकोटित्रयाक्षिप्तः साधारणश्चन्द्रः प्रतिबिम्बः। इमौ च बिम्बप्रतिबिम्बावनिर्दिष्टावपि प्रतीयमानौ सादृश्यं प्रयोजयतः। एतेन 'अनुगाम्येव धर्मो लुप्तः सम्भवति, न तु बिम्बितः' इति वदन्तः परास्ता इति दिक्।

अयं च क्वचिदनाहार्यः, क्वचिदाहार्यः। यत्र हि कविना परनिष्ठः संशयो निबध्यते प्रायशस्तत्रानाहार्यः। यथा 'तीरे तरुण्याः', 'मरकतमणिमेदिनीधरो वा' इत्यादिषु प्रागुदाहृतेषु पद्येषु। तत्र भ्रमरादीनां संशयानानां ग्राह्यनिश्चयाभावात्।

यत्र च स्वगत एव तत्राऽहार्यः, यथा—

'अलिर्मृगो वा नेत्रं वा यत्र किञ्चिद् विभासते।
अरविन्दं मृगाङ्को वा मुखं वेदं मृगीदृशः॥'

अत्र वक्तुः कवेस्तत्त्वज्ञतया संशयावाहार्याविव।

परम्परितोऽपि चायं सम्भवति—

विद्वद्दैन्यतमस्त्रिमूर्तिरथवा वैरीन्द्रवंशाटवी-
दावाग्निः किमहो महोज्ज्वलयशःशीतांशुदुग्धाम्बुधिः।
किंवाऽनङ्गभुजङ्गदष्टवनिताजीवातुरेवं नृणां
केषामेष नराधिपो न जनयत्यल्पेतराः कल्पनाः॥'

---

धर्मिणा● संशयविशेष्यीभूतेन। इमौ च● रामचन्द्रौ। ग्राह्य● ग्राह्यं संशयस्यैककोटिः।

अलिर्मृगो वा● यत्र किञ्चित् अलिर्मृगनेत्रं वा विभासते तद्वस्तु अरविन्दं वा चन्द्रो वा मृगीदृशो मुखं वा।

परम्परित● आरोपमूलकसादृश्यमारोपमात्रं वा संशयस्योपपादकः। संशयोऽप्यारोपात्मकः। आरोपान्तरं यदि तस्योपपादकं तदा परम्परितत्वम्, न तु संशयस्य संशयोपपादकतयेति ध्येयम्। विद्वद्दैन्य● एष नराधिपः सर्वगुणसम्पन्नतया केषाम् अल्पेतराः कल्पनाः संशयान् न जनयति। पादत्रयेण

अत्राप्याहार्यः ।

क्वचित् परनिष्ठोऽपि कविना निबध्यमान आहार्यो भवति ।

यथा—

'गगनाद् गलितो गभस्तिमानुत वाऽयं शिशिरो विभावसुः ।
मुनिरेवमरुन्धतीपतिः　सकलज्ञः समशेत　राघवे ॥'

अत्र मुनेर्वशिष्ठस्य सर्वज्ञत्वेनोपात्तस्य संशय आहार्य एव ।

यद्यप्यत्र 'मुनीनां च मतिभ्रमः' इत्युक्त्या तस्यानाहार्य एव संशयो वक्तुं शक्यः, तथापि कोटितावच्छेदकयोः शिशिरत्व-गगनगलितत्वयोरग्निसूर्यरूपकोटिद्वये आहार्यबोधस्यैवावश्य-वाच्यतया पुरोवर्तिनि कोटिद्वयाभेदांशेऽपि तस्यैव न्याय्यत्वात् ।

---

संशयाकारमाह । एष नराधिपो विद्याप्रेमितया विदुषां दैन्यमेव तमस्तस्य ऋग्यजुःसामात्मकः सूर्यः को वा अहो वैरीन्द्रा एव वंशाटव्यः, अथवा वैरीन्द्राणां वंशा एवाटव्यस्तासां दावाग्निः किम् ? अथवा महोज्वलयशो-रूपस्य शीतांशोः दुग्धाम्बुधिः । अथवा अनङ्गरूपेण भुजङ्गेन दष्टाया वनिताया जीवातुर्जीवनौषधं किम् । द्वितीयेन यशस्विता तृतीयेन सौन्दर्य-लक्ष्मीर्ध्वन्यते । अत्र दैन्यतमसोः, वंशाटव्योः, यशःशीतांश्वोः, अनङ्गभुजङ्गयो-श्चाभेदारोपः साधारण्यसम्पादनेन संशयोपयोगी । अत्राहार्यः● कवि-निष्ठतया । अत एव परनिष्ठस्याहार्यस्योदाहरणान्तरमाह गगना● सकलज्ञः अरुन्धतीपतिः मुनिर्वशिष्ठः राघवे समशेत संशयमाप । अयं तेजस्वितया गगनाद् गलितः गभस्तिमान् सूर्यः, अथवा शान्ततया शिशिरो विभावसुरग्निः । कोटिताव● कोटिः सूर्य अग्निश्च । तयोः कोटिता तदवच्छेदकं सूर्ये विशेषणं गगनाद् गलितत्वमग्नौ च शिशिरत्वम् । कोटिद्वये● अग्नौ सूर्ये च । पुरो-वर्तिनि रामधर्मिणि, अभेदेनेति पाठ उपपादने क्लेशकरोऽधिकः प्रतिभाति ।

इह च कोटयोर्धर्मिसादृश्यदार्ढ्यायोष्णत्वगगनतत्वरूपवैधर्म्य-निरासकमविद्यमानमपि गगनगलितत्वं शिशिरत्वं चारोप्यते वक्त्रा ।

एवमादयोऽन्येऽपि प्रकाराः सुधीभिः स्वयमुन्नेयाः ।

इति रसगङ्गाधरे ससन्देहालङ्कारनिरूपणम् ।

अथ भ्रान्तिमान्—

सदृशे धर्मिणि तादात्म्येन धर्म्यन्तरप्रकारकोऽनाहार्यो निश्चयः सादृश्यप्रयोज्यश्चमत्कारी प्रकृते भ्रान्तिः । सा च पशुपक्ष्यादिगता यस्मिन् वाक्यसन्दर्भेऽनूद्यते स भ्रान्तिमान् ।

अत्र च भ्रान्तिमात्रमलङ्कारः, भ्रान्तिमानलङ्कार इति व्यवहारस्त्वौपचारिकः । तथा चाहुः—

'प्रमात्रन्तरधीर्भ्रान्तिरूपा यस्मिन्ननूद्यते ।
स भ्रान्तिमानिति ख्यातोऽलङ्कारे त्वौपचारिकः ॥ इति ।

---

अविद्यमानस्य गगनगलितत्वादेरारोपस्य फलमाह धर्मिसादृश्य● इति ससंदेहप्रकरणम् ।

इति ससन्देहालङ्कारनिरूपणम् ।

अथ भ्रान्तिमन्निरूपणम्

अयथार्थज्ञानसंशयसजातीयताप्रसङ्गेन भ्रान्तिमन्तं लक्षयति सदृशे धर्मिणि● धर्म्यन्तरप्रकारक इत्यस्य तदभाववद्विशेष्यकतत्प्रकारकमित्यर्थः । कनकद्रवेत्यादिवक्ष्यमाणपद्ये चातकपोतकानां नर्तननिमित्तं चपलायुत-वारिदोऽयमिति ज्ञानम् । अयम्पदार्थस्तु सीतायुतो रामचन्द्रः । तत्र तादृशे रामचन्द्रे तादात्म्येन तादृशवारिदस्याभावस्तथापि रामविशेष्यके ज्ञाने तादात्म्येन विशेषणं भवति वारिद इति लक्षणसमन्वयः । स● संदर्भः । प्रमात्र● अन्यस्मिन् प्रमातरि या धीर्यस्मिन् संदर्भेऽनूद्यते स सन्दर्भो भान्तिमान् इति ख्यातः ।

लक्षणे मीलित-सामान्य–तद्गुणवारणाय धर्मिग्रहणद्वयम्। रूपकवित्तिवारणायानाहार्यं इति कविभिन्नगत इति वा। संशयवारणाय निश्चय इति। इदं रजतमिति रङ्गविशेष्यकबोधवारणाय चमत्कारीति। कविप्रतिभानिर्वर्तित इत्यर्थः। रङ्गे रजतमिति बुद्धेर्लौकिकतया न कविप्रतिभानिर्वर्तितत्वम्।

'अकरुणहृदय प्रियतम मुञ्चामि त्वामितः परं नाहम्।
इत्यालपति कराम्बुजमादायालीजनस्य विकला सा॥'

इत्यत्र नायिकासन्देशहरस्योक्तौ व्यज्यमानस्योन्मादस्य वारणाय सादृश्यप्रयोज्य इति। न चात्रोन्मादस्य प्राधान्यात्

---

भ्रान्तिरूपेऽलङ्कारे तु औपचारिकः। पदकृत्यमाह लक्षणे ● यथा जलकुम्भेत्यादिमीलितोदाहरणे सुरतजन्यानां जलकुम्भानयनत्वराजन्यानां स्वेदकम्पनिश्वासानां सादृश्यादभेदमात्रं भासते, न तु एकस्मिन् स्वेदादिधर्मिणि स्वेदाद्यन्तरं प्रकार इति भावः। सामान्य ● यस्मिन्हिमानीत्यादौ चमरीविशेष्यकः पुच्छाश्रयाभावप्रकारको भ्रमो भासते। अभावश्च धर्मो न धर्मीति द्वितीयं धर्मिपदम्। न च धर्मिपदेनैव तादात्म्यं सम्बन्धो द्योतत इति वाच्यम्, भ्रमज्ञाने धर्मिणोऽपि सम्बन्धान्तरेण प्रकारत्वसम्भवात्।

एवं नीता नासान्तिकमिति तद्गुणोदाहरणे कुसुमोत्करे वन्धुकताधर्मस्य भ्रमो न तु बन्धुकधर्मिण इति ध्येयम्। अत्र कश्चिद् धर्मिपदमनिवेशयन् तदभाववद्विशेष्यकतत्प्रकारकमतिर्भ्रान्तिरिति लक्षयन् तद्गुणभेदाय तद्गुणप्रकरणे अत्र विषयवृत्तिमेव धर्मितावच्छेदकीकृत्य गुणभानम्, भ्रान्तौ तु धर्मितावच्छेदकतया न कस्यचिद्विशेषधर्मस्य भानमिति ब्रवीति तेन पण्डितराजस्य खण्डनं नावसेयम्। रङ्गधर्मिकं ● शुक्लमिदं रजतमिति भ्रमस्यापि संभवेन प्रकाराविरोधिनः आहार्यताया असम्पादकस्य धर्मस्य साधारणस्य सादृश्यप्रयोज्यभ्रान्तौ धर्मितावच्छेदकत्वसम्भवस्तत्रातिव्याप्तेरनिरासात्। रूपक ● तत्र मुखं चन्द्र इति ज्ञानस्य अभेदाहार्यत्वात्। प्रभात्रेत्यादिपूर्वोक्तार्षवचनानुरोधेनाह न कविभिन्न ● काचिदुन्मत्ता नायिका उन्मादवशा प्रियकरबुद्ध्या सखीकरं जग्राहेति सन्देशहरो नायकं ब्रूते अकरुण ● अकरुणहृदय? प्रियतम? अहमितः परं त्वां न मुञ्चामि इति। इत्थम् आलीजनस्य कराम्बुजमादाय विकला सा आलपति। न चात्रोन्मादस्य ● न चोन्मादस्य भ्रमहेतुतया ज्ञानात्मकताया

सकलालङ्कारसाधारणेनोपस्कारकत्वविशेषणेनैव वारणमिति वाच्यम्, तस्यापि पार्यन्तिकविप्रलम्भोपस्कारकत्वात्। यद्वा सन्देशहरात् संदेशं श्रुतवतो नायकस्य स्वमित्रं प्रति यदेदं वाक्यम् 'अकरुणहृदय—' इत्यादि तदास्मिन्नेव पद्ये सेतिपदव्यङ्ग्यायाः स्मृतेरुपस्कारके उन्मादे तथाप्यतिप्रसङ्गापत्तेः सादृश्यप्रयोज्यत्वमावश्यकम्। लक्षणे चात्रैकत्वं विवक्षितम्। अन्यथा वक्ष्यमाणानेकगृहीतृकानेकप्रकारकैकविशेष्यकभ्रान्तिसमुदायात्मन्युल्लेखेऽतिप्रसङ्गापत्तेः। अत एवैकवचनमपि सार्थकम्।

उदाहरणम्—

'कनकद्रवकान्तिकान्तया मिलितं राममुदीक्ष्य कान्तया।
चपलायुतवारिदभ्रमान्ननृते चातकपोतकैर्वने ॥'

---

एवाभावात् कथं शङ्केति वाच्यम्, विप्रलम्भादिजन्मनोऽन्यस्मिन्नन्यावभासात्मन उन्मादस्य ज्ञानरूपतायाा ग्रन्थकृतैव वर्णितत्वादिति। ननु विप्रलम्भजन्य उन्मादः कथमुपस्कुर्वीत विप्रलम्भमिति न शङ्क्यम्, नोपस्कारकत्वं जनकत्वं येन जन्यस्य न स्यात्, किन्तु विप्रलम्भाभिव्यक्तौ उपयोगित्वन्तु तस्यापि सम्भवति। एतादृशास्वरसादेव वा आह यद्वा० मित्रं प्रति पद्येदम्, मित्रं प्रति यदेदम् इति वा पाठः। द्वितीयः सम्यक्। सार्थकम्० अलङ्कारकौस्तुभे तु अनेकभ्रमाणामस्य लक्ष्यतामङ्गीकृत्य एकवचनमविवक्षितमित्युक्तम्। तत्तु उल्लेखस्यालङ्कारान्तरताऽनभ्युपगमाभिमानेन। न च सदृशे धर्मिणि इत्युक्तौ पुनः सादृश्यप्रयोज्येत्यादिनिवेशस्य किं फलमिति वाच्यम्, धर्मिणोः सादृश्यं वास्तविकमपेक्षितमेवं ज्ञातमपि इति सत्तया ज्ञाततया च सादृश्यस्य उपयोगवर्णनस्य आवश्यकत्वात्। तथा च धर्मिविशिष्टः अनाहार्यः सादृश्यप्रयोज्यश्चमत्कारी निश्चयो भ्रान्तिरिति लक्षणम्। वैशिष्ट्यञ्च स्वनिष्ठतादात्म्यसम्बन्धावच्छिन्नप्रकारतानिरूपकत्वस्वविशिष्टधर्मिविशेष्यकत्वोभाभ्याम्। तत्र वैशिष्ट्यं स्वभिन्नत्वस्वसादृश्यस्वनिष्ठप्रकारतानिरूपितविशेष्यतावत्त्वैः सम्बन्धैः। एवं रीत्या अन्याऽपि सरणिर्विस्तरभिया नो गृह्यते। कनकद्रव० सुवर्णस्य

अत्र चातकगतहर्षोपस्कारकतया तद्गता भ्रान्तिरलङ्कारः ।

यदि 'परिफुल्लपतत्त्रपल्लवैर्मुमुदे चातकपोतकैर्वने' इत्युत्तरार्धं निर्मीयते तदायमेव भ्रान्तिध्वनिः ।

यच्चाप्ययदीक्षितैर्लक्षणमुक्तम्—

'कविसम्मतसादृश्याद्विषये　　पिहितात्मनि ।
आरोप्यमाणानुभवो यत्र स भ्रान्तिमान् मतः ॥' इति ।

'तत्र कविसम्मतसादृश्यप्रयोज्ये विषये आरोप्यमाणानुभवो यत्र वाक्सन्दर्भे स भ्रान्तिमान्' इति भ्रान्तिमतो लक्षणं विधाय रूपकव्यावृत्त्यर्थं पिहितात्मनीत्युच्यते । न चैतद्युक्तम् । नहि रूपकवाक्ये आरोप्यमाणस्यानुभवो वर्ण्यते, किं तु तस्माज्जायते । न चात्रानुभवान्तं भ्रान्तेर्लक्षणमग्रिमं च भ्रान्तिमतः । तत्र भ्रान्तिलक्षणे रूपकेऽतिव्याप्तेर्वारणाय विषये पिहितात्मनीति विशेषणमिति वाच्यम्, अनुभवत्वघटितस्य भ्रान्तिलक्षणस्यानुभूयमानाभेदात्मके रूपके कथमप्यप्रवृत्तेः । यदि च रूपकपदं रूपकबुद्धिपरमिति ग्रन्थसामञ्जस्यं विधीयते तदापि विषयतावच्छेदकानवगाहिनि 'मरकतमणिमेदिनीधरो वा तरुण-

---

यो द्रवस्तस्य कान्तिरिव सुन्दर्या कान्तया सीतया मिलितं राममुदीक्ष्य वने चातकपोतकैः चपलायुतवारिदभ्रमान्नृते । रलङ्कारः● नर्तनेन हर्षो व्यज्यते । हर्षस्य चोपस्कारिका भ्रान्तिः । ध्वनेः प्रसङ्गाद् व्युत्पत्तये प्रकारमाह परिफुल्ल● अत्रापि कश्चित् पाठभेदः । परिफुल्लाः पतत्राणि पक्षा एव पल्लवा येषां तैः । तथा च भ्रमपदाभावाद् भ्रमस्य व्यञ्जनया बोधाद् ध्वनिः । न च मोदस्यावाच्यस्योपस्कार्यस्य सत्त्वात् कथ ध्वनिरिति शङ्कनीयम्, मोदस्यापि भ्रान्त्युपस्कारकतयैव चमत्कारित्वान्न तु स्वातन्त्र्येण । विषये● उपमेये । आरोप्यमाण● उपमानस्य । पिहितात्मनि● उपमानाभेदाश्लिष्टे उपमेये । प्यप्रवृत्तेः● रूपकमभेदरूपन्न तु ज्ञानरूपम् । विषयतावच्छेदकानं● अयं मेदनीधरस्तमालो वेति संशयाकारो न तु रामो मेदिनीधरस्तमालो वेति ।

तरस्तरुरेष वा तमालः' इति संशयेऽतिप्रसङ्गात्, 'कमलमिति चञ्चरीकाश्चन्द्र इति चकोरास्त्वन्मुखमनुधावन्ति' इति भ्रान्तिसमुदायात्मन्युल्लेखेऽतिव्याप्तेश्च। अत्र भ्रान्त्या सङ्कीर्ण उल्लेख इति चेत्, न ह्येतावतोल्लेखांशातिव्याप्तिर्न दोषः। नहि दुग्धजलभागानां व्यामिश्रतास्तीति दुग्धलक्षणं जलांशातिव्याप्तिकं कर्तुं युक्तम्।

यच्चापि भिन्नकर्तृकोत्तरोत्तरभ्रान्तावुदाहृतम्—

'शिञ्जानैर्मञ्जरीति स्तनकलशयुगं चुम्बितं चञ्चरीकै-
स्तत्त्रासोल्लासलीलाः किसलयमनसा पाणयः कीरदष्टाः।
तल्लोपायालपन्त्यः पिकनिनदधिया ताडिता काकलोकै-
रित्थं चोलेन्द्रसिंह त्वदरिमृगदृशां नाप्यरण्यं शरण्यम्॥' इति।

---

अतः संशये विषयतावच्छेदकं रामत्वं न विषयः। विषयतावच्छेदकाविषयके इत्यर्थः। **संशये●** निश्चयपदाप्रवेशात्। **तिव्याप्तेः●** एकत्वस्याविवक्षणात्। **कर्तुं युक्तम्●** संकरस्थलेऽपि त्रिभिन्नालङ्कारप्रयोज्यश्चमत्कारोऽनुभूयते। तत्र प्रयोजकभेदोऽवश्यम्। अत्र मर्मप्रकाशः पिहितात्मनि विशेषणेन अनुभवस्य काल्पनिकत्वमुच्यते। संशये च नातिप्रसङ्गः, तत्र विषयस्यैव प्रतिपादनान्न तु विषयिणः। उल्लेखे तु भ्रान्तिसंकीर्णत्वमेष्टव्यमेव। संकीर्णस्थले चातिव्याप्तिः सर्वेषां दुरुद्धरा। वनितेति वदन्त्येतां लोका इत्याद्युल्लेखे भवतोऽपि अपह्नुतेरिव इति समर्थयति। तत्र संशये विषयविषयिणोरुभयोरुपादानात् कथनं तस्य अयुक्तम्। अन्यदप्यशक्त्या काल्पनिकसिद्धान्तवर्णनम्। सकीर्णे अपि भूतत्वमूर्तत्वे नाभिन्ने। यदपि उल्लेखे अपह्नुतेरतिव्याप्तिवर्णनन्तदपि पद्ये उल्लेखालङ्कारे वा? नाद्यः, भूतत्वमूर्तत्वयोरिष्टत्वात्। न द्वितीयः, ग्रहणरूप उल्लेखे निषेधसामानाधिकरणोपमानतादात्म्यताया बाधात्। अत्र च यदेवोल्लेखस्वरूपं ज्ञानं तदेव दीक्षितलक्षितभ्रान्तिरूपमित्यापाद्यमानत्वात्।

**शिञ्जानै●** शिञ्जानैः चञ्चरीकैर्भ्रमरैः स्तनकलशयुगं मञ्जरी इति मत्वा चुम्बितम्। तेभ्यो भ्रमरेभ्यो यस्त्रासस्तेन उल्लासलीला येषु ते पाणयः पल्लवधिया कीरैर्दष्टाः। तेषां कीराणां लोपाय आलपन्त्योऽरिमृगदृशः काकलोकैः

तत्र विचार्यते —स्तनकलशयुगे हि न तावन्मञ्जरीसादृश्यं कविसमयसिद्धम्, येन तन्मूला चञ्चरीकाणां भ्रान्तिरुपनिबध्येत। दोषान्तरमूला तु सा नालङ्कार इत्यनुपदमेव निरूपितम्। अपि च धर्मिणि कलशरूपकानुवादेन मञ्जरीभ्रान्तिरूपमलङ्कारान्तरमुपनिबध्यमानमुद्वेजकमेव सहृदयानाम्। नहि सादृश्यमूलैकालङ्कारावच्छिन्ने सादृश्यमूलालङ्कारान्तरं शोभते। यथा 'मुखकमलं तव चन्द्रवत् प्रतीमः' इति प्रागेव निवेदनात्। प्रत्युत कलशरूपकेण मञ्जरीसादृश्यतिरस्काराच्च। 'तत्रासोल्लासलीलाः किसलयमनसा पाणयः कीरदष्टाः' इत्यत्र विधेयाविमर्शाद्विधेयान्तरमाकाङ्क्षितम्। कीरैर्दष्टा इति तु भाव्यम्। जाता इत्यध्याहारेऽपि विवक्षितस्याविधेयत्वमविवक्षितस्य च विधेयत्वं प्रसज्येत। एवं 'तल्लोपायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकैः' इत्यत्र न तावत्पिकनिनदास्ताडनयोग्याः काकानाम्, येन तद्धिया आलपन्त्यस्तैस्ताडयेरन्। नापि पिकनिनदभ्रम आलपन्तीषु सम्भवति। सम्भवन्वा न सादृश्यमूलः। पिकनिकरधियेति तु भाव्यम्। अथ तदालापेषु पिकनिनदबुद्धेरपि तासु पिकबुद्ध्युत्पादनद्वारा सम्भवत्येव ताडनोपयोग इति प्रयोज्यत्वार्थकतृतीयया पिक-

---

कोकिलशब्दबुद्धया ताडिताः। हे चोलेन्द्रसिंह ? तव शत्रुस्त्रीणाम् इत्थम् अरण्यमपि न शरण्य रक्षकम्। **निरूपितम्**● सादृश्यप्रयोज्यत्वादिविशेषणमपि दत्तम्। **मूलैका**● रूपकावच्छिन्ने। **अलङ्कारा**● भ्रान्तिरूपम्। **मुखकमलम्**● रूपकावच्छिन्ने उपमा। **तिरस्काराच्च**● स्तनकलशयोः कविसमयसिद्धतया प्रसिद्धया वा। मञ्जर्याश्च तद्विपरीततया। **विधेयाविमर्श**● दष्टा इति विधेयस्य एकार्थीभावकवलितत्वेन पृथगुपस्थितेरभावात्। कीरकर्तृकदष्टत्वस्य विधेयत्वेऽपि तादृशदष्टत्वस्य दष्टतादृशालपन्तीषु विशेषणतापन्नत्वम्। कीराणां दंशनगौणीभूतानां मनसेत्यत्रानन्वयप्रसङ्गश्च। **धीप्रयोज्य**● तासामालपने कोकनिनदधीस्तया चालपन्तीषु कोकधीः। तया च ताडनम्।

निनदधीप्रयोज्यकाककर्तृकताडनकर्मत्वमालपन्तीनां सुप्रतिपाद-मेवेति चेत्, नैवम्; तथा प्रतीतेरसिद्धेः। 'चौरबुद्ध्या हतः साधुः' इत्यादौ चौरबुद्धिहननयोः सामानाधिकरण्येन हेतुहेतु-मद्भावगमकत्वव्युत्पत्तेः। एवं 'दन्तिबुद्ध्या हतः शूरैर्वराहो वनगोचरः' इत्यत्रापि विशेष्यतया वराहवृत्तेर्दन्तिबुद्धेर्वराह-वृत्तिहेतुभावागमः। त्वदुक्तरीत्या दन्तबुद्ध्येति कृते बोध-कदर्थनैव। किं च पिकानां हि कूजितादिशब्दैरेव शब्दो वर्ण्यते न तु निनदादिशब्दैः सिंहदुन्दुभ्यादिशब्दप्रयोगयोग्यैः। तथा प्रथमद्वितीयचरणस्थयोः स्तनपाण्योर्यथाकथञ्चिद् व्यवहितमपि जातान्वयमपि त्वदरिमृगदृशामिति षष्ठ्यन्तमन्वेतुं शक्नुयात्, न तु तृतीयचरणस्थे आलपन्त्य इत्यस्मिन् विशेषणे विशेष्य-भावेनेति तासां ताटस्थ्यमेव स्यात्। विभक्तिविपरिणतावपि प्रक्रमभङ्गासंष्ठुलत्वाभ्यां स्थितमेवेति पद्यमव्युत्पन्ननिर्मितमेव। दीक्षितैस्तु भ्रान्त्यलङ्कारांशमात्रमादायोदाहृतमिति दिक्।

यत्त्वलङ्कारसर्वस्वकृता लक्षितम्, 'सादृश्याद्वस्त्वन्तरप्रतीति-र्भ्रान्तिमान्' इति तन्न, प्रागुक्ते संशयालङ्कारे वक्ष्यमाणाया-मुत्प्रेक्षायां चातिप्रसङ्गात्। प्रतीतिपदस्य निश्चयपरत्वे रूपक-वित्तावतिप्रसङ्गात्। विषयतावच्छेदकानवगाहित्वेन निश्चयो

---

व्युत्पत्ते● हननं कार्यं कर्मतासम्बन्धेन साधौ तत्र अयं चौर इति भ्रमबुद्धिः विशेष्यतासम्बन्धेन कारणम्। एवमग्रेऽपि हननं कार्यं कर्मतासम्बन्धेन वाराहे तत्र अयं दन्ती इति भ्रमः कारणं विशेष्यतासम्बन्धेन। दन्तबुद्ध्येति पाठे तु कारणं भ्रमबुद्धिः विशेष्यतासम्बन्धेन दन्ते तिष्ठेत्, हननन्तु वाराहे इति वैयधि-करण्यं प्रसज्येत। बुद्ध्येत्यत्रापि पाठान्तरं संदिह्यते बोधकदर्थनकारि। प्रकृते तु निनदधीर्विशेष्यतया आलपने दंशनन्तु मृगदृशामिति वैयधिकरण्यम्। उत्प्रेक्षायाम्● सम्भावनाज्ञानात्मनि। विषयतावच्छेदक● उपमेयता-वच्छेदकाविषयक इत्यर्थः। मुखं चन्द्र इत्यादिरूपके तु मुखत्वेन मुखस्य

विशेषणीय इति चेत्, विशेष्यताम्। तथाप्यतिशयोक्तिवित्तावतिप्रसक्तिरवारितैव। अनाहार्यत्वेन निश्चयविशेषणत्वे पुनरस्मदुक्त एव पर्यवसितिः, मतुबर्थासङ्गतिश्च।

तत्र 'कनकद्रवकान्तिकान्तया' इत्यत्र सीतातडितोर्बिम्बप्रतिबिम्बभावः। युतत्वमिलितत्वयोश्च शुद्धसामान्यरूपता।

'रामं स्निग्धतरश्यामं विलोक्य वनमण्डले।
धाराधरधिया धीरं नृत्यन्ति स्म शिखावलाः॥'

अत्र स्निग्धत्वश्यामत्वयोरनुगामित्वम्।

इति रसगङ्गाधरे भ्रान्तिमदलङ्कारनिरूपणम्।

अथोल्लेखः—

एकस्य वस्तुनो निमित्तवशाद् यदनेकैर्ग्रहीतृभिरनेकप्रकारकं ग्रहणं तदुल्लेखः।

'अधरं बिम्बमाज्ञाय मुखमब्जं च तन्वि ते।
कीराश्च चञ्चरीकाश्च विन्दन्ति परमां मुदम्॥'

---

भानमितिभावः। राम● उत्प्रेक्षायां प्राप्स्यते।

इति भ्रान्तिमन्निरूपणम्।

अथोल्लेखालङ्कारनिरूपणम्

प्रायः प्राचीनाः कतिपये आलङ्कारिका अतिशयोक्तिप्रभृतिषु उल्लेखमन्तर्भावयन्ति। अलङ्कारान्तरेण नास्ति विविक्तो विषय इति बहूनां वासना, नूतनोऽलङ्कारकौस्तुभः प्राचो विवेचयन्नपि विविक्ततामस्य न पश्यति, कतिपयोदाहरणानि अतिशयोक्तितया व्याख्याति च। परमन्ते अतिशयोक्तेरपि अनुगतं लक्षणमपश्यन्नलङ्कारान्तरतामेव स्थापयति, मन्ये रसगङ्गाधरप्रभावित इति। पण्डितराजस्तु विविक्तमपि उल्लेखं व्याचिख्यासुः स्फुटं लक्षणं सूत्रयति एकस्य● एकस्य वस्तुन इत्यनेन समुदितज्ञानानामेकधर्मिकत्वं सूच्यते। निमित्तपदम्, अर्थात् पर्यवसित निमित्तभेदमुपलक्षयति। एवंविधस्य ज्ञानसमुदायस्योल्लेखोनाम येषां ज्ञानानां विशेष्यमेकम्, ग्रहीतार आश्रया अनेके, प्रकारभेदप्रयोजकानि निमित्तानि नाना प्रकारास्त्र भिन्नाः स्युरिति।

अधरं● हे तन्वि ? शुकाः, ते अधरं बिम्बं ज्ञात्वा भ्रमराश्च मुखं कमलं विज्ञाय परमां मुदं लभन्ते इति स्फुटोऽर्थः। अधरधर्मिकं बिम्बत्वप्रकारकं

अत्र कीरचञ्चरीकाभ्यामधरवदनयोर्बिम्बत्वेन पद्मत्वेन च ग्रहणे भ्रान्तिरूपेऽतिप्रसङ्गवारणायैकस्य वस्तुन इति। 'धर्मस्यात्मा भागधेयं क्षमायाः' इत्यादिमालारूपकेऽतिप्रसङ्गवारणायानेकैर्ग्रहीतृभिरित्यविवक्षितबहुत्वकं ग्रहणविशेषणम्।

'नृत्यत्त्वद्वाजिराजिप्रखरखुरपुटप्रोद्धतैर्धूलिजालै-
रालोकालोकभूमीधरमतुलनिरालोकभावं प्रयाते।
विश्रान्तिं कामयन्ते रजनिरिति धिया भूतले सर्वलोकाः
कोकाः क्रन्दन्ति शोकानलविकलतया किं च नन्दन्त्युलूकाः॥'

अत्र धूलिजालरूपस्यैकस्य वस्तुनोऽनेकैर्लोककोकोलूकैर्ग्रहीतृभिरेकेनैव रजनीत्वरूपेण प्रकारेण ग्रहणमिति तत्रातिप्रसङ्गवारणायानेकप्रकारकमिति। ग्रहणमिति ग्रहणसमुदायो

---

सुखविशेषकारणं शुकाश्रितं प्रथमं ज्ञानम्। द्वितीयञ्च मुखधर्मिकं कमलत्वप्रकारकं सुखविशेषकारणं भ्रमराश्रितम्, मुदमेकशब्दप्रतिपाद्यसुखविशेषस्य आश्रयभेदाद् भेदे ग्रन्थकृतां तात्पर्यम्, निमित्तभेदस्तेन पर्यवस्यति, अन्यथा अतिव्याप्तिः न संगच्छेत। भ्रान्तिरूपे भ्रान्तिमति अलङ्कारे इत्यर्थः। अनयोर्ज्ञानयोरेकधर्मित्वाभावान्नातिव्याप्तिरिति भावः। विशेष्यतैव धर्मिता परं न सर्वा, विशिष्टे एव धर्मिता, न तु अविशिष्टे विशेष्ये। **धर्मस्यात्मा** ● रूपके व्याख्यातस्यांशः। राजधर्मिकाणि धर्मात्मत्वादिप्रकारकाणि अनेकानि ज्ञानानि, परं तेषां ग्रहीतार आश्रया भिन्ना न भवन्ति, समेऽपि तथैव पश्यन्तीति नातिव्याप्तिः। ग्रहीतृभिरित्यत्र बहुवचनमविवक्षितमित्यर्थः। ग्रहणं ज्ञानम्। **नृत्यत्त्वद्वाजिराजि** ● राज्ञः सैन्यस्य प्रभाववर्णनम्। नृत्यतां तव अश्वानां पङ्क्तेः तीक्ष्णैः खुरपुटैरुपरि उड्डीयमानैः धूलिसमूहैः लोकालोकपर्वतौ अभिव्याप्य सर्वत्र प्रकाशराहित्ये जाते सर्वे लोका रात्रिरिति भ्रमेण सर्वकर्माणि परित्यज्य विश्रमं समीहन्ते, रात्रिभ्रान्त्यैव विरहशोकाग्निव्याकुलतया चक्रवाका रुदन्ति, तथैव सूर्यप्रकाशं विना उल्लूका नन्दन्ति। आलोकालोकेत्यादौ अभिव्याप्तौ आङा अव्ययीभावसमासः; अतुलपदेन निरालोकस्य अन्धकारस्य गाढत्वं सूच्यते। समेषां लोककोकोल्लूकानां धूलिजालधर्मिकाणि रजनित्वरूपैकप्रकाराणि ग्रहणानि, भ्रमरूपेषु ग्रहणेषु प्रकारभेदो

विवक्षितः। एकत्वं जातौ, अनेकग्रहीतृकस्यैकस्य ग्रहणस्याप्रसिद्धेः। तेन द्वयोर्बहूनां वा ग्रहणं निमित्तवशादिति तु वस्तुकथनमात्रम्।

उदाहरणम्—

'नरैर्वरगतिप्रदेत्यथ सुरैः स्वकीयापगे-
त्युदारतरसिद्धिदेत्यखिलसिद्धसङ्घैरपि।
हरेस्तनुरिति श्रिता मुनिभिरस्तसङ्गैरियं
तनोतु मम शंतनोः सपदि शन्तनोरङ्गना ॥

---

नास्ति, अनेकप्रकारकत्वाभावान्नातिव्याप्तिः। ऐकत्वं ● सूत्रस्य ग्रहणमित्यत्रैकवचनप्रतिपाद्यम्। वस्तुकथन ● एकवस्तुनोऽनेकग्रहीतृभिर्विभिन्नप्रकारेण ग्रहणे वस्तुतो वासना-भावनादिकारणानां फलानाञ्च विभेदः स्यादेव, अतो वचनमन्तराऽपि लभ्यं निमित्तमुक्तम्।

अत्र मर्मप्रकाशः—

कीर्तौ विस्फूर्तिमत्यां ते मृणालक्षीरशङ्किनः।
द्वयेऽपि नागास्तन्वन्ति जिह्वान्तोल्लोलनं मुहुः ॥

इति भ्रान्तिमदुदाहरणे एकस्या एव कीर्तेरनेकेन ग्रहीत्रा मृणालक्षीररूपत्वानेकप्रकारेणोल्लेखनमस्तीति तत्रातिव्याप्तिनिरासाय निमित्तभेदादित्यर्थकं निमित्तवशादिति आवश्यकम्। तत्र कीर्तिगतं धावल्यमेकमेवोल्लेखद्वयेऽपि निमित्तमिति वाच्यम्, स्वस्वप्रियाहारलिप्सारूपनिमित्तभेदस्यापि तत्र सत्त्वात् संग्राह्यत्वादिति भावः। किञ्च भ्रान्तिमति निश्चयो निवेशितोऽत्र च शङ्का शब्दतः समुपपादि, जिह्वान्तोल्लोलनन्तु शङ्कयाऽपि संभवति। तथा च ग्रहणविशिष्टं ग्रहणमुल्लेखः वै० स्वसमानधर्मिकत्वस्वप्रकारभिन्नप्रकारकत्वस्वाश्रयासमवेतत्वैः सम्बन्धैः। यत्तु काव्यप्रकाशटीकादौ अतिशयोक्तावन्तर्भावनम्, तत्तु अतिशयोक्तेरनुगतलक्षणाभावाद् न समीचीनम्। अतिशयोक्तिप्रकरणे पण्डितराजेन अन्यतमत्वेनानुगमासम्भवात् तद्भेदानामेव अलङ्कारान्तरत्वमाशङ्कितम्। तर्हि का संभावना यदियं स्वविषयान् लुण्ठयन्ती अतिशयोक्तिरन्यान् संग्रहीष्यति। किञ्च भवतु नाम एकस्याभिन्नस्य भेदेन वर्णनकृता चमत्कृतिरतिशयोक्तिकृतिः, परं तदपेक्षया विलक्षणश्चमत्कारो ग्रहीतृभेदप्रयुक्तः कथमतिशयोक्तिचमत्कृत्याः कुक्षौ मास्यति ?

नरै ● इयं शन्तनोराज्ञोऽङ्गना गङ्गा मम तनोः शं कल्याणं विस्तारयतु। एषा गङ्गा च सत्पुरुषैः तद्गतेः प्रदात्रीति सेविता, स्वर्गो मोक्षो भगवद्भक्तिर्वा

अत्र च लिप्सारुचिभ्यां निमित्ताभ्यामस्त्यनेकग्रहीतृक-वरगतिप्रदात्वाद्यनेकप्रकारकग्रहणसमुदायो गङ्गाविषयकरति-भावोपस्कारकः ।

शुद्ध एवात्रायमुल्लेखालङ्कारः रूपकाद्यमिश्रणात् ।

सङ्कीर्णोऽपि दृश्यते यथा—

'आलोक्य सुन्दरि' मुखं तव मन्दहासं
नन्दन्त्यमन्दमरविन्दधिया मिलिन्दाः ।
किञ्चालि पूर्ण-मृग-लाञ्छन-सम्भ्रमेण
चञ्चूपुटं चटुलयन्ति चिरं चकोराः ॥'

अत्रैकैकग्रहणरूपया भ्रान्त्या समुदायात्मक उल्लेखः सङ्कीर्णः ।

'वनितेति वदन्त्येतां लोकाः सर्वे वदन्तु ते ।
यूनां परिणता सेयं तपस्येति मतं मम ॥'

---

वरगतिः, देवैः स्वकीया नदी स्वर्णदीतिधिया सेविता, किमुत अखिलैः सिद्धानां संघैरपि उदारतराया महत्याः सिद्धेः प्रदात्रीति सेविता, सिद्धयो हि नानाविधाः, यया सिध्या सिद्धास्तत उत्कृष्टा उदारत्तरा, अस्तः संसारिकवस्तुनि सङ्ग आसक्तिर्येषां तैर्भक्तिमात्रलिप्सुभिर्मुनिभिः भगवच्छरीरभूता गङ्गेति संसेविता चतुर्भिरिति शब्दैर्निमितत्वं द्योत्यते नैमित्तिकचतुष्टयस्य । नरसमवेतंगङ्गाधर्मिकं वरगति-प्रदात्वप्रकारकम्, वरगतिलिप्सानिमित्तकं श्रयणनिमित्तं ग्रहणमिति रीत्या ग्रहणा-नांस्वरूपं वर्णनीयम् । पस्कारक ● अलङ्कारत्वोपयोगि अन्यविरहसहकृतोपस्कार-कत्वं वर्णितम् । भ्रान्तिमता संकीर्णस्योदाहरणमाह आलोक्य ● भ्रान्तिद्वय-रूपोल्लेखः । भ्रमरसमवेता मुखधर्मिणी अरविन्दत्वप्रकारिका सौरभलिप्सा-निमित्तका अमन्दानन्दहेतुः प्रथमा भ्रान्तिः, चकोरसमवेता मुखधर्मिणी चन्द्रत्व-प्रकारिका किरणपानेच्छाप्रयुक्ता चञ्चूपुटचालनहेतुः द्वितीया भ्रान्तिः । वनिते ● एतन्नायिकाधर्मिकं सर्वलोकसमवेतं वनितात्वप्रकारकमेकं ग्रहणम्, एतन्नायि-काधर्मिकं मम समवेतं वनितात्वनिषेधसंवलितं युवसम्बन्धितपस्यात्वप्रकारकं ग्रहणम् । तपस्येति मम मतं वनितेति सर्वेषां लोकानां मतम् । तेन मम मते

अत्र विपयतावच्छेदकस्य परसम्मतत्वेन निषेध्यतयोपन्यासादपह्नुत्या सङ्कीर्णः ।

अप्पयदीक्षितास्तु—"एवमपि यदि—

'कान्त्या चन्द्रं विदुः केचित् सौरभेणाम्बुजं परे ।
वक्त्रं तव वयं ब्रूमस्तपसैक्यं गतं द्वयम् ।।

इत्यपह्नवोदाहरणविशेषेऽतिव्याप्तिः शङ्क्या, तदानीमनेकधोल्लेखनं निषेधास्पृष्टत्वेन विशेषणीयम् । तत्राद्योल्लेखनद्वयं परमतत्वोपन्याससामर्थ्याद्गम्यमाननिषेधमिति नातिव्याप्तिः" इत्याहुः । तन्न । 'द्विविधश्चायमुल्लेखः शुद्धोऽलङ्कारान्तरसङ्कीर्णश्च' इत्युक्त्वा "श्रीकण्ठजनपदवर्णने—'यस्तपोवनमिति मुनिभिरगृह्यत' इत्यादौ शुद्धः, 'यमनगरमिति शत्रुभिः, वज्रपञ्जरमिति शरणागतैः' इत्यादौ भ्रान्तिरूपकादिसङ्कीर्णः" इति स्वयमेवोक्तत्वात् । इहाप्यपह्नुत्या सङ्कीर्णं उल्लेख इत्यस्य सुवचत्वात् । यदि चैवंविधापह्नुतिवारणाय निषेधास्पृष्टत्वं विशेषणमुच्यते तदा—

---

इयं न वनितेति निषेधः फलति इत्याह परमभ्मतत्वेनेत्यादिना । विषयतावच्छेदकम् आरोपप्रकारीभूतं वनितात्वम् ।

एवं● पूर्वोक्तसर्वविशेषणदानेऽपि यदिपदेन दीक्षितस्य संकीर्णवारणे आग्रहः सूच्यते । मुखधर्मिकं चन्द्रत्वप्रकारकं प्रथमम्, अम्बुजत्वप्रकारकं द्वितीयम् एतद्द्वयनिषेधसम्वलितं 'चन्द्रत्वकमलत्वप्रकारकं तृतीयं ग्रहणम्', चन्द्रत्वकमलत्वयोर्विरोधनिरासाय द्वयं तपसा एक्यं गतम्, एक्य चन्द्राम्बुजयोरभेदः । वर्णने● हर्षचरितस्थोभ्रान्तिर्यमनगरमित्यत्र, रूपकं वज्रपञ्जरम् इत्यत्र ।

'कपाले मार्जारः पय इति करांल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान् बिसमिति करी सङ्कलयति।
रतान्ते तल्पस्थान् हरति वनिताऽप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति ॥"

इति त्वदुदाहृतभ्रान्तावतिप्रसङ्गः कथं नाम वार्येत। मार्जाराद्यनेकग्रहीतृकानेकधोल्लेखनस्य तत्रापि सत्त्वात्। स्वस्वप्रियाहारलिप्सारूपनिमित्तभेदाच्च। तस्मात् सङ्कीर्णनिवारणाय यत्नोऽनर्थक एव।

संशयसङ्कीर्णो यथा—

'भानुरग्निर्यमो वाऽयं बलिः कर्णोऽथवा शिबिः।
प्रत्यर्थिनश्चार्थिनश्च विकल्पन्त इति त्वयि ॥'

अत्र द्वयोर्ग्रहणयोः प्रत्येकं संशयत्वम् समुदायस्य तूल्लेखता। अयं च स्वरूपमात्रोल्लेखे स्वरूपोल्लेखः प्रागेव निरूपितः।

फलानामुल्लेखे फल्लोल्लेखो यथा—

'अर्थिनो दातुमेवेति त्रातुमेवेति कातराः।
जातोऽयं हन्तुमेवेति वीरास्त्वां देव! जानते ॥'

---

**कपाले**● कपाले गतान् चन्द्रकिरणान् दुग्धमितिभ्रान्त्या आस्वादते माजारः। वृक्षपल्लवविवरेषु गतान् विसमिति विज्ञाय हस्ती संगृह्णाति। वनिता रतं कृत्वा शय्यागतान् किरणान् श्वेतशाटीं मत्वा उपसंहरति। **कथंनाम**● निषेधास्पृष्टत्वेन विशेषणेऽपि इत्यर्थः। निषेधास्पृष्टत्वेनेव भ्रान्त्या रूपकेणेत्याद्यसंस्पृष्टत्वेन विशेषणे विभ्रमोल्लेखानुभवविरोध आपद्येत। लक्षणे ग्रहणं ज्ञानापरपर्यायं निविष्टं न तु निश्चयरूपमिति संशयसमुदायेऽप्युल्लेखमुदाहरति **भानु**● विकल्पः संशयः; अर्थिनोयाचकाः, बलि-कर्णः अथवा शिविः इति विकल्पन्ते, इत्येकं विकल्पनम् शत्रवश्च अयं भानुः। अग्निः यमो-वेति संशेरते। **अर्थिनो**● कश्चिद् राजानं स्तौति, अस्य जन्म दानफलमेवेति याचकानाम्, त्राणफलकमिति कातराणाम्, हननफलकमेवेति शत्रूणां ज्ञानम्।

हेतूनामुल्लेखे हेतूल्लेखो यथा—

'हरिचरण-नखर सङ्गादेके हरमूर्धस्थितेरन्ये ।
त्वां प्राहुः पुण्यतमामपरे सुरतटिनि ! वस्तुमाहात्म्यात् ॥'

अत्र प्रकारान्तरेणाप्युल्लेखो दृश्यते — यत्रासत्यपि ग्रहीत्रनेकत्वे विषयाश्रयसमानाधिकरणादीनां सम्बन्धिनामन्यतमानेकत्वप्रयुक्तमेकस्य वस्तुनोऽनेकप्रकारत्वम् ।

अयमपि द्विविधः, शुद्धोऽलङ्कारान्तरसङ्कीर्णश्च ।

शुद्धो यथा—

'दीनव्राते दयार्द्रा निखिलरिपुकुले निर्दया किं च मृद्वी
काव्यालापेषु तर्कप्रतिवचनविधौ कर्कशत्वं दधाना ।
लुब्धा धर्मेष्वलुब्धा वसुनि परविपद्दर्शने कांदिशीका
राजन्नाजन्मरम्या स्फुरति बहुविधा तावकी चित्तवृत्तिः ॥'

---

**हरिचरण**● सुरतटिनि हेगङ्गे ! गङ्गायाः पुण्यतमता विष्णुपादनखसङ्गहेतुका इत्येकेषाम्, शिवशिरोनिवासहेतुका इत्यपरेषाम्, वस्तुनोगङ्गायाः स्वतन्त्रमाहात्म्यहेतुका इत्यन्येषाम् ज्ञानम् । यथा हरिचरणनखराणि हरमस्तकञ्च स्वयमेव पुण्यतमानि तथा गङ्गापीति वस्तुमाहात्म्यशब्देनोच्यते । **प्रकारान्तरेण**● प्रकारश्च प्राक्तनोज्ञानरूपोऽयन्तु वस्तुस्वरूपो ज्ञेयरूपः, प्रथमोग्रहीतृभेदाधीनोऽयं सम्बन्धिभेदाधीनः । सम्बन्धिभेदप्रयुक्तं वस्तुनोऽनेकप्रकारकत्वमुल्लेख इति फलितम् । सम्बन्धिविशेषाश्च विषया आश्रयाः समानाधिकरणादिरूपाः, समानमधिकरणं येषान्ते सहचरादिरूपा इत्यर्थोऽग्रिमोदाहरणेन व्यक्तीभविता । अभेदबोधप्रयोजकसमानविभक्तिकपदेन प्रतिपाद्यत्वेन सामानाधिकरण्यम् ।

**दीनव्रातेः**● राज्ञश्चित्तवृत्तेः प्रशंसया राजप्रशंसापरमिदम् । सप्तम्यन्तार्थाश्चित्तवृत्तेर्विषयाः प्रथमान्तार्थाः प्रकाराः । हे राजन् ! तव चित्तवृत्तिः अनेकप्रकारा जन्मत एव रमणीया शोभते दयामृदुकर्कसलोभभयादिपदार्थाः सविषयाः तेषां सम्बन्धे विषयसप्तमी । ते च विभिन्नाविषयाः सम्बन्धिनः चित्तवृत्तेर्बहुविधात्वप्रयोजकाः इति पादत्रयेण वर्ण्यन्ते, दीनसमूहेषु दयावती काव्येषु आलापेषु वाग्व्यवहारेषु च मृद्वी कोमला, मृद्वीकाव्यात्लापेषु इति

अत्र दीनव्रातादीनां विषयाणामनेकत्वाच्चित्तवृत्तेरनेकविधत्वम्। राजविषयकरतिभावोपस्कारकोऽयमुल्लेखः। यद्यपि चित्तवृत्तिव्यक्तीनामत्रैक्यं नास्ति, तदीयचित्तवृत्तित्वेन सामान्येन तासामेकत्वं विवक्षितम्।

यथा वा—

'कातराः परदुःखेषु निजदुःखेष्वकातराः।
अर्थेष्वलोभा यशसि सलोभाः सन्ति साधवः॥'

अत्रापि साधवः सन्तीत्यनेन मृता अपि न मृतास्ते, इतरे पुनरमृता अपि मृता एवेत्यर्थाभिव्यक्तिद्वारा व्यज्यमाने साधूत्कर्षविशेषे उपस्कारकोऽयम्।

---

छेदे विविधालापेषु द्राक्षा द्राक्षासदृशी परमेतादृशोच्छेदे छन्दोविरतिः क्लेशकरी तर्कस्य कुतर्कस्य प्रतिवचनमुत्तरं प्रतिकूलस्तर्को वा तद्विधौ कर्कशा, परस्य पराया वा विपदोदर्शने कान्दिशीका भयद्रुता जायते यथा श्रुतकोशात्। किमपि अप्रियं न जायेतेति भयेन प्रतिकारविधाने द्रुता त्वरावती जायते। कस्यां दिशि गन्तव्यमिति भयव्याकुला धीर्भवति। तत्र भयं विहाय व्याकुलतामात्रं लक्ष्यते, परविपदोनिवारणे व्याकुला इत्यप्यर्थः, पृषोदरादित्वाच्च निपातयन्ति। कदि वैकल्ये 'शीकृ सेचने' धातुभ्यां मुकुटरीत्या व्याख्याने परविपद्दर्शने दयावशाद् रोदनादिपरा इत्यर्थो विविच्यैव विधेयः। कस्यां दिशि गन्तव्यमिति या आहेत्यर्थे प्राग्वहतेष्ठगितिसूत्रस्थेन तिदाहेति 'माशब्दादिभ्य' उपसंख्यानम् इतिवार्तिकेन ठकि पृषोदरादित्वान्निपातनम्। अन्ये तु कन्दोवैकल्यं मत्वर्थीयेना कन्दिन्शब्दः, शीकेति इगुपधककप्रत्ययान्तः, कन्दिशीका वैकल्यप्रयुक्ताश्रुपातादयः। तत्सम्बन्धात् 'अण् च' इति सूत्रस्थेन 'ज्योत्नादिभ्य उपसंख्यानम्' इतिवार्तिकेन अण्प्रत्ययः, टाप् तु नमुने सूत्रस्थ टायामिति भाष्यप्रयोगादजादेराकृतिगणत्वात्। पस्कारको● अलङ्कारसामान्यलक्षणसमन्वयाय राजरतेरुपस्कारकत्वं वर्णितम्। विवक्षितम्● एकस्य वस्तुन इति मूललक्षणसमन्वयायेत्यादिः।

कातराः● साधुधर्मिकं कातरत्वाकातरत्वालोभत्वसलोभत्वप्रकारकमनेकविधं ग्रहणम्। सन्तीत्यनेन● भवन्तीत्यर्थकवर्तमानसत्त्वद्योतनद्वारा।

यथा वा—

'तुषारास्तापसव्राते तामसेषु च तापिनः ।
दृगन्तास्ताडकाशत्रोर्भूयासुर्मम भूतये ॥'

पूर्वपद्ययोर्विषयानेकत्वप्रयुक्तम्, इह त्वाश्रयानेकत्वप्रयुक्तमनेकविधत्वं दृगन्तानाम् ।

'विद्वत्सु विमलज्ञाना विरक्ता यतिषु स्थिताः ।
स्वीयेषु तु गरोद्‌गारा नानाकाराः क्षितौ खला ॥'

अत्र विद्वदादिसहचरभेदप्रयुक्तं खलानामनेकविधत्वम् ।

एवमन्येषां सम्बन्धिनां भेदेऽप्यूह्यम् ।

सङ्कीर्णो यथा—

'गगने चन्द्रिकायन्ते हिमायन्ते हिमाचले ।
पृथिव्यां सागरायन्ते भूपाल ! तव कीर्तयः ॥'

अत्रोपमया आपाततः प्रतीयमानया, पर्यवसितया चोत्प्रेक्षया ।

---

आश्रयानेकत्वप्रयुक्तमुदाहरति तुषाराः● तुषारतापसयोर्योगे औपश्लेषिकी सप्तमी, अतस्तापसव्रातादीनामाश्रयत्वम्, तामसास्तमोगुणप्रधाना राक्षसादयः, ताडकाशत्रोरामस्य भक्तेरुपस्कारः । समानाधिकरणोदाहरणमाह विद्वत्सु● विद्वत्सु समवेतेषु विदुषां समाजे इत्यर्थः । सहचराणां विद्वद्यतिस्वीयानां सम्बन्धभेदात् खलानां विमलज्ञानवत्त्व. विरागवत्त्व, विषोद्‌गारवत्त्वानेकविधत्वं वर्णितम् । अतः सहचरसामानाधिकरणस्योदाहरणम् ।

गगने● हे भूपाल ? तव कीर्तयः गगने चन्द्रिका इवाचरन्ति, उपमायां क्यङोविधानात् । एवमग्रिमयोरपि उपमा शाब्दिकी, व्यञ्जनया चन्द्रिकाप्रभृतिसदृशाचरणस्य कीर्तौ सम्भावना, गगने एकस्याश्चन्द्रिकाकोटेर्न तु कीर्तिकोटे र्ज्ञानमिति सम्भावना । अतएव पर्यवसितयेत्युक्तिः । उत्प्रेक्षया च संकीर्यते उल्लेखः ।

'उपरि करवालधाराकाराः क्रूरा भुजङ्गमपुङ्गवात् ।
अन्तः साक्षाद् द्राक्षादीक्षागुरवो जयन्ति केऽपि जनाः ॥

अत्रोपमाव्यतिरेकाभ्यां तयोः समुच्चयेनोत्प्रेक्षया च सङ्कीर्णः ।

'यमः प्रतिमहीभृतां हुतवहोऽसि तन्नीवृतां
सतां खलु युधिष्ठिरो धनपतिर्धनाकाङ्क्षिणाम् ।
गृहं शरणमिच्छतां कुलिशकोटिभिर्निर्मितं
त्वमेक इह भूतले बहुविधो विधात्रा कृतः ॥'

---

**उपरि●** उपरि करवालस्य धारा इव आकारो येषान्ते समासलुप्तोपमा, हृदि कोमला अपि उपरितः कठिना इत्यर्थः भुजङ्गानां श्रेष्ठात् शेषनागादितोऽपि क्रूराः, न निर्धारणे इति निर्धारणषष्ठयाः समासनिषेधेऽपि सम्बन्धषष्ठया समासः, सप्तमीतियोगविभागात् सप्तमीतत्पुरुषो वा । अथवा प्रशंसावचनैश्चेत्यनेन कर्मधारय एवास्ताम् । भुजङ्गापेक्षया अधिकक्रूरत्ववर्णनेन व्यतिरेकः । अन्तर्हृदि साक्षान्न तु शिष्यपरम्परया द्राक्षायामाधुर्यदीक्षाया गुरवः, द्राक्षायां माधुर्यं येषां हृदयमाधुर्यादागतमित्युत्प्रेक्षा, एवं भूताः केऽपि जनाः सर्वोत्कर्षेण वर्तन्ते । नेह भवति विभ्रमे जः इति नियमात् पुंगवादित्यत्र छन्दोभङ्गमापादयन्ति, अन्ये नियमस्य सर्वैरादराभावात् समादधते, अपरे गीतिकया गतार्थयन्ति । अनयोः पद्ययोराश्रयविषयभेदः स्फुटतां नेतव्यः ।

**यमः प्रति●** समक्षं राजानं कविर्वर्णयति । शत्रूणां यम इति तेषां राजधर्मिकोयमत्वप्रकारकोभ्रमोऽपि संभवति, तन्नीवृतां जनपदानाम्, धनपतिः कुवेरोऽक्षय्यकोषत्वात् । शरणार्थिनां वज्राणां कोटिभिः तीक्ष्णधाराभिरग्रभागैर्वा अथवा कोटिसंख्याकैः कुलिशैर्निर्मितम्, तेन महत्त्वं दृढता च सूच्यते, येन विरोधिनः सद्यो विनश्येयुः, अत्रांशे प्रायोभ्रान्तिर्न वर्णनीया अन्यथा अशरणे राजनि शरणत्वभ्रान्तिरुत्कर्षं राज्ञो न पोषयेत् । अत्र मर्मप्रकाशः-इदमपि चिन्त्यम्-ज्ञानस्यानिबन्धने च ज्ञानपर्यन्तस्योल्लेखनस्य कथमप्यत्रासम्भवात्, नियतव्यञ्जकसामग्र्यभावेनार्थस्याभावाच्च । इतोऽपि भ्रान्तिरपि सम्भवतीतिचिन्त्यमिति बोध्यम् इति । अत्र चिन्ता-यमत्वेन रूपणे शत्रूणां भयं व्यज्यते, भयञ्च ज्ञानद्वारा पर्यवस्यति अतोज्ञानव्यञ्जकसामग्र्यवश्यं वर्तते, व्यञ्जके नियतत्वमालङ्कारिकैर्नाभ्युपेयते व्यञ्जनायाः, अनुमानेऽर्थापत्तौ वा नियतत्व-

अत्र कविना यमत्वादिना रूपेण राज्ञो रूपवतः करणाद्रूपकेण, विपक्षभूपालादीनामेतस्मिन्नायाते यमत्वादिना भ्रान्तिरपि सम्भवतीति भ्रान्तिमता, विपक्षभूपालादिभिरनेकैर्ग्रहीतृभिर्यमत्वादिभिरनेकैर्धर्मैरुल्लेखनात् प्रागुक्तोल्लेखप्रकारेण च सह सङ्कीर्णोऽयं सम्बन्धिषष्ठ्यन्तभेदप्रयुक्तवर्ण्यानेकविधत्वक उल्लेखः ।

अत्रेदं बोध्यम्—प्रथमनिरूपितोल्लेखप्रकारे 'यं महाविष्णुरिति वैष्णवाः, शिव इति शैवाः, यज्ञपुरुष इति याज्ञिकाः, स्वभाव इति लौकायतिकाः, ब्रह्मेत्यौपनिषदाः वदन्ति

---

व्याप्तेरपेक्षेति मन्यते च, नियतव्यञ्जकाभावे न सर्वैरभिव्यज्येतैतावदेव, अतएव प्राक्सम्भवतीत्युच्यते, राज्ञोयमत्वेन स्फूर्तः भ्रान्तौ स्फुटं पर्यवसानञ्च । अत्र यम हुतपह-युधिष्ठिरधनपति-गृहाणामभेदवर्णनेन चत्वारि रूपकाणि तत्तद्विपक्षभूपालादीनां यमत्वादिधिया तिस्रोभ्रान्तयः सम्भवन्ति । प्रागुक्तवर्ण्या● पूर्ववर्णितोल्लेखप्रकारे एकस्य वस्तुनोऽनेकप्रकारकग्रहणानि अभिप्रेतानि, अस्मिन् प्रकारे तु एकस्य वस्तुनोऽनेकविधत्वमभिप्रेतमितिभावः । यत्तु मर्मप्रकाशे शरणेच्छूनां रक्षकगृहत्वप्रमयैव राजोत्कर्ष इत्यादि इत्थमालोचनीयम्—बाधकग्रहात्प्राग्भ्रान्तिस्तु कार्यं सम्पादयति पश्माहार्यं ज्ञानन्तु स्वकालेऽपि किञ्चिन्न करोति तदा रूपकेण कथं राजोत्कर्षः ? तस्माद् यथा रूपकस्थले स्ववृत्तिसाधारधर्मवत्ताया उपमेये स्फुटं स्फोरणादेवोपमेयोत्कर्षो मन्यते तथा सादृश्यमूलया भ्रान्त्यापि स्वसम्पादकसादृश्यस्योत्कर्षः, सादृश्योत्कर्षेण चोपमेयोत्कर्षः प्रसिद्धयत्येव । तथैव च राज्ञ उत्कर्षः । अतएवोन्मादादिभिन्ना रजतभ्रान्तिश्चाकचिक्यवति रङ्गादावेव न तु इङ्गालादौ ग्रन्थकृता भ्रान्तिविषये सम्भवतीत्युच्यते । सम्भवति चेत्सम्यक्, न चेन्न नो हानिरिति अभिप्रेयते, किञ्च ज्ञानोपस्थानाय अभिधा नास्ति चेल्लक्षणोपास्यताम्, तत्रापि बाधकं चेत् स्वतः सिद्धायाव्यञ्जनायाः कृते का सामग्री अन्वेषणीया ? बहुषु प्रागुक्तेषु भ्रान्त्युल्लेखोदाहरणेषु भ्रान्तिबोधकपदादेः प्रयोगो न दृश्यते तेनेदं प्रतिभाति यदन्यभ्रान्तिसम्पादकसत्त्वे बोधकपदादेरभावेऽपि भ्रान्तिः कल्प्यते । अतएवाग्रेशिष्टेषु सदयो दुष्टेषु कराल इतिप्रघट्टके विद्यमानस्यापि ज्ञानांशस्येति वक्ष्यते ग्रन्थकृता

सोऽयमादिपुरुषो हरिः' इत्यादौ तत्तद्ग्रहीतृकतत्तत्प्रकारकज्ञानसमुदायस्य चमत्कारजनकताया अनुभवसिद्धत्वेनालङ्कारत्वम्। द्वितीये तु प्रकारे 'यः शिष्टेषु सदयः दुष्टेषु करालः' इत्यादौ तत्तद्विषयभेदभिन्नस्य प्रकारसमुदायमात्रस्य तथात्वम्। न तु विद्यमानस्यापि ज्ञानांशस्य, चमत्कारित्वेनाननुभवात्। चमत्कारनिबन्धनो ह्यलङ्कारभाव उपमादीनाम्। अत एवास्माभिः 'विषयाद्यन्यतमानेकत्वप्रयुक्तमेकस्य वस्तुनोऽनेकप्रकारत्वम्' इति द्वितीय उल्लेखो लक्षितः।

---

किन्नामाभिप्रायान्तरं स्यात्तत्र विद्यमानतायाम् ?। प्रकारसमुदाय● सदयत्वकरालत्वसमुदायः। मात्रपदेन सदयत्वकरालत्वादिप्रकारकग्रहणस्य व्यवच्छेदः। उपमादीनाम्● ननु भ्रान्तिज्ञानरूपोल्लेखोदाहरणेष्वपि कतिपयेषु ग्रहणवाचकपदाभावाद्विषयनिरूपणादेव ज्ञाननिरूपणमवसेयम्, तत्कथमत्रापि न ज्ञानरूपणमिति चेन्न तत्र ज्ञानप्रयोज्यकार्याणां निरूपणादत्र च तथाऽभावात्। उल्लेखोलक्षितः● इदमत्रावधेयम्—अत्रापि अनेकप्रकारकत्वमितिप्रतिपादनाज्ज्ञानमाक्षिप्तं भवति, अन्यथा एकस्य राज्ञोयमत्वाग्नित्वादीनि कथंप्रकाराः स्युः। प्रकारशब्दोज्ञानेन साकाङ्क्षश्च। किन्तु एकस्य वस्तुनोराज्ञः शत्रुसमवधाने यमत्वप्रकारकं तज्जनपदसमवधानेऽग्नित्वप्रकारकं ज्ञानं भवतीत्येवायाति, 'परमयमेव भेदो यत्पूर्वोक्तप्रकारे तत्तत्प्रकारकज्ञाने चमत्कारितया तात्पर्यमत्र च द्वितीयप्रकारे प्रतिमहीभृत्सम्बन्धप्रयोज्यं यद्राज्यविशेष्यकं ज्ञानं तत्र च यमत्वं प्रकारः। अनेकप्रकारकत्वमित्यस्यापि वस्तुनः स्वविशेष्यकज्ञानेऽनेके प्रकाराभवन्तीत्येवार्थः। तथा च वस्तुविशिष्टत्वं द्वितीयः प्रकारः—वै स्वतादात्म्य, स्वसम्बन्धिविषयाश्रयसहचरसम्बन्धभेदप्रयोज्यस्ववृत्तिधर्मभिन्नानेकप्रकारकज्ञानविशेष्यत्वेत्युभाभ्याम् इति संक्षेपः। तथा च ग्रहणविशिष्टग्रहणत्ववस्तुविशिष्टत्वान्यतरवत्त्वं सामान्योल्लेखलक्षणम्। इत्येवाहुःपर्यन्तस्य तात्पर्यम्। परे तु अयमभिप्रायः—यदि प्रकारद्वयेऽपि ज्ञानपर्यन्तानुधावनस्य आवश्यकता केवलं विशेष्यविशेषणविपर्यासे भेदः, प्रथमे ज्ञानस्य विशेष्यता द्वितीये च ज्ञानस्य प्रकारता, ज्ञानकृतेऽपि चमत्कारे विषयउपयोगी भवति, विषयमवधूय ज्ञानस्याकिञ्चित्करत्वात्, अतस्तत्रापि विषयकृतं चमत्कारमाश्रित्य

एवं च 'लक्षणद्वयान्यतरत्वमुल्लखसामान्यलक्षणतावच्छेदकम्' इत्याहुः। परे तु 'प्रकारद्वयेऽपि वर्ण्यवृत्तित्वेन भासमानप्रकारसमुदाय एवोल्लेखः' इत्यपि वदन्ति।

अथोल्लेखस्य ध्वनिः—

यथा—

'अनल्पतापाः कृतकोटिपापा गदैकशीर्णा भवदुःखजीर्णाः।
विलोक्य गङ्गां विचलत्तरङ्गाममी समस्ताः सुखिनो भवन्ति ॥'

अत्र पूर्वार्धोदीरितानां चतुर्णां विलोकनकर्तॄणाम् सुखित्वोक्त्या क्रमेण ताप-पाप-रोग-भव-नाशकत्वप्रकारकाणि ग्रहणान्याक्षिप्यन्ते।

---

ज्ञानविषयीभूतवस्तूनामेवोल्लेखता न ज्ञानस्य, अन्यतरत्वगुरुताप्रयुक्तः क्लेशोऽपि नायतति, इति। वर्ण्य ● उपमेयवृत्तयः, भासमान ● ज्ञानविषयीभूतानां प्रकाराणाम्। तथा च उपमेयवृत्तयो ज्ञानविषयीभूता ये प्रकारास्तेषां समुदाय-उल्लेख इति फलितम्, ज्ञानञ्च वर्ण्यविशेष्यकमाहार्यानाहार्यसंशयादिसाधारणम्; रूपकसंकीर्णे आहार्यस्याभीष्टत्वात्, वर्ण्यविशेष्यकः शाब्दबोधो व्यञ्जनाजन्योऽप्यादेयः। तथा राजत्वप्रकारको न गृह्येत यमत्वादिप्रकारकएवैतदर्थं वर्ण्यवृत्तित्वसमानाधिकरणधर्मभिन्नधर्मप्रकारकोऽपि स्यात्। अर्थाद्येनप्रकारेण प्रस्तुतस्य वर्ण्यत्वं तच्छक्यतावच्छेदकभिन्नप्रकारकः। तथा च वर्ण्यवाचकपदविशिष्टमनेकविधं ज्ञानं तदीयप्रकारसमुदायः उल्लेख इति लक्षणं फलितम्। वै. स्वार्थविशेष्यकत्व, स्वशक्यतावच्छेदकाप्रकारकत्वोभाभ्यां सम्बन्धाभ्यामिति संक्षेपः। विस्तरस्तु काठिन्यभिया न तन्यते।

॥ अथ ध्वनिः ॥

**अनल्प** ● बहुतापाः, प्रधानेन रोगेण शीर्णाः संसारदुःखैर्जर्जरीभूताः, **नाशकत्व** ● ताप-पाप-रोग-भवानां चतुर्णामन्वयः। पूर्वार्धोपाताश्चत्वारो-ग्रहीतारः, विचलदित्यत्र विवलदित्यपि पाठः। एका गङ्गा धर्मिणी **क्षिप्यन्ते** ● अनल्पतापसमवेतं गङ्गाधर्मिकं तापनाशकत्वप्रकारकं ग्रहणम्, एवमेव अन्यान्यपि त्रीणि ग्रहणानि न कथमप्युपातानीतिभावः धनिकस्य मुखं निरीक्षत इत्यादौ दैन्यं धननिमित्तकत्वं च यथा फलति।

अयं च शुद्धस्योल्लेखस्य ध्वनिः ।

सङ्कीर्णस्य यथा—

'स्मयमानाननां तत्र तां विलोक्य विलासिनीम् ।
चकोराश्चञ्चरीकाश्च मुदं वरतरां ययुः ॥'

अत्र ध्वन्यमानया एकैकग्रहणरूपया भ्रान्त्या तदुभयसमुदायात्मा उल्लेखः सङ्कीर्णः ।

न चात्र भ्रान्तेरेव चमत्कार इति शक्यापह्नव उल्लेखः । अनेककर्तृकानेकधाग्रहणस्यालङ्कारान्तरविविक्तविषयस्य चमत्कृतेरिहापि सत्त्वात् ।

द्वितीयोल्लेखस्य ध्वनिर्यथा—

'भासयति व्योमगता जगदखिलं कुमुदिनीर्विकासयति ।
कीर्तिस्तव धरणिगता सगरसुतायासमफलतां नयते ॥'

अत्राधिकरणभेदप्रयुक्तमेकस्यामेव कीर्तौ चन्द्रिकात्वसागरत्वरूपानेकविधत्वं रूपकसङ्कीर्णं ध्वन्यते ।

---

**स्मयमानाननाम्** ● स्मितमुखीम् मुदोहेतुत्वेन चकोरस्य विलासिनीविलोकनं चन्द्रत्वप्रकारकं भ्रमरस्य पद्मत्वप्रकारकं विलोकनमिति ध्वन्यते, विलोकनद्वयं भ्रान्तिः, उभयत्र भ्रान्तौ पर्याप्त उल्लेखः । प्रत्येकञ्च भ्रान्तिः । **सत्त्वात्** ● विविक्तविषयजन्यचमत्कारस्य सत्त्वात् ।

**भासयति** ● कीर्तौ चन्द्रिकात्वसागरत्वरूपानेकप्रकारकत्वेन उल्लेखो ध्वन्यते चन्द्रिकात्वेन व्योमगता धरणिगता च सागरत्वेन सगरसुतानां सागरसम्पादनाय आयासस्तस्य असफलताम् सागरकार्यस्य कीर्त्यैव सम्पादनात् । **अधिकरण** ● व्योम धरणिश्चाधिकरणम्, आश्रयभेदप्रयुक्तमनेकप्रकारकत्वम् । कीर्त्या सह चन्द्रिकासागरयोरूपकम् ।

**इति उल्लेखनिरूपणम् ।**

**अथापह्नुतिः -**

**उपमेयतावच्छेदकनिषेधसामानाधिकरण्येनारोप्यमाणमुपमानतादात्म्यमपह्नुतिः ।**

रूपकवारणाय तृतीयान्तम् । अस्यां चोपमेयतावच्छेदकस्य निषेधादुपमेयतावच्छेदकोपमानतावच्छेदकस्योर्विरोधो गम्यते । रूपके तु तयोः सामानाधिकरण्यप्रत्ययात् स निवर्तते ।

उदाहरणम्—

'स्मितं नैतत् किन्तु प्रकृतिरमणीयं विकसितं
मुखं ब्रूते मूढः कुमुदमिदमुद्यत्परिमलम् ।
स्तनद्वन्द्वं मिथ्या कनकनिभमेतत्फलयुगं
लता रम्या सेयं भ्रमरकुलनम्या न रमणी ॥'

---

## अथापह्नुत्यलङ्कारनिरूपणम्

**उपमेयता** ● तृतीयार्थो वैशिष्ट्यम् तथा च यत्रोपमेयतावच्छेदकस्य निषेधस्तत्रैवारोपविषयीभूतं यदुपमानतादात्म्यं तदेवापह्नुतिः । उपमानतादात्म्यमुपमेय एव संभवति चमत्कारीति आरोपस्य सादृश्यमूलकत्वमवसेयम् । **तृतीयान्तम्** ● मुखं चन्द्र इत्यादिरूपके मुखत्वविशिष्ट एव चन्द्रतादात्म्यमारोप्यते न तु मुखत्वस्यारोपः । **गम्यते** ● अन्यथा निषेधमन्तराऽपि उपमानतादात्म्यसत्तासिद्धौ निषेधो व्यर्थः स्यात् । **सः** ● विरोधः । भ्रान्तिरपि उपमेये उपमानतादात्म्यस्य भवति आहार्यत्वापत्तिभिया च नोपमेयतावच्छेकं निबध्यते । परं तत्रोपमेयतावच्छेदकस्य निषेधो न जायत इति न तत्रातिव्याप्तिः । **स्मितम्** ● स्मितत्वं निषिध्य स्वभावसुन्दरपुष्पादिवृत्तिविकसितत्वंमारोप्यते । मूढ इत्यनेनार्थिको मुखत्वनिषेधः । उद्यन् परिमल-सुरभिर्यस्मिस्तत् । कनकनिभम् सुवर्णसदृशम् । चतुर्थं पादे प्रथममारोपः पश्चान्निषेधः । भ्रमरकुलैर्नम्या । अत्र क्रमभङ्गरूपो दोषः । निषेधेन प्रवृत्तस्य त्यागादिति मर्मप्रकाशः । द्विविधा निषेधपूर्विका विधेयपूर्विका च तयोः संकरे न तादृशः प्रक्रमभङ्गः । नम्येत्यंशेऽतिशयोक्तिरपि अत्रानुग्राहिका । लता सम्बन्धे नमनम् तेन लतारोपो दृढः । अवयविनोरमणीत्वनिषेधस्य स्मितत्वादिनिषेधाः अवयवाः । लतारोपस्य विकसितत्वाद्यारोपाः अवयवाः । एवं रमणीत्वनिषेधस्य

इयं चानुग्राह्यानुग्राहकभावापन्नावयवकसंघातात्मकतया सावयवा ।

निरवयवेयं यथा—

'श्यामं सितञ्च सुदृशो न दृशोः स्वरूपं
किं तु स्फुटं गरलमेतदथामृतं च ।
नो चेत् कथं निपतनादनयोस्तदैव
मोहं मुदं च नितरां दधते युवानः ॥'

अत्र प्रतिज्ञातार्थवैपरीत्ये बाधकोपन्यासाद्धेत्वपह्नुतिः ।

अस्यां च नञादिभिः साक्षात्, परमतसिद्धत्वाद्युपन्यासैश्च किञ्चिद् व्यवधानेन विषयस्य निषेधे बोध्यमाने प्रायशो वाक्यस्य भेदः । मिषच्छलच्छद्मकपटव्याजवपुरात्मादिशब्दैस्तु तस्मिंस्तस्यैक्यम् । क्वचिदपह्नवपूर्वकत्वं क्वचिच्चारोपपूर्वकत्वम् क्वचिद्विषयितादूप्यविषयनिषेधयोरेकस्य शाब्दत्वमेकस्यार्थत्वम् क्वचिदुभयोः शाब्दत्वमथोभयोरार्थत्वं विधेयत्वमनुवाद्यत्वं चेति । एवमनेके प्रकाराः सम्भवन्ति ।

परं न ते वैचित्र्यविशेषमावहन्तीत्यगणनीयाः ।

एवमपि दिङ्मात्रमुपदर्श्यंते—तत्र प्रागुक्तायां सावयवापह्नुतौ प्रथमावयवेऽपह्नवपूर्वकत्वमुभयोः शाब्दत्वं विधेयत्वं वाक्यभेदश्च । द्वितीयावयवे तु वक्तृगतमूढतोक्त्या तद्गतभ्रान्ति-

---

स्मितत्वादिनिषेधाः लतारोपस्य च विकसितत्वाद्यारोपाः अनुग्राहका इत्याह इयम् ● । श्यामम् ● सितं श्वेतम् । गरलं श्यामं श्वेतञ्चामृतम् विपक्षे बाधकं तृतीयचतुर्थपादस्थम् । मोहस्य गरलकार्यत्वान्मुदस्य चामृतकार्यत्वात् । तदैव पतनकाल एव । क्वचित्सदैवेत्यपि पाठः । हेत्वपह्नुतिः ● हेतूपन्यासपुरस्सरमपह्नवः । प्रतिज्ञातोऽर्थोगरलममृतञ्च । विरहिणां कृते गरलं संयोगिनां कृतेऽमृतम् । विधेयत्वमनुवाद्यत्वम् ● अत्राप्युभयोरित्यस्य सम्बन्धः । प्रागुक्तायाम् ● स्मितं नैतदित्यादौ । प्रथमावयवे ● प्रथमपादस्थे उभयोः ● निषेधारोपयोः स्मितत्वस्य निषेधो विकसितत्वस्य चारोपः । तोक्त्या ● शब्दतोनिषेधोनोक्तः किन्तु वक्तुर्मूढत्वोक्त्या तस्य भ्रान्तत्वं

प्रतिपत्तिव्यवहिता निषेधप्रतिपत्तिरिति निषेध आर्थः । ताद्रूप्यं शाब्दम् । विधेयवाक्यभेदापह्नवपूर्वकत्वानि पूर्ववत् । चतुर्थावयवे पुनरारोपपूर्वकोऽपह्नवः । उभयोः शाब्दत्वविधेयत्वे वाक्यभेदश्च प्रथमवदेव ।

'वदने विनिवेशिता भुजङ्गी पिशुनानां रसनामिषेण धात्रा ।
अनया कथमन्यथाऽवलीढा नहि जीवन्ति जना मनागमन्त्राः ॥'

अत्रैकवाक्यत्वं निषेधताद्रूप्ययोरार्थत्वमनुवाद्यत्वं च, निवेशनस्य विधेयत्वात् ।

एवमन्यदप्यूह्यम्—

अत्र च लक्षणे आरोप्यमाणमित्यस्याहार्यनिश्चयविषयीक्रियमाणमित्यर्थः । तेन—

---

भ्रान्त्या च विषयस्यासत्त्वमिति निषेधो न शाब्दः किन्त्वार्थः । ताद्रूप्यम् ● कुमुदाभेदः । विधेयत्वम् ● ताद्रूप्यस्य तृतीयपादेऽपि मिथ्याशब्दाद् भ्रान्तिव्यवहितम् एव द्वितीयपादवत्सर्वमिति विहाय चतुर्थपादमाह चतुर्था ● पूर्वं लताया आरोपः पश्चाद् रमणीत्वनिषेधः । भ्रमरकुलरम्येत्यत्रातिशयोक्तिश्च । वदने ● धात्रा पिशुनानां वदने रसनामिषेण साधनं सज्जनक्लेशदाने इति बुद्धया भुजङ्गी सर्पिणी स्थापिता, तादृशञ्च सूचयितुं हेतुं दर्शयति अन्यथा भुजङ्गितां विना रसनया अनया अवलीढा स्पृष्टा विषयीकृताश्च अमन्त्रा विषनिवारणमन्त्ररहिता जीवनोपयोगिविचाररहिताश्च जना मनाक् न जीवन्ति । अत्रैक वाक्यत्वम् ● यत्र तु प्रसज्यार्थनञा निषेधस्तत्र नञर्थस्य क्रिययान्वयादेकं निषेधवाक्यमपरमुपमानतादात्म्यविधेर्वाक्यमिति वाक्यद्वयमत्र तु नञ्पदाभावान् मिषपदेनार्थो रसनाया निषेध आर्थश्च भुजङ्गीतादात्म्यम् । अतो न वाक्यभेदः । तथा हि धातृकर्तृका पिशुनसम्बन्धिवदनाधिकरणिका रसनाव्याजतामापन्नभुजङ्गीकर्मिका निवेशनक्रियेति शाब्दबोधः । क्तप्रत्ययस्य कर्मार्थः अथ पूर्वोक्ताधिकरणिका या निवेशनक्रिया तत्कर्मीभूता रसनाव्याजमापन्ना भुजङ्गीति बोधः । अनुवाद्यत्वञ्च ● निवेशनस्य प्राधान्यादन्येषामनुवाद्यत्वम् । अत्र विधेयत्वमित्युपलभ्यमानोऽपपाठः

सङ्ग्रामाङ्गणसम्मुखाहृतकियद्विश्वम्भराधीश्वर-
व्यादीर्णीकृतमध्यभागविवरोन्मीलन्नभोनीलिमा ।
अङ्गारप्रखरैः करैः कवलयन् सद्यो जगन्मण्डलं
मार्तण्डोऽयमुदेति केन पशुना लोके शशाङ्कीकृतः ॥'

अत्र च विरहिजनवाक्ये नायं शशाङ्कः, अपि तु सच्छिद्रो मार्तण्ड इतिच्छायामात्रमपह्नुतेः, न त्वपह्नुत्यलङ्कारः । तज्ज्ञानस्य दोषविशेषजन्यत्वेनानाहार्यत्वात्, किं तु भ्रान्त्यलङ्कार एव ।

अलिर्मृगो वा नेत्रं वा यत्र किञ्चिद्विभासते ।
अरविन्दं मृगाङ्को वा मुखं वेदं मृगीदृशः ॥'

इत्यत्र मुखमरविन्दं वेति कविनिष्ठाहार्यसंशये मुखनिषेधसामानाधिकरण्येन विषयीभवतोऽरविन्दतादात्म्यस्य निश्चय-

---

आहार्यनिवेशस्य व्यावर्त्यमाह **संग्रामाङ्गण●** युद्धस्थाने सम्मुखे आहता ये कियन्तो राजानस्तै र्व्यादीर्णीकृतो यो मध्यभागस्तेन यद्विवरं तत्र प्रकाशमानो नभोनीलिमा यस्य सः। चन्द्रमध्ये दृश्यमानं नैल्यं व्यादीर्णहृदये चन्द्रमसि नभसश्छायेत्युत्प्रेक्षते विरहिणां तापजनकतया। अङ्गारवत्तीक्ष्णैः किरणैः सद्यः जगन्मण्डलं विरहिजनसमूहं ग्रसन् लोके केन मूर्खेण शशाङ्कभिन्नोऽपि शशाङ्कः कृतः वस्तुतो मार्तण्डः, सग्रामहताः सूर्यमण्डलं भित्वा स्वर्गं गच्छन्तीति प्रसिध्या सूर्यमध्यभागे विवरमुत्प्रेक्षितम् । तेन सकलङ्कचन्द्र नभोनीलिमसहितसूर्यस्य विधानम् । मूर्खबुद्धया शशाङ्ककल्पनात् शशिनो निषेधः, अयं मार्तण्ड इति कथनात् मार्तण्डतादात्म्यस्य विधानम् । **छायामात्रम्●** अपह्नुतेः सादृश्यमात्रम् । **नाहार्यत्वात्●** बाधनिश्चयकालानमिच्छाजन्य ज्ञानमाहार्यमिति प्रसिद्धिः । अथ शशाङ्को मार्तण्ड इति ज्ञानमाहार्यं स्यात् । शशाङ्कबुद्धिस्तु विरहादिदोषवशात्तिरोहिताऽतो नेदमाहार्यमिति भावः । **भ्रान्त्यलङ्कारः●** ननु दोषजन्यत्वात् सादृश्यमूलाभावात् कथं सेति वाच्यम् तापजनकत्वरूपसादृश्यमूलत्वात् । निश्चयनिवेशस्य व्यावर्त्यं संशयं दर्शयति **अलिर्मृगो वा●** संशयालङ्कारे गतमिदम् । **कविनिष्ठा●** अन्यस्य कस्यचिद्वस्तुतः संदिहानस्य वर्णने नाहार्यं किन्तु स्वयं मुखमिति जानानस्य मुखोत्कर्षाय संशयं वर्णयतः

विषयत्वाभावान्न सङ्ग्रहः न चात्र विषयनिषेधस्यापदार्थत्वं शङ्क्यम्, वाशब्दार्थत्वात् ।

यत्तु कुवलयानन्दाख्ये सन्दर्भे अप्पयदीक्षितैरपह्नुतिप्रभेद-कथनप्रस्तावे पर्यस्तापह्नुत्याख्यं भेदं निरूपयद्भिरभिहितम्—

'अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सः ।
नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम् ॥' इति ।

अत्र चिन्त्यते—नायमपह्नुतेर्भेदो वक्तुं युक्तः, अपह्नुति-सामान्यलक्षणानाक्रान्तत्वात् । तथा हि 'प्रकृतं यन्निषिध्यान्य-त्साध्यते सा त्वपह्नुतिः, उपमेयमसत्यं कृत्वा उपमानं सत्यतया यत्स्थाप्यते साऽपह्नुतिः' इति काव्यप्रकाशोक्तलक्षणबहिर्भाव-स्तावत् स्फुट एव । एवं 'विषयापह्नवे वस्त्वन्तरप्रतीता-वपह्नुतिः' इत्यलङ्कारसर्वस्वोक्तं लक्षणमपि नात्र प्रवर्तते ।

---

कवेर्मुखमरविन्दं वेति संशय आहार्य एवातोनाहार्यपदेन व्यावृत्तिः, किन्तु निश्चयपदेनैवेति भावः । निश्चयपदाभावेऽतिव्याप्तिं स्फोरयितुमाह **मुख-निषेध** ● । **संग्रह** ● अतिव्याप्तिः । **शङ्क्यम्** ● निषेधवाचकपदाभावात् । **शब्दार्थत्वात्** ● विकल्पे पक्षे निषेधस्य फलितत्वादार्थो निषेधः । अथवा नवेति विभाषेति सूत्रं लोकन्यायसिद्धया गतार्थयतो महाभाष्यकृतो मते लोकेऽपि वा शब्दस्य निषेधे शक्त्या वाचनिक एव । **अन्यत्र** ● प्रकृतोपमेये निषेधपुरस्सरं य आर्थ आरोपः पर्यस्तापह्नुतिरलङ्कारः, गगने निषिध्य प्रेयसी-मुखे सुधांशोरारोपः । अत्र मुखमुपमेयं शशाङ्क उपमानम् । उपमेयतावच्छेद-कस्य मुखत्वस्य निषेध एवापह्नुतेरवसरो न तु उपमानतावच्छेदकस्य सुधांशुत्व-स्येत्यभिप्रेत्याह **नाक्रान्तत्वात्** ● काव्यप्रकाशव्याख्यानेनापि प्रकृतपदस्यो-पमेयपरतां द्रढयति **उपमेयम्** ● । **असत्यम्** ● निषेधेनासदिवकृत्वा **यद्** ● उपमानतादात्म्यम् । **बहिर्भाव** ● सामान्यलक्षणानाक्रान्तत्वम् । **विषया-पह्नवे** ● उपमेयनिषेधे सति **वस्त्वन्तरम्** ● उपमानं तादात्म्यम् ।

'प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम्।
साम्यादपह्नुतिर्वाक्यभेदाभेदवती द्विधा ॥'

इति चित्रमीमांसागतं तन्निर्मितमपि लक्षणमिह तथैव। तस्मात् 'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' इत्यत्र दृढारोपं रूपकमेव भवितुमर्हति, नापह्नुतिः। उपमेयतोपमानतावच्छेदकयोः सामानाधिकरण्यस्य निष्प्रत्यूहं भानात्। तदुक्तं विमर्शिन्याम्—"न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।' अत्र विषस्य निषेधपूर्वं ब्रह्मस्वविषये आरोप्यमाण-

---

प्रकृतस्य● उपमेयस्य। अन्यत्व● उपमानतादात्म्यम्। सादृश्यमूलकतां दर्शयितुमाह साम्याद्● सा द्विविधा एकवाक्यगा निषेधविधेययोरनेकवाक्यगतत्वे च। तथा च स्वग्रन्थविरोधोऽपि दोषः। दृढारोपम्● उपमानोपमेययोरभेदारोपं रूपकमिच्छन्ति। तत्रोपमानान्तरसत्तानिषेधमन्तरा आरोपे आहार्यत्वस्योत्कटतया अभेदारोपो दृढो न जायते। अत्र तु पृथगुपमानस्य सत्ता निषेधेन सर्वथैवोपमेयात्मतोपमानस्य स्फुरतीति आरोपस्य दार्ढ्यम्। उपमेय● उपमेयतावच्छेदकोपमानतावच्छेदकयोरित्यर्थः। निषेध पूर्वम्● विषं विषतादात्म्यं निषिध्य ब्राह्मणधने विषतादात्म्यं विधीयते। अत्र मर्मप्रकाशः अत्रेदं चिन्त्यम् नेदं मुखं चन्द्र इति प्रसिधापह्नुत्युदाहरणेऽपि मुखनिषेधस्य चन्द्रारोपदार्ढ्यसंपादकत्वस्य वक्तुं शक्यत्वेनानुभवसिद्धत्वेन चापह्नुतिमात्रस्योच्छेदापत्तेः। यदि तु निषेधपूर्वकारोपे चमत्कारविशेषस्यानुभवसिद्धत्वेनालङ्कारान्तरत्वं तर्हि प्रकृतेऽपि तुल्यम्। अत्रेदं चिन्ताबीजं प्रतिभाति। उपमानतादात्म्यमुपमेये रूपकापह्नुत्योः समानम्। उपमेयतावच्छेदकस्य च यत्र निषेधो न वर्तते अन्यस्य यस्य कस्यचिन्निषेधः कामं वर्ततां, नायं सुधांशुरित्यादावुपमानतादात्म्यस्य निषेधेऽपि उपमेयतावच्छेदकस्य निषेधाभावादुपमानतादात्म्यमु ादाय रूपकप्रसक्तिः केन वार्यताम्। इति पण्डितराजपरम्परा प्रतिभाति। अन्यनिषेधस्योपात्तस्योपयोगश्च आरोपस्य दार्ढ्यम्। यदि तु उपमेयतावच्छेदकनिषेधकृतचमत्कारानुभवमनुरुद्ध्य यथाऽपह्नुते रूपकात्पृथक्स्थानं तथोपमानतादात्म्यनिषेधीयचमत्कारानुरोधेन कथन्न क्रियत इति पूर्वपक्षः, अस्तु तावत्तथा। तथापि अपह्नुतिलक्षणाना-

त्वाद् दृढारोपं रूपकमेव, नापह्नुतिः ।" इति । यदि च प्राचीनमतमुपेक्ष्यालङ्कारत्नाकरेणेव मयाऽप्ययं प्रकारोऽपह्नुतिमध्ये गणित इत्युच्यते, तदा आहार्यताद्रूप्यनिश्चयस्य समानत्वाद् रूपकभेद एवापह्नुतिरित्यप्युच्यताम् । निरस्यतां च प्राचीनमुखदाक्षिण्यम् । एवमपि चित्रमीमांसागतत्वन्निर्मितापह्नुतिलक्षणस्यात्राव्याप्तिः स्थितैव । अपि च यदि 'नायं सुधांशुः, किं तर्हि सुधांशुः प्रेयसीमुखम्' इत्यत्र पर्यस्तापह्नुतिरित्युच्यते, तदा तस्यामेव त्वत्कृतचित्रमीमांसागतस्य—

'बिम्बाविशिष्टे निर्दिष्टे विषये यद्यनिह्नुते ।
उपरञ्जकतामेति विषयी रूपकं तदा ॥'

इति रूपकलक्षणस्यातिव्याप्तिर्वज्रलेपायिता स्यात्, विषयिणो निह्नवेऽपि विषयस्यानिह्नुतत्वात् । अथापि चित्रमीमांसायां प्राचीनमतानुसारेण रूपकलक्षणम्, कुवलयानन्दे च रत्नाकराद्यनुसारेणापह्नुतित्वोक्तिरिति यथाकथञ्चित् सामञ्जस्यं विधेयमिति दिक् ।

---

क्रान्ततया ततः पार्थक्यं रूपकस्य प्रसक्तिरिति दीक्षितस्याप्यापतति । अन्यच्च सूक्ष्ममीक्ष्यताम् । उपमानात्मतयोपमेयप्रतीतीरूपकस्थले चमत्करोति । उपमेयतावच्छेदकनिषेधे उपमेयमसदिव जायते । मुखस्य मुखत्वेनोपमेयता, न तूपमानचन्द्रत्वेन इदन्त्वेन वा । अतोऽपह्नुते रूपकाद्विभेदः । अत्र सुधांशुः प्रेयसीमुखमित्यादौ मुखत्वस्यानिषेधाद् रूपकस्यावसरः, अपह्नुतेश्चानवसरः । अन्यरूपकेभ्य उपमानतादात्म्यनिषेधस्याधिकस्य चमत्कारिणः सत्त्वाद् रूपकविशेषो दृढारोपः, न तु अपह्नुतेः कोऽपि अवसरः । तस्मादत्र प्राचीनपथाश्रयणमेव सम्यक् । इत्यलमधिकेन । रत्नाकरेण● यथावस्थितानुकरणेनोपहासोऽपि गम्यते । प्राचीन● प्रकाशादीनाम् । एकत्र च प्राचीनपथपरित्यागोऽन्यत्र चानुसरणमिति अर्धजरतीयम् । बिम्बाविशिष्टे● रूपकप्रकरणे व्याख्यातम् । लेपायिता● विषयस्योपमेयस्यानिषेधात् । प्राचीनमता● प्रकाशमत । करादि● आदिना दण्डी काव्यादर्शे तस्य लक्षणम्-अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थसूचनम् । सामञ्जस्यम्● अत्र कश्चित् पाठभ्रंशः सर्व-

'अनल्पजाम्बूनददानवर्षं तथैव हर्षं जनयञ्जनेषु ।
दारिद्र्यधर्मक्षपणक्षमोऽयं धाराधारो नैव धराधिनाथः ॥'

सावयवारोपेयमपह्नुतिः ।

आरोपमात्रोपायत्वे परम्परितापयेषा सम्भवति । यथा—

'मनुष्य इति मूढेन खलः केन निगद्यते ।
अयं तु सज्जनाम्भोजवनमत्तमतङ्गजः ॥'

अस्याश्च ध्वनिर्यथा—

'दयिते रदनत्विषां मिषादयि ! तेऽमी विलसन्ति केसराः ।
अपि चालकवेषधारिणो मकरन्दस्पृहयालवोऽलयः ॥'

अत्र 'नैता रदनत्विषः, किन्तु किञ्जल्कपरम्पराः । न चैतेऽलकाः, अपि त्वलयः' इति पूर्वोत्तरार्धाभ्यां द्वे अपह्नुती तावत् प्राकट्येनैव निवेदिते । ताभ्यां च 'न त्वं नारी, किं तु कमलिनी' इति तृतीयापह्नुतिर्व्यञ्जनव्यापारेण प्राधान्येन

---

पुस्तके दुर्लभोमर्मप्रकाशसम्मतः । अनल्प● अनल्पानां सुवर्णानां दानरूपं वर्षणं तथा एव जनेषु हर्षं जनयन् दारिद्र्यरूपस्य धर्मस्य क्षपणे समर्थः अयं धराधिनाथः पृथ्वीपतिर्न, किन्तु वर्षहर्षजननधर्मक्षपणाभ्यां मेघ इति । राज्ञि धाराधरतादात्म्यारोपे दानवर्षयोर्दारिद्र्यधर्मयोरारोपः कारणम् । सावयवा● अवयवारोपेणोपायेन सहिता । मर्मप्रकाशस्तु रूपकसहितेति व्याख्याति साधकोऽवयव आरोपो रूपकात्मक इति भावः । अहन्तु प्रत्येमि यथा आरोप आरोपान्तरस्योपायो रूपके तथाऽऽरोपात्मकेऽपह्नुत्यलङ्कारे आरोपान्तरस्योपायत्वम्, न त्वलङ्कारत्वम् । दयिते● अयि प्रिये तव दन्तकान्तीनां व्याजेन किञ्जल्काः शोभन्ते सौरभाकृष्टाश्च भ्रमराः केशवेशधारिणः । अत एव त्वं कमलिनी । प्राकट्येन● प्रथमया व्यञ्जनया । प्राधान्येन● द्वे अपह्नुतो

निवेद्यते, तत्सम्बन्धिवस्तुनिषेधारोपयोस्तन्निषेधारोपनिवेदकत्वस्य न्याय्यत्वात् । तुल्ययोगिता तु गुणतया स्थिता ।

यत्त्वप्पयदीक्षितैरपह्नुतिध्वनावुक्तम्—

"'त्वदालेख्ये कौतूहलतरलतन्वी विरचिते
विधायैका चक्रं रचयति सुपर्णीसुतमपि ।
अपि स्विद्यत्पाणिस्त्वरितमपमृज्यैतदपरा
करे पौष्पं चापं मकरमुपरिष्टाच्च लिखति ॥'

इत्यादावपह्नुतिध्वनिरुदाहर्तव्यः । अत्र हि चक्रसुपर्णलेखनेन 'नायं साधारणः पुरुषः, किन्तु पुण्डरीकाक्षः' इति कयाचिद् व्यञ्जितम् । अन्यया तु—तस्याप्येतादृशं रूपं न सम्भवतीत्याशयेन 'नायं पुण्डरीकाक्षोऽपि, किन्तु मन्मथः' इति तदुभयमपमृज्य पुष्पसायकमकरध्वजलेखनेन व्यञ्जितम्' इति ।

---

चमत्कारातिशयेन तुल्ययोगिताञ्चापेक्ष्येत्यर्थः । तत्सम्बन्धि ● नायिकासम्बन्धिनोर्दन्तकान्त्यलकयोर्निषेधस्य कमलिनीसम्बन्धिनोः केसरभ्रमरयोरारोपस्य च नायिकानिषेधस्य कमलिन्यारोपस्य चावेदकत्वम् । ननु विलसन्ति इत्येकक्रियायामप्रकृतयोः केसरभ्रमरयोरन्वयात्तुल्ययोगितयाऽलङ्क्रियतामिदमित्याह तुल्ययोगिता ● तुल्ययोगिता अनुगणोऽनुकूलो यस्यास्तद्भावस्तया । 'तुल्ययोगिता अनुगुणतया' इति समासरहित एव पाठो विधेयः । क्वचिच्च गुणतया इत्येव पाठोऽसंदिग्ध उपलभ्यते । तुल्योगितोच्यमाना ध्वनिरूपाया अङ्गा एवोपकारिणीति भावः । सखी नायकं वक्ति त्वदालेख्ये ● कयाचित् कौतुकवशात्तरलया बुद्धेरस्थिरतया अप्रतिभातपुण्डरीकाक्षमन्मथभावया तन्व्या कृशाङ्गितया अल्पनिर्माणेनैव श्रममापन्नया वा लिखिते त्वदीयचित्रे दृष्ट्वा जातपुण्डरीकाक्षभावा एका सखी सुदर्शनं चक्रं तथा सुपर्णीपुत्रं गरुडं रचयति । अपि अनन्तरं क्वचिदथेत्यपि पाठः कामवशतया स्विद्यन्तौ पाणी यस्याः सा मन्मथकार्यकारितया मन्मथोऽयमिति बुद्ध्या अपरा सखी त्वरितं चक्रंगरुडौ अपमृज्य हस्ते पुष्पधनुः उपरि च मकरं कामचिह्नं

तदेतदापातरमणीयम्, यत्तावदुच्यते—'चक्रसुपर्णलेखनेन नायं साधारणः पुरुषः, किन्तु पुण्डरीकाक्षः' इति कयाचिद् व्यञ्जितमिति। तत्रापह्नुतेर्द्वौ भागौ—उपमेयनिषेधः, उपमानारोपश्चेति। तयोस्तावदुपमानारोपभागः पुण्डरीकाक्षोऽयमित्याकारश्चक्रसुपर्णलेखनेनाभिव्यङ्क्तुं शक्यः, चक्रसुपर्णयोस्तत्सम्बन्धित्वात्। न तु नायं साधारणः पुरुष इत्युपमेयनिषेधभागोऽपि, व्यञ्जकस्यारोपमात्रव्यञ्जनसमर्थस्य तादृशनिषेधव्यञ्जने सामर्थ्याभावात्। नाप्यनुभवसिद्धः सः, येन तद्व्यञ्जनोपायो गवेष्येत। नापि गवेष्यमाणोऽपि तद्व्यञ्जनोपायः शब्दोऽर्थो वा उपलभ्यते, येनानुभवकलहोऽपि स्यात्। न च साधारणपुरुषनिषेधमन्तरेण पुण्डरीकाक्षतादात्म्यारोपो दुर्घट इति सोऽपि व्यज्यत इति वाच्यम्, रूपकोच्छेदापत्तेः। मुखं चन्द्र इत्यादौ मुखनिषेधमन्तरेण चन्द्रत्वं दुरारोपमित्यस्यापि सुवचत्वात्। तत्रापि मुखनिषेधावगमे जितमपह्नुत्या।

अथ मुखं चन्द्र इति रूपके मुखत्वसामानाधिकरण्येन चन्द्रताद्रूप्यस्यारोप्यमाणतया न मुखनिषेधापेक्षेति चेत्, प्रकृतेऽपि तर्हि तादृशसाधारणपुरुषत्वसामानाधिकरण्येन पुण्डरीकाक्षतादात्म्यारोपरूपमसौ राजा पुण्डरीकाक्ष इत्याकारकरूपकमेव भवितुमीष्टे, नापह्नुतिः।

यदपि चोच्यते 'नायं पुण्डरीकाक्षः, अपि तु मन्मथः' इत्यादि। तत्र यद्यपि चक्रसुपर्णदूरीकरणेन नायं पुण्डरीकाक्ष इति निषेधः, पुष्पचापध्वजगतमकरयोर्लेखनेन च मन्मथोऽय-

---

लिखति। व्यञ्जकस्य● चक्रगरुडलेखनस्य पुण्डरीकाक्षारोपाभिव्यञ्जकत्वे पुरुषनिषेधाव्यञ्जकतया रूपकमेव स्यादिति भावः। द्वितीयांशेऽप्याह—यदपि●

मित्युपमानारोपश्च व्यङ्ग्यो भवितुमर्हति, तथापि नासावपह्नुतिः, 'प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम्' इति त्वत्कृतलक्षणस्याप्यत्रासत्त्वात्। अत्र हि निषेध्यस्य भगवतः पुण्डरीकाक्षस्यावर्ण्यत्वेनाप्रकृततया प्रकृतनिषेधाभावात्। नहि पूर्वारोपिततामात्रेण प्रकृतत्वं वक्तुं शक्यम्। प्रकृतपदस्यारोपविषयपरतया 'निषिध्य विषयम्' इत्यादिना क्त्वाप्रत्ययफलं ब्रुवता भवतैव तत्र स्फुटीकरणात्। काव्यप्रकाशकृतापि 'प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः' इति सूत्रं व्याचक्षाणेन 'उपमेयमसत्यं कृत्वा' इत्यादिना प्रकृतपदस्योपमेयपरतयैव व्याख्यानाच्च।

प्राचीनमतसिद्धेयमपह्नुतिर्व्यङ्ग्यत्वेनास्माभिरिहोच्यत इत्यपि कुशकाशावलम्बनमात्रम्, 'प्रकृतस्य निषेधेन' इत्यादिलक्षणं कुर्वता भवतैव तस्या बहिःकरणात्।

एवमप्युक्तपद्ये कोऽलङ्कारो व्यङ्ग्य इति चेत्, विच्छित्तिवैलक्षण्येऽतिरिक्तः, अन्यथा त्वपह्नुतिरेवास्तु। लक्षणं तु तदा प्रसक्तयत्किञ्चिद्वस्तुनिषेधसामानाधिकरण्येन क्रियमाणवस्त्वन्त-

---

वपह्नुतिः● प्रकृतस्य निषेधाभावात्। पुण्डरीकाक्षस्य निषेधेऽपि तस्योपमेयत्वाभावात्। निषिध्य विषयम्● तस्य ग्रन्थार्थस्तु ल्यप उत्तरकालत्वमर्थो न आरोपपूर्वकापह्नवेऽव्याप्तेः। अतो ल्यप्प्रत्ययान्तेन लक्षणं नोक्तम्।

फलम्● कश्चिदव्याप्तिरूपम्। प्राचीनमत● प्रागुक्तदण्ड्यादिमतसिद्धेत्यादिरर्थः। सर्वसंसारसिद्धस्य काष्ठस्यालम्बनं न त्वेकदेशियत्किञ्चिन्मतरूपस्य कुशादेरिति कुशकाशेत्यादेरर्थः। विच्छित्ति● निषेधापेक्षया आरोपस्यैव चमत्कारातिशायकत्वे रूपकालङ्कारः। अन्यथा● पुण्डरीकाक्षादि निषेधस्य आरोपापेक्षयाऽधिकचमत्कारितायामित्यर्थः। प्रसक्त● पुण्डरीकाक्षस्यापि प्रसक्ततया तन्निषेधस्यापि संग्रहायोपमेयपदस्थाने प्रसक्तपदं प्रक्षेपणीयम्। अत्र -तु-तदा-शब्दैः स्वानभिमतत्वं ध्वनितम्। ध्वनितञ्च

रारोपत्वमेव । तस्मात् सर्वमेवेदमहृदयङ्गमं सहृदयानाम् ।

इति रसगङ्गाधरे अपह्नुत्यलङ्कारनिरूपणम् ।

## अथोत्प्रेक्षाप्रकरणम्—

तद्भिन्नत्वेन तदभाववत्त्वेन वा प्रमितस्य पदार्थस्य रमणीयतद्वृत्तितत्समानाधिकरणान्यतरतद्धर्मसम्बन्धनिमित्तकं तत्त्वेन तद्वत्त्वेन वा सम्भावनमुत्प्रेक्षा ।

---

स्फोरयति तस्माद् ● अत्र मर्मप्रकाशः। दीक्षितैर्हि दण्डी तु अपह्नुतेः साधर्म्यमूलकत्वनियममनादृत्य अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थसूचनमिति लक्षयित्वा न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणां यतः। चन्दनं चन्द्रिका मन्दो गन्धवाहश्च दक्षिण इत्युदाजहारेत्याद्युपक्रम्य तदालेख्ये इत्याद्युदाहृतम्। तदनुसारेणैव तत्र अपह्नुतिध्वनिरुदाहृत इति न किञ्चिदहृदयङ्गमम्। प्रकाशे उपमेयपदस्य पदार्थोपलक्षणतया न विरोधः, उपमेयपदस्य पदार्थोपलक्षकत्वाद् इति ब्रूते। एवं सति स्वविरोधिनो दण्डिमतस्योपपादितस्याप्यखण्डनाद् दीक्षितग्रन्थे न्यूनतैव दोषोऽवसीयते। स्फुटमुपमेयपदमुपपादितवतः प्रकाशस्याननुरोधस्तु वर्तत एव। स्वयं पलायनमपि प्रकृतमेवेति तन्निषेधोऽपह्नुतेः सम्पादको ग्रन्थानुकूल एव। यद्यपि द्योतयित्वा कमप्यर्थमित्यादिदर्पणलक्षणेनानुकूलो दीक्षितग्रन्थः। उपमेयान्यनिषेधसमानाधिकरणा रूपकचमत्कारविधुरा अपि अपह्नुतयो हृदयंगमास्तदा तासां सङ्ग्रहाय सामान्यं लक्षणं न कृतमिति दीक्षितग्रन्थखण्डने साहित्यदर्पणस्याखण्डने च प्रवृत्तिः पण्डितराजस्य। स्वीयं मतन्तु यथा लक्षितमन्यनिषेधस्थलेऽलङ्कारान्तरमङ्गीकर्त्तव्यमिति। तच्च प्रकाशग्रन्थानुकूलम्। दर्पणखण्डने तु विस्तरभिया न प्रयत्यते, स्वयमूहनीयं सूरिभिः।

॥ इति अपह्नुत्यलङ्कारनिरूपणम् ॥

### अथ उत्प्रेक्षाप्रकरणम्

उत् उर्ध्वं प्रसिद्धिमतिक्रम्येत्यर्थः, प्रेक्षणं ज्ञानम्, गुरोश्च हलः इत्यनेनाऽकारप्रत्ययान्तः। प्राय एवं स्यादित्यादिरीत्या सम्भावनम्। यद्यपि काव्यप्रकाशादौ 'सम्भावनम् अथोत्प्रेक्षा प्रकृतस्य समेन यत्' इत्यादि लघुलक्षणं कृतम्, तथापि तदस्फुटं यतः समेनेत्यस्य उपमानेनेत्यर्थे कृते प्रकृतपदस्योपमेयपरतायां समागतायाम् उपमानोपमेयभावः समापतति। तथा च उपमारूप-

'लोकोत्तरप्रभाव ! त्वां मन्ये नारायणं परम्' इत्यत्र तादृशप्रभावस्य नारायणत्वव्याप्यतासम्भावनादशायां सामग्रच-

---

कादाविव प्रसिद्धोपमानोपमेयक एवेयं स्यान्न च तथा समीहितम्। यद्यपि ग्रन्थकृतामपि उत्प्रेक्षायां विषयविषयिणोः साधर्म्यं समीहितम्, तथापि न प्रसिद्धेनैव धर्मेणापि तु यथाकथमपि सम्पादितेन रमणीयेन। किञ्च धर्मितादात्म्यस्य धर्माणां सम्बन्धान्तरेण च द्विविधोत्प्रेक्षा प्राचां सम्मताऽतस्तदुपदर्शनाय स्फुटं लक्षणमेकमुखेनाह **तद्भिन्नत्वेन** ● तद्भिन्नत्वेन प्रमितस्य पदार्थस्य रमणीयतद्वृत्तिधर्मसम्बन्धनिमित्तकं तत्त्वेन सम्भावनमिति धर्म्युत्प्रेक्षाया लक्षणम्। एवमेव धर्मोत्प्रेक्षायास्तु तदभाववत्त्वेन प्रमितस्य पदार्थस्य रमणीयतत्समानाधिकरणधर्मसम्बन्धनिमित्तकं तद्वत्त्वेन सम्भावनमिति योजना। प्रथमस्य निष्कृष्टार्थस्तु तद्विशिष्टं च सम्भावनम्। वैशिष्ट्यञ्च स्वभिन्नत्वप्रकारकप्रमाविशेष्यकत्वस्वनिष्ठतादात्म्यसम्बन्धावच्छिन्नप्रकारताकत्व-स्ववृत्तिरमणीयधर्मसम्बन्धप्रयोजनत्वैतत्त्रितयसम्बन्धेन। एवं धर्मविशिष्टं सम्भावनं द्वितीयस्य निष्कर्षः। वैशिष्ट्यञ्च स्वाभाववद्विशेष्यकत्वस्वावच्छिन्नप्रकारताप्रयोजकत्वस्वसमानाधिकरणरमणीयधर्मसम्बन्धप्रयोज्यत्वैतत्त्रितय-सम्बन्धेन। एतदन्यतरत्वमुत्प्रेक्षा सामान्यलक्षणम्। अथवा धर्मविशिष्टं सम्भावनमेव सामान्यलक्षणम्। वैशिष्ट्यञ्च स्वाभाववद्विशेष्यकत्वस्वसमानाधिकरण-रमणीयधर्मसम्बन्धनिमित्तकत्वस्वविशिष्टप्रकारतानिरूपकत्वैतत्त्रितयसम्बन्धेन द्वितीयवैशिष्ट्यम्। स्वावच्छिन्नतादात्म्यसम्बन्धावच्छिन्नत्वस्वावच्छिन्नत्वैतद्-द्वितयसम्बन्धेन। सम्भावनत्वञ्च नारायणेनानेन भवितव्यमिति पण्डितराजप्रतीतिसाक्षिकः कदाचित्सम्पद्येतेत्यादिसाधारणप्रतीतिसाक्षिकश्च जातिविशेषः। पूर्वं मया लक्षितोऽप्रामाण्यज्ञानास्कन्दितो ज्ञानविशेषो वा सम्भावनम्। आलङ्कारिकेषु न्यायपञ्चाननादयो न्यायलीलावत्यादौ प्रतिपादितं किं स्विदयं किं पनसः स्विदयमित्यादिप्रतीतिसाक्षिकं विशेषतोऽनुल्लिखितनानाकोटिकं ज्ञानमिति लक्षितमनवध्यवसितं ज्ञानं सम्भावनमित्यामनन्ति। तदनुयायिनोऽन्ये च समकोटिकं ज्ञानं संशयः, उत्कटकोटिकं ज्ञानं सम्भावनमिति पर्यवसाययन्ति। चक्रवर्तिमहोदयास्तु अनवध्यवसिताद् भिन्नमेव सम्भावनम्, पूर्वस्मिन्नेकस्याः कोटेः समुल्लेखात् सम्भावने च द्वयोः। उपमेये उपमानताप्रत्यायकत्वात् सम्भावनमलङ्कार इति ब्रुवते। **नारायणत्वव्याप्यता** ● लोकोत्तरप्रभावो नारायण एव

भावेनानुमित्यनुदयाज्जायमानायां नारायणेनानेन प्रायशो भवितव्यमिति सम्भावनायामतिप्रसङ्गवारणाय तद्भिन्नत्वेन प्रमितस्येति सम्भावनायामाहार्यतां गमयति। एतेन—

'रामं स्निग्धतरश्यामं विलोक्य वनमण्डले।
प्रायो धाराधरोऽयं स्यादिति नृत्यन्ति केकिनः॥'

इत्यत्र सम्भावनायाम्, 'धाराधरधिया धीरं नृत्यन्ति स्म शिखावलाः' इत्यत्र भ्रान्तौ च नातिप्रसङ्गः।

'वदनकमलेन बाले स्मितसुषमालेशमावहसि यदा।
जगदिह तदैव जाने दशार्धबाणेन विजितमिति॥'

अत्र जगज्जयसम्भावनायामतिप्रसङ्गवारणाय रमणीयतद्धर्मनिमित्तकमिति। स्मितस्य सम्भावनोत्थापकत्वेऽपि जगद्विजितरूपविषयविषयिसाधारणत्वाभावान्न दोषः।

---

भवितुमर्हति नान्यस्मिन्निति, निश्चयस्य नाम नारायणत्वव्याप्यतानिश्चयः। तस्मिन् सति नारायणोऽयमित्यनुमितिरेवोत्पद्यते। किन्तु तादृशव्याप्यताया निश्चयो नास्ति, अपि तु निश्चयभिन्नं सम्भावनात्मकं ज्ञानं तेन पूर्वानुमितिर्न जायते। किन्तु सम्भावनैव तिष्ठति। अन्यत्रालङ्कारग्रन्थे क्वचित् सम्भावनमलङ्कारान्तरत्वेन परिगणितम्, अत्र तु पण्डितराजस्य ज्ञानमात्रमेवाभिमतम् न त्वलङ्कारः। **आहार्यतां** ● चन्द्रभिन्नत्वेन प्रमिते मुखे चन्द्रोऽयमिति ज्ञानमाहार्यमेव भवति। प्रमितान्तनिवेशस्य सम्भावने आहार्यतातात्पर्यग्राहित्वम्। आहार्यं सम्भावनं ग्राह्यमिति भावः। **स्निग्धतरश्यामं** ● सुन्दरतरश्यामम्। उत्प्रेक्षातुल्यतामाह **प्रायो** ● धाराधरो मेघः। शिखावला मयूराः। भ्रान्तिरनाहार्या भवतीति ध्येयम्। **वदनकमले** ● अस्य द्वितीयपादो मात्रया न्यूनं विभाति। कदाचन ( आवहसे ) मूलपाठः स्यात्। हे बाले ! यदा वदनकमलेन हास्यशोभामात्रां धारयसि, तदैव इह संसारे कामेन पञ्चबाणेन इदं जगद् विजितमिति जाने। **जगज्जय** ● जगत्कर्मकजयेत्यर्थः। स्मितस्यासाधारणता स्फोरयति **स्मितस्य** ● स्मितमवलोक्यैव संभावनात् तदुत्थापकत्वम्। **जगद्विजित** ● जगति तादात्म्येन विजितस्य सम्भावनया जगद्विषयो

एतेन—

'प्रायः पतेद् द्यौः शकलीभवेद् ग्लौः
　　सहाचलैरम्बुधिभिः स्खलेद् गौः ।
नूनं ज्वलिष्यन्ति दिशः समस्ता
　　यद् द्रौपदी रोदिति हा हतेति ॥'

अत्रापि रोदनकारणीभूतकेशग्रहणादिजन्यपापनिमित्तोत्था-पितायां स्वर्गपतनसम्भावनायां नातिप्रसङ्गः । प्रायः स्थाणुनाऽनेन भवितव्यम्, नूनं पुरुषेणानेन भाव्यम्, दूरस्थोऽयं देवदत्त इवाभाति—इत्यादौ निश्चलत्वचञ्चलत्वादिसाधारणधर्म-निमित्तायां सम्भावनायामतिप्रसङ्गः स्यात्, अतो रमणीयत्वं धर्मगतमुपात्तम् । रूपकवित्तावतिप्रसङ्गवारणाय सम्भावनमिति ।

अत्र च तादात्म्येन संसर्गेण धर्म्युत्प्रेक्षायाः, संसर्गान्तरेण धर्मोत्प्रेक्षायाश्च सङ्ग्रहायैकोक्त्या लक्षणद्वयं विवक्षितम् ।

सा चोत्प्रेक्षा द्विविधा—वाच्या, प्रतीयमाना च । इव,

---

विजितं विषयि । तथा च रमणीयसाधारणधर्माभावाद् नातिव्याप्तिः । **एतेन** ● विषयविषयिणोः साधर्म्याभावेन ।

**प्रायः पते** ● दुशासनेन केशेषु गृहीतेषु यस्मात् कारणाद् द्रौपदी हा मृतेति कृत्वा रोदिति तद्रोदनजनकदुःशासनदुराचारकेशग्रहणादिजन्मनः पापाद् दिवि पतनस्य चन्द्रे खण्डनस्य सपर्वतसागरायां भुवि स्खलनस्य समस्तासु दिक्षु ज्वलनस्य संभावना जायते । आकाशादिपतनाद्योर्विषय-विषयिणोः पापस्य न साधारण्यमित्याह नातिप्रसङ्ग इति । **स्थाणुना** ● पुरोवर्तिपदार्थे निश्चलत्वनिमित्तं स्थाणोः, तत्रैव चाञ्चल्यनिमित्तं पुरुषस्य, विलक्षणाकारदर्शननिमित्तञ्च देवदत्तस्य संभावनम् । परञ्च निश्चलत्वादीनि न रमणीयानि । तथा च वस्तुस्वभावसिद्धा न धर्माः साधर्म्यसम्पादकाः ग्राह्याः, अपि तु कविप्रतिभानिर्वर्तिता इति पर्यवसितम् । **संभावनम्** ● रूपके च आहार्यनिश्चयरूपं न संभावनमिति भावः । लक्षणस्थस्य वाकारद्वयस्य फलमाह **अत्र च** ● अलङ्कारसर्वस्वरीत्या विभागमाह **सा चो** ● सामग्री-

नूनम्, मन्ये, जाने, अवैमि, ऊहे, तर्कयामि, शङ्के, उत्प्रेक्षे इत्यादिभिः क्यङाचारक्विबादिभिः प्रतिपादकैः सहिता यत्रोत्प्रेक्षासामग्री, तत्र वाच्योत्प्रेक्षा। यत्र च प्रतिपादकशब्दरहितं तत्सामग्रीमात्रम्, तत्र प्रतीयमाना। यत्र तत्सामग्रीरहितं प्रतिपादकमात्रं तत्र सम्भावनमात्रमेव, नोत्प्रेक्षा।

सापि प्रत्येकं त्रिविधा—स्वरूपोत्प्रेक्षा, हेतूत्प्रेक्षा, फलोत्प्रेक्षा चेति।

तत्र जातिगुणक्रियाद्रव्यरूपाणां तदभावरूपाणां च पदार्थानां तादात्म्येनेतरेण वा सम्बन्धेन जातिगुणक्रियाद्रव्यात्मकैर्व्यस्तैः समुच्चितैरुपात्तैरनुपात्तैर्निष्पन्नैर्निष्पाद्यैर्वा निमित्तभूतैर्धर्मैर्यथासम्भवं जातिगुणक्रियाद्रव्यात्मकेषु विषयेषूत्प्रेक्षणं स्वरूपोत्प्रेक्षा। तत्राभेदेन संसर्गेण धर्मिस्वरूपोत्प्रेक्षा संसर्गान्तरेण धर्मस्वरूपोत्प्रेक्षेति चोच्यते।

उक्तविधेषु पदार्थेषु प्रागुक्तप्रकाराणां पदार्थानां तथाविधैरेव निमित्तैर्यथासम्भवं हेतुत्वेन फलत्वेन च सम्भावनं हेतूत्प्रेक्षा फलोत्प्रेक्षा चोच्यते। एताश्च क्वचिन्निष्पन्नशरीराः क्वचिन्निष्पाद्यशरीराश्चेत्येवमाद्यनल्पविकल्पाः सम्पद्यन्ते। तथापि दिङ्मात्रमुपदर्श्यंते।

---

**मात्रम्** ● रमणीयधर्मसम्बन्धादि उत्थापकम्। मात्रशब्देन इव नूनमित्यादिशब्दानां व्यवच्छेदः। **प्रतीयमाना** ● न तु व्यङ्ग्येति ध्येयम्। **सामग्रीरहितम्** ● साधारणरमणीयत्वादिविशिष्टधर्माणामभाव इत्यर्थः।

**तदभाव** ● जात्यादीनामभावः, जात्युत्प्रेक्षाया अपि द्रव्योत्प्रेक्षात्वसंभवेऽपि संज्ञाशब्दमादाय तत्र जात्यस्वीकारेण द्रव्यस्य ग्रहणम्। धर्म्युत्प्रेक्षामादाय तादात्म्येन धर्मोत्प्रेक्षाद्धामित्येतरेणेति। **तथाविधैः** ● जात्यादिभिः, हेतुत्वेनोत्प्रेक्षायां हेतूत्प्रेक्षा फलकत्वेनोत्प्रेक्षायां फलोत्प्रेक्षा, **निष्पन्न** ● लोकसिद्ध. **निष्पाद्य** ● । कविकल्पित।

आख्यायिकायां जात्यवच्छिन्नस्वरूपोत्प्रेक्षा यथा—

'तनयमैनाकगवेषणलम्बीकृतजलधिजठरप्रविष्टहिमगिरिभुजायमानाया भगवत्या भागीरथ्याः सखी' इति ।

अत्र भागीरथ्यां द्रव्ये जातौ वा हिमगिरिसम्बन्धी भुजत्वजात्यवच्छिन्नस्तादात्म्येनोत्प्रेक्ष्यते । तत्र च भागीरथीगतानां श्वैत्यशैत्यलम्बत्वजलधिजठरप्रविष्टत्वानां धर्माणां निमित्ततासिद्धये विषयिहिमगिरिभुजगत्वमवश्यं सम्पादनीयम् । तेषां च मध्येऽनुपात्तयोः श्वैत्यशैत्ययोर्हिमगिरिसम्बन्धित्वादेव भुजगतत्वं सम्पन्नम् । इतरयोरपि सम्पादनाय तनयमैनाकगवेषणं फलमुत्प्रेक्षितम्, तत्साधनताज्ञानस्य लम्बत्वजलधिजठरप्रवेशानुकूलयत्नजनकत्वात् । एवं च विषयिगततादृशगवेषणफलकलम्बत्वजलधिजठरप्रविष्टत्वाभ्यां विषयगतयोः साहजिकलम्बत्वजलधिजठरप्रविष्टत्वयोरभेदाध्यवसानातिशयोक्त्या साधारण्यसम्पत्तौ निमित्तता । न चात्र फलस्याप्युत्प्रेक्षेति वक्तुं शक्यम् । उत्प्रेक्ष्यमाणफलनिष्पादितनिमित्तोत्थापितायां स्वरूपोत्प्रेक्षाया-

---

तनय● तनयस्य मैनाकस्य गवेषणाय लम्बीकृतः जलधिजठरे प्रविष्टो हिमगिरेर्भुज इवाचरन्त्याः गङ्गायाः सखी यमुना ।

अत्र भागी● एकत्वेन जात्यभावे द्रव्ये कल्पभेदेनानेकत्वे जातावित्यर्थः । निमित्तता● साधारण्यसम्पादनद्वारेति शेषः । सम्बन्धित्वात्● श्वेतस्य शीतस्य च हिमगिरेर्भुजोऽपि तथा । इतरयोः● लम्बीकृतत्व-तादृशप्रविष्टत्वयोः । मुत्प्रेक्षितम्● मैनाकगवेषणाय प्रायो हिमगिरेर्भुजो लम्बितो जलधिजठरे प्रविष्टश्चेति सम्भाव्यते । जनकत्वात्● लम्बनं प्रवेशनञ्च मैनाकगवेषणसाधनमिति ज्ञानं लम्बनप्रवेशनयोः प्रवृत्तिजनकमिति भावः । विषयिगत● हिमाचलभुजगतेत्यर्थः । विषयगतभागीरथीनिष्ठ, साहजिकस्वाभाविक, निमित्तता● भागीरथ्यां भुजोत्प्रेक्षायाम् । फलस्यापि● अपिना भुजोत्प्रेक्षा । तथा चोभयोः प्राधान्यस्य प्रश्नः, फलोत्प्रेक्षायाः स्वरूपोत्प्रेक्षायामङ्गत्वमित्युत्तरम् । निष्पादित● फलेन साधितं निमित्तं लम्बितत्व-जठर-प्रविष्टत्वादि तेनोत्थापितायाम्, भुजायमानाया इति विशेष्यतया

मेव विधेयत्वाच्चमत्कृतेर्विश्रमात्, उत्प्रेक्षाप्रतिपादकस्य प्रत्ययस्य फलेनानन्वयाच्च, तयैवात्र व्यपदेशो युक्तः। अनिगीर्णविषया चेयमुपात्तानुपात्तगुणक्रियात्मकनिमित्ता निष्पाद्यविशिष्टशरीरा जात्युत्प्रेक्षा, हिमगिरिभुजस्य कविनैव निष्पादितत्वात्।

तादात्म्येन गुणस्वरूपोत्प्रेक्षा यथा—

'अम्भोजिनीबान्धवनन्दनायां कूजद्बकानां समजो विरेजे।
रूपान्तराक्रान्तगृहः समन्तात् पुञ्जीभवञ्शुक्ल इवाश्रयार्थी॥'

अत्रैकाधिकरण्यापन्ने कूजनविशिष्टे बकत्वजात्यवच्छिन्ने विषये पुञ्जीभवनविशिष्टः शुक्लगुणस्तादात्म्येनोत्प्रेक्ष्यते। तत्र बकगतानां कूजननैर्मल्यपुञ्जीभवनानां शुक्लगुणगतत्वमन्तरेण बकशुक्लयोरभेदस्य दुरुपपादत्वात् तत्सिद्धये तेषां विषयिगतत्वं साध्यम्। तत्र नैर्मल्यस्यानुपात्तस्य यथाकथञ्चिदुत्प्रेक्ष्यमाणे विषयिणि सिद्धत्वात् कूजनपुञ्जीभवनयोर्निष्पादनाय रूपान्तरा-

---

उपस्थापितत्वात् फलोत्प्रेक्षाया अपि फलरूपत्वाच्चाह विधेयत्वात् ● तत एव चमत्कृतेर्विश्रान्तिस्तत्र। प्रत्ययस्य क्यङः, तदर्थान्वयिन एव विधेयत्वात्, तयैव ● स्वरूपोत्प्रेक्षयैवास्यकाव्यस्यालङ्कृतत्वव्यपदेशः। उपात्ता ● उपात्ते लम्बनप्रवेशनक्रिये, अनुपात्तौ श्वैत्यशैत्ये गुणौ, निष्पाद्य ● विषयिणोऽप्रसिद्धत्वात्, तदेवाह हिमगिरि ●।

अम्भोजिनी ● अम्भोजिन्याः कमलिन्या बान्धवस्य सूर्यस्य तनयायां यमुनायां कूजन् बकानां समूहः, रूपान्तरेण यमुनाश्यामेन आक्रान्तं गृहं यस्य तेन आश्रयमपेक्षमाणः समन्तात् पुञ्जीभवन् शुक्लगुण इव विरेजे शुशुभे। समुदोरजः पशुषु इति पाणिनिसूत्रेण अजधातोः पशुसंघे व्युत्पन्नोऽयं समजशब्दः पक्षिसमुदाये प्रयुक्तः। अत्र बके शुक्लगुणस्योत्प्रेक्षा, कूजनपुञ्जभावयोर्नैर्मल्यस्य च निमित्तता, त्रैकाधिकरण ● समुदायमापन्ने, विषयिगत शुक्लगतत्वम्, नैर्मल्यस्य गुणान्तरत्वे गुणे गुणानङ्गीकारादाह यथाकथञ्चित् ●

क्रान्तगृहत्वमाश्रयार्थित्वं च हेतुत्वेनोत्प्रेक्षितम् । इहापि प्राग्वत् साहजिकयोः कल्पिताभ्यामभेदाध्यवसानात् साधारण्यम् । एवमन्यत्राप्यूह्यम् ।

पूर्वं हि यथा फलस्योत्प्रेक्षणेऽपि न फलोत्प्रेक्षा तथेहापि हेतोरिति ।

क्रियास्वरूपोत्प्रेक्षा यथा—

'कलिन्दजानीरभरेऽर्धमग्ना बकाः प्रकामं कृतभूरिशब्दाः ।
ध्वान्तेन वैराद् विनिगीर्यमाणाः क्रोशन्ति मन्ये शशिनः किशोराः ॥'

अत्र प्रथमान्तविशेष्यकबोधवादिनामभेदसंसर्गेण कलिन्दजानीरार्धमग्नकृतभूरिशब्दोभयविशिष्टेषु बकेषु विषयेषु ध्वान्तकर्तृकवैरहेतुकनिगरणकर्माभिन्नोत्प्रेक्षितशशिकिशोरतादात्म्योत्प्रेक्षणपूर्वकं क्रोशनकर्तृत्वं धर्मं उत्प्रेक्ष्यते । तत्र तादात्म्योत्प्रेक्षणे धर्म्युत्प्रेक्षायां साधारणो धर्मः, सम्बन्धान्तरेणोत्प्रेक्षणे

---

मलाभावरूपं स्वीकृत्य, हेतुत्वेनोत्प्रेक्षितम ● गृहाभावेन आश्रयार्थितयाऽत्र शुक्लगुणस्य कूजनं पुञ्जीभवनञ्च । साहजिकयोः ● बकगतयोः कूजनपुञ्जीभवनयोः कल्पिताभ्यां शुक्लगताभ्यां कूजनपुञ्जीभवनाभ्याम् ।

ननु कूजनपुञ्जीभवनहेतुत्वेन रूपान्तराक्रान्तगृहत्वाश्रयार्थित्वयोरुत्प्रेक्षयैव कथन्न व्यपदेश इत्याशङ्कां समाधत्ते पूर्वं हि ● गुणोत्प्रेक्षानिमित्तस्य कूजनादेः साधारण्यसम्पादनायाङ्गत्वं हेतुत्वोत्प्रेक्षायाः । उत्प्रेक्षावाचीवशब्दान्वयित्वाच्च गुणोत्प्रेक्षाया विधेयत्वाच्च ।

कलिन्दजानीर ● यमुनाजलसमुदायेऽर्धमग्ना यथेच्छं कृतभूरिशब्दा बका वैराद् ध्वान्तेन आलिह्यमानाः शशिनः किशोराः क्रोशन्ति करुणाक्रन्दनं कुर्वन्ति इति मन्ये । नैयायिकमतेन प्रथमं विशेषणद्वयविशिष्टेषु बकेषु विनिगीर्यमाणशशिकिशोराणां तादात्म्येनोत्प्रेक्षा । सा च धर्म्युत्प्रेक्षा । तादृशकिशोरतादात्म्यापन्नेषु च बकेषु क्रोशनकर्तृत्वं धर्मं उत्प्रेक्ष्यते । शशिकिशोराणां कविकल्पिततया निष्पाद्यशरीरेयम् । प्रथमान्त ● नैयायिकमतेन, वादिनामित्यस्य धर्मं उत्प्रेक्ष्यते । निर्गीर्यमाणेत्यस्य निगरणकर्मार्थः । साधारणो धर्मः

धर्मोत्प्रेक्षायां तत्समानाधिकरणो धर्मश्च विषयगतो निमित्त-मिति स्थिते प्रकृते क्रोशनकर्तृत्वरूपधर्मोत्प्रेक्षायां तत्समानाधि-करणनिगरणकर्मत्वरूपधर्मस्य विषयगतत्वसिद्धयेऽनुवाद्यतया शशिकिशोरतादात्म्यमनुपात्तश्वैत्यनिमित्तकमुत्प्रेक्ष्यते। तत्र यथा विशिष्टोपमायामुपमानोपमेयविशेषणतद्विशेषणानामार्थ-मौपम्यम्, एवमत्रापि विषयबकविशेषणतद्विशेषणयोरर्धमज्जन-यमुनाजलयोर्मूलोत्प्रेक्षाविषयिशशिकिशोरविशेषणतद्विशेषणाभ्यां निगरणध्वान्ताभ्यामभेद आर्थः। ततश्च ध्वान्तकर्तृकनिगरणे सिद्धे मुख्योत्प्रेक्षानिर्वाहः। क्रोशनशब्दयोरपि बिम्बप्रतिबिम्ब-भावेनाभेदः। तेन कलिन्दजानीरार्धमग्नकृतभूरिशब्दोभयाभिन्ना बका ध्वान्तनिगीर्यमाणशशिकिशोरोभयाभिन्नाः क्रोशनक्रिया-नुकूलव्यापारवन्त इवेति बोधाकारः। आख्याते भावप्राधान्ये त्वभेदेन क्रोशनक्रियोत्प्रेक्षा। तत्र शाब्दे वृत्ते बकविशेषणतया

---

क्रोशनकर्तृत्वरूपः, तत्समानाधिकरण● क्रोशनकर्तृत्वसमानाधिकरणो बक-गतो निगरणकर्मत्वरूपः। विषयगतत्व● शशिकिशोरे विषयिणि उपात्तस्य बके विषये सम्पादनाय। अनुवाद्यतया● एतेन क्रोशनकर्तृत्वोत्प्रेक्षाया विधेयत्व-प्रधानत्व-व्यपदेशहेतुत्वानि धर्म्युत्प्रेक्षायाश्च अङ्गत्वमिति दर्शितम्। मूलोत्प्रेक्षा● प्रधानीभूतोत्प्रेक्षाकारणीभूता या धर्म्युत्प्रेक्षा तस्या विषयी शशिकिशोर इत्याद्यर्थः। अर्धनिमज्जनस्य निगरणेन यमुनाजलस्य ध्वान्तेनाभेदः। बकानामपि निगरणसिद्धिमाह ततश्च●। धर्म्युत्प्रेक्षानिमित्तधर्मस्यापि साधारण्यमाह क्रोशन●। क्रियानुकूल● क्रोशनकर्तृत्वस्य आश्रयता-संसर्गेणोत्प्रेक्षणाद् आश्रयतायाः संसर्गतया भानमिति बोध्यम्। अनुकूलो व्यापारः कृतिः। व्याकरणमतेनोपक्रमते आख्याते● क्रियाया वाक्यार्थे प्राधान्यवादिनस्ते, तेषां मते बकस्य विशेष्यतया भानं न संभवति। क्रियोत्प्रेक्षा● बकविशेषणीभूतशब्दे विषये इति शेषः। शाब्दे● तादृश-निगरणकर्मीभूतशशिकिशोरोत्प्रेक्षिताभेदकविशेषणद्वयविशिष्टबककर्तृकक्रोशन -

प्रतीयमानमपि शब्दनं विषयतयाऽवतिष्ठते, अध्यवसानवशात्। क्रोशनक्रियायां च तादृशबका विशेषणम्, तादृशबकेषु चाभेदेन तादृशशशिकिशोराः, न तु शशिकिशोरा एव साक्षात्क्रियायाम्। एवं च बकानामनन्वयापत्तेर्विषयविषयिविशेषणानां प्राग्वदेव बिम्बप्रतिबिम्बभावेनाभेदप्रतिपत्तिः।

तथा—

'राज्याभिषेकमाज्ञाय　　शम्बरासुरवैरिणः।
सुधाभिर्जगतीमध्यं　　लिम्पतीव सुधाकरः॥'

अत्रापि चन्द्रे विषये तादृशलेपनकर्तृत्वरूपधर्मोत्प्रेक्षेत्येकं दर्शनम्। किरणव्यापने विषये चन्द्रकर्तृकसुधाकरणकलेपनस्य तादात्म्येनोत्प्रेक्षणमिति द्वितीयम्। तत्र प्रथमे मते धवलीकारकत्वरूपनिमित्तानुपादानादनुपात्तनिमित्ता, विषयस्योपादानादुपात्तविषया। द्वितीयेऽपि तस्यैव निमित्तस्यानुपादानादनुपात्तनिमित्ता, विषयस्य निगीर्णतयानुपात्तविषयेति विशेषः।

---

मित्याकारके। अध्यवसानवशात् ● शब्दाभिन्नोपस्थापकलक्षणाभेदविशेषात्। मञ्चाः क्रोशन्तीत्यादौ मञ्चस्थबालकोपस्थापिकेव। विशेषणम् ● स्वाभिन्नकर्तृकत्वसम्बन्धेन। चाभेदेन ● संभाविताभेदेन। साक्षात् ● स्वाभिन्नाश्रयकत्वसम्बन्धेन। किन्तु बकविशेषणतामुखेन। एवञ्च ● किशोराणां साक्षात् क्रोशनान्वये। अन्यत् सर्वं पूर्ववत् स्मारयति प्राग्देव ● अत्रत्या सरला अशुद्धा।

राज्याभिषेकम् ● शम्बरासुरवैरिणो मदनस्य राज्याभिषेकम् आकर्ण्य चन्द्रश्चन्द्रिकारूपसुधाभिः जगतीमध्यं लिम्पति इव। तादृश ● सुधाकरणकजगतीमध्यकर्मकलेपनकर्तृत्वरूपधर्मस्योत्प्रेक्षायाः स्वीकारमते। द्वितीयम् ● सर्वत्र धर्मिण एव उत्प्रेक्षावादिमते। यूपवदेव लिम्पधातुनैवाध्यवसानवशाद् व्यापनाभिन्नलेपनोपस्थितेः। विषयस्यो ● चन्द्रस्य, विषयस्य ● व्यापनस्य। अत्र विषये सागरविश्वविद्यालयप्रकाश्यमानसागरिकायाम् १९७२ ईशाब्दप्रकाशित उपमोत्प्रेक्षाकलकलो नाम लेखो विलोकनीयः।

तादात्म्येन द्रव्यस्वरूपोत्पेक्षा यथा—

'कलिन्दशैलादियमाप्रयागं केनापि दीर्घा परिखा निखाता ।
मन्ये तलस्पर्शविहीनमस्यामाकाशमानीलमिदं विभाति ॥'

यत्र यमुनायां नीलत्वदीर्घत्वनिमित्तकमाकाशतादात्म्योत्प्रेक्षणम् । आकाशस्य स्वरूपात्मकत्वाद् द्रव्यस्वरूपोत्प्रेक्षेयम् । अत एवाकाशपदाच्छब्दाश्रयत्वाद्यनुपस्थितिदशायामप्याकाशधीः। नीलत्वरूपनिमित्तस्य विषयिणि सिद्ध्यर्थं तृतीयचरणोपादानम्। दीर्घत्वरूपनिमित्तसिद्ध्यर्थं च पूर्वार्धम् ।

जात्यादीनामभावोत्प्रेक्षा यथा—

---

**कलिन्दशैला** ● कलिन्दनामकपर्वतात् प्रयागं यावदियं यमुनारूपा केनापि निखाता परिखा अस्ति । अस्यां परिखायामगाधतया तलस्पर्शरहितम् इदम् अधिकं नीलम् आकाशं विभाति इति मन्ये । यमुनायामाकाशस्योत्प्रेक्षा नीलत्वाद् दीर्घत्वाच्च । तलस्थाभावाच्च नीलत्वमाकाशस्य सिध्यति तत्र व्यापनात् । आकाशस्य नीरूपस्य नैल्यं न स्वाभाविकम्, उपरितनाकाशेऽपि पृथ्वीगतछायया नीलत्वप्रतीतिः, अत्र तलस्पर्शे जलरहिते न काचिच्छाया आपतेत्, जलस्य छायाग्राहित्वात्, इत्येवोक्तम् **तृतीयचरणो** ● परममहतो निरतिशयपरिमाणस्य सातिशय एव ह्रस्वदीर्घत्वप्रतीतेराकाशस्य दीर्घत्वं न स्वाभाविकम् अपि तु उपाधिकृतम् उपाधिश्च दीर्घा यमुना परिखा, तद्-दैर्घ्यमेव यमुनायां प्रतीयते इत्याह **पूर्वार्धम्** ● अत्र चन्द्रिका वस्तुस्थितिं न स्पृशति मुधा क्लिश्यति । **शब्दाश्रयत्वा** ● एकव्यक्तिवृत्तितया आकाशत्वस्य जातित्वाभावे आकाशत्वं शब्दाश्रयत्वं शब्दसमवायिकारणत्वं वा तदेव प्रवृत्तिनिमित्तं शक्यतावच्छेदकं वा अस्तु इति न युक्तम् शब्दाश्रयत्वस्य शब्दसमवायिकारणत्वस्य वा अज्ञानदशायामपि आकाशपदादाकाशस्य शुद्धस्य शाब्दबोधानुभवात् शक्यतावच्छेदकत्वे तु तद्विरोधः। शक्यस्य आकाशस्य एकव्यक्तितया अन्यत्रेव शक्यानुगमकस्य एकस्य अनपेक्षणाच्च । आप्रयागमिति समस्तं पदं व्यस्ते प्रयागादिति स्यात्, तेन सरलाया नागेशाक्षेपो न युज्यते ।

'बाहुजानां समस्तानामभाव इव मूर्तिमान् ।
जयत्यतिबलो लोके जामदग्न्यः प्रतापवान् ॥'

अत्र जात्यवच्छिन्नाभावो विरोधित्वनिमित्तेन तादात्म्येनोत्प्रेक्ष्यते।

'विनाश इव'इत्युक्तौ तु ध्वंसः । 'समस्तलोकदुःखानाम्' इति प्रथमचरणे कृते गुणाभावः ।

'द्यौरञ्जनकालीभिर्जलदालीभिस्तथा वव्रे ।
जगदखिलमपि यथासीन्निर्लोचनवर्गसर्गमिव ॥'

अत्रापि चाक्षुषज्ञानशून्यत्वेन निमित्तेन पार्यन्तिकः क्रियाभावो धर्मः ।

एवं द्रव्याभावोत्प्रेक्षाऽपि स्वयमूह्या ।

मालारूपाऽप्येषा सम्भवति ।

---

बाहुजानाम् ● विरोधित्वेन समस्तानां क्षत्रियाणां मूर्तिमान् अभाव इव अतिशयबलः प्रतापवान् परशुरामः लोके जयति, परशुरामे क्षत्रियात्यन्ताभावस्य तादात्म्येनोत्प्रेक्षा । अनुपात्तं विरोधित्वे निमित्तम् । वाचकपदाभावात् प्रतीयमानम् । जात्यवच्छिन्न ● क्षत्रियत्वजात्यवच्छिन्नक्षत्रियाणामभावः । ध्वंसस्योत्प्रेक्षाया अपि उदाहरणं सम्पादयति **विनाशः** ● । दुःखरूपगुणाभावस्यापीदमेवं प्रथमचरणपरिवर्तनेनोदाहरणं कल्पयति **समस्तलोक** ● अत्रापि सरला अशुद्धा ।

**द्यौरञ्जनकाली** ● कज्जलवन्नीलैर्मेघसमूहैर्द्यौस्तथा आच्छादिता, यथा अखिलमपि जगत् लोचनसमूहस्य सृष्टेरभावो यत्रैवमासीत्, मेघाच्छन्ने चाक्षुषज्ञानं न जायते। एवं लोचनसृष्टिमन्तराऽपि । अतः साधारणतया चाक्षुषज्ञानसामान्याभावो निमित्तम् । सर्गान्तस्य जगतो विशेषणतया तादृशविशिष्टविजातीयजगत एवोत्प्रेक्षा प्रतीयते इत्याशङ्क्याह **पार्यन्तिक** ● प्राथमिके तादृशप्रत्यये जातेऽपि तादृशजगतोऽप्रसिध्या पश्चात् क्रियाया अभावे एवोत्प्रेक्षा विश्राम्यति । क्रिया दर्शनरूपेति मर्मप्रकाश-भाषानुवाद-सरला-चन्द्रिकाः । परं चाक्षुषज्ञानसामान्यशून्यत्वस्य मूले निमित्तोक्त्या दर्शनाभावस्य चाक्षुषज्ञानाभावरूपतया च दर्शनाभावस्य विषयित्वानौचित्याद् लोचनवर्गसर्गाभाव एव ग्रन्थकृतां तात्पर्यं प्रतिभाति । लोचनवर्गस्य सर्गः

यथा—

'द्विनेत्र इव वासवः करयुगो विवस्वानिव
द्वितीय इव चन्द्रमाः श्रितवपुर्मनोभूरिव ।
नराकृतिरिवाम्बुधिर्गुरुरिव क्षमामागतो
नुतो निखिलभूसुरैर्जयति कोऽपि भूमीपतिः ॥'

अत्र राजगतानां द्विनेत्रत्वादीनां वासवादितादात्म्यविरोधिनां विरोधनिवर्तनाय विषयिषु वासवादिष्वारोपेण साधारणीकरणम् । न चात्रोपमा शक्यनिरूपणा, द्विनेत्रत्वादीनामुक्तेर्निष्प्रयोजनकत्वापत्तेः । न चोपमाया निष्पादकं तेषां साधारण्यम्, तदभावेऽपि परमैश्वर्यादिभिः प्रतीयमानैस्तस्या निष्पत्तेः । असुन्दरत्वादुपमानिष्पादकत्वेन कवेरनभिप्रेतत्वाच्च । नह्यत्र द्विनेत्रत्वादिभिर्धर्मैर्वासवादिसादृश्यं राज्ञः कवेरभिप्रायविषयः । एवं द्वितीयत्वादीनां चन्द्रादिष्वारोपोऽप्युपमायां सत्यामनर्थक एव स्यात् । अभेदप्रतिपत्तौ तु सहस्रनेत्रेण सहस्रकरेण विधिसृष्टावेकेन वपुर्विहीनेन जलाकारेण स्वर्गगतेन च

---

प्रसरणं यत्र दर्शने तादृशदर्शनाभावं मर्मप्रकाशो ब्रूते, तादृशक्लिष्टकल्पनायां तदभिप्रेतं न स्फुरति किन्तु तदुक्तेः सर्गाभावः फलति ।

द्विनेत्र ● नेत्रद्वयधारी इन्द्र इव ऐश्वर्यवशात्, प्रतापवशाद् हस्तद्वयी सूर्य इव, सौन्दर्येण द्वितीयो भुवनचरश्चन्द्र इव, कमनीयकामिनीमनःस्थिततया च कलेवरी काम इव, गम्भीरतया नरसरूपः समुद्र इव, विचारेण वैदुष्येण वा क्षमामागतो गुरुरिव, सकलब्राह्मणकविभिः स्तुतः कोऽपि विलक्षणो राजा सर्वोत्कर्षेण वर्तते । अत्र राज्ञि विषये वासवादीनां षण्णां विषयिणां तादात्म्येनोत्प्रेक्षा । ऐश्वर्यादिसाधारणनिमित्तस्य सत्त्वेऽपि क्रमशः सहस्रनयनः सहस्रकिरणः गगनगत-शरीरहीन-जलस्वरूप-स्वर्गतत्वादीनां विरोधिनां तादात्म्योत्प्रेक्षाप्रतिबन्धकतां निरस्यति अत्र राजगतानां ● । आरोपेण ● क्वचिदध्यारोपेणेति पाठः । अङ्गभूतोत्प्रेक्षान्तरेण अतिशयोक्त्या वा । ननूपात्तै-

तेन तेन कथमस्याभेदः स्यादिति प्रतिकूलधियमपसारयतां विषयिगतानां द्विनेत्रत्वाद्यारोपाणामस्त्येवोपयोगः। अत्रैवेव-शब्दस्याभावे दृढारोपं रूपकम्, विषयिगतविशेषणानामभावे उपमा, उभयेषामेकतरस्याप्यभावे शुद्धरूपकमिति विवेकः।

एवं स्वरूपोत्प्रेक्षादिगुपदर्शिता।

अथ हेतूत्प्रेक्षा।

यथा—

'त्वत्प्रतापमहादीपशिखाविपुलकज्जलैः।
नूनं नभस्तले नित्यं नीलिमा नूतनायते॥'

अत्र नीलिमसामानाधिकरण्येनोत्प्रेक्षितस्य हेतुत्वेनोत्प्रेक्षणम्।

'कज्जल-लेपनैः' इति कृते इयमेव क्रियाहेतूत्प्रेक्षा।

गुणहेतूत्प्रेक्षा यथा—

---

रेवारोपितैः स इष्यताम् इत्याशङ्क्याह असुन्दरत्वा ● । दृढारोपम् ● आरोपितोपात्तधर्मैः सर्वथाऽविरोधे तादात्म्यारोपस्य दृढत्वात्। अभावे ● विशेषणवैधर्म्यरूपपूर्वोक्तप्रतिबन्धकाभावे। रूपकम् ● दार्ढ्यसम्पादकानां विशेषणानामभावे साधारणरूपकमित्यर्थः। उभयोरिवशब्दविशेषणयोमध्ये किमपि नास्तीत्यभिप्रायेण अन्यतरशब्दोपादानम्। उभयोरेकस्यापि सत्त्वे अन्यतरद् नास्तीति न प्रतीयते, एषा ग्रन्थकारस्य लेखनशैली अत्र ग्रन्थे बहुधा दृश्यते। उभयोरभावे इति अन्येषां लेखनसरणिः। तत्र एकस्य सत्त्वे उभौ न स्त इति प्रतीत्यापत्तिः तद्वारकपरिष्कारश्च प्रचलति।

राजानं प्रति कस्यचिदुक्तिः त्वत्प्रताप ● तव प्रतापाभिन्नस्य महादीपस्य शिखानां ज्वालानां विपुलैः कज्जलैर्नभस्तले नित्यं नीलिमा नूनं नूतनायते, वारिदादिवशात् स्वयमेव नूतनतां दधानस्य नभोनीलिम्नो हेतुत्वेन कज्जलस्योत्प्रेक्षा, प्रतिदिनं नीलिम्न उपचयापचयौ निमित्तम्। नीलिम ● नीलत्व-विशिष्टस्य कज्जलस्य हेतुत्वेनोत्प्रेक्षा।

'परस्परासङ्गसुखान्नतभ्रुवः पयोधरौ पीनतरौ बभूवतुः ।
तयोरमृष्यन्नयमुन्नतिं परामवैमि मध्यस्तनिमानमञ्चति ॥'

अत्र पूर्वार्धे सुखस्य गुणस्य हेतुत्वं तावत् पञ्चम्यैव निर्दिष्टम् । अपरार्धे धर्मिविशेषणतया अनूद्यमानस्य गुणाभावस्य त्वार्थम् । यथा 'भोक्ता भुञ्जानो वा तृप्यति' इत्यादौ भोजनादेः।

यथा वा—

'व्यागुञ्जन्मधुकरपुञ्जमञ्जुगीता-
माकर्ण्य स्तुतिमुदयत्त्रपातिरेकात् ।
आभूमीतलनतकन्धराणि मन्येऽ-
रण्येऽस्मिन्नवनिरुहां कुटुम्बकानि ॥'

क्रियाहेतूत्प्रेक्षा यथा—

'महागुरुकलिन्दमहीधरोदरविदारणाविर्भवन्महापातकावलिवेल्लनादिव श्यामलिता' इति ।

---

**परस्परा** ● नतभ्रुवः स्वभावतः पीनौ पयोधरौ परस्परस्पर्शसुखात् स्थूलतरौ बभूवतुः, पञ्चम्या सुखस्य पीनत्वे हेतुत्वेनोत्प्रेक्षणम् । अयं मध्यश्च तयोः पयोधरयोः परामुन्नतिम् अमृष्यन् असहमानः क्लेशहेतुना कार्श्यं गच्छति । उत्तरार्धे दुःखस्य हेतुत्वसंभवेऽपि उपात्तस्य मर्षणगुणाभावस्य हेतुत्वं दर्शयति **अपरार्ध** ● क्वचिदुत्तरार्ध इत्यपि पाठः । अमृष्यन्नित्यत्र शतृप्रत्ययान्तकर्तरि विशेषणीभूतत्वादाह **आर्थम्** ● भोक्तेत्यादौ यथा तृप्तेर्भोजनजन्यत्वं प्रतीयते, तथाऽत्रापि कार्श्यं मर्षणाभावप्रयोज्यत्वमित्यर्थः । कालसादृश्येनापि प्रकृतानुकूलं दृष्टान्तमाह **भुञ्जानो वा** ● आदिना धनिनः सुखमित्यादेः संग्रहः । नैयायिकगुणत्वप्रसिद्धिविधुरस्य लज्जादेरपि गुणस्य हेतुत्वेनोत्प्रेक्षाया उदाहरणान्तरमप्याह **व्यागुञ्जन्** ● वृक्षाणां शाखापत्रादिभाराद् भूमिं यावत् कन्धरानमनं लज्जाधिक्यहेतुकमुत्प्रेक्ष्यते । लज्जा च मधुकरकुलेन प्रशंसनीयायाः स्तुतेः श्रवणात् । अरण्येऽपि नमनं त्रपाहेतुकमेव ।

**महागुरुकलिन्द** ● यमुनाश्यामतायां महापातकपुञ्जोज्जृम्भणस्य हेतुत्व-

द्रव्यहेतूत्प्रेक्षा यथा—

'वराका यं राकारमण इति वल्गन्ति सहसा
　　सरः स्वच्छं मन्ये मिलदमृतमेतन्मखभुजाम् ।
अमुष्मिन्या कापि द्युतिरतिघना भाति मिषता-
　　मियं नीलच्छायादुपरि निरपायाद् गगनतः ॥'

अत्रामृतसरोरूपत्वेनोत्प्रेक्षिते चन्द्रमसि नीलत्वेनाध्यवसिते कलङ्के उपरिवर्ति नभोहेतुकत्वमुत्प्रेक्ष्यते । एतेन द्रव्यस्य हेतुत्वेनोत्प्रेक्षणं नास्तीति प्राचां प्रवादो निरस्तः ।

एषामेवाभावानां हेतुत्वोत्प्रेक्षा यथा—

'नितान्तरमणीयानि वस्तूनि करुणोज्झितः ।
कालः संहरते नित्यमभावादिव चक्षुषः ॥'

अत्र कालस्य साहजिके संहारकत्वे चक्षुरभावस्य हेतुत्वेनोत्प्रेक्षा ।

---

मुत्प्रेक्ष्यते । वेल्लनमुज्जृम्भणम् । महापातकञ्च पितुरपि कलिन्दपर्वतस्योदर-विदारणात्, पर्वतेभ्योऽवतरन्त्यो नद्यस्तदुपलानि स्खलयन्त्येव ।

**वराका** ● सहसा अविचार्यैव, अमृतयुक्तम्, लसदमृतम् इत्यपि पाठः । देवानाम्, द्युतिर्नीलरूपा, मिषतां पश्यताम्, नीलच्छायाद् अविनश्वराद् गगनतः । अत्र चन्द्रमसि अमृतसरस उत्प्रेक्षा, तदनन्तरं चन्द्रकलङ्के तादात्म्येन नभसो हेतुत्वेनोत्प्रेक्षा । या हि द्रव्यस्य हेतुत्वेनोत्प्रेक्षा सा जातेरेव हेतुत्वेन । जातिं विना शुद्धद्रव्यस्य हेतुत्वासम्भवादिति प्रवादं निरस्यति **एतेन** ● आकाशत्वजातिमन्तराऽपि अत्रोत्प्रेक्षायाः सत्त्वात्, शब्दादिकं प्रति गगन-कारणताया मुक्तावलीदिशा कवत्त्वादिना विशेषपदार्थेन वा अवच्छेदात् ।

**नितान्त** ● करुणोज्झितो दयारहितः, नितान्तम् अत्यन्तम् । **चक्षुरभावस्य** ● कालो यदि सचक्षुः दिदृक्षासुखेन रमणीयरूपाणि न संहरेत् । कालेन रमणीयरूपाणां संहरणं चक्षुरभावप्रयोज्यम् । करुणोज्झित इत्यत्र आहिताग्न्यादित्वात् परनिपातः तृतीयातत्पुरुषो वा ।

'निःसीमशोभासौभाग्यं नताङ्ग्या नयनद्वयम् ।
अन्योन्यालोकनानन्दविरहादिव चञ्चलम् ॥'

अत्र गुणाभावस्य ।

'जनमोहकरं तवालि मन्ये चिकुराकारमिदं घनान्धकारम् ।
वदनेन्दुरुचामिहाप्रचारादिव तन्वङ्गि नितान्तकान्तिकान्तम् ॥'

इह द्वितीयार्धे क्रियाभावस्य । प्रथमार्धे तु जात्यवच्छिन्नस्य जात्यवच्छिन्नाभावस्य वा स्वरूपोत्प्रेक्षैव ।

'न नगाः काननगा यद्रुदतीषु त्वदरिभूपसुदतीषु ।
शकलीभवन्ति शतधा शङ्के श्रवणेन्द्रियाभावात् ॥'

इह श्रोत्रत्वस्य जातिगुणक्रियाभ्योऽतिरिक्तस्य विवेके क्रियमाणे आकाशस्वरूपतया तदवच्छिन्नाभावस्य द्रव्याभावस्य हेतुत्वेनोत्प्रेक्षा । निमित्तं क्रियाभावः ।

एवं हेतूत्प्रेक्षादिक् ।

---

**निःसीम** ● नताङ्ग्या नयनद्वयं निःसीमशोभासौभाग्यम्, तस्य दर्शनेन सर्वेषामानन्दो जायते, चक्षुषी तु परस्परं नालोकयतस्तेन तयोश्चाञ्चल्यम् । **गुणाभावस्य** ● चाञ्चल्यहेतुभूतस्यावलोकनसुखाभावस्य इत्यर्थः ।

**जनमोह** ● हे आलि ? जनानां मोहकरं तव केशरूपधारि गाढध्वान्तं मन्येऽतिनीलत्वनिमित्तम् । तमसोगाढत्वे तेजसः प्रचाराभावं हेतुमाह **वदनेन्दु** ● इह केशेभ्योऽधःस्थिततया मुखचन्द्रप्रकाशस्य प्रचाराभावात् । अधिककान्त्या सुन्दरम्, अन्धकारत्वेनोत्प्रेक्षितं चिकुरम्, प्राकरणिकीं प्रधानां प्रचाराभावस्योत्प्रेक्षां दर्शयति **द्वितीयार्ध** ● अन्तरेवापतितां प्राकरणिकीम् अन्धकारस्योत्प्रेक्षां दर्शयति **प्रथमार्धे** ●

तमः खलु चलं नालं परापरविभागवत् ।
प्रसिद्धद्रव्यवैधर्म्याद् नवभ्यो भेत्तुमर्हसि ॥

इति सिद्धान्तानुरोधेन अन्धकारत्वजात्यवच्छिन्नस्याह **जात्यवच्छिन्नस्य** ● नैयायिकमतेन तेजस्त्वजात्यवच्छिन्नाभावाभिप्रायेणाह **जात्यवच्छिन्नाभावस्य** ● ।

**न नगाः** ● यद् यस्मात् कारणाद् रुदतीषु तव शत्रुभूपतिसुन्दरीषु काननगा वृक्षाः शतधा न खण्डशो भवन्ति तत् श्रवणेन्द्रियरूपाकाशाभावादिति शङ्के । **क्रियाभावः** ● उपात्तः शकलीभवनाभावः अनुपात्तो रोदनश्रवणाभावो वा ।

अथ फलोत्प्रेक्षा—

'दिवानिशं वारिणि कण्ठदघ्ने दिवाकराराधनमाचरन्ती ।
वक्षोजतायै किमु पक्ष्मलाक्ष्यास्तपश्चरत्यम्बुजपङ्क्तिरेषा ॥'

अत्र वक्षोजत्वमवयववृत्तिजातिस्तल्प्रत्ययार्थः । त्वतलोः प्रकृतिप्रवृत्तिनिमित्ते भावे विधानात् । स एव चात्र तपश्चरण-क्रियायाः साहजिकजलावस्थानाभिन्नतयाऽध्यवसितायाः फलत्वे-नोत्प्रेक्ष्यते ।

न चात्र प्राप्तिक्रियामन्तरेण जातेः शुद्धाया अफलत्वात् क्रियाया एव फलत्वमिति वाच्यम् । प्राप्तेः संसर्गतया तद्द्वारैव जात्यादेः फलत्वोपपत्तेः । अन्यथा फलत्वबोधकचतुर्थ्या

---

दिवानिशम् ● एषा अम्बुजपङ्क्तिः दिवानिशं कण्ठदघ्ने दघ्नच्-प्रत्ययान्तः कण्ठपरिमाणे वारिणि सूर्यभक्तिं कुर्वती पक्ष्मलाक्ष्याः स्तनत्वाय तपश्चरति किमु ? स्तनत्वजातेस्तपस्याफलत्वेनोत्प्रेक्षा, वक्षोजतेत्यत्र जातौ तल्प्रत्ययः । अवयववृत्ति ● स्तनवृत्तिः, प्रवृत्तिनिमित्ते ● शब्दस्य प्रवृत्तिरर्थे प्रयोगस्तस्य निमित्तम् । स्तनाः प्रत्येकं विभिन्नास्तेषु स्तनत्वमेकं जातिरूपम् ; स्तनत्वञ्चापेक्ष्य स्तनशब्दः प्रयुज्यते, अतः स्तनशब्दस्य प्रवृत्ति-निमित्तं स्तनत्वं जातिः, प्रायो जातिरेव प्रवृत्तिनिमित्तं भवति अतः शक्यता-वच्छेदकतयाऽपि जातिः सिध्यतीति केषाञ्चित् सिद्धान्तः । प्रवृत्तिनिमित्तशक्यता-वच्छेदकौ समानार्थौ । वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारता-श्रयत्वं प्रवृत्तिनिमित्तमिति पक्षधरमिश्रलक्षण न्यायव्या रणटीकादिषु विशेषेण परिष्कृतम् उपलभ्यते । विधानात् ● तस्य भावस्त्वतलाविति सूत्रेण । कौमुद्यादिषु प्रकृतिजन्यबोधे प्रकारीभूतो भाव इत्यादेः फलतोऽत्रैव पर्यवसानम् । साहजिक ● अम्बुजपङ्क्तेः स्वाभाविकजलावस्थानं तस्यैव तपस्यात्वेनो-त्प्रेक्षणम् ।

जातेर्नित्यत्वेन स्वतःसिद्धतया कथं फलत्वमित्याशङ्कते न चात्र ● समवायेन सिद्धाया जातेः प्राप्तिसम्बन्धेन प्राप्तिपर्यन्तमसिद्धतैव । चतुर्थ्याः ● तादर्थ्यचतुर्थ्याः फलतः प्रकृत्यर्थस्य फलत्वबोधनात् । वक्षोजताशब्दस्य वक्षोजताप्राप्तौ लक्षणायां गौरवात्, विधेयकोटिप्रविष्टस्य लक्ष्यार्थस्य क्लिष्टत्वेन

अनुपपत्तेः । अत एव—'ब्राह्मण्याय तपस्तेपे विश्वामित्रः सुदारुणम्' इत्यादयः प्रयोगाः ।

गुणफलोत्प्रेक्षा यथा—

'वियोगवह्निकुण्डेऽस्मिन् हृदये ते वियोगिनि ।
प्रियसङ्गसुखायेव मुक्ताहारस्तपस्यति ॥'

क्रियाफलोत्प्रेक्षा यथा—

'हालाहलकालानलकाकोदरसङ्गतिं करोति विधुः ।
अभ्यसितुमिव तदीयां विद्यामद्यापि हरशिरसि ॥'

अत्र विरहिवाक्येऽभ्यसनक्रियायास्तुमुना फलत्वं लभ्यते । एवं लक्ष्यानुसारेण यथासम्भवमन्यप्युदाहार्यम् ।

इह जात्यादयो हि भेदाः प्राचामनुरोधादुदाहृताः । वस्तुतस्तु नैषां चमत्कारे वैलक्षण्यमस्तीत्यनुदाहार्यतैव । चमत्कारवैलक्षण्यं पुनर्हेतुफलस्वरूपात्मकानां त्रयाणां प्रकाराणामेवेति ।

प्रागुदाहृतेष्वेव पद्येषु वाचकानामिवादीनां त्यागे प्रतीयमाना, अर्थसामर्थ्यावसेयत्वात् । न तु व्यङ्ग्येति भ्रमितव्यम्, तस्याः प्रकृते प्रसङ्गाभावात् ।

---

जघन्यत्वाच्च । ब्राह्मण्याय ● ब्राह्मणत्वजातिफलाय ।

१८६४ चतुर्नवत्युत्तराष्टादशशतवर्षीयमोहमयीनिर्णयसागरमुद्रितपुस्तकेऽधोलिखितः पाठः प्रभ्रष्टः—

वियोगवह्निकुण्डेऽस्मिन् हृदये ते वियोगिनि ।
प्रियसङ्गसुखायेव मुक्ताहारस्तपस्यति ॥

क्रियाफलोत्प्रेक्षा यथा—हे वियोगिनि ! वियोगवह्नेः कुण्डे अस्मिन् तव हृदये त्यक्ताहारो मुक्ताहारः तव हृदि स्थितप्रियसङ्गमसुखाय इव तपः तनुते, तपःफलत्वेन सुखगुणस्योत्प्रेक्षा, मुक्ताहारस्य साधारणस्थितेस्तपस्यात्वेनोत्प्रेक्षणम् । तपसोऽङ्गत्वेन त्यक्ताहारस्य मुक्ताहारस्योत्प्रेक्षणम् । वियोगवह्ने रूपकमुत्प्रेक्षा वा । एवमेवान्यत्राप्यूह्यम् ।

हालाहल ● कालानलः शिवस्य तृतीयं नेत्रम्, कुण्डली गूढपाच्चक्षुश्रवाः काकोदरः फणी इति कोशः । फलत्वम् ● संगत्या इति शेषः ।

प्राचाम् ● अलङ्कारसर्वस्वकारादीनाम् । अर्थसामर्थ्य ● वस्तुस्वरूपसिद्ध्यै अपेक्षणीयत्वात् ।

धर्मस्वरूपोत्प्रेक्षा यथा—

'निधिं लावण्यानां तव खलु मुखं निर्मितवतो
　　महामोहं मन्ये सरसिरुहसूनोरुपचितम् ।
उपेक्ष्य त्वां यस्माद् विधुमयमकस्मादिह कृती
　　कलाहीनं दीनं विकल इव राजानमतनोत् ॥'

पूर्वार्धोत्प्रेक्षितमोहरूपधर्मसिद्धये द्वितीयार्धेऽविचार्यकारित्वं तत्सामानाधिकरण्येनोपात्तम् ।

अस्यां च स्वरूपस्य विषयित्वे निमित्तभूतो धर्म उपमायामिव बिम्बप्रतिबिम्बभावादिभिर्भिन्न उपात्तोऽनुपात्तश्च । हेतुफलयोर्विषयित्वे तु यं प्रति हेतुफले निरूपिते स धर्मः कल्प्यमानोऽपि विषयगतसाहजिकधर्माभिन्नतयाऽध्यवसीयमानो निमित्तं सम्पद्यते । स चोपात्त एव भवति, अन्यथा कं प्रति हेतुफलयोरन्वयः स्यादिति सङ्क्षेपः ।

---

निधिं लावण्यानाम् ● लावण्यानां निधिं तव मुखं तिर्मितवतः कमलजस्यब्रह्मण उपचितं महामोहं मन्ये । अनेन ब्रह्मणि विषये महामोहधर्मस्योत्प्रेक्षा, तत्साधकतया चाविचार्यकारित्वं धर्म उत्प्रेक्ष्यते वर्ण्यते वा यतो हि समीक्ष्यकारी समीचीनं वस्तु निर्माय ततोऽधिकं सुन्दरं निर्मिमीते ।, अय तु महामोहेन विकल इव ( उपमा ) त मुखन्तु सकलम् अदीनम्, चन्द्रन्तु अपूर्णकलं दीनं तत्रापि राजानम् अकस्मात् करोति । कृतीत्यत्र भावक्लान्तात् कर्तरि णिनिः, कृतपूर्वी कटमित्यत्रेव द्वितीया तवोपेक्षणं विधोश्च करणं ब्रह्मणोऽविचार्यकारिता । तत्समाना ● मोहसामानाधिकरण्येन । स्वरूपस्य **विषयित्वे** ● हेतुत्वफलत्वानाक्रान्तस्य धर्मिण उत्प्रेक्षायाम् । आदिपदेनानुगामिनः संग्रहः । **हेतुफलयोः** ● राकारमणेत्यादिकलङ्कनीलिमानं प्रति नभसो हेतुता, दिवानिशं वारिणि इत्यादौ तपस्यां प्रति फलत्वेन वक्षोजताया उत्प्रेक्षा । सा च तपस्या साहजिकजलस्थित्यभिन्नतयाऽध्यवसिता, अन्यथा तपस्याया अनुपात्तता स्यात् ।

अत्र च प्राचामर्वाचां चानेकधा दर्शनं व्यवस्थितम्। तत्र प्राचामित्थम्—सर्वत्राभेदेनैव विषयिणो विषये उत्प्रेक्षणम्, न सम्बन्धान्तरेण। तथा हि धर्मिस्वरूपोत्प्रेक्षायाम् 'मुखं चन्द्रं मन्ये' इत्यादौ तावद्विषयिणश्चन्द्रस्याभेदो विषये मुखे स्फुट एव, नामार्थयोर्भेदेन साक्षादन्वयस्याव्युत्पत्तेः। उपात्तविषया चेयम्। एवम् 'अस्यां मुनीनामपि मोहमूहे' इत्यत्र नैषधपद्ये ( ७।९४ ) धर्मस्वरूपोत्प्रेक्षायामपि मुनिसम्बन्धिनि धर्मान्तरे विषये दमयन्तीविषयकमोहस्य विषयिणोऽभेदेनैवोत्प्रेक्षा।

उत्प्रेक्षायाश्च साध्यवसानत्वाद्विषयस्यानुपादानं सङ्गच्छते। निमित्तधर्मश्च तत्तदङ्गासक्तवृत्तित्वम्। एवम् 'लिम्पतीव तमोङ्गानि वर्षतीवाञ्जनं नभः' इत्यादौ कस्यापि पद्ये न प्रथमान्तार्थे कर्तरि लेपनकर्तृत्वादेरुत्प्रेक्षणम्, तस्याख्यातार्थविशेषणत्वेनैकदेश-

---

उत्प्रेक्षायां प्राङ्नव्यमतभेदमाह अत्र च ● । मूहे ● अस्यां मुनीनामपि मोहमूहे भृगुर्महान् यत् कुचशैलशीली। नानारदाह्लादिमुखश्रितोरुर्व्यासो महाभारतसर्गयोग्यः ॥ ७।९४ नैषधे पद्ये दमयन्त्या नलेन वर्णनम्। अस्यां दमयन्त्यां मुनीनामपि मोहमासक्तिं तर्कयामि। यस्मात् महान् पूजनीयो भृगुमहर्षिः स्तनपर्वताश्रयः तदासक्त इति यावत्। तथा प्रपातस्त्वतटो भृगुरिति कोशात् पतनस्योन्नतस्थानं कुचपर्वततामपन्नम्। मुखं तस्याननं नारदाह्लादि, नारदस्य सुखजनकम्। ततस्तत्र नारदासक्तिः, श्रितोरुर्जङ्घमाश्रितो व्यासः। महाभासि अतिशयकान्तिमत्यां तस्यां रते क्रीडाकरणे योग्यः। उरुगतो व्यासो विस्तार इति वा। महासुन्दरां रतकरणयोग्यश्च। नानाप्रकारैर्दन्तैराह्लादकं मुखञ्च। विषये ● मुनिसम्बन्धिकार्यादौ,।

ननु विषयस्यानुपादानाद् उपात्ते विषये मुनावेव मोहस्य धर्मस्यैवोत्प्रेक्षा कथन्नेति समाधत्ते उत्प्रेक्षायाश्च ● साध्यावसानलक्षणया विषयिवाचकपदेनैव विषयस्योपस्थितेरित्यर्थः। तत्तदङ्गासक्त ● दमयन्त्यामासक्तमुनिवृत्तित्वं मोहे विषये च। लिम्पतीव ● 'असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता' इत्युत्तरार्धं शूद्रकप्रणीतमृच्छकटिके पद्यमेतत्। उत्तरार्धे उपमा, कर्तरि तमसि नभसि च लेपनकर्तृत्वादेर्वर्षणकर्तृत्वस्य च धर्मस्य। आख्यातार्थे ●

त्वात्। नापि लेपनादिकर्तुरभेदेन, तस्य क्रियाविशेषणत्वेना-प्राधान्यात्। किन्तु तमःकर्तृकमङ्गकर्मकं लेपनमुत्प्रेक्ष्यते, नभः-कर्तृकमञ्जनकर्मकं वर्षणं च। उत्प्रेक्ष्यमाणाभ्यां च ताभ्यां विषयस्य तमःकर्तृकव्यापनस्य निगीर्णत्वादनुपादानम्। अत एव एवमादावियमनुपात्तविषयोच्यते। निमित्तधर्मश्च श्यामीकार-कत्वादिरनुपात्त एव। अत एव 'सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्' इति लक्षणं विधायोक्तम् 'व्यापनादि लेपनादिरूपतया सम्भावितम्' इति मम्मटभट्टैः। एवम्—

> 'उन्मेषं यो मम न सहते जातिवैरी निशाया-
> मिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः।
> नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षा-
> ल्लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः॥'

इत्यादौ प्राचीनपद्ये हेतूत्प्रेक्षायामपि न हर्षरूपं हेतुमात्र-मुत्प्रेक्ष्यते लक्ष्मीरूपे विषये, किन्तु तद्धेतुकं कार्यं लगनादिरूपं विषयि तादात्म्येन साहजिकलगनादौ विषये।

---

आख्यातार्थः कर्ता तत्र कर्तृत्वं विशेषणम्। फलव्यापारयोर्धातुराश्रये तु तिङः स्मृता इति भूषणकारिकानुसारं लः कर्मणि चेत्यादिसूत्रेण आश्रयरूपे कर्तरि तिङां विधानात्। स्फारितं चेदं व्याकरणमतं भूषणादौ नेह वितन्यते। सरला अशुद्धा। **रभेदेन** ● तमसि आदौ कर्तरि। **क्रियाविशेषणत्वेन** वैयाकरण-मते क्रियाया वाक्यार्थे प्रधानतया क्रियां प्रति कर्तुर्विशेषणत्वात्। **निगी-र्णत्वा** ● व्यापनाभिन्नतया लेपनवर्षणयोरुपस्थानात्। **प्रकृतस्य** ● विषयस्य। **समेन** ● उपमानेन।

**उन्मेषं** ● नायिकां प्रति नायकस्योक्तिः। यश्चन्द्रः स्वभाववैरी निशायां मम विकासं न सहते। तस्य चन्द्रस्य सौन्दर्याभिमानः कमलदलनयनया अनया मुखसौन्दर्येण हठात् शान्तिं नीतः। 'मुखसौन्दर्येण विजितश्चन्द्रः' इति हर्षात् कमलशोभा हे सुन्दरि ! तव पादयोर्लग्ना इति मन्ये। **तद्धेतुकम्** ● हर्षहेतुकपादाधिकरणकपादलक्ष्मीकर्तृकलगनरूपम्। **विषये** ● स्वाभाविकशोभासम्बन्धरूपे।

कार्यस्य निमित्ततावादिनामपि विषयगततत्समानजातीयेनाभेदाध्यवसानस्यावश्यवाच्यत्वात् । अन्यथा हेतुरूपविषयिधर्मसमानाधिकरणधर्मस्य कार्यरूपस्य विषयावृत्तित्वेनोत्प्रेक्षैव न स्यात् ।

एवम्—

'चोलस्य यद्भीतिपलायितस्य भालत्वचं कण्टकिनो वनान्ताः ।
अद्यापि किं वानुभविष्यतीति व्यपाटयन् द्रष्टुमिवाक्षराणि ॥'

इत्यादिपरपद्ये फलोत्प्रेक्षायां कण्टकिषु वनान्तेषु विषयेषु न केवलं भालत्वग्विपाटननिमित्तं ललाटाक्षरदर्शनं फलमुत्प्रेक्ष्यते । किन्तु तत्फलकं भालत्वग्विपाटनादिरूपं विषयि कण्टकजविपाटनादौ विषये तादात्म्येनेति सर्वत्राभेदेनैव विषये विषयिण उत्प्रेक्षणमिति दर्शनम् ।

तत्र विचार्यते—न सर्वत्राभेदेनैवोत्प्रेक्षणमिति नियमे किञ्चिदस्ति प्रमाणम्, लक्ष्येषु भेदेनाप्युत्प्रेक्षणस्य दर्शनात्—'अस्यां मुनीनामपि मोहमूहे' इत्यादौ । न च मुनिसम्बन्धिनि धर्मविशेषे मोहस्याभेदेनोत्प्रेक्षणमिति वाच्यम्, भेदेनोत्प्रेक्षणे बाधकाभावेनेदृशकल्पनाया निरर्थकत्वात् । न ह्यभेदेनैवोत्प्रेक्षणमिति वेदेन बोधितम्, यदर्थमयमाग्रहः स्यात्, लक्षणनिर्माणस्य पुरुषाधीनत्वात् ।

---

नन्वनयोरभेदकल्पनामपेक्ष्य हर्षस्यैवोत्प्रेक्षा युक्ता इत्याशङ्कायां तत्पक्षेऽपि निमित्ततासिद्धये अनयोरभेदाध्यवसानस्य आवश्यकतां दर्शयति **कार्यस्य** ● हर्षकार्यस्य लगनत्वस्य **विषयगततत्समानजातीयेन** ● लक्ष्मीगतस्वाभाविकलगनस्य हर्षहेतुकलगनेन सह । **अन्यथा** ● अध्यवसानमन्तरा । **न स्यात्** ● साधारणधर्माभावात् ।

राज्ञा नृसिंहदेवेन पराजितस्य नृसिंहदेवभीत्यैव वने पलायितस्य चोलनृपस्य वर्णनम्—**चोलस्य** ● यद्भीतिपलायितस्य चोलस्य भालत्वचं कण्टकिनः वनप्रदेशा व्यपाटयन् अभिन्दन् विपाटनस्य प्रयोजनं विधिलिखितानि ललाटस्थानि अक्षराणि द्रष्टुम् । दर्शनस्य प्रयोजनम् अद्यापि किं कष्टादिकमनुभविष्यतीति जिज्ञासाशमः । तुमुन्प्रत्ययान्तार्थो दर्शनं फलम् । **तत्फलकं** ● दर्शनफलकं कण्टकिनां विपाटनं दर्शनहेतुकविपाटनमित्युत्प्रेक्षास्वरूपम् ।

'लिम्पतीव तमोऽङ्गानि' इत्यत्रापि लेपनादिकर्तृत्वं तमआदिषु विषयेषूत्प्रेक्ष्यत इत्येव युक्तम् । अनुकूलव्यापारात्म-

---

प्राङ्मतनिष्कर्षमाह लिम्पतीव ● अत्रोपमा कथन्नेति विचारपरम्परां प्रवर्तयामि । तत्र जयरामभट्टाचार्याः—इवेन सादृश्ये समासस्य नित्यत्वेन अत्र समासाभावादेव नोपमा प्रसज्यते इत्याहुः, तदपरे न क्षमन्ते, इवेनेति समासस्यानित्यत्वात्, समासं विनाऽपि उपमायाः सत्त्वे बाधकाभावात् । तथा दण्डिमहाभागास्त्र—अत्रोपमानाभावादेवोपमाया अप्रसक्तेः । नात्र कर्ता उपमानम्, आख्यातार्थकर्तुर्भावनायां विशेषणत्वनियमेन सादृश्ये विशेषणत्वासंभवात् । तथा च कारिका

कर्ता यद्युपमानं स्याद् न्यग्भूतोऽसौ क्रियापदे ।
स्वक्रियासाधनव्यग्रो नालमन्यद् व्यपेक्षितुम् ॥

स्वक्रियान्वयेन निरपेक्षकर्तुरिवार्थं प्रति निराकाङ्क्षत्वमुत्तरार्धस्यार्थः । कथमपि व्युत्पत्तिवैचित्र्येण एकत्र विशेषणीभूतस्यापि कर्तुरिवार्थान्वयस्वीकारेऽपि लेपनकर्तृसदृशं तम इति समाहितो बोधो भावनामुख्यविशेष्यकबोधाभ्युपगन्तृमतेऽसंभाव्यः । यदपि नैयायिकमतेन आख्यातार्थकर्तृत्वस्य स्वाश्रयप्रतियोगिकत्वसम्बन्धेनेवार्थेऽन्वयनिर्वाहणम्, तदपि न सम्यक् तन्नये आख्यातार्थकृतेः प्रथमान्तार्थे एवान्वयस्य व्युत्पत्तेः, इवार्थे सादृश्ये प्रतियोगिकत्वसम्बन्धेनैवान्वयस्य व्युत्पत्तेश्च । यदि लेपनमेवोपमानं लेपनस्य तमसो धर्मतया धर्मधर्मिणोरुपमानोपमेयभावाभावात् । तथा च कारिका—

यदि लेपनमेवेष्टं लिम्पतिर्नाम कोऽपरः ।
स एव धर्मी धर्मश्चेत्यनुन्मत्तो न भाषते ॥

तथाऽङ्गीकारे लेपनस्य साधारणधर्मत्वं न स्यादिति भावः ।

कारिकान्तरञ्च-

केषाञ्चिदुपमाभ्रान्तिरिव श्रुत्येह जायते ।
नोपमानं तिङन्तेनेत्यतिक्रम्याप्तभाषितम् ॥

उत्तरार्धस्यायमभिप्रायः—धातोः कर्मण इत्यादिसूत्रे भाष्ये अश्मा लुलुठिषते, कूलं पिपतिषतीत्यादावचेतने कर्तरि सन्नुपपादयिषया लुलुठिषते इव लुलुठिषते इत्यादिसमाधानमाशङ्क्य न वै तिङन्तेनोपमानमस्ति इत्युक्तम् । उपपादि च कैयटेन तिङन्तेनेति तिङन्तार्थेनेत्यर्थः, क्रियायाः साध्यैकस्वभावत्वादनिष्पन्नरूपत्वात्, इद तदिति परामर्शगोचरत्वादुपमानोपमेयभावस्य, इवशब्दप्रयोगे अध्यारोपस्तु विद्यते, रोदितीव गायति, नृत्यतीव गच्छति देवदत्तः, परिपूर्णेन

न्यूनस्योपमा भवति, क्रिया च सर्वस्वाश्रये समानेति न्यूनत्वासंभवस्तस्याम्। वाक्यपदीयेऽप्याह—

येनैव हेतुना हंसः पततीत्यभिधीयते।
आतौ तस्य समानत्वादुपमार्थो न विद्यते ॥

आतिर्बलाका पतनक्रियामादाय हंसबलाकयोरुपमा न भवति, पतनक्रियायाः समानत्वेनोत्कर्षापकर्षाप्रतीतेरिति भावः। अत उत्प्रेक्षायै यतते पण्डितराजः। पूर्ववर्णित दण्डि-महाभाष्यकैयटरीत्या साध्यावस्थापन्नाया असत्त्वभूताया धात्वर्थ-क्रियाया उपमानता न भवतीति पर्यवसीयते। तेन तुल्यं क्रिया चेदित्यादि-सूत्रस्थमहाभाष्यरीत्या ब्राह्मणवदधीते क्षत्रिय इत्यादौ तादृशक्रियाया उपमेयताऽङ्गीकारात्। भ्वादिसूत्रस्थभाष्यरीत्या पचति भवतीत्यादौ सामान्य-विशेषभावस्थले असत्वभूतक्रिययोः परस्परमन्वयोऽपि स्वीक्रियत एव। तदा रोदितीव गायति देवदत्त इत्यादिपूर्वोक्तस्थले देवदत्तकर्तृकं रोदनमिव तत्कर्तृकं गानमिति उपमाबोधः कथन्नाङ्गीक्रियते, उत्प्रेक्षा कथमङ्गीक्रियत इति विदुषां समराङ्गणं सज्जीभवति। तत्र विचारणीयम्, उपमाया असंभवोऽथवा अचमत्कारित्वम्, असंभवः कथम्? चमत्कारित्वाचमत्कारित्वयोर्न महा-भाष्यादयः प्रमाणम्, अपि तु काव्यार्थभावनाचतुरचेतांसि।

न्यायमतेनैतादृशोबोधो न संभवतीति उपमा नाङ्गीक्रियते इति समाधानं न संभवति अत्रोपमालङ्कारत्वस्य सहृदयसाक्षित्वे नैयायिकशाब्दबोधप्रक्रियाया एव हेयत्वापत्तेः।

अत्र पण्डितराजस्य एतत्सन्दर्भेण विवेचनमपि किमपि उपकरिष्यति, यथा इवार्थान्वयिनो विधेयताया आग्रहस्तत्रैव चमत्कारानुभवश्च, अत्रेवार्थस्य तिङर्थेन अथवा तिङाव्यवहितेन धात्वर्थेनान्वयो युज्यते। यदि तिङान्वयो युज्यते, तदा पण्डितराजविचारो विजयते। तत्र रोदनगानकर्त्रोः सादृश्यं चमत्कारि, अथवा रोदनगानयोः सादृश्यम्। रोदनगानयोरभेदश्चमत्कारी, अथवा सादृश्यम्, यद्यभेदश्चमत्कारी तदा उत्प्रेक्षा आक्रमते तादात्म्यभावाङ्गीकारात्। वाक्यार्थे धात्वर्थक्रियायाः प्राधान्यम् इवार्थसादृश्यविशेषणत्वञ्च किं घटेते? उत्प्रेक्षा तु संभावनं ज्ञानम्, शाब्दबोधे उपस्थितौ च ज्ञाने विषयस्य कस्यापि प्रधानस्य प्रधानता नापयाति। तथा च तादृशस्थले धात्वर्थस्य प्राधान्यमुपमायां स्खलति, उत्प्रेक्षायाञ्च सुरक्षितं जायते इत्यपि चिन्तनीयम्। अधिकं किञ्चिन्मम उपमोत्प्रेक्षाकलकलनामकलेखे मिलेदत्र च विरम्यतेऽतः।

**नादिकर्तृत्वम्●** आश्रयतारूपभेदसम्बन्धेन।

ननु कर्ता कृतिमान् कृतिमत्त्वं कर्तृत्वं कथमचेतने तमसि वर्ततामत आह **अनुकूल●** तादृशव्यापाराश्रयः कर्ता व्यापारः कर्तृत्वम् इत्यर्थः।

कस्य कर्तृत्वस्यैवाख्यातार्थत्वात् । तस्य च प्रथमान्ते विशेष्ये आश्रयतासंसर्गेणान्वयान्न दोषः ।

'भावप्रधानमाख्यातम्' इत्यस्य 'भावो व्यापारस्तदर्थकमाख्यातं तिङ्' इत्यर्थकरणान्न विरोधः, 'सत्त्वप्रधानानि नामानि' इत्युत्तरवाक्यस्थप्रधानशब्दस्याभिधेयपरत्वात् । फलमात्रार्थस्यापि धातोराख्यातार्थव्यापारव्यधिकरणत्वसमानाधिकरणत्वाभ्यामर्थगताभ्यां सकर्मकाकर्मकत्वव्यवहारः । नामार्थयोर्भेदेनान्वयाभावाच्च भावकृदर्थव्यापारस्य न नामार्थेऽन्वयः । अत एव च 'कर्तरि कृत्' इत्यनेन विशिष्टशक्तिबोधकेन

---

फलमात्रं धात्वर्थो व्यापाररूपकर्तृत्वमाख्यातार्थस्तयोरनुकूलत्वं संसर्ग इति भूषणसारोपपादितमीमांसकमतरीत्याऽग्रे स्फोरणीयम् । भावः क्रिया आख्यातं तिङ्घटितं वाक्यम् । वाक्यार्थः क्रियाप्रधान इति व्याख्याने विरुद्धार्थगमानं यास्कवचनं व्याचष्टे स्वमतेन ।

प्रधानशब्दस्याभिधेयपरत्वे यास्कस्यैव प्रसङ्गमाह **सत्त्वप्रधानानि**● अत्र प्रधानशब्दस्य मुख्यविशेष्यतापरत्वं वैयाकरणमतेऽपि न संभवतीति भावः ।

ननु धात्वर्थः फलं व्यापारश्चेति तयोः सामानाधिकरण्येनाकर्मकत्वं वैयधिकरण्येन च सकर्मकत्वमिति अभिप्रायेण स्वार्थफलव्यधिकरणव्यापारवाचित्वं सकर्मकत्वं स्वार्थफलसमानाधिकरणव्यापारवाचित्वमकर्मकत्वम् इति लक्षणे भूषणप्रतिपादिते उभयोर्धात्वर्थतायामेव संभवत इत्याशङ्क्य समाधत्ते **धातोराख्यातार्थ**● स्वविहिताख्यातार्थव्यापारसमानाधिकरणफलवाचकत्वमकर्मकत्वं स्वविहिताख्यातार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वमिति भावः । प्रतिपादिते च इमे अपि लक्षणे भूषणसारे । ननु पाक इत्यादावपि धात्वर्थः फलं विक्लितिस्तदनुकूलो व्यापारो भावविहितघञोऽर्थः तथा च विक्लित्यनुकूलव्यापारस्य पाकशब्दार्थस्य आश्रयतासम्बन्धे चैत्रान्वयतात्पर्येण चैत्रः पाक इति प्रयोगापत्तिरत आह **नामार्थयो**● चैत्रः पचतीत्यादौ तु व्यापारस्य प्रत्ययार्थत्वेन नामार्थत्वाभावात् तथाऽन्वय संभवति । अत एव● निपातातिरिक्तनामार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वादेव ।

न घञादिषु भावग्रहणस्य विशेषणशक्तिबोधकस्य गतार्थत्वम्, शब्दानुवृत्तिपक्षस्वीकाराच्च 'कर्तरि कृत्' इत्यत्र धर्मिपरस्यापि कर्तृग्रहणस्य 'लः कर्मणि' इत्यत्र धर्मपरतायामपि न दोषः ।

यद्वा आस्तां फलव्यापारौ, धातोः, आश्रयश्च तिङोऽर्थः ।

परं तु देवदत्तः पचमान इत्यादाविव देवदत्तः पचतीत्यादिष्वपि प्रथमान्तार्थं एव तिङर्थस्याभेदेन विशेषणत्वं युक्तम्, न तु भेदेन धात्वर्थभावनायाम्, सर्वजनसिद्धस्योद्देश्यविधेयभावस्य भङ्गापत्तेः । सत्यां हि गतौ

---

अयं भावः लः कर्मणीत्यादिसूत्रेण विहितस्य कर्तृत्वार्थस्य तिङो यथा व्यापारोऽर्थस्तथा कर्तरि कृदिति विहितस्य कर्तृत्वार्थस्य कृतोऽपि व्यापारोऽर्थ इति वक्तुं न शक्यते, पाचको देवदत्त इत्यादौ पूर्वोक्तनियमेनाभेदेन व्यापारान्वयस्य देवदत्ते बाधितत्वात् । अतस्तत्र व्यापाराश्रय एवार्थः । यदि व्यापारोऽर्थः स्यात्तदा व्यापारोऽर्थो घञो भावरूपः कर्तरि कृदित्यनेनैव प्रतिपादितोऽतो व्यापाररूपो भावो घञोऽर्थइत्यस्य प्रतिपादकं घञ्विधायके भावग्रहणं व्यर्थं स्यात् ।

**विशिष्ट**● व्यापाराश्रयः । **विशेषणं**● व्यापारः ।

ननु कर्तरि कृदिति सूत्रादेव कर्तरीति पदं लः कर्मणि च भावे चाकर्मकेभ्य इति सूत्रेऽनुवर्तते. तच्च प्रथमं व्यापाराश्रयपरं कथमुत्तरत्र व्यापारपरं भवेदित्याशङ्कायामाह **शब्दानुवृत्ति**● शब्दमात्रस्यैव, न तु अर्थसहितस्यानुवृत्तिरिति भावः ।

ननु शब्दानुवृत्तिस्वीकारे गौरवम् एकस्मिन् शब्दे वृत्तिद्वयस्वीकारात् तात्पर्यान्तरस्य च कल्पनीयत्वादित्यत आह **यद्वा**● ।

देवदत्तः **पचति**● पाककर्तुरभिन्नो देवदत्त इति बोधः । तथा च तमसि विषये विषयिणो लेपनकर्तुरभेदेनोत्प्रेक्षा लिम्पतीव तमोऽङ्गानीत्यादौ स्वीकार्यम्, न तु लेपनादेर्व्यापनादाविति भावः । **भङ्गापत्तेः**● तम उद्दिश्य लेपनस्य विधेरनुभवसिद्धत्वात् न तु व्यापनमुद्दिश्य लेपनविधेः ।

'प्रत्ययार्थे प्रकृत्यर्थो विशेषणम्' इत्यस्योत्सर्गस्याप्यनुग्रह एव न्याय्यः। 'भावप्रधानमाख्यातम्' इत्यस्य 'भावनार्थको धातुः' इत्यर्थकरणान्न विरोधः। न च वैयाकरणमतविरोधो दूषणमिति वाच्यम्, स्वतन्त्रत्वेनालङ्कारिकतन्त्रस्य तद्विरोधस्यादूषणत्वात्। प्रपञ्चयिष्यते चैतदधिकमुपरिष्टादिति प्रकृतमनुसरामः।

---

न च तथा संभवत्यपि एकेनैवाध्यवसानादिना उपस्थितयोर्व्यापनलेपनयोरुद्देश्यविधेयभावानुपपत्तेः, एकपदोपस्थितयोरुद्देश्यविधेयभावस्य सर्वैस्तिरस्काराच्च। उत्प्रेक्षास्थले विषयविषयिणोरुद्देश्यविधेयभावस्यानुभविकत्वात्। एवञ्च 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानमि'ति न्यायोऽपि मम मतेऽनुकूलः प्रत्ययार्थकर्तुः प्रकृत्यर्थक्रियामपेक्ष्य प्रधानत्वात्। वैयाकरणमते च प्रतिकूलः, प्रत्ययार्थकर्तारमपेक्ष्य धात्वर्थव्यापारस्य प्राधान्यस्वीकारादित्याह **सत्याञ्च गतौ●** ऐन्द्रं हविरित्यादौ प्रत्ययार्थदेवतारूपस्य अगत्या प्रकृत्यर्थेऽभेदेनान्वयस्वीकारेऽपि अत्र गतिसत्त्वे तन्न्यायपरित्यागोऽनुचित इति सूचितमुत्सर्गपदेन। **नविरोधः●** न तु भावस्य क्रियायाः प्राधान्यमर्थः। **उपरिष्टादिति●** अग्रे नोपलभ्यते ग्रन्थेऽस्मिन्। एतेन ग्रन्थान्तस्यानुपलभ्यमानस्य ग्रन्थासमाप्तेर्वा सूचना लभ्यते।

लिम्पतीवेत्यादौ कौस्तुभकृतः—एवं व्याकरणमतप्रसिद्धव्युत्पत्तिपरित्यागे उपमैव कथन्नाङ्गीक्रियते? न च 'न तिङन्तेनोपमानमस्ति' इति भाष्यविरोधस्तस्य क्रियाया उपमेयत्वनिषेधपरत्वात् इति ब्रुवते। तन्न समीचीनम्, 'लुलुठिषते इव लुलुठिषते' इत्यादि भाष्यस्य तिङन्तार्थो नोपमानम् इत्यत्रैव तात्पर्यम्। न च क्रियाया उपमेयत्वनिषेधपरत्वम्, ब्राह्मणवदधीते क्षत्रिय इत्यादौ भाष्ये क्रिययोरुपमानोपमेयभावस्य प्रतिपादितत्वात्। नापि भाष्यानुरोधेनैव उपमाया अस्वीकारो वैयाकरणस्य शब्दसाधुत्वादौ प्रामाण्येऽपि चमत्कारानुभवस्य सहृदयहृदयमात्राधीनत्वात्। उपमायां सादृश्यस्य विधेयत्वमुत्प्रेक्षायाञ्च सादृश्यप्रतियोगिनः, चिन्त्यताञ्च कस्य विधेयत्वमत्र प्रकृते?

किं च को लेपनकर्तेति विशेषपरिचयं विना नोपमेयात्मलाभ इत्युपमायाश्चमत्कारस्य सम्यगननुभवादुत्प्रेक्षाचमत्कारस्य चानुभवात्, सर्वस्वकारादिभिः स्वीकाराच्चोत्प्रेक्षैवेत्याशयेनावधारणयुक्तमाह—**एवञ्च लिम्प-**

एवं च 'लिम्पतीव—' इत्यादौ भेदेनाभेदेन वा तिङर्थस्यैव प्रथमान्तार्थ एवोत्प्रेक्षणम् । न तु धात्वर्थस्य स्वनिगीर्णे व्यापनादौ, सर्वजनसिद्धाया इवार्थस्य विधेयताया अनुपपत्तेः ।

तमःकर्तृकं लेपनमिवेत्यस्मादपि उद्देश्यविधेयभावशून्य-वाक्यादुत्प्रेक्षाप्रतीत्यापत्तेश्च ।

यदि च विषयिसम्बन्धिना लेपनादिना विषयसम्बन्धिनो व्यापनादेर्निमित्ततासम्पत्तये स्वताद्रूप्यसम्पादनेन निगीर्णत्वादनु-पात्तविषयत्वमध्यवसानमूलत्वं चोच्यते, तदा रूपकेऽप्यनुपात्त-विषयत्वमुच्यतामध्यवसानमूलत्वं च । 'लोकान् हन्ति खलो विषम्' इत्यादौ खलसम्बन्धिनो दुःखदानादेर्विषसम्बन्धिहननात्म-नाऽध्यवसानात् । तस्मान्निमित्तांशेऽतिशयोक्तिरेव । एवम् 'उन्मेषं यो मम न सहते' इत्यत्र लक्ष्मीरूपे विषये लगनहेतुत्वेन हर्षं उत्प्रेक्ष्यते । तत्र साहजिकसम्बन्धे तादात्म्येनाध्यवसितं लगनमेव निमित्तम् । तथा—

---

तीत्येत्यादौ ● । व्यापनादौ ● आदिपदेन नभोव्यापने वर्षणस्य प्रतिक्षेपो बोध्यः । किन्तु तत्रापि नभसि विषये भेदेन वर्षणकर्तृत्वस्य वर्षणकर्तुश्चा-भेदेनोत्प्रेक्षा । इवार्थस्य ● इवार्थान्वयिनो लेपनकर्तृत्वादेः ।

इवार्थान्वयिभिन्नस्योत्प्रेक्षायामविधेयस्यापि उत्प्रेक्षापत्तिमाह **तमः-कर्तृकम्** ● ।

ननु सिद्धान्ते विषयविषयिणोः साधर्म्यसंपत्तये व्यापनलेपनयोरध्यवसानस्या-वश्यमपेक्षिततया तत्रैवोत्प्रेक्षा समाप्तिः प्राचां कथन्न रोचनीया ? तदनुरोधे-नानुपात्तविषयतापि अस्या अत्र रोचताम् इत्याशङ्कते यदीत्यादिना उच्यत इत्यन्तेन । विषयि लेपनकर्तृ, विषयः तमोनभसी । **निगीर्णत्वाद्** ● लेपनादिना व्यापनस्य । सिद्धान्तस्तु निमित्ततासम्पत्तये धर्मयोरध्यवसानं नोत्प्रेक्षास्थानम्, तस्यातिशयोक्तिकृतत्वात् । न तेनानुपात्तविषयताऽपि उत्प्रेक्षायाः, न धर्मानु-पादाननिमित्तता अपि तु साक्षाद्विषयस्यानुपादाननिमित्तता । **अध्यव-सानात्** ● तत्रापि दुःखदानस्य मारणेन निगीर्णत्वात् ।

**साहजिकसम्बन्धे** ● स्वाभाविकशोभासम्बन्धे ।

लङ्कातोऽयोध्यां प्रस्थितस्य रामचन्द्रस्य मार्गे सीतां प्रति कथनम्—

'सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥'

अत्रापि मौनहेतुत्वेन नूपुरे विश्लेषदुःखमुत्प्रेक्ष्यते । तत्र निश्चलत्वनिमित्तकनिःशब्दत्वाध्यवसितं मौनं निमित्तम्, विश्लेषदुःखसमानाधिकरणत्वे सति नूपुरवृत्तित्वात् । न तु निश्चलत्वनिमित्तके निःशब्दत्वे विषये विश्लेषदुःखहेतुकमौनमभेदेन, उत्प्रेक्षायामिवशब्दान्वितस्योत्प्रेक्ष्यताया उत्सर्गसिद्धत्वात् । विषयस्य निगीर्णतया विषयिणो विधेयत्वानुपपत्तेश्च । निमित्तान्तरगवेषणापत्तेश्च । यद्यप्येककालप्रभवत्वादिरस्ति साधारणो धर्मो निमित्तम्, तथापि तस्याचमत्कारित्वादुपमायामिवोत्प्रेक्षायामप्यप्रयोजकत्वात् । एवं फलोत्प्रेक्षायामपि बोध्यम् । एतेन 'यद्वा हेतुफलधर्मस्वरूपोत्प्रेक्षोदाहरणेष्वपि तादात्म्येनैवोत्प्रेक्षा' इति प्राचां मतमनुसरता द्रविडपुङ्गवेन यदुक्तं तदपि परास्तम् ।

अलङ्कारसर्वस्वकृता तावदुत्प्रेक्षाया लक्षणमित्थं निगदितम्—विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः । स च द्विविधः—सिद्धः, साध्यश्च । तत्र साध्यत्वप्रतिपत्तौ व्यापार-

---

**सैषा●** सा एषा स्थली अकृत्रिमा भूमिः, यत्र त्वाम् अन्वेषयता मया उर्व्यां भ्रष्टम् एकं नूपुरम् अदृश्यत । तच्चाचेतनत्वादेव मौनम्, परं मौनत्वं प्रति कविना तव चरणकमलवियोगदुःखं हेतुत्वेनोत्प्रेक्ष्यते. स्वाभाविकनूपुरनिष्ठनिश्चलत्वेनायातं निःशब्दत्वं तेन मौनत्वस्याभेदाध्यवसायः, तेन मौनत्वस्य निमित्ततामाह **तत्र●** पूर्वप्रतिज्ञाक्रमेण निमित्तत्वं संगमयति **विश्लेषः●** इवार्थान्वयिनो विधेयत्वानुपपत्तिदोषमाह **विषयस्य●** तव मते निःशब्दत्वस्य उद्देश्योपादानं विना विधेयभावस्याप्रतीतेरिति भावः । **फलोत्प्रेक्षायाम्●** दिवानिशं वारिणि इत्यादौ प्राप्तिसम्बन्धेन वक्षोजतायाः उत्प्रेक्षा । **द्रविडपुंगवेन●** अप्पयदीक्षितेन । **विषयनिगरणे●** विषयिवाचकपदमेव वर्तते, न तु पृथग्विषयवाचकम्, तयोश्चाभेदाध्यवसायः । **स च●** अभेदाध्यव-

प्राधान्ये उत्प्रेक्षा इति ।' अस्यार्थः–सिद्धत्वं निगीर्णविषयत्वम् । साध्यत्वं च निगीर्यमाणविषयत्वम् । यत्र हि सिद्धत्वं तत्राध्यवसितप्राधान्यम्, यथाऽतिशयोक्त्यादौ । यत्र साध्यत्वं तत्र व्यापारस्याध्यवसानक्रियायाः प्राधान्ये उत्प्रेक्षा इति । एवमभेदगर्भमुत्प्रेक्षालक्षणं विधाय—"सैषा स्थली यत्र' इत्यत्र नूपुरगतस्य मौनित्वस्य हेतुत्वेन दुःखं गुण उत्प्रेक्ष्यते । तत्र मौनित्वमेव नूपुरगतनिःशब्दत्वाभेदेनाध्यवसितं निमित्तम्" इत्युक्तम् । एवं 'यत्र धर्म एव धर्मिगतत्वे' इत्यादिना धर्मोत्प्रेक्षाप्रसङ्गे "लिम्पतीव तमोऽङ्गानि' इत्यत्र लेपनक्रियाकर्तृत्वोत्प्रेक्षणे व्यापनादि निमित्तम्" इत्युक्तम् ।

तदेतत्सर्वं परस्परविरुद्धम् । नहि दुःखगुणोत्प्रेक्षायामभेदगर्भोऽध्यवसायोऽस्ति । मौनांशे सन्नप्यध्यवसायः सिद्धत्वादतिशयोक्तेरेव विषयो भवितुमर्हति, नोत्प्रेक्षायाः । त्वन्मते मौनस्य निमित्तत्वेनानुत्प्रेक्ष्यत्वाच्च । एवं 'लिम्पतीव' इत्यत्र लेपनाध्यवसायोऽपि । तस्यापि व्यापनरूपतया स्थितस्य त्वया कर्तृत्वोत्प्रेक्षानिमित्तत्वेनोक्तत्वाच्च । 'व्यापनादौ तूत्प्रेक्षाविषये निमित्तमन्यदन्वेष्यं स्यात्' इति त्वयैव बाधकोपन्यासात् । निमित्तांशाध्यवसानं तूपमादावपि स्थितम् ।

किञ्च, 'नूनं मुखं चन्द्रः' इत्यादौ कुत्राध्यवसायः, विषयस्य जागरूकत्वात् । न च सिद्धेऽध्यवसाये विषयस्य जठरवर्तित्वम्,

---

सायश्च । **निगीर्ण** ● विषयवाचकं पृथङ् नैव वर्तते । **निगीर्यमाण** ● विषयवाचकपदस्य पृथक् सत्त्वेऽपि अर्थमहिम्ना अध्यवसायः प्रतीयते । **इत्युक्तम्** ● नूपुरदुःखगुणाभेदासंभवात् पूर्वापरविरुद्धम् । **इत्युक्तम्** ● अत्रापि लेपनकर्तृत्वस्याभेदस्तमसि न संभवति । **सिद्धत्वात्** । विधेयविषयिणोऽभावात् । ननु निमित्तांशे व्यापनलेपनयोरभेदाध्यवसायमादायैव स ग्रन्थ इत्यत आह-**निमित्तांशा** ● पूर्वोक्तखलविषययोरुपमायाम् । पूर्ववर्णितस्य साध्यवसानस्य

साध्ये तु निगीर्यमाणत्वात् पृथगुपलब्धिरिति वाच्यम्, साध्याध्यवसाये मानाभावात्। अन्यथा रूपकादेरप्यध्यवसायगर्भत्वापत्तेः।

किञ्च, अध्यवसानं लक्षणाभेदः। न चात्र विधेयांशे लक्षणास्ति। अभेदादिसंसर्गैराहार्यबोधस्यैव स्वीकारात्। तस्मात् प्राचीनानामाधुनिकानां चोक्तयो न क्षोदक्षमाः।

एवं प्राप्ते ब्रूमः—तत्र तावद्धर्म्युत्प्रेक्षानिष्कर्षः प्राचीनमतपरीक्षावसरे कृत एव। हेतूत्प्रेक्षायां पञ्चम्यर्थो हेतुः, अभेदश्च प्रकृतिप्रत्ययार्थयोः संसर्ग इति पक्षे विश्लेषदुःखाभिन्नहेतुः पञ्चम्यन्तार्थः। तस्य च प्रयोज्यतासंसर्गेणोत्प्रेक्षणमिवादिना बोध्यते। प्रयोज्यत्वं पञ्चम्यर्थ इति दर्शने निरूपितत्वं प्रकृति-

---

स्वरूपमाह साध्ये तु● । न चात्र मुखचन्द्र इत्यादिरूपके। **क्षोदक्षमाः●** निष्कर्षविचारं न क्षमन्ते। **पञ्चम्यर्थो हेतुः●** दुःखादित्यत्र पञ्चम्या हेतुरर्थः। दुःखं तत्र हेतौ अभेदेन सम्बन्धेनान्वेति, नूपुरनिष्ठं मौनत्वं दुःखप्रयोज्यमिति प्रतीत्या दुःखाभिन्नहेतोर्मौनित्वेन सह प्रयोज्यतासम्बन्धः। प्रयोज्यत्वं पञ्चम्यर्थः इति मते पञ्चम्यर्थप्रयोज्यत्वे दुःखस्य निरूपितत्वसम्बन्धेनान्वयः। दुःखं मौनत्वस्य प्रयोजकम्, मौनत्वं दुःखप्रयोज्यमिति प्रतीत्या प्रयोजकता दुःखे, प्रयोज्यता मौनत्वे सिद्ध्यति। नित्यसाकाङ्क्षपदार्थस्थले मध्ये निरूपितत्वं सम्बन्धो भासते, प्रयोजकत्वप्रयोजत्वे अपि तादृशी, अतः प्रयोजकत्वस्य प्रयोज्यत्वे निरूपितत्वसम्बन्धः। तन्मूलकश्च प्रयोजकस्य दुःखस्यापि प्रयोज्यत्वे निरूपितत्वसंसर्गः। तथा च दुःखनिरूपितप्रयोज्यत्वस्याश्रयतासंसर्गेण मौनत्वे उत्प्रेक्षा।

ननु प्रथमः पक्षो न युक्तः, दुःखान्मौनमित्यादौ दुःखस्य प्रयोज्यतासम्बन्धेन मौनत्वेऽन्वयस्वीकारे 'प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ' इति नियमेन न दुःखान्मौनमित्यादौ मौनत्वे प्रयोज्यतासंसर्गेणैव दुःखस्याभावो भासेत, प्रयोज्यतासम्बन्धश्च वृत्त्यनियामकः, वृत्त्यनियामकसम्बन्धावच्छिन्ना प्रतियोगिता नाङ्गीक्रियते, अतो नञ्स्थले दूषणमत आह **प्रयोज्यत्वं पञ्चम्यर्थः●** अस्मिन्

फलकृत एव भेद इति चेत् 'तनयमैनाकगवेषणलम्बीकृत-जलधिजठरप्रविष्टहिमगिरिभुजायमानाया भगवत्या भागीरथ्याः सखी' इति प्रागुदाहृतायां स्वरूपोत्प्रेक्षायां तनयमैनाकगवेषणरूपस्य फलस्योत्प्रेक्ष्यविशेषणकोटिप्रविष्टत्वात् फलोत्प्रेक्षात्वापत्तेः, उत्प्रेक्ष्ये साक्षाद्विशेषणताया अप्रयोजकत्वात्। इत्यलं स्वगोत्रकलहेन।

उत्प्रेक्ष्यमाणेष्वपि यस्य विषयिण उत्प्रेक्षा विधेयतया भासते तदीयोत्प्रेक्षयैव व्यपदेशः, प्राधान्यात्। तेन 'विश्लेषदुःखादिव बद्धमौनम्' इत्यत्र नूपुरगतत्वेन दुःखस्योत्प्रेक्षणेऽपि न तदुत्प्रेक्षया व्यपदेशो न्याय्यः, तस्या अङ्गत्वेनानुवाद्यत्वात्। किन्तु पञ्चम्यर्थोत्प्रेक्षया, तस्या एव इवशब्दवेद्यत्वेन विधेयत्वात्। तथा 'चोलस्य' इति पद्येऽपि वनान्तगतत्वेन न ललाटाक्षरदर्शनोत्प्रेक्षया, अपि तु तुमुन्नर्थोत्प्रेक्षया। एवं 'तनयमैनाक—' इत्यादिगद्ये न फलोत्प्रेक्षया व्यपदेशः। नापि 'कलिन्दजानीरभरेऽर्धमग्ना' इत्यत्र शशिकिशोरतादात्म्योत्प्रेक्षया, तदुत्थापितया ध्वान्तकर्तृकवंरहेतुकनिगरणकर्मतादात्म्योत्प्रेक्षया वा, प्रागुक्तादेव हेतोरिति दिक्।

द्विविधो हि तावद्धर्मोऽपि—स्वत एव साधारणः साधारणीकरणोपायेनासाधारणोऽपि साधारणीकृतश्च। स चोपायः क्वचिद्रूपकम्, क्वचिच्छ्लेषः, क्वचिदपह्नुतिः, क्वचिद् बिम्बप्रतिबिम्बभावः, क्वचिदुपचारः, क्वचिदभेदाध्यवसायरूपोऽतिशयः।

---

इति खण्डयति उत्प्रेक्ष्ये● । अप्रयोजकत्वात्● सर्वत्र व्यवस्थापकत्वासंभवात्। अचमत्कारिणो भेदाप्रयोजकत्वात् प्रागुक्तादेव● अङ्गत्वेनानुवाद्यत्वात्। द्विविधः● धर्मिधर्मोत्प्रेक्षयोर्भेदेन तद्वृत्तितत्समानाधिकरणभेदेन। स्वतः● एक एवोभयत्र प्रसिद्धः।

यथा—

'नयनेन्दिन्दिरानन्दमन्दिरं मिलदिन्दिरम् ।
इदमिन्दीवरं मन्ये सुन्दराङ्गि तवाननम् ॥'

अत्र प्रथमार्धगतः प्रथमो धर्मो रूपकेण विषयविषयिसाधारणीकृतः । द्वितीयश्च विलक्षणशोभयोरभेदाध्यवसायेन ।

केवलशब्दात्मकोऽप्ययं सम्भवति—

'अङ्कितान्यक्षसङ्घातैः सरोगाणि सदैव हि ।
शङ्के पङ्केरुहाणीति शरीराणि शरीरिणाम् ॥'

अयमुपात्त एव भवति ।

अर्थमयोऽनुपात्तश्चापि भवति । यथा 'द्विनेत्र इव वासवः' इत्यादौ जगदीश्वरत्वादिः । न चात्र द्विनेत्रत्वादिरूप उपात्त एव साधारणो धर्मः । साधारण्यार्थमेव तस्य विषयिण्यारोपादिति वाच्यम्, तस्यारोपेण साधारणत्वे कृतेऽपि असुन्दरत्वेनोत्प्रेक्षोत्थापकत्वविरहात् । साधारणीकरणं तु प्रतिबन्धकनिरासार्थमित्युक्तमेव ।

'दृष्टिः सम्भृतमङ्गला बुधमयी देव त्वदीया सभा
काव्यस्याश्रयभूतमास्यमरुणाधारोऽधरः सुन्दरः ।
क्रोधस्तेशनिभूरनल्पधिषण स्वान्तं तु सोमास्पदं
राजन्नूनमनूनविक्रम भवान् सर्वग्रहालम्बनम् ॥'

---

**नयनेन्दिन्दिरा**● नयनाभिन्नानाम् इन्दिन्दिराणां भ्रमराणामानन्दस्य स्थानम्, मिलन्ती इन्दिरा शोभा लक्ष्मीर्यस्मिँस्तत् तव आननमिदं हे सुन्दराङ्गि! इन्दीवरं मन्ये। **प्रथमो धर्मः**● नयनानन्दरूपितो भ्रमरानन्दः । **विलक्षण**● इन्दीवराननशोभयोरित्यर्थः। आनने इन्दीवरोत्प्रेक्षायामिति शेषः ।

**अङ्किता**● प्राग् व्याख्यातमुपमाप्रकरणे । अय केवलशब्दात्मकः, शब्दस्य तादृशस्वभावत्वात् ।

**दृष्टिः**● हे अनूनविक्रमराजन् ! भवान् नूनं सर्वग्रहालम्बनम् । अनेन

अत्रोत्प्रेक्ष्यमाणस्य सर्वंग्रहालम्बनस्य धर्मेषु तत्तद्ग्रहाश्रिताङ्गकत्वेषु विशेषणीभूतैस्तत्तद्ग्रहैर्विषयस्य राज्ञो धर्मेषु कल्याणाश्रयत्वादिषु विशेषणानां कल्याणादीनां श्लेषेण तादात्म्यसम्पादनद्वारा तादृशधर्माणां साधारणतासम्पत्तिः ।

यथा वा—

'विभाति यस्यां ललितालकायां मनोहरा वैश्रवणस्य लक्ष्मीः ।
कपोलपालिं तव तन्वि मन्ये नरेन्द्रकन्ये दिशमुत्तराख्याम् ॥'

इहापि विषयविषयिधर्मविशेषयोरलकालकयोः श्रवणवैश्रवणयोश्च श्लेषेणाभेदे धर्मस्य साधारण्यम् ।

यथा वा—

---

पादेन राजनि वि।ये सर्वग्रहालम्बनम् उत्प्रेक्ष्यते। पादान्तरैस्तु तदुत्प्रेक्षानिमित्तानां तत्तदङ्गेषु तत्तद्ग्रहाश्रितत्वधर्माणामुपादानम् । तत्तदङ्गानि यदि राज्ञस्तत्तद्ग्रहाश्रितानि तदा राजा सर्वग्रहालम्बनं सिद्धयति । यथा दृष्टिरङ्गं मङ्गलग्रहयुक्ता । श्लेषमहिम्ना एकपदोपस्थितयोर्मङ्गलशुभयोः शब्दसाधर्म्येण अभेदाध्यवसाने राज्ञि वर्तमानस्य शुभाश्रितत्वस्य मङ्गलाि तत्वेनाभेदोऽध्यवसानेन सिध्यति । एवमेवाग्रेऽपि बोध्यम् ।

हे देव ! त्वदीया सभा प्रचुरपण्डितपरिवेष्टिता पूर्वोक्तरीत्या पण्डिताभिन्नेन बुधग्रहेण युक्ता । अत्र पक्षे मयटोऽर्थश्चिन्तनीयः । तव आस्यं मुखं काव्यस्य कविकर्मणः कवितायाः शुक्रस्य च आश्रयभूतम् । तव सुन्दरः अधरोष्ठः अरुणस्य लक्षणया रक्तिम्नः सूर्यस्य चाधारः । हे अनल्पा धिषणा बुद्धिः अधिको गुरुग्रहो वा यस्य तत्सम्बुद्धौ तव क्रोधः अशनेर्वज्रस्य शनिग्रहस्य वा स्थानम् । स्वान्तं हृदयन्तु उमया सहितम् 'चन्द्रमा मनसोऽजायत' इति श्रुत्या चन्द्रस्य जनकम्, राजानं प्रति कवेरुक्तिरियम् ।

**विभाति**● हे तन्वि नरेन्द्रकन्ये ! तव कपोलदेशमुत्तरानाम्नीं दिशं मन्ये, कपोलपालौ उत्तरदिशाया उत्प्रेक्षा । उत्तरदिशा च अलकानगर्या वैश्रवणस्य कुबेरस्य लक्ष्म्या च युता. इयमपि कपोलपालिः सुन्दरकेशरूपालकया कर्णशोभारूपवैश्रवणलक्ष्म्या च समन्विता ।

'नासत्ययोगो वचनेषु कीर्तौ तथार्जुनः कर्मणि चापि धर्मः ।
चित्ते जगत्प्राणभवो यदास्ते वशंवदास्ते किमु पाण्डुपुत्राः ॥'

अत्र पाण्डुपुत्रेषु विषयेषु राजवशंवदतादात्म्योत्प्रेक्षायां राजाश्रितत्वरूपो विषयिधर्मः श्लेषेण विषयाणां तदाश्रितानां चासत्याभावशुक्लगुणपुण्यपरमेश्वराणामभेदसम्पादनद्वारा-विषयसाधारणीकृतः ।

'स्तनान्तर्गतमाणिक्यवपुर्बहिरुपागतम् ।
मनोऽनुरागि ते तन्वि मन्ये वल्लभमीक्षते ॥'

अत्र वल्लभेक्षणस्य मनस्युत्प्रेक्षायां तन्निमित्तमन्तःप्रदेशाद्-बहिरागमनमपेक्ष्यम् । तच्च बहिःप्रदेशसम्बन्धरूपं माणिक्य-मात्रवृत्ति मनसो न सम्भवतीति माणिक्यापह्नुत्या मनोगतं क्रियते ।

---

**नासत्ययोगो**● राजानं प्रति कवेरुक्तिः, यत् तव वचनेषु न असत्यस्य योग आस्ते । पक्षान्तरे नभ्राण्नपान्नेत्यादिसूत्रेण निपातनात् सिद्धो नासत्य-शब्दोऽश्विनीकुमारयोर्वाचकः, तयोरवतारभूतयोः पाण्डुनन्दनयोर्नकुलसहदेव-योर्ग्रहणम् । तथा यशसि धवलिमा किरीटी, कर्मणि धर्मोऽसौ चोदनालक्षणो युधिष्ठिरश्च । चित्ते जगत्प्राणस्य भवो जनकः परमेश्वरः; पक्षान्तरे जगत्प्राणो वायुर्जनको यस्य भीमः, अतः पाण्डुपुत्रा युधिष्ठिरादयस्ते वशंवदा वशवर्तिनः किमु ? राज्ञो वशंवदा येऽन्ये राजानस्ते विषयिणः ते राजानः प्रकृतराज्ञ आश्रिता इति प्रकृतराजाश्रितत्वं विषयिधर्मः प्रकृतवर्तिनश्चोपात्ता असत्याभाव-शुक्ल-गुण-पुण्य-परमेश्वराः । अतस्तेष्वपि राजाश्रितत्वं धर्मः, श्लेषमहिम्ना शब्दरूप-साधर्म्याच्च असत्याभावेन नकुलसहदेवौ, धवलिम्ना अर्जुनः, पुण्येन युधिष्ठिरः, परमेश्वरेण भीमश्चाभेदमापन्नाः, पाण्डुपुत्रा अपि राजाश्रिताः सम्पन्नाः । अतस्तेष्वपि राजाश्रितत्वधर्मः सम्पन्नः । स च साधारणीकृतो धर्मो निमित्तम् इति सरलार्थाभिप्रायेणाह अत्र● । **स्तनान्तर्गत**● नायिकां प्रति सख्युक्तिः । हे तन्वि ? स्तनयोर्मध्यगतं माणिक्यं वपुर्यस्य तद्बहिः समागतं ते अनुरागि मनः वल्लभमीक्षते इति मन्ये । **तच्च**● बहिरागमनम् । **माणिक्यमात्र**● मात्रपदेन मनोवृत्तित्वस्य व्यवच्छेदः । **अपह्नुत्या**● न माणिक्यम् किन्तु

बिम्बप्रतिबिम्बभावस्तु 'कलिन्दजानीरभरेऽर्धमग्ना' इत्यत्रैव निरूपितः।

'माधुर्यपरमसीमा सारस्वतजलधिमथनसम्भूता।
पिबतामनल्पसुखदा वसुधायां ननु सुधा कविता॥'

अत्र कवितायां माधुर्यपानयोर्मुख्ययोरसम्भवादास्वादश्रवणयोरमुख्ययोरुपचारेण मुखाभ्यां साधारणीकरणम्। लक्षणया शक्याभेदेन लक्ष्यबोधनात्।

अभेदाध्यवसायमात्रं यथा प्रागुदाहृतायां हेतूत्प्रेक्षायाम्। 'व्यागुञ्जन्मधुकरपुञ्जमञ्जुगीताम्' इत्यत्र शाखानीचत्व-कन्धरानमनयोरभेदाध्यवसाय एव त्रपाहेतूत्प्रेक्षानिमित्ततयोपात्तस्य कन्धरानमनस्य नीचशाखनतकन्धरोभयसाधारण्ये बीजम्।

---

अनुरागि मन एव बहिरागतम्। **मनोगतं●** मनोवृत्ति। **निरूपित●** क्रोशनशब्दशब्दयोर्बिम्बप्रतिबिम्बभावो निरूपितः।

**माधुर्यपरमसीमा●** अत्रत्यमर्मप्रकाशाद् अनल्पसुखदामिति द्वितीयान्तपाठः संदिह्यते। सरलायां पिबतां मनुष्याणां बहुसुखस्य दात्रीति षष्ठ्यन्ततया व्याख्यायते, नागेशभट्ट आक्रोश्यते च। मर्मप्रकाशे तु राजानं प्रत्युक्ततया तां पिबेति रीतिरालम्बिता। तस्य बीजन्तु दाधातुयोगे चतुर्थ्या पतिभयं प्रतिभाति। कवितायां सुधातादात्म्यमुत्प्रेक्ष्यते, माधुर्यस्य परमस्थानत्वम्, सारस्वतं शास्त्रं तदभिन्नसमुद्रमथनजायमानत्वम्, अनल्पसुखहेतुपानकर्मत्वं साधारणम्. तत्र द्वितीयस्य सारस्वतसमुद्रयो रूपकेण तयोर्मन्थयोर्बिम्बप्रतिबिम्बभावेन साधारण्यम्। माधुर्यपानयोः सुधावर्तिनोरुपचारेण कवितावृत्तित्वम्। तथा च लक्षणया आस्वादाभिन्नमाधुर्यस्य श्रवणाभिन्नस्य च पानस्य साधारणीकृतस्य निमित्तत्वमित्याह **लक्षणया●**। **साधारण्ये बीजम्●** अवनिरुहां कुटुम्बे कन्धरानमनहेतुतया त्रपागुण उत्प्रेक्ष्यते। वृक्षकुटुम्बवर्तिनी यदा त्रपा जाता तदा तत्समानाधिकरणेन वृक्षवृत्तिना कन्धरानमनेन हेतुना भाव्यम्, कन्धरानमनञ्च वस्तुतो लज्जिते मनुष्यादौ संभवेत्, न तु अचेतनकल्पे वृक्षादौ,

एवं सर्वत्र हेतुफलयोरुत्प्रेक्षणे यस्य हेतुः फलं वोत्प्रेक्ष्यते सोऽनेन प्रकारेण साधारणीकृतो निमित्तमित्यसकृदावेदितम् ।

एवं क्वचिदुपात्तो धर्मो विषयविषयिसाधारण्याभावादसुन्दरत्वाद्वा स्वयमुत्प्रेक्षणं साक्षादुत्थापयितुमसमर्थोऽपि तदुत्थापनक्षमधर्मान्तरोत्थापनेनानुकूल्यविधानादुपयुज्यते ।

यथा 'द्यौरञ्जनकालीभिः—' इति प्रागुदाहृते पद्ये दिवो जलदालोसमावृतत्वरूपो धर्म उपात्तो जगतो निर्लोचनवर्गसर्गत्वोत्प्रेक्षायां वैयधिकरण्यादप्रयोजकोऽपि स्वप्रयोज्यनिबिडान्धकारप्रयुक्तचाक्षुषज्ञानशून्यत्वस्य तथाविधोत्प्रेक्षानिमित्तस्योत्थापनेन ।

विषयोऽप्युपात्तो निरूपित एव । क्वचिदयमपह्नुतोऽपि भवति ।

---

अतो वृक्षवृत्तिना शाखानीचत्वेन कन्धरानमनस्याभेदाध्यवसायेन कन्धरानमनस्य वृक्षलज्जितोभयवृत्तितया साधारण्यम् । नतकन्धरोभयेत्यत्र नतकन्धरपदेन लज्जितस्य ग्रहणम् । **अविषयोप्युपात्त●** उत्प्रेक्षानिमित्ततयाऽविषयोऽपि दिवो जलदालीसमावरणमुपात्तम् । निबिडान्धकारसूचना द्वारा चाक्षुषज्ञानशून्यत्वरूपोत्प्रेक्षोत्थापकस्योत्थापकतया वर्णितमित्यर्थः । साक्षादुत्प्रेक्षोत्थापकत्वाभावप्रदर्शनाय पूर्वमुक्तम् । **वैयधिकरण्याद्●** जलदालीसमावरणं दिवि लोचनवर्गसर्गाभावो जगति, उत्थापनेनेति तृतीयान्तं पाठं छित्वा (विषयोऽपि उपात्तो निरूपित एव) इति नञ्रहितोऽपि पाठ उपलभ्यते । तदनुसारं व्याख्यानम् । उत्प्रेक्षाविषय उपात्तो निरूपित इत्यर्थः । वस्तुतः पाठद्वयेऽपि किञ्चिद् वैगुण्यं प्रतिभाति । उत्थापनेनेति तृतीयान्तेन वाक्यपरिसमाप्तौ न शैली ग्रन्थकारस्य । अनुपात्तविषयके उद्देश्यविधेयभावानुपपत्तेरुत्प्रेक्षा ग्रन्थकृता निन्दिता च । तादृशेऽतिशयोक्तिरेव शोभते । **क्वचिदयम्●** उत्प्रेक्षाविषयः ।

यथा—

'जगदन्तरममृतमयैरंशुभिरापूरयन्नयं नितराम्।
उदयति वदनव्याजात् किमु राजा हरिणशावनयनायाः ॥'

इत्युत्प्रेक्षानिरूपणम्

अथातिशयोक्तिः।

विषयिणा विषयस्य निगरणमतिशयः, तस्योक्तिः।

तच्च स्ववाचकपदेन शक्यतावच्छेदकरूपेणैवान्यस्य बोधनम्।

---

**जगदन्तर●** हरिणलोचनाया मुखव्याजेन अयं राजा चन्द्र उदयति किमु ? व्याजपदेन मुखापह्नवपूर्वकं मृगनयनामुखे चन्द्रतादात्म्यमुत्प्रेक्ष्यते, किमुपदेन संभावनायाः प्राधान्यादपह्नवस्य गौणत्वम्। अयं राजा अमृतप्रायैः किरणैर्जगन्मध्यं नितराम् आपूरयन् उदेति। अत्र मुखस्यापह्नवो विषयि चन्द्रतादात्म्यं संभावनादार्ढ्याय इति।

इत्युत्प्रेक्षानिरूपणम्।

अथातिशयोक्तिनिरूपणम्

**विषयिणा●** यस्य आरोपः स विषयी, यस्मिन्नारोप्यते स विषयः, साध्यावसानलक्षणामुखेन अन्यरूपेण बोधनं निगरणम्। तदेव निगरणं लक्षयति **तच्च●** स्वं विषयि, वाचकं पदम् आरोप्यमाणबोधकम् अन्यस्य विषयस्य। यद्यपि बहवो व्याख्यातारः उपमानेनोपमेयस्य निगरणं वर्णयन्ति। भवति च प्रायः सादृश्यमूलके तथैव, परं साधारणं तथा नास्ति। क्वचित् कारणेन कार्यस्य कार्येण च कारणस्यापि निगरणमायाति इति ध्येयम्। विषयवाचकपदं विनैव विषयिवाचकपदेन विषयस्य बोधनमिति सरलार्थः। केन रूपेण विषयस्य बोध इति दर्शयति मूले शक्यतावच्छेदेत्यादि। यथा वक्ष्यमाणे 'हरतु श्रमान् अतितमां तमालद्रुम' इत्यत्र तमालद्रुमेण हरेर्निगरणम्। विषयिवाचकपदं तमालद्रुमः, तस्य शक्यतावच्छेदकं तमालद्रुमत्वम्, तेन रूपेण तमालद्रुमत्वेन रूपेण हरेर्बोधः। तथा च शक्यतावच्छेदकरूपेण विषयस्य लक्ष्यस्य विषयिवाचकपदेन बोधनमुपस्थितिर्वा निगरणम् अतिशयो वेति फलितम्।

अत्र च विषये विषयिवाचकपदस्य लक्षणायाः शक्यतावच्छेदकमात्रप्रकारकलक्ष्यविशेष्यकबोधत्वं कार्यतावच्छेदकम्। अतः शक्यासाधारणधर्मस्य लक्ष्यासाधारणधर्मस्य च भानाभानयोर्न विरोधः।

परे तु 'मात्रविशेषणं न देयम्। तेन लक्ष्यासाधारणोऽपि धर्मो भासते'—इत्याहुः।

---

रूपकेऽपि लक्षणा भवति तदपेक्षया अतिशयोक्तौ बोधवैलक्षण्यं दर्शयति अत्र च● विषये विषयिवाचकपदस्य ज्ञायमाना लक्षणा कारणम्, कार्यं शक्यतावच्छेदकमात्रप्रकारकबोधः, कार्यताबोधे कार्यतावच्छेदकं तादृशबोधत्वम्, मात्रपदेन लक्ष्यतावच्छेदकस्य विषयासाधारणधर्मस्य व्यावृत्तिः। तमालद्रुमत्वप्रकारको हरिविशेष्यको बोधः, न तु हरौ हरित्वं प्रकारः। शक्यासाधारणस्य तमालद्रुमत्वस्य भानम्, लक्ष्यासाधारणस्य हरित्वस्य न भानम् इति भानाभानयोरित्यनेनोच्यते। हरित्वतमालद्रुमत्वे न क्वापि एकत्र तिष्ठत इति विरुद्धे विरुद्धयोरेकत्र हरौ बोधो बाधबुद्धिपराहतो भवेत्। तथा च सति आहार्यश्च स्यादिति विरोधपदेनाभिप्रेयते। तमालद्रुमत्वमात्रप्रकारको हरिविशेष्यको बोधोऽनाहार्यः। अत्र समवायसम्बन्धावच्छिन्नद्रुमत्वनिष्ठप्रकारतानिरूपितहरिनिष्ठविशेष्यताको बोधः, रूपके मुखं चन्द्र इत्यादौ मुखत्वेन मुखस्य चन्द्रत्वेनचन्द्रस्य मुखे चन्द्रस्य च अभेदसम्बन्धेन आहार्यबोधः। अभेदसम्बन्धावच्छिन्नचन्द्रत्वावच्छिन्नप्रकारतानिरूपितमुखत्वाच्छिन्नविशेष्यताको बोधः।

'कचतस्त्रस्यति वदनं वदनात् कुचमण्डलं त्रसति' इत्यादिपद्यं प्रसिद्धम्। कचपदेन राहुर्वदनेन चन्द्रः कुचमण्डलेन चक्रवाकमिथुनं निगीर्णम्। त्रासोऽपि तत्रोपात्त उपपादनीयः। राहुत्वेन राहोश्चन्द्रस्य त्रासो न तु कचत्वेन गृहातात् कस्माचित्। एवं चन्द्रत्वेन चन्द्राच्चक्रवाकस्य त्रासो न तु वदनत्वेन गृहीतात् कस्माचित्। तथा च कचत्वादिना राहुत्वादिविशिष्टस्य बोध आवश्यकः। तेन लक्ष्यतावच्छेदकस्य विषयासाधारणधर्मस्यापि भानमङ्गीकार्यम्। तथापि बोधे अनुपदं वक्ष्यमाणरीत्या अनाहार्यत्वम्, आहार्यत्वेऽपि गालीप्रदवाक्यस्थले आहार्यादपि तादृशवाक्यार्थबोधाद् हर्षकोपादिकार्योत्पत्तेः कार्यकारित्वाद् नानुपपत्तिरित्याशयेनाह परे तु● एवञ्च हरित्वविशिष्टहरिविशेष्यकस्तमालद्रुमत्वप्रकारको बोधः। अत्र तमालद्रुमत्वं हरौ विशेषणम्, रूपके तु मुखत्वविशिष्टे मुखे चन्द्रत्वविशिष्टश्चन्द्रोऽभेदेन विशेषणम्, न तु मुखे चन्द्रत्वमिति विवेकः।

केचित्तु 'लक्षणया लक्ष्यासाधारणधर्मप्रकारेणैव बोधः। अनन्तरं च व्यापारान्तरेण शक्यतावच्छेदकप्रकारेण लक्ष्यबोधः।' इत्याहुः। बाधज्ञानस्य च यथा न प्रतिबन्धकत्वं तथोक्तं प्राक्।

अत्र चैकपदोपात्तत्वान्नोद्देश्यविधेयभावः।

---

लक्षणाज्ञानं बाधितार्थबोधं न जनयितुमीष्टे, बाधबुद्धेः शाब्दधियः प्रतिबन्धकत्वात्। व्यञ्जना तु धर्मिग्राहकमानाद् बाधितार्थमपि बोधयितुं समर्थेति मतमाह **केचित्तु** तमालद्रुमपदेनापि लक्षणया हरित्वेन हरेर्बोधः, लक्षणामूलया व्यञ्जनया तु हरित्वावशिष्टस्य हरेस्तमालद्रुमत्वेन बोधः। **व्यापारान्तरेण** व्यञ्जनया। **प्राक्** लक्षणानिरूपणे।

सर्वेषां मते रूपकाद् भेदं विश्लेषयति **अत्र चैक** रूपके तु निगरणाभावात् पदद्वयोपादानाद् उद्देश्यविधेयभावः।

अत्र मर्मप्रकाशः—प्राञ्चस्तु कमलमनम्भसि इत्यादावाह्लादकत्वादिकं लक्ष्यतावच्छेदकम्, तेन रूपेण प्रथमतो बोधे तद्धर्मावच्छिन्ने कमलाभेदप्रत्ययो व्यञ्जनयाऽनाहार्यः। तद्धर्मावच्छिन्ने कमलाभेदबाधबुद्धेरभावात्। अत एव गौणसाध्यावसानायां सर्वथैवाभेदावगम इति प्रकाशकृतः। रूपके तु आहार्य एव। अयमेव रूपकादस्या विशेष इत्याहुः। इति वक्ति—

कमलमनम्भसि कमले च कुवलये तानि च कनकलतिकायाम्।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम्॥

कश्चिन्नायकः प्रेयसीं दृष्ट्वा तत्सखीं प्रति वर्णयति—इयं नायिका, अद्भुतपरम्परा वा? प्रथमं जलरहिते मुखं कमलम्, द्वितीयं तस्मिन् कमले नेत्ररूपे कुवलये, तानि च कमलादीनि नायिकायाः गौराङ्गरूपायां सुवर्णलतायाम् इति तृतीयम्। चतुर्थञ्च सापि कनकलता सुकुमारसुभगा इति तदर्थः।

तत्रेदं चिन्तनीयम्—न आह्लादकत्वावच्छिन्नस्य मुखादेजलरहितेऽद्भुतत्वम् किन्तु कमलत्वावच्छिन्नस्य। एवं कमलत्वावच्छिन्ने कुवलयस्याद्भुतत्वम्, न तु आह्लादकत्वावच्छिन्ने स्वच्छे सरसि। काव्यप्रकाशमूलेऽपि उपमानेनोपमेयस्य निगरणमुक्तम्। स्फुटं मुखं कमलतयाऽध्यवसितमिति प्रतिपादितम्। सर्वथाऽभेदावगमोऽपि बहुत्र भेदाभावावगमेन व्याख्यायते। तथा च काव्यप्रकाशमूलस्वारस्यमपि उपमानतावच्छेदकरूपेणोपमेयस्य भाने। क्वचतत्रस्यतीत्यादौ त्रासोपपत्तिरपि न साधारणधर्मावच्छिन्नादिति।

उदाहरणम्—

'कलिन्दगिरिनन्दिनीतटवनान्तरं भासयन्
सदा पथि गतागतक्लमभरं हरन् प्राणिनाम्।
स्फुरत्कनककान्तिभिर्नवलताभिरावेल्लितो
ममाशु हरतु श्रमानतितमां तमालद्रुमः ॥'

अत्र तमालेन भगवतो निगरणे 'कलिन्दनन्दिनी'त्यादीनि त्रीणि चरणत्रयगतानि विशेषणानि तदनुग्रहार्थं विषयविषयिणोः साधारणधर्मतया साक्षादुपात्तानि। चतुर्थमपि चतुर्थचरण-गतमवैयाकरणानां दर्शने। वैयाकरणानां तूपात्तया तमाला-भिन्नकर्तृकया श्रमहरणक्रिययोन्नीतं तादृशकर्तृत्वं तथा तयोः स्थितम्। द्वितीये चरणे चोच्चावचयोनिसंचरणस्य पथ्यादिना,

---

कलिन्द● यमुनातटवनमध्ये तमालः प्रसरत्कान्तिभिः, हरिस्तु स्वकान्त्या समीपवस्तूनि प्रकाशयन् सदा प्राणिनां मार्गे गमनागमनयोः क्लेशसमूहं तमालः, हरिस्तु चतुरशीतिलक्षयोनिपथे जन्ममरणपरम्परां हरन्, स्फुरन्तीभिः सुवर्णवत् गौरकान्तिभिर्लताभिः हरिश्च सुवर्णगौराभिः वनविहारप्रसृताभि-र्गोपीभिः परिवेष्टितः, तमालद्रुमो हरिश्च मम कष्टानि आशु अत्यन्तं हरतु नाशयतु, श्रमहरणकर्तृत्वं साधारणं चतुर्थचरणेन वर्णितम्। **तदनु-ग्रहार्थम्●** तमालद्रुमेण भगवतो निगरणसाधनार्थम्। साधारणधर्मस्या-त्रापि प्रयोजकत्वं सूचितम्। **दर्शने●** मते। वैयाकरणानां मीमांसकानाञ्च मते धात्वर्थव्यापारमुख्यविशेष्यकः शाब्दबोधः, व्यापारे विशेषणीभूतञ्च कर्तृत्वं तमालद्रुमादावन्वयानर्हं न साधारण्येनोपात्तं भवति, नैयायिकादिनये तु प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधाङ्गीकारात् तिङोपात्तं कर्तृत्वं व्यापार-विशेष्यं सत् प्रथमान्तार्थे तमालद्रुमे एव अन्वीयमानं साधारण्येनोपात्तं जायते। **वैयाकरण●** तमालकर्तृका क्रिया अपहरणमिति ज्ञाने सति अपहरणक्रिया-श्रयस्तमालद्रुम इतीति ज्ञायते एव, तेन तादृशक्रियाश्रयत्वं कर्तृत्वं तमालद्रुमे ज्ञातं कल्पितं वा भवतीति उन्नीतमुक्तम्। तयोर्विषयविषयिणोः, तथा उपात्त-सदृशम्। **उच्चावच●** हीनोत्तमयोनिः। षष्ठ्यन्तस्य कर्मतया तृतीयान्तस्य

तृतीयेऽपि लताभिर्गोपीनां निगरणम्, तस्मिन्नेवानुग्राहकतया। एवं च सावयवेयमतिशयोक्तिः।

यत्र चानुग्राहकं न निगरणान्तरं किं तु शुद्धं साधारणधर्मादि, सा निरवयवा।

यथा—

'नयनानन्दसंदोहतुन्दिलीकरणक्षमा ।
तिरयत्वाशु संतापं कापि कादम्बिनी मम ॥'

अत्र भगवतो मूर्तिर्निगीर्णा।

नामार्थयोरभेदसंसर्गेण विशेष्य-विशेषणभावस्य व्युत्पन्नतया रूपके तावदुचितो विषयविषयिणोस्तेन संसर्गेण विशेष्य-विशेषणभावः, न तु प्रकृते। विषयितावच्छेदकरूपेण विषयस्यैव भानादभेदसंसर्गस्याप्रसक्तेः।

---

कर्तृतया निगरणमित्यत्रान्वयः। अनुग्राहकता साधारणतासम्पादनद्वारा साधकता अङ्गता अवयवता वा. अत आह सावयवे● साधकैरवयवनिगरणैः सहिता प्रधाननिगरणरूपा।

निरवयवामुदाहरति नयना● नयनयोः सौन्दर्यवशाद् आनन्दसंदोहस्य वृद्धिकरणे क्षमा कापि मेघमाला मम संतापं शीघ्रम् अपनयतु। अत्र कादम्बिन्या श्रीकृष्णस्वरूपस्य निगरणम्। पूर्वार्धोपात्तं साधारणम्। अवयवनिगरणाभावान्निरवयवा।

रूपकाद् भेदं वर्णयति नामार्थयोः● रूपके● तत्रोपमानोपमेयवाचकपदयोः सत्त्वात् न्यायस्यास्य प्रवृत्त्या संभवत्यभेदसंसर्गः। अतिशयोक्तौ तु साध्यावसानायामेकस्य पदस्य सत्त्वात् नामार्थद्वयाभावान्नाभेदसंसर्ग इति।

अलङ्कारकौस्तुभे उपमेयतावच्छेदकधर्मावच्छिन्नविशेष्यतानिरूपिताभेदसंसर्गकोपमानतावच्छेदकधर्मावच्छिन्नप्रकारताशालिबोधत्वं सारोपलक्षणायाः, उपमेयतावच्छेदकधर्मावच्छिन्नोपमेयनिष्ठविशेष्यताकोपमानतावच्छेदकधर्मावच्छिन्नप्रकारताशालिबोधत्वं च साध्यावसानलक्षणायाः कार्यतावच्छेदकमिति रहस्यमिति आयाति। तदुपपादनानुसारमपि लेखकप्रमादपरम्परया परिभ्रष्टमिवाभाति द्वितीयसाध्यावसानायाम् उपमेयतावच्छेदधर्मावच्छिन्नोपमेयनिष्ठ-

अभेदप्रधानातिशयोक्तिरिति प्रवादस्तु प्रागुक्ते संसर्गारोपरूपक इव विषयितावच्छेदकस्यैव भेदाभावरूपतया निर्वाह्यः ।

तच्च विषयितावच्छेदकं क्वचित् प्रकृते निगरणदार्ढ्याय विषयमात्रवृत्तिधर्मस्वसमानाधिकरणधर्मशून्यत्वाभ्यां प्रसिद्धम् । यथा 'कलिन्दगिरिनन्दिनी' इत्यादौ तमालत्वादि ।

क्वचिदप्रसिद्धमपि कल्पितोपमादावुपमानमिव कविना

---

विशेष्यतेत्यादि युक्तम् । एनामनाहार्यबुद्धिं मनुते कौस्तुभः । परं नासौ रसगङ्गाधरानुकूलः । अत्रोपमानं प्रकार एव न भवति, अपि तु उपमानतावच्छेदकम् । उपमानस्य विशेषणत्वे रूपकवदभेदस्यापि संसर्गतापत्तिः । भेदाभावरूपतया तमालभेदोऽन्यत्र तमालाद् वर्तते, तमाले नास्ति, तमालभेदाभावस्तमालत्वञ्च तमाले वर्तते । अतस्तमालभेदाभावस्तमालत्वम् । व्युत्पत्तिवादादिन्यायग्रन्थेषु प्रसिद्धोऽयं मार्गः ।

**विषयितावच्छेदक** प्रसिद्धमित्यत्रान्वयि । **विषयमात्र** मात्रपदेन साधारणस्य व्यवच्छेदः । **स्व** विषयमात्रवृत्तिहरित्वादिसमानाधिकरणेत्यर्थः । **शून्यत्वाभ्याम्** तृतीयाया विशिष्टोऽर्थः । तथा च धर्मद्वयाभावविशिष्टमित्यर्थः । धर्मयोरभावस्तु समानाधिकरणत्वसम्बन्धेन । तमालत्वं न हरित्व-तत्समानाधिकरणधर्मसमानाधिकरणमतः सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताको धर्मद्वयाभावस्तमालत्वे । **तमालत्वादि** हरित्वस्य हरित्वसमानाधिकरणदीनोत्तमनानायोनससरणक्लेशभरहारित्वस्य च सामानाधिकरण्यसम्बन्धेन असत्त्वात् तदभावस्य सत्त्वात् । यद्यपि शब्दैक्यमूलकाभेदाध्यवसायेन तमालवृत्त्यभिन्नाहरिवृत्तिधर्मा इति तेषां तमालेऽपि सत्त्वमायाति, परं पश्चाद्भवं वैयञ्जनिकबोधमादाय धर्माणां तथाऽभेदः प्राथमिकबोधमादाय ग्रन्थसमन्वये बाधकाभावः । अवर्णितश्यामत्वं साधारणमादाय तस्य तमालवृत्तितया ग्रन्थो न समन्वयं लभते । अत्र सरला विषयमस्पृशन्ती स्वीयाज्ञानेन शुद्धमपि कलुषीकरोति मर्मप्रकाशं स्वेति प्रतीके विषयमात्रवृत्तिधर्मेत्यर्थः शुद्धः पाठः । तत्र विषयिमात्रवृत्तीति शोधयन्ती पण्डितमपि अभिनवचन्द्रिकाटीककार व्यामोहयति । तेनासौ पण्डितः क्लिश्यन्नपि न सफलः ।

**क्वचिदप्र** अग्रिमोदाहरणे तादृशधर्माभ्या सामानाधिकरण्यसम्बन्धेनाभावविशिष्टतया अप्रसिद्धं नवीनजलधारत्वादिकम् । विषयहरिमात्रवृत्ति-

स्वप्रतिभया कल्पितम्, धर्मिण इव धर्मस्यापि कल्पनाया अविरुद्धत्वात्। यथा—'स्मृतापि तरुणातपम्'।

'जगज्जालं ज्योत्स्नामयनवसुधाभिर्जटिलय-
ञ्जनानां संतापं त्रिविधमपि सद्यः प्रशमयन्।
श्रितो वृन्दारण्यं नत-निखिल-वृन्दारक-नुतो
मम स्वान्तध्वान्तं तिरयतु नवीनो जलधरः ॥'

---

लोकोत्तरत्वधर्मः तत्समानाधिकरणो नवसुधाकरणकव्यासिकर्तृत्वादिधर्मश्च जलधरे न वर्तते, अतो जलधरत्वसमानाधिकरणमपि नास्ति, लोकोत्तरत्वादि-धर्मद्वयविशिष्टतया कल्पितम् इति कल्पितमित्यस्यार्थः। ननु नूतनोजलधर एव कल्पितो न तौ धर्मौ इत्याशङ्कां वारयति **धर्मिण इव**● यद्यपि प्रसिद्धो जलधरो भगवद्वृत्तिलोकोत्तरत्वादिभिर्न सम्बन्धवान्, परं नूतनो विलक्षणश्चेत् संभवति जलधरस्तदा लोकोत्तरत्वादेरपि तत्र संभावना निराबाधैव। अत्रत्या मर्मप्रकाशपङ्क्तयो लेखकप्रमादादितस्ततो जाता न स्फुटं समन्वयं लभन्ते।

अत्र मर्मप्रकाशो वर्णयति—अपूर्वश्चन्द्र इत्यादावप्येवम्। मुखमपूर्वचन्द्र इत्यादौकविकल्पितविशिष्टचन्द्रेणाहार्याभेदप्रतीते रूपकम्। केचित्तु कविकल्पित-तादृशचन्द्रत्वस्य मुखत्वेन विरोधाभावादनाहार्यैव विषयितावच्छेदकप्रकार-कधीरूपकलक्षणे चाहार्यत्वं न देयम्। अतिशयोक्तिरनाहार्यैव। रूपके च आहार्या अनाहार्या च धीः इत्याहुः। अन्ये तु प्रस्तुतस्य यदन्यत्वमित्यति-शयोक्तिषु विविक्ताकारवस्त्वन्तरत्वेन अन्यवस्तुत्वेन वाऽध्यवसानमिति तदर्थः। अस्ति हि प्रकृतस्य मुखस्य चन्द्रत्वेनाध्यवसानम्। आहार्यत्वाभावाच्च न रूपकम् इत्याहुः। अत्रारुचिबीजन्तु चमत्कारवैलक्षण्यमेव। आहार्यता च प्रसिद्धचन्द्रस्यापूर्वतया चन्द्रस्य सतो भिन्नतया च दुर्निवारैव इति।

**जगज्जालम्**● नवीनो जलधरो मम अन्तःकरणान्धकारम् अपनयतु। तिरसोऽव्ययात् करोत्यर्थे णिच्नि टिलोपे इदम्। अमरकोषरामाश्रमीरीत्या अपवादविषयेऽपि क्वचिदुत्सर्ग इत्यादिन्यायेन तृ-धातोरपीदम्। परमनेकक्लिष्ट-कल्पनामपेक्ष्य पूर्वोक्तमेव सम्यक्। अत्र नवीनजलधरत्वेन भगवतो मूर्तिर्निगीर्णा।

अत्र विषयधर्मविशिष्टतया कल्पितेन लोकोत्तरजलधरत्वेन रूपेण भगवतः प्रतिपादने तत्समानाधिकरणत्वेन कल्पितानां विशेषणानामानुगुण्यम् ।

"एवं च निगरणे सर्वत्रापि विषयितावच्छेदकधर्मरूपेणैव विषयस्य भानम्, न विषय्यभिन्नत्वेनेति स्थिते 'रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः' इत्युक्त्वा 'अत्रातिशयोक्तौ रूपकविशेषणं रूपके दर्शितानां विधानामिहापि संभवोऽस्तीत्यतिदेशेन प्रदर्शनार्थम् । तेनात्राप्यभेदातिशयोक्तिस्ताद्रूप्यातिशयोक्तिः' इति कुवलयानन्दे यदुक्तं तन्निरस्तम्" इति नव्याः ।

---

यद्यपि प्रसिद्धे जलधरे भगवतो गुणा न वर्तन्ते नूतने कल्पिते जलधरे च सम्भवन्ति, अत एव लोकोत्तरत्वादिविषयवृत्तिधर्मविशिष्टतया भगवति जलधरत्वारोपदार्ढ्याय पादत्रयेण साधारणधर्मान् वर्णयति **अत्र विषय●** जगत्समूहं प्रकाशयतीभिः नवसुधाभिः सेचयन् सिञ्चन् वा; भगवत्पक्षे उज्जीवयन्, जनानाम् आधिभौतिकाध्यात्मिकाधिदैविकत्रिविधं दुःखमातपञ्च सद्यः स्मरणस्य दर्शनस्य वा समय एव शमयन् वृन्दावने स्थितः प्रणतैः सर्वैर्देवैर्नमस्कृतो मोक्षप्राप्त्यै सस्यसमृद्धया यज्ञसम्पत्त्यै वा । सादृश्यस्य प्रवेशादेव निगरणदार्ढ्याद‌तिशयोक्तेश्चमत्कारितया समानतया धर्मा वर्णिताः । **विषयधर्म●** लोकोत्तरजीवनवसुधाकरणव्याप्त्यादिविशिष्टतयेत्यर्थः । **कल्पितानाम●** वर्णिता धर्मा भगवद्वृत्तय एव, न जलधरवृत्तयः, किन्तु जलधरवृत्तितया कल्पिता इत्यर्थः । सादृश्याभिव्यक्तिद्वारा निगरणदार्ढ्ये अनुकूलता आनुगुण्यम् ।

**एवञ्च●** एवेन विषयासाधारणधर्मादेर्व्यावृत्तिः । **स्थिते●** सिद्धान्ते । एतेन तादात्म्यविवक्षेति ब्रुवन्नलङ्कारकौस्तुभो नादर्तव्यः । **रूपकाति●** अध्यवसानलक्षणया निगरणेन रूपकातिशयोक्तिरिति लक्षणवाक्यार्थः । **अतिदेशेन●** रूपकवदतिशयोक्तिरिति वाक्यकल्पनेन । **नव्या●** अग्रे प्राञ्चस्तु इत्यनेन वर्णितान्नवीनमतेनेदं निरसनमिति सूचितम् । केषाञ्चिदभिप्रेतस्याभेदस्य भेदाभावद्वाराऽपि समन्वयः । एकपदोपस्थितत्वादेव नाभेदबोधसंभवः । एकपदेनोपस्थितस्य परस्परमन्वयोऽपि दुर्घटः । व्यञ्जनया पार्ष्ठिकबोधफलस्य प्रथमबोधेनैव कृतत्वात् । नापि प्रकाशादिभिः स्फुटतयाऽभेद उक्तः ।

प्राञ्चस्तु 'रूपक इवात्रापि विषय्यभेदो भासते। परं तु निगीर्णे विषये इति रूपकादस्या विशेषः। अध्यवसायस्य सिद्धत्वेनाप्राधान्यान्निश्चयात्मकत्वाच्च साध्याध्यवसानायाः संभावनात्मकोत्प्रेक्षाया वैलक्षण्यम्' इत्याहुः।

कथं तर्हि 'कमलमिदमनम्बुजातं जयतितमां कनकलतिकायाम्' इत्यादाविदंत्वादेर्विषयतावच्छेदकस्योल्लेखान्निगरणमिति चेत्, न, इदमित्यस्य कमलत्वविशिष्टे विशेषणत्व एवातिशयोक्तिः, उद्देश्यतावच्छेदकत्वे तु रूपकमेव। एवं 'गौरयम्',

---

तथा च बलवत्तरबाधके कथं प्रकाशटीकानुसरणं कार्यम्? निगरणदार्ढ्यञ्च सर्वथा भेदाभावे संभवति। भेदाभावाय च वेदान्तिभिरपि तत्त्वमसीत्यादौ लक्षणयाऽखण्डार्थबोध एवाङ्गीक्रियते, न त्वभेदः संसर्गः।

यत्तु मर्मप्रकाशे पूर्ववर्णितरीत्यैव कुवलयानन्दाभिप्रेतं वर्णयित्वा प्रसिद्धविषयतावच्छेदकप्रकारकबोधस्य बाधबुद्धिपराहतत्वाद् अवश्यं चन्द्रकार्यकारित्वप्रकारकबोधोऽङ्गीकार्यं इत्याद्युक्तम् तदपि वैयाकरणमञ्जूषायां शाब्दस्य स्वीयाप्रतिबध्यत्वोक्तेर्विरुद्धम्। उपमानकार्यकारित्वादिक व्यञ्जनालभ्यं पार्ष्टिकम्। **कोत्प्रेक्षाया** ● उत्प्रेक्षायां साध्यमतश्च प्रधानम् अनिश्चयात्मकं संभावनम्[१]। अतिशयोक्तौ तु सिद्धम् अप्रधानं निश्चयात्मकम् अध्यवसानम्।

**कमलम्** ● कनकलतिकया नायिकाङ्गस्य कमलेन मुखस्य च निगरणम्। **इदन्त्वादे** ● इदं मुखपरं विषयोऽत इदन्त्वं विषयतवच्छेदाकम्। तथा च इदन्त्वेन रूपेण विषयस्योपादानात् सर्वथा विषयस्यानुपादानेऽतिशयोक्तिमङ्गीकुर्वता प्राचां लक्षणमव्यापकम्, नव्यमते तु न दोषः, इदन्त्वेन विषयस्योपादानेऽपि विषयतावच्छेदकरूपेण मुखत्वेन विषयस्यानुपादानात्, इदन्त्वस्य विषयतानवच्छेदकत्वात्। समाधानान्तरमाह **इदमि** ● तथा च इदंशब्देन विषयिणः कमलस्य परामर्शः, न तु विषयस्य मुखस्य। **रूपकमेव** ● इदन्त्वेन मुखस्योपादाने। मुखे चन्द्रत्वारोपो यथा चमत्कारी न, तथा मुखत्वानुपस्थाने इदमीय इतिसहृदयैराकलनीयम्। **एवम्** ● इदमा विषय-

---

**१. संभावनशीर्षको मम लेखः प्रयागस्थसंगमनीपत्रिकायां प्रकाशितो वर्तते। तत्रान्वेषणं विवेचनञ्च वर्तते।**

'आयुरेवेदम्' इत्यादावपि बोध्यम् । अत एवातिशयोक्तावभेदोऽनुवाद्य एव, न विधेय इति प्राचामुक्तिः संगच्छते ।

एवमेकः प्रकारोऽतिशयस्य, यत्र भेदेऽप्यभेदः ।

अथ प्रकारान्तरम्—यत्राभेदेऽपि भेदो लोकोत्तरत्वप्रतिपत्त्यर्थः, इदमेव प्रस्तुतस्यान्यत्वमित्यनेनोक्तम् ।

उदाहरणम्—

'अन्या जगद्धितमयी मनसः प्रवृत्ति-
रन्यैव कापि रचना वचनावलीनाम् ।
लोकोत्तरा च कृतिराकृतिरार्यहृद्या
विद्यावतां सकलमेव चरित्रमन्यत् ॥'

एवमन्यः प्रकारः—यत्रासंबन्धेऽपि संबन्धो वर्ण्योत्कर्षार्थः ।

यथा—

'धीरध्वनिभिरलं ते नीरद मे मासिको गर्भः ।
उन्मद-वारण-बुद्ध्या मध्येजठरं समुच्छलति ॥'

---

स्योपादाने रूपकम्, विषयिणो विशेषणेऽतिशयोक्तिः । वाहीको गोशब्देन घृतमायुःशब्देन निगीर्यते । अत एव● उद्देश्यस्य विषयस्य सर्वथानुपादानादुपमानाभेदस्य विधातुमशक्यात्वादिति भावः ।

पत्त्यर्थ● अभिधया लक्षणया वाऽभेदे सति भेदो बोध्यते व्यञ्जनया लोकोत्तरप्रतिपत्तिफलायेत्यर्थः । नोक्तम्● प्रकाशकृता प्रस्तुतस्य प्रकृतस्य ।

अन्या● विद्यावतां सकलचरित्रमेव भिन्नम्, इदमेव प्रधानम् एतत्साधकतयाऽङ्गता पादत्रयोक्तानाम्, अभिन्नेऽपि चरित्रे भेद आरोप्यते वैलक्षण्यद्योतनाय । चरित्रावयवानां वचः-प्रवृत्ति-रचना-चेष्टा-शरीराणां भेदमाह पादत्रयेण । जगतो हितसाधनाय वाचारम्भः । वचनावलीनां काव्यादीनाम् । कृतिः चेष्टा, हृदि भवा हृद्या दुःखितजनप्रिया । आर्यहृद्येत्यपि पाठः ।

धीरध्वनिभि● हे मेघ? तव गम्भीरध्वनिभिः अलम्, मा ध्वनिं कृथाः,

अत्र सिंहीवचने समुच्छलनाऽसंबन्धेऽपि समुच्छलन-संबन्धोक्तिः शौर्यातिशायिका ।

यथा वा—

गिरं समाकर्णयितुं यदीयां सदा रसज्ञैरनुभावनीयाम् ।
समीहते नित्यमनन्यचेता नभस्वदात्मम्भरिवंशनेता ॥'

यथा वा—

'तिमिर-शारद-चन्दिर-तारकाः कमल-विद्रुम-चम्पककोरकाः ।
यदि मिलन्ति कदापि तदाननं खलु तदा कलया तुलयामहे ॥'

---

यतो हि मम मासि भवो मासस्य गर्भः भवन्तं मत्तं गजं मन्यमान उदरमध्ये उत्कुर्दते । जठरस्य मध्ये पारे मध्ये षष्ठ्या वा इति सूत्रेणाव्ययीभावसमासः ।

शौर्यातिशायिका● व्यञ्जनया शौर्याधिक्यस्य प्रत्यायिका । अन्ये सिंहा गर्जनं श्रुत्वा समुच्छलन्ति । अयं मासस्य गर्भ एवं समुच्छलति । गर्भाज्जनिष्यमाणो महान् बलवत्तर इति व्यज्यते । स्वभावोक्तिरपि तस्यैव पोषिका ।

गिरं● एवंविधं सुन्दरं वक्ति यद्वचनं श्रोतुम् अशेषविदः शेषोऽपि समीहते । अत्र शेषे श्रवणसमीहा असम्बद्धाऽपि वर्णिता । सदा रसज्ञैः कविभिरनुभवयोग्या यस्या वैदुष्यभरां गिरं समाकर्णयितुम् अनन्यचेताः सावधानः वायुभिः आत्मभरयो वायुभक्षकाः सर्पास्तेषां कुलस्य नायकः शेषो नित्यं समीहते । भावनायोग्यां भावनीयामिति प्रतिभाति, परं तत्र अनुर्न किञ्चित्करः। अनुभावशब्दणिणिनिरनीयरि वा साधनीयम्, अनुभावं कर्तुं योग्याम् इत्यर्थः स्यात् । अन्यं निवृत्तप्रेषणाद् अनुभू इत्यस्माण्णिचि अनीयरि साधयन्ति, अनुभवयोग्यामर्थः स्यात् । स्वार्थो वा णिच् । फलेग्रहिरात्मंभरिश्चेति सूत्रेण ताच्छील्ये इन्प्रत्ययमुमागमाभ्यां निष्पादित आत्मंभरिशब्दः ।

तिमिर● तिमिरेण अन्धकारेण लम्बमाना अलकाः, शरदृतुचन्द्रेण ललाटम्, तारकाभिः नेत्रतारा ललाटस्थिता घर्मबिन्दवो वा, कमलेन अधरबिम्बं कपोलं वा, विद्रुमैः प्रवालैर्नवपल्लवैर्वा अधररक्तिमा, चम्पककुड्मलैः दन्ता नासिका वा निगीर्यन्ते । कलयेत्यनेन पूर्णसादृश्यासंभवः सूच्यते । असंभवदुपमानकमिदमाननमित्यर्थः ।

पूर्वत्र निर्णीयमानः, इह तु संभाव्यमान इति विशेषः।

तथान्यः प्रकारः—यत्र संबन्धेऽप्यसंबन्धः।

यथा—

'पीयूष-यूषकल्पामल्पामपि ते गिरं निपीतवताम्।
तोषाय कल्पते नो योषाधरबिम्बमधुरिमोद्रेकः॥'

अत्र तोषसंबन्धेऽप्यसंबन्धः।

एवमन्योऽपि प्रकारः—यत्र प्रयोजकस्य प्रयोज्यस्य च पौर्वापौर्यविपर्ययः। स च द्वयोः सहभावात्, प्रयोजकस्य प्रयोज्यानन्तरभावाद् वेति द्वेधा।

आद्यो यथा—

'प्रतिखुर-शिलातल-संघट्ट-समुच्छलद्विद्युद्वल्लीकृतविस्फुलिङ्गच्छटा-पटलानां वाजिनाम्—'

इति हयवर्णने समुच्छलन-विद्युद्वल्लीकरणयोः सहोत्पत्तिर्गम्यते।

---

पूर्वत्र● पूर्वयोरुदाहरणयोः। इह● यदि-कदापि-शब्दाभ्याम्।

पीयूषयूष● हे राजन्! विद्वन् वा अमृतमेव यूषो मण्डवत् पेयः तस्मादिषन्न्यूना तत्सदृशीं तव अल्पामपि गिरं नितरां पानं कृतवताम्, क्तवतुः षष्ठीबहुवचनम्, श्रुतवतां तोषायेत्यत्र सम्बन्धः, नायिकाया अधरमधुरताया आधिक्यं नो तोषाय कल्पते। योषाधरबिम्बमधुरतातोऽधिकं माधुर्यं तव गिरीति भावः।

विपर्यय● प्रयोजकस्य प्राक्सत्ता प्रयोज्यस्य च पश्चात् सत्ता वस्तुतः विपर्ययः सहभावात् प्रयोजकस्य पश्चाद्भावित्वाद्वा। अत्र क्वचिन् सहभावासहभावादिति पाठ उपलभ्यते सोऽशुद्धः। सहभावादित्येव सम्यक्। उदाहरणद्वयस्यैव दानाद् अविद्यमानप्रयोजकस्यालङ्कारान्तरग्रस्तत्वाच्च।

प्रतिखुर● खुरनिकरशिलातलसंघट्टशब्देन प्रतिशब्देन च वीप्सायामव्ययीभावः प्रतिसघट्टमित्यर्थः। समुच्छलदिति शत्रन्त विद्युद्वल्लीकृतश्च छटापटलस्य विशेषणम्। यद्यपि आपाततः समुच्छलदिति स्फुलिङ्गनां विशेषणं

**द्वितीयो यथा—**

**'पुरः पुरस्तादरिभूपतीनां भवन्ति भूवल्लभभस्मशेषाः ।**
**अनन्तरं ते भ्रुकुटी-विटङ्कात् स्फुरन्ति रोषानलविस्फुलिङ्गाः ॥'**

---

प्रतिभाति, तथापि तथायोजनायां पटलान्तेन बहुव्रीहौ काठिन्यम् । विस्फुलिङ्गानां छटाः प्रभास्तासां पटलम् । प्रतिखुरनिकरशिलातटसघट्ट समुच्छलद् विद्युद्वल्लीकृतं विस्फुलिङ्गछटापटलं यैर्वाहैस्तेषामिति । उड्डीयमानानां स्फुलिङ्गानां छटापटलं विद्युल्लतेव प्रत्यभासतेति भावः । वल्लीकृतमित्यत्र अभूततद्भावे च्विः । अत्र समुच्छलनानन्तरं विद्युल्लताप्रतिभासो वस्तुतः । परन्तु समुच्छलदित्यत्र वर्तमानार्थकशतृप्रत्ययेन समकालमेवोक्तम् । कुत्रचिन्मूलेऽपि शत्रेति पाटः ।

**पुरः पुरस्तात्** ● हे पृथ्वीपते ? पुरस्तात् पूर्वं तव शत्रुराजानां पुरो नगराणि भस्मानि भवन्ति । तदनन्तरं तव भ्रूस्थानाद् क्रोधाग्नेर्विस्फुलिङ्गाः स्फुरन्ति । रोषा अनला इवोपमापरिणामो वा । दाहकारणानां पश्चाद् भस्मावशेषदाहकार्यस्य प्राग् वर्णनमिति पौर्वापर्यविपर्ययः । भ्रुकुटीविटङ्कः कपोतपालिका इव । भ्रुकुट्येव विटङ्कं वा उपमा परिणामो वा । भस्म एव शेषो नान्यत् किञ्चित् , येषां पुराणां ते भस्मशेषाः । अर्थाद् दग्धा इत्यर्थः । विटङ्कपदप्रयोगात् स्फुलिङ्गानां कपोतव्यवहारोऽपि व्यक्तः । शिष्यतेऽसौ शेषः कर्तृवाचकत्वे भस्मविषेषणत्वे पूर्वनिपातापत्तिरतो भाववाची, भस्मनो द्रव्यस्य शेषस्य भावस्य च सामानाधिकरण्यं चिन्तनीयम्, भस्मानि शेषा भवन्ति इति उद्देश्यविधेयभावोऽपि समस्ते न सम्यक्, भस्म शेषा भवन्ति इति असमस्तयोजनायाम् एकवचनबहुवचने कण्टकायेते ।

अत्र मर्मप्रकाशः पुरः पुरस्तात् पूर्वं पूर्वं शत्रुरूपाणां राज्ञां भस्मरूपाःशेषा अवशेषा भवन्तीति व्याचष्टे । रूपा इति लिखन् आरोपिताभेदेन शेषे भस्मनो विशेषणत्वम्, शेषा भवन्तीत्यस्य प्राधान्यरक्षया विधेयत्वम् , शेषकृदन्तयोगे भूपतीनां कर्मणि षष्ठीम्, नगरीणां भस्मावशेषत्वे वनानां सुरक्षतत्वं स्यादिति तदपेक्ष्य राज्ञां भस्मैवाशिष्यत, नान्यत् किमपीत्यस्य अधिकचमत्कारित्वञ्चाभिप्रैति। पूर्वं पूर्वमिति पदद्वयाद् युगपत् प्रत्ययद्वयं पुरादेशौ च। द्विःप्रयोगो द्विर्वचनमिति पक्षे द्वयोः प्रातिपदिकत्वात् प्रक्रियायाः संभवः । सरला तु सूक्ष्मव्याकरणदृष्टिविधुरा भावद्रव्यादिवाचकत्वविशेषकृतरचनाविशेषानभिज्ञा मर्मप्रकाशं सरलतयैवाक्षिपति । अलं तदुद्धरणेन ।

अत्र भेदद्वये प्रयोजकातिशयकृतः प्रयोज्यशैघ्र्यातिशयो गम्यः ।

एवं च 'एतद् भेदपञ्चकान्यतमत्वमतिशयोक्तिसामान्यलक्षणम्' इति प्राचीनाः ।

अन्ये तु—'संबन्धेऽप्यसंबन्धः, असंबन्धे संबन्ध इति भेदद्वयं नातिशयोक्तिः। एतादृशातिशयस्य रूपकदीपकोपमापह्नुत्यादिषु स्वभावोक्तिभिन्नेषु प्रायशः सर्वेष्वलङ्कारेषु सत्त्वात् ।

नहि यथास्थितवस्तूक्तावस्ति काचिद्विच्छित्तिः । कार्य-

प्रयोज्यशैघ्र्य ● पूर्वत्र विद्युद्वल्लीकरणस्य अत्र च रोपानन्तरं शत्रुनगरदाहस्य च शैघ्र्यम् । अवान्तरभेदान् अविगणय्य पञ्चका ● ।

अन्ये तु ● मम्मटादयः । एतादृशातिशयस्य ● सम्बन्धेऽसम्बन्धाद्यारोपरूपस्य । केचन सर्वेषामलङ्काराणां मूलमुपमां वदन्ति, अन्ये चातिशयम् । एतदर्थं पद्यं प्रसिद्धमस्ति । अत्रोपमायामपि अतिशयो दर्शितः । संभवति च धर्माणां साधारण्यसम्पादनाय अन्ततोगत्वा अतिशयस्योपयोगः[१] ।

स्वभावोक्तौ प्रायो वस्तुस्वभाववर्णने न तादृशोऽतिशयो व्यज्यते, अत आह स्वभावोक्ति ● वक्रोक्तिजीवितालङ्कारे स्वभावोक्तेः खण्डनम्, नियतिकृतनियमरहितामिति काव्यप्रकाशञ्चानुसृत्य तस्या अलङ्कारत्वं बहूनामसम्मतम्, तथापि काव्यप्रकाशे वर्णिततया स्वभाविकगुणक्रिययोरपि प्रतिभामात्रगम्यतया वर्णनेऽस्ति विच्छित्तिरित्यादिन्यायपञ्चाननोक्तेश्च स्वभावोक्तेरप्यलङ्कारत्वं बहूनां सम्मतमपि। पण्डितराजस्य कीदृशी सम्मतिरत्रेति न निर्णेतुं शक्यते, ग्रन्थासमाप्तेरसम्मतस्यापि खण्डनीयतयानुपन्यासाच्च । परमतिशयाभावस्य च वर्णनात् कथमप्यसंमतिरपि व्यज्येत । अतिशयविशेषस्याभाववर्णनेऽपि अतिशयसामान्याभावस्यावर्णनान्न निर्णयः । अन्येष्वपि अलङ्कारेषु कुत्रचिदेतादृशातिशयाऽभिव्यक्त्या प्रायश इत्युक्तम् ।

अन्यालङ्कारोदाहरणेष्वपि अतिशयसत्त्वे युक्तिमाह नहि ● विच्छित्ति ●

१. अस्य किमपि विवेचनं मदीये 'अलङ्कारसामान्यलक्षणविचारः' इति निबन्धे अयोध्यास्थसंस्कृतं पत्रे १३।८।५७ ईशाब्दे ४२-४३-४४-४५ अङ्केषु प्रकाशिते मिलिष्यति ।

कारण-पौर्वापर्यविपर्ययस्यापि तेनैव व्याप्ततया भेदान्तरतानापत्तेश्च । तस्माद्विषयिणा निगीर्याध्यवसानं विषयस्य, तस्यैवान्यत्वम्, यद्यादिशब्दैरसम्भविनोऽर्थान्तरस्य कल्पनम्, कार्यकारणपौर्वापर्यविपर्ययश्चेत्येतदन्यतमत्वमतिशयोक्तित्वम्' इत्याहुः ।

नव्यास्तु—'निगीर्याध्यवसानमेवातिशयोक्तिः, प्रभेदान्तरं त्वनुगतरूपाभावादलङ्कारान्तरमेव ।

ननु प्रस्तुतान्यत्वभेदे - भेदेनाभेदस्य, असंबन्धे संबन्ध इति भेदे—संबन्धेनासंबन्धस्य संबन्धेऽसंबन्ध इति भेदे—असंबन्धेन संबन्धस्य, कार्यकारणपौर्वापर्यविपर्यये च

---

तस्या अभावे नालङ्कारत्वमिति भावः। अनेनापि स्वभावोक्तावसम्मतिराविर्भवति। **तेनैव●** सम्बन्धेऽसम्बन्धः, असम्बन्धे सम्बन्ध इति भेदाभ्याम्। तथापि प्रयोजकसमकालं प्राग्वा प्रयोज्यस्यासम्बन्धे सम्बन्धवर्णनात्। **तस्यैवा●** प्रस्तुतस्य यदन्यत्वमित्यादेः संग्रहः। नूतनमाह **यद्यादि●** उदाहृतञ्च काव्यप्रकाशादिषु—राकायामकलङ्कञ्चेदमृतांशोर्भवेद् वपुः। तस्या मुखं तदा साम्यपराभवमवाप्नुयात्। तिमिरशारदेत्यादिवत्। **श्चेत्येतद●** चतुष्टयान्यतमत्वम् इत्यर्थः। आहुरित्यनेनारुचि सूच्यते, तद्बीजन्तु यथा प्रकृतस्यानन्यत्वेन वर्णनं न विच्छित्याधायकम्, अपि तु अन्यत्वेनैव तथा सम्बन्धासम्बन्धयोरपि तत्त्वेन वर्णनमेव तथा, तस्याप्यलङ्कारत्वं युक्तम् अन्यतमत्वेन संग्रहश्च। पृथगलङ्कारत्वं नव्यमते इव अन्येषामपि पृथक्त्वम्।

स्वमतमाह **नव्यास्तु●**। **त्वनुगतरूपाभावाद●** ननु अलङ्कारसामान्यलक्षणे वर्णितदिशा चन्द्रालोकचन्द्रिकारीत्या आरोपरूपातिशयस्यानुगतीकृतत्वात् स एव मार्ग आलम्ब्यतामिति वाच्यम्, सामान्यत आरोपस्य रूपकादावपि प्रसक्तेः। आरोपभेदेन विच्छित्तिभेदस्यानुभवाच्च। अतस्मिँस्तद्बुद्धिरूपस्यापि द्वितीयभेदमात्रपर्यवसायित्वात् सम्बन्धाद्यारोपस्यापि विच्छित्याधायकत्वाच्च।

**भेदेनाभेदस्य●** षष्ठ्यन्तानां निगरणमित्यत्रान्वयः। षष्ठ्यन्तं कर्म तृतीयान्तं कर्तृ निगरणस्य, भेदेन विषयिणा अभेदस्य विषयस्य निगरणमित्यर्थः। एवमग्रेऽपि सम्बन्धेनासम्बन्धस्य, असम्बन्धेन सम्बन्धस्य निगरणम्।

तेनैवानुपूर्व्यस्य च निगरणं रत्नाकरविमर्शिनीकाराद्युक्तप्रकारेण संभवतीति चेत्, न; अन्यत्वादिभिरन्यवस्तुप्रतीतेरेव चमत्कारित्वम्, न त्वनन्यत्वादिभिः। तेषामनुभवासंगतेः। न चान्यतमत्वमनुगतमिति शक्यते वक्तुम्। विच्छित्तिवैलक्षण्ये सत्यन्यतमत्वस्याप्रयोजकत्वात्। अन्यथोपमारूपकादिकतिशयान्यतमत्वं सकलान्यतमत्वं वा तल्लक्षणम्। उपमादयश्च तद्भेदा इत्येव किं न ब्रूयाः ? अलङ्कारान्तरत्वे गौरवमित्यपि न वाच्यम्। न ह्यत्राक्लृप्तपदार्थकल्पनं येन गौरवं स्यात्। प्रधानोत्कर्षकतारूपस्यालङ्कारत्वस्य त्वयापि स्वीकारात्। अलङ्कारविभाजकोपाधिपरिगणनस्य च पुरुषपरिकल्पितत्वात्' इत्यपि वदन्ति।

---

**तेनैव** ● पौर्वापर्यविपर्ययेण स्वाभाविकस्य कार्यकारणपौवापर्यस्य आनुपूर्व्यस्य निगरणम्। पूर्वं कारणं पश्चात् कार्यमिति पूर्वं कार्यं पश्चात् कारणमित्यनेन निगीर्णमिति भावः। **त्वनन्यत्वादिभिः** ● अभिन्नस्य भिन्नत्वेन निगरणं चमत्कारि, न तु भिन्नम्। अभिन्नत्वेन निगीर्णम्, अन्यन्नेत्यनन्यम्। सम्बन्धस्य असम्बम्बन्धत्वेन निगरणं विशेषव्यञ्जकम्, न तु यथाकथमपि। एवं कार्यकारणपौवापर्यविपयये कारणत्वेन कारणस्य, कार्यत्वेन कार्यस्य च ज्ञानमावश्यकम्। अत एव कारणे विशेषे प्रयोजके अव्यवधानेन कार्यकारित्वाद्यतिशयः, कार्ये च शीघ्रोत्पत्त्यादिवैलक्षण्यं व्यज्यते, साधारणेन निगरणमात्रेण न तत्सिध्यति।

ननु गौरवंन्वस्त्वन्तरकल्पने तस्यालङ्कारत्वकल्पने वा ? तत्र प्रथमे आह **नह्यत्र** ● वस्तुनोऽनुभवविषयत्वात् केवलं नामकरणे विवादात्। द्वितीये वक्ति प्रधानोत्कर्षम्। **स्वीकारात्** ● अतिशयोक्तित्वेनेति शेषः पूर्वम्।

परिगणनं न वस्तुस्वरूपनिर्णायकं येन तत्प्रतिबध्नीत, अत एव न्यायविदा केनचिद् भावोऽभावश्चेति अपरेण सप्तद्रव्यादिनाम्ना विभज्यते इत्यभिप्रेत्याह **अलङ्कार** ● तव मते अतिशयोक्तित्वं मन्मतेऽन्यत्।

'गगनचरं जलबिम्बं कथमिव पूर्णं वदन्ति विद्वांसः ।
दशरथ-चत्वरचारी हृज्ज्वरहारी विधुस्तु परिपूर्णः ॥'

इत्यादौ विषयिणः स्वाभाविकस्थाननिह्नवेन दृढाध्यवसानातिशयोक्तिः ।

यत्तु कुवलयानन्दे —
'यद्यपह्नवगर्भत्वं सैव सापह्नवा मता ।
त्वत्सूक्तिषु सुधा राजन् भ्रान्ताः पश्यन्ति तां विधौ ॥'

इत्यत्र पर्यस्तापह्नुतिगर्भामतिशयोक्तिमाहुस्तच्चिन्त्यम् । पर्यस्तापह्नुतेरपह्नुतित्वं न प्रामाणिकसम्मतमिति प्रागेवावेदनात् ।

यदपि तैरेवोक्तम्—
'सबन्धातिशयोक्तिः स्यादयोगे योगकल्पनम् ।
सौधाग्राणि पुरस्यास्य स्पृशन्ति विधुमण्डलम् ॥' इति ।

---

यत्रोपमानस्वरूपं कथमपि अपलपितं तत्र दृढाध्यवसानमिति तदुदाहरणमाह **गगनचरम्●** गगनगामि जलबिम्बस्वरूपं न किञ्चिद् वस्तुतः, जडं बिम्बमिति च, तत्र कथं परिपूर्णता धर्मः । दशरथाङ्गणविहारी रामचन्द्रः । अत्र विधुत्वेन श्रीरामचन्द्रो निगीर्यते, प्रसिद्धो विधुस्तु अपह्नयते । **यद्यपह्नव●** यस्या अतिशतोक्तेरङ्गतया गर्भे उपमानस्यापह्नवः सा अतिशयोक्तिः सापह्नवा । उदाहरणम्— **त्वत्सूक्तिषु●** चद्रे सुधाकरस्य भ्रान्त्युक्त्या सुधाकरस्य निषेधः । सुक्तिषु सुधाविधानेन मुखस्य सुधाकरत्वं गम्यते । अथवाऽसम्बन्धे सम्बन्धभेदस्योदाहरणं विज्ञेयम् । **प्रागेवा●** अपह्नुतिप्रकरणे नायं सुधांशुरित्याद्युदाहरणविवेचने स्वपरसम्मतापह्नुतिलक्षणाव्याप्तेः । नात्र मुखं सुधाकरेण निगीर्णमिति नातिशयोक्तिसम्बन्धः । अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सः—इति लक्षणमुदाहरणञ्च नापह्नुतिं स्पृशति, प्रकृतस्य निषेधाभावात् । उदाहरणे सुधाया अन्यत्र स्थापनं क्रियते । न च सुधा प्रकृता ।

**तैरेव●** कुवलयानन्दकर्तृदीक्षितैरेव । योगः सम्बन्धः । **सौधाग्राणि●**

तदपि न। अत्रैव 'स्पृशन्तीवेन्दुमण्डलम्' इति कृते कोऽलङ्कारः ? उत्प्रेक्षेति चेत्, तर्हीवादेरभावाद् गम्योत्प्रेक्षेयमुचिता। इवादिसत्त्वे या वाच्योत्प्रेक्षा सैवेवाद्यभावे गम्योत्प्रेक्षेति नियमस्य सर्वसंमतत्वात्। 'त्वत्कीर्तिर्भ्रमणश्रान्ता विवेश स्वर्गनिम्नगाम्' इति त्वदुक्तगम्योत्प्रेक्षायाः 'सौधाग्राणि' इत्यस्य चोत्प्रेक्षांशे विशेषानुपलम्भात्। तथाहि 'त्वत्कीर्ति' रित्यादौ बहुदूरगमने स्वर्गगमने वा स्वर्गङ्गा-प्रवेशतादात्म्योत्प्रेक्षेति नये स्वर्गसंबन्धित्वरूपानुपात्तधर्मनिमित्तेयम्। कीर्तौ स्वर्गङ्गाकर्मकप्रवेशकर्तृत्वोत्प्रेक्षेति नये तु तादृशगमनतादात्म्याध्यवसितस्वर्गङ्गाप्रवेशरूपोपात्तधर्मनिमित्तेति सर्वथा गम्यैव, 'सौधाग्राणि' इत्यत्र परमोर्ध्वदेशसंयोगे चन्द्रमण्डलस्पर्शतादात्म्योत्प्रेक्षायां परमोर्ध्वदेशवृत्तित्वरूपानुपात्तधर्मनिमित्ता। तादृशस्पर्शकर्तृत्वोत्प्रेक्षायां तु परमोर्ध्वदेशसंयोगरूपानुपात्तधर्मनिमित्तेति इयमपि गम्योत्प्रेक्षैव।

---

अस्य नगरस्य गृहशिखराणि चन्द्रमण्डलं स्पृशन्ति। कुवलयानन्दे सौधाग्राणि पाठोऽप्युपलभ्यते। **सर्वसम्मतत्वात्** ● न च नूनं मुखं चन्द्र इत्यादौ नूनपदाभावे उत्प्रेक्षाया आपत्ते रूपकस्यानापत्तेश्च मर्मप्रकाशाभिहितो व्यभिचार इति वाच्यम्, निमित्तधर्माद्यन्यसामाग्रया अप्यपेक्षणात्। मुखं चन्द्र इत्यादावुत्प्रेक्षानिमित्तस्याभावे आह्लादादिचन्द्रकार्यकारित्वस्य मुखे विवक्षायां रूपके बाधाभावः। अत्र च मूले एवोत्प्रेक्षानिमित्तं वर्णितम्।

**त्वत्कीर्तिर** ● हे राजन्! तव कीर्तिर्जगन्मण्डलं व्याप। तद्भ्रमणेन यथा श्रान्ता श्रान्तिदूरीकरणाय जलोपचारार्थं स्वर्गङ्गां विवेश, स्वर्गमपि व्यापदिति भावः। **विशेषानुलम्भात्** ● तथा च तस्याप्यतिशयोक्तित्वापत्तिः। निमित्तं धर्मं विविच्य तत्र दर्शयति **तथाहि** ● नये मते। अत्रत्याक्षरैरेव ग्रन्थार्थः स्फुटतायै प्रकारान्तरेण लिख्यते–तथा ह्यत्र त्रिविधा उत्प्रेक्षाः संभवन्ति, प्रथमा बहुदूरगमने स्वर्गगमने वा गङ्गाप्रदेशतादात्म्यस्य, द्वितीया कीर्तौ स्वर्गङ्गा-

तस्मादुत्प्रेक्षासामग्री यत्र नास्ति तादृशमुदाहरणमुचितम्। यथाऽस्मदीयं 'धीरध्वनिभिर्–' इत्यादि ।

सुन्दरत्वे सत्युपस्कारकत्वमलङ्कारसामान्यलक्षणमिहापि न विस्मरणीयम् ।

इयं चातिशयोक्तिर्वेदेऽपि दृश्यते । यथा—

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥'

---

प्रदेशकर्तृत्वस्य, तृतीया भ्रमणश्रान्तत्वरूपे कीर्तिविशेषणे स्वर्गङ्गाप्रवेशहेतुत्वस्योत्प्रेक्षा । प्रथमायां हेतुर्गमनप्रवेशयोः समानाधिकरणं गङ्गाकीर्त्योर्वृत्तिस्वर्गसम्बन्धित्वमनुपात्तम् । द्वितीयायां स्वर्गगमनमनुपात्तमुत्प्रेक्ष्यसमानाकरणं कीर्तिवृत्तिनिमित्तम् । तृतीयायान्तु प्रयोज्यं प्रवेशरूपमुपात्तं हेतुः, प्रवेशने च तादात्म्यापन्नं गमनम् ।

सौधाट्ट(दोट)नीत्यत्र द्विविधोत्प्रेक्षा, प्रथमा परमोर्ध्वदेशसयोगे चन्द्रमण्डलस्पर्शतादात्म्यस्य, द्वितीया सौधाट्टेषु चन्द्रमण्डलस्पर्शकर्तृत्वस्योत्प्रेक्षा, प्रथमायां तादृशसंयोग-स्पर्शसमानाधिकरणं सौधाट्टमण्डलवृति परमोर्ध्वदेशसंयोगरूप मनुपातं निमित्तम् । अतिशयोक्तिवादिनां फलत्वेन परमोर्ध्वदेशसंयोगो गम्य उच्येत । उत्प्रेक्षावादिना च वक्तृतात्पर्यविषयतोपस्थितोऽसौ उत्प्रेक्षाया निमित्तमुच्यते । विदूरमूर्ध्वं गतं सौधाट्टमुपरि च चन्द्रमण्डलं दृष्ट्वा मन्ये विधुमण्डलं स्पृशति इति उत्प्रेक्षावादिनोऽभिप्रायः । चमत्कारविशेषं सहृदया विमृशन्तु ।

अत्रोत्प्रेक्षासाधकं किमपि नास्तीति वदन् मर्मप्रकाशो बाधकं किमपि न प्रादर्शयत् । प्रसिद्धमतिव्याप्तिवारकं स्मारयति **सुन्दरत्वे●** ।

**द्वा सुपर्णा●** द्वौ सुपर्णौ सयुजौ सखायौ इति लौकिकप्रयोगस्थाने छान्दसो व्यत्ययः । सुपर्णौ पक्षिणौ सयुजौ सहयोगिनौ पिप्पलं कर्मफलम्, जीवेश्वरौ पक्षित्वेन, संसारो वृक्षत्वेन निर्गीयन्ते । जीवेश्वरौ नित्यौ मुक्तावस्थायां समानौ संसारेण सम्बद्धौ, परं जीवः कर्मफलं भुङ्क्ते, ईश्वरः कर्मफलमभुञ्जानोऽपि प्रकाशते ।

स्मृतौ च—

'या निशा सर्वभूतानां तस्यां जागर्ति संयमी।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥'

अथास्या ध्वनिः—

'देव त्वद्दर्शनादेव लीयन्ते पुण्यराशयः।
किं चादर्शनतः पापमशेषमपि नश्यति॥'

---

गीतामुदाहरति या निशा ● नूतनचन्द्रिकया रसगङ्गाधरस्य टीककः मूलस्य स्मृतिशब्दं पश्यन्ननुसन्दधानोऽपि कठोपनिषद्वाक्याध्यासेन क्लिश्यति। निशाशब्देन अज्ञानावृतं ब्रह्म, जागरणेन प्रकाशः। द्वितीयनिशाशब्देन मिथ्यात्वाभिनिवेशः. द्वितीयजागरणशब्देन अविद्याविलसज्जगत्प्रपञ्चे तात्त्विकबुद्धिः निगीर्यन्ते। आविद्यकवस्तूनि संसारिणां कृते प्रकाशन्ते। मुनीनान्तु मिथ्यात्वबुद्ध्या न प्रभावयतीति अप्रकाशकल्पानि इति भावः।

देव ● ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुनेत्यादिगीत्या परमेश्वरदर्शनेन कर्मणां क्षयः प्रसिद्धः, परं परमेश्वरादर्शनेन पापक्षयो न प्रसिद्ध इति पद्यस्य तात्पर्यान्तरं वर्णनीयम्। अतो लक्षणया हे देव ! तव दर्शनजन्यसुखेन जन्मशतोपभोग्यं सुखं लीयते। महतो लाभे लघुनो लाभस्य लीनत्वात्। यदा मोक्षरूपं सुखं भवति, तदा अनेकजन्मोपभोग्यं पुण्यञ्च फलसुखमकिञ्चित्करं न जायते, अतो लीयते इति। एवं तवादर्शनजन्यदुःखेन जन्मशतोपभोग्यं दुःखं विनश्यति। ईश्वरादर्शनजन्यमनाद्यनन्ताज्ञानबन्धनरूपं यदा दुःखं तदा अशेषपापजन्यं दुःखं किमिति विनश्यतीत्यनेन सूचितम्।

साधारणोऽभिप्रायस्त्वेवम्—कर्मणां हि सुखदुःखफले सम्पाद्य विनाशः स्वारसिकः, महच्च सुखं बहुभिः पुण्यराशिभिः सपद्येत। तथा च तव दर्शनजं सुखं महत्, बहूनां पुण्यराशीनां फलम्। तेन च सुखफलेन ते पुण्यराशयो विलीयन्ते। दर्शनजन्यं महत्तरं सुखमिति सूचनीयमास्ते। एवं तवादर्शनजन्यं दुःखमपि महत्तरं, जन्मशतोपभोग्यदुःखजनकानां चिरसञ्चितानां समेषां पापानां फलम्, तादृशदुःखफलं जनयित्वा अशेषाणि पापानि विनश्यन्ति। तव दर्शनं चिरार्जितसञ्चितबहुविधपुण्यराशिफलम्, अत एव दर्शनेन तादृशपुण्यराशिर्विलीयते। एवं तवादर्शनं चिरसञ्चितबहुविधसकलपापानां फलम्, अत एव तेन तानि पापानि नश्यन्ति।

**पुण्य-पापयोः सुख-दुख-भोगमात्रनाश्यतया दर्शनाऽदर्शनाभ्यां तज्जन्य-सुख-दुःखयो राश्यशेषशब्दाभ्यां च जन्मशतोपभोग्ययोस्तयोरेवाक्षेपादग्रिमाभ्यां पूर्वयोर्निगरणं व्यज्यते ।**

---

परमयमभिप्रायः कस्यचिद् राज्ञः प्रशंसापरत्वे संगच्छते । ईश्वरश्रद्धासंभृतचेतसस्तु दर्शनसुखे तादृशपुण्यराशिफलसुखापेक्षया आधिक्यम् । एवमदर्शनदुःखे तादृशसकलपापपुञ्जफलदुःखापेक्षया आधिक्यञ्च विवक्षितम् । तच्च निगरणफलत्वेन व्यञ्जनागम्यमुपमेयगतम् अतिशयरूपम् ।

एवञ्च पुण्यराशिपदस्य तन्नाशकजन्मशतोपभोग्ये सुखे, अशेषपापशब्दयोस्तन्नाशकजन्मशतोपभोग्ये दुःखे लक्षणा । व्यङ्ग्योऽर्थस्तु पूर्वमेव वर्णितः । निगीर्णस्य विषयस्य बोधस्तु दर्शनाज्जन्मशतोपभोग्यं सुखं लीयते, अदर्शनाजन्मशतोपभोग्यं दुःखं विनश्यति । तादृशसुखेन दर्शनजन्यसुखं निगीर्यते, तादृशदुःखेन चादर्शनजन्यं दुःखं निर्गीयते ।

ननु दर्शनादर्शनाभ्यां तज्जन्यसुखदुःखाभ्यां वा तज्जनकपुण्यपापविशेषयोरेव नाशः, तयोः फलस्वरूपयोः स्वजनकपुण्यपापयोरेव नाशकत्वाद् दर्शनादर्शनयोस्तज्जन्यसुखदुःखयोर्वा तादृशपुण्यराशि-तादृशसकलपापनाशकत्वं तादृशपुण्यपापराशिफलतादात्म्याध्यासेनैवोपपादनीयमिति वाच्यसिद्धयङ्गत्वं न ध्वनित्वमिति चेत्, अत्र केचिद्वदन्ति—देवमाहात्म्यातिशयादशेषपुण्यपापक्षयोपपत्तेरिति ।

अन्ये तु सत्यं व्यङ्गं तादाम्यं तत्तु वाच्यसिद्धयङ्गमेव, किन्तु तादृशेन तादात्म्येन निगरणात्मा ध्वन्यत एवातिशयोक्तिरित्याहुः । वयन्तु ब्रूमो भगवत्साक्षात्कारो न पुण्यपुञ्जजन्योऽपि तु भगवतो जीवात्मतया स्वाभाविकः, अविद्यावरणवशान्नानुभूयते भगवान् । आवरणविलयस्तु न पुण्यराशिभिः अपि 'तु तात्त्विकज्ञानात् एवमदर्शनमपि बन्धनं न पापजन्यम्, अपि तु अनादिपरम्पराप्राप्तमिथ्याज्ञानप्रभावात् । अतस्तज्जनकपुण्यपापयोरभावादेव नानुपपत्तिः । प्रागुक्तरीत्या महति लघुनोऽकिञ्चित्करत्वात् तथा वर्णनम् इति । काव्यप्रकाशव्याख्यानेऽपि इमे शङ्कासमाधाने योजनीये ।

**सुखदुःखयो** ● आक्षेपादित्यनेनान्वेति । **तयोरेवाक्षेपाद्** ● दर्शनादर्शनाभ्यां तज्जन्यसुखदुःखयोः, पुण्यराशिपदेन तज्जन्यसुखस्य, अशेषपापशब्दाभ्याञ्च तजन्यदुःखस्य जन्मशतोपभोग्यस्य च लक्षणासहकृतव्यञ्जनाप्रतिपादनादित्यर्थः । **अग्रिमाभ्यां** ● जन्मशतोपभोग्यसुखदुःखाभ्याम् । **पूर्वयोः** ● दर्शनादर्शनजन्यसुखदुःखयोः ।

न च पूर्वाभ्यामग्रिमयोरेव निगरणं किं न स्याद् इति वाच्यम्, नाशोक्तिसामञ्जस्याय नाशकतावच्छेदकावच्छिन्नत्वेन प्रत्ययस्यावश्यकतया तन्निगरणासंभवात्। उपमानेन महता क्षुद्रस्योपमेयस्य महत्त्वाधानाय तन्निगरणस्यौचित्याच्च।

एतेन 'तदप्राप्तिमहादुःख–'इत्यादिकाव्यप्रकाशो व्याख्यातः।

इति रसगङ्गाधरेऽतिशयोक्तिनिरूपणम्

---

नाशोक्तिसाम● पूर्वाभ्याम् अग्रिमयोर्निगरणं न संभवति, अग्रिमयोजन्मशतोपभोग्यसुखदुःखयोर्विषयत्वेनाभिमतयोरुपादानात्। पुण्यराशिः सकलपापविनाश उक्तः, पुण्यपापयोर्नाशकञ्च फलं सुखं दुःखञ्च। तथा च जन्मशतोपभोग्यसुखदुःखयोर्नाशकता, तदवच्छेदके तादृशसुखत्वदुःखत्वे तदवच्छिन्नत्वं तादृशसुखदुःखयोः। यद्यपि जन्मशतोपभोग्यसुखत्वदुःखत्वाभ्यां तादृशसुखदुःखे नोपात्ते, परं पुण्यराशि–सकलपापनाशकत्वेन तादृश सुखदुःखे उपात्ते, उपात्तयोश्च निगरणासंभव इति भावः।

पूर्वदर्शनादर्शनजन्यसुखदुःखे तु नोपात्ते अतस्तयोर्निगरणं संभवति। ते च पूर्वे सुखदुःखे स्वजनकपुण्यपापविशेषयोरेव नाशके, न पुण्यराशिसकलपापयोः। न वा तयोर्नाशो वर्णितः।

समाधानान्तरमाह उपमानेन● जन्मशतोपभोग्यसुखदुःखे महती उपमाने, दर्शनादर्शनजन्ये तु क्षणिके क्षुद्रे। महदुपमानं क्षुद्रमुपमेयम्। उपमानेनोपमेयस्य निगरणं समुचितमुपमेयस्य महत्त्वाधानाय।

ननु देवविषयकरतेरेव प्राधान्यम् अतस्तत्पोषकतया कथमस्य ध्वनित्वमित्याशङ्कायां मर्मप्रकाशः – 'ध्वनित्वञ्चात्र प्राचीनरीत्या बोध्यम्' इत्याह। प्रधानस्य व्यङ्ग्यान्तरस्योपस्कारकत्वेऽपि वाच्यार्थापेक्षया प्रधानस्य व्यङ्ग्यस्य ध्वनित्वमङ्गीक्रियत इति तात्पर्यम्।

काव्यप्रकाशो●

तदप्राप्तिमहादुःखविलीनाशेषपातका।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ॥ १ ॥
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम्।
निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका ॥ २ ॥

अथ तुल्ययोगिता—

---

अत्र जन्मसहस्रैरुपभोक्तव्यानि सुकृतदुष्कृतफलानि वियोगदुःख-चिन्तनाह्लादाभ्यामनुभूतानित्युक्तम्। एवञ्च अशेषचयपदद्योत्ये अतिशयोक्ती इति ग्रन्थः। विष्णुपुराणस्थं श्रीकृष्णविरहिगोपीप्रासङ्गिकं युग्मम्।

अन्या गोपकन्यका निरुध्वासतया मुक्तिं गता, निरुच्छ्वासतयानिरुद्ध-प्राणवायुतया नास्य प्राणा उत्क्रामन्ति, अत्रैव समवलीयन्ते इति श्रुतेर्मोक्षकाले निरुच्छ्वासतेति उद्द्योतकारादयः। प्राणायामेनेति सुधासागरः। प्राणोत्क्रमणं विनेति चन्द्रिका। जगत्कारणं परब्रह्मस्वरूपं श्रीकृष्णं चिन्तयन्ती सती, कर्मणां बन्धनानां क्षये एव मुक्तेः सम्भवात्, कर्मक्षयं प्रतिपादयति पूर्वार्धेन। कर्मणामुपभोगेनैव क्षयादुपभोगश्च तदप्राप्तिदुःखं तच्चिन्तनसुखञ्च। पूर्वरीत्याऽशेष-पाप-पुण्यफले दुःखसुखे भगवद्विरहदुःखचिन्तनसुखाभ्यां भिन्ने, तथापि अशेष-पाप-पुण्यफलत्वेनैवाध्यवसिते विरहदुःखचिन्तनसुखे इति भावः।

तथा च देवेत्यादिपद्येऽपि अतिशयोक्तिद्वयम् अशेषराशिपदप्रकाश्यम् अङ्गीकार्यम्।

काव्यप्रकाशस्य प्रस्तुतस्य व्याख्यायां श्रीरविभट्टाचार्याः—विरहचिन्तन-दुःखसुख जनकयत्नेन समस्तपाप-पुण्यफलवर्णनाद्, एवं तद्वियोगचिन्तनदुःख-सुखजनकपाप-पुण्यनाशाभ्यां समस्तपापपुण्यनाशप्रतिपादनाच्च अन्ययत्नेन अन्यकार्यप्रतिपादनरूपं विशेषालङ्कारचतुष्टयमिदम्। वृत्तिस्थातिशयोक्तिपदेन योगरूढशक्त्या व्यापकार्थातिशयशब्दमहिम्ना प्रतिपाद्यमिति वदन्ति। तदत्र सहृदयहृदयानि अनुसन्दधतां कस्य प्रबला सामग्रीति। अन्यो हि यत्नः स्वरूपत उपात्तः कल्प्यते वा ? आद्ये नास्ति तादृशी रचना। द्वितीये यथाश्रुतकाव्य-प्रकाशप्रकारः कथं न रोचते ? विरहचिन्तनदुःखसुखजनकयत्नेन समस्तपाप-पुण्यफलयत्नो निगीर्ण इति कथन्नोच्यते ? एवं समस्तपाप पुण्यनाशाभ्यां विरहचिन्तनजनकपापपुण्यनाशौ निगीर्णाविति कथं न स्वीक्रियते ? यतो निगीर्णस्यानुपातत्वं गुणो न विशेषस्येत्यलं विस्तरेण।

इत्यतिशयोक्तिनिरूपणम्।

## अथ तुल्ययोगितानिरूपणम्

**तुल्ययोगिता** ७ तुल्यायोगिता अन्वयो यत्र, तुल्यश्चासौ योगोऽन्व-योऽस्यास्तीति तस्य भाव इति वा विग्रहं वदन्ति। पूर्वत्र योगशब्दात्, परत्र

प्रकृतानामेवाप्रकृतानामेव वा गुणक्रियादिरूपैकधर्मान्वय-स्तुल्ययोगिता ।

औपम्यं चात्र गम्यम्, तत्प्रयोजकस्य समानधर्मस्योपादानात्, वाचकाभावाच्च। अत एवालङ्कारिकाणामपि सादृश्यं पदार्थान्तरम्, न तु साधारणधर्मरूपमिति विज्ञायते । अन्यथा औपम्यस्यात्र गम्यत्वोक्तेरनुपपत्तेः ।

केचित्तु—'सादृश्यभाव एवातिरिक्तः । सादृश्यं तु तत्तत् साधारणधर्मात्मकमेव । स चेवादिपदानां शक्यतावच्छेदकः । तत्तत्साधारणधर्मवाचकैस्तु तत्तत्साधारणधर्मस्य स्वशक्यता-

---

तुल्ययोगशब्दान् मत्वर्थीयः । द्वितीयमते न कर्मधारयाद् मत्वर्थीयो बहुव्रीहिश्चेत्, तदर्थप्रतिपत्तिकर इति न्यायविरोधः । असुव्रत इत्यादिभाष्यप्रयोगेणानित्यत्वमाश्रित्य कथञ्चिन्नेयम् ।

तुल्यसम्बन्धश्च धर्मैक्यं विना न सम्भवति; अत एकधर्मान्वय इत्यन्वर्थसंज्ञाबलाल्लभ्यते । स च धर्मो गुणः क्रिया वेति केषाञ्चिदालङ्कारिकाणां मतम् । काव्यप्रकाशरसगङ्गाधरादिमते तु अन्ये धर्मा अपि ग्राह्या, अत आदिपदेन लक्षणमभिहितम् । एकधर्मान्वयस्तु योगार्थो दीपकमप्याव्रृणोत्यतः स्फुटं लक्षणमाह प्रकृता● गुणक्रियापदन्तु परिचयार्थं न व्यावर्तकमित्यग्रे स्फुटीभविष्यति । तथा च चमत्कारिधर्मविशिष्टं गम्यं सादृश्यं तुल्ययोगितेति फलितम् । वै० स्वप्रतियोगिकसादृश्यप्रयोजकतावच्छेदकधर्मसम्बन्धानुयोगिवर्ण्यमात्रवृत्तित्वस्वप्रतियोगिकसादृश्यप्रयोजकतावच्छेदकसम्बन्धानुयोग्यवर्ण्यमात्रवृत्तित्वान्यतरसम्बन्धेन । वृत्तितावच्छेदकसम्बन्धः प्रतियोगित्वानुयोगित्वान्यतरत् । समन्वयस्तु सरल एव । अकिञ्चित्करं धर्ममादायातिव्याप्तिवारणाय धर्मे चमत्कारीति, अनुपयोगिकालिकत्वादिसम्बन्धवारणाय सादृश्यप्रयोजकतावच्छेदकेति, दीपकादिवारणाय मात्रपदनिवेशः ।

गम्यं● व्यङ्ग्यम् । व्यञ्जकमाह तत्प्रयोजक● । वाच्यतां निरस्यति वाचका● चकाराल्लक्षकस्याप्यभावः । अथवा वाचकपदं बोधकपरम् । अत एव● समानधर्मस्य वाच्यत्वेऽपि सादृश्यस्यावाच्यत्वात् । अपिना वैयाकरणानां समुच्चयः । वैयाकरणसिद्धान्तस्तु वैयाकरणमञ्जूषायां निहितः ।

वच्छेदकतत्तद्धर्मरूपेण बोधनेऽपि सादृश्यभावरूपेण बोधो व्यञ्जनसाध्य एव' इत्यपि वदन्ति ।

उदाहरणम्—

'प्रिये विषादं जहिहीति वाचं प्रिये सरागं वदति प्रियायाः ।
वारामुदारा विजगाल धारा विलोचनाभ्यां मनसश्च मानः ॥

अत्र मानिन्या वर्ण्यत्वात्तदीयत्वेन प्रकृतयोः कर्त्रोरश्रु-मानयोर्विगलनक्रिया समानधर्मत्वेनोपात्ता, विलोचनमनसोरपा-दानयोश्च, कारकाणां सर्वेषामपि क्रियान्वयस्य तुल्यत्वात् ।

---

सादृश्यभावः सादृश्यत्वम् । तत्तद्धर्म● सौन्दर्यत्वादिना । केचित्तु इत्यत्रारुचिबीजं तु सादृश्यत्वस्यातिरिक्तत्वे सादृश्यमेवातिरिक्तं युक्तम्, अन्ते रण्डाविवाहश्चेदादावेव कुतो नेत्यादि न्यायात् । वयन्तु सादृश्यं समानधर्म एव, अतिरिक्तपदार्थत्वे गौरवात् । सादृश्यत्वन्तु उपमानप्रतियोगिताकत्वम् । प्रतियोगिताकत्वनिरूपकत्वादिकं समेषां मतेऽतिरिक्तमखण्डम् । तथा च सौन्दर्यत्वेन सौन्दर्यं समानधर्मवाचकशक्यम्, इवादीनान्तु सप्रतियोगिकत्व-विशिष्टं सौन्दर्यं शक्यमित्यभ्युपगच्छामः । अत आलङ्कारिकाणामित्यस्य रूढिवादिनाम् । केचित्तु इत्यस्य युक्तिमार्गावलम्बिनः । नापि सर्वे आलङ्कारि-कास्तथा । उपमाप्रकरणे विवेचितमस्ति ।

प्रिये● हे प्रिये विषादं जहिहि त्यज इति वाचं सरागं यथा स्यात्तथा प्रिये नायके वदति सति प्रियाया विलोचनाभ्यां वारां जलानामुदारा धारा विजगाल मनसश्च मानो विजगाल । जहिहि ओहाक् त्यागे लोण्मध्यमपुरुषः । वदति शतृप्रत्ययान्तस्य सप्तमी । गृधातोः परोक्षभूतस्य विजगालेत्यस्य उपसर्गवशान्निःसरणमर्थः ।

प्रकृतानामेवेत्यस्य समन्वयमाह वर्ण्यत्वात्● । पादानयोश्च● विगलनक्रियासमानधर्मत्वेनोपात्तेत्यत्रान्वयः ।

ननु वारिधारा मानश्च कर्तारौ विलोचनमनसी तु अपादाने, कथञ्चतुर्णां समानोऽन्वय इत्यत आह कारकाणाम्● कर्त्रोराश्रयत्वसम्बन्धेनापादान-योश्चावधित्वसम्बन्धेन । अत एव क्रियान्वयित्वं कारकत्वमिति बहवो वैया-

एवं चतुर्णां क्रियारूपधर्मैक्येऽपि द्वयोर्द्वयोरेवौपम्यं प्रतीयते, न परस्परं चतुर्णाम्। तदपादानत्वतत्कर्तृत्वरूपे विशेषे सामान्यस्य पर्यवसानात्। शेषमुपरिष्टाद् बोध्यम्।

'न्यश्चति वयसि प्रथमे समुदश्चति किं च तरुणिमनि सुदृशः।
उल्लसति कापि शोभा वचसां च दृशां च विभ्रमाणाश्च॥'

अत्र गुणः।

यदि च 'विलसन्त्यहमहमिकया वाचो गतयश्च विभ्रमाश्च भृशम्' इत्युत्तरार्धम्, तदा क्रिया।

---

करणाः। न परस्परम्● औपम्यस्य स्वभावोऽयं यद् द्वयोरेव प्रतीयते। विगलनक्रियान्वयित्वरूपः साधारणस्तु चतुर्णामपि समान इति दर्शयति तदापादानत्व● विशेषः सामान्याच्छादित एवेति प्रसिद्ध एव। अपादान-कर्तृत्वाभ्यां सामान्यस्य क्रियान्वयस्य पर्यवसानादित्यभिप्रायः। वस्तुतस्तु सामान्यस्यापर्यवसानादिति पाठः सम्यक्। तथा च विशेषयोर्न सामान्येन, किन्तु विशेषेण निगलनकर्तृत्वेन विगलनापादानत्वेनैव धर्मेण प्रभूयते, अन्वेतुं न सामान्येन तस्यापर्यवसानात्। इदञ्च द्वयोरेवौपम्यं प्रतीयते, न चतुर्णामित्यत्र हेतुः पञ्चम्यन्तत्वात्। सरलया तु 'तदापादनत्वकर्तृत्वरूपे विशेषे सामान्यस्य पर्यवसानात्' इति पाठो धृत्वा व्याख्यायते। परं तदपि सम्यङ् न प्रतिभाति।

न्यञ्चति● सुदृशो बाल्ये निर्गच्छति यौवने आविर्भवति सति तस्या वचसां नेत्राणां विलासानाञ्च विलक्षणा शोभा प्रकटति। पूर्वं त्यन्तद्वयं सप्तम्यन्तम्। गुणः● शोभारूपः।

अत्रैवोदाहरणान्तरमपि व्यत्ययेन दर्शयति। हम-हमि● अहमेव पुरोविलसामीति बुद्ध्या। क्रिया● विलासरूपा।

यदि 'दधति स्म मधुरिमाणं वाचो गतयश्च विभ्रमाश्च भृशम्' इति क्रियते तदा गुणविशिष्टा क्रिया, केवलगुणेन साक्षात्संबन्धाभावात् केवलक्रियायाश्चाहृद्यत्वात् ।

अप्रकृतानामेव यथा—

'न्यञ्चति बाल्ये सुदृशः समुदञ्चति गण्डसीम्नि पाण्डिमनि ।
मालिन्यमाविरासीद्राकाधिपलवलिकनकानाम् ॥'

अत्र गुणः, आविर्भावक्रियायाः साक्षाद्धर्मिभिरनन्वयात् ।

'न्यञ्चति राकाधिपतिर्लवलीपुरटं च पुण्डरीकं च' इति कृते क्रिया ।

'धवलीभवत्यनुदिनं लवलीकनकं कलानिधिश्चायम्' इति कृते गुणविशिष्टक्रिया ।

'त्वयि पाकशासनसमे शासति सकलं वसुन्धरावलयम् ।
विपिने वैरिवधूनां वर्षन्ति विलोचनानि च दिनानि ॥'

---

**मधुरिमाणम्●** मधुरत्वम् । **गुणविशिष्टा●** मधुरत्वाधानम् । **साक्षात्स●** कारकाणां परस्परं साक्षादन्वयविरहात् क्रियाद्वारैवान्वया न्मधुरिम्णा वागादीनां साक्षादन्वयासम्भवात् । केवलधारणस्याकिञ्चित्करत्वादाह **अहृद्यत्वात् ●** ।

**गण्डसीम्नि●** कपोलभागे । **पाण्डिमनि●** पाण्डुरत्वे । इमनिच्प्रत्ययान्तः । **आविरासीत्●** प्राकटत् । राकाधिपश्चन्द्रमाः लवली लता विशेषः भाषाया हरफारेवडीति ख्याता ।

अत्र गुणकृतं चन्द्रादीनां परस्परमौपम्यं गम्यं परमुपमानापेक्षया उपमेयस्योत्कर्षे यथा चमत्कारी न तथा तदिति धेयम् । **रनन्वयात्●** षष्ठ्यन्तत्वेन कारकत्वाभावाच्च । सम्बन्धषष्ठ्या मालिन्येनान्वयसुगमाच्च । तद्द्वारा क्रियान्वयमाशङ्क्य साक्षादित्युक्तम् ।

**न्यञ्चति●** पुरटं सुवर्णम् । **क्रिया●** न्यग्भवनरूपा । **गुणविशिष्टा●** धवलविशिष्टं भवनम् ।

**त्वयि●** इन्द्रतुल्ये त्वयि सकलं वसुन्धरावलयं शासति सति वने

अत्रोभयसाधारणयोर्गुणक्रिययोरभावाच्छब्दमात्रम्। श्लेषमूलेनाभेदाध्यवसानेन पिण्डीकृतोऽर्थो वा।

यत्त्वलङ्कारसर्वस्वकृता, तदनुगामिना कुवलयानन्दकृता च 'गुणक्रियाभिः संबद्धत्वे गुणक्रियारूपैकधर्मान्वयः' इति चोक्तम्, तदापाततः।

'शासति त्वयि हे राजन्नखण्डावनिमण्डलम्।
न मनागपि निश्चिन्ते मण्डले शत्रु-मित्रयोः॥'
इत्यत्राभावरूपस्यैव धर्मस्यान्वयात्।
गुणक्रियेत्युपलक्षणं वा धर्ममात्रस्य।

---

वैरिवधूनां नयनानि वर्षणं कुर्वन्ति दिनानि वर्षं इव दीर्घाणि आचरन्ति। शब्दमात्रम् ● वर्षन्तीति। श्लेषमूलेन ● एकपदोपस्थितत्वहेतोः। अभेदाध्यव ● वर्षणवत्सरवद्‌चरणयोरभेदारोपेण। पिण्डीकृतः ● एकीकृतः साधारण्यं प्राप्त इति शेषः।

गुणक्रियाभिः ● गुणक्रियाभिः प्रकृतानामेवाप्रकृतानामेव वा सम्बन्धे सति गुणरूपस्य क्रियारूपस्य वा एकस्य धर्मस्यान्वय इति यथासङ्ख्यम्। तदापातत ● गुणक्रिययोरेव धर्मयोग्रहात्। अन्येषामपि चमत्कारोत्कर्षकाणां धर्माणामन्वये तुल्ययोगितायाः इष्टत्वात् काव्यप्रकाशतट्टीकादिषु धर्ममात्रस्यैव ग्रहणाच्च।

अभावधर्मस्योदाहरणमाह शासति ● सतम्यन्तम्। अखण्डं सम्पूर्णम्। मित्रपदेन सुहृत् सूर्योऽपि, सुहृदां रक्षणस्य सूर्यस्य द्वितीयत्वस्य चिन्ता। निश्चिन्तत्वाभावरूपो धर्मः। कथमपि तद्ग्रन्थं सङ्गमयति गुणक्रिये ● चिन्ताभाववद्भेदस्य चिन्तागुणत्वेन वर्णनेऽपि इष्टस्य समकालिकत्वादेरसङ्ग्रहः। जातिद्रव्यक्रियातिरिक्तो धर्मो गुण इति वैयाकरणनयेऽपि कालस्य गुणत्वे मानाभावस्तस्मादुपलक्षणमेव ज्यायः। सरलया मर्मप्रकाशस्यात्र खण्डनमशुद्धमिति ध्येयम्।

एवम् 'एकस्त्वं दानशीलोऽसि प्रत्यर्थिसु तथार्थिसु' इत्यादावपि दानशीलरूपैकान्वयाल्लक्षणप्रवृत्तिः। यथाकथञ्चिदनेकत्रैकान्वयस्य चमत्कारिणोऽपेक्षितत्वात्।

एतेन—

हिताहिते वृत्ति-तौल्यमपरा तुल्ययोगिता।
प्रदीयते पराभूतिर्मित्र-शात्रवयोः समा॥'

इत्यादिना तुल्ययोगितायाः प्रकारान्तरं यत् कुवलयानन्दकृता लक्षितमुदाहृतं च तत् परास्तम्। अस्या अपि 'वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता' इति पूर्वलक्षणाक्रान्तत्वात्। एकानुपूर्वीबोधितवस्तुकर्मकदानपात्रत्वस्य, परम्परया तादृशशब्दस्य, प्रागुक्तमार्गेणार्थस्य वा धर्मस्यैक्यात्।

---

**प्रत्यर्थिषु**● विरोधिषु अर्थिषु याचकेषु। **यथाकथञ्चित्**● प्रकृताप्रकृतयोर्हिताहितत्वादिविशेषानपेक्षणेन दानशब्देन दोधातोरवखण्डनं शत्रोरित्यपि संभवति, मर्मप्रकाशरीत्या धनस्यापमानस्य चेत्यर्थः। हिताहिते शत्रुमित्रयोस्तुल्यव्यवहारः। **पराभूतिः**● पराभवः परममैश्वर्यञ्च।

**एकानुपूर्वी**● एकाकारेण पराभूतिशब्देन बोधिते वस्तुनी पराभवैश्वर्ये तत्कर्मकं दानं तत्पात्रत्वस्य। **परम्परया**● अर्थद्वारा स्वबोधितवस्तुकर्मकदानपात्रत्वसम्बन्धेनान्वयिनस्तादृशशब्दस्य● पराभूतिशब्दस्य। **प्रागुक्तमार्गेण**● एकशब्दोपस्थितत्वहेतोः पराभवैश्वर्ययोरभेदाध्यवसायेन।

अत्र मर्मप्रकाशः—प्रदीयते, यश्च निम्बमिति पद्ययोरुपमानोपमेययोर्हितत्वाहितत्वकृतस्तयोस्तुल्यव्यवहारकृतश्चमत्कारोऽनुभूयते सहृदयहृदयैर्न केवलमेकधर्मान्वयकृत एवेति अदसीयचमत्कारप्रयोजकस्यालङ्कारान्तरत्वं युक्तम्। तत्र कुवलयानन्दकृतोऽपि तात्पर्यम् इत्याह।

तुल्ययोगितायाश्चमत्कारेणैकव्यवहारप्रयुक्तश्चमत्कारः कवलीक्रियत एवेति प्रधानचमत्कारस्य तुल्ययोगितायत्तत्वात् पण्डितराजो जग्राह।

'यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।
यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः ॥'

इत्यत्रापि कटुत्वविशिष्टस्य निम्बस्यैव परम्परया छेदक-सेचक-पूजकधर्मत्वसंभवात् ।

न चात्र वृत्तिनियामकसम्बन्धेन धर्मिवृत्तित्वं विवक्षितं धर्मस्य, वक्ष्यमाणकारकदीपकादावव्याप्त्यापत्तेः ।

अथ चन्द्र इव सुन्दरं मुखमित्याद्युपमायां चन्द्रमुखयोरेक-धर्मान्वयादतिव्याप्तिः ।

न चात्र प्रकृतानामेवाप्रकृतानामेवेत्युक्तत्वान्न तथेति वाच्यम्, प्रागुक्ते 'प्रिये विषादम्'—इति पद्ये 'जगाल मानो हृदयादमुष्या विलोचनाभ्यामिव वारिधारा ।' इत्युत्तरार्धे कृते प्रकृतयोर्मानवारिधारयोरुपमायां तथाप्यति-व्याप्तेः। चन्द्र इव सुन्दरं मुखमित्यत्रापि वक्ष्यमाणदीपक-

---

यश्च निम्बम् ● परशुना फरसानामकास्त्रेण छेदकं प्रति, मधुसर्पिषा सेचकं प्रति गन्धमाल्यादिभिः पूजकं प्रति कटुरेव। धर्मत्वसम्भवात् ● कटुत्वविशिष्टस्य निम्बस्य एकस्य धर्मस्य छेदकादिभिरनेकैर्धर्मैः सहान्वयात् । छेदकादौ छेदकत्वादेरेव साक्षादन्वयोः, न तु तादृशनिम्बस्येति परम्परयेत्युक्तम् । स्वकर्मकच्छेदनादिक्रियाश्रयत्वसम्बन्धेन । स्वं निम्बम् । मूलस्य निम्बे छेदकादीनां धर्मत्वस्य सम्भवादित्यर्थः ।

ननु धर्मत्वं वृत्तित्वं वृत्तिता च वृत्तिनियामकैः स्वरूपसमवायपतनप्रति-बन्धकसंयोगैरेव व्यवहारपदवीमासादयति इत्याशङ्कापुरस्सरं यथाकथञ्चित् सम्बन्धेन सादृश्यनिर्वाहिना वृत्तिता अपेक्षिता, लक्षणेऽन्वयस्य प्रोक्ततया वृत्त्य-नियामकेनाऽपि सम्बन्धिव्यवहारस्याक्षतत्वाच्चेति न चात्र ● । कारक ● वसुदातुमित्यादौ क्रियासु कर्तुर्धर्मस्यान्वयात् । अत्रापि सरला अशुद्धा । शङ्कामुत्थापयति अथ ● प्रतिपादनादेतावत्पर्यन्तम् । न तथा ● चन्द्र-मुखयोः प्रकृताप्रकृतत्वात् ।

लक्षणातिव्याप्तेश्च । न चौपम्यस्य गम्यत्वे सतीत्यपि विशेषणीयमिति वाच्यम् ।

चन्द्रांशुनिर्मलं वारि चन्द्रो हंससमद्युतिः ।
हंसास्तु शरदि स्मेरपुण्डरीकमनोरमाः ॥'

इत्यत्र वाचकाभावाद् गम्योपमायां तथाप्यतिप्रसङ्गात् ।

यदि चात्र न व्यङ्ग्या उपमा, किं तु समासस्य वाच्या, पूर्वपदस्य लक्ष्या चेति सूक्ष्ममीक्ष्यते, तथापि 'हंसास्तु मानसभुवश्चन्द्रा एव न संशयः' इत्यादिरूपकादिष्वतिप्रसङ्गः ।

न ह्यत्रापि चन्द्रसादृश्यविशिष्टे चन्द्रादिपदानां लाक्षणिकत्वादुपमा लक्ष्यैवेति शक्यते वक्तुम्। रूपके लक्षणा नास्तीति प्रागेव प्रतिपादनाद् इति चेत् , न; यत्र यथोक्तानां धर्मिणां यथोक्तधर्मान्वय एव चमत्कारी, तत्र तुल्ययोगिता, दीपकं वा । यत्र तादृशधर्मान्वयप्रयुक्तं सादृश्यमभेदो वा, तत्रोपमारूपकादिकमेवालङ्कारताप्रयोजकम् । सुन्दरत्वे सत्युपस्कारकत्वमित्यसकृदावेदनात् । अन्यथा सादृश्यस्यात्र प्रत्ययात् तदायोपमाव्यवहारस्याप्यापत्तेरिति दिक् ।

एवं च—

'दधीचि-बलि-कर्णेषु हिम-हेमाचलाब्धिषु ।
अदातृत्वमधैर्यं च दृष्टे भवति भासते ॥

---

चन्द्रांशु● चन्द्रांशुजलयोः, चन्द्रहंसयोः, हंसपुण्डरीकयोश्चौपम्यम् । वाचकाभावादित्यस्य प्रथमतृतीययोरिति शेषः । द्वितीये समपदसत्वात् । समासशक्तिमते वाच्या नैयायिकमते लक्ष्येति । चकारस्थाने वाकारस्य पाठः समुचितः । न्वय एव● सादृश्यकृतो व्यावर्त्यते । सादृश्यम्● क्रमश उपमारूपकयोरन्वयः ।

पूर्वोपमायामुपमेयस्योत्तरत्रोपमानतागमकं रशनाभेदमस्या उदाहरति दधीचि● प्रथमपादोपात्ता दातारो द्वितीयपादोपात्ताश्च धीराः प्रसिद्धाः।

इत्यादौ रशनारूपैषा यथासंख्यावष्टब्धा।

'दृष्टः सदसि चेदुग्राश्चन्द्र–चन्दन–चन्द्रिकाः।
अथ त्वं संगरे सौम्याः शेषकालानलाब्धयः॥'

इत्यत्र च स्वरूपद्वयेन राजविषयकरतिभावभूषणतया स्थिता।

यत्र च प्रकृतानामेवाप्रकृतानामेव वा क्रियाणामेककारकान्वयः सा कारकतुल्ययोगिता। यथा—

'वसु दातुं यशो धातुं विधातुमरिमर्दनम्।
त्रातुं च सकलां पृथ्वीमतीव निपुणो भवान्॥'

अत्र राज्ञः स्तावकवाक्ये प्रकृतानां क्रियाणामेकेन कर्त्रा साधारणेन धर्मेणौपम्यम्।

यथा वा—

'दूरीकरोति कुमतिं विमलीकरोति
चेतश्चिरन्तनमघं चुलुकीकरोति।
भूतेषु किं च करुणां बहुलीकरोति
सङ्गः सतां किमु न मङ्गलमातनोति॥'

---

दधीचिर्बलिश्चादाता पुनर्बलिः कर्णश्चादाता। एवमुत्तरार्धेष्वपि। उत्तरोत्तरं प्रति पूर्वमपि उपमानम्।

दृष्टः● राजवर्णनमिदम्। चन्द्रादयः सौम्या अपि तव सौम्यतामपेक्ष्योग्रा दृश्यन्ते। एवं तवोग्रतया उग्रा अपि शेषादयः सौम्या दृश्यन्ते। स्वरूपद्वयेन● सौम्यौग्र्यद्वयेन। भूषणतया● उपस्कारकतया।

वसु● धनम्, धातुं प्रसारयितुम्, विधातुं कर्तुम्। स्तावकवाक्ये● तेन राजविषयकरत्यङ्गता। साधारणेन● स्वकर्तृकत्वसम्बन्धेनैकस्य कर्तुः सर्वत्र क्रियासु सम्बन्धात्।

दूरीकरोति● दुर्बुद्धिं नाशयति। चेतः स्वच्छं करोति। चिरसञ्चितं

अत्रार्थान्तरन्यासान्विता ।

केऽपि स्मरन्त्यनुसरन्ति च केचिदन्ये
पश्यन्ति पुण्यपुरुषाः कति च स्पृशन्ति ।
मातर्मुरारिचरणाम्बुजमाध्वि गङ्गे
भाग्याधिकाः कतिपये भवतीं पिबन्ति ॥'

अत्रैकं कर्म क्रियाणां साधारणम् ।

व्यङ्ग्यैषा यथा—

'अये लीलाभग्नत्रिपुरहरकोदण्डमहिमन् !
कथा यत्रोदञ्चत्यतुलबलधैर्यस्य भवतः ।
अयं को वा तत्र प्रसृमरफणाकोणनिहित-
क्षितिः शेषः श्रीमान् कमठकुलचूडामणिरपि ॥'

---

पापं चुलुकजलवदनायासेन पिबति समापयतीति यावत् । किञ्च जीवेषु बहुलां करुणां विस्तारयति । एभिर्विशेषैः समर्थनीयं सामान्यमर्थान्तरन्यासमाह चतुर्थपादेन—सतां सङ्गः किमु शुभं न करोति, सर्वं करोतीत्यर्थः । पादत्रये करोतियोगेऽभूततद्भावे च्विः । अर्थान्तर्न्यासान्विता कारकतुल्ययोगितेत्यर्थः । सतां सङ्गस्य कर्तुः सर्वत्रान्वयात् ।

अप्रकृतानामेवोदाहरणमाह **केऽपि●** हे मातः ! विष्णुचरणकमलमकरन्दरूपे गङ्गे केऽपि दूरस्था भवतीं स्मरन्ति । केचिदन्ये अनुसरन्ति अधिकपुण्यवन्तो दर्शनमपि कुर्वन्ति । कति च स्नानादिना स्पृशन्ति च । कतिपये भाग्यशालिनो भवतीं पिबन्ति च । भवतीमित्येकस्य कर्मणोऽनेकक्रियान्वयित्वात् कर्मकारकतुल्ययोगिता ।

**अये●** लीलया अनायासेन भग्नः शिवकार्मुकदण्डो येनैवं महिमा यस्य तत्सम्बुद्धौ हे राम ! अतुलं बलं धैर्यं यस्यैवंभूतस्य भवतः यत्र कथा उदञ्चति प्रकटति तत्र प्रसृमरा विस्तृता याः फणास्तासां कोणे निहिता क्षितिर्येन स शेषः श्रीमान् कमठकुलचूडामणिर्भगवान् कच्छपावतारश्च कः । अत्रैको धर्मोऽगणनीयत्वं व्यङ्ग्यमतस्तदन्वयोऽपि व्यङ्ग्यः ।

अत्र 'को वा' इत्यनेन वाच्यलक्ष्यव्यतिरिक्तस्यागणनीयत्वस्य शेषकमठाभ्यामप्रकृताभ्यामन्वयः प्रतीयते ।

इति रसगङ्गाधरे तुल्ययोगितानिरूपणम्

अथ दीपकम्—

प्रकृतानामप्रकृतानां चैकसाधारणधर्मान्वयो दीपकम् ।

प्राग्वदेवात्राप्यौपम्यस्य गम्यत्वम् ।

प्रकृतार्थमुपात्तो धर्मः प्रसङ्गादप्रकृतमपि दीपयति प्रकाशयति सुन्दरीकरोतीति दीपकम् । यद्वा दीप इव दीपकम्, संज्ञायां कन् । दीपसादृश्यं च प्रकृताप्रकृतप्रकाशकत्वेन बोध्यम् ।

---

व्यङ्ग्यतां दर्शयति अत्र को वा● ध्वनिस्तु न, रामभक्तिभूषणत्वात् ।

इति तुल्ययोगिता निरूपणम्

अथ दीपकनिरूपणम्

धर्मान्वय● धर्मश्चमत्कारप्रयोजकोऽन्वयः सम्बन्धश्च चमत्कारप्रयोजकतावच्छेदकः । येन सम्बन्धेन धर्मस्यान्वयेन चमत्कारो जायते सोऽन्वयश्चमत्कारप्रयोजकतावच्छेदकः । गम्यं सादृश्यमपि तादृशान्वयिधर्मप्रयुक्तमेव ग्राह्यम् । तथा च परिष्कृतं लक्षणम्—धर्मविशिष्टं गम्यं सादृश्यं दीपकमिति फलितम् । वैशिष्ट्यञ्च स्वप्रयोज्यत्व–स्वविशिष्टप्रकृताप्रकृतान्यतरविशिष्टत्वोभाभ्याम् । तत्र प्रथमं वैशिष्ट्यं स्वीयचमत्कारप्रयोजकतावच्छेदकसम्बन्धप्रतियोगित्वानुयोगित्वान्यतरवत्त्वसम्बन्धेन, द्वितीयं स्वप्रतियोगिकत्वानुयोगिकत्वान्यतरवत्त्वसम्बन्धेन ।

प्राग्वद्● तुल्ययोगितावत् । दीपकम् । कर्तृण्वुलन्तम् ।

दीपसादृश्यम्● घटार्थमुपात्तो दीपो घटसम्बद्धं पटमपि प्रकाशयत्येव । शिशिरेणेत्याद्युपमाप्रकरणस्थं पद्यमत्रानुसन्धेयम् ।

उदाहरणम्—

'अमृतस्य चन्द्रिकाया ललितायाश्चापि कवितायाः ।
सुजनस्य च निर्माणं जनयति नहि कस्य सन्तोषम् ॥'

यथा वा—

'सुधायाश्चन्द्रिकायाश्च संजीविन्या महौषधेः ।
दयावृष्टेश्च ते राजन् विश्वसंजीवनं गुणः ॥'

यथा वा—

मृतस्य लिप्सा कृपणस्य दित्सा
विमार्गगायाश्च रुचिः स्वकान्ते ।
सर्पस्य शान्तिः कुटिलस्य मैत्री
विधातृसृष्टौ नहि दृष्टपूर्वा ॥'

अत्राभावः साधारणो धर्मः ।

कस्यचित् प्रकृतत्वे दीपकम्, अन्यथा तुल्ययोगितैव ।

---

**अमृतस्य●** निर्माणस्य भावप्रत्यान्तस्यार्थो धर्म एकः कर्मत्वसम्बन्धेन अमृतादिषष्ठयन्तार्थेऽन्वेति । षष्ठी कर्मणि । कवितायाः ललितत्वविशेषोक्त्या तस्याः प्रकृतत्वं प्रतीयत इति प्रकृताप्रकृतान्वयित्वम् । अमृतादिना सह कवितायाः सादृश्यं गम्यते । एवमस्य क्रियाया उदाहरणत्व उत्तरस्य सञ्जीवन-गुणोदाहरणत्वं मृग्यम् । अस्यैव गुणोदाहरणत्वे कल्पनीये अमृतनिर्माणे कवितानिर्माणे च जनकतासम्बन्धेन संतोषस्यान्वय उह्यताम् ।

**सुधाया●** राजवर्णनम् । तस्माच्च दयादृष्टेः प्रकृतत्वम् । सञ्जीवन-क्रियाया एकधर्मत्वम् । गुणो वैशिष्ट्यम् ।

अभावोदाहरणमाह **मृतस्य●** लभदाधातुभ्यां सनन्तात् सनिमीमाधुर-मलभेत्यादिनेसादेशे अत्र लोपोऽभ्यासस्येत्यनेनाभ्यासलोपे अप्रत्ययादित्यनेन भावेऽकारे टापि लिप्सादित्सयोः सिद्धिः । विमार्गगा विरुद्धे मार्गे गन्त्री कुटिला । दृष्टपूर्वत्वाभावो धर्मः ।

यत्र क्रिया साधारणो धर्मस्तत्र यावतां कर्त्रादिकारकाणां संविधानं तेषां स्वसजातीयेनान्येन सह तुल्ययोगिता दीपकं वा पृथक् पृथग्भवति, औपम्यस्यापि पृथगेव भासमानत्वात् ।

यथा—

'सुजनाः परोपकारं शूराः शास्त्रं धनं कृपणाः ।
कुलवत्यो मन्दाक्षं प्राणात्यय एव मुञ्चन्ति ॥'

अत्र कर्तृकर्मणोः ।

एवं वक्ष्यमाणे 'लावण्येन प्रमदा—' इत्यत्र कर्तृकरणयोः । 'दिवि सूर्य—' इत्यत्र कर्त्रधिकरणयोः ।

अमुनैव न्यायेनानेकासां क्रियाणामेककारकान्वये कारकदीपकम् ।

---

पृथक्पृथक● यथा कर्तृकर्मसमभिव्याहारे कर्त्रोरेव कर्मणोरेवालङ्कारद्वयम्, न तु कर्तृकर्मणोः । यथोदाहरणमाह सुजनाः● प्रथमान्तार्थेषु क्रियाया मुञ्चतेरर्थस्य कर्तृत्वसम्बन्धेन द्वितीयान्तार्थेषु च कर्मत्वसम्बन्धेन विभिन्नान्वयादेकसादृश्यासम्भवात् सुजनशूरादीना परोपकारादीनाञ्च पृथगेव यथालक्षणसमन्वयं तुल्ययोगिता दीपकं वा । मन्दाक्षं लज्जा प्राणात्ययो मरणम् ।

कारकान्तराणां दर्शयति एवम्● कर्तृकरणयोः कर्त्रधिकरणयोरित्यत्र पृथक् पृथगिति शेषः ।

अमुनैव न्यायेन● यथा कारकाणां क्रियाधर्म एवं क्रियाणामपि कारकं धर्मः । एकधर्मान्वयकृत एव तत्र चमत्कारः, न तु अन्वयिनि धर्मे कारकत्वप्रयुक्तः । अत एव कारकधर्मान्वयिनो यथायथं दीपकतुल्ययोगितयोरन्तर्भावः, चमत्कारवैलक्षण्ये पृथगलङ्कारतापत्तेर्दीपकादिभेद[illegible]श्च । वक्ष्यमाणकाव्यप्रकाशस्यायुक्ततां ध्वनितुं पूर्वत एव भूमिकां रचयति । एवमेव तुल्ययोगितायामुक्तम् ।

यथा—

'वसु दातुं यशो धातुं विधातुमरिमर्दनम् ।
त्रातुं च मादृशान् राजन्नतीव निपुणो भवान् ॥'

अत्र वृत्तिहीनस्य कस्यचिद्दीनस्य वचने वसुदान-स्वत्राणलक्षणयोः क्रिययोः प्रकृतयोः, अरिमर्दनस्य चाप्रकृतस्य, यशोधानस्य चोभयात्मनः साधारणं कर्तृकारकम् ।

यथा—

'वासयति हीनसत्त्वानतिसत्त्वानुद्धतान् विवासयति ।
त्रासयति सकलशत्रून्नीतिविदामग्रणीर्नराधिपतिः ॥'

अत्र कस्यचिद्धीनसत्त्वस्य सत्त्वाधिकमसहमानस्य वा, शत्रुपरिपीडितस्य वा कस्यचि राजानं कश्चित्प्रत्युक्तौ सामान्य-विशेषरूपायामप्रस्तुतप्रशंसायामेकस्याः क्रियायाः प्रकृतायाः इतरयोश्चाप्रकृतयोः साधारणं तत् । यदि तु प्रागुक्तवक्तृभिन्नस्य

---

कस्यचित् प्रकृतत्वसम्पादनाय संबोधनं दत्वाह वसु० यशोधानस्य० यशःप्रसारणस्य ।

वासयति० नीतिविदाम् अग्रणीः नराधिपः दुर्बलान् स्थापयति० उद्धतान् बलिनो निस्सारयति, सकलशत्रून् त्रस्तान् भीतान् करोति । वसूधातुर्ण्यन्तः त्रसी च । अप्रस्तुतव्यवहारेण प्रस्तुतं यत्र वर्ण्यते साऽप्रस्तुतप्रशंसा । तस्याश्चतुर्थो भेदोऽप्रस्तुतस्य सामान्यस्य व्यवहारेण प्रस्तुतं वर्ण्यते । अनेन पद्येन पूर्वांशेन राजसामान्यस्याप्रस्तुतस्य व्यवहारो वर्ण्यते । अन्तिमांशेन तु हीनसत्त्वप्रार्थनाविषयीभूतो राजविशेषः । अत्र रूपा-यामितिमूलानुसारी अप्रस्तुतप्रशंसाविषयकोऽतिसंक्षिप्तो मर्मप्रकाशलेखः, तं मुग्धा सरला वृथा आक्षिपति । वासयतीत्यस्य प्रकृतत्वायाह हीनसत्त्व० विवासयतीत्यस्य च प्रकृतत्वाय सत्त्वाधिक, त्रासयतीत्यस्य च तत्त्वाय शत्रुपीडि० स्फुटप्रकृताप्रकृतनिर्णायकाभावादाहायदितु० ।

कस्यचिद्राजस्तोतुर्नीतिमात्रबोधकस्य चेयमुक्तिस्तदा क्रियाणाम् प्रकृताप्रकृतरूपत्वाभावात्तुल्ययोगितैव ।

यत्तु—

'सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् ।
सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥'

इति लक्षणमुक्त्वा ।

'स्विद्यति कूणति वेल्लति विवलति
निमिषति विलोकयति तिर्यक् ।
अन्तर्नन्दति चुम्बितुमिच्छति
नवपरिणया वधूः शयने ॥'

इति द्वितीयं दीपकमुदाहृतं काव्यप्रकाशकृद्भिः तत्र विचार्यते—प्रथमार्धगतलक्षणेनैव दीपकद्वयस्यापि संग्रहाद् द्वितीयं लक्षणं व्यर्थम् । गुणिनां कारकाणां च गुणक्रियारूप-

---

राजस्तोतु● राजप्रशंसामात्रे तात्पर्यं न तु कस्यचित्प्रस्तुतत्वे तात्पर्यस्वार्था-भावात् । नीतिमात्र● राजनीतेर्वर्णयितुः । तुल्ययोगितैव● एवकारेण दीपकस्य अप्रस्तुत प्रशंसायाश्च निरासः । तत्रापि प्रस्तुताप्रस्तुतत्वनिर्णयस्या-पेक्षितत्वात् । दीपकत्वे तु अप्रस्तुतप्रशंसाऽपि स्थानं लभते । सकृद्वृत्तिस्तु● एकस्य धर्मस्य प्रकृताप्रकृतवस्तुषु एकाकारेण वर्तनमन्वयवर्णनम् । सैव सकृद्वृत्तिः वह्वीषु क्रियासु एककारकस्य धर्मस्य एकाकारेणान्वयवर्णनम् प्रकाशो-द्योतादिषु क्रियाणां प्रकृतत्वाप्रकृतत्वेन विवक्षितत्वम् इत्युक्तम् । तत्र चालङ्का-रिकसिद्धान्तविरोधं वक्ष्यति मूलकारः । स्विद्यति● नवपरिणयो यस्याः सा परिणय एव नूतनो न तु वधूरपि सा न प्रौढा । नव परिणयाच्च लज्जा । शयने; भर्त्तुः पर्यङ्के स्विद्यति सात्त्विकं स्वेदमश्नुति । परिरम्भारम्भे कूणति अङ्गानि संकोचयति । कूणसंकोचने चुरादिरनित्यण्यन्तः । वेल्लति वृत्तवर्तनं सङ्कुचिताङ्गं तिष्ठति । विवलति विशेषेण चपला जायते । प्रियप्रतिक्रिया-

**धर्मस्य सकृद्वृत्तेः साम्राज्यात्। न च क्रियाणां प्रकृताप्रकृतात्मताविरहेऽपि शुद्धप्रकृतत्वे शुद्धाप्रकृतत्वेऽपि वा कारकस्य सकृद्वृत्तेर्दीपकत्वम्, क्रियाभिन्नानां तु प्रकृताप्रकृतात्मतायामेव क्रियादेर्धर्मस्येति वैलक्षण्याल्लक्षणद्वयमिति वाच्यम्। कारकतुल्ययोगितोच्छेदापत्तेः। सकलालङ्कारिकसिद्धान्तविरोधापत्तेश्च। लक्षणद्वयस्याननुगतत्वाच्च। एवं च 'स्विद्यति कूणति—' इत्याद्युदाहरणमपि न संगच्छते, क्रियाणां शुद्धप्रकृतत्वात्। किं च दीपक-तुल्ययोगितादौ गम्यमानमौपम्यं जीवातुरिति सर्वेषां संमतम्। न चात्र स्वेदनकूणनादीनामेककारकान्वितानामप्यौपम्यं कविसंरम्भगोचरः। तस्मात्समुच्चयालंकारच्छायाऽत्रोचिता। अस्मदुदीरितानां हीनसत्त्ववास-**

---

दर्शनाय निद्रां विनाऽपि निमिषति नेत्रे निमील्य तिष्ठति, कदाचित् तिर्यक् विलोकयति, मनसि जातरागतया नन्दति हृष्यति। तत एव चुम्बितुमिच्छति न तु लज्जापारवश्याच्चुम्बति। उद्योतकारस्याभिप्रायेण शङ्कते न च **क्रियाणाम्**○। **उच्छेदापत्तेः**○ कारकदीपकेनैव सङ्ग्रहात्। इष्टापत्तौ बाधकमाह **सकलालङ्का**○। ननु नायं सकलालङ्कारिकविरोधः काव्यप्रकाशकृतैव कारकतुल्ययोगिताया अनुदाहरणादलक्षणात्कारकदीपकस्य चोदाहरणाल्लक्षणाच्चेत्यत आह **लक्षणद्वयस्या**○। **उपप्लव**○ अन्यतमत्वेनानुगमस्य उपमादीनामविशेषतापत्तिः। अयं हि ग्रन्थार्थः। कारकदीपके एकधर्मान्वयकृत एव चमत्कारः धर्मनिष्ठकारकत्वप्रयुक्तो वा ? प्रथमे पृथग् लक्षणं न सम्यक्। द्वितीये पृथगलङ्कारता। किञ्च अन्वयिनां प्रकृताप्रकृतत्वप्रयुक्तता चमत्कारेऽङ्गीक्रियते न वा ? प्रथमे तुल्ययोगितादीपकयोः कथन्न चमत्कारानाधायकत्वम्। तत्त्वे च ताभ्यां कवलीकारः। द्वितीये तयोश्चमत्कारानाधायकत्वम्। प्रथमे कारकतुल्ययोगितानङ्गीकारस्यानौचित्याच्च। दीपकात्पृथक्त्वे दीपकघटितं नाम न शोभते। कारकत्वप्रयुक्तमिव गुणत्वप्रयुक्तं चमत्कारमादाय गुणदीपकावर्णने न्यूनत्वापाताच्च। **एवञ्च**○ अन्वयिनः प्रकृताप्रकृतत्वप्रयुक्तचमत्कारे अङ्गी क्रियमाणे। **सम्मतम्**○। यत्तु असत्त्व-

नादीनां च राजकर्तृकाणां पद्यद्वयगतानामौपम्यप्रतीतौ सहृदय-हृदयमेव प्रमाणमिति न प्रतिबन्दिदानावसरः । यदि तु स्वेदनादीनामौपम्यं प्रतीयत एवेत्याग्रहस्तथापि क्रियाणां शुद्धप्रकृतत्वात्तुल्ययोगिता स्यादपि, न तु दीपकमित्यास्तां तावत् ।

यदपि विमर्शिनीकृतोदाहृतम्—

"आलिङ्गितुं शशिमुखीं च सुधां च पातुं
कीर्तिं च साधयितुमर्जयितुं च लक्ष्मीम् ।
त्वद्भक्तिमद्भुतरसां हृदये च कर्तुं
मन्दादरं जनमहं पशुमेव मन्ये ॥

अत्रालिङ्गनाद्यनेकक्रियाकर्तृत्वेनैक एव जनो निर्दिष्ट इति ।" तदपि चिन्त्यम्, आलिङ्गनादीनां क्रियाणां मन्दादरत्वेनैकाश्रयकत्वस्यावश्यकत्वेऽपि परस्परमेकाश्रयकत्वस्यानावश्यकत्वात् । यः शशिमुखीमालिङ्गितुं, यश्च सुधां पातुं योऽपि कीर्तिं साधयितुं, यश्च लक्ष्मीमर्जयितुं, यश्चापि त्वद्भक्तिं कर्तुं मन्दादरस्तं सर्वमपि जनं पशुं मन्ये इति तुमुन्नन्तानां भिन्नकर्तृकत्वेऽप्युपपत्तेरेककारकान्वयकृतं क्रियाणामौपम्यं चमत्कारीति न शक्यते वक्तुम् । किं तु शशिमुखीसुधाकीर्तिलक्ष्मीत्वद्भक्तीनां बिम्बप्रतिबिम्बभावकृतम् । नापि चात्रैककर्तृत्वे

---

भूतायाः क्रियाया नोपमानोपमेयभावः सन्सूत्रस्थमहाभाष्यादिति काव्यप्रकाशोद्योतकारादय आहुस्तत्खण्डनन्तु उत्प्रेक्षाप्रकरणे लिम्पतीवेत्याद्युपपादितम् । बिम्बप्रतिबिम्बभावकृतम् ● यथा शशिमुखीमालिङ्गितुं मन्दादरः पशुस्तथा विलक्षणास्वादां त्वद्भक्तिं हृदये कर्तुं पशुरिति मन्दादरत्वपशुत्वाभ्यां प्रयोज्योपमा चमत्कारिणी तत्र शशिमुखीभक्त्या-

काचिदर्थस्यास्ति परिपुष्टिः। प्रत्युत प्रातिकूल्यम्। सर्वेषां पशुत्वोक्त्यप्रेक्षया सकलतादृशक्रियाकरणमन्दादरस्यैकस्य पशुत्वोक्तेररमणीयत्वात्।

यदि तु विमर्शिनीकारोक्तिरवश्यं समर्थनीयेत्याग्रहस्तदेत्थं समर्थ्यताम्—क्रियाणां कर्तुरेकत्वाभावेऽपि कर्तृतावच्छेदकस्य मन्दादरत्वस्यैक्यात्तस्यैव च परम्परासंबन्धेनानेकक्रियासाधारणधर्मस्य सकृद्वृत्तिरस्तीति न दोषः। कारकस्येव कारकविभाजकोपाध्यवच्छेदकस्यापि सकृद्वृत्तेः कारकदीपकत्वेन परिभाषितुं शक्यत्वात्।

कारकसकृद्वृत्तेस्त्वस्माभिरुक्तमेवोदाहरणमनुसर्तव्यम्।

अत्रेदं बोध्यम्—तुल्ययोगितातो दीपकं न पृथग्भावमर्हति, धर्मसकृद्वृत्तिमूलायाविच्छित्तेरविशेषात्। विच्छित्तिवैलक्षण्यस्यैवालंकारविभागहेतुत्वात्। न च धर्मस्य सकृद्वृत्तेरविशेषेऽपि धर्मिणः प्रकृतत्वाप्रकृतत्वाभ्यां प्रकृताप्रकृतत्वेन च तुल्ययोगिताया दीपकस्य विशेष इति वाच्यम्। तथापि तुल्ययोगितायां धर्मिणां केवलप्रकृतत्वस्य केवलाप्रकृतत्वस्य च विशेषस्य सत्त्वादलङ्कारद्वैतापत्तेः। श्लेषेऽपि द्वैतापत्तेश्च।

---

दीनां बिम्बप्रतिबिम्बभावात्साधारण्यम्। प्रातिकूल्यं दर्शयति सर्वेषाम्● । अरमणीयत्वात्● योयः स्पृहणीयां क्रियां प्रति मन्दादरस्तस्य सर्वस्य पशुत्वोक्त्यैव परिपुष्टिः। अवच्छेदकस्य● मन्दादर आलिङ्गनादीनां कर्ता तत्र कर्तृता कर्तृतावच्छेदकं मन्दादरत्वम्। परम्परा● स्वाश्रय कर्तृकत्वसम्बन्धेन स्वं मन्दादरत्वम्। साधारण● अनेक क्रियासु अन्वयः। कारकविभाजकोपाधयः कर्तृत्वकर्मत्वादयः षट्। तदवच्छेदकं मन्दादरत्वादि। उक्तमेव● वसुदातुमित्यादि। द्वैतापत्तेः● प्रकृततुल्ययोगिताऽप्रकृततुल्ययोगितेति भेदापत्तेः। श्लेषेऽपि भङ्गाभङ्गभेदेनालङ्कारभेदापत्तेः।

सर्वेषामप्यलङ्काराणां प्रभेदवैलक्षण्यापत्तेश्च । न च दीपके वास्तवमौपम्यं गम्यम्, उपमानोपमेययोः प्रकृताप्रकृतरूपयोस्तत्र सत्त्वात् । तुल्ययोगितायां च वैवक्षिकम्, उपमानोपमेयस्वरूपाभावात् । अतो वैलक्षण्यमिति वाच्यम् । उपमेयोपमानत्वयोः प्रकृताप्रकृतरूपत्वे मानाभावात् । 'खमिव जलं जलमिव खम्' इत्याद्युपमेयोपमायां प्रतीपे चौपम्यानापत्तेश्च । तस्मात्तुल्ययोगिताया एव त्रैविध्यमुचितम् । प्रकृतानामेव धर्मस्य सकृद्वृत्तिः, अप्रकृतानामेव, प्रकृताप्रकृतानां चेति । एवं च प्राचीनानां तुल्ययोगितातो दीपकस्य पृथगलङ्कारतामाचक्षाणानां दुराग्रहमात्रमिति नव्याः ।

अमुं चालंकारं धर्मस्य गुणक्रियाद्यात्मकस्यादिमध्यावसानगतत्वेन त्रिविधमामनन्ति । यथा—

'न भाति रमणीयोऽपि वैराग्येण विना यतिः ।
वैदुष्येण विना विप्रो नरलोकस्त्वया विना ॥'

'लावण्येन प्रमदा मदातिरेकेण वारणाधिपतिः ।
भाति विभवेन भवकान् राजन्भवता च वसुमतीवलयम् ॥'

---

ण्यापत्तेश्च● अलङ्कारान्तरतापत्तेरर्थः । अतो वैलक्षण्यम्● प्रकृताप्रकृतयोरुपमानोपमेयभावात्प्रकृतयोरप्रकृतयोश्च तत्त्वाभावात् । म्यानापत्तेश्च● परस्परमुपमानोपमेयभावे प्रकृतत्वाप्रकृयत्वयोरसम्भवात् । नव्याः● अलङ्कारकौस्तुभकृतस्तु भरतमुनिना दीपकस्याङ्गीकाराद् दीपक एव तुल्ययोगितान्तर्भावं समीहन्ते । पण्डितराजस्तु अन्वर्थबलाद्यथैकस्यानेकेष्वन्वयस्तुल्ययोगिताशब्देन भासते न तथा दीपकशब्देनेति तुल्ययोगितायाः प्राधान्यमभिप्रैति । आमनन्ति● एतेनैतादृशवैलक्षण्यस्यानन्तत्वादसर्वज्ञदुर्ज्ञेयत्वाद्गणनानर्हत्वं ध्वनितं प्राचीनप्रसिद्ध्या तु वर्ण्यते । आदिगतक्रियाया उदाहरणमाह । रमणीयोऽपि शास्त्रसम्पन्नोऽपि यतिः सन्यासी वैराग्येण विना न भाति । नरलोकः, मृत्युलोकः, त्वया राज्ञा । मध्यक्रियायामुदाहरणमाह लावण्येन● हे राजन् सौन्दर्येण प्रमदा मदाधिक्येन गजराजः ऐश्वर्येण

'आखण्डलेन नाकः कुण्डलिकुलकुण्डलेन पातालम् ।
नरमण्डन रिपुखण्डन भवता भूमण्डलं विभातितमाम् ॥'

एवं तुल्ययोगितायामप्यूह्यम् ।

वस्तुतस्तु धर्मस्यादिमध्यान्तगतत्वेऽपि चमत्कारवैलक्षण्याभावात् त्रैविध्योक्तिरापातमात्रात् । अन्यथा धर्मस्योपाद्युपमध्योपान्त्यगतत्वे ततोऽपि किंचिन्न्यूनाधिकदेशवृत्तित्वे चानन्त भेदप्रसङ्गात् ।

एवं केवलानुगामिसाधारणधर्मतायां दर्शितं दीपकम् । बिम्बप्रतिबिम्बभावेनाप्येतत्संभवति ।

यथा—

'शीलभारवती कान्ता पुष्पभारवती लता ।
अर्थभारवती वाणी भजते कामपि श्रियम् ॥'
'लता कुसुमभारेण शीलभारेण सुन्दरी ।
कविता चार्थभारेण श्रयते कामपि श्रियम् ॥'

इदमेव लतादिष्वन्यतमस्य प्राकरणिकत्वे दीपकस्योदाहरणम्, अन्यथा तुल्ययोगितायाः ।

---

भवान् भवता च भूमण्डलं भाति भवकान् अकजन्तः कुत्रचिद् भगवानित्यपिपाठः । अवसानक्रियोदाहरणमाह **आखण्डलेन** ● कुण्डलिकुलं नागकूलम् । एतादृशगुणोदाहरणोपेक्षायां न्यूनतां परिहरति **वस्तुतस्तु** ● । **उपमध्य** ● मध्यसमीपे अन्त्यसमीपे च । कुत्रचिदुपादीत्यादिः पाठः । **शीलभार** ● शीलं सद्वृत्तम् । अर्थभारोऽर्थगौरवम् । भजनक्रियायाः कर्तृत्वसम्बन्धेन कर्तृत्रयेऽन्वयः । शीलपुष्पर्थानां बिम्बप्रतिबिम्बभावः । करणकारकस्याप्यन्वयिनीं क्रियां सम्पाद्याह **लता** ● । ग्रन्थलाघवार्थोभयोरुदाहरणतां सम्पादयति **इदमेव** ● प्राकरणिकत्वे प्रकृतत्वे । बिम्बप्रतिबिम्ब-

अत्र बिम्बप्रबिम्बतायां न केवलं क्रियारूपमनुगामिमात्रं चमत्कारकारणम्, अपि तु कुसुमादिबिम्बप्रतिबिम्बकरम्बितम्। इयांस्तु विशेषः—यत्केवलबिम्बप्रतिबिम्बभावेनाप्युपमादीनां भवति निष्पत्तिः। यथा कोमलातपबालाभ्र—इत्यादौ। प्रकृते तु न तथा, अनुगामिनं विना धर्मस्वरूपस्यैवानिष्पत्तेः। नहि बिम्बप्रतिबिम्बमात्रेण धर्मस्य सकृद्वृत्तिः संभवति। तथा 'मृतस्य लिप्सा—' इत्यादिप्रागुक्ते मृतादीनाम्' कारकदीपके कारकतुल्ययोगितायां च वसु दातुम्—' इत्यादौ क्रियाणां धर्मित्वात्तद्विशेषणानां वस्वादीनां च बिम्बप्रतिबिम्बता बोध्या।

उत्तरोत्तरस्मिन्पूर्वपूर्वस्योपकारकतायां मालादीपकम्।

यथा—

'आस्वादेन रसो रसेन कविता काव्येन वाणी तया<br>लोकान्तःकरणानुरागरसिकः सभ्यः सभा चामुना।<br>दारिद्र्यानलदह्यमानजगतीपीयूषधाराधर!<br>क्षोणीनाथ! तया भवांश्च भवता भूमण्डलं भासते॥'

एतच्च प्राचामनुरोधादस्माभिरिहोदाहृतम्। वस्तुतस्त्वेतद्दीपकमेव न शक्यं वक्तुम्, सादृश्यसंपर्काभावात्। किं त्वेकावलीप्रभेद इति वक्ष्यते।

---

भावस्य व्यर्थतां निरस्यति अत्र● । सकृद्वृत्तिः● बिम्बप्रतिबिम्बभावेन-धर्माणां भेदापहारेऽपि एकरूपेणान्वयो न स्फुटं भासत इत्यर्थः। आस्वादेन● आस्वादेन रसो भासते। तया वाण्या सभ्यः। स च लोकानामन्तःकरणेऽनुरागसम्पादने रसिकः। अमुना सभ्येन, दारिद्र्येणानलेन दह्यमानायां जगत्यां अमृतस्य वर्षण हेराजन्, तया सभया। सम्पर्का● गम्यौपम्याभावात्। एकावली● तत्रापि पूर्वेण परस्योपकारात्।

अस्मिश्च लङ्कारद्वये क्रियादेर्धर्मस्यैकरूपेण धर्मिष्वनन्वयो दोषः। यथा प्रागुक्ते पद्ये 'रसिकाः सामाजिकास्तैः सभा' इति कृते एकवचनान्तैर्धर्मिभिरैकरूप्येणान्वयेऽपि सामाजिकैरनन्वयात्। वचनविपरिणामेनान्वये उपमायामिव स्यादेव दोषः। एवं जहल्लिङ्गनामार्थस्य धर्मस्य सकृद्वृत्तौ लिङ्गभेदोऽपि दोषः तथा——

'जगति नरजन्म तस्मिन्वैदुष्यं तत्र सत्कविता।
कवितायां परिणामो दुष्प्रापः पुण्यहीनेन॥'

यदि तु 'तपसा नाल्पेन शक्यते लब्धुम्' इत्याख्यातान्तं क्रियते तदा लिङ्गभेदो न दूषणम्। एवमजहल्लिङ्गनामार्थस्य सकृद्वृत्तावपि न दोषः।

यथा 'फलमतिशयितं तपस्यायाः' इति चतुर्थचरणनिर्माणे।

एवं पुरुषस्यैकरूप्याभावे दोषः। यथा——

'दिवि सूर्यो भुवि त्वं च पाताले पन्नगाग्रणीः।
दिक्षु दिक्पालवर्गश्च राजपुङ्गव राजते॥'

यदि त्वमित्यत्र भवानिति क्रियते तदा न दोषः। एवं कालभेदेऽप्यूह्यम्।

---

प्रागुक्ते● आस्वादेनेत्यस्य द्वितीयचरणे कृते परिवर्तने। धर्मिभिः● रसकवितादिभिः। रनन्वयात्● क्लेशेन विरुद्धप्रतिभानदशायामन्वयात्। लिङ्गनामा● अनियतलिङ्गानां प्रातिपदिकानामर्थस्य। लिङ्गभेदो● व्यत्ययेनान्वयसम्भवेऽपि इति शेषः प्राक्। परिणामः फलम्। आख्यातान्तम्● तिङन्तविशेष्यकम्। क्रियते● जगतीत्यादेर्द्वितीयार्धमिति शेषः। अजह● नियतलिङ्गप्रातिपदिकार्थः। अतिशयितम्, वृद्धिं गतम्। चतुर्थेत्यस्य जगतीत्यादेरिति शेषः। राजत इत्यनेन त्वमित्यस्यानन्वयमुदाहरति दिवि●

एतेन——

'संग्रामाङ्गणमागतेन भवता चापे समासादिते
देवाकर्णय येन येन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥'

इति प्राचीनानां पद्यं दीपकांशेऽपि सदोषमेव ।

इति रसगङ्गाधरे दीपकप्रकरणम् ।

अथ प्रतिवस्तूपमा——

तत्र तावत्सादृश्यस्य यत्र चमत्कारिता तत्रोपमेत्युक्तम् ।

---

पन्नगाग्रणीः सर्वरानः । **एतेन●** वचनभेदस्य सदोषत्वेन **सङ्ग्रामाङ्गण●** हे देव सङ्ग्रामभूमिरेवाङ्गणं रूपकम् । तत्रागतेन भवता चापे सज्जीकृते येन येन कर्त्रा यद्यत्कर्म प्राप्तं तदाकर्णय । कोदण्डेन धनुषा वाणाः समासादिताः वाणैः शत्रुशिरः समासादितम् । तेन शिरसाऽपि भूमण्डलं समासादितम् । अरीणां भूमण्डलेन त्वं समासादितः । भवता अमला कीर्तिः. तया कीर्त्या 'च' लोकत्रयं समासादितं व्याप्तम् । धनुषा वाणप्राप्तिर्वाणकर्तृकशिरः प्राप्तावुपकारिणीति क्रमेण पूर्वस्योतरत्रोपकारितया दीपकम् । **पद्यं●** काव्यप्रकाशोदाहृतम् । **दीपकांशेऽपि●** अपिना अभवन्मतशब्दोदितः समुचिताकाङ्क्षाविरहः प्रकाशप्रतिपादितः समुचीयते । तथा हि अकर्णयेत्यस्य कर्म प्रत्येकं वाक्यार्थो वा प्रथमे कोदण्डं शरानित्यादिना भाव्यम् । द्वितीये प्रातिपदिकार्थप्रथमया कोदण्डः शराइत्यादिना । तच्छब्दाभावाद्यच्छब्दार्थेन कोदण्डादीनामनन्वयः । केनकेनेतिप्रश्नाभावाच्च यच्छब्दार्थस्यानन्वयः । प्रदीपोद्योतयोः सम्यग्व्याख्यातोऽयं सन्दर्भो नेह वितन्यते । **सदोषमेव●** काव्यप्रदीपोद्योते समासादितमित्यत्र नपुंसकमनपुंसकेनेत्यादिना एकशेषेण साधुत्वसम्पादनेऽपि अन्वयक्लेशात् । इति दीपकम् ।

### अथ प्रतिवस्तूपमानिरूपणम्

उपमानिरूपणे उपमानोपमेययोर्धर्माणां सादृश्यं निरूपणीयमित्यतिरोहितम् । तत्रोपमाने योधर्मउक्तस्तस्य प्रतिनिधिः किमपि वस्तु उपमेयेऽपि

तस्यां च साधारणधर्मस्य सर्वेऽपि प्रकारा यथासंभवं निरूपिताः। सादृश्योपस्कृतस्य वस्त्वन्तरस्य चमत्कारितायां भेदाभेदान्यतरप्रधाना अन्येऽलङ्काराश्च। तेष्वपि साधारणधर्माणां यथावसरं यथासंभवं च स्थितिः प्रदर्शितैव।

इदानीं वस्तुप्रतिवस्तुभावापन्नसाधारणधर्मोत्थापिता वाक्यार्थगता प्रतिवस्तूपमा निरूप्यते।

न चास्या वाक्यार्थगतत्वेनैवोपमातो भेद इति भ्रमितव्यम्। 'दिवि भाति यथा भानुस्तथा त्वं भ्रासजे भुवि' इत्यादौ वाक्यार्थेऽप्युपमायाः संभवात्। अत एव भिन्नशब्दोपात्तैकधर्मकत्वेनापि न वैलक्षण्यं वक्तुं शक्यम्। प्रकृते भाति-

---

निरूपणीयतामायाति। वस्तु प्रतीति प्रतिवस्तुशब्दस्तत्र प्रयुज्यते। अथवा उपमेयमुपमानञ्च वस्तु वस्तु प्रतीति विप्सागर्भो विग्रहीतव्यः। अव्ययीभाव समासः। एक एव धर्मोभिन्नशब्दोपात्तत्ववशाद् भेदेन प्रतिभासते तत्रैक्यविधानाय वस्तुप्रतिवस्तुशब्देन व्यवहार इति उपमायां प्रतिपादितम्। सङ्गतिप्रदर्शनाय विषयस्फुटतामभिदधाति। **सर्वेऽपि** बिम्बप्रतिबिम्बभावादयः। **वस्त्वन्तरस्य** सादृशमूलकाभेदारोपसंशयस्मृत्यादयः। **भेदाभेदा** भेदः संशयस्मृतिभ्रान्त्यादौ। अभेदोरूपकादौ, अन्येतु भेदोदीपकादौ, अभेदश्च संशयादावपीति वदन्ति। **लङ्काराश्च** निरूपिता इत्यर्थः। **साधारणधर्माणाम्** बिम्बप्रतिबिम्बवस्तुप्रतिवस्त्वादिभावमापन्नानाम्, **यथासम्भवम्** यादृशश्च धर्मो यत्रालङ्कारे न सम्भवति सोप्युक्तः। **धर्मोत्थापिता** उपमाया विशेषणं प्रथमान्तम्। अन्यत्रोपमायामन्येऽपि विम्बप्रतिबिम्बभावादिधर्मा अत्र तु वस्तुप्रतिवस्तुभावमापन्न एव धर्म उपमाया उत्थापकः। तथा अन्या पूर्वं प्रतिपादिता उपमाः प्रायः पदार्थगता इयन्तु वाक्यार्थगतैव न पदार्थगता। लक्षणविचारं प्रक्रमते न **चास्या** वाक्यार्थ गतत्वस्योपमाभेदकत्वे वाक्यार्थगतोपमा प्रतिवस्तुपमेत्येव लक्षणमस्तु। इतिशङ्काभिप्रायः।

**सम्भवात्** उपमाया अपि वाक्यार्थगतत्वेन न वाक्यार्थगतत्वं

भ्राजतिभ्यां धर्मस्यैकस्यैव प्रतिपत्तेः। तस्माल्लक्षणानुसारेणालङ्कारान्तरेभ्यो वैलक्षण्यमस्या बोध्यम्।

अथ किमस्या लक्षणम्—'वाक्यार्थगतोपमात्वम्' इति चेत्, प्रागुक्तवाक्यार्थोपमायामतिव्याप्तेः। न चार्थत्वेन तद्विशेषणीयमिति वाच्यम्। दृष्टान्तालङ्कारे तथाप्यतिप्रसङ्गात्। वस्तुप्रतिवस्तुभावापन्नसाधारणधर्मकत्वेनापि तद्विशेषणीयमिति चेत्। तथापि—

'तावत् कोकिल विरसान् यापय दिवसान् वनान्तरे निवसन्।
यावन्मिलदलिमालः कोऽपि रसालः समुल्लसति॥'

इत्यप्रस्तुतप्रशंसायामतिप्रसङ्गादिति। मैवम्। अप्रस्तुतप्रशंसायां वस्तुप्रतिवस्तुभावस्य भिन्नशब्दोपात्तैकप्रतिपाद्यरूपस्यासंभवात्।

एवं च—

वस्तुप्रतिवस्तुभावापन्नसाधारणधर्मकवाक्यार्थयोरार्थमौपम्यं प्रतिवस्तूपमा।

---

भेदकम्। धर्मस्यैकस्य● शोभारूपस्य। चार्थत्वेन● वाक्यार्थगता गम्या उपमा प्रतिवस्तूमेत्यर्थः। तेन प्रागुक्ते दिविभाति इत्यादौ उपमाया वाच्यत्वान्नातिव्याप्तिः। दृष्टान्तालङ्कारे● तत्रापि आर्थ्या उपमायाः सत्त्वात्। परन्तत्रोपमाप्रयोजको बिम्बप्रतिबिम्बभावापन्नोधर्मो न तु वस्तुप्रतिवस्तुभावमापन्नः। समुपस्थितदुःसहदुःखविमनसं प्रकृतपुरुषं कालं प्रतिक्षस्व पुनरायास्यदि सुखसामग्रीति व्यङ्ग्यं प्रकृतं व्यवहारं वाच्येन कोकिल व्यवहारेण वर्णयति सैवा प्रस्तुतप्रशंसा तावत्● हे कोकिल! तावत् रसाल मञ्जरीमदं विना नीरसान् दिवसान् व्यतिक्रमय। यावत् मिलन्ती अलिमाला यस्मिन्नेवं भूयो भ्रमरझङ्कारसङ्कुल आम्रः विकसति। भिन्नशब्दोपात्त● अत्र आपद्गात इत्याद्यनुपदं वक्ष्यमाणोदाहरणे पूर्वार्धोत्तरार्धाभ्यां सद्वस्तुनः कठिनावस्थायामपि सद्गुणएवाभिव्यज्यत इति एकमेव प्रतिपाद्यम्। अप्रस्तुतप्रशंसायान्तु न तादृशं किमप्येकं प्रतिपाद्यमिति भावः। वस्तु प्रतिवस्तु● साधारण

'आननं मृगशावाक्ष्या वीक्ष्य लोलालकावृतम् ।
भ्रमद्भ्रमरसंभारं स्मरामि सरसीरुहम् ॥''

इत्यत्र स्मरणालङ्कारेऽतिप्रसङ्गवारणाय वाक्यार्थगतमिति । अत्रौपम्यस्यार्थत्वेऽपि पदार्थगतत्वमेव न तु वाक्यार्थगतत्वम्, स्मरणस्य तदसंपर्कात् ।

---

औपम्यप्रयोजकोधर्मो वस्तुप्रतिवस्तुभावविधया एकोयस्यैवं विधं वाक्यार्थयोर्गम्यमौपम्यमिति लक्षणस्वरूपम् । क्वचिद्वस्तुप्रतिवस्तुना साकं बिम्बप्रतिबिम्बभावमापन्नोऽपि धर्मश्चेत् साक्षादुपमानोपमेयवृति वस्तुप्रतिवस्तु गृहीत्वा लक्षणं समन्वयेम् आननम् मृगशावाक्ष्या लोलैश्चञ्चलैरलकैरावृतम् आननं वीक्ष्य भ्रमतां भ्रमराणां संभारो यत्रैवंभूतं कमलं स्मरामि । सदृशस्य आननस्य दर्शनेन सदृशस्य सरसीरूहस्य स्मरणेन । आननकमलयोः सादृश्यं गम्यते । आर्थत्वे गम्यत्वे । तदसम्पर्कात् आननमेव स्मरणविषयोऽतस्तत्रैयोपमा. स्मरणघटितवाक्यार्थ उपमाविषयः । अत्रमर्मप्रकाशस्य स्फुटीकरणम् । दिवि भातीत्याद्युपमायां वाक्यार्थगतायां गगनाधिकरणिका भानुकर्तृका या शोभा तद्विशिष्टा या भूम्यधिकणिका त्वत्कर्तृका शोभेति बोधः । वैः स्वकर्तृ सदृशकर्तृत्वसम्बन्धेन । तस्मिन्सम्बन्धे च तात्पर्यग्राहकौ यथातथाशब्दौ । अर्थाद्वाक्यार्थभूतयोः शोभयोरूपमानोपमेयभावः । नैवं प्रकृते स्मरणान्तर्भावेनोपमानोपमेयभावः । किन्तु भ्रमद्भ्रमरसंभारसदृशं लोलालकावृतमाननमित्येव बोधः । अयं भावः सदृशवस्तुस्मरणे तत्सदृशवस्तुदर्शनस्योद्बोधकतयोपयोगेन स्मारकस्मर्यमाणयोरेवोपमानोपमेयभावः । न च यथा आपद्गत इति पद्ये महाशयकालागुर्वोरूपमानोपमेयभावस्तथा वाक्यार्थगतायामुपमायामपि शोभासाधर्म्येण तादृशशोभाश्रयभानुसदृशस्तादृश शोभाश्रयस्त्वमितिरीत्या कर्त्रोवोपमास्त्विवति वाच्यम् प्रधान वाक्यार्थभूतायां शोभायां विशेषणीभूतयोः प्रथमान्तार्थयोः कर्त्रोरुपमानोपमेयत्वाभ्यामन्वयस्याव्युत्पन्नत्वात् । तथा च पूर्वोक्तोपमायां यथातथाशब्दाभ्यां न गम्या, प्रतिवस्तूपमायाञ्च तादृशशब्दाभावाद् गम्येति भेदनिष्कर्षः । यद्वा वाक्यार्थोपमायां यथा तथाशब्दद्योत्यः सम्बन्धः प्रकारः । भानुकर्तृकशोभाकर्तृ सदृशकर्तृका त्वत्कर्तृका शोभेत्यादि रीत्याबोधः । प्रतिवस्तूपमायान्तु संसर्ग इति भेदः । यत्र वाक्यद्वयगतानां पदार्थानां सर्वेषां परस्परसाम्यं तत्र

पदान्तरकृत्यं तूक्तमेव ।

उदाहरणम्—

'आपद्गतः खलु महाशयचक्रवर्ती
विस्तारयत्यकृतपूर्वमुदारभावम् ।
कालागुरुर्दहनमध्यगतः समन्ता-
ल्लोकोत्तरं परिमलं प्रकटीकरोति ॥'

---

प्रतिवस्तूपमेति शरदागमकृतः । यत्तु गगनाधिकरणकभानुकर्तृकशोभा सदृशी भूम्यधिकरणकत्वत्कर्तृकशोभेति शाब्दबोधे सम्भवति मुधैव नागेशेन द्योत्यसम्बन्धेन वक्रता क्रियते इति सरलाह तत्तु यथातथयो र्मिलितयोः सादृश्ये शक्तिरिति भ्रमवशात् । अग्रिमेण वैधर्म्योदाहरणं हि इत्यादिना प्रकृते-त्यादि नञ् रहित एव सम्यक् प्रतिभाति ।

किञ्च स्मरणस्य तदसम्पर्कादितिप्रतीके सरला भ्रान्ता । स्मरणस्य पदार्थे-नान्वयो न तु वाक्यार्थेनेति सा व्याख्याति । परं स्मरणस्य पदार्थगतत्वं तया साधितमपि किं कुर्यात्, उपमाया एव वाक्यार्थगतत्व निरसनीयमास्ते । मर्म प्रकाशस्तु सम्यगुक्तवान् । यतोहि स्मरणघटितोऽत्र वाक्यार्थः । स्मरणस्य च उपमाशरीरे न प्रवेशस्तदा कथं स्याद् वाक्यार्थगता उपमा । अत्र आवृतत्व सम्भारत्वयोर्वस्तु प्रतिवस्तुत्वं संगमनीयमम् । **तूक्तमेव●** अप्रस्तुत प्रशंसायां धर्मस्य वस्तुप्रतिवस्तुत्वाभावात्, दृष्टान्ते बिम्बप्रतिबिम्बभावापन्न-धर्मप्रयोज्यौपम्यस्य वस्तुप्रति स्तुप्रयोज्यत्वाभावात्, स्मरणे गम्यौपम्यस्य वाक्यार्थगतत्वाभावात्, वाक्यार्थोपमायां गम्यत्वाभावाद्वारणमित्युक्त-मेवेत्यर्थः । **आपद्गतः●** महाशयश्रेष्ठो विपत्तिमापन्नोऽपि अपूर्वामुदारतां विस्तारयति । यतो हि सद्वस्तुकालागुरूरपि समन्तादग्निमध्यगतोऽपि विलक्षणं सौरभं प्रकटीकरोति । अत्र यद्यपि आपद्दहनयोरूदारतापरिमलयोश्च बिम्बप्रतिम्बभावोभासते तथाऽपि विस्तारप्रकटनयोर्वस्तुप्रतिवस्तुभावमादाय लक्षणं समन्वेयम् । महाशयेत्यादि निर्धारणप्रत्यायक प्रयोगेषु निर्धारणषष्ठ्या समासस्य न निर्धारणे इत्यनेन निषेधेऽपि सम्बन्धषष्ठ्या षष्ठीतत्पुरुषस्य सप्तमीतियोगविभागात्सप्तमीतत्पुरुषस्यापि सम्प्रदायः । अत्रायमभिसन्धिः । दार्ष्टान्ते यौ धर्मौ तौ यत्र वर्तेते तस्यैव दृष्टान्तत्वम् । यथा पर्वतोवह्निमान्

अत्र विस्तारप्रकटने वस्तुत ऐक्यरूप्येणाभिमते ।

यथा वा—

'विश्वाभिरामगुणगौरवगुम्फितानाम्

रोषोऽपि निर्मलधियां रमणीय एव ।

लोकम्पृणैः परिमलैः परिपूरितस्य

कालागुरोः कठिनतापि नितान्तरम्या ॥'

वैधर्म्येणाप्येषा संभवति—

---

धूमादिप्यत्र महानसं दृष्टान्तः । पर्वतवृत्तिधर्मयोर्वह्निधूमयोस्तत्र सत्त्वात् । तेन च सामान्यतो यत्र धूमस्तत्रवह्निरिति सहचारान्वयः सिध्यति । तथैव पूर्वार्धार्थसाधकतया उत्तरार्धस्योपादानम् । पूर्वार्धोक्तस्त्वर्थः महाशय आपद्गतोऽप्युदारतरः स्वकीर्तेः । तत्र महाशयवर्तिनौ उदारकीर्तिधर्मौ कालागुरौ न वर्तेते तथापि साधकतयोपन्यासस्तस्य अतोदृष्टान्तदार्ष्टान्तिवर्तिनोः साधारणधर्मयोरेव सहचारोज्ञेयः । तौ च सद्वस्तुत्वसद्गुणप्रकाशौ । तथा च महाशय आपद्गतोऽपि सद्गुणप्रकाशकः सद्वस्तुत्वात् । यथा कालागुरूः । अनन्तरञ्च यः सामान्ययोर्नियमः स विशेषयोरपीति न्यायेन महाशयत्वौदार्य प्रकाशयोरपि सहचारनियमः सिध्यति । एवञ्च महाशयत्वादेव उदारता प्रकाशनं सिध्यति । कीर्तेर्हेतोर्नास्त्यावश्यकता । दृष्टान्तस्तु आक्षिप्ते सामान्यान्वये न तूपात्ते विशेष इति ध्येयम् । गम्योपमा च महाशयचक्रवर्ती दहनमध्यगत कालागुरूसदृश इत्याकारकः । एवमेवाग्रेऽप्यनुसन्धेयम् । एतादृशस्थले औपम्येन सह नियमोऽपि गम्यते इति ग्रन्थकृतैव वक्ष्यते ।

**विश्वाभिराम●** जगद्रमणीयानां गुणानां गौरवेण युक्तानां स्वच्छबुद्धीनां रोषोऽपि सुन्दर एव । यत्रानेके गुणा रमणीयास्तत्रैको दुर्गुणोऽपि सुन्दर एवेति भावः । तत्र सामान्यधर्मे दृष्टान्तमाह । लोके प्रसृमरैः पूरकैर्वा सौरभैः परिपूरितस्य कालागुरोः कठिनता दोषोऽपि सर्वथा सुन्दर एव । अत्र रमणीयता वस्तुप्रतिवस्तुभावमापना । रोषकठिनतादीनां बिम्बप्रतिबिम्बभावः । लोकं पृणेत्यत्र पृणधातुश्चुरादिः । लोकस्य पृणे इत्यनेन मुमागमः ।

'वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः ।
नहि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ॥'

यथा वा—

'गीर्भिर्गुरूणां परुषाक्षराभिस्तिरस्कृता यान्ति नरा महत्त्वम् ।
अलब्धशाणोत्कषणा नृपाणां न जातु मौलौ मणयो वसन्ति ॥'

अत्र शाब्देन दृष्टान्तेन तद्गतः सामान्यावच्छिन्नव्यतिरेक-सहचार आक्षिप्यते । तेन च सामान्यवच्छिन्नान्वयनियम-

---

अत्र दोषस्यापि रमणीयता वर्णिता । **वंशभवः●** सत्कुले जातो गुणवानपि पुरुषः सत्सङ्गेनैव पूज्यते पूजायां सङ्गविशेषः कारणन्नतु केवलं कुलं गुणा वा । वीणादण्डस्तुम्बीफलं विना महिमानं च प्रयाति ।

**गीर्भिः●** नराणां महत्त्वं प्रति गुरुणां परूषाक्षराः तिस्कारवाचः कारणम् । यतो मणयः शाणे कर्षणं विना नृपाणां मौलौ न वसन्ति । ननु पूर्वार्धोपात्तान्वयस्य साधकोऽन्वयदृष्टान्त एव संभवति । न व्यतिरेकः, उपात्तश्च स इत्यशङ्कयाह **अत्रशाब्देन●** यद्यपि शाब्दोऽन्वयस्तथापि व्यतिरेक दृष्टान्तमनुरुध्य पूर्वोर्धोपात्तस्य साध्यस्य दार्ष्टान्तिकस्याऽपि आक्षिप्तं व्यतिरेक-स्वरूपमादाय लक्षणसमन्वयः कार्यः । तथा हि पूर्वपद्ये वंशभवो गुणवान् पुरुषः सङ्गविशेषं विना न पूज्यते, द्वितीये गुरुणां परूषाक्षरतिरस्कावाच-मन्तरा न महत्त्वप्राप्तिरिति व्यतिरेकस्वरूपः । **सामान्यावच्छिन्न●** आरद्गत इत्यत्र प्रदर्शितरीत्या विशेषयोर्दृष्टान्तदार्ष्टान्तिकयोः सामान्या-कारता न सम्भवतीति पूर्वपद्ये सङ्गविशेषं विना न पूजाप्राप्तिरिति आक्षिप्यते। वीणादण्डे तुम्बीफलसङ्गः पुरूषे च सतां सङ्गः। उत्तरस्मिँश्च क्लेश सहनं विना न महत्त्वप्राप्तिरिति सामान्यं नरेषु गुरुतिरस्कारस्य मणिषु शाणोत्कषणस्य क्लेशस्य सहनम् । न्याय शास्त्रे मत द्वयं प्रसिद्धम् । प्रथमम् अन्वयव्यतिरेकभेदात्सहचारद्वयम् । अन्वयसहचारेणान्वयव्याप्तिर्व्यतिरेक-सहचारेण च व्यतिरेकव्याप्तिः सिद्धयति । द्वितीयन्तु उभाभ्यां सहचाराभ्या-मन्वयव्याप्तिरेव सिध्यतीति । **तत्र द्वितीयमतेनाह सामान्यावच्छिन्नान्वय-नियम●** नियमोव्याप्तिः । तथा च प्रदर्शितव्यतिरेकसामान्यसहचारेण

सिद्धिद्वारा प्रकृतो विशेषावच्छिन्नान्वयनियमः सिध्यतीति प्रायशः सर्वत्र वैधर्म्ये स्थितिः। एवमन्वयेन प्रतिवस्तूपमायामपि नियमविशेषस्य प्रकृतवाक्यार्थत्वेऽन्वयदृष्टान्तेन सामान्यान्वयनियमसिद्धिद्वारा तत्सिद्धिः।

नियमविशेषरहितकेवलार्थमात्रस्य प्रकृतत्वे त्वप्रकृतवाक्यार्थनिरूपितमौपम्यमात्रं गम्यम्, न तु नियमः, अप्रयोजकत्वात्। यथा 'भैरभ्रे भासते चन्द्रो भुवि भाति भवान् बुधैः' इत्यादौ।

---

सत्सङ्गः पूजाव्याप्यः, महत्त्वव्याप्यं तिरस्कारसहनमिति सामत्न्यतोऽन्वय नियमः सिध्यति। तेन यत्सामान्ययोस्तद्विशेषयोरपीति प्रसिद्धिसहकारेण सतां सङ्गः पूजाव्याप्यः तिरस्कारवाचो महत्त्वव्याप्या इति प्रकृत उपात्तो विशेष नियमः सिध्यति तदेवाह प्रकृत इत्यादिना स्थितिरित्यन्तेन। गम्योपमा च महिमाभावनियतो यस्तुम्बीफलरहितो वीणादण्डस्तत्सदृशः सत्सङ्गाभावव्याप्यपूजाभाववान् पुरुषः, शाणोत्कषणाभावव्याप्यनृपमौलिनिवासाभाववन्मणिसदृशोगुरुतिरस्कारवागभावव्याप्यमहत्त्वाभाववान् नर इत्याकारिका। **एवमन्वयेन**● अन्वयेनेत्यस्यापद्गत इत्यादि पद्यद्वयमुदाहरणम्। यथा च सिद्धिस्तथा शङ्कासमाधानपुरस्सरं तत्रैवोक्तम्। यत्र नियमो न प्रकृतवाक्यार्थे प्रतीयते तत्राप्रकृतवाक्यार्थेन सहौपम्यमात्रं गम्यते। यत्र तु नियमः प्रकृतवाक्यार्थस्तत्र नियमसंवलितमौपम्यमिति लिखति नियम**विशेषः**●। **अप्रयोजकत्वात्**● न सर्वत्र सहचारदर्शनेनैव व्याप्ति ग्रहो जायते किन्तु अनुकूलतर्करूपं प्रयोजकं यत्र वर्तते तत्र व्याप्तिग्रहः। तथाहि धूमो वह्निव्यभिचारी न वेति संशयोन्मूलनाय धूमो यदि वह्निव्यभिचारी स्यात्तर्हि वह्निजन्यो न स्यादिति निर्णयानन्तरं अस्ति वह्नि जन्य इति निर्णयसहकारेण तस्मान्न वह्निव्यभिचारीति निर्णीयते। तथैव तत्र कवितात्पर्यमवसीयते नियमे तत्राक्षेपादिनाऽपि सहचारस्य नियमउपपादनीयः। यत्र नियमे कवितात्पर्यमनुकूलं तर्कं प्रयोजकं न पश्यामस्तत्राक्षेपेण नियमसम्पादने न मानमितिभावः। अत्र सरला तु सहचारव्याप्त्यादिकमपरिचितवती अशुद्धं व्याचष्ट इति तु स्वभावएव तस्याः परम् "औपम्यमात्रं गम्यम्" इति ग्रन्थस्वारस्यमापद् गत

ननु कथमस्मिन्नलङ्कारे सर्वत्रौपम्यं गम्यमित्युच्यते। यावता प्रागुपदर्शितायां वैधर्म्यप्रतिवस्तूपमायां वाक्यार्थयोरौपम्यस्य बाधात्। नहि पचति-न पचतीतिवाक्यार्थयोः पाकक्रियामात्रसाम्यादौपम्यं गम्यते। निषेधप्रतियोगित्वेनोत्तरवाक्यार्थे तस्या अप्ररोहादिति चेत्, न। प्रकृतवाक्यार्थाक्षिप्तस्य स्ववैपरीत्यस्यैवौपम्याश्रयत्वात्। न च वाक्यार्थयोरौपम्यमिति यदुक्तं तत्कथं संगच्छतामिति वाक्यवेद्यस्यैव प्रकृते वाक्यार्थत्वेनेष्टत्वात्। तथा हि—

'तत्त्वं किमपि काव्यानां जानाति विरलो भुवि।
मार्मिकः को मरन्दानामन्तरेण मधुव्रतम्॥'

अत्र विरलो जानातीति विधिमुखोऽपि प्रकृतवाक्यार्थः

---

इति पद्ये समनुयन्ती प्रतिवस्तूपमोदाहरणतया छात्रान् भ्रामयतीति कष्टम्। तत्र मात्र पदेन प्रतिवस्तुपमाया व्यवच्छेदे ग्रन्थतात्पर्यात्। यत्र प्रकृतोवाक्यार्थोदार्ष्टान्तिकोऽन्वयी दृष्टान्तस्तु साधको व्यतिरेकी तत्रान्वयिव्यतिरेकिणोर्विरोधात्कथमौपम्यं गम्यम् इत्याशङ्कते ननु कथम●। अप्ररोहात● न पचतीत्यर्थस्याभावस्य प्रतियोगी पचतीत्यस्यार्थः। अभावप्रतियोगिनोरत्यन्तविरोधात्साहश्यस्य तिरस्कृतत्वात्प्ररोहोन सम्भवतीति भावः, अन्वयिवाक्यार्थेनाक्षिप्तस्य प्रकृतव्यतिरेकस्योत्तरार्धप्रतिपाद्यव्यतिरेकेण साजात्यमिति तदुत्तरम्। प्रकृत वाक्यार्थेन अन्वयिना आक्षिप्तो यः स्वस्य प्रकृतस्य व्यतिरेक इति योजना। यदि अप्रकृतवाक्येत्यादि सरलाधृतः पाठः साम्प्रदायिकस्तदा अप्रकृतवाक्यार्थेन दृष्टान्तार्थेन आक्षिप्तो यः स्वस्य विपरीतो व्यतिरेक इत्यादि योजना बोध्या। न च● अभिधेयलक्षितार्थमादाय शङ्का यथाकथञ्चिद्वा तदुत्तरं बोध्वम्। तत्त्वम्● काव्यस्वारस्यम्, मार्मिकः मर्मजानातीत्यर्थः। मकरन्दः पुष्परसः मधुव्रतोभ्रमरः। मकरन्दकाव्ययोर्गम्योपमा। नियमसम्वलिता च सा। मकरन्दश्च भ्रमरातिरिक्तेन अज्ञेयः काव्यमपि साधारणसकलपुरुषाज्ञेयम्। सामान्यञ्च सुन्दरं सूक्ष्मञ्च वस्तु जनविशेषविज्ञेयमित्यन्वयी।

'पुरुषविशेषं विना न सर्वे जानन्ति' इत्यर्थविशेषमादायैव पर्यवसितो भवतीति निषेधवाक्यार्थस्य तादृशेनैव द्वितीय-वाक्यार्थेन सह गम्यते सादृश्यं स्फुटमेव। यत्र तु 'वंशभवः' इत्यादौ प्रागुदाहृते प्रकृतवाक्यार्थो विधिरूपः सङ्गविशेषहेतु-कत्वस्य पूजनादौ विधेयत्वादवसीयते, तत्रापि हेतुताघटक-व्यतिरेकस्य गुणतया प्रतीयमानस्यौपम्यं निर्बाधमिति न दोषः।

इयं च वाक्यार्थयोः सामान्यविशेषभावाऽनापन्नयोर्भवति तत्रैवोपम्यस्य गम्यत्वात्। सामान्यविशेषयोस्त्वौपम्याप्रतीतेः समर्थ्यसमर्थकयोरर्थान्तरन्यासो वक्ष्यते।

यत्तु कुवलयानन्दकृता वैधर्म्यमुदाहृतम्—

'विद्वानेव हि जानाति विद्वज्जन-परिश्रमम्।
नहि बन्ध्या विजानाति गुर्वीं प्रसव-वेदनाम्॥'
'यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम्।
नहि कस्तूरिकामोदः शपथेन विभाव्यते॥'

---

साधारणपुरुषेण न ज्ञायत इति व्यतिरेकी। त्यर्थविशेषम् आक्षिप्तम्। अन्वयेनोदाहरणेऽपि, व्यतिरेकाक्षेपस्यावश्यकतां दर्शयति यत्र तु गुणतया विशेषणतया। अयं भावः। पूजायां विधेयं सत्सङ्गस्य हेतुत्वन्तु पूजाया अधिकरणे वर्तमानस्यात्यन्ताभावस्याप्रतियोगित्वं सत्सङ्गनिष्ठम्। अतस्तत्र सत्सङ्गं विना न पूजेतिव्यतिरेक आयाति। सरलारीत्या हेतुत्वं तु यत्र पूजा तत्र सत्सङ्गो यत्र च सत्सङ्गो नास्ति तत्र पूजाऽपि नास्ति। तत्र सत्सङ्गंविना पूजाभावो व्यतिरेकः स्फुटतया हेतुताघटकः। सामान्यविशेषयोः पृथिवीद्रव्ययोरौपम्याप्रतीतेराह भावानापन्नयोः विशेषयोस्त्वौ केवलसामान्यविशेषोपादाने नोपमा नाप्यर्थान्तरन्यासः। सामान्यविशेषौ यत्र समर्थ्यसमर्थकभावमापन्नौ तत्रार्थान्तरन्यास इति विवेकः। यथा

तत्र 'विद्वानेव हि जानाति' इति पद्यं भवतु नाम यथाकथंचिद्वैधर्म्यस्योदाहरणम् 'यदि सन्ति' इति तु न युक्तम्। वैधर्म्योदाहरणं हि प्रस्तुत-धर्मिविशेषोपारूढार्थदार्ढ्याय स्वाक्षिप्त-स्वव्यतिरेकसमानजातीयस्य धर्म्यन्तरारूढस्याप्रकृतार्थस्य कथनम्। प्रकृते च यदि सन्ति तदा स्वयमेव प्रकाशन्त इत्यर्थस्य प्रस्तुतस्य व्यतिरेकस्तु असन्त उपायान्तरेणापि न प्रकाशन्त इति। नह्यत्र द्वितीयार्धेन तत्सजातीयोऽर्थो निबध्यते। निबध्यते च स्वयं प्रकाशन्ते, न परेणेत्यस्य प्रस्तुतस्यैव सजातीयः। शपथेन न विभाव्यते, किं तु स्वयमेवेति प्रकृतार्थानुरूपतयैव पर्यवसानात्।

---

कथञ्चित्● वैधर्म्योदाहरणं तदेव सम्मतं पण्डितराजस्य तत्र प्रकृतो दार्ष्टान्तिको वाक्यार्थोऽन्वयी, दृष्टान्तस्तु व्यतिरेकी। यतो व्यतिरेक सहचारेणाऽपि अन्वय नियमस्यैव साध्यत्वादिति प्राक्प्रतिपादितम्। अत्र प्रकृत वाक्यार्थोऽपि एवकारेण अविद्वान् न जानातीति रूपो व्यतिरेक्येव। तत्सधर्मैव दृष्टान्त वाक्यार्थो व्यतिरेकी। किन्तु मर्मप्रकाशदिशा अविद्वान् न जानातीति पूर्व वाक्यार्थस्य व्यतिरेकस्य नहि बन्ध्येत्यादिनाक्षिप्तस्य प्रसवित्र्येव जानातीत्यन्वयिवाक्यार्थस्य कल्पनया यथाकथञ्चित्स्वीकार्यम् इति भावः। स्वमतमुपवादयति **वैधर्म्योदाहरणं हि**● यथा प्रकृते प्रस्तुतो धर्मी विद्यमानगुणस्तदुपारूढोऽर्थः प्रकाशस्वाभाव्यं तस्य दार्ढ्याय समर्थनायेत्यर्थः। स्वेन विद्यमान गुणानां प्रकाशेन आक्षिप्तो यः स्वव्यतिरेको्ऽसतामप्रकाशनम्, तत्सजातीयस्य व्योम्नि असतीनांवल्लीनां बृहस्पतिवाचाऽपि विलासाभावस्य अप्रकृतार्थस्य कथनम्। इत्यर्थः। मर्मप्रकाशस्तु उपात्तयोर्व्यतिरेकयोरप्यौपम्यस्थले वैधर्म्योदाहरणं मनुते परं न तत्पण्डितराजेभ्यो रोचते यद्वैधर्म्येणोपात्तयोरेव वैधर्म्यशब्दस्वारस्यं न तु विधर्मण आक्षेपेण तस्य सर्वत्राऽपि सम्भवात्, यथोपात्त समर्थ्यसमर्थकभावे तु साधर्म्योदाहरणस्यैवयुक्तत्वाच्च। द्वितीयार्धनिबद्धोऽर्थो न प्रस्तुतव्यतिरकेस्य सजातीय इति दर्शयति इति प्रकृते च। द्वितीयार्धेन● कस्तूरिकामोदः स्वयं प्रकाशत इत्येवं परेण नहि कस्तूरिके-

न हि वैधर्म्ये प्रकृतानुरूप्यं जातुचिद्धटते, व्याघातात् । तस्मात्साधर्म्येणैवेदमुदाहरणं संगतम्, न वैधर्म्येण । न चोपायान्तरनिवृत्त्यघटितप्रस्तुतवाक्यार्थेन कथं नाम तद्धटित उत्तरवाक्यार्थः साधर्म्यमर्हतीति वाच्यम् । स्वयमित्यत्राकृष्टेन एवकारेणैवोपायान्तरनिवृत्तेः प्रस्तुतवाक्यार्थे निवेशितत्वात् । अत्यन्तायोगव्यवच्छेदस्योत्तरवाक्यार्थाननुगृहीतत्वेन क्रिया-समभिव्याहारायोगात् ।

---

त्यादिना । जातुचित्● कदाचिदपि, वैधर्म्ये असन्त उपायान्तरेणाऽपि न प्रकाशन्ते इत्यत्र द्वितीयार्धोपात्तस्य स्वयमेव प्रकाशन्ते इत्यस्य प्रकृतस्य आनुरूप्यं साहश्यं न सम्भवति । व्याघातात्● भावाभावयोः स्वाभाविक विरोधात् । पूर्वार्धोत्तरार्धोपात्तयोः गुणाः स्वयमेव प्रकाशन्ते, कस्तूरिकामोदः स्वय प्रकाशते, इत्यनयोरौपम्यस्य स्फुटत्वादाह तस्मात्● उपायान्तरनिवृत्त्य घटित● एवकारस्य प्रकाशनक्रियान्वयाऽभिप्रायेण पूर्वार्धेन स्वयं प्रकाशन्त एव, उत्तरार्धेन न शपथेनेत्येतद्घटिततया उपायान्तरेण न प्रकाशते किन्तु स्वयम् इति प्रतिपाद्यते । आकृष्टेन● स्वयं प्रकाशते न परेणेति प्रकृत वाक्यार्थस्यापि उपायान्तरनिवृत्तिपरत्वसम्वलनादित्यर्थः । अत्र मर्मप्रकाशः शपथेन न विभाव्यते इत्यस्य आक्षेपलभ्यं स्वयं प्रकाशते इत्यर्थमादाय साधर्म्यवर्णनं न युक्तमन्यथा मार्मिकः कोमकरन्दानामित्यत्रापि मधुव्रत एव जानातीत्याक्षेपेण साधर्म्यापत्तेरित्याह । अत्रेदं चिन्तनीयम् शपथेन विभाव्यते इत्यस्य स्वयमेव प्रकाशते इत्यत्र न तात्पर्यं चेत् किं स्वार्थमात्रे तर्हि प्रकारा-न्तरेण प्रकाशते इत्यपि कविसम्मतं स्यात् तत्तु न समीचीनमतः स्वयं प्रकाशते इत्यत्रैव तात्पर्यम् । मार्मिकः क इत्यादौ तु काकुमहिम्ना न कोपी-त्याक्षेपस्त्वभिधान समानजातीयस्तेनैव निर्वाहे मधुव्रत एव जानातीत्याक्षेपे मानाभावः । तत्रान्तरेणेति पदस्वारस्याद्व्यतिरेकस्य स्फुटत्वाच्च । ननु एवकारस्य क्रियासमभिहारादात्यन्तायोगव्यवच्छेदार्थकत्वेन प्रकाशन्त एवेत्ये-वार्थः, परतो न प्रकाशन्त इति त्वाक्षेपलभ्य एवार्थः । द्वितीयार्धप्रतिपाद्यस्य स्वतः प्रकाशते न परतइत्यस्य प्रस्तुतार्थाक्षिप्तेनैव साजात्यं नाभिधेयेनेति कथं साधर्म्यमित्याशङ्कयाह अत्यन्तायोग● अत्यन्तोऽयोगोऽसम्बन्धस्तस्य

'सन्तः स्वतः प्रकाशन्ते गुणा न परतो नृणाम् ।
आमोदो नहि कस्तूर्याः शपथेनानुभाव्यते ॥'

अत्र स्वतोऽनुभूयत इत्यत्र पर्यवसितेनोत्तरवाक्यार्थेन पूर्ववाक्यार्थस्य यथा साधर्म्यमेव, न वैधर्म्यम्, तथा यदि सन्ति—' इति पद्येऽपीति नञ्मात्राश्रयाणादेव वैधर्म्यं जगदे, न तु निपुणतरं निरीक्षितमायुष्मता । यदि तु 'यदि सन्ति' इति पद्यस्य 'नहि कस्तूरिका--' इत्याद्युत्तरार्धं दूरीकृत्य 'वाचा वाचस्पतेर्व्योम्नि विलसन्ति न वल्लयः' इति क्रियते, तदा वैधर्म्यं प्रकृतविपरीतार्थघटनाद्युक्तम् ।

अथ

'खलास्तु कुशलाः स्वीयहितप्रत्यूहकर्मणि ।
निपुणाः फणिनः प्राणानपहर्तुं निरागसाम् ॥'

---

व्यवच्छेदोऽभावः सम्बन्धो गुणे प्रकाशस्येति यावत् । ● उत्तरवाक्यार्थ उत्तरवाक्यार्थ कस्तूरिकामोदः स्वयं प्रकाशते नोपायान्तरेण । तेन सह क्रियासमभिव्याहारे एवकारस्य पूर्ववाक्यार्थः सादृश्यं न भजते तथा सादृश्यान्यथानुपपत्त्या कवितात्पर्यविरहेण एवकारस्य स्वयमित्यनेनैव युक्तोऽन्वयः । साधर्म्यमेव● एतेनोपात्तयोर्व्यतिरेकयोः समर्थ्यसमर्थकभावे साधर्म्योदाहरणमेवेति स्फुटमुक्तम् । नञ्मात्रश्रवणादेव● पूर्वार्धे नञोऽश्रवणाच्च । निपुणतरम्● पूर्वार्धे एवकारस्य परतो न प्रकाशत इत्यत्र तात्पर्यमसमीक्ष्येत्यर्थः । मात्राश्रयणादित्यपि पाठः । आयुष्मतेत्यप्पय्यदीक्षितस्योपर्याक्षेपः । स प्रकृतविपरीता● प्रकृतं सन्तोगुणाः प्रकाशन्ते, तद्विपरीतमसन्तोगुणाः केनाप्युपायेन न प्रकाशन्ते, तेन सह असतीनां वल्लीनां वाचस्पतिवाचाऽपि न विलास इत्यस्यौपम्यं घटत इत्यर्थः । सिद्धान्तलक्षणेऽपि अतिप्रसङ्गमाशङ्कते अथ खलास्तु● खलास्तु स्वसम्बन्धिनां हितकर्मणो विघ्नकरणे कुशलाः । सर्पा निरपराधानां प्राणहरणे निपुणाः । कुशलनिपुणशब्दाभ्यामुपात्तस्यैकस्य धर्मस्य वस्तुप्रतिवस्तुता । तेन च खलफणिनोरौपम्यं प्रतीयतेऽतोऽति-

इत्यत्रासंष्ठुलवाक्यार्थेऽतिप्रसङ्गः, कुशलनिपुणपदाभ्यामेकस्यैव धर्मस्योपादानात्। न चात्रौपम्यं न गम्यमिति वक्तुं शक्यम्। निपुणकुशलपदाभ्यां प्रतिपादितेन शब्दसामान्यात्मना धर्मेण खलफणिनोरौपम्यस्य प्रत्ययात्। नापि धर्मिणोरौपम्येऽपि विशिष्टवाक्यार्थयोस्तन्न तथेति वाच्यम्, अवयवद्वारा तयोरपि तस्य तथात्वात्। स्वभावसिद्धत्वेनानुपात्तधर्मेणौपम्यस्य गम्यत्वाच्चेति चेत्, मैवम्, साधारणधर्मस्य वस्तुप्रतिवस्तुभावोक्त्या तदितरपदार्थानां बिम्बप्रतिबिम्बभावो घटनाया आनुरूप्यं च विवक्षितम्। प्रकृते च खलफणिनोः प्राणहितयोश्च सत्यपि बिम्बप्रतिबिम्बभावे हरण-प्रत्यूहकरणयोर्नाशप्रागभावपर्यवसितयोरनानुरूप्यान्न बिम्बप्रतिबिम्ब भाव इति न दोषः। यद्वा अस्त्वत्र प्रतिवस्तूपमा। परं त्वसंष्ठुलतारूपस्य वाक्यार्थसामान्यदोषस्य सत्त्वादचमत्कारिणी, दुष्टोपमादिवत्। वाक्यार्थो हि गाढतरव्युत्पत्तिनिपुणीकृतान्तः-

---

व्याप्तिः। असंष्ठुल● चमत्कारापकर्षकरचनायुक्ते। संष्ठुलत्वञ्च मैवमित्यस्यानन्तरमेव ग्रन्थकारो व्यक्तीकरिष्यति। वस्तुप्रतिवस्तुतां दर्शयति कुशलनिपुण● शुद्धसामान्य● प्रतिपादकभेदप्रयुक्तभेदरहितेन शब्दसामान्यात्मनेत्यपि पाठः। तथा● औपम्यम्। तयोरपि वाक्यार्थयोरपि खलफणिघटितयोः। स्वभावसिधत्वेन● स्वभावसिद्धत्वरूपानुपात्तधर्मेण। इदञ्च न चात्रौपम्यं न गम्यमित्यस्य समाधानं द्विधापि औपम्यसम्पादनान्न तु वस्तुप्रतिवस्तूपमायाम्, स्वभावसिद्धत्वस्यैकरूपत्वेऽपि भिन्नशब्दाभ्यां द्विरूपादानाभावेन वस्तुप्रतिवस्तुताया असम्भवादिति ध्येयम्। प्रतिवस्तूपमायां संष्ठुलतामाह साधारण धर्मस्य● प्रकृतेऽन्यत्र सर्वत्र बिम्बप्रतिबिम्बाभावं दर्शयति। हरणप्रत्यूह● हरणं नाशः। प्रत्यूहकरणम् हितानुत्पादरूपः प्रागभावः। त्वसंष्ठुलता● स्वीयं गुणीभूतमविभक्त्यन्तमेव तत्प्रतिबिम्बस्तु निरागसामिति विभक्त्यन्तम्। एवं हितप्राणयोः प्रत्यूह

करणैर्नानाविधपदार्थरचनापरिवृत्तिसमर्थैरेव कविभी रचितः कामपि कमनीयतामाधत्ते, नेतरः ।

तथाहि—

'उपासनामेत्य पितुः स रज्यते दिने दिने सावसरेषु बन्दिनाम् ।
पठत्सु तेषु प्रतिभूपतीनलं विनिद्ररोमाजनि शृण्वती नलम् ॥'

अस्मिन्नैषधीयपद्ये ( १।३४ ) द्वयोः क्रिययोरुद्देश्य-विधेयभावेन गुणप्रधानभावमकुर्वता, बन्दिनः षष्ठ्यन्ततया सप्तम्यन्ततया च द्विः परामृशता कविना वाक्यार्थः क्रमेलक-वदसंष्ठुलतां प्रापितः ।

यदि च स एव वाक्यार्थः प्रकारान्तरेण निर्मीयते —

'उपासनार्थं पितुरागतापि सा
　　निविष्टचित्ता वचनेषु बन्दिनाम् ।
प्रशंसतां द्वारि महीपतीनलं
　　विनिद्ररोमाजनि शृण्वती नलम् ॥'

---

कर्मंहरणयोरपि बोध्यम् । **परिवृत्तिः●** परिवर्तनम् । इतरस्य दृष्टान्तं ( १।३४ ) नैषधीयपद्यमाह **उपासनाम्●** सा दमयन्ती प्रतिदिनं पितुः सेवां प्राप्य वन्दिनामवसरेषु तेषां स्तुत्यन्तर्गतनलयशःश्रवणे रज्यते स्म अनुरागवती जायते स्म अनुरागवशाच्च तेषु वन्दिषु प्रतिभूपतीन् स्तुवत्सु नलं शृण्वती सती विनिद्ररोमा पुलकितरोमा अजायत । अत्र दमयन्त्या अनुरागमुद्दिश्य रोमाञ्चजन्म विधेयमभीप्सितम् । तदर्थमनुरागस्य गुणतया वर्णनं युक्तं परं रज्यत इत्यनेनाख्यातेन प्राधान्येन वर्णनं कृतमित्याह **क्रिययोः●** एकस्य विषयस्य प्रतिपादने बन्दिनां तेषु पदाभ्यां वन्दिनां द्विधा-परामर्शः क्लेशः । **क्रमेलकवत्●** उष्ट्रस्य शरीरं कस्मिन्नप्यंशे यथा समतां न धत्ते तथा पद्यमिदमपि क्रमश आरोहावरोहौ न स्पृशति । पद्यान्तर निर्माणे तु निविष्टचेता इत्यनेनानुरागिण्या दमयन्त्या उद्देश्यतया वर्णनेन

इति तदा ललनाङ्गसन्निवेश इव कीदृशीं कमनीयतामावहेदिति सहृदयैराकलनीयम् ।

एवम्—

'तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदिच्छति ।
स्थितेऽरविन्दे मकरन्दनिर्भरे मधुव्रतो नेक्षुरकं हि वीक्षते ॥'

इति कुवलयानन्दोदाहृते आवलुन्दारुस्तोत्रपद्ये वीक्षणमात्रस्यावर्जनीयस्य प्रतिषेधानर्हत्वादिच्छापूर्वकवीक्षणप्रतिषेधस्य च 'सविशेषणे हि—' इति न्यायेनेच्छाप्रतिषेधधर्मपर्यवसायितया यद्यपि धर्मैक्यं सुसंपादम् । अस्तु वा दृष्टान्तालङ्कारः । तथापि पादपङ्कजे निवेशितात्मेत्याधारसप्तम्याः स्थितेऽरविन्दे इति सति सप्तमी वस्तुप्रतिवस्तु-बिम्बप्रतिबिम्ब-

---

वन्दिनां षष्ट्यन्ततया च वाक्यस्य संष्ठुलता । तवामृत● शिवं प्रति भक्तस्योक्तिः । तव अमृतस्य मोक्षस्य प्रापके पदकमले निवेशित आत्मा येन सः अन्यत्संसारिकं बन्धसाधकं कथम् इच्छति । काक्वा नेच्छतीति इच्छानिषेधः पूर्ववाक्यार्थः । तस्य साधर्म्येण साधकमाह मकरन्दयुक्ते कमले वर्तमाने सति भ्रमर इक्षुरकं न वीक्षते । अत्रेक्षुरकपदेन सौरभ शून्यं तालमखाणेत्यौषधीपुष्पं काशपुष्पम् , गोखुरेति प्रसिद्धं गोक्षुरमिति वा ग्राह्यम् । ननु पूर्वार्धे ईच्छा प्रतिषेधोऽभिहित उत्तरार्धे तु वीक्षणस्य प्रतिषेध इति भिन्नशब्दाभ्यामेकस्यार्थस्याप्रतिपादनात् कथं वस्तुप्रतिवस्तुतेच्छाप्रतिषेधस्येति आशङ्कया समाधत्ते वीक्षणमात्रस्य● अयं भावः । वीक्षणमात्र निषेधे न कवेस्तात्पर्यन्तस्येच्छां विनाऽपि सम्पत्तेरवर्जनीयतया निषेद्धुमशक्यत्वात् , किन्तु इच्छापूर्वकवीक्षणस्यैव लक्षणया वीक्षत इत्यनेन प्रतिपाद्यत्वम् । सविशेषणे हि विधिनिषेधौ विशेष्यपर्यवसायित्वासम्भवे विशेषणे पर्यवसानमिति न्यायेन विशेष्यमात्रस्य वीक्षणस्यावर्जनीयतया निषेधासम्भवाद् इच्छानिषेध एव तात्पर्यमित्येकत्वं धर्मस्य । अनया रीत्या धर्मैक्यप्रतिपादने क्लेशासहनात् प्राह अस्तुवा●

भावयोरन्यतरेणापि प्रकारेण नानुरूपा, इत्यसंष्ठुलता स्थितैव ।

'स्थितोऽरविन्दे मकरन्दनिर्भरे' इति चेत्क्रियते तदा तु रमणीयम् ।

तस्मादेवंजातीयकेष्वलङ्कारेषु पूर्ववाक्यार्थघटकनामार्थानुरूपैर्नामार्थैस्तद्घटकविभक्त्यनुरूपाभिर्विभक्तिभिस्तदन्वयानुरूपेण चान्वयेन भाव्यमिति सहृदयहृदयं प्रष्टव्यम् ।

'वहति विषधरान्पटीरजन्मा
शिरसि मषीपटलं दधाति दीपः ।
विधुरपि भजतेतरां कलङ्कं
पिशुनजनं खलु बिभ्रति क्षितीन्द्राः ॥'

अत्र वहनाधानभजनभरणानां वस्तुत ऐकरूप्यात्प्रतिवस्तूपमेयं मालारूपा ।

इति रसगङ्गाधरे प्रतिवस्तूपमाप्रकरणम् ।

अथ दृष्टान्तालंकारः—

प्रकृतवाक्यार्थघटकानामुपमानादीनां साधारणधर्मस्य च बिम्बप्रतिबिम्बभावे दृष्टान्तः ।

---

रमणीयम् ● अरविन्दे इत्यत्राप्याधारसप्तमी सम्पत्तेः । अस्यां चमत्कार जनकं प्रकृतिप्रत्ययान्वयानामानुरूप्यं दृष्टान्तदार्ष्टान्तिकयोरुप संहरति तस्मात् ● । अस्या मालोदाहरणमाह वहति ● पटीरजन्मा चन्दनवृक्षः । पटीरजन्म दीप विधु क्षितीन्द्राणां गम्योपमा धर्मस्य प्रतिवस्तुतां दर्शयति अत्र ● ।

॥ इति प्रतिवस्तूपमा ॥

दृष्टान्तालङ्कारनिरूपणम्

दृष्टोऽन्तः प्रकृतवाक्यार्थनिश्चयो यत्रेति व्युत्पत्त्या प्रकृतवाक्यार्थनिश्चयजनकसहचारग्रहोपयोगी अप्रकृतवाक्यार्थ इति न्यायनयसम्मतदृष्टान्तरीत्या

तदुक्तम्—'दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम्' इति ।

उदाहरणम्—

'सत्पूरुषः खलु हिताचरणैरमन्दमा-
नन्दयत्यखिललोकमनुक्त एव ।
आराधितः कथय केन करैरुदारै-
रिन्दुर्विकासयति कैरविणीकुलानि ॥'

---

प्रसिद्धोऽर्थः। परं स साध्यसाधनभावः पूर्वं प्रतिवस्तूपमायामपि प्रतिपादितः, एव निदर्शनायामपि प्रसक्तः। यद्यप्यलङ्कारकौस्तुभकृतः प्रतिवस्तूपमायां सादृश्यप्रतीतिमात्रम् न तु सहचारग्रहप्रयोजकत्वमत्र तु प्रकृत वाक्यार्थघटककार्यकारणभावस्य ग्राहकं यद्यदन्वयव्यतिरेकानुविधायि तत्तज्जन्यमिति व्याप्तौ अप्रकृतवाक्यार्थो दृष्टान्तः। निदर्शनायां तु प्रकृतवाक्यार्थघटककार्यकारणभावस्य साक्षादेव ग्राहकोऽप्रकृतवाक्यार्थो न तु दृष्टान्त इव यद्यदन्वय व्यतिरेकानुविधापि तत्तज्जन्यमिति व्याप्तिग्रहणद्वारेति प्राहुस्तथापि न स मार्गः पण्डितराजस्य प्रतिवस्तूपमायामपि समर्थ्यसमर्थकभावस्य वर्णितत्वात्। किञ्चालङ्कारकौस्तुभकृतः विशेषयोः प्रकृताप्रकृतवाक्यार्थयोः कार्यकारणभावे यद्यदन्वयव्यतिरेकेतिन्यायद्वारं मन्वते पण्डित राजस्तु विशेषेऽपि दृष्टान्ते आक्षेपेण सामान्यसहचारं गृह्णाति न विस्मर्तव्यम्। निदर्शनायास्तु विषयभेदः प्राचीनपरम्परया काव्यप्रकाशटीकारीत्या साधारणधर्मस्यानुपन्यासात्, पण्डितराजमते तु तल्लक्षणोदितक्रमेणार्थाभेदपर्यवसानादिनेति, प्रतिवस्तूपमात एव विषयभेदविवेचने साक्षादौपम्यप्रयोजकस्य साधारणस्य वस्तुप्रतिवस्तुभावः प्रतिवस्तूपमायाम्, अत्र तु तस्यापि बिम्बप्रतिबिम्बभावः। तदेवाह प्रकृतवाक्यार्थतया बिम्बप्रतिबिम्बभावापन्न धर्मप्रयोज्यमार्थमौपम्यं दृष्टान्त इति लक्षणम्। आदिना उपमेयादितद्विशेषणानामपि संग्रहः। यद्यपि तन्निवेशस्य न व्यावर्तकत्वम् तथापि प्रकृताप्रकृतवाक्यार्थयोर्बिम्बप्रतिबिम्बग्रहोपयोगिसमानविभक्त्यादिभिर्वर्णन द्योतयितुमुपादानम्। तदुपादानेऽनुरोधं सम्मतिञ्च प्रदर्शयितुं काव्यप्रकाशमुदाहरति **तदुक्तम्** ● सर्वेषामित्यस्य पूर्वोक्त एवाऽभिप्रायः। **सत्पुरुषः** ● सत्पुरुषः खलु अप्रेरित एव हिताचरणैः सर्वलोकमानन्दयति। यत्र सत्पुरुषत्वं तत्रा-

अत्रानन्दनविकासयोरपि बिम्बप्रतिबिम्बभावः ।

अस्य चालङ्कारस्य प्रतिवस्तूपमया भेदकमेतदेव यत्तस्यां धर्मो न प्रतिबिम्बितः, किं तु शुद्धसामान्यात्मनैव स्थितः । इह तु प्रतिबिम्बितः ।

विमर्शिनीकारस्तु—'प्रतिवस्तूपमायामप्रकृतार्थोपादनं तेन सह प्रकृतार्थस्य सादृश्यप्रतिपत्त्यर्थम् । दृष्टान्ते तु तदुपादानमेतादृशोऽर्थोऽन्यत्रापि स्थित इति प्रकृतार्थप्रतीतेर्विशदीकरणमात्रार्थम्, न तु सादृश्यप्रतिपत्त्यर्थम्, अतः सादृश्यप्रतीत्यप्रतीतिभ्यामनयोरलङ्कारयोर्भेदः' इत्याह ।

तन्न । प्रकृताप्रकृतवाक्यार्थयोरुपादानस्यालङ्कारद्वयेऽप्यविशिष्टत्वादेकत्र सादृश्यप्रत्ययः, अन्यत्र नेत्यस्याऽऽज्ञामात्रत्वात् । वैपरीत्यस्यापि सुवचत्वाच्च । एतादृशोऽर्थोऽन्यत्रापि स्थित इति प्रकृतार्थप्रतीतिविशदीकरणस्य त्वदभिहितस्य सादृश्यापरपर्यायत्वाच्च । अत एव प्रायशः सत्कविनिर्मितेषु लक्ष्येषु प्रकृतवाक्यार्थघटकप्रकृतिप्रत्ययार्थानुरूपप्रकृतिप्रत्ययार्थघटित एवाप्रकृतवाक्यार्थो दृश्यते ।

---

प्रेरणयाऽपि आनन्दसम्पादनमिति व्याप्तौ दृष्टान्तमाह कथय केनाराधितो न केनाऽपि आराधित इन्दुः उदारैः किरणैः कुमुदिनीसमूहान् विकासयति । **विकासयोरपि**● अपिना आराधनावचनयोर्हिताचरणकिरणयोर्लोककैरविणीकुलयोरिन्दुपुरुषयोश्च संग्रहः । परमन्येषां तथात्वं प्रतिवस्तूपमायामपीष्टमतो न शब्दत उक्तम् । लक्षणे पूर्वोक्ते एवकारद्वारा तात्पर्यं स्फोटयति **अस्य चालङ्कारस्य**● शुद्धसामान्यात्मना वस्तुप्रतिवस्तुभावेन । किमपिप्रयोजकमन्तरा व्यवस्थापने प्रतिवस्तुपमायामेव न सादृश्यप्रतीतिः किन्तु दृष्टान्त इत्यस्याप्यापत्तेरित्याह **वैपरीत्य**● । **सादृश्यापर**● एतादृशेतिशब्दस्य । **अतएव**● सादृश्यप्रतीतेरुद्देश्यत्वात्तन्निर्वाहायैव । अनुरूपं सदृशम् ।

न च भवदुक्तमपि वैलक्षण्यं नानयोः पृथगलङ्कारतायां प्रयोजकम्। औपम्याख्यसामान्यलक्षणाक्रान्ततया उपमाभेदवदेकालङ्कारभेदत्वापत्तेरिति वाच्यम्, तथापि दीपकतुल्ययोगितयोरेकभेदत्वापत्तेः। इष्टापत्तिरिति चेत्सैवात्रापि दृश्यताम्। प्राचीनविभागस्य भवतैव शिथिलीकृतत्वात्। औपम्यरूपसामान्यलक्षणसत्त्वाद्बहूनामलङ्काराणामुपमाऽवान्तरभेदत्वापत्त्या सकलालङ्कारिकसिद्धान्तभङ्गप्रसङ्गाच्च। "—'अब्धिर्लङ्घित एव वानरभटैः' इत्यादिमुरारिपद्ये यद्यपि ज्ञानार्थं एको धर्मो निर्दिष्टस्तथापि नैतन्निबन्धनमौपम्यं विवक्षितम्। यन्निबन्धनं च विवक्षितं तत्राब्धिलङ्घनादावस्त्येव दिव्यवागुपासनादिना प्रतिबिम्बनम्" इति त्वन्मूलग्रन्थविरोधाच्च।

---

एकालङ्कार● प्रतिवस्तूपमादृष्टान्तयोः पृथगलङ्कारत्वानापत्तेरित्यर्थः। प्रतिवन्द्युत्तरमाह तथापि● अनयारीत्या दीपकतुल्ययोगितयोरेकालङ्कारताऽपत्तेः। ममापीष्टापत्तौ दीपकतुल्ययोगिताभेदप्रतिपादनपरस्वकीयग्रन्थविरोधो भवत इत्याह प्राचीन विभागस्य● एवं किञ्चित्साम्यमादाय पृथगलङ्कारताखण्डने उपमाभेदत्वापत्तिः समेषां सादृश्यस्पृष्टानामलङ्काराणामित्याह औपम्यरूप● ग्रन्थान्तरविरोधमाह अब्धिर● इत्थं हि अलङ्कार सर्वस्वकार ग्रन्थः

> देवींवाचमुपासते हि बहवः सारं तु सारस्वतम्
> जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः॥
> अब्धिर्लङ्घित एव वानरभटैः किन्त्वस्य गम्भीरताम्
> आपातालनिमग्नपीवरतनु र्जानाति मन्थाचलः॥

इत्यत्र यद्यपि ज्ञानरूपएकोधर्मोनिदिष्टस्तथापि न तत्प्रयुक्तमौपम्यम् विवक्षितम्। यत्प्रयुक्तं विवक्षितं तच्च लङ्घनादावस्त्येव दिव्यवागुपासनादिना प्रतिबिम्बनम् इति। औपम्यम्● मुरारिकविमन्थाचलयोः। यन्निबन्धनम्● अब्धिलङ्घनादि प्रयुक्तम्। तस्य साधारण्यप्रतिपादनाय दिव्यवागुपासनादिना प्रतिबिम्बनम्। विरोधाच्च● औपम्यस्य साक्षादुक्ततया

न च यन्निबन्धनं च विवक्षितमित्यत्रार्थालंकारत्वं विशेष्यं शेषपूरणेन योज्यम्, न पुनरौपम्यमिति वाच्यम्। औपम्यं न विवक्षितमित्यत्रैकवारं निष्ठ्या परामृष्टस्यैव पुनस्तया परामर्शस्य व्युत्पत्तेः 'न चैत्रार्थमोदनः पक्वः, यदर्थं च पक्वः स मैत्रः' इत्यादौ द्वितीयपक्वादिशब्दानामध्याहृतशाकादिपरत्वे असङ्गतेः स्फुटत्वात्। तस्मादस्मदुक्तेनैव पथा प्राचीनैर्विहितोऽलङ्कारयोरनयोर्विभागः सङ्गमनीयः।

यदि तु न तेषां दाक्षिण्यं तदैकस्यैवालङ्कारस्य द्वौ भेदौ-प्रतिवस्तूपमा, दृष्टान्तश्च। यच्चानयोः किंचिद्वैलक्षण्यं तत्प्रभेदताया एव साधकम्, नालङ्कारताया इति सुवचम्।

वैधर्म्येणायं यथा—

'जनयन्ति परप्रीतिं नराः सत्कुलसंभवाः।
नहि कारस्करः क्वापि तापनिर्वापणक्षमः॥'

यथा वा—

'तापत्रयं खलु नृणां हृदि तावदेव
यावन्न ते वलति देव कृपाकटाक्षः।
प्राची-ललाट-परिचुम्बिनि भानुबिम्बे
पङ्केरुहोदरगतानि कुतस्तमांसि॥'

---

प्रतिबिम्बनस्य गम्योपमोपयोगितया वर्णनाच्चोपमाया मूलग्रन्थप्रतिपादितत्वात्। **योज्यम्** ● यन्निबन्धनमर्थालङ्कारत्वं विवक्षितम्। इति योजना शेषोऽर्थालङ्कारत्वम् विशेष्यम्। **निष्ठ्या** ● विवक्षितमितिशब्देन व्युत्पत्तेः फलमाह **नचैत्रार्थ** ● **स्फुटत्वात्** ● यथा ओदन परामर्शिकया निष्ठया 'पुनः शाकपरामर्शेऽसङ्गतिस्तथा औपम्यपरामर्शकनिष्ठया अर्थान्तरपरामर्शे। **दाक्षिण्यम्** ● प्राचीनविभागस्योपपादनचिन्तनेऽदारता। **जनयन्ति** ● यत्र परप्रीतिजननं नास्ति तत्र सत्कुलसम्भवोनास्तीत्यस्य सजातीयं प्रतिपाद्यस्य **विधर्माणश्चाहनहि** ● कारस्करः कुचिलायाः वृक्षः।

प्रीतिजनन-तापनिर्वापणाभावयोः, तापत्रयावस्थान—तमोदूरीकरणयोश्च वैधर्म्येणात्र बिम्बप्रतिबिम्बभावः ।

इति रसगङ्गाधरे दृष्टान्तप्रकरणम् ।

अथ निदर्शना—

उपात्तयोरर्थयोरार्थभेद औपम्यपर्यवसायी निदर्शना ॥

---

**तापत्रयं** ● हे देव यावदेव तव कृपा कटाक्षो नृणां हृदि न वलति तावदेव तत्र आध्यात्मिकाधिभौतिकाधिदैविक दुःखत्रयम् । प्राचीदिशाभानु बिम्बे प्रकाशिते कमले कुतस्तमांसि । जनयन्तीति पूर्वं पद्यविषये आह **प्रीति** ● प्रीतिजनन-तापनिवारणाभावयोः पूर्वार्धोत्तरार्धोपात्तयोर्वाक्यार्थगतयो वैधर्म्येण बिम्बप्रतिबिम्बभावः । तापत्रयमिति प्रकृतपद्यविषये वक्ति **तापत्रय** ● पूर्वार्धोपात्तस्य तापत्रयावस्थानस्य उत्तरार्धोपात्तस्य तमोदूरीकरणस्य च वैधर्म्येण बिम्बप्रतिबिम्बभाव इत्यर्थः ।

॥ इति दृष्टान्त प्रकरणम् ॥

### अथ निदर्शना प्रकरणम्

निदर्शनं दृष्टान्तकरणमिति काव्यप्रकाशेन दृष्टान्तालङ्कारदर्शितदिशा साध्यसाधनभावो निश्चीयते । परन्तत्र पूर्ववाक्यार्थप्रतिपादकप्रकृति प्रत्ययाद्यनुरूपप्रकृतिप्रत्यादिभिरेवोत्तरवाक्यार्थस्य प्रतिपादनाद्बिम्बप्रतिबिम्बभावस्यशीघ्रं प्ररोहात् तद्बलेन अभेदः शीघ्रं स्थानं लभते न तथाऽत्र प्रकृति प्रत्ययादिभिः प्रतिपादनम् शोधयन्तः, गवेषयन्तीत्यादिना भिन्नतया प्रतिपादनादभेदस्य न प्ररोहः । अतएव केचनालङ्कारिका असम्बद्धयोर्वाक्यार्थयोः सम्बन्धकल्पनां निदर्शनालक्षणघटकीकुर्वन्ति । अन्ये च ण्यन्ताण्णयासश्रन्थोयुजिति युचा निश्चित्य सम्बन्धपर्यवसानं विधाय दर्शनं सादृश्यस्य प्रकटनमिति विग्रहार्थं वर्णयन्ति । तथा च पर्यवस्यदभेदमादाय लक्षणं निरूपयति **उपात्तयोः** ● । अर्थशब्देन पदार्थवाक्यार्थयोः सामान्यस्य संग्रहः । यद्यप्यग्रे एतादृशसंग्रहे मूलएव विप्रतिपत्तिर्द्रक्ष्यते तथापि प्रथमं व्याख्यानमेवमेव । तथा च उपात्तयोः पदार्थयोर्वाक्यार्थयो र्वा आर्थोऽभेद उपमाया व्यञ्जको निदर्शनेति लक्षणस्य सरलार्थः । आर्थशब्दार्थस्त्वनुपदमेव मूले

अतिशयोक्त्यादीनां ध्वन्यमानरूपकस्य च वारणाय उपात्तयोरिति । वाच्यरूपकवारणाय आर्थं इति । आर्थत्वं च प्राथमिकान्वयबोधाविषयत्वम् ।

यदि च विशिष्टोपमायां विशेषणयोरभेदः प्रतीयते तदा बिम्बप्रतिबिम्बभावानापन्नत्वमपि प्रधानविशेषणम् । तद्विशेषणानां तु बिम्बप्रतिबिम्बभावो न निवार्यते ।

---

वक्ष्यते । अतिशयो● तयोरूपमेयस्यानुपादानात् । अभेदस्योपमायाश्च तत्राऽपि पर्यवसानात् । आर्थं इति अभेदबोधे समानविभक्तिकपदजन्योपस्थितेः कारणत्वात्तत्रैवाभेदः शाब्दो यत्र नामपदे समानविभक्तिके । अत्र तु तथाऽभावान्न शाब्दः । ननु शाब्दपदस्य शब्दशक्ये व्यवहारश्चेद् रूपकेऽपि शाब्दो न स्यादभेदस्याकाङ्क्षाभाग्यत्वेन शब्दार्थत्वाभावात् । यदि शाब्दबोधविषयः शाब्दोऽभिप्रेयते तदाऽत्रापि व्यञ्जनाजन्यबोधेऽभेदो विषय इति शाब्दत्वापत्तिरत आर्थत्वं परिष्करोति आर्थत्वञ्च● अभिधया लक्षणया वा जायमानो बोधः प्राथमिकः । तत्र समानविभक्तिकत्वस्य तन्त्रत्वादभेदो न विषयः । वैयञ्जनिकबोधे तु विषयोभवत्येव । यथा त्वामन्तरात्मनीत्यादावभिधया यथास्थिते शाब्दे वृत्ते वाक्यार्थयोः परस्परासम्बन्धानुपपत्योत्थापितया व्यञ्जनया वाक्यार्थयोरभेदो बुध्यते । भिन्नयोरभेदस्याप्यनुपपत्तिसहकृतयाव्यञ्जनयौपम्यबोधः । औपम्यबोधे च वृथात्वं सामान्यमाश्रित्य उत्तर वाक्यार्थो यथा वृथा तथा पूर्ववाक्यार्थोऽपीति काव्यप्रकाशोक्तदृष्टान्तीकरणं पर्यवसाय साध्यसाधनभावोगम्यते । सरलयोक्तः कत्रोरभेदः प्राथमिको नोपपद्यत इति चिन्तनीयम् । ननु विशेष्ययोरूपमायै साधारण्यसम्पत्तये कोमलातपेत्यादौ विशिष्टोपमायां विशेषणयोः कोमलातपकुङ्कुमलेपयोः शोणाभ्रकषायवसनयो बिम्बप्रतिबिम्बभावेनाभेदो बुध्यते सचोपमासम्पादक इति तत्रातिव्याप्तिमाशङ्क्य समाधत्ते यदि च● साधारण्यबोधायाऽभेदस्यावश्यकत्वेऽपि शाब्दबोधविषयता नोपेयतेऽपि तु मानसिको बोध इत्यभिप्रायेण यदीत्युक्तम् । प्रधान॰ विशेषणम् ननु दृष्टान्ते साधारणस्य बिम्बप्रतिबिम्बभावापन्नत्वं विशेषणमत्रापि तदनापन्नत्वन्तस्यैव विशेषणं युक्तमित्याशङ्कां निरसितुमाह प्रधान पदम् गवेषणशोधनयोर्विशिष्टयोरूपमानोपमेययो बिम्बप्रतिबिम्बभावो नेष्टः । तद्विशेषणानाम्● अन्तरात्मकण्ठतटयोः, तिर्थरजसोः, शिवचिन्तामणि-

इदं च श्रौत्या निदर्शनाया लक्षणम्। आर्थीसाधारणं लक्षणं तु ललितालङ्कारप्रकरणे वक्ष्यते।

उदाहरणम्—

'त्वामन्तरात्मनि लसन्तमनन्तमज्ञा-
स्तीर्थेषु हन्त मदनान्तक शोधयन्तः।
विस्मृत्य कण्ठतटमध्यपरिस्फुरन्तं--
चिन्तार्माण क्षितिरजःसु गवेषयन्ति ॥

अत्र तवान्यत्र परिशोधनं कण्ठस्थस्य चिन्तामणेर्भूपांसुषु गवेषणं चाभिन्नमिति तत्सादृश्यमूला धीः।

यथा—

'अन्यैः समानममरैर्जगदन्तरात्मन्,
ये चन्द्रशेखर वदन्ति भवन्तमज्ञाः।
ते किं न हन्त तुलयन्ति नभो निरन्तं,
वातायनोदरगतैर्विवरान्तरालैः ॥'

---

पदार्थयोश्च। नन्वन्यतरस्योपादानाभावे एवार्थी निदर्शना, लक्षणञ्चोपात्तयोरिति प्रतिपादनाच्छ्रौत्यामेव गच्छतीत्यार्थ्यामव्याप्तिरित्याशङ्कां परिहरति **इदञ्च●।** **वक्ष्यते●** तत्रापि विचारस्यावश्यकतया ग्रन्थगुरुतापत्तेः व्यवहारद्वयवर्द्धर्म्यभेद प्रतिपादनाक्षिप्तो व्यवहारद्वयाभेद इति आर्थ्या लक्षणमुक्तम्, एतदन्यतरत्वं सामान्यलक्षणम्। त्वामन्तरेत्यादौ एकस्मिन्नेव धर्मिणि शोधनगवेषणव्यवहारौ प्रतिपादितौ। तेन द्वयोर्व्यवहारयोरभेद आक्षिप्यते। **त्वामन्तर।●** शिवं प्रति भक्तस्योक्तिः हे शिव ? हन्त अन्तरात्मनि स्वयं प्रकाशमानं त्वाम् अजानानास्त्वां तीर्थेषु काश्यादिषु शोधयन्तः कण्ठरूपे तटे न तु समुद्रे न वा समुद्रतटे परिस्फुरन्तं चिन्तामणिं विस्मृत्य, यथा तवाज्ञानं तथा चिन्तामणेर्विस्मरणमिति भावः। पृथ्वीरजस्सु अन्वेषयन्ति। **सादृश्यमूलाधीः●** सादृश्यप्रयोज्याभेदो न तु सामान्यविशेषभावादिना। सादृश्यञ्च वृथात्वादिना। उभयत्रापि रतिभावोपस्कारकता। **अन्यैः●** हे समेषामात्मभूत चन्द्रशेखर ? ये यतोऽज्ञानिनोऽतोऽन्यैर्देवैः

पूर्वत्रैकवाक्यगतः, इह तु भिन्नवाक्यगतः । पूर्वत्र वस्तुमात्रयोरौपम्यमूलोऽभेदः, इह त्वौपम्ययोरौपम्यमूलः स इति विशेषः ।

एषा वाक्यार्थनिदर्शनेत्युच्यते । विशिष्टार्थयोः प्रकृतैकधर्मिगतयोरार्थाभेदे वाक्यार्थनिदर्शनाया इष्टेः । अस्यां च घटकपदार्थानां बिम्बप्रतिबिम्बभाव आवश्यकः ।

पदार्थनिदर्शना यथा—

'अगण्यैरिन्द्राद्यैरिह परमपुण्यैः परिचितो
जगज्जन्मस्थानप्रलयरचनाशिल्पनिपुणः ।
प्रसर्पत्पीयूषाम्बुधिलहरिलीलाविलसितो
दृगन्तस्ते मन्दं मम कलुषवृन्दं दलयतु ॥'

---

समानं भवन्तं वर्णयन्ति । हन्त ते निरन्तं निष्प्रमाणम् आकाशं गवाक्षस्थितैर्विवरमध्यैः किन्न समानीकुर्वन्ति किन्तु कुर्वन्त्येव पूर्ववदेवासम्भवित्वमुभयत्रापि । विशेषं दर्शयति पूर्वत्रैक● शोधयन्तो गवेषयन्तीत्यत्र कर्तृ क्रियारूपतया एकवाक्यता । द्वितीये तु आख्यातार्थयोरुभयोः क्रिययोः प्राधान्यादेकवाक्यता । वस्तुमात्रयोः● शोधनगवेषणयोः । औपम्ययोः● देवचन्द्रशेखरयोः, नभो गवाक्षविवरयो रूपमयोः, स अभेदः । विशिष्टार्थयोः● शिवकर्मकशोधन चिन्तामण्यादिगवेषयोः । अगण्यैः● परमपुण्यैरसङ्ख्येरिन्द्रादिदेवैरनुभूतः, प्रसर्पन् योऽमृतसमुद्रस्तस्य लहरीणां लीलया युक्तः दृगन्तपातेन अमृतसमुद्रलहर्यः समुल्लसन्तीतिभावः । जगदुत्पत्तिस्थितिसंहारकरणे निपुणः, दृष्टिमात्रेणैव जगद्व्यवस्थानं न परिकरेणेति भावः । एवं भूतस्ते दृष्टिपातः मम मन्दं पापसमुदायं विनाशयतु । अमन्दमिति पाठे क्रियाविशेषणम् । दृगन्ते या लीला सा अम्बुधिलहरिलीलतया प्रति-

अत्र दृगन्ताम्बुधिलहरिलीलयोराश्रयभेदाद् भिन्नयोरपि सादृश्यमूलस्ताद्रूप्याभिमानः । आरोपो वा दृगन्ते लहरिलीलायाः ।

यथा वा—

'पाणौ कृतः पाणिरिलासुतायाः सस्वेदकम्पो रघुनन्दनेन ।
हिमाम्बुमन्दानिल-विह्वलस्य प्रभातपद्मस्य बभार शोभाम् ॥'

अत्र हिमाम्बुजनितविह्वलता हिमकणाकीर्णतारूपा वातजनितविह्वलता च विधुतिरूपा । एताभ्यां च सस्वेदतासोत्कम्पितत्वयोः प्रतिबिम्बनमिति पूर्वस्मादुदाहरणाद्भेदः । प्रभातपदसांनिध्याच्च पद्मस्येषद्विकासमुद्रणयोः प्रत्ययात्पाणावपि तत्सिद्धिः । अस्यां चोपमानोपमेयगतधर्मयोरार्थाभेद-

---

पादिताऽतो दृगन्तगतलहरिगतयो र्लीलयोरभेदो निदर्शना विषयः । इत्याह **अत्र●** दृगन्तलीलाप्रतिपादकशब्दाभावान्निगरणे तु अतिशयापत्त्या दृगन्त एव लीलाया आरोपमाह **आरोपो वा●** पर्यंव यदौपम्यमूलक इति शेषः । आरोपे उभयोः पृथग्व्यवहारो न जायेत तदा कथमौपम्यं पर्यवसीयते, अत आरोपमूलमेवौपम्यमन्वेषणीयम् । ताद्रुप्याभिमानोऽभेदारोपस्तदपेक्षया लीलारोपः सम्यगित्यभिप्रेतं प्रतिभाति । इत्थञ्च दृगन्तो लहरीलीलायुक्त इति बोधः, भेद सम्बन्धेनारोपः । **पाणौ कृतः●** श्रीसीतारामविवाहवर्णनम् । रघुनन्दनेन स्वपाणौ कृतः स्वेदेन कम्पेन च सहितो भूमियुतायाः सीतायाः पाणिः हिमाम्बुना मन्दानिलेन च विह्वलस्य प्रातः कमलस्य शोभां बभार । विवाहे कन्याकरो वरकरे क्रियते सात्त्विकतया स्वेदः कम्पश्च जायते । यथा प्रभात पद्मं हिमाम्बुना समाकीर्णं मन्दानिलेन चान्दोलितं शोभां बिभर्ति तथा सीता करोऽपीति भावः । **सस्वेदता●** हिमकणाकीर्णतासस्वेदत्वयोः, मन्दानिलान्दोलनसकम्पत्वयोश्चेत्यर्थः ।

**भेदः●** दृगन्तस्तेइत्यादौबिम्बप्रतिबिम्बत्वानाश्रितोऽत्र तु तदाश्रित इति भावः । प्रभातपद व्यङ्ग्यं प्रकृतोपयोग्याह । **प्रभात●** **धर्मयो●** पद्म-

प्रतिपत्तिः । अतः पदार्थनिदर्शनोच्यते । बिम्बप्रतिबिम्बभावस्तूपमानोपमेययोः सविशेषणत्वे भवति, अन्यथा तु न इति विवेकः ।

ननु वाक्यार्थनिदर्शनायां विशिष्टवाचकशब्दाभ्यां विशेषणयोरप्युपादानात् अस्तु नाम उपात्तयोरार्थोऽभेदः । पदार्थनिदर्शनायां तूपमानशोभादेरन्यतरस्यैवोपात्तत्वम्, न द्वयोरिति चेत् । शोभाशब्देन शोभात्वेन द्वयोरप्युपात्तत्वात् । नह्युपमानोपमेयतावच्छेदकरूपेणोपात्तत्वं विवक्षितं येनाव्याप्तिः स्यात् । यद्वा प्रागुक्तलक्षणं वाक्यार्थनिदर्शनाया एव, न पदार्थनिदर्शनायाः । अस्यास्तु उपमानोपमेययोरन्यतरधर्मस्यान्यतरत्रारोपो लक्षणमस्तु ।

---

पाणिशोभयोर्द्विरूपात्तत्वाभावेन शाब्दाभेदासम्भवेन वैयञ्जनिकाभेदः । अतः ● पदार्थयोरेवाभेदान्नतु वाक्यार्थयोः । सविशेषणत्वे ● विशिष्टयोरभेदे विशेष्यांशयो र्बिम्बप्रतिबिम्बभावोन भवतीति प्रागभिहितम् । विशेषणानां भेदे तद्वशाद्विशेष्ययोरपि भेदे विशेष्ययोरभेदो न सिध्येतेति विशेषणानामभेदाय बिम्बप्रतिबिम्बभाव आश्रीयते । शुद्धयोर्विशेष्योरेवाभेदस्तु कथं बिम्बप्रतिबिम्बतां स्पृशेदिति भावः । ननु ● द्वयोरूपादानएवाभेदः, अतएव रूपके द्वयोरूपादानेऽभेदः, अतिशयोक्तौ तु अन्यतरानुपादाने विषयविषयिभावः । विषयविषयिभावश्चारोपस्थल एवेति शङ्काऽभिप्रायः । उत्तराभिप्रायस्तु उपमानोपमेयतावच्छेदकरूपेणोभयोरूपादाने शाब्दोऽभेदोऽस्तु येनकेनाऽपि रूपेणोभयोरूपादानेनोपस्थितौ वैयञ्जनिकाऽभेदे न क्षतिः । पूर्वोक्तलहरी लीलारोप इव औपम्यपर्यवसानेऽपि काठिन्यम् । शब्दद्वयेऽर्थद्वये वा लीलाऽभिन्नलीलावान् पाणिरिति बोधः, यद्वा पक्षे पद्मशोभावान् पाणिरिति बोधः । औपम्यस्यान्वयाभावात्पदार्थं निर्दशनात औपम्यपर्यवसानं हेयम् । अतिशयोक्तिरिवान्यतरोपादाने आरोपवासनयोत्तर भूमिकां रचयति यद्वा ● नपदार्थ ● तथा च लक्षणे अर्थयोरित्यस्य स्थाने वाक्यार्थयो र्विशिष्टार्थयोर्वेति निवेशनीयम् । उपमानोप ● यथा प्रकृते उपमानपद्मशोभाया उपमेये सीताकर

नन्वेवमपि वाक्यार्थनिदर्शनायां रूपकध्वनिना, पदार्थनिदर्शनायां च निगोर्याध्यवसानरूपयातिशयोक्त्या गतार्थतेति चेत्, न। वाक्यार्थनिदर्शनायां रूपकस्य गुणीभूतत्वेन तद्ध्वनित्वायोगात्। अन्यथा गुणीभूतयोपमया रूपकस्यापि गतार्थतापत्तेः, किं च अस्याश्च शरीरं तादृशपदार्थयोः परस्पराभेदमात्रमुभयत्र विश्रान्तम्। रूपकस्य तूपमेयगत उपमानाभेदः, अतिशयोक्तेश्च। निगरणानिगरणाभ्यां च तयोर्विशेषः इत्यन्यत्।

एवं च स्फुटमेव रूपकातिशयोक्तिभ्यां वैलक्षन्यम्। अत एव, 'त्वाम'न्तरात्मनि—' पद्ये गवेषयन्तीत्यत्र गवेषयन्त इत्यनूद्य शोधयन्त इत्यत्र शोधयन्तीति विधाने, अर्धयोः पौर्वापर्ये च न सौन्दर्यहानिः।

---

आरोपः। पूर्वोदाहरणेऽप्ययमेव लीलाया आरोपः। एतद्द्वयान्यतरत्वं सामान्यलक्षणम्। रूपक **ध्वनिना** ● विज्ञत्वं विदुषां गण इत्यादौ समान विभक्तिकपदाभ्यामुपात्तत्वाभावादभेदो न शाब्दोऽपितु निदर्शनावदार्थो वैयञ्जनिकः निदर्शनायामपि आर्थाभेदस्यापेक्षणात्। **तिशयोक्त्या** ● पद्मशोभयैवकरशोभाया निर्गीर्णत्वम्। आरोपस्य एकशब्दोपात्तत्वस्य निदर्शनायामपि ग्रहणात्। **गुणीभूतत्वेन** ● रूपकध्वनौ उपमानाभेद उपमेयगतः प्रधानं सादृश्यञ्च तत्र गुणीभूतम्। सादृश्यपर्यालोचनया अभेदस्य स्फुरणात्। निदर्शनायान्तु नाभेदपर्यालोचनात्प्रथमं सादृश्यस्फुरणमिति अभेदापेक्षया सादृश्यस्य प्राधान्यम्। अतएवौपम्यपर्यवसायीति मूले। प्रधानीभूतार्थस्यैव ध्वनिव्यपदेशहेतुता। अन्यटीकाकारो न वेत्त्यस्य स्वारस्यमिति ध्येयम्। **अन्यथा** ● गुणीभूतस्यापि ध्वनिव्यपदेशहेतुत्वे। अतिशयोक्तेरपि समाधानम् आह **किञ्च** ● तयोरूपकातिशयोक्त्योः। **अतएव** ● निदर्शनायाः परस्पराऽभेद विश्रान्तेः। **सौन्दर्यहानिः** ● यद्रूपभेये उपमानाभेदोऽत्रापि प्रतिपिपादयिषितश्चेत् गवेषणस्योदेश्यकोटिप्रविष्टत्वे तत्रैव शोधनस्य विधेयस्याभेदः प्रतीयेत। यथास्थिते तु विपरीतमिति सौन्दर्यहानिः स्यादेव। प्राय आख्यातस्थले व्यापारस्य विधेयत्वमिति ध्येयम्। अयमत्राभिसन्धिः। मुखं चन्द्र

रूपकादौ तूच्यमाने व्यङ्ग्यकक्षोद्देश्यविधेयभावस्यापि वाच्यकक्षोद्देश्यविधेयभावानुसारितया उपमाने ऽपमेयाभेदसिद्धावसामञ्जस्यापत्तेरिति सुधीभिराकलनीयम्।

अलङ्कारसर्वस्वकारस्तु—

'त्वत्पादनखरत्नानां यदलक्तकमार्जनम्।
इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥'

इति पद्यं वाक्यार्थनिदर्शनायामुदाजहार। आह च—'यत्र तु प्रकृत-वाक्यार्थे वाक्यार्थान्तरमारोप्यते सामानाधिकरण्येन तत्र संबन्धानुपपत्तिमूला निदर्शनैव युक्ता' इति।

---

इव मुखं चन्द्र इत्यनयोरुत्तरस्मिन् चमत्कारप्रयोजकसादृश्यातिशयो व्यज्यत इति सहृदय-हृदयप्रमाणितम्। सादृश्यातिशयश्चन्द्ररूपताप्रयुक्तचमत्कारप्रयोजकः। स च चमत्कारो मुखे चन्द्राभेदेनैव प्रयुज्यते न परस्पराभेदेन। चन्द्रस्य विशेषणताप्रवादाच्च। यथा तत्र चन्द्राभिन्नस्य मुखस्य चन्द्रकार्यकारित्वं प्रयोजनन्न तथा निदर्शनायां शोधने गवेषणाभेदस्य गवेषणकार्यकारित्वं शोधनस्येति किमनुरुध्य शोधने गवेषणाभेदो विधीयेत। किन्तु परस्पराऽभेदेन परस्परसादृश्यप्रतीतिद्वारोभयत्र वृथात्वे पर्यवसानम्। पूर्वत्र शोधने वृथात्वं साध्यं गवेषणे च सिद्धमितित्वन्यत्। एतेन निदर्शनायां तथाभावे बीजं चिन्त्यम् इति मर्मप्रकाशश्चिन्तितः। **रूपकादौ** ● विज्ञत्वं विदुषां गण इत्यादौ विज्ञोबुधइत्यादि वाच्यरूपकस्थल इव विज्ञ एव बुधाभेदो न तु बुधे विज्ञाभेदः बुधाभिन्नविज्ञात्मनि राजनि बुधाद्यभेदस्य तदभिन्नाभिन्नन्यायेन तथैव सिद्धेः। **वसामञ्जस्यापत्तेः** ● निदर्शनायान्तु न विपर्यासिदोष इत्युक्तमेव। रूपकध्वनौ विज्ञाभेदस्य बुधे सिद्धौ राजनि बुधात्मता न सिध्येत् व्यङ्ग्येऽपि रूपके उपमेय एवोपमानाभेद इति व्यङ्ग्यकक्षेति मूलस्य सरलोऽर्थः। अत्रत्या सरला तु त्वामन्तरात्मनीत्युदाहरणे एवासामञ्जस्यं समनुगमयन्ती रहस्यञ्चास्पृशन्ती छात्राणां भ्रामिका सरलैव। **यत्र तु** ● पद्यं रूपके व्याख्यातम्। त्वत्पादनखकर्मकालक्तकमार्जने तद्भिन्नस्य विधुकर्मक

तन्न। वाक्यार्थरूपकस्य दत्तजलाञ्जलित्वापत्तेः। न चेष्टापत्तिः। वाक्यार्थनिदर्शनैव निर्वास्यताम्, स्वीक्रियतां च वाक्यार्थरूपकमिति पर्यनुयोगस्यापि तुल्यत्वात्। युक्तं चैतत्। पदार्थरूपके 'मुखं चन्द्र' इत्यादौ क्लृप्तस्य श्रौतस्याभेदारोपस्य रूपकजीवातुत्वकल्पनाया औचित्यात्। 'इन्दुशोभां वहत्यास्यम्' इत्यादिपदार्थनिदर्शनायामभेदारोपस्याभावात् तज्जीवातुत्वायोगाच्च। रूपके बिम्बनं नास्तीति तु शपथमात्रम्, युक्त्यभावात्। अस्मदुक्तोदाहरणे वाक्यार्थनिदर्शनायाः सावकाशत्वाच्च।

यत्तु तेनैव लक्षणं निर्मितम्—'संभवता असंभवता वा

---

श्रीखण्डलेपकरणकपाण्डुरीकरणस्य अभेदासम्भवेऽपि अभेदेनारोपः। सामानाधिकरण्यमभेदः। सम्बन्धश्चात्राभेदः। **ञ्जलित्वापत्तेः** ● ईदृशस्थलेनिदर्शनास्वीकारे वाक्यार्थरूपकं निवकाशं स्यात्। यथा मुखं चन्द्र इत्यादौ भिन्नयोरभेदासम्भवेऽपि सादृश्यमूलोऽभेदः सम्पाद्यते तथा भिन्नयोरपि सदृशयोर्वाक्यार्थयोरभेदस्य रूपकत्वम्। प्रतिबन्द्युत्तरमुक्त्वा विवेचनभारमते **युक्तञ्चैतत्** ● श्रौताभेदो रूपक प्रयोजक इत्युपपाद्य निदर्शनायां प्रयोजकत्वाभावं दर्शयति श्रौताभेदस्य। **इन्दु शोभाम्** ● शोभयोरुभयोरुपादानाभावाच्छ्रौताभेदासम्भवात्, अभेदारोपस्याभावादित्यनेन न निदर्शनाया अभेदारोपोजीवातुरिति सूचितम्। जीवातुत्वं प्रयोजकत्वम्। तथा चात्रापि श्रौताभेदस्य सत्त्वाद् रूपकं युक्तम्। नन्वत्रापि नाभेदस्य योग्यता नखविधु विशेषणानां भेदेन विशेष्याभेदस्यानुत्थानात्, निदर्शनायान्तु विशेषणानां बिम्बप्रतिबिम्बभावेनाभेदः। रूपके तु बिम्बप्रतिबिम्बभावो न दीक्षितसम्मत इत्याशङ्क्य समाधत्ते **रूपके** ● युक्त्यभावश्च रूपकप्रकरणे प्रतिपादितः। **सावकाशत्वाच्च** ● तस्मान्न वाक्यार्थनिदर्शना निरवकाशा। श्रौताभेदे रूपकमार्थाभेदे तु निदर्शनेति व्यवस्था युक्ता। तेनैवालङ्कारसर्वस्वकृतैव। **संभवता** ● अभेदयोग्येन असम्भवता अभेदायोग्येनापि कथमपि विशेष-

वस्तु-सम्बन्धेन गम्यमानमौपम्यं निदर्शना' इति । तदपि न । रूपकातिशयोक्त्यादिष्वतिव्यापनात् ।

यत्त्वलंकारसर्वस्वकारानुसारिणा कुवलयानन्दकृतोक्तम्—

'वाक्यार्थयोः शब्दशयोरैक्यारोपो निदर्शना ।
यद्दातुः सौम्यता सेयं पूर्णेन्दोरकलङ्कता ॥' इति ।

तत्तु तन्मतदूषणेनैव निवेदितरहस्यमिति न पुनराकुलीक्रियते ।

यदि तु—

'त्वत्पादनखरत्नानि यो रञ्जयति यावकैः ।
इन्दुं चन्दनलेपेन पाण्डुरीकुरुते हि सः ॥

इति पद्यं निर्मीयते तदा निदर्शना युक्ता । न चास्मदुक्ता वाच्या निदर्शना, इयं तु प्रतीयमानेति वाच्यम् । 'मुखं चन्द्र इव' इति वाच्योपमा 'मुखं चन्द्रः' इति प्रतीयमाना, नत्वलंकारान्तरम् । इत्यस्यापि सुवचत्वात् ।

---

णादि भेदनिरसनपुरस्सरमभेदमापन्नेन । **अतिव्यापनात्** ● तयोरपि औपम्यव्यञ्जकस्याभेदस्य साम्राज्यात् । **निवेदितरहस्यम्** ● अलङ्कारसर्वस्वानुसारिणोऽस्य लक्षणस्य तद्दोषेण दूषितत्वात्पृथग्वचनं ग्रन्थगौरवार्थं स्यात् । पूर्वोदाहरणमेव प्रथमान्ततानिरसनेन श्रौताभेदयोग्यताविरहात् निदर्शनोदाहरणतां सम्पादयति **यदितु** ● । **अस्मदुक्ता** ● मार्जनकरणघटिता ।

**प्रतीयमाना** ● व्यङ्ग्या । प्रतिबन्द्युत्तरमाह **मुखम्** ● **सुवचत्वात्** ● त्वद्रीत्येति भावः । यदि च रूपके अभेदचमत्कारस्य सादृश्यचमत्कृत्यपेक्षया प्राधान्यात्तथात्वन्तदा रूपकप्राप्तिस्थले शाब्दाभेदस्य निदर्शनापेक्षयाप्राधान्यं चमत्कारानुरोधेनैवाङ्गीकर्तव्यम् । सूक्ष्मश्चायं भेदो न विस्मर्तव्योयदुपमानाभेदस्योपमान कार्यकारित्व उपमेयस्य पर्यवसानम् । निदर्शनाऽभेदस्य तु परस्परसादृश्ये । तथा च पाण्डुरीकरणकार्यस्य यदि मार्जनेन साधनमपि

एवं चारोपाध्यवसानमार्गबहिर्भूत आर्थ एवाभेदो निदर्शनाजीवितम्। स च कर्त्राद्यभेदप्रतिपादनद्वारा प्रतिपाद्यते वाक्यार्थनिदर्शनायाम्। अत एव मम्मटभट्टैरुदाहृतम्—

'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥' इति।

नन्वत्र निदर्शना नैव संगच्छते। विषयिण उपादानेऽपि विषयस्यानुपात्तत्वात्। उभयोपादानं हि तत्रावश्यकम्। अतो

---

अनुभव सिद्धं तदा रूपकमेव। यदि तु सादृश्य मात्रमपेक्षितन्तदा निदर्शनैवेति विवेकः। **बहिर्भूत इति** ● रूपकातिशयोक्तिविषयाभ्यां पृथगेवेति भावः। **स च** ● आर्थोऽभेदः। **कर्त्राद्यभेद** ● प्रतिपादितैक कर्तृवृत्तित्वेन। **अतएव** ● शाब्दाभेदस्थले रूपक कवलितत्वादेव।

सरलाकृतस्तु कर्त्रभेदप्रतिपादनद्वाराऽभेदप्रतिपादना देवेत्यभिप्रायेणावतारयन्ति। क्वशब्दाभ्यां सूर्यवंशाल्पविषयमत्योर्महदन्तरं वर्णयति। अल्पविषयमतिकरणकरघुवंशवर्णनोडुपकरणकसागरतरणयोरार्थाभेदान्निदर्शना। उडुपं चर्मावनद्धकाष्ठं सज्जनकोशे वर्णितम्। तत्र निदर्शनायाम्। अत्र मर्मप्रकाशकृतः। अत्रेदं चिन्त्यम् त्वामन्तरात्मनि लसन्तमिति भवदुदाहृतेऽपि गम्यरूपकेणैव निर्वाहे निदर्शनाया उच्छेदापत्तिः, अन्यथा वाक्यार्थरूपकोच्छेदवद् गम्यवाक्यार्थरूपकोच्छेदापत्तिः। न चैवं मुखं चन्द्र इवेति वाच्योपमा, मुखं चन्द्र इति गम्योपमैव स्यादिति रूपकोच्छेदापत्तिरिति वाच्यम् तत्राभेदप्रतीतिकृतचमत्कारस्यैव सत्त्वात्। सादृश्यकृतस्य तस्याभावाच्च। किञ्च भवदुदाहृते कर्त्रोरूपकमेवास्तु, प्रतीयमानोऽपि क्रिययोरभेदो विशिष्टरूपके विशेषणाभेदवन्नालङ्कारान्तरम्। अन्यथा अलकावृतकामिनीमुखं भ्रमद्भ्रमरसंभारं पद्ममित्यादौ अलकभ्रमरयोरभेदस्याप्यलङ्कारान्तरत्वं स्यात्। तस्माद् गम्यतामात्रेणालङ्कारान्तरतेति रिक्तं वचः। ननु प्राचीनैरलङ्कारान्तरत्वेन परिगणनाद् गम्यत्वेऽयं वाच्यत्वे रूपकमित्युच्यते तर्हि प्राचीनसेतुविघटनं व्यर्थमेवेति बोध्यम्। इत्याहुः। इदं हि चिन्ताफलम्। त्वामन्तरात्मनीत्यादौ रूपकस्य विषयो नास्तीति मूले टीकायाञ्च स्फुटं प्रतिपादितम्। त्वत्पादनखरत्नाना-

ललितालंकार उचित इति चेत्, ललितालंकारनिराकरणावसर एवैतद् व्यक्तमुपपादयिष्यामः ।

परे तु 'त्वपादनखरत्नानाम्—' इत्यत्र दृष्टान्तालंकारमाहुः । तदप्यसत् । बिम्बप्रतिबिम्बभावापन्नपदार्थघटितस्य निरपेक्षवाक्यार्थद्वयस्यैव दृष्टान्तत्वात् । तस्मात् 'त्वत्पादनखरत्नाम्—' इत्यत्र वाक्यार्थरूपकमेव, न निदर्शनेति स्थितम् ।

एवमसंभवद्वस्तुसंबन्धनिबन्धना पदार्थ-वाक्यार्थनिदर्शना दर्शिता ।

---

मित्यादौ वाक्यार्थरूपकोच्छेदमियैव न रूपकस्वीकारोऽपि तु निदर्शनाजीवातुत्वाभावाद् रूपकजीवातुत्वसत्वाच्च । टीकायां विवेकोऽपि स्फुटीकृत एव । किञ्चेत्यादिना कत्रोरूपकमपि न सम्यक् सम्भवति व्यापारपरतन्त्रकर्तुः स्वयमन्यत्र कर्तरि अन्वेतुमशक्यत्वात् । व्यापाराभेदेनाभेदे तु आर्थत्वापत्त्या रूपकासम्भवात् । न च आर्थाभेदे वाच्यरूपकासम्भवेऽपि गम्यरूपकापादने मर्मप्रकाशस्य उल्लास इति चेदत्र केचित् । गम्यवाक्यार्थरूपकं न पण्डितराजसम्मतम् । अभेदस्य गम्यत्वे रूपकजीवातोरूपमेये उपमानाभेदस्याप्रत्ययात् । अन्येतु वाक्यार्थरूपकं तत्रैव गम्यमुपेयं यत्रोद्देश्यविधेयभावो नियत उपमानकार्यकारित्वस्योपमेये पर्यवसानञ्च । पूर्वोक्तोदाहरणेषु तदसम्भवाद् रूपकोदाहरणत्वं नास्ति । न तु मम्यवाक्यार्थरूपकोच्छेदे तात्पर्यमन्यथा तथैव स्फुटं वक्तव्यत्वे युक्तिदानं पण्डितराजस्य व्यर्थं स्यात् । **परे तु** ● यथा दृष्टान्तोदाहरणे वाक्यार्थयोः साध्यसाधकभावस्तथा त्वत्पादनखेत्यादावपीति भावः । **दृष्टान्तत्वात्** ● दृष्टान्ते प्रधानयोरपि बिम्बप्रतिबिम्बभावो निदर्शनायान्तु न । दृष्टान्ते द्वौ वाक्यार्थौ परस्परं सम्बन्धमन्तरा सम्पन्नौ साध्यसाधनभावस्तु वैयञ्जनिको मानसो वा । त्वत्पादनखेत्यादौ तु द्वयमिति पदेन द्वयोरभेदः सन्बन्धो बुध्यते । **तदेवोपसंहरति तस्मात्** ● । **असंभवद्वस्तु** ● सामान्यविशेषभावं विधिनिषेधभावं वाऽश्रितयोर्वस्तुनोः कश्चित्साक्षात्सम्बन्धः प्रसिद्धो भवति । स संभवद्वस्तुसम्बन्ध इत्युच्यते । अत्र तु शिवस्य तीर्थेषु शोधनं चिन्तामणे रजस्सु गवेषणमित्यनयोर्न सामान्यविशेषभावो नवा विधिनिषेध-

चूडामणिपदे धत्ते योऽम्बरे रविमागतम् ।
सतां कार्यातिथेयीति बोधयन्गृहमेधिनः ॥'

अत्र 'कारीषोऽग्निरध्यापयति' भिक्षा वासयन्ति' इतिवदानुकूल्ये णिचः प्रयोगात् गिरेश्च सूर्योदयदेशावच्छिन्नशिरभावः। तथाप्यनयो रौपम्यव्यवसायी सम्बन्धः कविसंरम्भगोचरः। अतोऽसंभवद्वस्तु सम्बन्ध उच्यते।

संभवद्वस्तुसम्बन्धां निदर्शनामाह चूडामणिपदे धत्ते● सताम् आतिथ्यं कार्यमिति गृहस्थान् बोधयन् य उदयाचलः अम्बरे आगतं रविं शिरोभूषणस्थाने बिभर्ति। प्रातः काले उद्यन् रविरूदयाचलस्य शिखरे तस्य चूडामणिरिव भाति। तेन गृहमेधिनो बोध्यन्ते यत्सतामातिथ्यं कार्यमिति भावार्थः। अचेतन उदयाचलो बोधार्थमुपदेशादिकं कर्तुमशक्तस्तथापि उदयाचलस्य स्वरूपस्थितिरेवैवं सम्पद्यते येन गेहमेधिनोऽवबुध्यन्त इति यावत्। ननु बोधयन्नित्यत्र णिजन्तत्वात्कर्तृद्वयम्। गृहमेधिनोबुध्यन्ते उदयाचलश्च बोधयति। तथा च ज्ञानस्याश्रयो गृहमेधिनः णिजर्थंप्रेरणा चोदयाचले। ज्ञानार्थं प्रेरणा च उपदेशादिरेव स चाचेतने न सम्भवतीति प्रेरणायाः सम्भावना विधेयेति उत्प्रेक्षैव युक्तेत्याशङ्कां समाधत्ते अत्र● अयं भावः बोधानुकूला प्रेरणा नोपदेशादिरेवापि तु येन केनापि व्यापारेण बोधो भवेत्स सर्वविधोऽपि व्यापारः। यथा कश्चिदङ्गुलिनिर्देशेनाप्यवबुध्यते। तत्राङ्गुलिनिर्देशोऽपि व्यापारोबोधानुकूलः। तथोदयाचलेऽपि सूर्योदयसमये यस्मिन्देशे सूर्योदयः स एव देश उदयाचलस्य शिरस्तद्दर्शनेन गृहमेधिनः शिक्ष्यन्ते। अतो गृहमेधिनिष्ठोयो बोधस्तनुकूलः पूर्वोक्तशिरस्सम्पत्तिरूपो व्यापार उदयाचले स एव चात्र णिजर्थः प्रेरणा। यथा सम्भवं सर्वविधोऽपि धात्वर्थानुकूलोव्यापारोणिजर्थो न तु उपदेशयत्नादिश्चेतननिष्ठ एवेति दृष्टान्तद्वयेनावबोधयति। यथा शिष्योऽधीते गुरुरध्यापयतीत्यादौ शब्दोच्चारणं श्रेष्ठ्यध्यापयतीत्यादौ वृत्तिदानादिरध्ययनानुकूलो व्यापारो णिजर्थ एवं कारीषाग्निसत्त्वे शीतकालेऽध्ययनं सम्भवत्स्तोऽग्निसत्ता एवाध्ययनानुकूलोव्यापारोणिजर्थः। करीषः शुष्को गोमयस्तज्जन्योऽग्निर्हिरित्यर्थः। एवं भिक्षायै भिक्षुको वसतीत्यादौ भिक्षुनिष्ठवासानुकूला अचेतनभिक्षानिष्ठा प्राप्तिरेवणिजर्थ इत्याहानुकूल्ये● अनुकूलव्यापार मात्रे णिच् न तु यत्न एवाचेतनकर्तरि तदनुपपत्तेः। सूर्योदय● अस्य

स्कतारूपस्य गृहमेधिगतसदातिथ्यकरणविषयकबोधानुकूलाचरणस्य संभवात् मया इवान्येनाप्यतिथिसेवा कार्या इत्यौपम्यसद्भावाच्च संभवद्वस्तुसंबन्धमूलापि निदर्शना संभवति।

न च बोधयन्निव बोधयन्निति प्रतीयमानेयमुत्प्रेक्षा 'व्यालिम्पति तमोऽङ्गानि नभो वर्षति कज्जलम्' इत्यादाविवेति वाच्यम्। वस्तुनः संभवेनैव तस्या अप्रसक्तेरित्याहुः।

इदं च 'धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते' इत्युक्तपथेन धातूपात्तव्यापाराश्रयत्वं कर्तृत्वमिति मते संगच्छते। यदि तु कृताकृतविभागानुपपत्तेर्यत्नार्थकात्कृञस्तृचि सविषयार्थकधातूत्तरकर्तृप्रत्ययस्याश्रयत्वे निरूढलक्षणया यत्नाश्रयः

---

सरलार्थः समन्वये उक्तः। औपम्यपर्यवसानं दर्शयति मया इव ● संभवद्वस्तु ● वस्तुनो बोधनानुकूलव्यापारस्य सूर्योदययुक्तशिरोदेशसम्पत्तेरुदयाचले सम्बन्धः सम्भवति। तन्मूला रवेः शिरसि धारणस्य सदातिथेयस्य च परस्पराअभेदरूपा निदर्शना। सरलायाञ्च रवेः शिरसि धारणस्य बोधनेन सहा भेदः प्रतिपादितः सचाशुद्धः प्रतिभाति यतोययोरभेदस्तयो रौ म्यमित्यस्यैव युक्ततया आतिथेयेनैवौपम्यस्य ग्रन्थकृतैवोक्तत्वात्। न च ● वक्ष्यमाणरीत्या बोधनस्य यत्नरूपपर्यवसायिनश्चेतन एव सम्भवादचेतने तस्य सम्भावनमित्याशङ्काभिप्रायः। पूर्वोक्तरीत्या सूर्योदययुक्तशिरः सम्पत्तिरूपबोधनस्याचेतनेऽपि साधितत्वान्न सम्भावनमित्युत्तराभिप्रायः। वैयाकरणमतेनेदं सम्भवति तच्च वैयाकरणमतमाह इदञ्च ● धातुना यन्निष्ठा क्रियोच्यते तत्रैव नित्यं कर्तृताऽङ्गी कार्या। तथा च धात्वर्थ व्यापाराश्रयत्वं कर्तृत्वं लक्षणम्। ण्यन्तबोधिधात्वर्थबोधानुकूलव्यापारस्योदयाचले सत्त्वात्कर्तृत्वोपपत्तिः। नैयायिकमतमाह यदि तु ● वैयाकरणमते कृञ् धातोरुत्पत्त्यनुकूलो व्यापारोऽर्थः। तर्हि कृत इत्यस्योत्पन्नइत्यर्थः स्यात्। तेन दण्डेन कुलालेन च कृत इति समान एव व्यवहार आपतेत्। परं कुलालेन कर्त्रा कृत इत्येव व्यवहारो भवति न तु दण्डेन, एवम् अङ्कुरः कृतः इति व्यवहारो न भवति उत्पन्न इति भवति। अथवा उत्पन्नेऽपि घटे मया कृतस्त्वयाऽकृतोऽयमिति कृताकृत व्यवहारोयत्नान्तर्भावेनैव

कर्तृपदार्थः, स एव च कर्तृप्रत्ययानां मुख्यार्थः, अचेतनस्तु भाक्त इति नयपथेन निरीक्ष्यते तदा बोधयन्नित्यत्र प्रतीयमानोत्प्रेक्षा संभवत्येव ।

अमुमेव चाशयं मनसिकृत्य मम्मटभट्टैः 'स्वस्वहेत्वन्वयस्योक्तिः इत्यादिलक्षणं निदर्शनान्तरस्य कृत्वा उदाहृते—

'उन्नतं पदमवाप्य यो लघुर्लीलयैव स पतेदिति ध्रुवम् ।
शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः ॥'

---

सम्पद्यते । यस्य घटविषयकोयत्नोजातस्तेन कृतोऽन्येनाकृत इति कृञ् धातोर्यत्नोऽर्थ उपेयः । तदुत्तरस्य कर्तरि विहितस्य तृच आश्रयोऽर्थः । तथा च धात्वर्थानुकूलयत्नाश्रयः कर्तृ पदस्यार्थः सम्पन्नः । तादृशोयत्नाश्रयः कर्ता कर्तरि कृदिति पाणिनिसूत्रविहितकर्तृप्रत्ययानां मुख्योऽर्थः । परम् जानाति इच्छतीत्यादौ ज्ञानेच्छयोरनुकूलयत्नस्याभावात् तिप् प्रत्यस्य आश्रयमात्रमर्थः। ज्ञानाश्रय इच्छाश्रय इत्येव बोधः । स च निरूढलक्षणया । इत्येवोक्तं सविपयकेत्यादिना । इदमुपलक्षणं रथो गच्छति घटोनश्यतीत्यादीनाम् । अचेतने कर्तृपदप्रयोगोलक्षणयेत्यभिप्रायेण भाक्त इत्युक्तम् । एवं नैयायिकमतनिष्कर्षेण कर्तरि विहितशत्रन्तस्य बोधयन् पदस्य बोधानुकूलयत्नाश्रयार्थक तया तादृशस्य बोधनकर्तृत्वस्य उदयाचलेऽसम्भवात् सम्भावनमेव । यदि तु शब्दाभ्यामस्वरससम्वलितमप्युपपादनं काव्यप्रकाशव्याचिख्यापथिप्रयैव । तद्वीजन्तु रथोगच्छतीत्यादौ व्यापाराश्रये निरूढलक्षणाया अभिधासमशीलत्वात् तस्यापि बोधनाश्रयत्वकर्तृत्वस्य सम्भावनं न युक्तमिति । ताञ्च व्याचिख्यापयिषामाह अमुमेव ० नैयायिकमतसिद्धं बोधनकर्तृत्वम् । यो लघुः स उन्नतं पदमवाप्य लीलयैव ध्रुवं पतेत् । लघुत्वमपकृष्टगुरुत्वं योग्यताविरहश्च । उन्नतं पदमुच्चैस्तरं शैलाशिखरादि महतां योग्यं स्थानञ्च । तत्र पूर्वार्धप्रतिपाद्यः पतनं प्रति उन्नतपदप्राप्तिमत्त्वे सति लघुत्वं हेतुरितिकार्यकारणभावः । तत्र दृष्टान्तः सम्पद्यते उत्तरार्धः । शैलशिखरगतो दृषत्कणः, अनेनोन्नतपदप्राप्तिलघुत्वे दर्शिते । चारुमारुतकम्पितः, चारुत्वं मन्दत्वं लीलयैवेत्यस्य प्रतिबिम्बनम् । अधः पतति । ध्रुवमित्यस्य स्थाने ब्रुवन् इति पाठे दृष्टान्तत्वेन प्रतिपादयन्निति दृषत्कणस्य विशेषणम् । इदञ्च संभवद्वस्तुमूला निदर्शना चूडामणिपदे इत्यादिवत् ।

इतिपद्ये इतिपदोत्तरं बोधयन्बोधयितुं वा इत्यस्याभावादुत्प्रेक्षाया असंभवे बोधननिदर्शना युक्ता ।

'हालाहलं खलु पिपासति कौतुकेन
कालानलं परिचुचुम्बिषति प्रकामम् ।
व्यालाधिपं च यतते परिरब्धुमद्धा
यो दुर्जनं वशयितुं कुरुते मनीषाम् ॥'

---

स्वस्वहेत्वित्यादेः स्वस्य कार्यस्य स्वहेतोस्तत्कारणस्य च योऽन्वयः कार्यंकारणभावः सम्बन्धस्तस्योक्तिरित्यर्थः । केनचिद्व्याख्यात्रा स्वपदेन क्रियामात्रकार्यस्य ग्रहणं क्रियते, पण्डितराजेन तु कार्यमात्रस्येति ध्येयम् । बोधयन् ● बोधानुकूलयत्नादेर्दृपत्कणे अभावात् सम्भावना सम्भवेत् तादृशं पदं नास्तीति निदर्शना युक्ता । वैयाकरणमतेन तु बोधनकर्तृत्वस्यापि सत्त्वेनोत्प्रेक्षाऽऽशङ्कैव नास्ति । ब्रुवन्नितिपाठस्तु न रसगङ्गाधरसम्मतोयतस्तत्सत्त्वे वचनकर्तृत्वमादायैवोपपादनसम्भवे बोधयन्नित्यस्याध्याहारो निर्युक्तिकः स्यात् । बोधननिदर्शनेत्युक्तिस्त्वाक्षिप्तपर्यवसितबोधनमादायैव । तस्यानुपादानेऽपि क्वसूर्यप्रभव इत्यादाविव बोध्यम् । अत्रालङ्कारकौस्तुभकृतां वचनं संक्षिप्तम् । विस्तरस्तु तत्रैव द्रष्टव्यः लघुत्वोन्नतपदप्राप्तिपतनादीनां भेदेन वस्तुतोव्याप्तेरभावेऽपि अनुमानालङ्कारप्रयोजककविप्रतिभोत्थितानुमानस्यात्र सम्बलनादनुमानालङ्कारस्य स्फूर्तिर्भवति तथापि स्वरसतः प्रतिपाद्यकार्यकारणभावदृष्टान्तप्रतिपादनचमत्कृतिमपेक्ष्य कथमप्युदक्षरकल्पितानुमानालङ्कृतिचमत्कृतेरपकृष्टत्वात् । कार्यकारणभावमूलेऽपि पतनं लाघवे सत्युन्नतपदप्राप्तिजन्यं पतनत्वात् : पत्कणपतनवदित्यनुमाने दृषत्कणस्य दृष्टान्ततयोपपादनस्य उन्नतपदप्राप्तौ पातहेतुत्वोपपादनस्यानुपपत्तिः, असाधारण्यादि दोषश्च । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासोऽपि न तत्र समर्थ्यसमर्थकवाक्ययोरुभयोरपि कारणताया कार्यतायाश्चावच्छेदकं भिन्नं भिन्नं भवति । अत्र तु उन्नतपदप्राप्तत्वं कारणतावच्छेदकं पतनत्वंकार्यतावच्छेदकमेकमेवोभयोर्वाक्ययोः । दृष्टान्तालङ्कारवारणन्तु दृष्टान्तालङ्कारे प्रातिपादिततन्मतरीत्या बोध्यम् । हालाहलम् ● हालाहलं विषं, पातुमिच्छति परिचुम्बितुमिच्छति, प्रकामम् अत्यन्तम्, सर्पराजम् आलिङ्गितुम्, बुद्धिम् । बुद्धिश्चेच्छापर्यवसायिनी । अद्धा निश्चयद्यो-

**यथा वा—**

'व्योमनि बीजाकुरुते चित्रं निर्माति सुन्दरं पवने ।
रचयति रेखाः सलिले यस्तु खले चरति सत्कारम् ॥'

बीजाकरणं बीजप्रक्षेपपूर्वकं कर्षणम् ।

इदं चापरं बोध्यम्—

'यान्ती गुरुजनैः साकं स्मयमानाननाम्बुजा ।
तिर्यग्ग्रीवं यदद्राक्षीत्तन्निपत्राकरोज्जगत् ॥'

---

तकः । दुर्जनवशफलकेच्छाकरणस्य कौतुकपूर्वकविषपानेच्छया प्रलयाग्नि-चुम्बनेच्छया विषधरवरालिङ्गनेच्छया चाभेद आर्थः । व्योमनि ● बीजाकुरुते इत्यत्रकृञोद्वितीयतृतीयशम्बबीजात्कृषावित्यनेन डाच् प्रत्ययः । बीजेन सहकर्षतीत्यर्थं इति कौमुदीकारः । प्राग्बीजानि क्षेत्रे विकीर्य तदनन्तरं कर्षणम्, भवति चैवं कृषिकर्मणि गङ्गातरङ्गभङ्गभूरिकृतनवभूमिषु अशुष्कक्षेत्रविशेषेषु । अन्ये तु बीजशब्दस्य वृत्तिविषये बीजवापवृत्तितया बीजवापेन सह कर्षतीत्यर्थं वर्णयन्ति । प्रथमार्थ इव मूले आह **बीजाकरम्** ● द्वितीयार्थाभिप्रायेण मर्मप्रकाशः अन्यथा व्याचख्यौ मूलम् । खले सत्काराचरणस्य व्योमनि बीजाकरणेन पवने चित्रनिर्माणेन सलिले रेखाइचनया च सहाभेद औपम्यपर्यवसायी । **यान्ती** ● गुरु जनैः शाकं गच्छन्ती अनेन दृष्टनायकं प्रति स्फुटं चेष्टितुमसमर्थेति सूचितम् । परं हर्षवशात्स्मितयुक्त मुखकमला किमपि मनोगतं सूत्रयितुं यत् तिर्यक् अद्राक्षीत् तदेव तिर्यक् दर्शनं जगत् अव्यथयत् । निष्पत्रेत्यादी सपत्रनिष्पत्रादतिव्यथने इत्यनेन डाच् । पतन्ति शरा अनेनेति विग्रहे दाम्नीशसेत्यादि सूत्रेण ष्ट्रन् । बाणानां वेगाय पतनाय वा गुरुत्वसम्पादको-बर्हाकारः पुङ्खविशेषः पत्रम् । निर्गतं पत्रान्निष्पत्रम् । जगत्कामुकं प्रविश्य पुङ्खोऽपरपार्श्वेन निरसरत् । सर्वथा पुङ्खप्रवेशेना तव्यथा सूचिता । पुङ्खप्रवेशेऽल्पे नातिव्यथास्यादिति निरपदम् । अत्र शृङ्गारेऽपि रसे झयुसंयोगादीनां वर्णानामुपन्यासो न विपरीततामासादयति सहृदयस्य पण्डितराजस्यापि तु सपुङ्खशराणां विकटरूपताद्योतने तादृशानामेषां वर्णानामनुकूलतामेवेति ध्येयम् ।

अत्र 'भावप्रधानमाख्यातम्' इति यास्कोक्तरीत्या-क्रियाविशेष्यकबोधवादिनां शाब्द एवाभेदारोपः क्रिययोरिति मुखं चन्द्र इत्यादाविव रूपकमुचितम्। प्रथमान्तविशेष्यकबोध-वादिनां त्वार्थः स इति निदर्शनेति भेदः।

निष्पत्राकरणं च सपुङ्खशरस्यापरपार्श्वे निर्गमनात्पत्रराहित्यकरणम्।

इति रसगङ्गाधरे निदर्शनाप्रकरणम्।

अथ व्यतिरेकः—

उपमानादुपमेयस्य गुणविशेषत्त्वेनोत्कर्षो व्यतिरेकः।

---

**शाब्दएव** ● कामिनीकर्तृकं जगत्कर्मकं निष्पत्राकरणमित्यादिरीत्या पद्यत्रये बोधः। ननु समानविभक्तिपदोपात्तयोरर्थयोरभेदस्य शाब्दत्वेन वर्णनात् तस्यात्राभावेन कथमभेद इति चेत् समानतिङ्विभक्तित्वेनैव पण्डितराजेन रचनात्। किञ्चासौ नियमो नामार्थयोरेवान्वये न तु धात्वर्थेन सह। अत एव सोमेन यजेतेत्यत्र सोमपदार्थयागयोः, स्तोकं पचतीत्यादौ स्तोकफलयोरपि अभेदान्वयो दृश्यते। **प्रथमान्त** ● जगत्कर्मकभूतकालिकनिष्पत्रानुकूलकृतिमती कामिनीतिरीत्या बोध ऊह्यः। तथा च कर्तुरभेदेऽपि शाब्दे क्रिययोरेकधर्मिगततयाऽभेद आर्थः।

॥ इति निदर्शना ॥

॥ अथ व्यतिरेकालङ्कारनिरूपणम् ॥

सादृश्यस्य प्रकरणात्तदपेक्षया व्यतिरिच्य पृथक्कृत्य कथनं व्यतिरेकः स च योगार्थ उपमेयाऽपेक्षयोपमानस्यापि वैशिष्ट्यवर्णने स्वतः सिद्धेऽलङ्कृतिताविधुरेऽतिप्रसज्यते इति लक्षणं वर्णयति **उपमानाद्** ● तृतीयार्थः प्रयोज्यत्वं तथा च उपमानावधिको विशेषगुणप्रयोज्य उपमेयस्योत्कर्षो व्यतिरेक इति लक्षणवाक्यार्थः। उपमानविशिष्ट उपमेयोत्कर्ष इति यावत्। वैशिष्ट्यञ्च स्वनिष्ठापकर्षनिरूपकत्वं स्वाश्रयत्युपमेयवृत्तिगुणप्रयोज्यत्वञ्च।

प्रतिपादिवारणाय तृतीयान्तं वैधर्म्यपरम्। तत्र चोपमानतामात्रकृत एवोत्कर्षः, न वैधर्म्यकृतः साधर्म्यस्यैव प्रत्ययात्।

अधिकगुणवत्त्वमात्रम्, उपमानगतापकर्षमात्रं वा न व्यतिरेकस्वरूपम्, तयोरुपमेयोत्कर्षाक्षेपमन्तरेणासुन्दरत्वात्। अतएव न सादृश्याभावमात्रम्। उपमानादुपमेयस्यापकर्षेऽपि तत्संभवात् तस्य च वास्तवत्वेनासुन्दरत्वात्। उपमेयोत्कर्षविशिष्टत्वेन सादृश्याभावविशेषणे तस्यैवालंकारत्वौचित्यात्।

---

गुणविशेषवत्त्वेनेत्यस्य निवेशफलं दर्शयति **प्रतीपादि** ● प्रतीपशब्दस्य विपरीतमर्थः। य उपमेयतया प्रसिद्धस्तस्योपमानतया उपमानतया प्रसिद्धस्य चोपमेयतावर्णनात्। अन्येषां मते प्रतीपमलङ्कारान्तरं पण्डितराजमते चोपमाभेद इति प्राक् प्रतिपादितम्, प्रतीपे चोपमेयस्योपमानीकरणमुपमेयस्योत्कर्षप्रतीत्यर्थमेव। अतस्तत्रातिप्रसङ्गवारणाय तत्पदम्। ननूपमानस्याधिकगुणवत्तोपमानतावशादेवायाति। उपमेयस्योपमानताकरणेऽधिकगुणवत्ताऽपि जातैवेति प्रसङ्गावारणाद् व्याचष्टे **वैधर्म्यपरम्** ● **तत्र** ● प्रतीपे, मात्रपदस्य व्यावर्त्यमाह **नवैध** ●। **प्रत्ययात्** ● उपमानतावशादेवोत्कर्षवर्णने उपमायामपि व्यतिरेकप्रतीत्यापत्तिः। ननु लक्षणे उत्कर्षस्य कथं प्रवेशः, उपमानापेक्षयोपमेयस्य विशेषगुणवत्वम्, उपमेये विशेषगुणवत्तयोपमानसादृश्याभावो वा व्यतिरेकोऽस्तु इत्याशङ्क्य समाधत्ते **अधिकगुणवत्त्वम्** ● युक्तिमाह **तयोरूप** ● अधिकगुणवत्त्ववर्णने सादृश्याभाववर्णने वा यदि उपमेयोत्कर्षो न प्रतीयेत तदा चमत्काराभावादलङ्कारता न स्यात्। उपमेयोत्कर्षं विना निष्ठीवप्रायत्वात्। यदि ताभ्यामुत्कर्ष उपमेयस्यायाति तदोपमेयोत्कर्ष एव निवेश्यताम् अन्यथा तदप्रीतिकस्थलेऽतिव्याप्त्यापत्तेः। **तत्सम्भवात्** ● उपमेयस्य हीनगुणत्वादुपमानसादृश्याच्चोपमेयापकर्षस्थलेऽतिव्याप्तेः। इष्टापत्तौ बाधकमाह **तस्य च** ● तत्रालङ्कृतेरेवाभावात्। **विशेषणे** ● उपमेयोत्कर्षपर्यवसायी सादृश्याभावो व्यतिरेक इति लक्षणकरणे। **तस्यैव** ● उपमेयोत्कर्षस्यैव। **अलङ्कारत्व** ● अलङ्कारता

उदाहरणम्—

'अनिशं नयनाभिरामया रमया संमदिनो मुखस्य ते ।
निशि निःसरदिन्दिरं कथं तुलयामः कलयापि पङ्कजम् ॥'

अयं चोपमेयोत्कर्षकोपमानापकर्षकयोर्वैधर्म्ययोर्द्वयोरप्युपादानानुपादानाभ्यामेकतरानुपादानेन च तावच्चतुर्धा । सोऽप्युपमायाः श्रौतीत्वार्थीत्वाक्षिप्तत्वैर्द्वादशविधो भवन्सश्लेषनिःश्लेषत्वाभ्यां चतुर्विंशतिप्रकार इति प्राञ्चः ।

उदाहरणम्—

कटु जल्पति कश्चिदल्पवेदी यदि चेदीदृशमत्र किं विदध्मः ।
कथमिन्दुरिवाननं त्वदीयं सकलङ्कः स कलङ्कहीनमेतत् ॥'

अत्रोभयोरुपादानम् । उपमा च श्रौती ।

---

प्रयोजकत्वेत्यर्थः । तथा च व्यर्थविशेषणो दोषः । **अनिशम्●** नायकं प्रति मित्रस्योक्तिः । निरन्तरं दिवसे निशि च नेत्रयो रमणीयया शोभालक्ष्म्या मोदमानस्य ते मुखस्य, मुखमुपमेयं पङ्कजस्य नयनापेक्षया पङ्कजापकर्षवर्णनं न शोभते कस्यापि । नेत्राश्रिताऽपि शोभा ग्राह्या । अत्रोपमेये निश्यपि अविनाशिशोभावत्त्वमधिको गुणः प्रकर्षहेतुरुक्तः । उत्तरार्धे तु उपमानापकर्षः सादृश्याभावश्च । निशि निस्सरन्ती इन्दिरा यस्यैवंभूतं पङ्के जातं निकृष्टम् अंशेनापि तुलामदधानं कथं तुल्यं कुर्मः । करोत्यर्थे णिच् । नायिकां प्रति नायकस्य वचनं वा । प्रथमं भेदमाह **कटु●** कश्चिद् अल्पज्ञः यदि ईदृशं त्वदीयमाननमिन्दुरिवइति कटु जल्पति चेद् अत्र तद्वचने किं विदध्मः । उपेक्षणीयमेव तद्वच इति भावः । त्वदीयम् आननं कथमिन्दुरिव भवेत् । यतः स चन्द्रः कलङ्कसहितः । एतद् आननं कलङ्कहीनम् । नास्ति सादृश्यमिति भावः । सकलङ्कत्वनिष्कलङ्कत्वे वैधर्म्ये । उदाहरणसमन्वयमाह **उभयोरु●** उपमानापकर्षकस्य सकलङ्कत्वस्य उपमेयोत्कर्षकस्य कलङ्कहीनत्वस्य चेत्यर्थः **श्रौती●** इव पदरूपा । उपमेयोत्कर्षकस्यैकस्य द्युतिभेदाभावस्यो-

अत्रैव 'कथमिन्दुरिवाननं तवेदं द्युतिभेदं न दधाति यत्कदापि' इति कृते 'द्युतिभेदं खलु यो दधाति नित्यम्' इति वा कृते एकतरानुपादानम् । सा च ।

'कथमिन्दुरिवाननं मृगाक्ष्या भवितुं युक्तमिदं विदन्तु सन्तः' इति कृते हेतुसामान्यानुपादानम् । सा च ।

हेतुद्वये हि यस्यैवानुपादानं तस्याक्षेपेणावगतिः । उभयोरप्यनुपादाने तथैव, नत्वनवगतिः, व्यतिरेकस्योत्कर्षापकर्षरूपत्वात् । तयोश्च प्रयोजकज्ञानमन्तरेणानवबोधात् ।

एवम्—

'नयनानि वहन्तु खञ्जनानामिह नानाविधमङ्गभङ्गभाग्यम् ।
सदृशं कथमाननं सुशोभं सुदृशो भङ्गुरसम्पदाम्बुजेन ॥'

अत्रोभयोपादानम् । आर्थी च ।

---

पादानोदाहरणमाह अत्रैव● उपमानापकर्षकमात्रस्य द्युतिभेदस्योपादानोदाहरणमाह द्युतिभेदम्● सा च● श्रौतीच । उभयोरनुपादानं श्रौत्यामाह कथमिन्दुरिव● अनुपादानेऽपि प्रतीतिमाह हेतुद्वये● तथैव● आक्षेपेणोभयोरवगतिः ॥ व्यतिरेकस्य● हेतोः प्रतीतिमन्तरा उत्कर्षापकर्षयोः प्रतीत्यभावेनोपमेयोत्कर्षरूपस्य व्यतिरेकस्यापि प्रतीतिर्न स्यात् । तयोश्च● उत्कर्षापकर्षयोः प्रयोजकं ज्ञानं तद्धेतुज्ञानम् । एवं चतुर्विधां श्रौतीमुदाहृत्य चतुर्विधामार्थीमुदाहरति नयनानि● इह लोके प्रायः सर्वासां सुन्दरीणां नयनानि खञ्जरीटसम्बन्धिनो येऽङ्गभङ्गा अङ्गमोटनानि भङ्गीति पाठेऽङ्गरचना, तेषां पात्रतां वहन्तु । तत्कृतं सौन्दर्यमाश्रयन्तु, खञ्जरीटाङ्गभङ्गस्य नयनभङ्गस्य चाभेदात् पदार्थनिदर्शनेयम् । अस्यांशस्य वक्ष्यमाणनिदर्शनात्वेऽपि उत्तरार्धव्यतिरेकोदाहरणांशचमत्कृतिपरिपुष्ट्य उपन्यासः । परमस्याः सुदृशः सुशोभम् आननं रात्रिविनष्टशोभेन कमलेन कथं सदृशम् ? सुशोभत्वमुत्कर्षकं भङ्गुरसम्पत्त्वमपकर्षकम् । सादृश्यविशिष्टवाचकसदृशशब्दादार्थी । उत्कर्षानुपादाने उदाहरणतां सम्पादयति

'वदनं तु कथं समानशोभं सुदृशो भङ्गुरसम्पदाम्बुजेन' [ इति ] 'शाश्वतसम्पदम्बुजेन' इति च कृते एकतरानुपादानम्। सा च।

'सदृशं कथमाननं मृगाक्ष्या भविता हन्त निशाधिनायकेन' इति कृते उभयानुपादानम् । सा च ।

पूर्वार्धे तु निदर्शनैव ।

'कतिपयदिवसविलासं नित्यसुखासङ्गमङ्गलसवित्री ।
खर्वयति स्वर्वासं गीर्वाणधुनोतटस्थितिर्नितराम् ॥'

अत्रेवादेः सादृश्यमात्रशक्तस्य सदृशादेश्च तद्विशिष्टशक्तस्य शब्दस्याभावाच्छुत्यर्थमार्गोल्लङ्घिनी खर्वीकरणेनाक्षिप्तैवोपमा।

अत्रैव 'निःसङ्गैरभिलषिता' इत्याद्यचरणनिर्माणे 'संतापदुरन्तचिन्तयाकुलितम्' इति द्वितीयचरणनिर्माणे वा

---

वदनं तु● अपकर्षानुपादानस्याह शाश्वत● नित्यशोभमित्यर्थकं प्रथमान्तं वदनस्य विशेषणम् । निशाधिनायकेन चन्द्रेण । सकलङ्कत्वनिष्कलङ्कत्वयोरुपादानाभाव इत्याह उभयानुपादानम्● । पूर्वार्धे तु● व्यतिरेकस्य व्यावृत्तिः ? खञ्जरीटाङ्गभङ्गस्य नयनाङ्गाभङ्गस्यचाभेदात् पदार्थनिदर्शनेयम् । चतुर्विधामार्थीमुदाहृत्य चतुर्विधामाक्षिप्तामुदाहर्तुमुपक्रमते कतिपय● असङ्गब्रह्मरूपस्य सङ्गविरहरूपार्थत्वे विशेषणत्वेन पूर्वनिपातापत्तिः नित्यसुखमोक्षस्य मङ्गलस्य चोत्पादिका गङ्गायास्तटेस्थितिः, क्षीणे पुण्ये मर्त्यलोके विशन्तीति प्रसिद्धया सावधिकसुखस्वरूपं स्वर्गवासं नितरां न्यूनं करोति। आक्षिप्ततां समनुगमयति अत्रेवादेः● मार्गोलङ्घिनी● श्रौतीत्वार्थीत्वविरहिणी । खर्वीकरणेन● कियता धर्मेण न्यूनतायामपि अन्येन साम्यता वर्तते । सर्वथा सादृश्याभावे न्यूनतोपपादनं व्यर्थं स्यात् । निस्सङ्गै● योगिभिर्मुमुक्षुभिः। अत्रापकर्षकस्यानुपादानम् । सम्पात● स्वर्गस्य विनाशरूपो योदुष्परिणामस्तच्चिन्तया व्यग्रम्। तस्यापि दुःख-

एकतरानुपादानम् । सा च । 'सर्वानर्वाचीनान्निर्वास्य मनोरथा-ननन्यजुषाम्' इति पूर्वार्धे तदनुपादानमिति ।

'क्रूरसत्त्वाकुलो दोषाकरभूस्तोयधिर्यथा ।
न तथा त्वं यतो भूप स्थिरधीरसि निर्मलः ॥'

अत्रोपमा श्रौती । श्लेषस्तु स्फुट एव ।

'राजन्प्रचण्डमार्तण्डमण्डलोद्दण्डशासन ।
कथमक्रूरसत्त्वस्त्वं पयोधिरिव गीयसे ॥' इति,

'कथं वार्धिरिवासि त्वं यतः स विषभागयम्' इति वा क्रते एकतरानुपादानम् ।

'महेन्द्रतुल्यं कवयो भवन्तं वदन्तु किं तानिह वारयामः'
भवान्सहस्रैः समुपास्यमानः कथं समानस्त्रिदशाधिपेन ॥'

अत्रार्थी । त्रिर्दश त्रिदशास्त्रिंशत्, तेषामधिपः । 'संख्यया-

---

संमिश्रणं दर्शितम् । अत्रोत्कर्षकस्यानुपादानम् । सा च ● अक्षिप्ता च । उभयानुपादानस्योदाहरणतां रचयति । स्वान्यानुपासकत्वे सति स्वोपासकानां सर्वान् ऐहिकान् मनोरथान् निर्वास्य नित्यसुखरूपे आसङ्गं सम्पादयन्तीत्या-क्षिप्यते । श्लिष्टभेदं संक्षेपेण दर्शयति क्रूरसत्त्वा ● क्रूरसत्त्वैर्यादोभिराकुलो व्याप्त इति तोयधिपक्षे, भूपपक्षे तु सत्त्वगुणेन व्याप्त इति केचित् । अन्ये तु दुष्टजीवानाकुलयति व्यग्रीकरोतीति । दोषाकरस्य दूषणसमूहाभेदेनाध्यवसि-तस्य चन्द्रस्योत्पत्तिस्थानम् । अन्यत्र चन्द्रवंशीयः । क्रूरसत्त्वदोषसमूह-वत्त्वमपकर्षकम् । श्लिष्टमर्थान्तरं निर्मलत्वञ्चोत्कर्षकम् । श्रौती यथा पद-सन्निधानात् । अन्तःसत्त्वाकुल इत्यपि पाठः । अपकर्षकानुक्तेरुदाहरणमाह राजन् ● अत्युष्णो यः सूर्यमण्डलतद्वदुग्रं शासनं यस्यैवंभूतो हे राजन् त्वम् अक्रूरसत्त्वस्तदा पयोधिरिव कथं गीयसे यतोऽसौ क्रूरसत्त्वः । उत्कर्षानुक्तौ द्वितीयार्धं परिवर्तयति कथं वार्धि ● अयं समुद्रो विषयुक्तः । उपमा-निषेधपूर्वकमुदाहरणमारचयति महेन्द्र ● सहस्रैः सामन्तैः । त्रिदशादेवाः । अपकर्षकं त्रिंशत्सङ्ख्याकानामाधिपत्यम् । अत्रार्थी ● समानशब्दात् ।

व्ययासन्नादूराधिकसंख्याः संख्यये, बहुव्रीहौ, 'बहुव्रीहौ संख्येये'— 'इति डचि च तत्पुरुषः। वृत्तौ गतार्थत्वात्सुचो न प्रयोगः। त्रयो वा दश वा इति बहुव्रीहिर्वा।

'भवान्सदा रक्षितगोत्रपक्षः समानकक्षः कथमस्य युक्तः' इति, 'कथं निरस्ताखिलगोत्रपक्षः समानकक्षस्तव युज्यते सः' इति वा कृते एकतरानुपादानम्।

इदं तु बोध्यम्—इहोभयानुपादानभेदत्रयं दुरुपपादम्। वैधर्म्यानुपादाने हि किमाश्रयः श्लेषः स्यात्? न च यत्र द्विज-सुरालयमातरिश्वादिशब्दवेद्येषूपमानोपमेयेषु स्वशब्दोपात्त एव श्लेषो व्यतिरेकोत्थापकस्तत्रैतदुदाहरणं सूपपादमिति वाच्यम्। तत्र स्वशब्दवेद्यस्यैव वैधर्म्यस्य संभवात्। इत्थं च चतुर्विंशति-भेदा इति प्राचामुक्तिर्विपुलोदाहरणाभिज्ञैर्यथा कथंचिदुप-पादनीया। किं चोपमाप्रभेदाः सर्वे एवात्र संभवन्तीत्यलं चतुर्विंशतिभेदगणनया।

---

**डचिच** ● टिलोपेनादन्तत्वमधिपशब्देन तत्पुरुषः। **गतार्थत्वात्** ● त्रिरावृता दशेत्यर्थस्य बहुव्रीहिवृत्तिप्रतिपादितत्वादुक्तार्थानामप्रयोग इति न्यायेन सुचोऽप्रयोगः। **बहुव्रीहिर्वा** ● उक्तसूत्रेणैव, त्रयाणां दशानाम्वाऽधिपेनेत्यर्थोऽस्मिन् पक्षे सुजर्थाभावे। द्वन्द्वे तु त्रयोदशेति स्यात्। अपकर्षकानुक्तेरुदाहरण-माह–भवान् सदा ● गोत्रं वंशः। पक्षान्तरे पर्वताः युज्यते सः ● पुराणेषु पर्वतपक्षच्छेदनमिन्द्रस्य प्रसिद्धम्। समानकक्षः सदृशः। उत्कर्षकानुक्तिरत्र। उभयानुपादानानुक्तेर्न्यूनतामसंभवमुखेन परिहरति। **इदन्तु** ●। **किमाश्रयः** ● अर्थान्तरस्य प्रकृतोपयोगित्व एव श्लेषः समुत्तिष्ठति। उपयोगश्च वैधर्म्यो-पस्थापनम्। वैधर्म्यानुपस्थानं श्लेषश्च विरुद्धः। उपमानोपमेयवाचकान्येव श्लिष्टपदानि धर्मवाचकानि च न श्लिष्टानि तस्योदाहरणतामाशङ्कते **न च** ● द्विजा विप्रा दन्ताः पक्षिणश्च। सुरालयो नाको मद्यगृहं मद्यविनाशश्च। मातरिश्वा वायुरन्तरिक्षे गमनशीला अन्ये वा। **स्वशब्द** ● उपमानोपमेय-

नन्वस्यालंकारस्य वैधर्म्यमूलस्योपमाप्रतिकूलत्वमेवोचितम्, न तूपमागर्भत्वम्। तस्याः साधर्म्यमूलकत्वात्। अस्य च तन्निषेधरूपेणैव प्रवृत्तेः। न चेष्टापत्तिः। सिद्धान्तभङ्गप्रसङ्गात्। सत्यम्। यद्‌गुणपुरस्कारेण यस्य यत्सादृश्यनिषेध उत्कर्षपर्यवसायी तस्य तद्‌गुणपुरस्कारेण तत्सादृश्यस्याप्रतिष्ठानेऽपि गुणान्तरेण सादृश्यप्रत्ययस्य दुर्वारत्वात्। यदि च तत्सादृश्यसामान्यनिषेधो विवक्षितः स्यात् गुणविशेषपुर-

---

वाचकानामेव वैधर्म्योपस्थापकत्वात्। तथा च तत्राऽपि श्लेषसत्त्वे वैधर्म्यानुपस्थानं न सम्भवतीति। उपमाप्रति॰ उपमाप्रतीतिप्रतिबन्धकत्वम्। सिद्धान्तभङ्ग॰ सिद्धान्तश्च व्यतिरेकस्योपमागर्भत्वम्। व्यतिरेकचमत्कारे सादृश्यचमत्कृतेर्गुणीभूतत्वमेव नतु सर्वथाऽसत्त्वम्। कथमन्यथोपमानोपमेययोरेव व्यतिरेकश्चमत्कारी? सादृश्यस्पर्शमन्तरोपमानोपमेयभावस्यैवासम्भवात्। उपमानोपमेयभावोऽस्ति सामान्यसादृश्यनिषेधोऽप्यस्तीति विरुद्धं वचः। गुणीभूतत्वमेवाभिप्रेतं 'हतप्रभमिव वन्दीकृतमिव' इति वक्ष्यमाणग्रन्थस्य। मर्मप्रकाशस्तु अग्रे किञ्चेत्यादिना व्यतिरेकचमत्कारेण सह गुणान्तरकृतसादृश्यचमत्कृतिं योजयन्नपि पूर्वमित्थं प्रतिपादयन् दृश्यते। अत्रेदं चिन्त्यम्। कथमिन्दुरिवाननं त्वदीयमिति पद्ये कलङ्कवत्त्वेन तद्राहित्येन वा सादृश्यं न प्रसिद्धमुपपत्तिविषयो वा। यस्य निषेधे कथंशब्देन प्रतिपादिते गुणान्तरसादृश्यं प्रतीतिपथमवतरेत्। किन्त्वन्यधर्मेण प्रसिद्धसादृश्यस्यैवेदृशाधिकन्यूनत्वप्रतिपादनद्वाराऽभावः प्रतिपाद्यते। अपकर्षो वा। स चाविशेषात्सर्वधर्मप्रयुक्तस्यैवेति गुणान्तरेण सादृश्यप्रत्यय इति रिक्तं वचः। कथं तुल्यामः कलयाऽपि पङ्कजम् इत्यादौ सर्वथैव सादृश्यनिषेधप्रतीतेश्च। तस्माद्द्वयोरेतादृशन्यूनत्वाधिक्यवर्णनाभावे सादृश्यं पर्यवस्यतीत्येतावतैवोपमागर्भत्वव्यवहारः। सोऽपि कुमुदादतिरिच्यते मुखमित्यादौ व्यतिरेकस्यालङ्कारत्वाभावाय इति। चिन्त्यता चास्यादसीयस्फोकरणाय। तथाहि उपमानोपमेयभावमहिम्ना सामान्यतः प्रसिद्धं सादृश्यं व्यतिरेकेण विशेषधर्मेण पर्यवस्यतीत्यत्र किं बाधकम्? नह्युपमानोपमेयभावोऽपि विशेषधर्मेण तथा सति विशेषधर्मोपादानस्य वैयर्थ्यादित्यलं पल्लवितेन।

स्कारोऽनर्थकः स्यात्। धनेनायमस्मादधिकइत्युक्ते विद्यया रूपेण कुलेन च सम इति सर्वजनीनप्रत्ययात्। एवं च प्रतीयमानमपि सादृश्यं गुणान्तरकृतनिषेधोत्थापितेनोत्कर्षेण हतप्रभमिव बन्दीकृतमिव न चमत्कारविशेषमाधातुं प्रभवतीति प्राचामाशयः।

अत्र चालंकारे क्वचिच्छाब्दसादृश्यनिषेधाक्षिप्तावुपमेयोत्कर्षोपमानापकर्षौ, क्वचिच्च शाब्देनोपमेयोत्कर्षेणाक्षिप्तावुपमानापकर्ष-सादृश्याभावौ, क्वचित्तादृशेनोपमानापकर्षेणाक्षिप्तावुपमेयोत्कर्ष-तदभावौ तथा। तत्राद्यः प्राचीनरीत्या सभेद उदाहृतः। द्वितीयतृतीयावपि प्रायशस्तावद्भेदावेव।

तत्र दिङ्मात्रमुदाह्रियते—

'निशाकरादालि कलङ्कपङ्किलाद् गुणाधिकं निर्मलमाननं ते।
अनल्पमाधुर्यकिरोऽधरादिमा गिरोऽधरा गुप्तरसाः कवीनाम्॥'

अत्र पूर्वार्धे उपमेयोत्कर्षः शाब्दः। उपमानापकर्ष-सादृश्याभावावाक्षिप्तौ। द्वितीयार्धे उपमानापकर्षः शाब्दः। उपमेयोत्कर्ष-सादृश्याभावावाक्षिप्तौ।

---

रोऽनर्थकः● नसदृशमित्येतावतैव गतार्थत्वात्। विशेषधर्मेणाधिक-न्यूनत्वे साधारणधर्मान्तरेण सादृश्यप्रत्ययेऽनुभवं दर्शयति धनेना● एवं तर्हि सादृश्यप्रतीत्यनुरोधेनैवालङ्कारव्यवस्था आपद्येतेत्याशङ्क्य समाधत्ते एवञ्च● विशेषम्● उत्कर्षचमत्कारादुत्कृष्टम्। शाब्दसादृश्य● कथं तुल्यामः कथमिन्दुरिवाननमित्यादौ शब्दतः कथं शब्देन निषेधः। तदभावौ● तत्पदेन सादृश्यम्। तथा● चमत्कृतिसम्पादकौ। प्रायशः● केचन तदन्तर्गता इत्यपि सूचितम्। निशाकरा● हे आलि कलङ्कदूषिताच्चन्द्रात् निशाकरशब्देनान्धकारप्रियताऽपि सूचिता। निर्मलं तवाननं गुणेनाधिकम्। अत्राधिकशब्देनाननस्योत्कर्षोऽभिधीयते। तव बहुमाधुर्यस्य विक्षेपकात्प्रसारकादधरात् कवीनां बहिर्न दृश्यते रसो यत्र अन्यत्र विक्षेपो दूरे तिष्ठतु

एवं क्वचिद् द्वयोस्त्रयाणां वा शाब्दत्वं संभवदपि नातीव हृद्यमिति नोदाहृतम्।

क्वचिच्च त्रयमप्याक्षिप्तमेव।

यथा—

'अपारे किल संसारे विधिनैकोऽर्जुनः कृतः।
कीर्त्या निर्मलया भूप त्वया सर्वेऽर्जुनाः कृताः॥'

'अशीतलोग्रश्चण्डांशुरनुग्रशिशिरः शशी।
उग्रशीतस्त्वमेकोऽसि राजन्कोपप्रसादयोः॥'

यथा वा—

'स तु वर्षति वारि वारिदस्त्वमुदाराशय रत्नवर्षणः।
स कुहू-रजनी-मलीमसस्त्वमिहान्तर्बहिरेव निर्मलः॥'

अत्रोपमान-तद्विशेषणोपादानसामर्थ्यादाक्षिप्त एव व्यतिरेकः, न तु व्यङ्ग्य इति कदापि भ्रमितव्यम्। सत्यनुपपत्तिलेशे व्यञ्जनाया अप्ररोहात्। इह च राजविशेषणस्य यथाकथं-

---

एवंभूता गिरोऽधरा आकृष्टाः। त्रयमपि● उपमेयोत्कर्षोपमानापकर्षसादृश्याभावत्रयम्। अर्जुनः● केवलमर्जुननामको वृक्षः शुक्लः कृतः। सर्वेऽर्जुनाः●वस्तुमात्रं शुक्लं कृतम्। अनेन वैधर्म्येण त्वत्पदार्थे ब्रह्मसादृश्याभावो ब्रह्मापेक्षया उत्कर्षः ब्रह्मण्यपकर्षश्चाक्षिप्यते। अशीतलोग्र● चण्डांशौ सूर्ये शीतं नास्ति, शशिन्युग्रता नास्ति। त्वयि तूभयम्। सूर्याचन्द्रमसोः सादृश्याभावः तदपेक्षया राज्ञ उत्कर्षस्तयोश्चापकर्ष आक्षिप्यते। स, वर्षति● हे उदारहृदय? स वारिदस्तु वारिमात्रं साधारणं वर्षति। त्वन्तु रत्नं वर्षसि। अत्र वारिदापेक्षयोत्कर्षः। चन्द्रोऽमारात्रौ मलीनः मेघोऽमारात्रवन्मलीन इति व्याख्या सम्यक्! त्वन्तु इह जगति अन्तर्बहिश्च सर्वदा स्वच्छ एव। चन्द्रमेघापेक्षयोत्कर्षः। अत्रोत्कर्षरूपो व्यतिरेक आक्षिप्त एव अर्थापत्त्या प्रतीयते। अर्थापत्तिविषयो न व्यञ्जनाविषय इति व्यञ्जनाभावनाभावितहृदयकं प्रमाणम्। इति स्फोरयति अत्रोप●। अप्ररोहात्●

चित्स्तुत्यर्थत्वेप्युपमानतद्विशेषणोपादनस्य नृपोत्कर्षमन्तरेणा-नुपपत्तेर्जागरूकत्वात् ।

यत्र तूपमानतद्विशेषणोपादानमन्तरेणैवोपमेयविशेषणैः 'सुन्दरो देवदत्तः' इत्यादाविव वस्तुस्थितिप्रकाशनेन कृतार्थैरप्याकूतविशेषेण स्वविलक्षणविशेषणविशिष्टधर्म्यन्तरापेक्षया वर्ण्यस्योत्कर्षः प्रतीयते स व्यञ्जनाविषयः ।

यथा—

'न मनागपि राहुरोषशङ्का
न कलङ्कानुगमो न पाण्डुभावः ।
उपचीयत एव कापि शोभा
परितो भामिनि ते मुखस्य नित्यम् ॥'

अयं व्यतिरेकध्वनिरर्थशक्तिमूलः ।

यत्त्वलंकारसर्वस्वकार उपमानादुपमेयस्य न्यूनत्वेऽपि व्यतिरेकमाह । वैलक्षण्यमात्रस्य व्यतिरेकत्वात् । उदाजहार च—

---

अर्थापत्त्या कवलीकृतत्वात् । **स्तुत्यर्थत्वेऽपि** • एतावतैव राजरत्यङ्गतया व्यतिरेको व्यज्यत इति न भ्रमितव्यम् अनुपपत्तिविरह एव व्यञ्जनाया उत्थानात् । मेघविशेषणमलीमसत्त्वस्य नृपोत्कर्षमन्तरेणानुपपत्तेः । कीदृशस्तर्हि व्यतिरेको व्यङ्ग्य इति चेदाह **यत्र तू** • उपमानस्य तद्विशेषणानाञ्चानुपादानं यत्रेत्यर्थः । **कृतार्थैः** • तेनानुपपत्तिविरहः सूचितः । आकूतोऽभिप्रायः । **स्वविलक्षण** • स्वमुपमेयविशेषणानि तद्विलक्षणानि उपमानविशेषणानि तद्विशिष्टं धर्म्यन्तरमुपमानम् । **नमनागपि** • अनुगमः सम्बन्धः । पाण्डुभावः पाण्डुरता । मुखपक्षे विरहजन्यः पाण्डुरनामको रोगः । अत्र प्रस्तुतविशेषणविशिष्टचन्द्रस्योपादानमन्तरेण मुखसम्बन्धितयोपात्तैरपि वस्तुस्वरूपप्रकाशकैरुपपद्यमानै राहुदोषकलङ्कसम्बन्धपाण्डुरत्वाभावैरभिप्राय-

'क्षीणः क्षीणोऽपि शशी भूयो भूयोऽपि वर्धते सत्यम् ।
विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु ॥'

यच्च तद्व्याख्या । विमर्शिनीकारः स पूर्वपक्षसिद्धान्तं व्याचख्यौ, तथाहि—'नन्वत्रोपमानादुपमेयस्य न्यूनत्वं व्यतिरेक इति न युक्तम् । तस्य हि वास्तवत्वेनाहृद्यत्वात् । यौवनस्य चास्थिरत्वे प्रतिपाद्ये चन्द्रापेक्षयाधिकगुणत्वमेव विवक्षितम्—यदेतच्चन्द्रवद् यातं सन्न पुनरायातीति । यतोऽत्र चन्द्रवद्गतं सद् यौवनं यदि पुनरागच्छेत्तत्प्रियं प्रति चिरमीर्ष्याद्यनुबन्धो युज्येत । इदं पुनर्हतयौवनं यातं सत्पुनर्नागच्छतीतीर्ष्याद्यन्तराय-परिहारेण निरन्तरतयैव प्रियेण सह जनुः सफलयितव्यम् ।

---

विशेषेण राहुग्रसनकलङ्कसम्बन्धिपाण्डरचन्द्रापेक्षया मुखस्योत्कर्षः प्रतीयते । क्षीणः क्षीणोऽपि● नायकं प्रति मानवशादीर्ष्यालुं नायिकां प्रति तद्वयस्याया-युक्तिरियम् । पुनः पुनः क्षयति पुनः पुनश्चाभिवर्धते । यौवनन्तु गतं सत् न पुनर्निर्वतत इति मानवशया यौवनमेव व्यर्थतां नीतं भवेदितिमानं जहीत्यर्थः । उपमाने क्षयोऽभिवृद्धिश्च द्वौ गुणौ प्रतिपादितावुपमेयेऽभिवृद्धिस्वरूप-पुनरागमनगुणस्याभावकथनादुपमेये न्यूनगुणता । नोपमेयस्योत्कर्ष एव व्यतिरेकोऽपि तु अपकर्षोऽपि । उपमानोपमेययोर्वैलक्षण्यशब्दोदितवैधर्म्य-मात्रस्य व्यतिरेकत्वात् । मात्रशब्देन उपमानवैधर्म्योपमेयवैधर्म्ययोर्वैधर्म्य-विशेषयोर्लक्षणे प्रवेशो व्यवच्छिद्यते । इति ग्रन्थकारमतम् । वास्तवत्वेन● सर्वत्रैवोपमानापेक्षयोपमेयस्य न्यूनत्वं प्रसिद्धम् । नवीकृतत्वाभावेना-चमत्कारितद्वर्णनम् । विवक्षितम्● अस्थिरत्वगुणश्चन्द्रापेक्षयाधिको विवक्षित इति भावः । अस्थिरत्वमेव नपुनरायातिशब्देन स्फोरयति यदेतच्च● अस्थिरत्वं न विवक्षितं स्यात्तदा प्रकृतप्रातिकूल्यं स्यादिति दर्शयति यतोऽत्र● तस्मादधिकगुणत्वे विवक्षिते कथं न्यूनत्वस्योदाहरण-मिति शङ्काग्रन्थः । अथवाऽत्र प्रकरणे उत्कृष्टोऽधिकशब्दार्थोऽपकृष्टश्च न्यूनशब्दार्थो विवक्षितः । चन्द्रापेक्षया न्यूनगुणस्यापकृष्टगुणस्य वा यौवने प्रतिपादनं प्रकृतानुकूलं रसपरिपोषकतया हृद्यञ्चेति समाधत्ते इदं पुनर●

धिगीर्ष्याम्। त्यज प्रियं प्रति मन्युम्। कुरु प्रसादम्। इति प्रियवयस्योपदेशे प्रियं प्रति कोपोपशमाय चन्द्रापेक्षया यौवनस्यापुनरागमनं न्यूनगुणत्वेन विवक्षितमिति न्यूनत्वमपि व्यतिरेकः। रसपोषकतया चास्यापि हृद्यत्वम्' इति।

तदुभयमप्यसत्। अस्मिन् हि प्रियहितकारिण्या वचने चन्द्रादप्यधिकगुणत्वमेव विवक्षितम्, न न्यूनगुणत्वम्। चन्द्रो हि पुनः पुनरागमनेन लोके सुलभः। अत एव न तादृशमाहात्म्यशाली। इदं च पुनर्यौवनमपुनरागमनेनातिदुर्लभतरत्वादत्युत्कृष्टमिति मानादिभिरन्तरायैः शठजनश्लाघनीयैः विदग्धया भवत्या मुधा गमयितुमसांप्रतमिति तावदुपात्तगुणकृतमुत्कृष्टत्वं स्फुटमेव। सकलसुखनिदानत्वाद्यनुपात्तगुणकृतोऽप्युत्कर्षोऽत्र वाक्यार्थपरिपोषाय सहृदयहृदयसरणिमवतरति। अन्यथा किमित्यस्य कदर्ययौवनस्य कृते मया मानाद्विरंस्यते, यातु नाम यौवनमिति प्रतिकूलेनार्थेन प्रकृतार्थस्यापुष्टतापत्तेः।

किं च यत्र क्वापि शाब्द उपमेयस्यापकर्षस्तत्रापि स तस्य वाक्यार्थपर्यवसायितयोत्कर्षात्मना परिणमति। यथा—

---

हतशब्देनापकृष्टत्वं प्रतिपादयितुमिष्टम्। तदुभयम् ● मूलटीकाप्रतिपादनद्वयमित्यर्थः। अत्रत्या सरला उभयशब्देनान्यत्प्रतिपादयति तच्च चिन्त्यं सुधीभिः। तादृशा ● यौवने यद् दुर्लभतरत्वं माहात्म्यं तादृशम्। शठजन ● सज्जनस्य सत्कर्मण्यन्तरायं शठाः समीचीनं मन्यन्ते, उपात्तगुणकृतमित्यनेन दुर्लभतरत्वस्य गुणस्योपादानमुक्तम्। अपुनरागमो दुर्लभतरत्वम्। विदग्धया ● मूढया तु स्वहितप्रतिकूलमाचर्यते न प्रवीणया। असांप्रतमयुक्तम्, अनुपात्तगुणेनापि यौवनस्योत्कर्षं दर्शयति सकलसुख ● सर्वानन्दकारणतया। अन्यथा ● यौवनस्य महात्म्यविवक्षाया अभावे। कदर्यं ● न्यूनगुणस्यापकृष्टगुणस्य वा यौवनस्याप्रकृतार्थ ● वयस्यायायुक्तेर्मानापनोदनप्रयोजनस्यासिद्ध्यापत्तेः। शाब्दोऽप्यपकर्ष उत्कर्षात्मना परिणमत इति सादाहरणमाह किञ्च यत्र ● निरपराधानां द्रोहो हालाहलविषादपि नीचः।

'द्रोहो निरागसां लोके हीनो हालाहलादपि ।
अयं हन्ति कुलं साग्रं भोक्तारं केवलं तु सः ॥'

अत्र हीन इत्यपकर्षो दारुणताधिक्यरूपोत्कर्षात्मना परिणमति । एवम्—

'इन्दुस्तु परमोत्कृष्टो यः क्षीणो वर्धते मुहुः ।
धिगिदं यौवनं तन्वि क्षीणं न पुनरेति यत् ॥'

इत्यादावुपात्तस्यापुनरावर्तित्वस्य तद्धर्मस्य मानप्रतिकूलतया द्वेषेणैव धिक्कारादिकथनम्, न तु वास्तवापकर्षेण, दुर्लभत्वस्य प्रियसमागमोल्लासकत्वस्य चोत्कर्षस्य स्फुटत्वात् ।

यदपि कुवलयानन्दकृतालंकारसर्वस्वोक्तार्थानुवादकेन न्यूनतायामुदाहृतम्—

"रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै—
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि ।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः ॥'

---

नीचत्वं कुत्सिताचरणे ततोऽधिकत्वात् । तदधिककुत्सिताचरणमुत्तरार्धेनोक्तम् । इन्दुस्तु● अत्र मानिन्या उक्तौ धिक्कारेण यौवनस्य प्रतीयमानोऽप्यपकर्ष उत्कर्षतयैव परिणमते । ननु अपुनरावर्तित्वेन न्यूनत्वमेवाभिप्रेतमिति चेदित्याशङ्कानिवारणायाह मानप्रतिकूलतया●तथा विवक्षायां मान एव न तिष्ठेत् । उत्कर्षकमपि दर्शयति दुर्लभत्वस्य● एवञ्च क्षीणः क्षीण-इत्यादावपि उपमेयस्य यौवनस्यैवोत्कर्ष इति सिद्धान्तितम् । अलङ्कार-कौस्तुभकृतस्तु चन्द्रयौवनक्षययोरेवोपमानोपमेयभावः । चन्द्रक्षयस्तु वृद्धि-युक्ततया अपकृष्टः । यौवनक्षयस्तु तस्मिन् शरीरे पुनरप्राप्यतयोत्कृष्टः । इति व्याचक्षते । क्तार्थानुवादकेन● एतावतातत्खण्डनेऽपि सर्वस्वकारखण्डन-युक्तिरनुगमनीयेति सूचितम् । रक्तस्त्वम्●सीताहरणोत्तरं श्रीरामस्या-शोकतरुं प्रत्युक्तिः ।

अत्र सशोकत्वेनाशोकापेक्षयापकर्षः पर्यवस्यति" इति, तदपि चिन्त्यम्, रत्याद्यनुकूलतया कुतश्चिदङ्गात् भूषणापसारणं यथा शोभाविशेषाय भवति, एवं प्रकृते उपमालंकारदूरीकरणमात्रमेव रसानुगुणतया रमणीयम्, न व्यतिरेकः। अत एवासमालंकारं प्राञ्चो न मन्यन्ते। अन्यथा तवालंकारान्तरतया तत्स्वीकारापत्तेः।

---

वृक्षे रक्तवर्णो रामेऽनुरागः। शिलीमुखा भ्रमरा बाणाश्च। स्मरधनुः पुष्पमुत्तेजकत्वात्। कामिनीपदाघातेनाशोकस्य पुष्पोद्गम इति प्रसिद्धिः। नायके तु पद्माख्यबन्धेन। 'धृतैक पादाजघने कुर्वन्त्यन्यादहतिम्। शनैः शनैर्निधुवने पद्मबन्धस्तदा मतः॥' अथवा दासे कृतागसीत्यादिरीत्या। आवयोरित्यस्य च तुल्यमित्यत्रान्वयः। रत्याद्यनुकूल● अत्र रतिपदं क्रीडापरम्। रसानुगुणतया● विप्रलम्भशृङ्गारपरिपोषकतया। अत एव● अलङ्कारापसारणस्यापि अलङ्कारवच्चमत्कारित्वात्। तेनैवासमाया गतार्थत्वात्। अन्यथा● उपमादूरीकरणस्याचमत्कारित्वे। विप्रलम्भपरिपोषकतया सशोकत्वमुत्कृष्टमिति विश्वेश्वरपण्डिताः। अत्र मर्मप्रकाशः अत्रेदं चिन्त्यम्। उपमानाद्धि उपमेये वर्ण्यमानं वैलक्षण्यमेव गुणाधिक्यकृतं व्यतिरेकः। तच्च क्वचिदुपमेयस्योत्कर्षपर्यवसायी क्वचिदपकर्षपर्यवसायी क्वचिच्चानुभयपर्यवसायी। आधिक्यन्यूनत्वशब्दौ उत्कर्षापकर्षपरावेव। अपकर्षपर्यवसायी रक्तस्त्वमित्यत्र। अत्रोपमेये सशोकत्वादिगम्यचेतनत्वसहृदयत्वादिभिः शोकरहितत्वसहितत्वाभ्याञ्च तत्तद्गुणाधिक्यप्रतीतावपि शोकस्य स्वरूपेणापकृष्टत्वाद् विरहिवाक्यत्वाच्च वरमचेतनत्वमेव सम्यक्। न पुनः प्रियावियोगादिजन्यशोकास्पदचैतन्यादीतिप्रतीतिपर्यवसानाद् विरहानुगुणकविनिबद्धतात्पर्यविषयकोऽपकर्षः पर्यवस्यति। अतएव प्रियावियोगाद्यपि तुल्यमित्यर्थकमावयोः सर्वं तुल्यमिति वाक्यं चरितार्थम्। एतेन रत्याद्यनुकूलतयेत्यादि उदाजह्रे इत्यन्तमपास्तम्। सशोकत्ववर्णनेऽपि रक्तत्वादिधर्मैः सादृश्यस्य विप्रलम्भपोषकतया चमत्कारिणः सत्त्वेन तदपह्नवस्य कर्तुमशक्य-

यथा—

'भुवनत्रितयेऽपि मानवैः परिपूर्णे बिबुधैश्च दानवैः ।
न भविष्यति नास्ति नाभवन्नृप यस्ते भजते तुलापदम् ॥'

अत एव ध्वनिकृता सहृदयधुरन्धरेण 'सुकविस्तु रसानुसारेण क्वचिदलंकारसंयोगं क्वचिदलंकारवियोगं च कुर्यात्' इत्युक्त्वा 'रक्तस्त्वम्—' इति पद्यं सादृश्यदूरीकरणे उदाजह्रे । अत एव च मम्मटभट्टैः 'आधिक्यमात्रं व्यतिरेकः' इत्युक्तम् । निरस्तं च न्यूनत्वं व्यतिरेके इति । तस्मादुपमानादुपमेयस्योत्कर्ष एव व्यतिरेकालंकारः, नापकर्ष इति स्थितम् ।

---

त्वात् । अन्यथा औनत्त्यादिकृतसादृश्यस्यापि प्रतीत्यनापत्तेः । इत्याह । अयन्त्वस्य निष्कर्ष प्रतिभाति । सर्वतुल्यत्वेऽपि शोकचैतन्याद्यपकृष्टगुणवत्त्वेन विरही निर्वेदी स्वमपकृष्टं प्रकाशयति । पण्डितराजाशयस्तु तादृशो विरही सर्वविधतुल्यत्वेऽपि हन्त शोकरहितत्त्वेन तुल्यो न जात इति निर्वेदं प्रकाशयति, शोकरहितत्वाभावोऽपि सशोकत्वेन प्रदर्शित इति शोकरूपगुणस्याशोकेऽभावान्निर्वेदिनि च भावाच्छोकस्याधिगुणत्वमेव । नापि शोकोऽपकृष्टोऽन्यत्र तथा सम्भवेऽपि विप्रलम्भे निर्वेदोत्कर्षकस्य तस्योत्कृष्टत्वात् इति । चिन्ताफलन्तु इत्थम् दीक्षितमतं यथाकथमपि समर्थयितुं तत्परोऽयम् अतएव प्रदीपोद्योते एतद्विपरीतं समर्थयति नागेशमहोदयः । सर्वं तुल्यमित्युक्त्यनन्तरं विवक्षितं वैलक्षण्यं तुल्यत्वविघटकमेव स्यात् । तथा च तुल्यत्वविघटकतयैव सशोकत्वस्योपादानम् । अन्यथा सर्वतुल्यत्वप्रतिपादनमसम्बद्धं स्यात् । शोकस्यापकृष्टतया प्रतिपिपादयिषायां त्वन्तु एवंविधकमनीयगुणगणोऽहन्तु सशोक इत्येव विधोत्कर्षासिद्धया किमनुरोधेन सर्वतुल्यत्वप्रतिपादनं स्यात् । तस्मादेकांशेनातुल्य इत्यत्रैव तात्पर्यम् ।

परम्परयोपयोग प्रदर्शने तु साक्षादुपयोग्येव सम्यक् । सशोकत्ववर्णनेऽपीत्यादिनाऽऽक्षिप्तं मर्मप्रकाशेन निर्मूलमेव । कुतश्चिदङ्गादिति वदतः पण्डितराजस्याशोकत्वेन सादृश्यदूरीकरण एव तात्पर्यस्य स्फुटत्वात् । यथा यथा-

यदि तु न्यूनत्वमपि व्यतिरेक इत्याग्रहस्तदेदमुदाहार्यम्—

'जगत्त्रयत्राणधृतव्रतस्य क्षमातलं केवलमेव रक्षन् ।
कथं समारोहसि हन्त राजन्सहस्रनेत्रस्य तुलां द्विनेत्रः ॥'

अत्र धर्मद्वयेनैव न्यूनोऽसि धर्मान्तरेण तु सम इति प्रतीतिकृतविच्छित्तिविशेषादलंकारता । एवं च लक्षणेऽपकर्षोऽप्येवंजातीयो देयः ।

यदपि कुवलयानन्दकृतानुभयपर्यवसायिनो व्यतिरेकस्योदाहरणमुक्तम्—

'दृढतरनिबद्धमुष्टेः कोषनिषण्णस्य सहजमलिनस्य ।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥'

तन्न निपुणं निरीक्षितमायुष्मता । यथाहि—किमत्रोपमानादुत्कर्षरूपो व्ययिरेकोऽनुभयपर्यवसायी, आहोस्वित्सवंस्वकाराद्युक्तदिशापकर्षरूपः । नाद्यः । उत्कर्षप्रयोजकधर्मस्यात्रानुपस्थितेः । न च श्लेषेण दीर्घाक्षरस्योपस्थितिरस्त्येवेति

---

अत्रोपमादूरीकरणं चमत्कृतिजनकन्तथा रक्तस्त्वमित्यत्रापि । व्याख्यातमिदमसमाप्रकरणे । ध्वन्यालोके तादृशं स्फुटं नास्ति परं व्याख्यानतः स्फुटति, श्लेषे स्फुटस्तथैवोपमायामपि आयाति । मर्मप्रकाशोऽपि ध्वनिकारस्येदृशमतोत्थापनं न खण्डयति । पाठभेदोवा भवेत् । लोचनस्य सारोपा भवेदित्यपि केचन कल्पयन्ति । जगत्त्रय ● लोकत्रयरक्षकस्य सहस्रनेत्रस्य पृथ्वीमात्ररक्षको द्विनेत्रो भवान् कथं तुल्यः । धर्मान्तरेण ● लोकरक्षकत्वेन नेत्रवत्त्वेन समृद्ध्यादिना च । अत्र कौस्तुभकृत्खण्डनप्रकारोऽसमीचीन इति नेह प्रतन्यते । अनुभयपर्यवसायि ● उत्कर्षापकर्षयोरनुक्तावपि यत्र व्यतिरेकः पर्यवस्यति । दृढतर ● दानाय मुष्टयुद्घाटनासम्भवात् कृपणस्य, कृपाणस्य च मुष्टिग्राह्योभागो दृढतरं वद्धः । कोषे भाण्डागारे पिधाने च निषण्णस्य स्वभावतो मलिनवेषस्य कृष्णलोहस्य च कृपणस्य कृपाणस्य चाकारतो दीर्घाक्षरतः मनुष्याद्याकारतश्च केवलं भेदः । अनिरीक्षितमीक्षयति यथा हि ● ।

वाच्यम् । तस्योपमानवृत्तित्वेनोपमेयानुत्कर्षकत्वात् । अर्थान्तरेणाकृतिरूपेण सह श्लेषमूलकाभेदाध्यवसायेन साधारणीकरणाच्च । अन्यथा श्लेषमूलकोपमोच्छेदापत्तेः । 'चन्द्रबिम्बमिव नगरं सकलकलम्' इत्यादावपि कलकलसहितत्व—कलासाकल्ययोर्वस्तुतो वैधर्म्यरूपत्वात् । न च सकलकलमित्यत्रोपमायामेव कवेर्निर्भरः, प्रकृते तु भेदशब्दोक्त्या वैलक्षण्ये स इति भ्रमितव्यम् । यद्यत्रोपमाविघटनरूपो व्यतिरेको निर्भरसहः स्यात् आकारशब्दश्लेषोऽनर्थकः स्यात्, कृपणस्य कृपाणस्य भेदो दीर्घाक्षरादेवेत्येव ब्रूयात् । न ह्यत्र व्यतिरेके श्लेषोऽनुकूलः । प्रत्युत प्रतिकूल एव । उपमायां पुनरनुकूलः । प्रतिकूलस्य दीर्घाक्षररूपवैधर्म्यस्य साधारणीकरणात् आकृतिभेदस्य चोपमानोपमेययोरपि सत्त्वात् । एवं हि कवेराशयः— यत्कृपणकृपाणयोस्तुल्यतैव । दृढतरेत्यादिविशेषणसाम्यात् । अक्षरभेदस्त्वाकारभेदत्वादविरुद्ध एवेति सहृदयैराकलनीयम् ।

न द्वितीयः । तस्योक्तिमात्रेणाप्यसंगतेः, अहृद्यत्वाच्च ।

---

अर्थान्तरेण● अर्थाकारशब्दाकारयोरभेदात् । अन्यथा● एक शब्दोपस्थितयोरर्थयोः साधारण्याभावे । मूलको● साधारणधर्मक । प्रतिकूल एव● साधारण्यसम्पादनेन । साधारणीकरणात्● आकृतिरूपतामापन्नात् । ननु आकृत्यैव वैलक्षण्येन भाव्यमित्यत आह आकृति भेदस्य● तस्य व्यतिरेकोत्थापकत्वाभावात् । तुल्यतैव● तस्मादुपमैव । आकार भेदत्वात्● आकृतिविशेषत्वात् । द्वितीयः● उपमेयस्यापकर्षः । ष्यसङ्गते● उत्कर्षइवापकर्षस्याप्यनुपपत्तेस्तादृशधर्मस्याभावात् । सर्वत्रैवोपमानापेक्षयोपमेयस्यापकृष्टत्वेनानवीकृतत्वादाह अहृद्यत्वाच्च● कूटं मिथ्या ।

अत्र मर्मप्रकाशः । श्लेषेऽपि सर्वदोमाधव इत्यादिवन्नाभेदाध्यवसायः । अभेदाऽध्यवसायेनापि नास्य साधारण्यं भेदसम्बन्धेन तस्य साधारण्य-

**तस्मादत्र गम्योपमैव सुप्रतिष्ठितेत्यास्तां कूटकार्षापणोद्घाटनम्। प्रकृतमनुसरामः।**

**अलंकारान्तरोत्थापितोऽप्ययं संभवति।**

**यथा—**

**'ईश्वरेण समो ब्रह्मा पिता साक्षान्महेश्वरः।**
**पार्वत्या सदृशी लक्ष्मीर्माता मातुः समा भुवि॥**
**पितास्य काष्ठसदृशः स्वयं पावकसंनिभः॥'**

**अत्र रूपकानन्वयोपमा उपमेयोत्कर्षस्योपमा एवोपमानापकर्षस्य च हेतवः।**

---

खण्डनात्। उपमेयवृत्तित्वमपि तस्य प्रतीपालङ्कारविषया कृपाणस्याप्युपमेयत्वात्। किञ्च अनुभयपर्यवसायीति शब्देन उत्कर्षापकर्षापर्यवसायीति दीक्षितस्याभिप्रेतम्। तेन नात्र व्यतिरेकस्यालङ्कारता किन्तु वस्तुमात्रता। इत्याह। व्यतिरेकोनात्रालङ्कार इति दीक्षितग्रन्थविरुद्ध लिखति। अन्तत उपमां स्वीकारोत्येव उत्तरग्रन्थस्तु यथाकथञ्चिदस्तु पूर्वस्तु केवलं खण्डनाग्रहिलतयैव। असमां नाङ्गीकुर्वतां प्राचाम् उपमाया अभावश्चमत्कुर्यादेव। श्लेषेणोपमानोपमेययोरभेदाभावेऽपि धर्मयोरभेदस्य सर्वत्र प्रसिद्धेः। अत्र प्रकृतस्य कृपणस्यैवोपमेयत्वाच्च। उपमेयवृत्तित्वसम्पादनमपि दुर्लभम्। **ईश्वरेण** ● अत्र ब्रह्मपित्रोर्व्यतिरेक उत्तिष्ठति, रूपकेण महेश्वररूपतया पितुरुत्कर्षः। महेश्वरोपमेयतया ब्रह्मणोऽपकर्षः। तदत्रोपमायुक्तेन रूपकेणोत्कर्षापकर्षावुत्थाप्येते। एवं पार्वत्या सदृशीत्यत्रापि अनन्वयोपमयोर्बोध्यम्। पिताऽस्य काष्ठसदृश इत्यत्र स्वयं न पितृवदिति व्यतिरेकः काष्ठोपमा पितुरुपमानस्यापकर्षिका पावकोपमा चोपमेयस्योत्कर्षिका। मर्म प्रकाशे पितुः स्वस्य चापकर्षिकेत्युक्तम् तन्न समन्वयपथमायाति। एवं सरलायामुपमेयस्य पितुः स्वस्य चोत्कर्षः उपमानस्य काष्ठस्य पावकस्य चापकर्ष इत्युक्तं तदपि न समीचीनम्, काष्ठपित्रोः स्वयंपदार्थपावकयोर्व्यतिरेकाभावात्। **रूपकानन्वय** ● रूपकोपमा अनन्वयोपमा च प्रथमद्वितीययोरंशयोरित्यर्थः। **उपमा एव** ● तृतीयेंऽशे। एवकारेण रूपकानन्वययोर्व्यावृत्तिः।

अस्य चालंकारस्य सादृश्यगर्भत्वात् सादृश्यस्य च त्रिविध-धर्मोत्थापितत्वात् अत्रापि तत्प्रकारानुगमो बोध्यः ।

तत्रानुगामिनि धर्मे यथा—

'अरुणमपि विद्रुमद्रुं मृदुलतरं चापि किसलयं बाले ।
अधरीकरोति नितरां तवाधरो मधुरिमातिशयात् ॥'

अत्रारुण्यम्रदिमानावनुगामिनौ ।

बिम्बप्रतिबिम्बभावापन्ने यथा—

'जलजं ललितविकासं सुन्दरहासं तवाननं हसति ।'

अत्र हासविकासयोर्बिम्बप्रतिबिम्बभावः, लालित्य-सौन्दर्ययोः शुद्धसामान्यता । श्लेषोपात्तं जडजत्वं स्वाश्रयापकर्षहेतुः ।

एवं सादृश्यनिषेधालीढो व्यतिरेको निरूपितः । अभेद-निषेधालीढोऽप्येष संभवति यथा—

'निष्कलङ्क निरातङ्क चतुःषष्टिकलाधर ।
सदापूर्ण महीप त्वं चन्द्रोऽसीतिमृषावचः ॥'

इति रसगङ्गाधरे व्यतिरेकप्रकरणम् ।

---

त्रिविधधर्म● अनुगामिबिम्बप्रतिबिम्बभावशुद्धसामान्यानि । अरुणमपि● रक्तं प्रवालवृक्षम् । अनुगामिनौ● उपमान उक्तिमात्रेणोपमेयगामिनौ, ललितविलासं सुन्दरहासम् आननमित्यन्वयः । स्वाश्रय● कमलस्य । अभेदनिषेधालीढोऽपि● अभेदनिषेधालीढोऽपीति पाठः । निष्कलङ्कः● अत्र चन्द्राभेदोऽपि निषिध्यते । अभेदश्च सादृश्यमूलक इति उपमागर्भत्वं न विनष्टम् । चन्द्रस्तु सकलङ्को राहोरातङ्कयुक्तः षोडशकलाधरः पूर्णिमायामेव पूर्णः ।

॥ इति व्यतिरेकप्रकरणम् ॥

अथ सहोक्तिः—

गुणप्रधानभावावच्छिन्नसहार्थसंबन्धः सहोक्तिः ॥

हृद्यत्वं चालंकारसामान्यलक्षणगतं सकलालंकारसाधारणमेवेत्यसकृदुक्तम्। तच्चात्र कार्यकारणपौर्वापर्यविपर्ययात्मिकया श्लेषभित्तिकाभेदाध्यवसानात्मिकया केवलाभेदाध्यवसानात्मिकया चातिशयोक्त्याऽनुप्राणने भवतीति वदन्ति।

अनुकूलभावमथवा पराङ्मुखत्वं सहैव नरलोके।
अन्योन्यविहितमन्त्रौ विधि-दिल्लीवल्लभौ वहतः॥

---

## सहोक्तिनिरूपणम्

सहार्थस्य साहित्यस्योक्तिर्यत्रेतियोगरूढिरयम्। साहित्यञ्चैकगुणक्रियाऽन्यतरसाधारणधर्मसंबन्धित्वम्, स्ववृत्तिसमभिव्याहृतपदार्थगुणक्रियान्यतरसजातीयधर्मसम्बन्धित्वं वा। यथा 'केशैर्वधूनाम्' इत्यत्र स्वपदेन सहार्थान्वयितृतीयाप्रकृत्यर्थः केशस्तद्वृत्तिः तादृशो धर्मः कर्षणक्रियारूपस्तत्सजातीयं चापजीवायाः कर्षणम् तत्सम्बन्धित्वं जीवाया इति केशजीवयोः साहित्यम्। स्ववृत्तित्वं सम्बन्धित्वञ्च समभिव्याहृतपदार्थसाधारणः, येन सम्बन्धेनान्वेति स सम्बन्धः कुत्रचित्कर्तृत्वकर्मत्वादि कुत्रचित् समवायसंयोगादिः। तत्रापि साधारणधर्मसम्बन्ध एव सहार्थः, वृत्तित्वं तु तृतीयार्थ एव। अयञ्चालङ्कारः 'सहयुक्ते चाप्रधाने' इति पाणिनिसूत्रविहिततृतीयास्थल एव। तृतीयायाश्चाप्रधानत्वमप्यर्थोऽतस्तद्घटितं लक्षणमाह **गुण** ● गुणः सहार्थप्रतियोगी प्रधानञ्चानुयोगि तथा च यत्रोपमानोपमेययोर्गुणप्रधानभावेन एकार्थसम्बन्धः स सहोक्तिरलङ्कार इति सरलार्थः। न्यूनतां निरस्यति **हृद्यत्वञ्च** ● हृद्यता च कथमित्याशङ्क्याह **तच्चात्र** ● त्रिविधयाऽतिशयोक्त्या उपस्कारेण चमत्कारो भवतीत्यर्थः। **श्लेषभित्तिका** ● भित्तिकं मूलकं। एकशब्दोपस्थितयोः समानशब्दमूलकाभेदाध्यवसायेन। **केवलाभेद इति** ● किमप्यन्ततः सामान्यमादाय परस्पराऽरोपेणेति सिद्धान्ते। निगीर्णाध्यवसानरूपेणेति प्राचीनमतेन। तथैव मर्मप्रकाशेनाप्युक्तम्। सरलाकृतं नागेशखण्डनं तु न युक्तं प्राचीनविवरणसमये तन्मतेनैव टीकाया उचितत्वात्। **अनुकूलभाव** ● यथा विधिर्मनुष्यलोके कदाचिदनुकूलतां प्रतिकूलताञ्च धत्ते तथैव दिल्लीनरेशोऽपि। तत्रोत्प्रेक्षा

इत्यादावतिप्रसङ्गवारणायावच्छिन्नान्तम् ।

उदाहरणम्--

'केशैर्वधूनामथ सर्वकोषैः प्राणैश्च साकं प्रतिभूपतीनाम् ।
त्वया रणे निष्करुणेन राजंश्चापस्य जीवा चकृषे जवेन ॥'

अत्र चापाकर्षणकार्याणां केशाकर्षणादीनां पौर्वापर्यविपर्ययेणानुप्राणितः सहभावः, निष्करुणत्वेन च पौर्वापर्यविपर्ययः ।

यथा वा—

'भाग्येन सह रिपूणामुत्तिष्ठसि विष्टरात्क्रुधाविष्टः ।
सहसैव पतसि तेषु क्षितिशासन मृत्युना साकम् ॥'

पूर्वं तु कर्मणः सहोक्तिः, इह कर्तुरिति भेदः ।

'त्वयि कुपिते रिपुमण्डलखण्डनपाण्डित्यसंपदुद्दण्डे ।
गिरिगहनेऽरिवधूनां दिवसैः सह लोचनानि वर्षन्ति ॥'

---

अन्योन्यं विहितो मन्त्रोययोस्तौ । अत्र द्वयोः समान एव क्रियायामन्वयोऽतः कस्यचिदप्राधान्याभावान्नायमलङ्कारः । तदेवाह इतिप्रसङ्ग● प्रथमोदाहरणमाह केशैर्वधूनाम्● अथ हे राजन् ! निष्करुणेन त्वया रणे शत्रुनृपाणां बधूकेशैः सर्वनिधिभिः प्राणैश्च साकं धनुषः प्रत्यञ्चा वेगेन चकृषे आकृष्टेत्यर्थः । केशादिजीवयोराकर्षणं समानकालिकमिति साहित्यम् । जीवायाः कर्मतया सक्षात्कर्षणेऽन्वयात्प्रधानत्वम् । केशादीनां तु साकशब्दार्थद्वारेति तेषां गुणभावः । पौर्वापर्यविपर्ययं दर्शयति अत्र चा●प्राक् चापाकर्षणे कारणे सम्पन्नं तदनन्तरं तत्कार्याणां केशाद्याकर्षणानां सम्भवः । निष्करुणत्वेन● हेतौ तृतीया । निष्करुणत्वहेतुक इत्यर्थः । निर्दयतयैव कार्यकारणयोः सहभावः सम्वृत इति भावः । भाग्येन● हे क्षितिशासन रिपूणां भाग्येन सह क्रुधा आविष्ट आसनादुत्तिष्ठसि । अत्र क्रुधाविष्ट इति पाठः । क्रोधाविष्ट इत्यपपाठ इति मर्मप्रकाशः । तेषु रिपुषु मृत्युना साकं सहसैव तपसि पतसीति सुपाठः । पूर्वापेक्षया वैचित्र्यमाह पूर्वं● केशैरित्यादौ । इह● भाग्यादिना मुत्तिष्ठतेः कर्तृत्वात् । श्लेषमूलकस्य द्वितीयस्योदाहरणम् त्वयि● शत्रु-

अत्र वर्षण-वर्षंवदाचरणयोः श्लेषेणाभेदाध्यवसितिः ।

यथा वा—

'बहु मन्यामहे राजन्न वयं भवतः कृतिम् ।
विपद्भिः सह दीयन्ते संपदो भवता यतः ॥'

पूर्वा कर्तृसहोक्तिः, इयं तु कर्मसहोक्तिर्व्याजस्तुतिसंवलिता ।

'पद्मपत्त्रैर्नृणां नेत्रैः सह लोकत्रयश्रिया ।
उन्मीलन्तो निमीलन्तो जयन्ति सवितुः कराः ॥'

अत्रोन्मीलन-निमीलनयोः पद्मपत्त्राद्याश्रयभेदेन भिन्नयोरपि प्रकटत्वाप्रकटत्वाद्येकोपाध्यवच्छिन्नतयाऽभिन्नीकृतयोरु-

---

मण्डलस्य नाशने या पाण्डित्यसम्पत् तया उद्धते त्वयि कुपिते सति पर्वतवने भयात्पलायितानाम् अरिवधूनां दिवसैः सह लोचनानि वर्षन्ति । दिवसा 'दुःखदैर्घ्यात्' वत्सरा भवन्ति लोचनानि तु अश्रुजलं वर्षन्ति । अत्र दीर्घीभवना-श्रुस्रावयोर्भेदेऽपि वर्षन्तीत्येकपदसामानाधिकरण्येन धर्मेणाभेदाध्यवसायः । तदेवाह अत्र ● । बहु ● हे राजन् भवतः कृतिं वयं बहु न मन्यामहे केवलायाः सम्पदोदानाभावात् । यतः भवता सम्पदो विपद्भिः सह दीयन्ते यथा योग्यं दानावखण्डनार्थयो द्वयोर्ग्रहणं कार्यम् । वैचित्र्यमाह पूर्वा ● दिवसैः सहेत्यादौ । व्याजस्तुतिसंवलिता ● अनुप्राणिता, शत्रुविपदोऽपि स्तुतौ पर्यवसानात् । पद्मपत्रैः ● सूर्यकिरणाः कमलैर्नृणां नेत्रैर्लोकत्रयशोभया च सह प्राकट्यम् अप्राकट्यञ्चाप्नुवाना सर्वोत्कर्षेण वर्तन्ते । यदा सूर्यकिरणाः प्रसरन्ति तदा पद्मपत्रनेत्रशोभाः प्रकाशमायान्ति तिरोभवत्सु किरणेषु मुकुलीभावमप्रकाशञ्चाप्नुवन्ति इत्यर्थः । ननु पद्मपत्रनेत्रयोरुन्मीलनं प्रफुल्लता-निमीलनञ्च सम्पुटीभावः, शोभाकिरणयोस्तु प्रकाशाप्रकाशरूपे ते, तथा च प्रधानस्य किरणस्याप्रधानपद्मनेत्रादेश्चैकक्रियारूपसम्बन्धाभावात्कथं साहित्य-मित्याशङ्कां मनसि निधायोत्तरमाह अत्रोन्मीलन ● अयम्भावः । प्रफुल्लतायां प्रकाशे च प्रकटत्वमेवं सम्पुटीभावे किरणाप्रकाशे चाप्रकटत्वं भासते । प्रकटत्व-साधारणधर्मेण प्रफुल्लताप्रकाशयोः अप्रकटत्वेन सम्पुटीभावाप्रकाशयोश्चा-

पादानमित्यस्त्येकक्रियासंबन्धः। अत एव न श्लेषः। तस्य प्रतिपाद्यतावच्छेदकभेद एव स्वीकारात्।

एषूदाहरणेषु सहयोगतृतीयाप्रयुक्तो गुणप्रधानभावः। प्राधान्येन क्रियान्वये तु यथायथं तुल्ययोगिता दीपकं वा भवति।

सहादिशब्दप्रयोगाभावेऽप्येषा संभवति। 'वृद्धो यूना—' इति निर्देशेन तृतीयायाः साम्राज्यात्। परं त्विवादिशब्द-रहितोत्प्रेक्षादिवद्गम्या।

अप्रधानभावस्तु शाब्द एव।

ननु कथमप्रधानभावः शाब्द इत्युच्यते? यावता आर्थः क्रियाद्यन्वयितारूपः स स्यात् पदार्थान्तररूपो वा। उभयथाऽप्यस्य वाचकशब्दाभावादशाब्दत्वमेवेति चेत् न। अस्ति तावत्

---

भेदाध्यवसायेन द्वयोर्गुणप्रधानयोरुन्मीलननिमीलनेऽभेदमापन्ने इति एक क्रियासम्बन्धो जात इति। एकोपाधिर्विशेषणीभूतं शक्यतावच्छेदककोटि-प्रविष्टं प्रकटत्वमप्रकटत्वञ्च तदवच्छिन्ने उन्मीलननिमीलने इति शब्दार्थः। ननु एकशब्दोपस्थितयोर्द्वयोः शब्दमूलक एव कथन्नाभेदस्तदा द्वितीयस्येवेदमुदाहरणमित्याशङ्कायामाह अत एव● एकोपाध्यवच्छिन्नत्वादेवेत्यर्थः। प्रयुक्तः● तृतीयाशक्यः। प्रकृतयोरेवैकक्रियान्वये तुल्ययोगिता प्रकृताप्रकृत-योस्तथात्वे दीपकम्। वृद्धोयूना●। वृद्धोयूना तल्लक्षणश्चेदेव विशेष इति सूत्रस्य यूना सह वृद्धोऽवशिष्यत इत्यर्थकस्य यूनापदे सहपदप्रयोगाभावेऽपि तृतीयादर्शनात् सहार्थयोगे तृतीया न तु सहशब्दयोग एवेति पाणिनेस्ता-त्पर्यावधारणात्। गम्या● विशेषणस्याप्रधानभावस्य तृतीयावाच्यत्वेऽपि प्रधानस्य साहित्यस्य गम्यत्वागम्यत्वव्यपदेशः। क्रियान्वयित्वरूप● साहित्येन प्रकृतक्रियान्वयोऽवसेयः। पदार्थान्तररूपश्च साहित्यप्रतियोगित्वरूपोऽखण्डवक्ष्यमाणप्रधानत्वाभावरूपो वा। सोऽपि साहित्यान्वयेन गम्यत्वादार्थ

सखण्डमखण्डं वा प्रधानत्वम् । यद्वशात् अयमस्मिन्नगरे प्रधानं मुख्य इत्यादयो व्यवहारा आ पामरमुल्लसन्ति । तदभावरूपे चाप्रधानत्वे 'सहयुक्तेऽप्रधाने' इति शास्त्रेण तृतीयायाः शक्तेर्बोधनात्तस्य कथमशाब्दत्वम् । न च सहार्थेन युक्ते वस्तुतोऽप्रधाने तृतीयेति तस्यार्थः, न त्वप्रधानेऽर्थे वाच्ये इति । तथा च नोक्तार्थसिद्धिरिति वाच्यम् । एवं चाप्रधानग्रहणवैयर्थ्यापत्तेः । 'पुत्रेण सहागतः पिता' इत्यादौ पित्रादिभ्योन्तरङ्गत्वात्प्रथमोत्पत्तेरेवौचित्यात् । 'पुत्रेण सह पितुरागमनम्' इत्यादौ कारकविभक्तेः प्राबल्याच्च । अन्यथा 'षष्ठी शेषे' इत्यत्रापि

---

एव । सखण्डम् ● साहित्यविशेष्यं प्रकृतक्रियायां साक्षादन्वयि । अखण्डं लक्षणेन निर्वक्तुमशक्यं व्यवहारपरिचेयम् । परिचायकं व्यवहारमाह यद्वशात् ● । वस्तुतोऽप्रधाने ● अप्रधानबोधकात्प्रातिपदिकात् । एवम् ● शक्तिग्राहकत्वाभावे प्रधानात्तृतीयानिवारणमात्रप्रयोजनत्वे इत्यर्थः । प्रधानात्तृतीयानिवारणमन्यथा साधयति पुत्रेण ● । अन्तरङ्गत्वात् ● क्रियान्वयं विना न कारकत्वं न वा कारकान्वयं विना क्रियास्वरूपम् । अतएव क्रियान्वयित्वं कारकत्वं कारकाणां क्रियायामेवान्वय इति शाब्दिकाः । प्रथमायाः सहार्थसम्बधं विनाऽपि क्रियान्वयित्वादन्तरङ्गत्वं स्फुटमेव । उपपदविभक्तेरित्यादिपरिभाषाया अपि यथाऽन्तरङ्गत्वमूलकत्वं तथा परिभाषेन्दुशेखरविजयायां निरूपितं तथापि भाष्येऽस्या व्यवहारेण पृथगपि ग्रन्थकृतोक्तम् । ननु प्रथमाया अन्तरङ्गत्वेऽपि कर्तृकर्मणोः कृतीतिकर्तृषष्ठ्याः कृद्योगनिमित्तकत्वेन कथमन्तरङ्गत्वन्तथा च तत्र प्रधानात्तृतीयापत्तिरित्याशङ्कायामाह पुत्रेण ● प्रथमायास्तु निर्निमित्तकत्वेनाप्यन्तरङ्गत्वमित्यभिप्रायः । यद्यपि तस्याः कारकविभक्तित्वान् क्रियानिमित्तकत्वमायाति परं सामान्यक्रियानिमित्तकाऽपि सा । सामान्यञ्च सर्वत्र शीघ्रोपस्थितिकमिति अन्तरङ्गत्वं न व्याहतम् । प्राबल्याच्च ● उपपदविभक्तेः कारकविभक्तिर्बलीयसीति परिभाषया ।

समीपस्थं क्रियातिरिक्तं पदं निमित्तीकृत्य 'जायमाना' विभक्तिरूप पदविभक्तिः । यथा सहादिपदं 'निमित्तीकृत्य' जायमाना तृतीया । क्रियान्वयनिमित्तेन जायमाना विभक्तिः कारकविभक्तिर्यथाऽत्र 'प्रथमा' कर्तृषष्ठी' वा । अन्यथा ● अप्रधानबोधकात्तृतीया 'न' तु तृतीयाया अप्रधानत्ववाचकत्व-

विशेषणग्रहणापत्तेः। तस्माद्यथा 'हेतौ तृतीया' इत्यादि शास्त्रं हेतुशक्तिग्राहकमेवं 'सहयुक्तेऽप्रधाने' इत्यप्रधानशक्तिग्राहकम्। यथैव तत्र प्रकृत्यर्थस्याभेदेन विभक्त्यर्थेऽन्वयस्तथेहापि शक्यो वक्तुम्। धर्मिशक्तावपि कर्मत्वादीनामिवाप्राधान्यस्यापि शाब्दत्वमव्याहतमेव। षष्ठीस्थले तु विशेषणशब्दाभावान्नैवमिति स्फुटमेव वैलक्षण्यम्। एतेन 'अप्रधानग्रहणं शक्यमकर्तुम्' इति वदन्तो मनोरमाकाराः परास्ताः। उक्तप्रकारेण सार्थक्यसिद्धौ मुनिवचनस्य वैयर्थ्यकल्पनाया अन्याय्यत्वात्।

न च 'पुत्रेण सहागतः पिता' इत्यादौ पुत्राभिन्नाप्रधान-सहित इति बोधस्याप्रामाणिकत्वान्नोक्तार्थसिद्धिरिति वाच्यम्। 'दण्डेन घटः' इत्यादौ दण्डजन्यतावान् घट इति हि सर्वजनीने बोधे 'हेतौ तृतीया' इति मुनिवचनावलम्बेन दण्डाभिन्नहेतुको घटः इति बोधं वदता भवतैवास्याः सरणेर्दर्शितत्वात्। 'भाव-

---

मित्येवं पाणिनेस्तात्पर्यानुमाने **ग्रहणापत्तेः** तत्रापि विशेषणराजपदादेव षष्ठी न तु विशेष्यबोधकात्पुरुषपदादित्येवमर्थम्। यदि तत्र प्रकारान्तरेण प्रथमाया अन्तरङ्गत्वादिना प्राबल्येन पुरुषपदान्नषष्ठीप्राप्तिरर्थादेव राजपदाद् भविष्यतीति विभाव्यते तदाऽत्राऽपि अप्रधानग्रहणस्य शक्तिग्रहणमात्रं फलम्। **हेतौ तृतीया** इत्यनेन सूत्रेण दण्डेन घट इत्यादौ दण्डाभिन्नहेतुको घट इत्यर्थस्तृतीयया। **तथेहाऽपि** पुत्रेण सहागतः पितेत्यादौ पुत्राभिन्ना प्रधानसहितः पितेत्यादि बोधः। ननु अप्रधाने तृतीयायाः शक्तावपि अप्रधानत्वमशाब्दमेवेत्याशङ्कां समाधत्ते **धर्मिशक्तावपि** द्वितीयाया धर्मिणि कर्मणि शक्तावपि विशेषणीभूतस्य कर्मत्वस्य शाब्दत्वमेवं धर्मिणि अप्रधाने तृतीयायाः शक्तावपि विशेषणीभूतस्याप्रधानत्वस्य शाब्दत्वमेव। **नैवमिति** न विशेषणतायाः शक्यत्वम्। **सरणेर्दशितत्वात्** दण्डेन घट इत्यादौ नैयायिकास्तृतीयाया जन्यतार्थः। जन्यतायां निरुपितत्व सम्बन्धेन प्रकृत्यर्थस्यान्वयस्तेन दण्डजन्यतावान् घट इति बोधं वर्णयन्ति। तत्र

प्रधानमाख्यातम्' इत्याद्यनेकैर्मुनिवचनैस्तत्र तत्र त्वत्कृतबोधवैपरीत्यस्यानुपपत्तेश्चेति कृतमप्रसक्तविचारेण।

प्रकृतत्वाप्रकृतत्वे प्रायेणोपमेयतोपमानतयोर्निर्णायके इत्युक्तत्वादिह न ताभ्यां तयोर्निर्णयः, प्रकृतयोरपि साहित्यसंभवात्। किं तु प्राधान्याप्राधान्याभ्यामिति। हृद्यत्वं चास्या अतिशयोक्तिकृतमित्युक्तम्। यत्र तु सा नास्ति तत्र 'पुत्रेण सहागतः पिता' इत्यादौ न सहोक्तिरलंकारः।

---

मनोरमाकारा भट्टोजीदीक्षिता एवं कुर्वन्ति। तृतीयाया जन्यतार्थो न समीचीनः पाणिनीयसूत्रेण तृतीयायाहेतौ शक्तिबोधनात्। तथा च दण्डाभिन्न हेतुकोघट इति बोधः समीचीन इति। तथा च तत्र यथा मुनिवचनानुरोधेन तादृशो बोधः प्रामाणिकस्तथाऽत्रापि मुनिवचनेनैव तादृशबोधस्य प्रामाणिकत्वम्। एवं प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधवादिनां नैयायिकानां खण्डनं स्वीयव्यापारमुख्यविशेष्यकशाब्दबोधवर्णनं मुनिवचनेभ्य एवेत्याह भाव प्रधान● यद्यपि भाष्ये पण्डितराजरीत्यैव प्रधानात्तृतीयां वारयित्वा अप्रधानग्रहण प्रत्याख्यातन्तथाऽपि तस्य प्रौढिवादमात्रत्वमिति कश्चित्। नात्र विषये आग्रहः पण्डितराजस्य केवलं मनोरमामर्दनाभिनिवेशेनैवमुक्तमित्यन्ये। प्रधानतृतीयावारणप्रयोजनस्य प्रत्याख्यानन्तु शक्तिग्राहकस्येत्यपरे। वस्तुतस्तु सहप्रयोगाभावेऽपि तृतीयया सहार्थप्रतीतिस्तथाऽप्रधान्यप्रतीतिरपि। राजभृत्ययोरपि क्वचिद् राज्ञः क्वचिच्च भृत्यस्यापि प्राधान्यं प्रतीयते। अप्रधानग्रहणाभावेऽपि प्राधान्यबोधिकायास्तृतीयाया विभक्तक्त्यन्तरविरोधादसम्भवेनाप्रधानत्वार्थिकाया एव सम्भवः अथवाऽन्वयव्यतिरेकाभ्यामेवाप्रधानत्वबोधकत्वं तृतीयायाः। इत्यभिप्रायो भाष्यस्य पण्डितराजसम्मतः। भाष्यास्पृष्टत्वकल्पना तु न सम्यक् प्रतिभाति। अत्र मर्मप्रकाशः। अत्रेदं सर्वं चिन्त्यम्। अप्रधानग्रहणप्रत्याख्यानपरभाष्यविरोधापत्तेः। अप्रधानभृत्यैः सह गतो राजेत्यत्र तृतीयानापत्तेश्च। राज्ञा सह सेना गच्छतीत्यादौ तृतीयापत्तेश्च। अन्तरङ्गत्वस्य दुर्वचनत्वेन तथोक्तेरसांगत्याच्च। बोधस्यान्यथा इष्यमाणत्वाच्च। सहोक्तिलक्षणञ्च यत्रैकस्य शाब्दः

अत्र विचार्यते—'केशैर्वधूनाम्' इत्यादौ पौर्वापर्यविपर्ययानुप्राणिता सहोक्तिरलंकार इति न युक्तम्। अतिशयोक्तेरेवात्र चमत्कृत्याधायकत्वेन सहोक्तेर्नाममात्रत्वात्। 'तव कोपोऽरिनाशश्च जायते युगपन्नृप' इत्यस्मादतिशयोक्त्यलंकारात् 'तव कोपोऽरिनाशेन सहैव नृप जायते' इत्यत्र गुणभावमात्रकृतवैलक्षण्येऽपि विच्छित्तेरविशेषात्, तस्यैव चालंकारविभाजकत्वात्। न च सादृश्यानुप्राणितस्य रूपकादेरप्यपृथग्भावापत्तिः। 'निशाकरसमानोऽयमयं साक्षान्निशाकरः' इत्यादौ विच्छित्तिवैलक्षण्यस्य जागरूकत्वात्। अन्यथा तत्प्रयुक्तस्य

---

क्रियान्वयोऽपरस्य सहार्थबलादार्थः। सा सहोक्तिरिति। काव्यप्रकाशकृतामेव मेवोक्तिः। स्पष्टञ्चेदं मञ्जूषायाम्। इत्याह, बहूनां पूर्वं चिन्तितत्वादधस्तनं चिन्त्यते। तृतीयानापत्तेरित्यस्यायमभिप्रायः प्रतिभाति यद प्रधानशब्दोक्ततया उक्तार्थानामप्रयोग इति न्यायेन तृतीया न स्यात्, तत्तु न समीचीनम् तृतीयावाच्यमन्यदेव विलक्षणमप्रधानत्वं यदप्रधाननाम्ना नोच्यते, अतएव राज्ञा सह अप्रधानभृत्या अपि आयान्ति, कथमधुना अप्रधानसचिवेन सह समायातो राजा न प्रधानेन इत्यादिः स्वरसवाही प्रयोगः। अत्र मञ्जूषादर्शनेन तृतीयानापत्तेरिति पाठः प्रतिभाति। तत्रापीदं वक्तव्यं यद् विशेषक्रियायाः समभिहारे कदाचिद् राज्ञः कदाचन सेनायाश्च प्राधान्यं न तु सर्वत्र राज्ञः। अतएवास्मिन् राष्ट्रे सचिव एव सर्वस्वमित्यादयोऽपि व्यवहाराः। तृतीयापत्तिस्तु इष्टापतिरेव, काव्यप्रकाशकृतान्तु अप्रधानशक्तेरविचारणान्न विरोधः, गुणप्रधान भावस्य चमत्कारोपयोगितामप्याह ग्रन्थकारः। प्रकृतत्वाप्रकृतत्वे इत्यतोभ्यामित्यन्तेन। **तस्यैव** विच्छितिविशेषस्यैव। **व्यतिरेकस्य** एको निशाकरसमानोऽपरश्च साक्षान्निशाकरः। इतिद्वयोर्व्यतिरेकः सादृश्यमात्रस्य चमत्कारित्वे न सिद्ध्येत्। रूपके सादृश्यस्य सत्त्वेऽपि अधिकचमत्कारिरूपकादिव्यपदेश एव न तूपमाव्यपदेशस्तथा सहोक्त्युदाहरणेषु गुणप्रधानभावस्य सत्त्वेऽपि प्रधानचमत्कार्यतिशयोक्तिव्यपदेश एव न

व्यतिरेकस्यानुत्थानापत्तेः। अपि च सादृश्यप्रयुक्तरूपकादिषु सादृश्यस्य गुणत्वाच्चमत्कृतिविश्रान्तिधामभ्यो रूपकादिभ्यो यथा न पृथग्व्यपदेश्यत्वं तथा सहभावोक्त्याविर्भूतायाः कार्यकारणपौर्वापर्यविपर्ययात्मिकाया अतिशयोक्तेः सकाशादस्याः सहोक्तेरपृथग्भाव एवोचितः।

नन्वेवं सति सहोक्तेर्निर्विषयत्वं स्यात्। सहोक्त्यन्तरस्याप्यभेदाध्यवसानरूपातिशयेन कवलीकारादिति चेन्न। अभेदाध्यवसानमूलायां हि सहोक्तावभेदाध्यवसानेन सहोक्तिरुपस्क्रियत इति न गुणेन प्रधानस्य तिरस्कारः। अपि तु प्रधानेन गुणस्येत्युक्तदिशा सावकाशैव सहोक्तिः। गुणप्रधानभावश्च निराग्रहैः सूक्ष्मदृशावधानीयः। किं च परस्पराध्यवसानमात्रमतिशय एव नातिशयोक्तिः। तस्य श्लेषादावपि सत्त्वात्। सा तूपमानेनोपमेयस्य निगरणम्। एवं च 'वर्षन्ति, उन्मीलन्तो निमीलन्तः' इत्यादिष्वेकेनापरनिगरणाभावान्नातिशयोक्तिगन्धोऽपि। अतिशयमात्रं तु प्रायशः साधारणधर्मांशे बहूनामलंकाराणामुपस्कारकम्। नहि 'शोभते चन्द्रवन्मुखम्' इत्यादौ चन्द्रमुखशोभयोर्वस्तुतो भिन्नयोरभेदाध्यवसानमन्तरेणोपमा समुल्लसति। तस्मात् 'कार्यकारणपौर्वापर्यविपर्ययमूलः सहोक्तेरेकः प्रकारः' इति सर्वस्वकारादीनामुक्तिराग्रहमूलैव। अभेदाध्यवसानमूलस्तु प्रकारोभवतु नाम सहोक्तेर्विषयः। यदि तु दीपके तुल्ययोगि-

---

सहोक्तिव्यपदेश इत्याह अपि● इति चेद् न● यत्र गुणप्रधानभावापेक्षयाऽतिशयोक्तेः प्राधान्यं तत्रैव तद्व्यपदेशसाम्राज्यं यत्र तु अतिशयापेक्षया सहोक्तेः प्राधान्यं तत्र सहोक्तिविषय इति भावः। न गुणेन● अतिशयोक्त्या सहोक्तेः। श्लेषमूलकस्याप्यभेदाध्वसानमूलकस्य अस्योदाहरणताऽभिप्रायेणाह किञ्च●

तायां चोपमानोपमेययोः प्राधान्येन क्रियादिरूपधर्मान्वयः, इह तु गुणप्रधानभावेनैवेति विशेषः सन्नपि विच्छित्तिविशेषानाधायकतया नालंकारान्तरताप्रयोजकः, अपि तु तदवान्तरभेदतायाः इति विभाव्यते, निरस्यते च प्राचीनमुखदाक्षिण्यं तदा निविशतामियं क्लृप्तालंकारेष्वेव। किंचिद्वैलक्षण्यमात्रेणैवालंकारभेदे वचनभङ्गीनामानन्त्यादलंकारानन्त्यप्रसङ्गादिति। सत्यम्, गुणप्रधानभावालिङ्गितस्य सहभावस्यालंकारान्तराद्विच्छित्तिविशेषमनुभवन्तः प्राचीना एव सहोक्तेः पृथगलंकारतायां प्रमाणम्। अन्यथा एवंजातीयोपप्लवेन बहु व्याकुली स्यात्। नैव प्रमार्णाकुर्महे वयं मृषा मुकुलितविलोचनान्प्राचः, निवेश्यतां चेयमलंकारान्तरभवनोदरं वराकी इति तु प्रभुतैव केवला। न सहृदयत्वम्।

एवं क्रियायाः साधारणधर्मत्वे इयमुदाहृता।

गुणस्य तथात्वे यथा—

"मान्थर्यमाप गमनं सह शैशवेन
रक्तं सहैव मनसाधरबिम्बमासीत्।
किं चाभवन्मृगकिशोरदृशो नितम्बः
सर्वाधिको गुरुरयं सह मन्मथेन॥"

---

क्लृप्तालङ्कारेष्वेव● दीपकतुल्ययोगितादिषु। उक्तालङ्कारेष्वेवेत्यपि-पाठः। वचनभङ्गीनाम्● उक्तिवैचित्र्याणाम्। गुणप्रधानभावकृतवैचित्र्यानुभवेऽवश्यं पृथग्भाव एवोचित इत्यभिप्रायेणाह प्राचीना एव प्रमाणम्● पौर्वापर्यविपर्ययमूलकस्य सर्वस्वकारोदितं सहोक्तित्वं तु न सम्यक् तत्र गुणप्रधानभावकृतचमत्कारस्य सत्त्वेऽपि गुणत्वादतिशयोक्तेः प्राधान्यात्। अन्यथा● प्राचीनानुभवप्रमाणमन्तरा व्याकुली● सादृश्यचमत्काराग्रहेणैव रूपकादीनामुच्छेदप्रसङ्गः। मान्थर्यमाप● मृगशिशुदृशोर्गमनं

अत्र यद्यपि क्रियापि गुणेन सह समानधर्मतामनुभवति तथापि तस्या नान्तरीयकत्वेनासुन्दरत्वाद् गुणस्यैव पर्यवसाने समग्रभरसहिष्णुत्वम्। शोणत्वाऽऽसक्तत्वाभ्यामधिकभारत्वोपदेशकर्तृत्वाभ्यां च भिन्नयोरप्युपमेयोपमानगतयोर्निरुक्तगुणयोः श्लेषेण पिण्डीकरणात्सहभावोपपत्तिः।

एवं श्लेषाभावेऽपि केवलाध्यवसानेन बोध्यम्।

यत्रैकमेवोपमेयं विलक्षणसहोक्त्यालंबनम् सा मालासादृश्यान्मालासहोक्तिः। वैलक्षण्यं च सहोक्तेः स्वसमानाधिकरणसहोक्त्यन्तरापेक्षया बोध्यम्। 'केशैर्वधूनाम्' इत्यत्र केशैः सह कोषैः सह प्राणैः सहेत्युपमानभेदेन साहित्यस्यानेकत्वेऽपि कर्षणैक्यात्सहोक्तेरभेदः। सति वा कथञ्चिद्भेदे न वैलक्षण्यम्,

---

शैशवेन सह मान्थर्यमाय। यौवनाविर्भावे चाञ्चल्यं निवर्तत इति भावः। मनसा सहैव अधरोष्ठं रक्तमभूत्। अनुरागोद्रेकः सूचितः। किञ्च मन्मथेन सह सर्वाधिको नितम्बो गुरुरभूत्। कामवासनावृद्धिरागता। प्राप्त्यादिक्रियाणां कथन्न साधर्म्यमित्याशङ्कते अत्र यद्यपि ●। नान्तरीयकत्वेन ● मान्थर्यादिगुणान्वयमन्तरा प्राप्त्यादिक्रियाया-मन्वयाभावेन केवलक्रियान्वयेऽसुन्दरत्वम्। समग्र ● पूर्णचमत्कारातिशायकत्वम्। ननु मान्थर्यं शैशवे विनाशारम्भरूपं गमने च गाम्भीर्यम्। रक्तत्वं मनस्यनुरागोऽधरबिम्बे रक्तिमा। गुरुत्वञ्च नितम्बेऽधिकभारत्वं मन्मथपक्षे उपदेशकर्तृत्वम्। तथा च प्रधानाप्रधानयोरेकधर्मान्वयाभावात् कथं सहार्थत्वमित्याशङ्कयाह शोणत्वासक्तत्व ● शोणत्वं रक्तत्वमासक्तत्वमनुरक्तिः। तृतीयान्तमुपमानं प्रथमान्तमुपमेयम्। पिण्डीकरणात् ● अभेदाध्यवसानात्। सहभावः साहित्यम्। विलक्षण ● इदं सहोक्तेर्हृद्यतायै। बोध्यम् ● एकोपमेयकसहोक्तिद्वयादिसत्त्वे मालेति भावः। कर्षणैक्यात् ● साधारणधर्मस्य कर्षणस्यैक्यादित्यर्थः। ननु विशेषणकेशादिसहितकर्षणानां विशेषणभेदेन कथं न सहोक्तिभेद इत्यत आह सति वा ●।

धर्मैक्यात् । धर्मोपमानोभयकृतवैलक्षण्यस्य चात्र विवक्षणात् । 'उन्मीलन्तो निमीलन्तः, इत्यत्र च धर्मवैलक्षण्येप्युन्मीलनधर्मोत्थापितसहोक्तिघटकोपमानानां पद्मपत्रादीनामेव निमीलनधर्मोत्थापितायामपि सहोक्तौ घटकत्वान्न मालारूपत्वम् । भाग्येन सह रिपूणाम्—' इति तूदाहरणमेव ।

यथा वा—

'उन्मूलितः सह मदेन बलाद्बलारे—
रुत्थापितो बलभृतां सह विस्मयेन ।
नीलातपत्रमणिदण्डरुचा सहैव
पाणौ धृतो गिरिधरेण गिरिः पुनातु ॥'

---

**धर्मैक्यात्** ● तथात्वेऽपि भेदे कुत्रापि साधारण्यं न स्यात् । उन्मीलनत्वनिमीलनत्वधर्मभेदेन साधारणस्य भेदेऽपि प्रत्येकमुपमानभेदाभावात् न सहोक्तिभेद इत्याह **उन्मीलन्तो** ● ।

**तूदाहरणमेव** ● मालाया इति शेषः । क्षितिशासनस्यैकस्योपमेयस्य भाग्यमृत्यूपमानभेदेन उत्थानात् धर्मभेदेन सहोक्ते र्भेदात् । वक्ष्यमाणवैचित्र्यायोदाहरणान्तरमाह **उन्मूलित** ● नील यदातपत्रं पर्वतस्य नीलत्वात् तस्य मणिनिर्मितोयोदण्डस्तस्य रूगिव रूग्यस्य तेन गिरिधरेण इन्द्रस्य मदेन सहं बलादुत्पाटितः वीराणाम् आश्चर्येण सहोत्थापितः, नीलच्छत्रमणिदण्डशोभया सहैव पाणौ धृतोरैवतको गिरिः पुनातु । मूलादु त्पाटनेन शक्रस्यमदउत्पाटितः उत्थापनेन कथमुत्थापितवानिति, बीराणां विस्मय उदतिष्ठत्, पाणौ धारणेन हस्ते नीलच्छत्रदण्डकान्तिः समागता । सहोक्तित्रयान्मालात्वं स्फुटम् । यद्यपि उन्मूलित इत्यस्य समूलं खण्डित इति मर्मप्रकाशेन व्याख्यातं खण्डकरणञ्च न प्रसिद्धम्, तथापि न खण्डकरणमेवास्यार्थः खडिभेदन इत्यनुशासनात् । तथा च समूलं विदारित इत्याशयेन तथोक्तं स्यात् । पाणौ धारणानन्तरं दण्डरूचिरायाति, सह कथनेन पौर्वापर्यविपर्ययं सङ्गमयति । परं

अत्र नीलातपत्रमणिदण्डरुचो गिरिधारणोत्तरकालिकत्वादुत्तरार्धगता पौर्वापर्यविपर्ययानुप्राणितैव सहोक्तिर्निदर्शनानुप्राणिता च । पूर्वार्धगते तु प्रकारद्वयेनापि संभवतः ।

इति रसगङ्गाधरे सहोक्तिप्रकरणम् ।

अथ विनोक्तिः—

विनार्थसंबन्ध एव विनोक्तिः ॥

---

तस्य न प्रधान्यमिति अनुप्राणितेत्युक्तम् । **निदर्शना●** पाणौ मणिदण्डत्वं पर्वते नीलच्छत्रत्वमारोपणीयमिति न केवलायारूच. पाणौ । अतो गिरिधारणे वाक्यार्थे सदृशस्य तादृशवाक्यार्थस्यैवारोपः सदृशवाक्यार्थयोरैक्यारोपादिति मर्मप्रकाशः । सरला सरला तु पाणौ रूच एवारोपात्पदार्थ निदर्शनां व्याचष्टे । तथा चोत्तरार्धे केवलं पौर्वापर्यविपर्यय इत्यत आह **पूर्वार्ध●** । **प्रकारद्वय●** पौर्वापर्यविपयः केवलाभेदाध्यवसानञ्च । उन्मूलानन्तरं मदादिविनाशात् । मदविनाशादेरुत्पाटनादेश्चैक्यारोपाच्च । अत्रत्यहिन्दीचन्द्रिकाटीकाया हिन्दीरसगङ्गाधरालोचनपरायाः पदार्थनिदर्शनासमर्थनं न समीचीनम्, उपमानस्य पृथक्प्रसिद्धौ उपमानगतस्य एकपदार्थस्य उपमेये आरोपे पदार्थनिदर्शना जायते, अत्र छत्रं दण्डो दण्डरुचिश्च न प्रसिद्धति । सर्वमारोपणीयमेव । पदद्वयस्यापि वाक्यत्वात् अत्र पञ्चपदार्थस्य वाक्यार्थस्यैवौपम्यम् । नीलातपत्रमणिदण्डरुचिरर्थसमाजसमुद्भूता नैकपदार्थः ।

॥ इति सहोक्तिनिरूपणम् ॥

## विनोक्तिनिरूपणम्

विनार्थस्योक्तिरिति मध्यमपदलोपिसमासेन विनोक्तिरलङ्कारनाम । उक्तेः स्वत एव लाभात्तां परित्यज्य लक्षणं रचयति **विनार्थ●** अर्थपदनिवेशाद् वक्ष्यमाणविनार्थकनिरादिपदसमभिहारेऽप्येषा । विनार्थो व्युत्पत्तिवादेऽभावः । यथा भक्तिरसं विना नर इत्यादौ भक्तिरसाभावस्य आश्रयतासम्बन्धेन नरेऽन्वयः । हरिभक्तिरसाभाववान् नरो न शोभते । अथवा सहोक्तावलङ्कारे

हृद्यत्वं चानुवर्तते। तच्च विनाकृतस्य वस्तुनो रमणीयत्वारमणीयत्वाभ्यां भवति।

अरमणीयत्वे यथा—

'संपदा संपरिष्वक्तो विद्यया चानवद्यया।
नरो न शोभते लोके हरिभक्तिरसं विना॥'

यथा वा—

'वदनं विना सुकवितां सदनं साध्वीं विना वनिताम्।
राज्यं च विना धनितां न नितान्तं भवति कमनीयम्॥'

रमणीयत्वे यथा—

'पङ्कैर्विना सरो भाति सदः खलजनैर्विना।
कटुवर्णैर्विना काव्यं मानसं विषयैर्विना॥'

पूर्वा तु केवला, इयं तु दीपकानुकूला।

मिश्रिता यथा—

---

यत्साहित्यं निर्वचनीयं तदभावो विना शब्दार्थः। तन्मते भक्तिसाहित्याभाववान् नरो न शोभते इत्यादिरर्थः। विनार्थसम्बन्धीतिपाठेऽभावविशिष्टो नर एव गृह्येत न भक्तिरसादिः, सहोक्तौ सम्बन्ध एव पठितोऽतः प्रक्रमभङ्गश्च। मत्वर्थीयप्रत्ययस्य वैयर्थ्यञ्चातो मर्मप्रकाशे सम्बन्ध एवेति पाठ इत्युक्तम्। आलङ्कारिकैरन्यैर्विनाकृतस्यार्थस्य शोभनत्वमशोभनत्वञ्च लक्षणघटकं मन्यते। तच्चालङ्कारसामान्यकुक्षिप्रविष्टहृद्यत्वेनैव गतार्थम्। रमणीयत्वारमणीयत्वादिवर्णनमन्तरा हृद्यत्वासम्भवादित्यभिप्रायेणाह-**हृद्यत्वञ्च** ●। **तच्च** ● हृद्यत्वञ्च। विनाकृतस्यारमणीयत्वोदाहरणमाह **सम्पदा** ● संपरिष्वक्त आलिङ्गितो युक्तो वा, अनवद्यया निर्दोषया। अनेकविनापदयुक्तमुदाहरणमाह **वदनम्** ● सुकवितां विना न वदनम्, साध्वीं वनितां विना सदनं न, धनितां धनं विना राज्यं नितान्तं कमनीयं न भवति। **पङ्कैः** ● सदःसभा मानसं मनः। **पूर्वा** ● द्वयो। **दीपकानुकूला** ● भातीत्यस्य सर्वत्रान्वयेन दीपकोत्थापिका। **मिश्रिता** ● रमणीयत्वारमणीयत्व-

'रागं विना विराजन्ते मुनयो मणयस्तु न ।
कौटिल्येन विना भाति नरो न कबरीभरः ॥'

अत्र प्रतिवस्तूपमानुकूला ।

'त्रासैर्विना विराजन्ते शूराः सन्मणयो यथा ।
न दानेन विना भान्ति नृपा लोके द्विपा इव ॥'

अत्र श्लेषमूलोपमानुकूला ।

'यथा तालं विना रागो यथा मानं विना नृपः ।
यथा दानं विना हस्ती तथा ज्ञानं विना यतिः ॥'

पूर्वं क्रियागुणादिसंबन्ध आवश्यकः इह तूपमामाहात्म्यादवगम्यते स इति न तथा ।

इयं च न केवलं विनाशब्दस्य सत्त्व एव भवति, अपितु विनाशब्दार्थवाचकमात्रस्य । नेन नञ्-निर्-वि-अन्तरेण-ऋते-रहित-विकलइत्यादिप्रयोगे इयमेव ।

'निर्गुणः शोभते नैव विपुलाडम्बरोऽपि ना ।
आपातरम्य-पुष्पश्री-शोभितः शाल्मलिर्यथा ॥'

---

वर्णनाभ्यामिति शेषः । रागं● रागं विना मुनीनां शोभा मणीनां न । एवमुत्तरार्धेऽपि । मुनिपक्षे रागोऽनुरागो मणिपक्षे रक्तिमा । कौटिल्यं वक्रमन्तःकरणम् । केशभारपक्षे वक्रिमा । त्रासैर्विना● यथा सन्मणयो दोषैर्विना विराजन्ते तथा शूरा भयैर्विना । मदजलेन विना हस्तिन इव वितरणं विना राजानो न भान्ति । त्रासदानयोश्श्लेषः । भयदोषयोर्मदजल-वितरणयोश्च वस्तुप्रतिवस्तुभावात्प्रतिवस्तूपमोत्तिष्ठति । यथातालम्● रागो गाने स्वरसञ्चारस्तालं संगीतप्रसिद्धं ध्वनिविशेषं विना न शोभते । एवमग्रेऽपि । दानं मदवारि यतिः सन्यासी । पूर्वम्● पूर्वोदाहरणेषु उपादानं विनाऽप्रतीतेर्गुणक्रियादिसम्बन्धोपादानम् आवश्यकम् । उपमामाहात्म्याद्● उपमाप्रतिपादनकौशलात् । न तथा● नोपादानमावश्यकम् । इत्यादि● आदिना अ अनित्यादेः संग्रहः । निर्गुणः● वस्त्रभूषणादिविविधाडम्बरोऽपि

अलङ्कारभाष्यकारस्तु 'नित्यसंबन्धानामसंबन्धवचनं विनोक्तिः' इत्याह ।

तस्य मते तु नैतान्युदाहरणानि ।

इदं तूदाहरणम्—

'मृणालमन्दानिलचन्दनानामुशीरशैवालकुशेशयानाम् ।
वियोगदूरीकृतचेतनाया विनैव शैत्यं भवति प्रतीतिः ॥'

अत्र शैत्यस्याविनाभावेऽपि विनाभावो निबद्धः ।

यथा वा—

'शैत्यं विना न चन्द्रश्रीर्न दीपः प्रभया विना ।
न सौगन्ध्यं विना भाति मालतीकुसुमोत्करः ॥'

अलङ्कारान्तरसमालिङ्गनाविर्भूतमेवास्या हृद्यत्वम्, न स्वतः । तेनालंकारान्तरत्वमपि शिथिलमेवेत्यपि वदन्ति ।

अथास्या ध्वनिः—

यथा—

---

पुरुषः । शाल्मलिपुष्पं सुन्दरं सौरभविरहि च । इत्याह● यस्य सम्बन्धः प्रसिद्धस्तस्यासम्बन्धवर्णनम् । मृणाल● मृणालः कमलनाडी, उशीरो भाषायां खसनाम्ना प्रसिद्धः कुशेशयः कमलम् । वियोगेन दूरीकृता बुद्धिर्यस्याः, शैत्याभाववत्तया प्रतीतिः । शैत्यस्य● शैत्यं विना न भावः । शैत्यव्याप्तिः । विना भावः शैत्यं विना एषां भावः । शैत्यसाक्षात्कारेणैवाविनाभावो निबद्धो न तु शैत्येन, साक्षात्कारस्तु न नियत इत्यस्वरसादुदाहरणान्तरमाह शैत्यं विना● । अलङ्कारान्तर● अलङ्कारान्तरेण युक्ते एव विनोक्तेरुदाहरणे हृद्यत्वं तथा च विविक्तविषया-भावान्नास्यालङ्कारान्तरत्वमिति भावः । वदन्तीत्यनेनास्वरसः सूचितः । स च उदाहरणसंकीर्णत्वेऽपि लक्षणस्यासंकीर्णत्वात् 'उपधेयसङ्करेऽप्युपाधेरसङ्करात्' इति न्यायेन कस्यचिद्व्यतिरेकप्रयुक्तयोरन्यस्य रमणीयत्वारमणीयत्वयोर्वर्णन-प्रयुक्तस्य चमत्कारस्यानुभवेन पार्थक्यं युक्तम् । अभिप्रयन्ति चेममस्वरसम-

'विशालाभ्यामाभ्यां किमिह नयनाभ्यां फलमसौ
न याभ्यामालीढा परमरमणीया तव तनुः ।
अयं तु न्यक्कारः श्रवणयुगलस्य त्रिपथगे
यदन्तर्नायातस्तव लहरिलीलाकलकलः ॥'

अत्र त्वद्दर्शनं विना नयनयोः, त्वल्लहरिकोलाहलश्रवणं विना श्रवणयोश्चारमणीयत्वं फलप्रश्न-धिक्काराभ्यां व्यज्यते ।

तस्य च भावध्वन्यनुग्राहकत्वेऽपि ध्वनिव्यपदेश्यत्वमव्याहतम्, अन्यथानुग्राहकत्वलक्षणसंकरोच्छेदापत्तेः ।

एवं च—

'निरर्थकं जन्मगतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम् ।
उत्पत्तिरिन्दोरपि निष्फलैव कृता विनिद्रा नलिनी न येन ॥'

इति कस्यचित्कवेः पद्यं विनोक्तिध्वनिरेव । परं तु परस्परविनोक्तिवशाद्वैलक्षण्यशालि ।

इति रसगङ्गाधरे विनोक्तिप्रकरणम् ।

---

लङ्कारकौस्तुभकृतोऽपि । विशालाभ्याम्● हे गङ्गे इह संसारे विशालाभ्यामपि आभ्यां नयनाभ्यां किम्फलम् ? याभ्यां नेत्राभ्याम् असौ प्रसिद्धा परमसुन्दरी तव तनुर्न दृष्टा । तव तनुसाक्षात्कारं विना विशाले अपि नयने न रमणीयतामावहतः । यस्य श्रवणयुगलस्य मध्ये तव लहरीलीलायाः कलकलशब्दो नायातस्तस्य श्रवणयुगलस्यायं तिरस्कारः । अत्रापि पूर्ववद् व्यङ्ग्यम् । ननु गङ्गाविषयकरतिरेव प्रधानं तस्याश्चोपस्कारिका व्यज्यमानाऽपि विनोक्तिरिति कथं ध्वनित्वमित्याशङ्कां निरस्यति तस्य च● अनुग्राहकत्वमुपस्कारकत्वम् । व्यङ्ग्यान्तरम् प्रति उपस्कारकमपि ध्वनिरिति नव्यमतेनेदम् अन्यथा● अनुग्राहकस्य ध्वनित्वाभावे । दापत्ते● ध्वनिभेदे अनुग्राह्यानुग्राहकसङ्करोऽप्येको भेदः । स न विरुध्येतेति भावः ।

निरर्थकम्● तस्या नलिन्या जन्म निरर्थकम् यया चन्द्रबिम्बं न दृष्टम् । चन्द्रमस उत्पत्तिरपि व्यर्था येन नलिनी विकसिता न कृता । ध्वनिरेव●

**अथ समासोक्तिः—**

**यत्र प्रस्तुतधर्मिको व्यवहारः साधारणविशेषणमात्रोपस्थापिताप्रस्तुतधर्मिकव्यवहाराभेदेन भासते सा समासोक्तिः ॥**

साधारणविशेषणमात्रश्रुत्युपस्थापिताप्रकृतधर्मिकव्यवहाराभिन्नत्वेन भासमानप्रकृतधर्मिकव्यवहारत्वमिति चैकोक्तिः ।

शब्दशक्तिमूलध्वनिवारणाय मात्रेति । तत्र विशेष्यस्यापि श्लिष्टतया प्रकृतेतरधर्म्युपस्थापनद्वारा तादृशधर्मिकव्यवहारोपस्थापकत्वात् ।

एवमपि—

---

चन्द्रं विना नलिनी न शोभते नलिनीं विना चन्द्रोऽपि न शोभत इत्यर्थस्य व्यङ्ग्यत्वात् । परस्परं नलिनीं विना चन्द्रस्य तं विना तस्याः । परस्परमपेक्षितसहयोगयोः सहयोगश्च न रक्षतारुद्देशेन अमर्षो ध्वन्यते, तस्य चोपस्कारको विनोक्तिध्वनिरिति पूर्वपद्यविवरणमिवावसेयम् । स्वमुखं पटेनाच्छादयन्तीं पुरुषमुखञ्च पश्यन्तीं प्रति सुन्दरं मन्यभावस्य पूर्वार्धोक्तिः, उत्तरार्धश्च तस्याः प्रत्युक्तिरित्यपि कुत्रचित् श्रूयते ।

॥ इति विनोक्तिप्रकरणम् ॥

## समासोक्ति निरूपणम्

उक्तिशब्दघटिततया सन्दर्भद्योतनायाह अथ● प्रस्तुताप्रस्तुतव्यवहारयोः संक्षेपेणोक्तिर्बोधनं यत्रेति योगरूढिशब्दस्य योगार्थः । रूढ्यर्थमाह लक्षणमुखेन **यत्र**● प्रकृतव्यवहारस्य वाचकानि यानि विशेषणपदानि तैरेव विशेषणपदैरुपस्थितस्य अप्रकृतवृत्तिव्यवहारस्य प्रकृतवृत्तिव्यवहारेऽभेदावभासः समासोक्तिरिति सरलार्थः । तत्र● शब्दशक्तिमूलकध्वन्युदाहरणे । अपिना विशेषणस्य । प्रकृतेतरोऽप्रस्तुतः । तथा च विशेषणपदमात्रेण व्यवहारमात्रस्यानुपस्थानान्न दोषः । प्रस्तुत्वाप्रस्तुतत्वे व्यवहारधर्मिणि एव विवक्षिते न तु

'आबध्नास्यलकान्निरस्यतितमां चोलं रसाकाङ्क्षया
लङ्काया वशतां तनोषि कुरुषे जङ्घाललाटक्षतम्।
प्रत्यङ्गं परिमर्दनिर्दयमहो चेतः समालम्बसे
वामानां विषये नृपेन्द्र भवतः प्रागल्भ्यमत्यद्भुतम्॥'

इत्यत्र प्रकृतधर्मिकप्रकृताप्रकृतव्यवहारविषयके श्लेषेऽतिव्याप्तेर्वारणाय प्रस्तुताप्रस्तुतत्वे धर्मिविशेषणतयोपात्ते। व्यवहारविशेषणत्वेन तयोरुपादाने तु साधारणविशेषणमात्रश्रुत्युपस्थापिताप्रकृतशृङ्गारवृत्तान्ताभिन्नत्वेन स्थित एवात्र प्रकृतो वीरवृत्तान्त इति स्यादेवातिप्रसङ्गः। न चात्र राज्ञो वर्णनस्य प्रस्तुतत्वात्तद्गतयोर्द्वयोरपि वृत्तान्तयोः प्रस्तुतत्वमिति कथमति-

---

व्यवहारयोरित्यतिव्याप्तिदानेन निर्वक्ति आबध्नास्य● क्वचित्संग्रह्णास्येतिपाठः। हे नृपेन्द्र वामानां कुटिलानां सुन्दरीणाञ्च विषये भवतः प्रागल्भ्यस्वरूपं पादत्रयेण वर्णितम्। अलकां कुबेरपुरीम् अवरुत्से अलकान् केशान् वा सज्जीकरोषि। चोलं चोलदेशं कञ्चुकञ्च निस्सारयसि। भूमेरिच्छया लङ्कापुर्यावशतां स्वाधीनतां तनोषि पक्षे शृङ्गाराभिलाषया अलं पर्याप्तं कामिनीना कायस्य अवशतां पारतन्त्र्यं तनोषि। जङ्घालदेशस्य लाटदेशस्य च विनाशं कुरुषे। जङ्घाभागे ललाटभागे च कामिनीशरीरे नखक्षतम्। अङ्गं प्रति अङ्गदेशस्य परिमर्दे निर्दयं चेतः समालम्बसे। अङ्गमङ्गंप्रति सर्वावयवस्य परिमर्दे निर्दयं चेतः समालम्बसे। प्रत्यङ्गमित्यत्र प्रतिशब्दस्य परित इति विवरणं व्याकरणानभिज्ञस्य सरलाकृतो नातिचित्रम्। अस्य व्याख्याने मर्मप्रकाशे 'हे नृपेन्द्र भवतः परिमर्दनिर्दयं चेतः प्रत्यङ्गं प्रत्यवयवम् अङ्गमङ्गदेशञ्च समालम्बते' इति पाठ उपलभ्यते। तेन सर्वत्र तन्मते प्रथमपुरुषान्तपाठकल्पने सम्बोधनयोगे मध्यमपुरुषक्रियाप्रयोगप्रसिद्धिर्न सामञ्जस्यं धत्ते। केवलतृतीयपाद एव प्रथमपुरुषक्रियाप्रयोगे मध्यमपुरुषक्रियाकुले विपरीतायास्तस्या एकस्याः प्रयोगः कण्टकमिव प्रतिभाति। नापि किमपि भावार्थवैचित्र्यमेव व्याख्याने विचारपथमवतरति। तथापि शाब्दिकसर्वस्वतैव तत्कृतोऽस्य हेतुरिति मन्ये। तथा च पूर्वव्याख्याने प्रत्यङ्ग-

प्रसङ्ग इति वाच्यम्। न स्यादतिप्रसङ्गः यदि वर्णनमात्रं प्रस्तुतं स्यात्। तत्संग्रामादौ वीरतामात्रवर्णनप्रस्तावे तु स्यादेवातिप्रसङ्गः।

"मलिनेऽपि रागपूर्णां विकसितवदनामनल्पजल्पेऽपि।
त्वयि चपलेऽपि च सरसां भ्रमर कथं वा सरोजिनीं त्यजसि॥"

इत्याद्यप्रस्तुतप्रशंसायामप्रकृतव्यवहारः साक्षादुपात्तत्वाद्विशेष्येणाप्युपस्थापित एवेति न तत्रातिव्याप्तिः।

यदि तु जलक्रीडादौ भ्रमरवृत्तान्त एव प्रस्तुतस्तदा भवत्येवेयं समासोक्तिः।

---

मिति अव्ययीभावसमासितस्य समासान्तरघटके परिमर्दपदार्थेऽन्वयः कृतः स न युक्तः। प्रसिद्धश्चायं मार्गो नैयायिकानामपि। कुत्रचिद् द्वितीयः प्रथमपुरुषपाठोऽपपाठः प्रतिभाति। समालम्बनक्रमं चेतः अङ्गदेशो वा सम्यक्? अङ्गदेशस्य परिमर्देऽन्वये गौणता शोभते नवा? इति चिन्तनीयम्। तथा च तद्रहस्यानभिज्ञायाः सरलाया आक्षेपः सारल्यमेव तस्या नाधिक्षेपः। इति। प्रस्तुतोराजा तदीयश्रृङ्गारवृतान्तोऽप्रस्तुतो वीरवृतान्तः प्रस्तुतः। व्यवहारविशेषणत्वे प्रस्तुताप्रस्तुतयोरतिव्याप्तिः। धर्मिविशेषणत्वे एक एव धर्मी राजा स च प्रस्तुत एवेति नातिव्याप्तिः किन्तु श्लेषालङ्कारः। मलिनेऽपि● मात्रपदस्यैव व्यावर्त्यमिदमपि। सप्तम्यन्तानि त्वयीत्यस्य द्वितीयान्तानि सरोजिनीमित्यस्य विशेषणानि। हे भ्रमर मलिनेऽपि त्वयि रागयुक्तां वाचालतायामपि प्रसन्नमुखीं चपले रसयुक्तां सरोजिनीं दोषयुक्तेऽपि अनुरागिणीं गुणवतीं कथं त्यजसि। अत्र भ्रमरवृतान्तो वाच्योऽप्रस्तुतः। सगुणप्रणयिन्यां चपलनायकवृतान्तश्च व्यङ्ग्यः प्रस्तुतः। तयोरभेदादतिव्याप्त्याशङ्का। वारणन्तु अप्रकृतव्यवहारस्य विशेष्यवाचकपदादप्युपस्थितेः। अप्रस्तुतप्रशंसा● अप्रस्तुतनिरूपणमुखेन प्रस्तुतस्य निरूपणमिति तस्याः स्वरूपम्। उपात्तत्वात्● विशेष्यस्य धर्मिणः साक्षादुपादनादित्यर्थः। उदाहरणान्तरदानबीजं वैचित्र्यमाह यदितु● तुना नायिकायाः प्रस्तुतत्वं व्यवच्छिनत्ति। प्रत्यक्षं भ्रमरमुद्दिश्य कस्याश्च-

तत्र तावत्—

'विबोधयन् करस्पर्शैः पद्मिनीं मुद्रिताननाम् ।
परिपूर्णानुरागेण प्रातर्जयति भास्करः ॥'

इत्यत्र किरणस्पर्शकरणक-मुकुलितपद्मिनीकर्मक-विकासानुकूलव्यापारवदभिन्नो भास्करो जयतीति वाक्यार्थः शक्त्यैव तावत् प्रतीयते । हस्तस्पर्शकरणक-नायिकाविशेषकर्मकानुनयानुकूलव्यापारवदभिन्न इत्यादिश्चापरोऽर्थं उभयत्रानुषक्तया तयैव शक्त्या, शक्त्यन्तरेण, व्यक्त्या वा सर्वथैव प्रतीयत इत्यत्र सहृदया एव प्रमाणम् । एवं च द्वाविमौ वाक्यार्थौ सव्येतर-

---

दुक्तिश्चेत् प्रस्तुतभ्रमरवृत्तान्तेऽप्रस्तुतचपलनायकवृतान्तस्याभेदात् लक्ष्यमेवेति भावः ।

विबोधयन्● भास्करः प्रातः मुद्रिताननां मुकुलितां रात्रिजागरणे खिन्नवदनाञ्च, पद्मिनीं कमलिनीं खण्डितां नायिकाञ्च किरणसम्बन्धैर्हस्तस्पर्शैश्च विकसितां जागृताञ्च कुर्वन् गाढरक्तिम्ना पूर्णप्रेम्णा च सर्वोत्कर्षेण वर्तते । प्रस्तुतभास्करवृत्तिर्मुकुलितायाः पद्मिन्याः किरणैर्विकासकरणं व्यवहारो, गम्यमानो यः, खण्डितनायिकायाः करस्पर्शैः प्रसन्नकरणं व्यवहारोऽप्रस्तुतनायकधर्मिकस्तदभेदेन वर्तमानोऽतो लक्षणसमन्वयः । विचारावताराय शाब्दबोधप्रक्रियां दर्शयति● विबुध् इत्यस्य विकासः पक्षान्तरे चानुनयोऽर्थः । णिचस्तदनुकूलो व्यापारोऽर्थः । शतृप्रत्ययस्य मतुबर्थ आश्रयोऽर्थः । तृतीयायाः करणं द्वितीयायाः कर्मार्थः । तयोर्व्यापारेऽन्वयः । किरणस्पर्शः करणं यस्य पद्मिनीकर्म यस्यैवंभूतो यो विकासानुकूलो व्यापारस्तदाश्रयाभिन्नो भास्करः । शत्रर्थाश्रयस्य भास्करेण सहाभेदेनान्वयः । शक्त्यैव तावत्● प्रथमशक्त्यैव प्रतीयते इत्यर्थः । हस्तस्पर्श● पूर्ववदस्यापि विवरणं बोध्यम् । उभयत्र● पूर्वार्थनिरूपितया उत्तरार्धनिरूपितया चैकयैव शक्त्येतिमतविशेषेणेदम् । शक्त्यन्तरेण● पूर्वार्थनिरूपिता एका शक्तिः, उत्तरार्थनिरूपिताचान्येति नानार्थकशब्दस्थले शक्तिभेदादित्यर्थः । नानाशक्तिसत्त्वेऽपि प्रकरणादिना शक्तेर्नियन्त्रणात् न शक्त्यन्तरेण बोध इति मतेनाह व्यक्त्यावा● व्यञ्जन-

गोविषाणवदत्यन्तासंसृष्टौ यदि स्यातां तदा भगवतो भास्करस्य कामुकत्वं कमलिन्या नायिकात्वं च सकलप्रतीतिसिद्धं विरुद्धं स्यात्। द्विप्रधानत्वेन, वाक्यभेदश्चापद्येत। यदि चापरोऽर्थः प्रकृतकर्तर्यारोप्यते तदा कमलिनीविकासकर्ता नायिकानुनयकर्ता च सूर्य इत्येकत्र द्वयमिति विषयताशाली बोधः स्यात्, न तु पूर्वोक्तानुपपत्तिपरिहारः। यदि च श्लेषमूलाभेदाध्यवसानेन कमलिन्यादीनां नायिकात्वादिप्रत्यय उपपाद्यते तथाप्यश्लिष्टपदोपस्थापितो भगवान्नायकत्वानाघ्रात एव। पद्मिनीशब्दस्थाने नलिनीशब्दोपादाने सापि नायिकात्वेन, कथं नाम प्रतीतिपथमियात्? । तस्माद्विशेषणसाम्यमहिम्ना प्रतीतोऽप्रकृतवाक्यार्थः स्वानुगुणं नायकादिमर्थमाक्षिप्य तेन परिपूर्णविशिष्टशरीरः सन्

---

येत्यर्थः। **असंसृष्टौ** परस्पराऽसंसृष्टपदार्थकौ। **द्विप्रधानत्वेन** व्यापारमुख्यविशेष्यकबोधवादिनां शाब्दिकानां नये विशेष्ययोः परस्परान वयाद् वाक्यद्वयम्। **यदि च** नैयायिकमतेनाख्यातस्य कर्तृत्वार्थत्वात्। **एकत्र द्वयम्** एकस्मिन् विशेष्ये परस्पराऽनन्वितप्रकारद्वयकं ज्ञानम्। भूतलं घटवत्पटवच्चेति यथा। भूतलनिष्ठविशेष्यतानिरूपितघटपटनिष्ठा प्रकारता द्वयी। घटविशिष्टपटवद्भूतलमित्यादिविशिष्टवैशिष्ट्यावगाहिबोधे भूतलनिष्ठविशेष्यतानिरूपिता घटविशिष्टपटनिष्ठा एकैव प्रकारता। तादृशप्रकारताया अवच्छेदकता घटे इति विवेकः। **पूर्वोक्तानु** पद्मिन्या नायिकात्वं भास्करस्य च नायकत्वं सकलप्रतीतिसिद्धं न स्यात्। **श्लिष्टमूलाभेद** पद्मिनी नायिकाविशेषः पद्मशब्दादिनिप्रत्ययान्ततया नायिकाविशेषे रूढिशक्त्या वा कमलिनी च। तयोरेकशब्दमूलकतयाऽभेदेन कमलिन्यां नायिकात्वं सिद्धं तथाऽपि भास्करस्य नायकत्वमसिद्धमेवेत्याह **भगवान्**। **नलिनीशब्दो** तस्य श्लिष्टत्वाभावान्नायिकात्वमपि असिद्धम्। **महिम्ना** विशेषणसाम्यमात्रेण। **स्वानुगुणम्** प्रकृतवाक्यार्थानुकूलं रसानुकूलञ्च। **नायिकादिम्** आदिपदेन नायकम्। **विशिष्टशरीरः** कमलिनीविकास-

प्रकृतवाक्यार्थे स्वावयवतादात्म्यापन्नतदवयवोऽभेदेनावतिष्ठते । स च परिणाम इव प्रकृतात्मनैव कार्योपयोगी, स्वात्मना च रसाद्युपयोगी । अत्र चाप्रकृतार्थस्य पृथक्शब्दानुपादानाद्रूपकाद्वाक्यार्थसंबन्धिनो वैलक्षण्यम्, पदार्थरूपकात्तु स्फुटमेव । आक्षिप्तार्थघटितत्वाच्च वाक्यार्थश्लेषात् । एवं चात्र — शक्त्याक्षेपाभ्यां सर्वार्थनिर्वाह इति भामहोद्भटप्रभृतीनां चिरन्तनानामाशयः ।

'निशामुखं चुम्बति चन्द्र एषः' इत्यादौ निशाचन्द्रशब्दयोरश्लिष्टत्वान्मुखचुम्बनमात्रस्य च पुत्रादिसाधारण्येन कथं

---

कर्ता नायिकानुनयकर्ता च भास्कर इति रूपमापन्नौ वाक्यार्थौ । स्वावयव● स्वपदेनाप्रकृतवाक्यार्थस्तदवयवा नायकनायिकानुनयादयः तत्तादात्म्यमापन्नास्तस्य प्रकृतवाक्यार्थस्यावयवाः कमलिनीविकासभास्करादयो यस्याप्रकृतवाक्यार्थस्य सोऽप्रकृतवाक्यार्थोऽभेदेन प्रकृतवाक्यार्थेऽवतिष्ठत इति मूलार्थः । ततश्च नायिकारूपकमलिनीविकासकर्ता नायकाभिन्नो भास्कर इति समासोक्तिबोध आयाति । स च● अनुनयादिर्विकासात्मनैव प्रकृतोपयोगी । नायकनिष्ठनायिकानुनयादी रसाद्यनुकूलः । सम्बन्धिनो● पृथगुपस्थितयोरेवाभेदसम्भवात् । स्फुटमेव● अप्रकृतव्यवहारस्य पदार्थत्वाभावात् । सर्वार्थनिर्वाहः● रसाद्यनुगुणनायकत्वादिप्रतीतिः । तथा च नायकनायिकयोरपि तादात्म्यं कमलिनीभास्करयोः प्राचां मतेऽपि इति पण्डितराजग्रन्थस्य पूर्वोत्तरपक्षाभ्यामवसीयते । यद्यपि सर्वस्वकारो प्राचामशयः कुवलयानन्दमनुरुध्यान्यथावर्णितस्तदुपपादनञ्चाग्रिमग्रन्थसापेक्षमिति तदानीमेव वर्णयिष्यते । चिरन्तनानाम्● अस्वरसश्चात्र श्लेषांशे सामर्थ्ययोरभावेऽनिर्वाहः । तादृशश्चोपक्रमते निशामुखम्● आक्षेपपदार्थस्त्रिधा प्रसिद्धः । अर्थापत्तिरनुमान व्यञ्जना च । तृतीया चेष्टा तस्या एवाग्रे स्वमतेऽप्युपादानात् । द्वयञ्च व्याप्तिरूपं नियममपेक्षते तदनुरोधेन दोषः । श्लेषाभावेन शक्तेरवसराभावात् । पुत्रादि● नायिकत्वाभाववति पुत्रे चुम्बनस्य विद्यमानत्वात् चुम्बनं न

तावन्नियतनायकाक्षेपकत्वम्, कथं वाऽऽक्षिप्तस्यापि नायकादेर्निशाचन्द्रयोरेवाभेदेनान्वयः, न भेदेन चुम्बनादौ।

तथात्वे च तयोर्नायकताताटस्थ्ये रसानुद्बोधापत्तेः। तस्मात् 'निशामुखं चुम्बति चन्द्रिकैषा' 'अहर्मुखं चुम्बति चण्डभानुः' इत्यादावप्रतीयमानं नायकत्वं प्रकृते टाप्प्रथमाभ्यां प्रतिपादितेन प्रकृत्यर्थगतेन स्त्रीत्वेन पुंस्त्वेन च स्वाधिकरण एवाभिव्यज्यते। एवं च निशाशशिनोर्नायिकत्वसिद्धिः। श्लिष्टविशेषणैः व्यञ्जनव्यापारेणैवाप्रकृतार्थबोधनम्, शक्तेः प्रकरणादिना नियन्त्रणात्। तदित्थं व्यञ्जनमाहात्म्यादेवाप्रकृतवाक्यार्थतादात्म्येन प्रकृतवाक्यार्थोऽवतिष्ठते। गुणीभूतव्यङ्ग्यभेदश्चायमिति तु रमणीयः पन्थाः।

---

नायिकात्वनियतम्। **नियत**● क्वचित्प्रकरणादिसाहाय्येनाक्षेपकत्वसम्भवेऽपि इत्यर्थः। **वाभेदेन**● चुम्बनाक्षिप्तनायकादेरनाक्षेपकेऽनन्वयादिति भावः। **तथात्वे**● निशाचन्द्रयोर्नायकाद्यनन्वये। निशायां नायिकत्वानवगमे तच्चुम्बनकर्तुश्च नायकत्वानवगमे चुम्बनमात्रेण रसानुद्भवादिति ताटस्थ्यशब्देनोक्तम्। वाक्यद्वयेनान्वयव्यतिरेकाभ्यां टाप्प्रथमयोर्नियतव्यञ्जकत्वं दर्शयति प्रकृते निशामुखमित्यादौ। **स्वाधिकरण एव**● प्रत्यासत्या प्रकृत्यर्थे एव स्वव्यङ्ग्यान्वय इति भावः। स्वं स्त्रीत्वादिकं तदधिकरणं निशाचन्द्रौ तत्रैवान्वयि नायकत्वम्। **व्यञ्जनाव्यापारेणैव**● एवकारेणोभयानुषक्तशक्तेः शक्त्यन्तरस्य लक्षणायाश्च व्यवच्छेदः। प्रथमायां तादृश्यां प्रमाणाभावः। द्वितीयस्य कृते आह **शक्ते**● प्रकृतार्थबोधनाय शक्तेरपि उपयोगाद्युगपच्छक्तिद्वयविरोधेन लक्षणाया अप्रवृत्तेः। **माहात्म्यादेव**● व्यवहारयोरभेदेऽपि तस्या एव माहात्म्यम्। तथा च स्वमतापेक्षया चिरन्तनमते आक्षेपेण कार्यनिर्वाहमेव वैलक्षण्यमभिप्रैति पण्डितराज इत्यवधेयम्। मर्मप्रकाशादिषु प्राचां मतवर्णनं तेषां स्वोत्प्रेक्षया न तु तादृश एव प्राचां सिद्धान्त इत्यपि।

अत्रालङ्कारकौस्तुभकृतः। मुखचुम्बनादिना स्त्रीलिङ्गादिसहकारेण व्यज्यमानं नायिकत्वादिकं निशावृत्तित्वेनैव व्यज्यते इति तन्न व्यञ्जकं हि तत्र

अलंकारसर्वस्वकारस्तु—'विशेषणसाम्याद्धि प्रतीयमानमप्रस्तुतं प्रस्तुतावच्छेदकत्वेन प्रतीयते। अवच्छेदकत्वाच्च व्यवहारसमारोपः, न तु रूपसमारोपः। रूपसमारोपे त्ववच्छादितत्वेन प्रकृतरूपरूपित्वाद्रूपकमेव स्यात्' इत्याह। तदेतदुक्तिमात्ररमणीयम्। अप्रकृतव्यवहारः प्रकृतकर्तरि नायकादिकस्वकर्तृविशेषित आरोप्यते तदविशेषितो वा ? नाद्यः। एवं च

---

चुम्बनादिकमेव स्त्रीत्वादिकं सहकारिमात्रम्। एवञ्च चुम्बनादिना स्वविशेषणत्वेन तदाक्षेतुमर्हम्। किञ्च स्त्रीलिङ्गादिकं न निरपेक्षं नायिकत्वादिव्यञ्जकम्। निशामुखं चुम्बति चन्द्रिकैषा इत्यादावपि तदापत्तेः। किन्तु चुम्बनादिकर्तुः पुंस्त्वादिसहकारेणैव। एवञ्च चन्द्रगतं पुंस्त्वं निशाया नायिकात्वम्, निशागतञ्च स्त्रीत्वं चन्द्रस्य नायकत्वं व्यञ्जयतीति पर्यवसानात् कथमाक्षेपकसामानाधिकरण्येन नायिकात्वादिप्रतीतिः स्यात्। स्त्रीत्वादेस्तदाक्षेपकत्वाभावात्। पुंस्त्वादेश्च नायिकत्वादिसामानाधिकरण्याभावात्। इति वदन्ति। तत्रेदं प्रतिभाति। व्यञ्जकं हि मुखचुम्बनादिकं स्त्रीत्वादिकं तु सहकारिमात्रमिति तु निशामुखं चुम्बति चन्द्रिकैषेत्यत्रैव व्यभिचरितम्। द्वितीये तु स्त्रीप्रत्ययो न केवलं चुम्बनादिकर्तुः पुंस्त्वमात्रमपेक्षतेऽपि तु तस्य नायकत्वमपि इति सहृदयहृदयानुभूतम्। तथा च चुम्बनादिकर्तुर्नायकत्वादिकं सहकारिमात्रम्। स्त्रीप्रत्यय एव व्यञ्जकः। रसगङ्गाधरदर्शितान्वयव्यतिरेकाभ्यां तथैव प्रतीतेः। परस्पराऽपेक्षायामन्योन्याश्रयस्तु व्यञ्जनामहादेव्यैव कवलीक्रियत इति न किञ्चिदसमञ्जसम्। इति। **प्रस्तुतावच्छेदकत्वेन●** अप्रस्तुतव्यवहारावच्छिन्नः प्रस्तुतव्यवहारः प्रस्तुते धर्मिणि विशेषणं विशेषणता अप्रस्तुतव्यवहारावच्छिन्ने प्रस्तुतव्यवहारे तदवच्छेदकता अप्रस्तुतव्यवहारे। तद्वशादप्रस्तुतव्यवहारस्य प्रस्तुतव्यवहारेऽभेदारोपः। **रूपसमारोपः●** अप्रस्तुतवस्तुनः प्रस्तुते नारोपः। **त्ववच्छादित●** अवच्छादनं प्रकृतात्मनोपयोगः। प्रकृतस्य प्रस्तुतस्य रूपेणोपयोगेन रूपितं तादात्म्यमापन्नमित्यस्याप्यवच्छादनमेवार्थः। **स्वकर्तृ●** स्वमप्रकृतोनायिकादिव्यवहारस्तत्कर्त्रा धर्मिणा नायिकादिना विशेषित इति। यद्यपि एतद्ग्रन्थस्वारस्येन अदसीयव्याख्यानभूताग्रिमकुवलयानन्दव्याख्यानेन च

सति चन्द्रादेर्नायकव्यवहाराश्रयत्वेन नायकसाम्यं सिध्येत्। तच्च श्लेषादिभित्तिकाभेदाध्यवसायेन व्यवहाराभेदं प्रतिपिपादयिषतः कवेरनभिप्रेतमेव। अभिप्रेतं तु नायकत्वम्। तच्च नायकस्य व्यवहारविशेषणत्वे न सिध्यति। किं च 'निशामुखं चुम्बति चन्द्रः' इत्यत्र चन्द्रे नायकव्यवहारसमारोप एव, न नायकत्वारोपः। एवमेव निशायामपि न नायिकात्वारोपः, तुल्यन्यायत्वात्। एवं च मुखचुम्बनमात्रस्य नायिकानिर्मुक्तस्यासुन्दरत्वान्नायकासाधारणव्यवहारत्वायोगाच्च किमारोपेण? यदि च निशायां स्त्रीलिङ्गव्यङ्ग्यं नायिकात्वमिति निरीक्ष्यते तदा चन्द्रगतपुंल्लिङ्गव्यङ्ग्यं नायकत्वमपि निरीक्ष्यताम्। न द्वितीयः। नायकसंबन्धित्वेनाज्ञातस्य मुखचुम्बनमात्रस्याहृद्यत्वात् 'तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्' इति

---

प्रस्तुतावच्छेदकत्वस्य 'अप्रकृतव्यवहारवति प्रस्तुते प्रकृतव्यवहारस्य प्रतीत्या' शिखराऽवच्छेदेन वह्निः पर्वते इतिरीत्या अप्रस्तुतव्यवहारावच्छेदेन प्रस्तुते प्रकृतव्यवहार इत्यर्थस्तथापि सरलायास्तथा व्याख्यानं नर्मप्रकाशस्य च तादृक् प्रागाशयवर्णनञ्चानुरुध्य तथा व्याख्यातम्। पूर्वापेक्षयाऽपि समीचीनोऽवच्छेदकता प्रतीत्यै दृष्टान्तः 'धूमावच्छेदेन पर्वते वह्निरित्यादि'। अयं भावः। चन्द्रे नायकवृत्तिमुखचुम्बनमारोप्यते केवलं मुखचुम्बनम्वा? साम्यम् ● नायकवृत्तिव्यवहाररूपधर्माश्रयत्वेन चन्द्रस्य नायकसाम्यम्। एनभिप्रेतमेव ● साम्यमात्रतात्पर्ये व्यवहारयोरभेदव्यञ्जकश्लेषादिविषयकयत्नवैफल्यापत्तेः। विशेषणत्वे ● सति चन्द्रे नायकतादात्म्यं विनेनिशेषः। नायिकानिर्मुक्तस्य ● मुखे नायिकासम्बन्धावगमं विना। सम्बन्धावगमश्च निशायां नायिकातादात्म्येनैव। किमारोपेण ● नायकवृत्तिमुखचुम्बनाश्रयश्चन्द्र इति बोधे नायिकामुखचुम्बनाश्रयश्चन्द्रो नायक इति प्रतीतिप्रयुक्तायाश्चमत्कृतेः कविसमीहितायास्तथाऽप्यप्रतीत्यापत्तेस्तादवस्थ्यादारोपो व्यर्थ इति भावः। नायकासाधारणो व्यवहारो नायिकामुखचुम्बनं न तु चुम्बनमात्रम्।

निदर्शनातो वैलक्षण्यायास्मदुक्तवैधर्म्यस्यैवास्थेयत्वाच्च । शिष्ट-मनुपदमेव वक्ष्यामः ।

यत्तु सर्वस्वकाराज्ञानुवर्तिना कुवलयानन्दकृता सपूर्वपक्ष-सिद्धान्तमुक्तम्—"अत्र च विशेषणसाम्यात्सारूप्याद्वा यदप्रस्तुत-वृत्तान्तस्य प्रत्यायनं तत्प्रकृते विशेष्ये तत्समारोपार्थम् । सर्वथैव प्रस्तुतानन्वयिनः कविसंरम्भगोचरत्वायोगात् । ततश्च समा-सोक्तावप्रस्तुतव्यवहारसमारोपश्चारुताहेतुः न तु रूपक इव प्रस्तुते अप्रस्तुतसमारोपोऽस्ति । 'मुखं चन्द्रः' इत्यत्र मुखे चन्द्र-त्वारोपहेतुचन्द्रशब्दसमभिव्याहारवत् 'रक्तश्चुम्बति चन्द्रमाः' इत्यादौ समासोक्त्युदाहरणे चन्द्रादौ जारत्वाद्यारोपहेतोस्तद्-वाचकपदसमभिव्याहारस्याभावात् । न चेह 'निरीक्ष्य विद्युन्न-यनैः पयोदो मुखं निशायामभिसारिकायाः' इत्यत्र निरीक्षणा-नुगुणनयनोपादानं यथा पयोदस्य द्रष्टृपुरुषत्वस्य गमकं तथा किञ्चिज्जारत्वस्यास्ति । न वा 'त्वय्यागते किमिति वेपत एष सिन्धुस्त्वं सेतुमन्थकृदतः किमसौ बिभेति' इत्यत्र सेतुमन्थकृत्त्वं विष्णोः कार्यं यथा राज्ञो विष्णुत्वस्य तथा किंचिदस्ति ।

---

स्मदुक्त● अत्र चाप्रकृतार्थस्य पृथक्शब्दानुपादानाद्वाक्यार्थसम्बन्धिन इत्या-दिना । द्वयोरुपादानमूलिकाया निदर्शनाया वारणाय प्रकृतस्योपादानमप्रकृतस्य च विशेषणश्रवणमात्रगम्यमानत्वं समासक्तौ पर्यवसीयते तेनैव द्वयोरुपादानमूल-कस्य रूपकस्य व्यावृत्तिरिति भावः । नुपदमेव ● कुवलयानन्दखण्डनावसरे । संरम्भ● कवियत्नविषयत्वायोगात् । प्रस्तुतानन्वयिनो वस्तुनः प्रस्तुत-वर्णनेऽनुपयुक्तताऽऽपातात् । सारिकाया● धारानिपातैः सह किन्नु वान्तश्चन्द्रोऽयमित्यार्ततरं ररासे । इत्युत्तरार्धम् । विभेति ● द्वीपान्तरेऽपि नहि तेऽस्त्यवशंवदोऽथ त्वां राजपुङ्गव निषेवत एव लक्ष्मीः । इत्युत्तरार्धम् । ननु प्रस्तुतव्यवहाराऽवच्छेदेनैवाप्रस्तुतव्यवहारस्य प्रस्तुते कथन्नारोपस्तथा सति

तस्माद्विशेषणसमर्पिताप्रस्तुतव्यवहारसमारोपमात्रमिह चारुता-हेतुः। यद्यपि विशेषणसमर्पितयोर्द्वयोरप्यर्थयोरविशिष्टं प्राधान्यम्, तथाप्यन्यतराश्रये धर्मिण्यन्यतरारोपस्यावश्यकत्वे, श्रुते धर्मिण्येवाप्रकृतव्यवहारस्यारोप उचितः। तस्य च स्वरूपतो ज्ञातस्यारोषे चारुत्वाभावात्कामुकाद्यप्रस्तुतधर्मिसंबन्धित्वेनावगम्यमानस्य रसानुगुणत्वादारोपः। कामुकादेश्च पदादनुपस्थितस्यापि चुम्बनादिना व्यञ्जितस्य व्यवहारविशेषणत्वम् तस्मात् 'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः' इत्यत्र जारसंबन्धितादृशचुम्बनरूपव्यवहाराश्रयश्चन्द्र इत्येव बोधः." इति।

तदेतत्सर्वमसंगतम्। यत्तावदुच्यते 'मुखं चन्द्रः' इत्यत्र मुखे चन्द्रत्वारोप इति, तत्र नामार्थयोरभेदेनैवान्वयान्मुखे

---

प्रस्तुतव्यवहारएवावच्छेदकः स्यादित्याशङ्कापुरस्सरं समाधत्ते यद्यपि● अथवाऽप्रस्तुत एव धर्मिणि कथन्न प्रस्तुतस्यारोप इत्यप्यवतरणं सम्भवति, प्रस्तुतधर्मिकारोपे श्रुतत्वं हेतुः, श्रुते प्रस्तुतव्यवहारस्यारोप इति पाठो न सम्यक् किन्तु श्रुते प्रस्तुतव्यवहारधर्मिण्यप्रस्तुतव्यवहारस्यारोपः। यदि च पूर्वोक्तालङ्कारसर्वस्वग्रन्थस्य 'अप्रस्तुतं प्रस्तुतावच्छेदेन प्रतीयते अवच्छेदाच्च व्यवहारसमारोपः' इति पाठः सम्मतः स्यात्। अवच्छेदकत्वाच्चेत्यत्र प्रस्तुतस्येतिशेषो वा विधीयेत तदा श्रुतप्रस्तुतव्यवहारावच्छिन्ने श्रुते धर्मिणि इत्यपि ग्रन्थार्थः पर्यवस्यति। **तस्य●** अप्रस्तुतव्यवहारस्य कामुककर्तृकमुख-चुम्बनस्य। **स्वरूपतो●** चुम्बनत्वेन मुखचुम्बनत्वेन वा। **कामुकाद्य●** कामुकादिर्योऽप्रस्तुतो धर्मी। **जारसम्बन्धि●** जारकर्तृकनायिकामुख-चुम्बनाभिन्नैन्द्रीमुखचुम्बनाश्रयश्चन्द्र इति मर्मप्रकाशरीत्या स्फुटार्थः। सर्वस्व-ग्रन्थे विकल्प्य प्रतिपादकपण्डितराजग्रन्थरीत्या तु जारकर्तृकनायिकामुख-चुम्बनवान् चन्द्र ऐन्द्रीमुखकर्मकचुम्बनाश्रयः। पाठकल्पनापक्षे तु ऐन्द्रीमुख-चुम्बनवान् चन्द्रो जारसम्बन्धिनायिकामुखचुम्बनाश्रय इतिबोधः। युक्तायुक्तत्वे

चन्द्रस्यारोपः, न चन्द्रत्वस्य चन्द्रविशेषणस्य। यदप्युच्यते जारादिपदसमभिव्याहारस्य हेतोर्विरहान्न चन्द्रादौ जारत्वारोप इति। तत्र श्रौतारोपे तादृशसमभिव्याहारस्य हेतुत्वम्, न त्वार्थारोपे। अन्यथा रूपकध्वनेरुच्छेदापत्तेः। न च रूपकध्वनावारोप्यमाणासाधारणधर्मोक्तिरारोप्यमाणतादात्म्यव्यञ्जिका, न चेह तथा किंचिदस्तीति वाच्यम्। इहापि परनायिकामुखचुम्बनस्य श्लेषमर्यादया व्यञ्जनमर्यादया वा प्रतीतस्य प्रकृतधर्मिणि चन्द्रे आरोप्यमाणस्य जारासाधारणधर्मत्वेन जारत्वव्यञ्जकतायाः स्फुटत्वात्। एतेन 'विद्युन्नयनैः' इत्यत्र 'त्वं सेतुबन्धनकृत्' इत्यत्र च यथाद्रष्टृत्व-विष्णुत्वगमकं तथेह नास्तीति निरस्तम्। न च जारत्वस्य चन्द्रादावारोपमन्तरे-

---

स्वयं विवेचनीये। **चन्द्रविशेषणस्य●** अत्र मर्मप्रकाशः। तादाम्येन चन्द्रारोपे तादात्म्यस्यापि सम्बन्धविधया आरोपविषयत्वात् तस्य चन्द्रत्वानतिरेकात् चन्द्रत्वारोपेत्युक्तम्। न तु प्रकारतया चन्द्रत्वारोपः। अन्यत्र विशेषणत्वेनोपस्थितस्यान्यप्रकारतया आरोपायोगादिति तदाशयाच्चिन्त्यमिदम्। इत्याह। इदमत्र चिन्ताबीजम्। नामार्थयोरित्यादिव्युत्पत्त्यनुसारिणी आरोपप्रणाली समुचिता साच व्युत्पत्तिर्न चन्द्रतादात्म्यस्याभेदेनारोपं व्यञ्जयति तादात्म्यस्याभेदबाधात्। नापि तादात्म्यरूपाभेदस्यारोपं संसर्गान्तरभानापत्तेः। किन्तु तादात्म्यसंसर्गेण चन्द्रारोपम्। संसर्गे संसर्गताख्यविषयतासत्त्वेऽपि नैव विषयमात्रस्यारोपव्यवहारः स्वारसिकोऽन्यथा तादृशस्थले मुखस्यारोप इति व्यवहारस्याऽपि स्वारसिकत्वापत्तेः, किन्तु आरोपप्रकारस्य। चन्द्रत्वस्यारोप इत्यपपाठः चन्द्रस्यारोप इत्येव पाठः। इति **रुच्छेदापत्तेः●** श्रौतारोपेऽलङ्कार आर्थारोपे रूपकध्वनिरिति व्यवस्थायाः क्लृप्तत्वात्। **प्यमाणासाधा●** आरोप्यमाणस्योपमानस्यासाधारणधर्मस्य व्यञ्जकस्य कथनम्। **श्लेषमर्यादया●** भामहादीनां मतेनेदम्। तेषां मते श्लेषस्थले शक्त्यन्तरेणाक्षेपेणैवाऽर्थान्तरप्रतीतेः। स्वमते तु शक्ते नियन्त्रणाद्व्यञ्जनयैव। **जारासाधारण●** जारस्य योऽसाधारणो धर्मः परनायिकाचुम्बनादिः। **निरस्तम्●**

णापि जारव्यवहारारोपः सिध्यन्ननुपपत्तेरभावान्न जारत्वं गमयेदिति वाच्यम्। गमकं हि द्विविधम्—आक्षेपकं व्यञ्जकं च। तत्राक्षेपकमनुपपद्यमानमेव गमयति। व्यञ्जकं तु नानुपपत्तिमपेक्षते। 'गतोऽस्तमर्कः' इत्यादौ तथैव दर्शनात्। अन्यथा अर्थापत्त्या गतार्थत्वेन व्यञ्जनावैयर्थ्यप्रसङ्गात्। किं च त्वयापि हि जारादेरप्रकृतधर्मिणः प्रतीतिरवश्यं वाच्या आरोप्यमाणव्यवहारविशेषणार्थम्। अन्यथा स्वरूपतो ह्यप्रकृतव्यवहारारोपे चारुतानापत्तेः।

एवं चावश्योपस्थाप्यस्य जारादेस्तादृशचुम्बनकर्तरि चन्द्रादावेव तादात्म्येन विशेषणत्वमुचितम्, न तु व्यवहारे भेदेन। चन्द्रस्य जारभिन्नतावगमे परनायिकावदनचुम्बनस्याहृद्यत्वात्।

---

गमकस्य दर्शनात्। अत्र मर्मप्रकाशः परनायिकाचुम्बनस्य अप्रस्तुतव्यवहारस्य प्रस्तुते विशेषणतया प्राधान्याभावेन नाक्षेपकत्वमित्याह। जातिशक्तिवादिनां मतेऽप्रधानीभूतयाऽपि जात्या व्यक्तेराक्षेपस्य प्रसिद्धत्वात्। अर्थापादने आक्षेपे यथाकथञ्चिन्नियामकमस्तु परं व्यञ्जना तु असाधारणमाहात्म्या न ह्रासमेति तादृशकुकल्पनयेत्यत्रालङ्कारिकानुभवः प्रष्टव्यः। अन्यथा व्यवहारविशेषणतयाऽपि कथमाक्षिप्तः स्यात्। नानुपपत्तिमपेक्षते● अत्र कौस्तुभकृतः। एवं स्वीकारे प्रकृतानुकूलव्यञ्जकत्वनियमभङ्गापत्तेः। किञ्च ध्वनिप्रकरणे अलससिरमणीत्वादिश्रवणविशिष्टप्रफुल्लविलोचनत्वमुक्तम्। तदपि विरुध्यते इति वदन्ति। तत्रेदं प्रतिभाति। सत्यं प्रकृतानुकूलव्यञ्जकत्वमभीष्टं परं न व्याप्तिमपेक्ष्य किन्तु वक्तृबोधव्यवासनामात्रम्। अत्र च मुखरक्तचुम्बनलिङ्गादिनिर्देशसंरम्भस्य कवे रसव्यञ्जनानुकूलं तात्पर्यम् अनुकूलम्। ध्वनिप्रकरणेऽपि हर्षमात्रन्न प्रकृतानुकूलतासम्पादकं किन्तु विशिष्टमित्यत्रैव तात्पर्यं ग्रन्थकारस्येति न पूर्वापरविरोधः। स्याहृद्यत्वात्● यत्त्वलङ्कारकौस्तुभे भेदप्रतीत्यभावमात्रेणापि तदुपपत्तावभेदप्रतीतेरनु-

अपि च 'निशामुखं चुम्बति चन्द्र एषः' इत्यत्र स्त्रीलिङ्ग-पुंल्लिङ्गाभ्यां मुखचुम्बनरूपार्थसचिवाभ्यां नायिकात्वं नायकत्वं च व्यज्यत इति हि निर्विवादम्। अन्यथा 'निशामुखं चुम्बति चन्द्रिकैषा' 'अहर्मुखं चुम्बति भानुबिम्बम्' इत्यत्रापि नायक-प्रतीत्यापत्तेः। एवं च सामानाधिकरण्येनैव संसर्गेण व्यज्यमानं नायकत्वं निशाशशिनोर्नायिकत्वारोप एव पर्यवस्यति। "अप-रित्यक्तस्वरूपयोर्निशाशशिनोर्नायिकताख्यधर्मविशिष्टयोः प्रतीतेः" इति त्वदुपजीव्यग्रन्थविरोधश्च। 'अविनाभावादप्रकृतव्यवहा-रेणाक्षिप्तेन धर्मिणैव प्रस्तुतो धर्म्यवच्छिद्यते' इति तट्टीका-विरोधश्च।

किं 'च चुम्बनादिव्यवहारेणाभिव्यक्तस्य नायकस्य व्यव-हारविशेषणत्वमेव' न त्वभेदेन चन्द्रादिविशेषणत्वम्। चन्द्रादि-पदसमानाधिकरणपदानुपस्थापितत्वात्" इत्युक्तं तत्र तुल्यन्या-यत्वान्निशायामपि न नायिकात्वारोपः, अपि तु नायकवद-

---

पयुक्तत्वादित्याह तदत्यन्तमसमञ्जसं ज्ञानं विना चमत्कारस्य सहृदयहृदयानु-भवविरुद्धत्वात्। अन्यथाऽसहृदयस्य चमत्कारोद्बोधापत्तेः। निर्विवादम्० त्वन्मतेऽपि व्यवहारविशेषणतयारोपस्याङ्गीकृतत्वात्। केवलमन्वयमात्रे विवादः। नायकत्वम्० अत्रत्यं पदद्वयमपि एकशेषेण नायिकात्वनायकत्वयो-र्बोधकम्। अपरित्यक्त० निशात्वशशित्वे आपन्नयोरपि निशाशशिनो-र्नायिकत्वनायकत्वविशिष्टताऽनेन ग्रन्थेनाभिप्रेयते। तथा च त्वदुपजीव्यस्य सर्वस्वग्रन्थस्य विरोधः। अत एवोपक्रमे तदाज्ञानुवर्तिनेत्युक्तम्। अत्र नायकस्य व्यवहारविशेषणतया परम्परया तद्विशिष्टत्वमित्यत्रैव तात्पर्यम्। व्यवहारारोपमङ्गीकृत्य नायकाद्यारोपनिरासतात्पर्यके ग्रन्थे तदभेदारोपाभि-प्रायस्य शङ्कितुमशक्यत्वात्। इति कौस्तुभकृतामुक्तिः साहसमात्रमेव। तादृशाभिप्राये विशिष्टपदस्यासामञ्जस्यात्। नायकत्वाद्यारोपनिरासतात्पर्य-वर्णनस्य ग्रन्थाक्षरविरोधाच्च। विमर्शिनीविरोधमप्याह अविनाभाव०

भिव्यक्ताया नायिकाया अपि व्यवहारसंबन्धित्वेनैवावस्थान- मिति वक्तव्यम्। तच्च बाधितम्। नायिकात्वानालीढकेवल- रात्रिमुखचुम्बनरूपस्य व्यवहारस्य नायकासंबन्धित्वात्। नहि रात्रितादात्म्यं विना नायिकायाः पृथङ्मुखं विशेषयितुमस्ति सामर्थ्यम्।

अपि च—

'निर्लक्ष्मीकाऽभवत्प्राची प्रतीचीं याति भास्करे।
प्रिये विपक्षरमणीरक्ते का मुदमश्नुति॥'

---

व्यापकं विना न भावो व्याप्तिरित्यर्थः। योहि यद्धर्मिकव्यवहारवान् स तदभिन्न इति व्याप्तिः। धर्मिणा नायकेन धर्मी चन्द्रः।

तथा चास्या अपि चन्द्रे नायकाभेदोऽभिप्रेत इति भावः। एवमनुरुध्य प्रस्तुतावच्छेदकत्वेनेति सर्वस्वग्रन्थस्य प्रस्तुतविशेषणतामात्रे तात्पर्यं प्रतीयते। इत्यवधेयम्। **सामर्थ्यम्●** मुखशब्दश्लेषसामर्थ्येन ऐन्द्रीमुखमित्यस्य समस्तत्वेऽपि ऐन्द्रांशेमोषेण केवलमुखचुम्बनस्योपस्थितेः। तदेतदुक्तं कुवलयानन्दे श्लेषमहिम्ना स्वरूपतः समर्पितेन वदनचुम्बनादिनेति मर्मप्रकाशोक्रमप्यसमर्थमेव। मोषे सामर्थ्याभावात्। समस्तस्य मुखस्यैन्द्रया विच्छिद्य नायिकयान्वयो येन सामर्थ्येन प्रतिपाद्यते तत्सामर्थ्यं किमैन्द्रया नायिकयाऽभेदसम्पादने विलुप्तं भवति। **निर्लक्ष्मीका●** भास्करे प्रतीचीं याति सति प्राची निःशोभा अभवत्। यस्याः खण्डितायाः नायिकायाः पतिर्नायिकान्तरं गच्छति तस्या दुर्दग्धाया नायिकाया व्यवहारो निर्लक्ष्मीकायां प्राच्यामारोप्यते। एवं पूर्वार्धोपात्तं विशेषं सामान्येन समर्थयति।

प्रियत्वं मोदाभावे हेतुः। सपत्न्यनुरक्ते प्रिये का मुदमश्नुति ? न कापि। भास्करप्रियताविशेषं विना सामान्यांशे प्रियत्वोक्तिरसमञ्जसा स्यात्। तस्मात् प्रियभास्करविरहिणी प्राची नायिका निश्शोभा सम्पद्यतेत्येव बोधो ऽत्राङ्गीकार्यः। यत्तु मर्मप्रकाशे व्यवहारसमर्थनायैवोत्तरार्धोपादानमिति तदपि न सम्यक् प्रियरमणीरक्तपदानि निवेशयतः कवेः प्राचीभास्करयोरमणत्वस्येष्टत्वात्। अत्र कौस्तुभकृतामाक्षेपस्तु त्वन्मते एव दोषः। नहि

इत्यत्र पूर्वार्धगतायां समासोक्तौ भास्करादीनां नायकत्वाप्रतीतावुत्तरार्धे प्रियत्वादिना समर्थनाया: सर्वथैवानुपपत्तेः । अन्यच्च—अप्रकृतव्यवहारः प्रकृतविशेष्ये प्रकृतव्यवहारताटस्थ्येनारोप्यते, तदभिन्नतया वा? नाद्यः । एवं च प्रकृतविशेष्ये प्रकृताप्रकृतव्यवहारयोरेकत्र द्वयमिति विषयताशाली बोधः स्यात् । स चासिद्ध इत्युक्तमेव । न द्वितीयः । इतोऽपि प्रकृतव्यवहार एवाप्रकृतव्यवहारस्याभेदेनारोपो वरीयान्, न

---

'भास्करप्रियेऽन्यरक्ते प्राची नायिका दूयत इत्युक्ते प्रिय इत्यादिना समर्थनं सम्भवति । अभेदे समर्थ्यसमर्थकभावानुपपत्तेः । अस्माकन्त्वप्रकृतव्यवहाराक्षेपकत्वेनोत्तरार्धस्य निर्लक्ष्मीत्वसम्पादनोपयोगस्य स्पष्टत्वात् । तस्मात्समासोक्तौ व्यवहारस्यैवाभेदेन प्रकृतव्यवहार आरोप इति स्थितम्' न स्थानं लभते । अभिन्नयोः सामान्यविशेषयोः समर्थ्यसमर्थकव्यवहारस्य प्रसिद्धत्वात् । सामान्यविशेषभावस्य च व्याख्यातत्वात् कवितात्पर्यवर्णनाच्चेतिदिक् । **ताटस्थ्येन** ● असम्बध्नता । **तदभिन्नतया** ● प्रकृतव्यवहारेऽभेदमापन्नः । **असिद्धः** ● अप्रकृतव्यवहारस्य प्रकृतासम्बन्धित्वात् । **वरीयान्** ● लघुतर इत्यर्थः । प्रकृतव्यवहारांशे प्रकृतांशे च तवारोपद्वयम् । मम तु व्यवहारांश एवेति । इदमत्र स्फोरणीयम् । तदभिन्नतयेति ग्रन्थेन प्रकृतव्यवहाराभिन्नाप्रकृतव्यवहारवान् प्रकृत इति कुवलयानन्दमत आरोप आयाति । अदसीयस्तु अप्रकृतव्यवहाराभिन्नप्रकृतव्यवहारवान् प्रकृत इति । अत्र प्रकृते प्रकृतव्यवहारस्य वस्तुतः सत्वान्नारोपोऽपि त्वभेदांश एव । अत्र मर्मप्रकाशः । ग्रन्थकारमते नायिकाऽभिन्नेन्द्रदिशासम्बन्धिवदनाभिन्नप्रारम्भकर्मकचुम्बनरूपसम्बन्धाश्रयो नायकाभिन्नश्चन्द्र इति बोधः । एतन्मते नायिकाया न वदनचुम्बने साक्षात्सम्बन्धोऽपि तु दिशाव्यवहितोऽतोरसोद्बोधः शिथिलायते । अतः शक्त्या 'व्यञ्जनया' वोपस्थिताप्रस्तुतवृतान्तेन व्यञ्जनयोपस्थितनायिकासम्बन्धित्वेन गृहीतेनाभेदमापन्नः प्रस्तुतवृतान्तः । तथा च नायिकासम्बन्धिमुखचुम्बनाभिन्नैन्द्रीदिशाप्रारम्भिकसंयोगाश्रयश्चन्द्र इति बोध एवोचितः साक्षान्मुखचुम्बने नायिकासम्बन्धप्रतीतेः । इत्याह । परमिदमत्र चिन्तास्पदम् ।

तु भेदसंसर्गेण प्रकृतविशेष्ये, अभेदांशे व्यवहारांशे चारोप-स्वीकारप्रसङ्गात् । मम त्वभेदांशमात्र इति स्फुट एव विशेषः ।

---

तन्मतेऽपि चुम्बनेन सह चन्द्रस्य न साक्षात्सम्बन्धस्ततश्च रसोद्बोध-शैथिल्यं तिष्ठत्येव । यदि च तदभेदाभेदन्यायेनैक्यं सम्पाद्यते व्यवहारयोस्ततश्च साक्षान्नायकेन सम्बन्ध इत्युच्यते तदा नायिकादिशयोरपि तथैव क्रियताम् । किञ्च सामान्यनायिकासम्बन्धमात्रेणैव उत विशेषनायिकासम्बन्धेन रसोद्बोधः । तत्रापि अनायकेऽपि नायिकासम्बन्धो रोचते सहृदयेभ्य उत नायक एवेति विकल्पविचारे निशाशशिनोर्नायकत्वमवश्यमवसेयम् । अत्र कौस्तुभकृतोऽपि प्रत्यवतिष्ठन्ते । रसगङ्गाधरमते उभयत्राभेदारोपसत्त्वेन लाघवानकाशः । तव हि नायिकाया रात्रौ नायकस्य च चन्द्रे अभेदेनारोपः । न च त्वन्मते अप्रकृत-व्यवहारस्याभेदसंसर्गेण प्रकृतव्यवहारे आरोपः, अप्रकृतव्यवहारस्यैव चाश्रय-त्वादिभेदसंसर्गेण चन्द्रादावित्युभयत्र संसर्गभेदः, मम तूभयत्राभेद एव संसर्ग इति लाघवमिति वाच्यम् । मन्मतेऽप्रकृतव्यवहाराध्यवसितस्य प्रकृत-व्यवहारस्यैव चन्द्रे बोधात्तस्यारोपाभावात् । किन्तु प्रकृतव्यवहारे अप्रकृत-व्यवहारोपेणैव लाघवम् । तव त्वभेदमेव संसर्गीकृत्यारोपद्वयम् इति गौरवम् ।

अप्रकृतव्यवहाराभिन्नप्रकृतव्यवहारस्य चन्द्रे बोधे चन्द्रविशेष्यकाप्रकृत-व्यवहारारोपानपेक्षणात् । अप्रकृतव्यवहारस्याभेदेन प्रकृतव्यवहारस्य च भेदेनारोपे प्रयोजनाभावात् । न चैवं सति प्रकृतविशेष्ये अप्रकृतव्यवहारारोप इति दीक्षितग्रन्थविरोध इति वाच्यम् अभिन्नाश्रयत्वसम्बन्धेनारोपे तात्पर्या-दिति । अत्रेदं समाधानम् । यथा तव मते प्रकृतव्यवहारस्य न चन्द्रादावा-रोपस्तथा निशाशशिनोर्नायकविशेषयोः सामान्यनायकाभ्यामभेदयोग्यता-सत्त्वात् । ग्रन्थविरोधस्तु तदवस्थ एव । तथा च पण्डितराजमते एक एवारोपः । यद्यपि दृगब्जेन वीक्षत इत्यादौ विशेष्यस्य स्वरूपेणेतरान्वयायोग्य-स्येतरतादात्म्यापत्त्या तद्योग्यत्ववत् स्वतोऽन्वययोग्यस्यापि इतरतादात्म्या-पत्त्या तदयोग्यत्वस्यापि सत्त्वादिति मर्मप्रकाशः, तदपि न सम्यक् माना-भावात् । किञ्च स्वतोऽन्वयायोग्यस्याप्रकृतव्यवहारस्य योग्यतासम्पादनायैव प्रकृतव्यवहार आरोपस्तथा च क्वायोग्यत्वम् ।

तस्मादप्रकृताभिन्नतया व्यवसितः प्रकृतव्यवहारः स्वविशेष्ये तद्विशेष्याभिन्नतयावस्थिते भासते । तत्राप्रकृतार्थं उपस्कारकतया गुण इति प्रकार एव रमणीयः ।

स च न वाक्यार्थरूपके 'त्वत्पादनखरत्नानाम्' इत्यत्रेव विशिष्टस्य विशिष्टे । समासोक्तौ तयोः पृथक्छब्दवेद्यत्वाभावात् । किं तु प्रकृतवाक्यार्थघटकाः पदार्थास्तादात्म्येनाप्रकृतघटकपदार्थालीढा एव वैशिष्ट्यमनुभवन्तो महावाक्यार्थरूपेण परिणमन्तीति सूक्ष्ममीक्षणीयम् । अतिशयोक्ताविवाप्रकृतेन प्रकृतस्य निगरणं तु न वाच्यम् । तस्य शब्दवाच्यत्वात् ।

---

स्वविशेष्ये● स्वं प्रकृतव्यवहारस्तद्विशेष्यं प्रकृतोधर्मी चन्द्रः । तद्विशेष्याभि● तस्य नायिकामुखचुम्बनरूपाप्रकृतव्यवहारस्य विशेष्येन नायकेनाभिन्नतयाऽवस्थिते चन्द्रे । मुद्रणदोषेण वैपरीत्यमापितो मर्मप्रकाशः सरलाकृतमेवममोहयद्येन स्वतद्भ्यां परामर्शेऽपि वैपरीत्यमासादयदसौ । विशिष्टे● विशिष्टे प्रकृतवाक्यार्थे विशिष्टस्याप्रकृतवाक्यार्थस्य । परिणमन्ती● प्रकृताप्रकृतवाक्यार्थौ अवान्तरवाक्यार्थौ । तद् घटकपदार्थाः नायिकानायककिरणहस्तसंयोगमुखचुम्बनादयः परस्परमभेदमापन्ना महावाक्यार्थं बोधयन्ति । तस्य ● प्रकृतस्य । अतिशयोक्तौ तु अवाच्यस्यैव निगरणम् । पृथक्शब्दवेद्यत्वाभावादित्यत्र कौस्तुभकृतः—एवं सति ऐन्द्रयादीनामभेदेन नायिकादावन्वयबोधस्वीकारोऽनुचित एव । नहि वाक्यार्थस्यैव शब्दोपस्थितिरपेक्षिता न पदार्थस्य । अभेदप्रतियोगिन एव शब्दोपस्थितिस्तथा न तु तदनुयोगिन इति वा सप्रमाणकम् । येन वाक्यार्थस्य पदादनुपस्थितस्य न तदभेदबोधः । पदार्थे तु पदादनुपस्थितेऽपि पदार्थान्तराभेदो बुध्यत एवेति वा वक्तुमवकाशः स्यात् । अत एव नायकादेः शब्दादनुपस्थितस्य न चन्द्रादावारोप इत्यत्र दूषणं यदुक्तम्, अर्थारोपे न समानविभक्तिपदाकांक्षा इति तदप्यपास्तम् । अत्रापि वाक्यार्थे विशिष्टस्यारोप आर्थएवेत्यपि वक्तुं शक्यतया त्वदुक्तविलयापत्तेः । इति वदन्ति । तदपि निर्मूलमेव । व्यञ्जनयोपस्थितस्यैव नायिकादेरन्वयस्वीकारात् । अत्रार्थारोपो भवतु नाम का क्षतिर्यदि साक्ष्यनुभवः ।

अन्यथा द्वयोरेव पदोपस्थितया श्रौत एवारोपः। यदपि तेन, तरलयसि दृशं किमुत्सुकामकलुषमानसवासललिते। "अवतर कलहंसि वापिकामपि पुनरेष्यति पङ्कजालयम्" इति हर्षचरितपद्ये ब्रह्मलोकाभिन्नमानसत्यागेच्छाविरहवती हंसीरूपा सरस्वतीति बोधः, पण्डितेन्द्रमते न सम्भवति इत्युक्तं तदप्यकारणं व्यञ्जनोत्तेजकप्रकरणादिसत्त्वे सहृदयतायाञ्च तादृशबोधे बाधकाभावः।

एवमधस्तनेषु पद्येषु रसाभासत्वापत्तिः।

> गण्डं चुम्बति पाण्डिमाधरमधून्यास्वादयत्यूल्बणः।
> श्वासोर्मिस्तनिमातनोति च तनोराश्लेषमेणीदृशः॥
> तापस्तावदपाकरोति वसनं भ्रातः किमावेद्यताम्।
> एते धन्यतमास्त्वमेव विधिना वामेन निर्वासितः॥ १ ॥

> कपोले पत्राली करतलनिरोधेन मृदिता।
> निपीतो निश्वासैरयममृतहृद्योऽधररसः॥
> मुहुःकण्ठे लग्नस्तरलयति वाष्पः स्तनतटम्।
> प्रियोमन्युर्जातस्तव निरनुरोधे न तु वयम्॥ २ ॥

तव मते बहुषु नायकत्वारोपात्। मम तु व्यवहारसमारोपेऽपि न क्षतिः। इति तेषां कथनं न स्थाने। एकां नायिकामुद्दिश्य बहूनां नायकव्यवहारवर्णने कथन्न रसाभासत्वम्। किन्तु नायकवदाचरतां निरूपितं न रसत्वं येनाभासः स्यात्। किन्तु परिपोष्यमाणो विप्रलम्भः स च नानेकविषय इति न दोषः। अधुना पूर्वविचारैरनापृष्टो मूलग्रन्थाक्षरविवर्जितो मर्मप्रकाशो विव्रियते। समासोक्तावप्रस्तुतवृतान्तसमारोप एव चारुताहेतुरिति प्राञ्चः। स च प्रस्तुतवृतान्त एव। यत्र कुत्रापि लेखः प्रकृतधर्मिणि आरोपस्य तस्य अभेदापन्नेन प्रस्तुतव्यवहारेणैव धर्मिणि अन्वये तात्पर्यम्। केवलं निशाशशिनोर्नायिकात्वनायकत्वारोपं द्वेष्टि सः।

अन्यच्चैवं सति वाच्यार्थबोधोत्तरं तद्व्यङ्ग्यप्रतीतिः, सापि न केवलव्यवहारात् किन्तु नायकनायिकासम्बन्धविशिष्टव्यवहारज्ञानात्। एवञ्च वाच्यार्थबोधकालिकचमत्कारकारित्वेन ध्वनिव्यवहारयोग्यतया नालङ्कारघटकता। एवञ्च समासोक्तेस्तादृशध्वन्युपस्कारकतयाऽधिकचमत्कारित्वमलङ्कारत्वञ्च। न चैवं रूपकध्वनिनैव निर्वाहे पृथगलङ्कारत्वं न स्यादिति वाच्यम्। वाच्यार्थबोधकालिकचमत्कारस्यापह्नोतुमशक्यत्वेनालङ्कारस्य दुरपह्नवत्वात्। विपरीतं नायकत्वारोपव्यञ्जनस्य समासोक्त्यन्तर्भावं वदतो ध्वनित्वस्य

दुर्वारत्वाच्च । तद्वयङ्गयस्याधिकचमत्कारकारित्वेन प्रधानत्वात् । प्राचीनानुभवमपलप्यापि यद्येकत्र द्वयमिति रीत्या प्रस्तुताप्रस्तुतवृत्तान्तयोर्विशेष्येणैवान्वयः स्वीक्रियते एवमपि वाक्यार्थबोधकाले प्रस्तुते धर्मिणि नाप्रस्तुतजारत्वारोपप्रत्याशा । तथाहि यद्यप्यनयोर्भिन्नभिन्नपदोपात्तविशेषणयोरिव विशेष्येणैव साक्षादन्वयात्समप्राधान्यमस्तीति स्वीक्रियते तथाप्यप्रस्तुतवृत्तान्तान्वयानुरोधान्न प्रस्तुतेऽप्रस्तुतरूपसमारोपः, प्रस्तुतेऽप्रस्तुतव्यवहारारोपेणैव सिद्धेः। अप्रस्तुतरूपसमारोपेऽपि प्रस्तुतवृत्तान्तान्वयायोग्यतायास्तादवस्थ्याच्च । नन्वेवं सति विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिरिति प्राचीनलक्षणासङ्गतिः, अप्रस्तुतधर्मिव्यञ्जनस्य त्वयानपेक्षणादिति चेन्न स्वरूपतोऽप्रस्तुतवृत्तान्तारोपस्याचमत्कारित्वम् किन्त्वप्रस्तुतकामुकादिसम्बन्धित्वेनावगम्यमानस्य तस्यारोपः । अतः श्लेषादिमहिम्ना विशेषणपदैः समर्पितेन चुम्बनादिना ऐन्द्रीचन्द्रैतद्गतस्त्रीलिङ्गपुलिङ्गसहकृतेन तत्सम्बन्धिनि कामुकादावभिव्यक्ते पुनस्तदीयत्वानुसन्धनात् । विशेषणसाम्येन वाच्योपस्कारकस्याऽप्रस्तुतव्यञ्जनस्यापेक्षणात् । समासोक्तिगुणीभूतव्यङ्ग्येतिव्यवहारस्तु प्रकृतव्यवहारेऽप्रकृतव्यवहाराभेदस्य व्यञ्जनया प्रतीतेर्निर्बाध एवेति भणति । तत्र येषामन्यानामुत्तराणि पूर्वविचारेण गतार्थानि ये च न ग्रन्थस्यास्य विरोधमावहन्ति तान् परित्यज्यान्यान् विवेचयामि । इदं हि स्फुटं विचारवैषम्यम् । मर्मप्रकाशस्तु प्रथमं स्वरूपतो व्यवहारबोधः, तदनन्तरं व्यञ्जनया व्यवहारयोर्नायकनायिकासम्बन्धस्य, तदनन्तरञ्च निशाशशिनोर्नायिकात्वनायकत्ववैशिष्ट्यस्य भानं व्यञ्जनया । तृतीयबोधोपस्कारको द्वितीयः समासोक्ति बोध इति मनुते । पण्डितराजमते तु द्वितीयतृतीयस्थान एक एव तृतीयो बोधः । प्रथम एव चुम्बनादिबोधो वाच्यार्थविषयको द्वितीयसमासोक्तिबोधेनोपस्क्रियते । तत्रैतावदेव ब्रवीमि यदि वाच्यार्थबोधोत्तरं व्यवहारयोर्नायिकादिसम्बन्धबोधव्यवधानेनैव निशाशशिनोर्नायिकात्वबोधः सहृदयहृदयैरनुभूयते तदा मर्मप्रकाशकल्पना समीचीना । अन्यथा तु लाघवापेक्षी पण्डितराजो विजयते । वाच्यार्थबोधकालिकेत्यादिकथनन्तस्य न समीचीनम्, द्वितीयबोधस्यापि वैयञ्जनिकत्वात् विशाशशिनोर्नायिकाद्यभेदबोधस्य वाच्यार्थचमत्कारातिशयसम्पादकतया ध्वनित्वासंभवाच्च इति दिक् ।

अथास्याः केचन भेदा निरूप्यन्ते—

विशेषणसाम्यं श्लेषेण भवति शुद्धसाधारण्येन वा, तदपि धर्मान्तरपुरस्कारेण कार्यपुरस्कारेण वेति प्रत्येकं द्विविधम्।

तत्र 'विबोधयन् करस्पर्शैः' इत्यत्र धर्मान्तरपुरस्कारेण श्लेषे समुदाहृतमपि विशेषणसाम्यं पुनरुदाह्रियते—

'उत्सङ्गे तव गङ्गे पायं पायं पयोऽतिमधुरतरम्।
शमिताखिलश्रमभरः कथय कदाहं चिराय शयिताहे॥'

अत्र शिशुजननीवृत्तान्ताभेदेन स्थितः प्रकृतवृत्तान्तः।

श्लिष्टकार्यपुरस्कारेणाप्युदाहृतम् 'आबध्नास्यलकान्निरस्यसि—' इत्यत्र।

---

शुद्धसाधारण्येन● शक्त्यन्तरं शब्दभङ्गश्चान्तरा द्विविधम्● तथा च सामान्यतश्चतुर्विधा। धर्मान्तरपुरस्कारेण● कार्यातिरिक्तधर्मपुरस्कारेण। यथा विबोधयन् इत्यादिपद्ये पद्मिन्यां खण्डितावृत्ति किमपि कार्यं न वर्णितं किन्तु तद्वृत्तिधर्माः एवं भास्करे नायकवृत्तिकार्यातिरिक्तधर्मा एव। यथा आबध्नास्यलकामित्यादौ शृङ्गारनायकवृत्तिकार्याणि आबन्धननिरसन-समाकर्षणादीनि वीरनायके वर्णितानि अतस्तत्र कार्यपुरस्कारः। विबोध-यन्नित्यादौ धर्मपुरस्कारः। एवमग्रेऽपि। उत्सङ्गे तव● हे गङ्गे तव उत्सङ्गे मध्ये मातृपक्षे उरसि मधुरतम पयो गङ्गातोयमन्यत्र दुग्धं पीत्वा पीत्वा-असकृदितिद्योत्यते शमितः सम्पूर्णो योऽनेकभ्रमणादिक्लेशोऽन्यत्र कार्य-सम्पादनक्लेशो यस्यैवं सन् चिराय शयिताहे लीनो भविष्यामि अन्यत्र सुखशयनमात्र विवक्षितम्। प्रकृतवृत्तान्तः● प्रार्थिनः गङ्गावृत्तान्तः। गङ्गाविषयकरतेरङ्गम्। संगृह्णास्यल● पूर्वमाबध्नास्येति पाठो वर्तते। परमसमञ्जसमेवायं पाठः। प्रागग्रन्थकृतैव समासोक्तेरलक्ष्य इति सोपपादान-मुक्तम्। नापि प्रक्षिप्त इति वक्तुं शक्यते श्लिष्टकार्यपुरस्कारेणोदाहरणस्यावश्य-कत्वात्। सर्वपुस्तकेष्वेवमेव पाठस्योपलभ्यमानत्वाच्च। तथाप्येवं विविच्यो-दाहरणता सङ्गमनीया। तथाहि नायं शृङ्गारी वीरनायकः। वीरनायके प्रकृते

शुद्धसाधारण्येन धर्मान्तरपुरस्कारेण यथा—

'अलंकर्तुं कर्णौ भृशमनुभवन्त्या नवरुजां
ससीत्कारं तिर्यग्वलितवदनाया मृगदृशः।
कराब्जव्यापारानतिसुकृतसारान् रसयतो
जनुः सर्वश्लाघ्यं जयति ललितोत्तंस भवतः ॥'

अत्र नवकान्तया क्लेशेन कर्णे क्रियमाणस्योत्तंसस्य वृत्तान्तः प्रत्यग्रखण्डिताधरकामुकवृत्तान्ताभेदेन स्थितः।

यथा वा—

'अन्धेन पातभीत्या संचरता विषमविषयेषु।
दृढमिह मया गृहीता हिमगिरिशृङ्गादुपागता गङ्गा ॥'

अत्र गिरिशृङ्गप्रभववेणुयष्टिव्यवहाराभेदेन।

कार्यसाधारण्येन यथा—

---

अन्यस्य शृङ्गारनायकस्य व्यवहारोऽध्यारोप्यते। इति। अलं कर्तुं ● हे ललितोत्तंस! कर्णभूषण! प्रथममेव त्वया कर्णौ अलंकर्तुं छिद्रस्य संकुचिततया नूतनां रुजां पीडामत्यन्तम् अनुभवन्त्याः सीत्शब्देन युक्तं यथास्यात्तथा तिर्यग्वलितं साचीकृतं चक्रीकृतं वदनं यथा तस्या मृगनयनाया विशेषपुण्यफलीभूतान् करकमलचेष्टाः, अनुभवतो भवतः सर्वैः श्लाघ्यं जन्म जयति। **नवकान्तया** ● नवपरिणीतायाः। **प्रत्यग्र** ● सद्यः खण्डितोऽधरो येन तस्य कामुकस्य वृत्तान्तोऽधरोष्ठदर्शनसमये हस्तचेष्टायुक्तं सीत्कारशब्दमनुभवति तस्याभेदेन। **अन्धेन** ● अज्ञानिना विषमेषु दुष्परिणामादिषु नायिकादिविषयेषु संचरता मया नरकपातभीत्या इह संसारे हिमालयशिखरात्प्राप्ता गङ्गा दृढं यथा स्यात्तथा गृहीता। व्यङ्ग्यार्थस्तु चक्षुर्हीन उच्चावचेषु देशेषु परिभ्रमन् यत्र कुत्रचित्पतनभयात्कुतश्चित्प्राप्तां यष्टिं गृह्णाति। **राभेदेन** ●

'देव त्वां परितः स्तुवन्तु कवयो लोभेन, किं तावता
स्तव्यस्त्वं भवितासि, यस्य तरुणश्चापप्रतापोऽधुना ।
क्रोडान्तःकुरुतेतरां वसुमतीमाशाः समालिङ्गति
द्यां चुम्बत्यमरावतीं च सहसा गच्छत्यगम्यामपि ॥'

कार्यधर्मान्तरयोः संकरेण साधारण्यं यथा—

'उत्क्षिप्ताः कबरीभरं विवलिताः पार्श्वद्वयं न्यक्कृताः
पादाम्भोजयुगं रुषा परिहृता दूरेण चेलाञ्चलम् ।
गृह्णन्ति त्वरया भवत्प्रतिभटक्ष्मापालवामभ्रुवाम्
यान्तीनां गहनेषु कण्टकचिताः के के न भूमीरुहाः ॥'

---

अज्ञानिविषयिगृहीतगङ्गाप्रतान्तः स्थित इति योजनीयम् । देव त्वां परितः ● हे राजन् परितो लोभहेतुना न तु गुणेन कवयः स्तुवन्तु तावता किं त्वं स्तव्यो भवितासि नैव, दुराचारसाम्राज्यात् । दुराचारश्चाह यस्य तव अधुना तरुणः प्रतापः पृथ्वीं भुजान्तरं कुरुतेतराम् व्याप्नोति । एवमाशाः समालिङ्गति । दिवं चुम्बति । सहसा परैरगम्यामपि सुरपुरीं गच्छति । राज्ञः प्रतापः पृथ्वी-दिग्गगनसुरपुराणि व्याप्नोति इति वाच्योऽर्थः । क्रोडान्तः समालिङ्गन-चुम्बनागम्यागमनवर्णनेन नायिकाविषयकाणि समालिङ्गनादीनि व्यज्यन्ते । तथा च प्रतापस्य वाच्यव्यापारे व्यापनादौ कामलम्पटव्यवहारोऽभेदेन भासते । समालिङ्गनादिकार्याणाञ्चोपादानम् । यथा कामलम्पटः काञ्चित्क्रोडान्तः करोति । अन्यां समालिङ्गति, अपरां चुम्बति, अगम्याञ्च गच्छति । उत्क्षिप्ताः कबरीभरम् ● अत्र राज्ञः प्रतापोत्कर्षवर्णनाय तद्युद्धहतरिपुपत्नीनां गहनवन-भ्रमणवर्णने तरुव्यवहाराः कामुकव्यवहारप्रतिपादकशब्दैर्वर्णिताः । कबरीभरं-केशपाशमूर्ध्वं क्षिप्ताः । पार्श्वद्वयं विवलिता वक्रीकृताः । चरणकमलद्वयं न्यक्कृता अधः कृताः । रुषा त्यक्ताः सन्तो दूरादेवोत्तरीयं त्वरया गृह्णन्ति । के भूमिरुहा वृक्षास्तेऽपि कण्टकचिता रोमाञ्चव्याप्ताश्च । कासां गहने वने यान्तीनां भवतां शत्रूणां पत्नीनाम् । यथा कामलम्पटाअपि परपत्नीनां केशपाशं मोचयन्ति पार्श्वद्वयं मोटयन्ति, पादौ स्तम्भयन्ति, वस्त्रं गृह्णन्ति ।

अत्र कण्टकचितत्वेन कबरीग्रहणादि संकीर्णम्।

समासोक्तौ व्यजमानस्याप्रकृतव्यवहारस्योपस्कारकत्वमेव न प्रधान्यम्। तदुपस्कृतवाच्यस्यैव प्रधान्यं स्यात्, तत्र यदि व्यङ्ग्यस्यैव प्राधान्यं स्यात्, न वाच्यस्य, तदा 'देव त्वां परितः स्तुवन्तु-' इति प्रागुदाहृतपद्ये निन्दाव्याजेन स्तुतौ पर्यवसानं न स्यात्। स्तुतिनिन्दयोः प्रकृताप्रकृतव्यवहाराश्रयत्वादिति ध्येयम्।

"-'तन्वी मनोहरा बाला पुष्पाक्षी पुष्पहासिनी।
विकासमेति सुभग भवद्दर्शनमात्रतः॥'

अत्र तनुत्वादिविशेषणसाम्याल्लोलाक्ष्यां लताव्यवहार-प्रतीतिः। तत्र लतैकगामिविकासाख्यधर्मसमारोपः कारणम्। अन्यथा विशेषणसाम्यमात्रेण नियतलताव्यवहारस्याप्रतीतेः। विकासश्च प्रकृते उपचरितो ज्ञेयः" इत्यलंकारसर्वस्वकार आह, तत्र विचार्यते - नात्र विशेषणसाम्यमात्रेण लताव्यवहार-प्रतीतिः, अपि तु लतारूपाऽप्रकृतासाधारणविकासाऽऽरोपमहि-

---

सकीर्णम् ● कण्टकचितत्वधर्मकबरीग्रहणादिककार्ययोः संकरइत्यर्थः। कण्टकचितत्वं कण्टकयुतत्वं कामुकपक्षे रोमाञ्चव्याप्तत्वम्। आदिपदेन विवलनन्यक्करणग्रहणानां कार्याणां ग्रहणम्। नस्यात् ● निन्दामुखेनापि वाच्यस्य प्रकृतव्यवहारस्य स्तुतिः, व्यङ्ग्यस्य कामुकव्यवहारस्य निन्दा। व्यङ्ग्यस्य प्राधान्ये निन्दैव प्राधान्यं भजेत। यथासङ्ख्येनाह प्रकृताप्रकृत ● तन्वी मनोहरा ● विशेषणानि सर्वाणि नायिकालतयोः समन्वयं यन्ति। पुष्पाक्षी पुष्पे इवाक्षिणी यस्याः सा बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षजिति षच्समासान्तः। लतायां पुष्पाणि अक्षीणी यस्याः सा। पुष्पवत् हासोऽस्ति यस्याः पुष्पैर्हासिनी। यद्यप्यत्र नायिकापक्षे मतुबर्थइनिः सम्यङ् न संगच्छते तथाप्यसुब्बतइति भाष्यप्रयोगमनुसृत्यास्यापि साधुत्वाङ्गीकारः। लतैकगामि ● लतामात्रवृत्ति, नायिकायां विकासाभावात् प्रकृते ● नायिकायां प्रसन्नताख्ये। अपि तु ● मात्रपदाभावे विकासेन साम्याभावेऽपि विशेषणानां साम्याल्लक्षण-

म्नेति भवतैवोक्तम् । तथा च विशेषणसाम्यादप्रस्तुतस्य गम्यत्वमिति त्वदुक्तसमासोक्तिलक्षणस्य कथमत्र प्रवृत्तिः ? न च लक्षणे विशेषणसाम्यमात्रगम्यत्वं न विवक्षितम्, अपि तु विशेषणसाम्यगम्यत्वम्। प्रकृते च विकासस्थाप्यधिकस्य गमकत्वम् न त्वेतावता विशेषणसाम्यस्य गमकताहानिरिति वाच्यम्। श्लेषेऽतिव्याप्त्यापत्तेः। न च विशेषणमात्रसाम्यगम्यत्वं विवक्षितम्। एवं च न श्लेषेऽतिव्याप्तिः। नापि 'तन्वी मनोहरा' इत्यत्र लक्षणस्यावर्तनमिति वाच्यम्। 'तन्वी मनोहरा' इत्यत्र समासोक्तेरेवाभावात्। यत्र साधारणविशेषणमहिम्नाऽप्रकृतस्य स्फूर्तिस्तत्रसमासोक्तिः। यत्र त्वसाधारणमहिम्ना तत्र व्यङ्ग्यरूपकमितिविषयव्यवस्थापनात् । एवं च प्रकृते साधारण विशेषणसत्वेऽपि न तन्महिम्ना लतायाः स्फूर्तिः, अपि तु विकासमहिम्नेतिव्यङ्ग्यरूपकमुचितम् । यथा—

'चकोरनयनानन्दिकह्लाराह्लादकारणम् ।
तमसां कदनं भाति वदनं सुन्दरं तव ॥'

इत्यादौ सुन्दरमितिसाधारणविशेषणसत्त्वेऽपि रूपकमेव, तथेहापि। क्वचिद्गुणीभूतं क्वचित्प्रधानमित्यन्यदेतत्। साधारण्येन विशेषणसाम्यमूलायाः समासोक्तेस्तु 'अन्धेन पातभीत्या

---

समन्वयः। न च विशेषणमात्र● विशेषणत्वावच्छेदेन साम्यं मात्रपदेन विशेष्यसाम्यस्य व्यावृत्तिः। एवञ्च● तत्र विशेष्येणापि साम्यम्। नापि● विशेषणानां साम्यात्। रेवाभावात्● किञ्च सर्वस्वग्रन्थसिद्धान्तात्प्रकृतेऽप्रकृतलताप्रतीतावपि क्रियारूपतद्व्यवहारस्य कस्यचिदप्रतीतेर्नात्र समासोक्तिरिति मर्मप्रकाशः। चकोरनयनानन्दि● चकोरनयनानि आनन्दयति ताच्छील्यणिनिः। कुमुदविकासस्य कारणम्, तमसां विनाशनम्। तथेहापि● तन्वी मनोहरेत्यत्रापि। पूर्वत्र रतेरङ्गम् अत्र तु प्रधानम्।

संचरता—' इत्यादिः प्रागस्माभिरुदाहृतो विषय इति न निरवकाशत्वम्। तत्र ह्यसाधारणधर्मारोपमन्तरेण साधारण-विशेषणमहिम्नैवाप्रकृतप्रतीतेः । एतेन 'तदेवं साधारण्येन समासोक्तेर्विशेषणसाम्येऽप्यप्रकृतसंबन्धिधर्मकार्यसमारोपमन्तरेण तद्व्यवहारप्रतीतिर्न भवति' इति विमर्शिनीकृता यदुक्तं तन्निरस्तम्। तस्मादेवं संभवति विषयविभागे 'तन्वी मनोहरा—' इत्यत्र समासोक्तिवचनमहृदयम्।

यद्यपि "औपम्यगर्भत्वेनापि विशेषणसाम्यं संभवति । यथा—

'दन्तप्रभापुष्पचिता　　पाणिपल्लवशोभिनी ।
केशपाशालिवृन्देन　　सुवेषा　　हरिणेक्षणा ॥'

अत्र हरिणेक्षणावृत्तेः सुवेषत्वस्य विशेषणस्य महिम्ना दन्तप्रभासदृशानि पुष्पाणीत्यादियोजनां विहाय दन्तप्रभाः पुष्पाणीवेत्याद्युपमितसमासाश्रयेण कृते योजने प्रकृतार्थ-सिद्धौ सत्यां वृत्त्यन्तरेण त्यक्ताया एव योजनायाः पुनरुज्जीवने पुष्प-

---

**एतेन** अत्र समासोक्तेर्निरासेन । धर्मकार्य विकासकार्यं । **सम्भवति** अस्य प्रथमनिर्दिष्टभेदैः पृथग्गणना कार्येत्यर्थः । यत्र विशेषणसाम्यं कस्मिंश्चिदंशे उपमामाश्रित्य भवेत् । **दन्तप्रभा** नायिकायां दन्तप्रभापाणि-केशपाशाः, लतायां पुष्पपल्लवालयः । **सुवेषत्वस्य** हरिणेक्षणायां विधेयं सुवेषत्वं यल्लतायां नास्ति ।

अतो नायिकोन्मुखेनैव विशेषणानि योजनीयानि तेन दन्तप्रभासदृशानि पुष्पाणीति लतोन्मुखव्याख्यानस्योपस्थितस्यापि प्रथमं परित्याग इत्येवोक्तं योजनां विहायेत्यनेन । **द्युपमितसमासा** तेनैवौपम्यगर्भत्वम् । एवं पल्लवैरिव पाणिभ्यां शोभिनी । अलिवृन्दमिव केशपाशः । **प्रकृतार्थसिद्धौ** हरिणेक्षणायाः सुवेषत्वसिद्धौ । **वृत्त्यन्तरेण** व्यञ्जनया ।

पल्लवालिवृन्दैरुपमेयैराक्षिप्तायाः लतायाः प्रत्ययात्तद् व्यवहारारोपः। एवं सुवेषेत्यपहाय परीतेतिकृते उपमारूपकसाधकबाधकप्रमाणाभावात्तदुभयसंशयरूपसंकराश्रयेण कृते योजने पश्चात्पूर्वोक्तरीत्या लताप्रतीतेः समासोक्तिरेव। समासभेदेनार्थभेदेऽपि शब्दैक्यमादाय श्लिष्टमूलायामिव विशेषणसाम्यं बोध्यम्। आदावन्ते वा रूपकाश्रयेण दन्तप्रभा एव पुष्पाणीति योजने कृते तु हरिणेक्षणांशे आक्षिप्तलतातादात्म्यकेनैकदेशविवर्तिरूपकेणैवाप्रकृतार्थप्रत्ययोपपत्तेर्नार्थः सामासोक्तेरत्र। इति तेनैवोक्तम्, तदपि न विचारसहम्। दन्तप्रभाः पुष्पाणीवेत्युपमागर्भत्वेनाप्यादौ योजने कृते हरिणेक्षणांशे आक्षिप्तलतोपमानिकया एकदेशविवर्तिन्या उपमयैव गतार्थत्वात्समासोक्तेरानर्थक्यादत्राप्रसक्तेः। न चोद्भटमते एकदेशविवर्तिनोरुपमासंकरयोरस्वीकारात्तथोक्तमिति वाच्यम्। अनुपदमेव स्वयं तेन तत्स्वीकारात्।

हालाहलसमो मन्युरनुकम्पा सुधोपमा।
कीर्तिस्ते चन्द्रसदृशी भटास्तु मकरोद्भटाः॥'

---

**उपमेयैः**● दन्तप्रभासदृशानि पुष्पाणि पाणिसदृशेन पल्लवेन इत्यादिव्याख्यानैः। **हारारोपः**● तथा च समासोक्तिः। अत्र 'लतायाः प्रत्ययात्तन्न व्यवहारारोप इत्यशुद्धं विपरीतं पाठं धृत्वा बहवोव्याचक्षते। स च पाठ एतद्ग्रन्थसन्दर्भविरूद्धः सर्वस्वग्रन्थविरुद्धश्चेति तच्चर्चा त्यज्यते।

**साधकबाधक**● उपमारूपकयोरन्यतरस्य साधकं बाधकञ्च यत्प्रमाणम्। **पूर्वोक्तरीत्या**● व्यञ्जनया सदृशानीतिव्याख्यानेन। नन्वर्थभेदे कथं विशेषणसाम्यमित्यत आह **समासभेदेन**● अन्ते हरिणेक्षणांशे। तत्र च शाब्दाभेदासम्भवादेकदेशविवर्तिनी। **तेनैव**● सर्वस्वकृता। **उपमयैव**● रूपकस्यापि व्यावृत्तिः। **हलाहलसमः**● रत्नाकरे हालाहलो विषं राशि

इत्यादौ गत्यन्तराभावात्। तेनाप्येकदेशविवर्त्युपमाया एव स्वीकरणीयत्वाच्च अवश्यक्लृप्तेनोपपत्तौ भेदान्तरकल्पनानौचित्यात्। तस्मादौपम्यगर्भविशेषणोत्थापितः समासोक्तिप्रकारो न संगच्छते।

यत्र श्लिष्टविशेषणेन शुद्धसाधारणविशेषणेन वा सहचरितमौपम्यगर्भविशेषणम् तत्र यद्यप्यस्ति समासोक्तिः, तथापि नासावौपम्यगर्भविशेषणोत्थापितस्तृतीयः प्रभेदो भवितुमीष्टे, स्वतन्त्रविषयत्वाभावात्।

'निर्मलाम्बररम्यश्रीः किञ्चिद् दर्शिततारका।
हंसावलीहारयुता शरद् विजयतेतराम्॥'

अत्र पूर्वार्धगतश्लिष्टविशेषणोत्थापितैव समासोक्तिरुत्तरार्धगतेनौपम्यगर्भविशेषणेन विद्वदुत्थापिता युक्तिस्तदनुगामिना मूर्खेणेवानुमोद्यते। एवं 'दत्तानन्दा समस्तानां प्रफुल्लोत्पलमालिनी' इति पूर्वार्धे कृते शुद्धसाधारणविशेषणोत्थापितैव।

---

क्रोधः, एवं सुधा, अनुकम्पा, चन्द्रः कीर्तिः, भट्टा मकराः परं राजरत्नाकरयोरनुपादानाच्छाब्दाभेदासम्भवेन रूपकस्यासम्भवादुपमैवाङ्गीकर्तव्योद्भटेनापि। तदेवोक्तं गत्यन्तराभावादित्यनेन। भवितुमीष्टे● क्लृप्तभेदैः क्रोडीकारात्। निर्मलाम्बररम्यश्रीः● शरद्, स्वच्छेन गगनेन रम्या शोभा यस्याः, दर्शितानि नक्षत्राणि यस्यां सा, हार इव हंसावली तया युता, अप्रकृता नायिका तु स्वच्छवस्त्रेण शोभास्पदा, दर्शितनेत्रकनीनिका हंसावली सदृशहारयुता। अत्र पूर्वार्धे श्लिष्टविशेषणसाम्यप्रयुक्ता समासोक्तिः। उत्तरार्धे औपम्येऽपि न समासोक्त्यन्तरम्, किन्तु प्रथमाया एव पुष्टिः। तत्र दृष्टान्तो विद्वदुत्थापितेत्यादि। श्लिष्टविशेषणामुदाहृत्य शुद्धसाधारणविशेषणस्योदाहरणमाह दत्तानन्दा● समस्तानां दत्त आनन्दो यया सा प्रफुल्लानामुत्पलानां मालाऽस्ति यस्या एवंभूता शरन्नायिका च। अत्र मर्मप्रकाशः। अत्रापि व्यवहारस्य किञ्चिन्निबन्धाभावात् कथं समासोक्तिरिति चिन्त्यमिदम्। एतादृशस्थले व्यङ्ग्यरूपकमुपमा वेति युक्तमेव प्राग्वत्। इत्याह। पूर्वं ग्रन्थकृता

एवं च—

'परिफुल्लाब्जनयना चन्द्रिकाचारुहासिनी।
हंसावलीहारयुता शरद् विजयतेतराम् ॥'

इत्यत्रोपमारूपकयोः साधकस्य बाधकस्य चाभावात्संकरालंकारस्वीकर्तृनये तदुभयसंशयात्मक एकदेशविवर्ती संकरालंकार एव। तदस्वीकर्तृनये च यदोपमितसमासस्फूर्तिस्तदैकदेशविवर्तिन्युपमा, विशेषणसमासस्फूर्तौ तथाविधमेव रूपकमिति प्रथमयोजनयैवाप्रकृतार्थावगतेर्द्वितीययोजनायाः परिफुल्लाब्जानीव नयनानि इत्युपमागर्भाया वैयर्थ्यादनुत्थानमेव। यदा तु 'शरद्वर्षासखी बभौ' इति चतुर्थंचरणं निर्मीयते, तदा तु शरन्मात्रवृत्तेर्वर्षासखीत्वस्योपादानादब्जचन्द्रिकाहंसप्रधानस्योपमितसमासस्यावश्यकत्वात्। प्रथमप्रादुर्भूतया नयनहासहाराक्षिप्तकामिनीरूपोपमानिकया अत एवैकदेशविवर्तिन्योपमयैव निर्वाह इति निवेदितमपि सहृदयप्रीतये पुनर्निवेदितम्।

---

यत्र साधारणविशेषणमहिम्नाऽप्रकृतस्य स्फूर्तिस्तत्र समासोक्तिः, यत्र त्वसाधारणमहिम्ना तत्र व्यङ्ग्यरूपकमिति विषयव्यवस्थापनादित्युक्तत्वादन्यस्य कस्यचिन्निबन्धनस्यानपेक्षितत्वाच्च चिन्त्यमिति। **एवञ्च●** औपम्यगर्भस्य समासोक्तिभेदानङ्गीकारे। **परिफुल्लाब्जनयना●** परिफुल्लानि अब्जानि नयनानीव यस्याः सेत्युपमा, परिफुल्लाब्जरूपाणि नयनानि यस्या सेति रूपकम्। चन्द्रिका चारूहास इवास्ति यस्याः सेत्युपमा। चन्द्रिका चारूहासोऽस्ति यस्याः सेति रूपकम्। **तदुभय●** उपमारूपक। **एकदेश●** शरदंशे उपमानस्यानुपादानादुपमारूपकयोः श्रौतत्वाभावात्। **तदस्वीकर्तृ●** संकरालङ्कारास्वीकर्तृमते। **उपमितसमास●** उपमितं व्याघ्रादिभिः सामान्याप्रयोगे। **विशेषण●** मयूरव्यंसकादयश्च। **दब्ज●** अब्जानि नयनानीवेति विग्रहेऽब्जानां प्राधान्यं तेन च शरत्परत्वम्। अब्जे इव नयने इत्युक्तौ नयनस्य प्राधान्यान्नायिकापरत्वं स्यात्। तत्र च वर्षा सखीत्वं नास्ति। अत्र वाक्ये हंसपदेनैकदेशेन हंसावली ग्राह्या। **प्रादुर्भूतया●** व्यङ्ग्यया। **अत एव●**

'अथोपगूढे शरदा शशाङ्के प्रावृड् ययौ शान्ततडित्कटाक्षा ।
कासां न सौभाग्यगुणोऽङ्गनानां नष्टः परिभ्रष्टपयोधराणाम् ॥'

इति कस्यचित् पद्ये प्रावृष एकदेशविवर्तिरूपकेणाङ्गनात्वसिद्धिरिति नोत्तरार्धगतार्थान्तरन्यासानुपपत्तिः । प्रथमचरणे तूपगूहनसाम्यादस्तु नाम समासोक्तिः ।

यत्तु कुवलयानन्दे "सारूप्यादपि समासोक्तिर्दृश्यते । यथा—

'पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासं यातो घनविरलभावः क्षितिरुहाम् ।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥'

---

कामिन्या वाच्यत्वाभावादेव । अथोपगूढे ● अत्र पूर्वार्धे रूपकं समासोक्तिश्चोत्तरार्धेऽर्थान्तरन्यासः । पूर्वार्धेन प्रावृषि अङ्गनात्वविशेषसिद्धावेवोत्तरार्धेन सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । कटाक्षादिविशेषसाम्यव्यङ्ग्यया नायिकाया उपगूहनव्यापारस्योक्तस्य प्रावृषः शान्तिप्रभृतिव्यवहारे आरोपात् समासोक्तिः । अथ अनन्तरं शरदि तडितां मेघानाञ्च विर.मः सञ्जात इत्येव वक्तव्यम् । तस्य वर्णनं काचिन्नायिका स्वप्रियेऽन्ययाऽऽलिङ्गिते यथा कटाक्षादि व्यापारं त्यजति, तथा चन्द्रे शरदाऽऽश्लिष्टे प्रावृट् शान्तस्तडित्कटाक्षा क्षीणविद्युद्विद्योतना, कासां स्त्रीणां शिथिलस्तनानां सौन्दर्यगुणो न नष्टोऽपि तु समासाम् । प्रावृडपि परिभ्रष्टमेघरूपपयोधरा । मूलस्थप्रथमचरणशब्दस्वारस्याच्छरच्छशाङ्कयोरेव नायकनायिकादिव्यवहारारोपः । सपत्नीं त्यक्तवान् नायकः, तादृशी प्रिया च नायिकेति व्यापारारोपे पूर्वार्धे समासोक्तिः परं कियताक्लेशेन ।

एकदेशविवर्ति ● प्रावृष उपमानभूताया अङ्गनाया अनुपादानात् । सारूप्यादपि ● विशेषणसाम्यव्यङ्ग्यसादृश्यादपीत्यर्थः । पुरा यत्र ● उत्तर-

अत्र वन-वर्णने प्रस्तुते "तत्सारूप्यात् कुटुम्बिषु धन-संतानादिसमृद्ध्यसमृद्धिविपर्यासं प्राप्तस्य तत्समाश्रयस्य ग्रामनगरादेर्वृत्तान्तः प्रतीयते" इत्युक्तम्, तदसत्; समासोक्तिजीवातोर्विशेषणसाम्यमात्रस्याभावेन समासोक्तितताया एवानुपपत्तेः। न च विशेषणसाम्यात् सादृश्याद्वा यत्राप्रस्तुतव्यवहारः प्रस्तुतेन व्यज्यते सा समासोक्तिरिति लक्षणं निर्मास्यत इति वाच्यम्, समासोक्तौ हि प्रकृतवृत्तान्तोऽप्रकृतवृत्तान्ताभेदेन स्थित इति सर्वसम्मतम्। त्वयापि च 'प्रकृतधर्मिण्यप्रकृतव्यवहार आरोप्यते' इत्युक्तम्। एवं स्थिते नह्यत्र स्रोतोवृक्षादिविपर्यासो धनसंतानविपर्यासाद्यभेदेन प्रतीयते। नापि वनादौ धनसन्तानविपर्यास इति समासोक्त्यन्तरात् सत्यपि वैलक्षण्ये यद्यसौ समा-

---

रामचरिते सीतात्यागानन्तरं कदाचिद्वनं गतस्य श्रीरामस्योक्तिरियम्। अत्र वनीयवस्तुविपर्यासवर्णनेन कौटुम्बिकविपर्यासो धनादिविपर्यासो व्यज्यते। ग्रन्थकारमतेऽप्रस्तुतप्रशंसालङ्कारः। स चाप्रस्तुतप्रशंसाप्रकरणे आपेदिरे इत्यादिपद्यव्याख्याने व्यक्तीभविष्यति। दीक्षितमते समासोक्तिः। पूर्वदर्शनकाले यत्र सरितां प्रवाह आसीत् तत्राधुना सरितां पुलिनं सैकतं तटम्। वृक्षाणां घनता विरलता च विपर्यासं यातः। यत्र सघनं तत्र विरलम् यत्र विरलमासीत् तत्र सघनं यातम्। एवं कुटुम्बेऽपि ये वृद्धा आसन्नैव सन्ति बाला युवानो युवानश्च वृद्धा नूतनाश्च कतिपये। एवं ये धनिनस्ते निर्धनास्तादृशाश्च सधनाः। बहोः कालाद् दृष्टमिदं वनमधुना अन्यदिव मन्ये। यो हि विशेषपरिवर्तनं न नीतः पर्वतानामाकारस्तदेवेदं वनमिति प्रत्यभिज्ञां बुद्धिं दृढां करोति। दृढशब्दाण्णिचि इष्टवद्भावेन रभावः। तत्सारूप्यात् ● वनसादृश्यात्। तत्समाश्रयस्य ● धनसंतानसमृद्धिविपर्ययाश्रयकुटुम्बाश्रयस्य। जीवातोः ● विशेषणसाम्यगम्यसादृश्येन गम्येऽपि समासोक्तिरेतादृशपरम्पराश्रयणे मानाभावादतिप्रसङ्गाच्च। लक्षणे निवेशेऽपि दोषमाह न च ●। स्थितः ● सर्वसम्मतः। प्रतीयते ● यदि विपर्यासात्मना सादृश्यमूलकोऽभेदो भासत एवेति शपथः क्रियेत, तदा जगति स्थितस्य सर्वस्यापि विपर्यासस्या-

सोक्तिरिति शपथं क्रियते, तदा अलंकारान्तरमपि समासोक्ति-कुक्षावेव निक्षिप्यताम्।

एवं तर्हि 'पुरा यत्र स्रोतः पुलिनमधुना तत्र सरिताम्' इत्यत्र कोऽलंकारः ? अप्रकृतेन वाच्येन प्रकृतव्यवहाराभिव्यक्ति-रूपाया अप्रस्तुतप्रशंसाया अत्रासंभवात् प्रकृतस्यैव वाच्यत्वादिति चेत्, साधु पृष्टमायुष्मता। समाधानमस्य सप्रपञ्चमप्रस्तुतप्रशंसा-प्रकरण एव निवेदयिष्याम इति। किं चालंकारसर्वस्वकृता 'सादृश्यगर्भविशेषणोत्थापिता सादृश्यमूला समासोक्तिः' इत्यु-क्तम्। तत्र हि विशेषणसाम्यसत्त्वादुक्तिसंभवोऽप्यस्ति, न तु त्वदुक्तायामिति मूलग्रन्थानवबोधस्तद्विरोधो वा स्फुट एवेति दिक्।

सेयं लौकिके व्यवहारे लौकिकस्य व्यवहारस्य, शास्त्रीये शास्त्रीयस्यारोपेण एतद्विपर्ययेण च चतुर्धा।

तत्राद्या प्रागभिहितैव।

द्वितीया यथा—

---

भेदो भासत इत्यपि कथन्नोच्यते ? व्यवहारिणोर्यत्र व्यवहारधर्मेण सादृश्यं प्रसिद्धिमेति, तत्रैव व्यवहारयोरभेदः। व्यवहारे सामान्यविशेषभावो वा भासेतेति। समाधानमस्य● अप्रस्तुतप्रशंसैवालङ्कारः। अप्रकृतेन वाच्येन व्यङ्ग्येन वा प्रस्तुतव्यवहाराभिव्यक्तिरित्यादिलक्षणस्वरूपनिरूपणेन। अव-शिष्टमर्मप्रकाशः तत्रत्यसमशीलस्तत्रैव विचारमेष्यति। स्फुट एवेति● विशेषणेष्वेव सादृश्यगर्भत्वं तद्ग्रन्थादवसीयते। तन्मते विशेषणसाम्यं नाव-सीदति। भवन्मते पृथक् सादृश्यमिति विरोधः। तदनुयायी च भवान्। स्वतन्त्रकल्पकस्य तदीयौपम्यगर्भप्रकारान्तरखण्डकस्य मम मते तु न तद्वि-रोधोद्भावनम्। एवञ्चात्रत्यो मर्मप्रकाशः दीक्षितपक्षपात्येव। द्वितीया●

'गुण-वृद्धी परे यस्मिन्नैव स्तः प्रत्ययात्मके ।
बुधेषु सदिति ख्यातं तद् ब्रह्म समुपास्महे ॥'

अत्र वेदान्तशास्त्रसिद्धव्यवहारे व्याकरणसिद्धस्य शतृशानज्-व्यवहारस्य ।

लौकिके शास्त्रीयस्य यथा—

'परार्थव्यासङ्गादुपजहृदथ स्वार्थपरता-
मभेदैकत्वं यो वहति गुणभूतेषु सततम् ।
स्वभावाद्यस्यान्तः स्फुरति ललितोदात्तमहिमा
समर्थो यो नित्यं स जयतितरां कोऽपि पुरुषः ॥'

---

शास्त्रीयव्यवहारे शास्त्रान्तरव्यवहाराभेदरूपा । गुणवृद्धी● वेदान्तिमते सदिति ब्रह्मणो नाम । तद् ब्रह्म प्रत्ययस्वरूपं ज्ञानस्वरूपं स्वप्रकाशत्वात् चेतनम् । यो बुद्धेः परतस्तु स इत्यादिवचनेन हिरण्यगर्भव्यावर्तकपरशब्देनापि तदेव ब्रह्म प्रतिपाद्यते । तस्मिन् निर्धर्मके ब्रह्मणि सत्त्वरजस्तमांसि रूपादयो वा गुणा न भवन्ति । तथाऽपरिणामिबोधककूटस्थशब्देन व्यवह्रियमाणे तस्मिन् परिणामप्रयुक्तषड्विकारान्तर्गतवृद्धिशब्दार्थप्रचयाख्योऽपि न भवति । एवं पाणिनितन्त्रे शतृशानचोः प्रत्यययोः 'तौसत्' इति सूत्रेण सत्संज्ञा जायते । प्रत्ययरूपः । शित्सत्प्रत्ययस्य सार्वधातुकसंज्ञकस्यापितः 'सार्वधातुकपित्' इत्यनेन ङिद्वदतिदेशाद् गुणवृद्धी न भवतस्तस्मिन् परे सति ।

परार्थव्यासङ्ग● अथ यः परप्रयोजनसाधनावेशात् स्वार्थप्रधानतामुपजहत् सन् हाधातोः शतृप्रत्ययान्तो जुहोत्यादित्वाद्द्वित्वमभ्यस्तत्वान्न नुम् । त्यजन् सन्नित्यर्थः । यः सततं स्वाश्रितेषु अभिन्नरूपमेकत्वं साम्यमिति यावद् धारयति, यस्यान्तःकरणे कारणं विनाऽपि स्वभावादेव सुन्दर ऐश्वर्यशाली महिमा स्फुरति । यश्च समर्थः स कोऽपि विरलपुरुषो नित्यमतिशयेन जयति । इति परोपकारिपुरुषस्य व्यवहारः प्रस्तुतव्यवहारः । व्याकरणनये समासादिषु वृत्तिषु एकार्थीभावरूपसमुदायवृत्तिस्वीकारद्वारा जहत्स्वार्था अजहत्स्वार्थेति वृत्तिनाम्ना प्रसिद्धम् । वस्तुतो जहत्स्वार्थावृत्तेः सर्वथाऽस्पृष्टावयवार्थः

अत्र समर्थसूत्रगतमहाभाष्यार्थस्य। तत्र हि 'अथ ये वृत्तिं वर्तयन्ति किं त आहुः' इत्यादिना जहत्स्वार्था वृत्तिरजहत्स्वार्था वृत्तिरिति पक्षद्वयम् निरूपितम्। तत्रैवोपसर्जनार्थे अभेदैकत्वसंख्यापि ध्वनिता। प्रकटिता च हरिणा—

'यथौषधिरसाः सर्वे मधुन्याहितशक्तयः।
अविभागेन वर्तन्ते तां संख्यां तादृशीं विदुः॥' इति।

सामर्थ्यमप्येकार्थीभावबोधकतारूपं तत्रैवोक्तम्।

शास्त्रीये लौकिकस्य यथा—

'कृत्वा सूत्रैः सुगूढार्थैः प्रकृतेः प्रत्ययं परम्।
आगमान् भावयन् भाति वैयाकरणपुंगवः॥'

---

समुदायार्थोऽवभासते यत्र तदुदाहरणं कृष्णसर्पप्रतिष्ठा निष्ठादयः। यत्रावयवार्थद्वारा समुदायार्थोऽवभासते। राजपुरुषादयोऽजहत्स्वार्थावृत्तेरूदाहरणम्। तथाऽपि बहुषु वैयाकरणनिबन्धेषु सामान्यतः समासादौ द्वयोरूपादानं दृश्यते। समुदायार्थापरित्यागे या स्वार्थान् जहाति न जहातीति क्रमेणानयोः शब्दार्थः, तामेव जहत्स्वार्थां वृत्तिं प्रथमपादे निर्दिशति। यः समस्तः शब्दः परस्यसमुदायस्यार्थस्य बोधकत्वात्स्वार्थमात्रे तात्पर्यं त्यजति। राजपुरुष इत्यत्रैकस्य राज्ञो राज्ञो राज्ञामिति राजनि संख्याविशेषो न भासत इति सर्वजनानुभवसिद्धम्। परं समासात् विभक्तेरेकवचनमायाति तस्यैकत्वमर्थः। तदप्येकत्वं न वस्तुतः किन्तु संख्याविशेषाभेदरूपं संख्यासामान्यमिति यावत्। एतच्च संयोगान्तस्य लोप इति सूत्रस्थमनोरमाशब्दरत्ने स्फुटम्। विशेषणीभूतेषु राजपदार्थेषु राजपदार्थे अभेदैकत्वं संख्या भासत इति द्वितीयपादेन निबद्धम्। अन्त इति सूत्रेण सामान्यतः समासस्यान्तस्योदात्तो विधीयते विशेषसमासेषु, बाधकान्यन्यानि सूत्राणि सन्ति। सामान्यतः समासोद्देश्यकत्वसूचनाय स्वभावादित्युक्तन्तदेतत्तृतीयपादसूचितम्। सामर्थ्यमेकार्थीभावरूपं चतुर्थपादेन सूचितम्। हरिणा● भर्तृहरिणा वाक्यपदीये। कृत्वा सूत्रैः● वैयाकरणश्रेष्ठः संक्षिप्तार्थैः सूत्रैः धातुप्रातिपदिकादिप्रकृतेः परं सुप्तिङादिप्रत्ययं कृत्वा नुमुअडाद्यागमान् विचारयन् भाति। राजा गुप्तचरितैश्चरादिभिः

अत्र राजव्यवहारस्य ।

एवं शास्त्रान्तरव्यवहारेऽपि बोध्यम् ।

इयं चालंकारान्तरेषु बहुष्वानुगुण्येन स्थिता ।

'स्थितेऽपि सूर्ये पद्मिन्यो वर्तन्ते मधुपैः सह ।
अस्तं गते तु सुतरां स्त्रीणां कः प्रत्ययो भुवि ॥'

अत्र समर्थ्यत्वेन स्थितार्थान्तरन्यासानुगुण्यमाधत्ते ।

'उत्तमानामपि स्त्रीणां विश्वासो नैव विद्यते ।
राजप्रियाः कैरविण्यो रमन्ते मधुपैः सह ॥'

इह समर्थकत्वेन ।

'व्यागुञ्जन्मधुकरपुञ्जमञ्जुगीतामाकर्ण्य
स्तुतिमुदयत्त्रपातिरेकात् ।
आभूमीतलनतकन्धराणि मन्येऽ
रण्येऽस्मिन्नवनिरुहां कुटुम्बकानि ॥'

अत्र हि परकृतनिजस्तुत्याकर्णनकन्धरानमनादिविशेषण-साम्योत्थापितया समासोक्त्या सज्जनव्यवहाराभिन्नतया स्थित

---

प्रजाया विश्वासं विधाय शास्त्राणि अायान् वा विचारयन् शोभते। ज्ञानिपक्षेऽपि साङ्ख्यसिद्धान्तानुसारं वेदान्तानुसारञ्चार्थो विवेचनीयः । प्रकृतेः प्रधानतोऽविद्यायाश्च पृथग् ज्ञानरूपं जीवात्मानं विधाय आगमानुपनिषदर्थान् । स्थितेऽपि● मधुपा भ्रमरा विटा मद्यपाश्च । विशेषेण गम्यमानः पद्मिनीनायिकाविटसम्बन्धव्यवहारः पद्मिनीभ्रमरव्यवहाराभेदमापन्नेन चतुर्थपादोक्तेन स्त्रीणां सामान्यव्यवहारेण समर्थ्यते निर्लक्ष्मीकाभवदित्यादिवत् । विशेषेण सामान्यसमर्थनोदाहरणमाह उत्तमानाम्● राजप्रियाः नृपप्रियाश्चन्द्रप्रियाश्च तेन समर्थ्यांशे उत्तमत्वविशेषणं सार्थकम् । व्यागुञ्जन्● उत्प्रेक्षाप्रकरणे व्याख्यातप्रायमिदम् । अत्र मञ्जुभ्रमरगीतश्रवणप्रयुक्तः भूशाखासम्बन्धव्यवहारः प्रकृतः । आकर्णननतस्तुतिशब्दादिशब्दमहिम्ना स्वकीयस्तुतिश्रवणोत्थत्रपाहेतुकसज्जनविनमनव्यवहारो व्यज्यते-

एव तरुव्यवहारे भूशाखासंबन्धाभेदाध्यवसितमस्तकमूलनमन-निमित्तोत्थापिता त्रपारूपहेतूत्प्रेक्षा संभवति। अन्यथा कितव-कृतग्रीवानमनस्यापि त्रपोत्थापकतापत्तेः। इत्युत्प्रेक्षानुगुणा समासोक्तिः।

एवम्—

'राज्याभिषेकमाज्ञाय शम्बरासुरवैरिणः।
सुधाभिर्जगतीमध्यं लिम्पतीव सुधाकरः॥'

इत्यत्रापि स्वामिसेवकव्यवहारमूला सुधालेपनोत्प्रेक्षा।

अमुयैव दिशा अचेतनव्यवहारे प्रकृते चेतनव्यवहारसंबन्धि-स्वरूप-हेतु-फलोत्प्रेक्षायाम्, चेतनव्यवहारे प्रकृते चाचेतनव्यव-हारसंबन्धिस्वरूप-हेतु-फलोत्प्रेक्षायां च समासोक्तिरेव मूलम्।

इति रसगङ्गाधरे समासोक्तिप्रकरणम्।

विशेषणानां साभिप्रायत्वं परिकरः।

तच्च प्रकृतार्थोपपादकचमत्कारिव्यङ्ग्यकत्वम्।

---

ऽप्रकृतः। तयोरभेद इति समासोक्तिशरीरम्। नमनं त्रपाहेतुकमित्युत्प्रेक्षा। न नमनमात्रं त्रपाहेतुकं कितवनमने व्यभिचारात्। किन्तु स्तुतिश्रवणोत्तरं सज्जननमनाभिन्नं न स्यात्तदात्रपाहेतूत्प्रेक्षापि नस्यादित्याशयः। राज्या-भिषेकेत्यादि पद्यम् उत्प्रेक्षायां गतम्। अन्यत्र चोत्प्रेक्षायां समासोक्तेरानुगुण्यं ग्राहयति अमुयैव दिशा।

॥ इति समासोक्तिनिरूपणम् ॥

अथ परिकरनिरूपणम्

परिकरोति उपस्करोति प्रकृतवाक्यार्थमर्थान्तरध्वननद्वारेति परिकरः। संज्ञात्वादभूषणार्थत्वाद्वा न सुट्। केचन भावे प्रत्ययं विधायमतुबर्थीयाच्‍ं विदधति। साभिप्रायत्वम् ● अभिप्रायस्तात्पर्यं तद्युक्तत्वम्। तात्पर्यञ्च प्रकृतोपस्कारकव्यङ्ग्यबोधने तदेवाह तच्च ● उपस्कारकत्वं सामान्यलक्षणा-

अत एवास्य हेत्वलंकाराद्वैलक्षण्यम्, तत्र व्यङ्ग्यस्यानावश्यकत्वात् ।

उपपादकता चोपस्कारक-निष्पादक-साधारणी ।
व्यङ्ग्यस्य गुणत्वाच्च न ध्वनित्वं व्यपदिश्यते ।

यथा—

'मन्त्रैर्मीलितमौषधैर्मुकुलितं त्रस्तं सुराणां गणैः
स्रस्तं सान्द्रसुधारसैर्विदलितं गारुत्मतग्रावभिः ।
वीचि-क्षालित-कालियाहितपदे स्वर्लोककल्लोलिनि
त्वं तापं तिरयाधुना भव-भय-व्यालावलीढात्मनः ॥'

अत्रात्मनो भागीरथीकर्तृकस्य भवव्यालदंशजनिततापदूरीकरणस्याशंसनं हि वाक्यार्थः । तत्र भगवत्या भवतापनाशिका-

---

क्रान्तं न विस्मर्तव्यम् । **अतएव●** व्यञ्जनस्य परिकरे आवश्यकत्वादेव । **गुणत्वाच्च●** गुणीभूतव्यङ्ग्यत्वात् । तच्च प्रकृतार्थोपपादकेत्यनेन स्फुटमेव । विशेष्यस्य साभिप्रायत्वे परिकराङ्कुरस्य वारणाय विशेषणानामिति मर्मप्रकाशः, तदुदाहरणस्य विशेषणे साभिप्रायत्वेन गतार्थत्वात् पण्डितराजैरुपेक्षितः । **मन्त्रैर्मीलितम्●** गङ्गाविषयकरतेरङ्गम् परिकरः । कलिमाहात्म्यान्मन्त्रादिमहिम्नामभावेन हे गङ्गे अधुना त्वमेव तापं तिरय । यतस्त्वया महाविषस्य कालीयसर्पस्य विशमनं याभ्यां कृतौ तौ कृष्णपादौ क्षालितौ । अतस्त्वयि-तापनाशशक्तिः सङ्क्रान्तेति भावः । मन्त्रादीनां प्रभावाभावमाह मन्त्रैर्गत-प्रभावैरभावि । औषधैर्मुकुलितम् न प्रफुल्यते नापि फल्यते । सुरसमूहैर्भीतम् । सान्द्रैरमृतरसैः स्रस्तमधः पतितम् । नाधुना तेषां स्तवः, गारुत्मतमणयोऽपि खण्डशो जाता नाधुनाऽविकला उपलभ्यन्ते । त्वञ्च गङ्गे वीचिभिः क्षालितौ कालियाहितस्य विष्णोः पादौ यया तादृशी, तथा स्वर्लोकेऽपि कल्लोलस्तवातः सर्वत्र प्रसृतप्रभावा भवभयं व्यालरूपं मयूरव्यंसकादित्वाद्विशेषणसमासः । तेनावलीढोग्रस्त आत्मा यस्य तस्याधुना तापं विनाशय । भवभयमपि सर्पविषात्म तत्तिरणं तवैव शक्यम् । प्रार्थनालोटोऽर्थमाह **आशंसनम्●** ।

त्वस्य सुप्रसिद्धत्वात्परिणामेन भवरूपविषयतादात्म्यापत्त्या व्यालजनितसंतापनाशिकात्वं तावत्सूपपादमेव । 'स्थास्नुजङ्गमसंभूतविषहन्त्र्यै नमो नमः' इत्याद्यागमबलाच्च विषयतादात्म्यं विनापि शुद्ध-व्याल-जनित-संताप-नाशिकात्वमपि स्वभावसिद्धमेव । एवं वाच्यार्थस्य सत्यामपि निष्पत्तौ सौन्दर्यविशेषाधानाय साकूतं विशेषणं वीचिक्षालितेत्यादि । अत्र नामान्तरस्य सत्त्वेऽपि कालियाहितशब्दोपादानसामर्थ्याद्भगवतश्चरणे फणागणनृत्यनिःसारीकृतकालिये लोकोत्तरविषहरणशक्तिरुत्पत्तिसिद्धैवासीत् । सा च तयोर्वीचिभिः क्षालनाद् गङ्गायां स्वाश्रयरेणुद्वारा संक्रान्तेति गम्यते । न च शक्तेः पूर्वमेव क्षालनात्कथं चरणेनार्वाक्कालियस्य विषहरणं शक्तिरहितेन संभवतीति वाच्यम् । क्षालितावशिष्टा लेशरूपा शक्तिश्चरणे काचित्स्थितासीत् यया संप्रति कालियस्य विषमहारीत्यप्याकूतान्तर्गतमेवेति नानुपपत्तिः । एवं हि वाच्योपस्कारकतयात्र गुणीभावः, न वाच्यसिद्ध्यङ्गतया ।

---

**भवरूपविषय●** भवभये व्यालतादात्म्यारोपाद् भवभयं विषयः, व्यालो विषयी । भवभयविनाशकत्वप्रसिद्धौ तद् रूपापन्नस्य व्यालविषस्यापि विनाशः सिद्ध्यति । परिमाणाऽलङ्कारानुकूलश्चारोपः । व्यालस्य भवभयात्मना प्रकृते उपयोगात् । आरोपं विनाऽपि सर्पविषनाशिकात्वप्रसिद्धिं दर्शयति **स्थास्नु●** पौराणिको विषहरो मन्त्रोऽयम् । **फणागण●** चरण इत्यस्य विशेषणम् । फणागणे नृत्येन निःसारीकृतः कालियो येनेत्यर्थः । **उत्पत्ति●** स्वभाव । मीमांसासूत्रे औत्पत्तिक इत्यस्य स्वाभाविकेति व्याख्यानात् । **स्वाश्रय●** विषनाशनशक्तेराश्रयोरेणुर्गङ्गायां संक्रान्ता तद्द्वारा सा शक्तिरपि संक्रान्ता । ननु गङ्गाविर्भावकाल एव कालियमर्दनात् प्राक् सर्वा शक्तिर्गङ्गया क्षालिता तदनन्तरञ्च शक्तेरभावात्कालियविषहरणानुपपत्तेः कथमिदमाकूतं संगच्छते- इत्याशङ्क्य समाधत्ते **न च●** **पस्कारकतया●** व्यङ्ग्यं विना वाच्यार्थनिष्पत्तेः । वाच्यस्य व्यालरूपभवभयविनाशकत्वस्योपस्कारिका । वाच्य **सिद्ध●**

यथा वा—

'मद-काम-विमोह-मत्सरा रिपवस्त्वत्पुर एव तावकम्।
धृतशार्ङ्गगदारिनन्दक प्रतिकर्षन्ति कथं न वीक्षसे ॥'

अत्राप्युपेक्षानौचित्यस्य तावकशब्दप्रतिपादितेन स्वामिभृत्यभावेनैव निष्पन्नशरीरस्य प्रकर्षकम् धृतशार्ङ्गेत्यादिविशेषणममोघशस्त्रास्त्रसम्पन्नस्य समक्षमेव रिपुभिः कृष्यमाणं दासमुपेक्षमाणस्याकीर्तिर्भवित्री तवेत्याकूतगर्भम्।

ननु निष्प्रयोजनविशेषणोपादानेऽपुष्टार्थदोषस्योक्तत्वात्सप्रयोजनविशेषणं दोषाभावमात्रं कष्टत्वाद्यभाववद्भवितुमर्हति, न त्वलंऽकार इति।

अत्र विमर्शिनीकारादय आहुः—'विशेषणानां बहुत्वमत्र विवक्षितम्। साभिप्रायविशेषणबहुत्वकृत एव चात्र वैचित्र्यातिशयः। एकविशेषणं तु दोषाभावमात्रस्यावकाशः' इति। तदसत्। विशेषणानेकत्वं हि व्यङ्ग्याधिक्याधायकत्वाद्वैचित्र्यविशेषाधायकमस्तु नाम, न तु प्रकृतालऽङ्कारशरीरमेव तदिति

---

वाच्यनिष्पादकतया। मदकाम● विष्णुं प्रति भक्तोक्तिः। त्वत्पुर एव स्वामिनोरक्षकस्य समर्थस्य समक्षमेव। तावकम् तवेमं दासम्। अण् प्रत्ययान्तः। तवकममकावेकवचने इति तवकादेशः। एकवचनार्थे त्वन्मात्रभृत्यत्वं गम्यते। धृतं शार्ङ्गं धनुर्गदा अरिश्चक्रं नन्दकं येनतत्सम्बुद्धौ। अमोघास्त्रत्वेन सामर्थ्यं सूचितम्। प्रतिकर्षन्ति आत्मसात्कुर्वन्ति। कथन्नेत्यादिना उपेक्षाया अनौचित्यं सूचयति। निष्पन्न● एतेन गम्यमानस्य उपस्कारकत्वमेव न निष्पादकत्वमिति व्यक्तम्। प्रकर्षकमुपस्कारकम्, अपुष्टार्थदोषाभावेन गतार्थत्वात् न परिकरस्यालङ्कारभावः। अपुष्टार्थत्वञ्च निष्प्रयोजनविशेषणोपादानमिति संशेते न नु●। द्यभावव● यथा कष्टत्वाभावोदोषाभाव एव नालङ्कारः। कारादय● आदिना प्रकाशकृदादिः। वैचित्र्यविशेष● साभिप्राय एकस्मिन्नपि विशेषणे परिकरकृतचमत्कारवैचित्र्यसत्त्वेऽपि

शक्यं वक्तुम्। 'वीचिक्षालितकालियाहितपदे' इति प्रागुक्ते एकस्यैव विशेषणस्य चमत्कारिताया अनपह्नवनीयत्वात्।

'अयि लावण्यजलाशय तस्या हा हन्त मीननयनायाः।
दूरस्थे त्वयि किं वा कथयामो विस्तरेणालम्॥'

अत्रैकैकविशेषणमात्रेणैव सकलवाक्यार्थसंजीवनाच्च।

यत्तु कुवलयानन्दकार आह—"श्लेषयमकादिष्वपुष्टार्थ-दोषाभावेन तत्रैकस्यापि विशेषणस्य साभिप्रायस्य विन्यासे

---

बहूनां तादृशां चमत्काराधिक्यमात्रसम्पादकत्वं नतु दोषाभावत्वनिस्सारकत्वम्। यथैकसादृश्यसत्त्वे उपमैव बहुसादृश्यसत्त्वेऽपि। चमत्कारितायाः● चमत्कारप्रयुक्तश्चालङ्कारव्यपदेशः चमत्कारसम्पादनं नाभावरूपदोषाभावकृतम्। विच्छितिविशेषो न बहुलेनैव विशेषणेन क्वचिदेकैकविशेषणेनापि विच्छित्तिविशेषदर्शनात्। इत्युदाहरणेन दर्शयति। अपि लावण्यजलाशय● नायिकावृतान्तं नायकं प्रति विवक्षोर्दूत्यादेरुक्तिः। हे सौन्दर्य सागर त्वयि दूरस्थे हा हन्त तस्या मीननयनायाः काऽनिर्वचनीया दशा संम्पत्स्यते इति किं कथयामः। कथनमप्यल्पतरमुचितम्। विस्तारो व्यर्थः। त्वदेकाधीनजीवनेत्याकूतम्। एवं सौन्दर्यसागरं त्वां विहाय सौन्दर्यकणिकाधराः शशिसरोजादयः शान्त्यै न प्रभवन्ति। त्वन्तु जलोरलक्षितशीताशयः, त्वयि दूरस्थे विरहातपदग्धायास्त्वां विहाय नान्यच्छरणम्। शीताशयस्य तव तापाननुभवे तापाश्रितायास्तस्या विषये किं कथयामो न फलं भविष्यति। डलयोरभेदा ज्जडाशयस्य तव विप्रलम्भश्रृङ्गारापात्रतया किं मम विप्रलम्भपोषकेन कथनेन? अथवा लवणजलाशयस्त्वं तापशमनाय लवणजलेन क्षाल्यतेऽतस्तत्तापव्याधेस्त्वमेवैकमौषधम्। किञ्च मीनपदमहिम्ना मीनस्य जलाशयं विना नावस्थितिरिति संक्षेपेण मम कथनम्। किं पदेन कथनं विनाऽपि सहृदयो जानाति। विस्तारनिषेधेन नायं वाक्प्रपञ्चस्य अवसरइत्यादि, नानाविधमाकूतम् आक्षेपमपि अनुसरति। कुवलयानन्दकारा● श्लेषयमकादिषु दोषा भावो नास्ति परिकरप्रयुक्तचमत्कारश्च वर्तते इति परिकरप्रयुक्तचमत्कारस्य न

विच्छित्ति-विशेषसद्भावात्परिकरत्वोपपत्तिः। यथा—'क्षिति-भृतैव सदैवतका वयं वनवताऽनवता किमहिद्रुहा' इति गोवर्धन-पर्वतविषयके नन्दादीन्प्रति भगवद्वाक्ये" इति। तदप्यसत्। यो हीममलंकारं दोषाभावान्तःपातितयालंकारमध्याद् बहिर्भावयति 'स किं त्वदुक्तश्लेषयमकादिशब्दचित्रातिरिक्तस्थले साभिप्रायविशेषणेषु विच्छित्तिविशेषं मन्यते, न वा? आद्ये दोषाभावमात्रेण विच्छित्तिविशेषस्यालंकारप्रयोज्यस्यालंकार-मन्तरेणानिष्पत्तेः सिद्धं सर्वत्र परिकरस्यालंकारत्वम्। द्वितीये अन्यत्रेव यमकादिष्वपि विच्छित्तिविशेषो नास्तीति तेन सुवचत्वात्।

तथा हि—

'अनापदि विना मार्गमनिशायामनातुरः।
मृत्तिकाशौचहीनस्तु नरो भवति किल्बिषी॥'

---

दोषाभावेन गतार्थता। [१]**विशेषाभावात्** ● मर्म प्रकाशे विच्छित्तिविशेषाभावापत्तेरित्यर्थः कृतः। तन्मते अविन्यासे इति पाठः प्रतिभाति। एकस्यापि साभिप्रायविशेषणस्याविन्यासे विच्छितिविशेषाभावापत्तेर् द्विन्यासे त्र विच्छिति विशेषानुभूतेः परिकरत्वोपपत्तिरिति तदभिप्रायः प्रतिभाति। सरलाकृता तु विच्छितिविशेषसद्भावादिति पाठः परिकल्पितः। अविन्यास इति छेदाभावे यथाश्रुतः पाठो न सम्यक् समन्वयमेति। मर्म प्रकाशोऽपि सरलाकृतं पाठं प्रमापयति पाठान्तरतया। **क्षितिभृतैव** ● यमकोदाहरणमिदम्। वनवता गोवर्धनपर्वतेनैव देवतावन्तः, अरक्षता अहेर्वृत्रासुरस्य द्रुहेन्द्रेण किम्। **विशेषणेषु** ● साभिप्रायविशेषणप्रयोज्यं विच्छितिविशेषमित्यर्थः। मया तु साभिप्रायैकविशेषणेऽपि विच्छितिविशेषमङ्गीकुर्वाणेन तथोदाहृतम्। तव तु तथाङ्गीकारे यमकादिपर्यन्तमनुधावनं व्यर्थं स्यादित्यनेन समम् प्रकृतेऽपि इति मर्मप्रकाशोऽभ्युदस्तः। **अनापदि** ● आपत्समयाभावे दिने मार्गमगच्छन्

---

१. साभिप्रायस्याविन्यासे विच्छिति विशेषाभावादिति मूलपाठमनुसृत्य व्याख्या।

इत्यत्र 'पर्युंदस्तेऽप्यापत्कालादौ यथा केनचिन्मृत्तिकाशौचादि क्रियमाणं न केनापि प्रतिषिध्यते, कर्तुः सामर्थ्यंगमकं च भवति, तथा प्रकृतेऽपि दोषनिषेधविधौ पर्युंदस्तेऽपि यमकादौ पुष्टतारूपदोषाभावः कविना संपाद्यमानो न दोषाय भविष्यति, अपि तु रसपोषायैवेति । यदि च यमकेऽनुभवं विच्छित्ति-विशेषे प्रमाणं ब्रूषे, ब्रूहि तदान्यत्रापि तमेव प्रमाणमिति यमकपर्यन्तानुधावनं निरर्थकमेव ।

तस्मात्पुष्टार्थतारूपेण दोषाभावेन परिकरालंकारस्य विषयविभागो दुःशक इति प्राप्ते ब्रूमः । सुन्दरत्वे सत्युपस्कारकत्वमलंकारत्वम् । चमत्कारापकर्षकाभावत्वं च दोषाभावत्वम् ।

---

समुचितस्थाने स्थित इति यावत् मृत्तिकया शौचेन हीनोनरः किल्मिषी भवति । अत्र आपन्निशाकालमार्गाणां पर्युदासस्ते चापदादयः पर्युदस्ताः । सामर्थ्यगमकम् ● समर्थोऽवश्यं मृत्तिकाशौचं विदधीतेत्येव स्मृतेस्तात्पर्यम् । सामर्थ्याभावस्य परिचायकाः पर्युदासाः । तथैव कविना दोषपरिहारः समर्थेनावश्यं विधेयः । आपत्काल इव शब्दचित्रप्रयुक्तचमत्कारसम्पादने कदाचिन्न प्रभवेत्तदा दोषेऽपुष्टयादौ सत्यपि न क्षतिः । रसपरिपोषायैवेति ● तथा च यमकादिष्वपि दोषाभावस्यानुगुण्यमक्षतमेव । तेन च परिकरोदाहरणमात्रं दोषाभावसंकीर्णम् । अत्र मर्मप्रकाशो नातिविरुद्ध इति तत्स्वरूपदर्शनमेव कारयामि । रसपरिपोषायेति वदता भवताऽपि यमकादिष्वपि विशेषणस्य चमत्कारिताऽभ्युपेतैव । चमत्कारातिशयजनकताया एव पुष्टेः काव्ये स्वीकारात् । यदि तु विवक्षितार्थबोधो विवक्षितार्थाबाधो वा पोषः, विवक्षितार्थबाधप्रयोजकानुपादानञ्च पुष्टत्वं तथाप्यापत्काले ऽक्रियमाणं मृतिकाशौचादि यथा न दोषाय नापि लोकनिन्दायै क्रियमाणञ्चाधिकस्तुतयेऽधिकफलायच भवति तथा यमकादिषु पुष्टत्वमक्रियमाणं न दोषाय क्रियमाणञ्चाधिकचमत्कारायेति वक्तुं शक्यम् । न च कवेः स्तुतये भवतु न चमत्कारायेति वाच्यम् नित्ये फलस्यापि स्वीकारेण तदतिशयस्य तेन जननवदुपपत्तेः । इह तु फलं चमत्कार एव । अयिलावण्येत्यत्र तु पुष्टत्वमक्रियमाणं दोषाय क्रियमाणन्तु

तदेतद्धर्मद्वयं विविक्तविषयं यदि दैवादेकस्मिन्विषयविशेषे समाविशेत्तदा का हानिः स्यात् १। उपधेयसंकरेऽप्युपाध्यसंकरात्। यथा ब्राह्मणस्य मूर्खत्वं दोषः, विद्या तु दोषाभावश्च भवति गुणश्च, तथेहाप्युपपत्तिः। न च दोषाभावतया प्राप्तस्यापि परिकरस्य किमित्यलंकारेषु गणनागौरवमिति वाच्यम्। उभयात्मकत्वेनेतरवैलक्षण्यज्ञापनार्थतया गणनोपपत्तेः। यथा गुणीभूतव्यङ्ग्यभेदतया संगृहीतापि समासोक्तिरलंकारगणनायां पुनर्गण्यते। यथा वा प्रासादवासिषु गणितोऽप्युभयवासी भूवासिगणनायां पुनर्गण्यते तथेहापीति न कश्चिद्दोषः। अन्यथा प्राचां काव्यलिङ्गमप्यलंकारो न स्यात्। तस्यापि निर्हेतुरूपदोषाभावात्मकत्वात्।

---

विवक्षितार्थाबाधरूपपरिपोषाय नाधिकचमत्काराय, यथानापदि अक्रियमाणं मृच्छौचादि दोषाय क्रियमाणन्तु नाधिकफलायेति यमकपर्यन्तानुधावनम्। वस्तुतः संध्याद्यकरणस्य दोषत्वेऽपि तदभावो न दोषाभावमात्रम् अपितु फलायापि एवं यमकाद्यतिरिक्तेऽपि साभिप्रायैकविशेषणोपादाने दोषत्वाभावश्चमत्कारश्चेत्यलङ्कारत्वम्। किञ्च यथा तत्र दोषाभावस्याङ्गवैकल्येऽपि सिद्धेः साङ्गतत्करणं फलातिशयायैव, एवं दोषाभावस्य विशेषानुपादानेऽपि सम्भवेन साभिप्रायैकविशेषणनिबन्धनोऽपि चमत्कारो दुरपह्नव इति बोध्यम्। तदेतदपि चैकपदार्थहेतुकमित्यादिना ग्रन्थेन कुवलयानन्दे स्फुटमिति दिक्।
**विविक्तविषयम्** ● अन्यत्र परस्परमसमानाधिकरणम्। **उपधेय** ● उपधेयस्योदाहरणस्य धर्मिणस्तादृशधर्मद्वयाश्रयत्वेऽपि उपाध्योर्धर्मयोः परिकरालङ्कारत्वदोषाभावत्वयोः परस्परं सर्वथा भेदात्। **प्राप्तस्यापि** ● कविसंरम्भविषयतयेति शेषः। महाभाष्यकारोक्तमपि दृष्टान्तमाह **प्रसादवासिषु** ● मुखनासिकावचनोऽनुनासिक इत्यत्र मुखग्रहणप्रत्याख्यानाय मुखनासिकाभ्यामुच्चार्यमाणा अपि नासिकयोच्चार्यमाणा इत्यवसरे प्रसादवासिन्याय उद्धृतः। **प्युभयवासी** ● अधोदेशे उर्ध्वदेशे च वासी।

**अन्यथा** ● दोषाभावेन विविक्तोदाहरणासम्भवेनालङ्कारोच्छेदे। चन्द्रं

'द्विजराज कलाधार विश्वतापनिवारण।
कथं मामबलां क्रूरैः करैर्दहसि निर्दय ॥'

इत्यादौ विशेषणाधिक्याद् व्यङ्ग्याधिक्ये चमत्काराधिक्यम्।

अयं च वाच्यसिद्ध्यङ्गव्यङ्ग्यगर्भत्वेनोपस्कारकव्यङ्ग्यगर्भत्वेन द्विधाभवन् व्यङ्ग्यस्य वाच्यायमानत्व–तद्विपर्ययाभ्यां चतुर्धा।

आद्यो यथा—

'विहाय संसारमहामरुस्थलीमलीकदेहादिमिलन्मरीचिकाम्।
कृपा-तरङ्गाकुल मन्मनोमृगो विगाढुमीश त्वयि गाढमीहते ॥'

अत्र गाहनसिद्ध्यङ्गं कृपेत्यादेः समुद्ररूपं व्यङ्ग्यं वाच्यायमानम्।

द्वितीयो यथा—

'खर्वीकृतेन्द्रगर्व त्वरया चक्रेण भिन्ननकमुख।
लीलात्तकोलमूर्त्ते मामुद्धर्तुं कथं न शक्तोऽसि ॥'

---

प्रति विरहिण्या उक्तिः द्विजराज● द्विजराजस्य गुणिनो हिंसा नोचिता। तथा तेषां कराः कथं क्रूराः। विश्वतापनिवारणान्न तापः समुचितः। वाच्यसिद्ध्य● वाच्यनिष्पादकं व्यङ्ग्यम्। वाच्योपस्कारकञ्च व्यङ्ग्यम्। वाच्यायमानत्व● वाच्यमिव स्फुटतया प्रतीयमानम्। तद्भिन्नञ्च व्यङ्ग्यम्।

विहाय● भक्तोक्तिरियम्। संसारे मिथ्यादेहाद्यभिमानो जायते मरुस्थल्यां यथा मरीचिकाजलम्। मृगस्य च मरीचिकाभ्रमेण धावनं पिपासायाश्चाशान्त्या मरणम्। तथैव संसारे देहधनाद्यभिमानेनेतस्ततो नानायोनिषु भ्रमणम्, शान्तेरलाभेन मरणजन्मपरम्परा प्रचलति। परं हे कृपाभिस्तरङ्गैर्व्याप्त ईश ! चतुरो मम मनोमृगः त्वयि सत्यस्वरूपे स्नातुमत्यन्तं चेष्टते। गाहनं वाच्यं तत्साधकं व्यङ्ग्यं समुद्ररूपं स्फुटमिव।

द्वितीयो यथा● वाच्यसिद्ध्यङ्गगूढव्यङ्ग्यकम्। इन्द्रगर्वखर्वणेन

अत्र गोवर्धन-गजेन्द्र-वसुंधराणामुद्धारो वाच्यतास्पर्शशून्य एवोपालम्भसिद्धयङ्गम् ।

तृतीयस्तु 'धृतशार्ङ्गगदारिनन्दक' इत्यत्र ।

चतुर्थः 'वीचिक्षालितकालियाहितपदे' इत्यत्र च बोध्यः ।

इति रसगङ्गाधरे परिकरालङ्कारप्रकरणम् ।

अथ श्लेषः—

श्रुत्यैकयानेकार्थप्रतिपादनं श्लेषः ।

तच्च द्वेधा अनेकधर्मपुरस्कारेणैकधर्मपुरस्कारेण च । आद्यं द्वेधा अनेकशब्दप्रतिभानद्वारा, एकशब्दप्रतिभानद्वारा चेति त्रिविधः श्लेषः ।

---

गोवर्धनस्य नक्रमुखभेदनेन गजराजस्य वाराहमूर्त्या पृथिव्या उद्धारः । उपालम्भो वाच्यः । तृतीयः● वाच्योपस्कारकं वाच्यायमानं व्यङ्ग्यम् । चतुर्थः● वाच्योपस्कारकं गूढव्यङ्ग्यम् ।

।। इति परिकरनिरूपणम् ।।

## अथश्लेषनिरूपणम्

श्रुत्यैकया● एकानुपूर्वीकशब्देनानेकार्थप्रतिपादनम् । अनेकधर्म● सभङ्गश्लेषस्थले शब्दभेदस्तच्छक्यतावच्छेदकादिकधर्मभेदश्च । अभङ्गस्थले शब्दाभेदेऽपि शब्दस्य नानार्थकत्वात् शक्यताद्यवच्छेदकधर्मभेदो वर्तत एव । अर्थश्लेषस्थले तु पदानां शक्यतावच्छेदकधर्माणां च न भेदः पदार्थभेदाभावात् ; किन्तु वाक्यार्थभेदो वर्तत एव । यद्यपि वक्ष्यमाणे अर्जुनस्य गुरुरित्यादौ गुरुः शिक्षको वृहस्पतिश्चेति व्याख्यानमुपलभ्यते, ततश्च धर्मभेद आयाति, तथाऽपि न मह्यं रोचते, तथा व्याख्यानमेकधर्मपुरस्कारेणेत्यस्याननुरोधात् । किन्तु गुरुत्वेन श्रेष्ठत्वेन रूपेण शिक्षकस्य पूज्यस्य च गुरुशब्दाद् भानमित्येव समीचीनमिति प्रतिभाति । आद्यम्● अनेकधर्मपुरस्कारेणेति । अनेकशब्द-

तत्राद्यः सभङ्गो द्वितीयो ह्यभङ्ग इति वदन्ति । तृतीयस्तु शुद्धः ।

एवं त्रिविधोऽप्ययं प्रकृतमात्राप्रकृतमात्रप्रकृताप्रकृतोभयाश्रितत्वेन पुनस्त्रिविधः । अत्राद्ये भेदे द्वितीये च विशेष्यस्य श्लिष्टतायां कामचारः । तृतीयभेदे तु विशेषणवाचकस्यैव श्लिष्टत्वम् न विशेष्यवाचकस्य । तथात्वे तु शब्दशक्तिमूलध्वनेरुच्छेद एव स्यात् । विशेषणमात्रश्लिष्टतायामपि प्रकृताप्रकृतधर्मिणोरुपादान एव श्लेषः । प्रकृतधर्मिमात्रस्योपादाने तु समासोक्तेरेव विषयः । तदित्थं प्रकृतमात्रविशेष्यकानेकार्थविशेषणं यत्र स एकः । एवमप्रकृतेत्यादिर्द्वितीयः । पृथगुपात्तप्रकृताप्रकृतोभयविशेष्यकनानार्थविशेषणं तृतीयः । एतदन्यतमत्वं च लक्षणं पर्यवसितम् ।

क्रमेणोदाहरणानि—

संभूत्यर्थं सकलजगतो विष्णुनाभिप्रपन्नं
यन्नालं स त्रिभुवनगुरुर्वेदनाथो विरिञ्चिः ।
ध्येयं धन्यालिभिरतितरां स्वप्रकाशस्वरूपं
पद्माख्यं तत्किमपि ललितं वस्तु वस्तुष्टयेऽस्तु ॥'

---

प्रतिभानं भङ्ग एकशब्दप्रतिभानमभङ्गः । तत्राद्य ● आद्यस्य भेदौ-तच्छब्दार्थः । तत्राद्योऽनेकशब्दप्रतिभानम् । अत्राद्यभेदयोरिति मर्मप्रकाशपाठे आद्यस्य भेदावित्यादिसमासः । आद्यौ भेदाविति समासं कल्पयित्वा नागेशं दूषयन्त्याः सरलायाः केवलं प्रतिष्ठाप्राप्त्यभिनिवेश एव छात्राणां मुग्धानां सविधे । तृतीयस्तु ● एकधर्मपुरस्कारेणेत्यनेनोक्तशब्दभेदाभावादर्थश्लेषो न सभङ्गाभङ्गान्यतरसंज्ञां भजते ।

प्रकृतमात्र ● प्रकृतमात्रमुदिश्यार्थद्वयं यत्र प्रसक्तमेवं क्रमेणैषामर्थं-उदाहरणेन व्यक्तीभविष्यति । तृतीयभेदे ● प्रकृताप्रकृतोभयाश्रिते । तथात्वे ● विशेष्यस्यापि श्लिष्टत्वे । यदि विशेषणविशेष्ययोरुभयोरपि श्लिष्टत्वमग्रे वर्णयिष्यमाणस्य अविरलविगलद्, भद्रात्मनोरित्यनयोरुदाहरणयोरुपमाध्वनेरुच्छेदः स्यात् ।

सम्भूत्यर्थम् ● प्रकृताया आशिषो वर्णने उभयोर्लक्ष्मीनाभिकमलयोः

अत्राशीःप्रकरणे तुष्टिजननसमर्थत्वेन लक्ष्मीभगवन्नाभिकमलयोरुभयोरपि प्रकृतत्वात् प्रकृतमात्राश्रितोऽयमेकया श्रुत्या पदद्वयप्रतिभानद्वारा भिन्नधर्मपुरस्कारेणानेकार्थप्रतिपादनात् सभङ्गः ।

विशेष्ययोरश्लिष्टत्वेऽप्ययं संभवति । यथाऽत्रैव 'पायादाद्यं कमलमथवा योगमायास्वरूपम्' इति तुरीयचरणनिर्माणे ।

अयमेवाभङ्गात्मको यथा—

'करकलितचक्रघटनो नित्यं पीताम्बरस्तमोऽरातिः ।
निजसेविजाड्यनाशनचतुरो हरिरस्तु भूतये भवताम् ॥'

---

पद्माख्यशब्देनोपादानम् । पद्मा आख्या पद्म आख्या यस्य तत्किमप्यलौकिकं सुन्दरं वस्तु युस्माकं तुष्टये अस्तु इति चतुर्थ पादार्थः । सकलजगतः समीचीनायै भूत्यै ऐश्वर्याय समुत्पत्त्यर्थञ्च । विष्णुना प्राप्तम्, विष्णोर्नाभिं प्राप्तम् । यस्मात् पद्माख्यात् सत्रिभुवनगुरुर्वेदाधिपतिर्ब्रह्मा अलं समर्थो न । तथा तथाभूतो विरञ्चिर्नालं नालदण्डः । यत्स्वप्रकाशस्वरूपं धन्यालिभिर्धनिकपङ्क्तिभिर्धन्यैर्भ्रमरैश्च अत्यन्तध्येयम् । तुष्टिजननसमर्थत्वेन ● तुष्टयेऽस्तु इत्यनेन तुष्टिजननयुक्तम् । एकया श्रुत्या ● संभूत्यर्थं विष्णुनाभिप्रपन्नं यन्नालं पद्माख्यमित्यादिः एका श्रुतिः । सं, भूतिः, विष्णुना अभिप्रपन्नं विष्णुनाभिं प्रपन्नमित्यादिशब्दद्वयप्रतिभानम् । भिन्नो धर्मः, विष्णुप्राप्तत्वं विष्णुनाभिप्राप्तत्वमित्यादि । आद्यं कमलं ब्रह्मरूपम् । योगमाया लक्ष्मीः । अयमेव ● प्रकृतमात्राश्रित एव ।

करकलित ● अत्र शब्दभेदो नास्ति किन्तु नानार्थकतावशाद्विष्णुसूर्यपरत्वम् । विष्णुसूर्ययोरुभयोः पूर्ववत् प्रकृताशीः करणमाश्रयः । हरिर्विष्णुः सूर्यश्च भवतां भूतये अस्तु । हस्तेन कलिता चक्रायुधस्य घटना येन किरणैः कलिता कालचक्रस्य घटना येन कालनियमस्य किरणानुसारित्वात् । पीताम्बरस्तथा तमसोराहोरमृतपानसमये छेदनात् शत्रुः । पीतमाकाशं येन आकाशगामी राहोः शत्रुः । अरातिः शत्रुः । निजसेविनामज्ञानस्य नाशने चतुरः । मर्मप्रकाशे सूर्यपक्षे जाड्यपदेनाज्ञानसमशीलमेत्र मूर्खत्वं गृहीतं प्रसिद्धा च प्रायः शक्तिर्मूर्खत्वे, तथाऽपि सूर्यान्मूर्खताविनाशः कामपि तान्त्रिकीं पौराणिकीं वा

विशेष्ययोरश्लिष्टत्वे यथा—'जाड्यहरणो विष्णुः सूर्यश्च वः पातु' इति तस्यैव शेषे कृते।

अर्थश्लेषो यथा—

'अर्जुनस्य गुरुर्मायामनुजः परमः पुमान्।
गुञ्जापुञ्जधरः पायादपायादिह कोऽपि वः॥'

एवमेते त्रयोऽपि प्रकृतविषया एव भेदाः।

'हरिकरसङ्गादधिकं रमणीयाप्यतुलरागसंवलिता।
सुन्दरि तवाननाग्रे कमलाभा विगलितप्रतिभा॥'

---

प्रसिद्धिमपेक्षते। अत एव सरलया जाड्यपदेन हिमातिशयवशशारीरिकनिस्पन्दता गृहीता। सा च लक्षणया समन्वेया, वर्तते च तादृशी प्रसिद्धिरन्यत्र कविकृत्येषु। शेषे● निजसेविजाड्यहरणो विष्णुः सूर्यश्च वः पातु इत्यार्योत्तरार्धनिर्माणे विशेष्यस्यापि न श्लेषः। अयं प्रकृताप्रकृतेत्यादि।

अर्जुनस्य गुरुः ● अर्जुनस्य गुरुर्मायया मनुज इति भासमानो वस्तुतः परपुरुषः, गुञ्जाहारधरः कोऽपि विलक्षणः कृष्णरूपमापन्न इह जगति युष्मान् नाशाद् रक्ष्यात्। गुरुशब्देन शिक्षको बृहस्पतिश्चेति मर्मप्रकाशकृतः। परमन्यानि विशेषणानि तथा न समनुयन्ति इति प्रत्येमि।

केचन शुक्राचार्यवञ्चनाय बृहस्पते रूपान्तरकरणमादाय मायामनुजत्वं ब्रह्माभिन्नतया महर्षितया वा परमपुंस्त्वं काम्योपासनायां रक्तध्यानमनुसृत्य गुञ्जापुञ्जधरत्वं समनुगमयन्ति। अन्येषामर्थश्लेषोदाहरणे

'स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च॥'

इत्यादौ न समेषां पदानामुभयत्रान्वये आग्रहः प्रतिभाति, परं स्तोकशब्दादेकधर्मपुरस्कारेणेति पण्डितराजोक्तरीत्या बोधो जायते। अत्र बृहस्पतेः शिक्षकस्य च बोधे एकधर्मपुरस्कारेणेति समन्वयं न भजते। कदाचिदत्रत्य एव 'अयं प्रकृताप्रकृतोभयाश्रितः' इति मर्मप्रकाशपाठः पूर्वपद्ये उपक्षिप्तो भवेत्। बृहस्पतित्वेन बृहस्पतौ अर्जुसम्बन्धो ग्रहत्वेन देवगुरुत्वेन वा पूज्यता।

हरिकरसङ्गाद● कमलाभा इत्यनेन कमलस्य कमलायाश्च कान्तिरुच्यते। हे सुन्दरि? तव मुखस्य सन्मुखं कमलाभा विगलितशोभा जायते।

अयमप्रकृतमात्रविषयः। प्रकृतस्याननस्य श्लेषाविषयत्वात्। कमलाभेति विशेष्यांशे, अधिकमिति विशेषणांशे सभङ्गः, अन्यत्राभङ्गः।

अप्रकृतयोर्विशेष्ययोरश्लिष्टत्वे यथात्रैव 'कमलायाः कमलस्य च शोभा गलिता तवाननस्याग्रे' इत्युत्तरार्धनिर्माणे। प्रकृताप्रकृतोभयविषयो यथा—

'अलं हिमानीपरिदीर्णगात्रः समापितः फाल्गुनसंगमेन।
अत्यन्तमाकाङ्क्षितकृष्णवर्त्मा भीष्मो महात्माजनि माघतुल्यः॥'

अत्र प्रकृताप्रकृतयोर्भीष्ममाघयोरश्लिष्टत्वाद् विशेषणानाञ्च श्लिष्टत्वाद्भवति तृतीयो भेदः। परं तूपमया संकीर्णः। यदि च 'माघो महात्माजनि हन्त भीष्मः' इत्यप्रकृतांशमपि श्लेषग्रस्तं कृत्वा रूपकं क्रियते, तथापि प्रकृतविशेष्यस्य माघस्याश्लिष्टत्वादखण्डित एव श्लेषः।

न चात्र समासोक्तिरिति भ्रमितव्यम्, अप्रकृतधर्मिणोऽपि शब्दवाच्यत्वात्। यत्र त्वप्रकृतव्यवहार एव शब्दशक्ति सहेतापि, न त्वप्रकृतधर्मी, तत्र समासोक्तेरिष्टेः।

---

लक्ष्मीकान्तिः विष्णुहस्तसंस्पर्शादतिशयेन रमणीयाऽपि महता प्रेम्णा भरिता। कमलकान्तिः सूर्यकिरणसम्बन्धात्के अधिजले रमणीयाऽपि अतुलेन रक्तिम्ना युक्ता। अधिकमत्र अव्ययीभावः। कस्य मलमिति श्लेषस्तावन्न प्राचलत्।

अलं **हिमानी**● माघमासः प्रकृतो भीष्मश्चाप्रकृतः। भीष्मो हि अत्यन्तं मानी अर्जुनबाणैश्छिन्नं गात्रं यस्य फाल्गुनस्य अर्जुनस्य रणसंगमेन समापितः अन्तं गतः। अत्यन्तं समीहितं कृष्णस्य वर्त्म मार्गो येन सः। माघमासश्च अत्यन्तहिमसंघातपातेन त्रोटितं गात्रं येन फाल्गुनमाससम्बन्धेन समाप्तिं नीतः। अत्र पक्षे कृष्णवर्त्मा अग्निः। **तूपमया**● तुल्यशब्दोपात्तया। **श्लेषग्रस्तं**● भयानकत्वस्यार्थान्तरत्वेन। **दखण्डित एव**● ध्वनिना शब्दशक्तिमूलकेनानाक्रान्त एव। **धर्मिणोऽपि**● भीष्मस्यापि। **सहेतापि**● यदि शब्दशक्ति सहेत, तदापि अप्रकृतव्यवहार

अत्र विचार्यते—अयं चालङ्कारः प्रायेणालङ्कारान्तरस्य विषयमभिनिविशते, तत्र किमस्य बाधकत्वं स्यादाहोस्वित्संकीर्णत्वमुताहो बाध्यत्वमिति।

अत्राहुरुद्भटाचार्याः—"येन नाप्राप्ते य आरभ्यते स तस्य बाधकः' इति न्यायेनालङ्कारान्तरविषय एवायमारभ्यमाणोऽलङ्कारान्तरं बाधते। न चास्य विविक्तः कश्चिदस्ति विषयो यत्र सावकाशो नान्यं बाधेत। तथाहि अप्रकृतमात्रयोः प्रकृतमात्रयोर्वा तावत्तुल्ययोगितैव जागर्ति। प्रकृताप्रकृतयोस्तु दीपकम्। तदनुमोदिता उपमादयश्च। न च—

'देव त्वमेव पातालमाशानां त्वं निबन्धनम्।
त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः॥'

---

एव। अप्रकृतव्यवहारस्यापि प्रायोऽव्यङ्ग्यत्वात्। विचार्यते● प्रायोऽखिलान्युदाहरणानि श्लेषस्य येन केनापि अलङ्कारान्तरेणाकीर्णानि। तत्रान्येषामलङ्काराणां श्लेषो बाधकः, श्लेषप्राप्तिस्थले श्लेष एवालङ्कारोऽन्येषां प्रतिभासमात्रम्। इति प्रथमः। द्वितीयस्तु पूर्वोक्तस्थलेऽन्यैरलङ्कारान्तरैः सह श्लेषस्य संकरः। तृतीयश्चान्यैरलङ्कारान्तरैः श्लेषस्य बाधः। अन्ये एवालङ्कुर्वन्ति काव्यानि श्लेषस्य प्रतिभामात्रं नालङ्कारत्वेनावस्थितिरिति पक्षत्रयविचारः। विविक्तविषयताया विचारयिष्यमाणत्वादाह प्रायेण●। अभिनिविशते व्याप्नोति। येना प्राप्ते● प्राप्तशब्दस्य भावक्तान्तस्य प्राप्तिरर्थः। नञ् तत्पुरुषः। येनेति कर्तरि तृतीया प्राप्तावन्वेति। नञ्द्वयेन दार्ढ्यं द्योत्यम्। तथा च यत्कर्तृकावश्यप्राप्तौ यो विधिरारभ्यते स तस्य बाधको भवति। यो हि यदप्राप्तियोग्येऽचरितार्थः स तस्य बाधको भवतीति फलितोऽर्थः। अस्य च श्लेषस्य उपमाद्यलङ्कारान्तरैरस्पष्टो विषयो नास्तीति उपमाद्यप्राप्तियोग्येऽचरितार्थः सन्नोपमाद्यलङ्काराणां बाधकः श्लेषः। तदनुमोदिता● ताभ्यां तुल्ययोगितादीपकाभ्यां फलिता। सादृश्यस्थल एव तयोरुज्जीवनात्। देवत्वमेव● हे राजन् त्वमेव अलं पाता। अस्यार्थस्य पातालशब्दाभेदाध्यवसायात् पातालरूपता। आशानां समीहानां सफलीकुर्वाणः कारणम्।

इत्यादिकाव्यप्रकाशोक्तौ विविक्तो विषय इति वाच्यम्, रूपकस्यैवात्र स्फुटत्वात्। श्लेषोपस्थापितपातालाद्यर्थस्याभेदारोपमन्तरेण लोकत्रयात्मकत्वस्य दुरुपपादत्वात्। कथं तर्हि 'नदीनां संपदं बिभ्रद् राजायं सागरो यथा' इत्यादावुपमायाः प्रत्ययः? कथं वा तत्रैव यथाशब्दस्थाने किमुशब्ददाने उत्प्रेक्षायाः? अपर इति कृते च रूपकस्येति चेत्, न, अत्र हि उपमादीनां प्रतिभानमात्रम् न तु वास्तवी स्थितिः। न हि श्वैत्येन शुक्तौ रजतत्वं प्रतीयमानमपि वस्तुतोऽस्ति। तस्मादुपमादिप्रतिभोत्पत्तिहेतुः श्लेष एव स्वविषये सर्वत्रालङ्कार इति।

एतच्चापरे न क्षमन्ते। तथा हि यत्तावदुच्यते येन नाप्राप्त इत्यादि। तत्र प्रागुदाहृते 'पद्माख्यं तत्किमपि ललितं' इत्यस्मत्पद्ये, 'सर्वदोमाधवः पातु यो गङ्गां समदीधरत्' इत्यादिपरकीयपद्ये च श्लेषातिरिक्तः कोऽलङ्कारः? तुल्ययोगिता तु

---

अनेन मृत्युलोकतादात्म्यम्। त्वं चामरव्यजनस्य मरुतां स्थानम्। अनेन अमराणां मरुद्गणानाञ्च भूम्याः स्वर्गस्य तादात्म्यम्। एतेन लोकत्रयात्मता जाता। भगवतो विष्णुरूपस्य तु लोकत्रयात्मता पुराणसिद्धैव। नदीनां● राजपक्षे अदीनाम्, सागरपक्षे नदीनाम् अनयोरर्थयोः शब्दैकमूलकाभेदाध्यवसायात् सादृश्योपपत्तिः। अपर इति● सागरोऽपर इति कृते। वास्तवी● सादृश्याद्वुत्तिष्ठति यद्यप्युपमा, तथाऽपि श्लेषेण बाधान्न स्थानं लभते। कार इति● उद्भट्टाचार्यमतनिष्कर्षः। अलङ्कारान्तराणामप्राप्तिविषयेऽपि श्लेषस्य चारितार्थ्यान्नोक्तन्यायस्य प्राप्तिः।

अप्राप्तियोग्यविषयं स्वकीयपरकीयपद्ययोर्दर्शयति प्रागुदाहृते● सर्वदो माधव● सर्वदाया उमाया धवः शंकरः, गङ्गां समदीधरत्। सर्वदो माधवोऽगं गोवर्धनं भुवञ्च अदीधरत्। धृधातोर्ण्यन्तस्य लुङि रूपम्।

सादृश्यप्रत्ययनियता कथमत्र शक्यते वक्तुम् ? नहि लक्ष्मी-कमलयोर्हरिहरयोर्वा प्रकृते सादृश्यं प्रतिपिपादयिषितम्, नापि चात्रैकश्रुत्यार्थद्वयोपादानं विनान्यत्किंचिच्चमत्कारजनकम्, येनालङ्कारान्तरमभ्युपगच्छेम। एकश्रुत्यार्थद्वयोपादानं तु श्लेष एव। एवञ्च सावकाशत्वाच्छ्लेषस्यालङ्कारान्तरापवादकत्वं न युक्तम्। अत एवोपमादीनां प्रतिभानमात्रमिति यदुक्तं तदपि न सङ्गतम्, गुणक्रियादेरिव शब्दमात्रस्यापि समानधर्मत्वेनोपमायां तावद् बाधकाभावात्। एवमलङ्कारान्तरस्यापि श्लेष-विषये पारमार्थिक्येव सत्ता, न प्रातिभासिकी। प्रत्युत श्लेषस्यैव प्रतिभानमात्रमिति वक्तुं युक्तम्। पूर्णोपमाया विषयस्य सर्व-स्यापि त्रिविधश्लेषेणाक्रान्तत्वान्निरवकाशतयाऽस्य सावकाशस्य स्वविषये बाधौचित्यात्। तथा 'समरार्चितोऽप्यमरार्चितः' इत्यादौ श्लेषस्य तैमिरिकचन्द्रद्वयवत्प्रतिभानमात्रमेव, न त्वल-ङ्कारत्वम्, तज्जीवातोर्द्वितीयार्थस्याप्रतिष्ठानात्। विरोधस्य त्वाभासरूपस्याप्यलङ्कारत्वम्, न तु श्लेषस्येति स्फुटमेव, तस्मा-

---

प्रतिपिपादयिषितम् ● प्रतिपादयितुमिष्टम्। सादृश्यप्रतिपादनेन कवेस्तात्पर्य-मित्यर्थः। तात्पर्येऽवगते कथञ्चिच्छब्दाद्यभेदं कल्पयेदपि। नापि सादृश्यं चमत्कारि, अपि तु श्लेष इत्याह नापि ●। नोपमायाम् ● श्लेषस्य बाधकत्वा-भावादित्यर्थः। श्लेषविषये पारमार्थिकी ● तथा च द्वयोः संकरः स्यात्। वक्तुं युक्तम् ● पूर्णोपमायाम्। सर्वत्र पूर्णोपमायां श्लेषस्य प्राप्तेः। समरार्चितो ● मया लक्ष्म्या सहितो राधनं येषान्ते तैरर्चित एवं न मा यस्मिन् एवंभूतेनरायाऽर्चितः मापदस्योपमा वार्थः। एवं विरोध अथवा मरणसहितैर्मरणरहितैश्चार्चित इति विरोधः। अविरुद्धार्थस्तु समरे सङ्ग्रामेऽर्चित एवममरैरर्चितः। श्लेषोत्थितयोर्विरुद्धयोरर्थयोरवस्थान एव श्लेष-स्यावस्थितिः। अर्थद्वयजीवनस्यावस्थानाभावाच्छ्लेषस्यापि नावस्थितिरिति-पिण्डितार्थः। भासरूपस्यापि ● अपिर्वास्तवताद्योतकः। विरोधावस्थानं

देवमादौ श्लेषप्रतिभयोत्पाद्यो विरोध एवालङ्कारः, न तु विरोधप्रतिभयोत्पाद्यः श्लेषः। किञ्च, प्रत्येकं तत्तद्रूपपुरस्कारेण कस्याप्यलङ्कारस्य नास्ति श्लेषविषये नाप्राप्तत्वम्, अलङ्कारान्तरत्वपुरस्कारेणेति चेत्, एवं तर्हि बाध्यसामान्यचिन्तया स्वविषये प्राप्तस्य सर्वस्यापि बाधापत्तौ श्लिष्टपरम्परितरूपकस्य श्लिष्टसमासोक्तेश्चोच्छेद एव स्यात्। तस्माच्छ्लेषस्य नापवादकत्वम्, संकीर्णत्वं तु स्यादिति।

अन्ये तु–"अलङ्कारा हि प्राधान्येन चमत्काराधायकाः स्वां स्वामाख्यां लभन्ते। त एव परोपकारकतया वर्तमानास्तां त्यजन्ति। यथा–रराज भूमौ वदनं मृगाक्ष्या नभोविभागे हरिणाङ्कबिम्बम्' इत्यत्र प्रकृताऽप्रकृतात्मनामेकधर्मसंबन्धो दीपकाख्यां भजते, त्यजति च 'राजते वदनं तन्व्या नभसीव निशा-

---

न विरोधस्यालङ्कारताप्रयोजकम्, अपितु विरोधाभासमात्रम्। येननाप्राप्ते इति न्याये पक्षद्वयं वैयाकरणगेहे बाध्यविशेषचिन्तापक्षो बाध्यसामान्यचिन्तापक्षश्च। स्वविषये सर्वत्रावश्यं प्राप्नुवन्तं कमपि प्रबाध्य चरितार्थः सन्नन्यान् न बाधत इति प्रथमस्यार्थः।

स्वविषये ये ये प्राप्नुवन्ति विनिगमकाभावात्तान् सर्वानपि बाधत इति द्वितीयस्य। यदि तूपमात्वादिरूपेणोपमादीनां श्लेषबाध्यता, तदा प्रथमः पक्षः। परं सर्वत्र श्लेषविषये उपमात्वादिना उपमादीनां प्राप्तिर्नास्ति किन्तु क्वचिद् रूपकत्वादिनाऽपि अतो न बाधः। नाप्राप्तत्वम् अवश्यप्राप्तिः। **अलङ्कारान्तरत्वपुरस्कारेण** ● श्लेषभिन्नालङ्कारत्वेन धर्मेणेति। **च्छेद एव** इष्टविनाशापत्तिः। **स्यादिति** ● एतावता संकरपक्षो व्याख्यातः। तृतीयबाध्यत्वपक्षोऽन्ये त्वित्यादिना प्रक्रमते। **प्राधान्येन** ● यदा प्राधान्येन चमत्काराधायकास्तदैवालङ्कारतां भजमानाः स्वपदेन व्यपदिश्यन्ते। चमत्कारिणोऽपि यदि कस्यचिदानुगुण्यमात्रं विदधति, न तु प्राधान्येन, तदा न तेऽलङ्कारव्यपदेशं वहन्ति। परोपकारतयेत्यनेनानुगुण्यमुक्तम्। **रेकधर्म** ● रराजपदार्थः। **त्यजति** ● दीपकाख्यां कर्म, उपमाया इवपदप्रतिपाद्यायाः

करः' इत्यत्र । अत एवोच्यते—'प्राधान्येन व्यपदेशा भवन्ति' इति । एवं चालङ्कारन्तरोपस्कारकतया स्थितः श्लेषः कथंकारं स्वगृहस्थ इव श्लेषालङ्कारव्यपदेशं वोढुमीष्टामिति बाध्यप्राय एव" इत्यप्याहुः ।

तदित्थं संक्षेपेण श्लेषस्य दिक्प्रदर्शिता ।

यत्र तु प्रकृताप्रकृतोभयविशेष्ययोरपि श्लिष्टपदोपात्तत्वम् स तु ध्वनेर्विषय इत्युक्तम् ।

स च यथा—

'अविरलविगलद्दानोदकधारासिक्तधरणितलः ।
धनदाग्रमहितमूर्तिर्जयतितरां सार्वभौमोऽयम् ॥'

अत्र राजनि प्रतुते उदग्दिग्गजोऽप्रस्तुतोऽपि व्यञ्जन-मर्यादया प्रतीयते । तत्राप्रस्तुताभिधानं मा प्रसाङ्क्षीदिति प्रस्तुताप्रस्तुतयोरुपमानोपमेयभावे तात्पर्यं कल्प्यते । इमं च शब्दशक्तिमूलानुरणनरूपं ध्वनिमाहुः ।

उदाहृतश्च ध्वनिकारैः—

'उन्नतः प्रोलसद्धारः कालागुरुमलीमसः ।
पयोधरभरस्तस्याः कं न चक्रेऽभिलाषिणम् ॥'

---

प्राधान्यात् । **एवोच्यते** ● शास्त्रान्तरेऽप्यभियुक्तैः । **स्वगृहस्थ इव** ● स्वीये परिमिते विषये तिष्ठन् तत्रोपस्थितमलङ्कारान्तरमुपस्करोति परं तत्परित्यज्यालङ्कारान्तरेणोपस्कार्यं प्रधानमुपस्कर्तुं न स्वगृहं जहाति न याति । अन्यस्योत्थापनेन कृतकृत्यश्लेषो न व्यपदेशभाक् । उत्थापितश्चोपस्करोति व्यपदेशञ्च भजते । **व्यपदेशम्** ● प्रधानवाक्यार्थोपस्करणाभावात् । **बाध्यप्रायः** ● समानविषये विरोधाद् बाध्यबाधकभावो वस्तुतः । अत्र तूपस्कार्य-विषयभेदाद् बाधमन्तरैव प्रकारान्तरेण समावेशोऽतो बाध्य इवेति भावः । **अविरलविगल** ● उपमायां व्याख्यातमिदम् । **कल्प्यते** ● तात्पर्यकल्पनान्तरं व्यञ्जनया तात्पर्यार्थबोधः । **शब्दशक्ति** ● उपमोत्थापकार्थद्वयोपस्थितौ शक्तेरानुकूल्यात् । **उन्नतः** ● तस्याः पयोधरभरः स्तनभारः कमभिलाषिणं न

मम्मटभट्टैश्च—

'भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसंग्रहस्य ।
यस्यानुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत् ॥'

कुवलयानन्दकारस्तु—"यदत्र प्रकृताप्रकृतश्लेषोदाहरणे शब्दशक्तिध्वनिमिच्छन्ति प्राञ्चः, तत्तु प्रकृताप्रकृताभिधानमूलस्योपमादेरलङ्कारस्य व्यङ्ग्यत्वाभिप्रायम्, न त्वप्रकृतार्थस्यैव व्यङ्ग्यत्वाभिप्रायम् । अप्रकृतार्थस्यापि शक्त्या प्रतिपाद्यस्या-

---

चक्रेऽपि तु सर्वमपि । पयोधरभरो मेघसमूहोऽपि । अतो मेघसमूहसदृशः स्तनभा इति शब्दशक्तिमूलया व्यञ्जनया ध्वन्यते । विशेषणान्युपमाने मेघे स्तने च समनुगतानि । उन्नत उपरि अकाशदेशे नतः उत्तुङ्गः कठिनतया, प्रोल्लसन्ती धारा यस्य प्रोल्लसन् हारो यस्य, कालागुरुवन्मलीनतमः कालागुरो रागेण चुचुकांशे वा श्यामः । भद्रात्मनो● राज्ञः करो दानीयसंकल्पजलसेकेन सुभगः अभूत् । हस्तिशुण्डो दानवारिणो मदजलस्य सेकेन सुभगोऽभूत् । अत्रापि पूर्वरीत्या राजहस्तिनोरुपमानोपमेयभावो व्यज्यते । राजपक्षे भद्रः कल्याणकर आत्मान्तःकरणं यस्य तस्य दुःखेनाधिरोढुं धातूनामनेकार्थत्वादभिभवितुं शक्या अनभिभवनीयेति यावत् तनुर्यस्य तस्य, महती वंशस्योन्नतिर्यस्य येन वा, अथवा विशाले वंशे प्रतिष्ठा यस्य तस्य, कृतः शिलीमुखानां तदुपलक्षितबाणविधानां संग्रहोऽभ्यासो येन वा विविधबाणानां निधिः कृतो येन तस्य, अनुप्लुताऽबाधिता गतिर्ज्ञानं यस्य अथवा अनुद्धतानां शरणस्य, परेषां शत्रूणां निवारकस्य, यस्य राज्ञ इत्यर्थः । गजपक्षे भद्रजातीयस्य, अत्युच्चैस्तरत्वाद् दुःखेनाधिरोढुं शक्या तनुर्यस्य तस्य विशालवंशवदुच्चैस्तरत्वं यस्याथवा विशाला अस्थिविशेषस्य पृष्ठवंशस्योन्नतिर्यस्य तस्य, मदगन्धवशात् कृतो भ्रमराणां संग्रहो येन तस्य, अनुद्धता गतिर्गमनं यस्य धीरगमनस्य, परवारणस्य श्रेष्ठगजस्य । भिप्रायम् ● अप्रकृतार्थस्य शक्त्यैव प्रतिपादनम् । उपमाया एव व्यञ्जनया प्रतिपादनम् । ननु प्रकृतार्थः शीघ्रमुपतिष्ठते

भिधेयत्वेन व्यक्त्यनपेक्षत्वात्। यद्यपि प्रकृतार्थे प्रकरणवशाज्झटिति बुद्धिस्थिते सत्येव पश्चान्नृपतितद्ग्राह्यधनादिवाचिनां राजकरादिपदानामन्योन्यसंनिधानबलात्तद्विषयशक्त्यन्तरोन्मेषपूर्वकमप्रकृतार्थः स्फुरेत्, नैतावता तस्य व्यङ्ग्यत्वम्। शक्त्या प्रतिपाद्यमाने सर्वथैव व्यक्त्यनपेक्षणात्। पर्यवसिते प्रकृतार्थाभिधाने स्फुरति चेत्कामं गूढश्लेषोऽस्तु। अस्ति चान्यत्रापि गूढः श्लेषः।

यथा—

'अयमतिजरठाः प्रकामगुर्वीरलघुविलम्बिपयोधरोपरुद्धाः।
सततमसुमतामगम्यरूपाः परिणतदिक्करिकास्तटीर्बिभर्ति॥'

---

तदनन्तरं पदान्तरादिसमवधानवशाद्विलम्बेनाप्रकृतः। अनयोः समानशक्यत्वे कथं क्रमश उपस्थानम्? शक्तेः शक्त्यन्तरानपेक्षणात्। शब्दशक्तिमूलकव्यञ्जनायास्तु शक्तेरपेक्षणात्सम्यक् क्रमश इति सशङ्कासमाधानमाह **यद्यपि**● **नृपतितद्ग्राह्य**● नृपतिनृपतिग्राह्यकरधनादीनि यथासङ्ख्येनान्वयः।

असावुदयमारूढः कान्तिमान् रक्तमण्डलः।
राजा हरति सर्वस्वं मृदुभिर्नूतनैः करैः॥

इत्यनुसृत्यायं पाठः।

वारणकरादिसम्बन्ध्यर्थकपदानां समभिव्याहारवशात् शुण्डगजादिविषयकशक्त्यन्तरस्योन्मेषः। उत्तरमाह **नैतावता**● क्रमपूर्वापरीभावमात्रेण। पश्चाद् भावित्वमात्रेणाप्रकृतार्थस्य गूढत्वमत्रता **अयमति**● माघे रैवतकवर्णनमिदम्। अयं रैवतकपर्वतस्तटीर्बिभर्ति। अतिजरठाः विषमभूमीः प्राचीनत्वात् कठिना वा, प्रकामं गुर्वीरत्यन्तमहतीः, अलघुभिर्महद्भिर्विलम्बिभिर्मेघैरुपरुद्धाः, सततं निरन्तरं सावधानतां विनाऽपि प्राणिनां बलशालिनामप्यगम्यस्वरूपाः, परिणतसंज्ञका दिक्करिणो दिग्गजा यासु ता बहुव्रीहिसमासान्तोऽयं कप्। तिर्यग्दन्तप्रहारी यो गजः परिणतस्तु स इति हलायुधः। तटीव्यवहारे आरोप्यमाणव्यवहारधर्मिवृद्धवेश्यापक्षे तु प्रवयसः स्थूलाकाराः, महद्भ्यां शिथिलाभ्यां स्तनाभ्यामावृताः, सततं साहसमन्तरा प्राणिनां गमने मरणभयाद् न गम्यं रूपं यासां ताः, परिणते परिपक्वे दिक्-

अत्र हि समासोक्त्युदाहरणे वृद्धवेश्यावृत्तान्तः प्रतीयते । तत्राभङ्गश्लेष इति सर्वेषामभिमतम् । एवञ्चाप्रकृतार्थो न व्यङ्ग्यः इत्याह ।

तत्र विचारयामः—यत्तावदुच्यते उपमादेरलङ्कारस्यैव व्यङ्ग्यत्वं प्राचीनाभिप्रेतम्, न त्वप्रकृतार्थस्येति। एवं सति—

'अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम् ॥'

इत्यादिस्तेषां ग्रन्थः कथमायुष्मता समर्थितः ? । उपमादेर्व्यङ्ग्यत्वस्य वाचकतानियन्त्रणानपेक्षत्वात् । नह्यनेकार्थस्यापि शब्दस्योपमादिवाचकत्वं प्रसक्तं येन तन्नियन्त्रणाय संयोगाद्यनुसरणमर्थवत् स्यात्, द्वितीयार्थवाचकतायामनियन्त्रितायामप्युपमादेर्व्यङ्ग्यत्वस्य निष्प्रत्यूहत्वात् । तस्मात् तद्ग्रन्थानाकलननिबन्धनं तदभिप्रायवर्णनमिति स्फुटमेव ।

यदप्युच्यते अप्रकृतार्थस्य शक्त्या प्रतिपाद्यस्येत्यादि । तत्र कथमप्रकृतार्थस्य शक्त्या प्रतिपादनम् ? । तद्विषये शक्तेर्नियन्त्रणं नाम प्रथमं बोधजननमात्रम् न तु चरममपि । एवञ्च

---

करिके यासां ताः, दिक्पदेन वर्तुलाकारं दन्तक्षतं करिकापदेन नखक्षतं ग्राह्यम् । दिग्दष्टं वर्तुलाकारं करिका नखरेखिकेति यादवात् । **तत्राभङ्गश्लेषः** सच द्वितीयार्थस्यातिगूढत्वाद्गूढश्लेषः । **अनेकार्थस्य** काव्यप्रकाशस्थमिदम् । नानाशक्तिमतां पदानां संयोगादिभिस्तात्पर्यनिर्णायकैरेकस्मिन्नर्थे शक्तौ नियन्त्रितायामन्यार्थोऽवाच्यो जायते तद्बुद्धिकृद् व्यञ्जनाव्यापारः । एकस्मिन्नर्थे संयोगाद्यन्यतमज्ञानं शक्तिप्रयोज्यार्थान्तरबोधप्रतिबन्धकम् तथा च कथं शक्त्या द्वितीयार्थबोधः । शक्तेर्नियन्त्रणार्थमेवैषामुपयोगः, न तु व्यञ्जकतायां इत्युक्तमर्थवत्स्यादित्यन्तेन ग्रन्थेन । **बोधाजननमात्रम्** प्रायः पाठो बोधजननमिति प्राप्यते, परं सन्दर्भावलोकनेन नञ्युक्त एव पाठः प्रतिभातीति तथा कल्पितोऽस्मया नरहितपाठपक्षे

प्रकृतशक्त्या प्रकृतार्थबोधे जाते सत्यकृतार्थया द्वितीयशक्त्या प्रकृतेतरार्थबोधे न किञ्चिद् बाधकमिति चेत्। न। प्रथमं ह्यप्रकृतार्थबोधस्याजननमेव कस्य हेतोः? प्रकरणादिज्ञानेन प्रतिबन्धादिति चेत्, प्रकृतार्थबोधोत्तरं सा प्रतिबन्धकता केनापहृता प्रकरणादिज्ञानस्य? न च ज्ञानस्याशुविनाशित्वात्तदानीं प्रकरणज्ञानमेव नष्टमिति वाच्यम्। ज्ञानान्तरस्योत्पत्तौ बाधकाभावात्। सैव ज्ञानव्यक्तिः प्रतिबन्धिकेति तु तत्तद्व्यक्तिसहस्रगतप्रतिबन्धकत्वसहस्रकल्पनागौरवग्रस्तमेव । तदपेक्षयान्यत्र क्लृप्तव्यञ्जनाख्यव्यापारस्यैव कल्पयितुं युक्त-

---

तु प्रकृतार्थस्य प्रथमं बोधजननं शक्तिनियन्त्रणमिति योजना बोध्या। त्यकृतार्थतया● प्रतिबन्धेन बोधमनुत्पादितवत्या । विनाशित्वात्● तृतीयक्षणध्वंसप्रतियोगितया नैयायिकसम्मतया। तत्तद्व्यक्तित्वेन प्रतिबध्यप्रतिबन्धकभावकल्पने चानन्त्यदोषं गौरवञ्च ददाति तत्तद्व्यक्ति● क्लृप्तहेतुकं लाघवमाह तदपेक्षया● । गौरवदोषादेव मर्मप्रकाशोक्तं प्राथमिकबोधत्वं प्रतिबध्यतावच्छेदकमिति प्रागभिप्रायत्वेन दीक्षिताभिप्रेतमिति परास्तम्। प्राथमिकत्वस्याननुगतत्वेनानन्तप्रतिबध्यतायां तावतो नियन्त्रणाया अप्यापत्तेः। किञ्च प्रकृतार्थबोधोऽपि प्राथमिकः प्रतिबध्येत। न चाप्रकृतार्थप्राथमिकबोधत्वं प्रतिबद्ध्यतावच्छेदकमिति वाच्यम्, निपुणं न समीक्षितम्।

प्रकृताप्रकृतत्वनिर्णयो हि प्रकरणमात्रेण संयोगविप्रयोगादयो नाप्रकृतार्थशक्तिमेव प्रतिबध्नन्ति क्वचित्प्रकृतार्थामपि द्वितीयाम्। तादृशस्थले द्वितीयार्थतात्पर्यसत्त्वे शरणीकर्तव्यां व्यक्तिमत्र विहाय किं फलं श्रमस्य। यदपि तस्य एव वक्तृबोद्धव्यादिवैशिष्ट्यस्य फलबलेन नियन्त्रितशक्त्युल्लासेऽपि हेतुत्वकल्पनान्न दोषः। एतावान्विशेषः, यत्र वक्तृवैशिष्ट्यज्ञानं विलम्बेन प्रकरणज्ञानञ्च शीघ्रं तत्र वक्तृवैशिष्ट्यादीनां नियन्त्रितशक्त्युल्लासकत्वम्। यत्र तु युगपदेवोभयं तत्र नियन्त्रितशक्तिप्रतिबन्धकतोत्तेजकतैव तेषाम्। व्यञ्जनावादिनां तेषां व्यङ्ग्यप्रतिभोत्पत्तिहेतुत्वमवश्यमङ्गीकार्यम्। तद्दूरं व्यञ्जनामनङ्गीकृत्य तेषां शक्त्युल्लासहेतुत्वकल्पनमेवेति कथनम् तदपि उन्मार्गगामितया

त्वात्। 'जैमिनीयमलं धत्ते रसनायां महामतिः' इत्यादौ बाधितार्थबोधस्य शक्त्या दुरुपपादत्वाच्च। यदि तु यथाकथञ्चिदुपपत्तिः स्यादेवमपि तस्य देवदत्तादौ तत्पुत्रवाक्याद-प्रादुर्भावस्तच्छ्यालकाद्युपहासवाक्यात् प्रादुर्भावश्च न स्यात्। वक्तृबोद्धव्यादिवैशिष्ट्यस्य व्यङ्ग्यप्रतिभामात्रहेतुत्वादिति प्राचामाशयः। तत्र किमुच्यते अप्रकृतार्थस्य शक्त्या प्रतिपादनमिति।

यच्चाप्युच्यते "—'भयमतिजरठाः—' इत्यादिसमासोक्ताविव गूढश्लेषोऽस्तु" इति तदपि गर्भस्रावेण गलितम्। श्लिष्ट-

---

कूलदूषणमेव। कथमन्यथा दीक्षितस्यापि व्यञ्जनानङ्गीकारं समर्थयेत्? प्रकरणादिज्ञानमात्रस्य प्रतिबन्धकतामनङ्गीकृत्य वक्तृवैशिष्ट्यादिज्ञानविरह-विशिष्टप्रकरणादिज्ञानस्य प्रतिबन्धकतां ब्रुवन् शक्तिप्रयोज्यबोधेऽपि अननुगत-वक्तृवैशिष्ट्यादिज्ञानस्योत्तेजकतां तर्कयन् नूनं गौरवं रौरवं न पश्यति। व्यञ्जनाजन्यबोधस्तु धर्मिग्राहकमानादेवाननुगतहेतुक इति केषां व्यक्ति-वादिनामपरोक्षम्। **जैमिनीयम्** ● महामती रसनायां मीमांसाशास्त्रमलं धत्ते इत्यबाधितार्थः। बाधितार्थस्तु जैमिनेर्मलमित्यादि। **दुरुपपादत्वाच्च** ● शक्यार्थबोधं प्रति योग्यताज्ञानस्य कारणता बाधज्ञानस्य प्रतिबन्धकता वा सर्वसम्मता। स्वयञ्च नागोजिभट्टमहोदयैर्मञ्जूषायामप्रामाण्यग्राहकत्वं तत्सममेवोक्तम्। **यथाकथञ्चित्** ● शाब्दमात्रे बाधनिश्चयस्याप्रतिबन्ध-कत्वादिना। **तच्छ्यालकाद्यु** ● क्वचिद् दन्त्यपाठोऽप्युपलभ्यते सोऽपि साधुः परन्तस्य नाधिका प्रसिद्धिः।

ननु तदनुरोधेन मर्मप्रकाशरीत्या वक्तृबोधव्यवैशिष्ट्यादिज्ञानस्य तदधीन-तात्पर्यस्य वा ग्रहाग्रहाभ्यां व्यवस्थेत्याशङ्क्य समाधत्ते **वक्तृबोद्धव्यादि** ●। **प्राचामाशयः** ● अनेन प्राचामाशयवर्णनप्रस्तावे स्वकपोलकल्पनाडम्बरो वृथैव। किञ्च तात्पर्यसत्त्वेऽपि वह्निना सिञ्चतीत्यतः प्रमाणिकबोधस्या-प्रमाणिकत्वम्। **गर्भस्रावेण** ● नोक्तिमात्रमर्हति इत्यर्थः। तत्र युक्तिमाह

विशेषणायां समासोक्तावपि व्यक्त्यैवाप्रकृतार्थप्रतीतिस्वीकारात्। अत एव ध्वनिकृता 'गुणीभूतव्यङ्ग्यभेदः समासोक्तिः' इत्युक्तम्। 'समासोक्त्या श्लेषो बाध्यते' इत्युद्भटप्रभृतिभिश्च। बाधो हि श्लेषस्य तत्राप्रवृत्तिमात्रम। श्लिष्टशब्दप्रयोगस्तु तत्रोभयार्थता-मात्रेणोपपादनीय इति न किञ्चिदेतत्।

वयं तु ब्रूमः—अनेकार्थस्थले ह्यप्रकृताभिधाने शक्तेरुक्ति-संभवोऽप्यस्ति। योगरूढिस्थले तु सापि दूरापास्ता। यथा—

'चाञ्चल्ययोगि नयनं तव जलजानां श्रियं हरतु।
विपिनेऽतिचञ्चलानामपि च मृगाणां कथं न तां हरति॥'

अत्र नैवाश्चर्यकारी चाञ्चल्यगुणरहितानां कमलानां चाञ्चल्यगुणाधिकेन तव लोचनेन शोभायास्तिरस्कारः, आश्चर्य-कारी तु हरिणानां तद्गुणयुक्तानां तिरस्कार इति वाच्यार्थे पर्यवसन्नेऽपि रूढिनिर्मुक्तकेवलयोगमर्यादया—मूर्खपुत्राणां धन-

---

व्यक्त्यैव● । ननु बाध्यते इत्यनेन तत्र श्लेषानङ्गीकारात्कथं तद्वचसः प्रमाणत्वेनोपन्यास इत्यत आह बाधो हि● अलङ्कारत्वेन प्रवृत्तिर्न भवति प्रयोगे श्लिष्टता नापह्नूयते इति भावः। दूरापास्ता● रूढिर्योगापहारिणीति न्यायात्। अयञ्च न्यायो रथकाराधिकरणेन परिभाषेन्दुशेखरे प्रमापितः। योगार्थजन्यबोधे शक्तिप्रयोज्ये रूढिशक्तिज्ञानस्य प्रतिबन्धकत्वमिति तस्यार्थः। वक्तृबोद्धव्यवैशिष्ट्यादिग्रहविरहविशिष्टरूढिशक्तिज्ञाने प्रतिबन्धकतामङ्गीकृत्य यद्गौरवं सहते मर्मप्रकाशस्तद् दुराग्रहमात्रं व्यञ्जनायाः प्रसिद्धायाः सत्त्वात्।

अयन्तु मर्मप्रकाशः प्रायो ग्रन्थानुसारी। वस्तुतो द्वितीयार्थस्य व्यङ्ग्य-त्वेऽपि नतमादाय ध्वनित्वमुचितम्। उपमानादिविषया तस्यापि प्रकृतोपस्का-रकत्वेन गुणत्वात्। अन्यथा समासोक्तावपि गुणीभूतव्यङ्ग्यत्वोक्तिरसंगता स्यादित्यलङ्कारव्यङ्ग्यत्वमादायैव ध्वनित्वमुक्तमिति बोध्यम्। **चाञ्चल्य-योगि●** इतो व्यासचरणैरिति यावदित्थमेव ग्रन्थो ध्वनिप्रकरणे प्रथमानने समागतोऽस्ति। द्वयोरेक एवार्थः। **तद्गुण●** चाञ्चल्यगुण। **मूर्ख-पुत्राणाम्●** डलयोरभेदेन जलजातानामित्यस्य, नयतीति कर्तृप्रत्ययान्त-

वाक्ये किमैश्वर्यविशिष्टः कश्चिज्जीवः प्रतिपाद्य ईश्वरो वेति संशये प्राप्ते—'शब्दादेव प्रमितः' इति सूत्रितमुत्तरमीमांसाकारैर्व्यासचरणैः। तस्मात्प्रागुक्तपद्येऽप्रकृतचौरव्यवहारो न शक्तिवेद्यः, अपि तु व्यक्तिवेद्य एव। मुख्यार्थबाधाद्यभावाल्लक्ष्योऽपि न शक्यते वक्तुम्। तात्पर्यार्थबाधस्तु तात्पर्यार्थबोधोत्तरबोध्यः। स एव तु कथं स्यादिति व्यञ्जनैव शरणीकरणीया। न हि चौरव्यवहारोऽत्र वक्तुर्विवक्षित इति ज्ञाने श्रोतुः कश्चिदुपायोऽस्ति ऋते सहृदयतोन्मिषितादस्माद् व्यापारात्।

इदं पुनरिहावधेयम्—'रागावृतो वल्गुकराभिमृष्टं श्यामामुखं चुम्बति चारु चन्द्रः' इत्यादौ तावत्समासोक्तिरिति

---

पूर्वपक्षो जीवो भवितुमर्हति तस्यैव परिमाणसम्भवात्। अनन्तस्य परमेश्वरस्याङ्गुष्ठपरिमाणत्वासम्भवात्। जीवोऽपि दुःशकतपःप्रयोज्यप्रचुरपुण्यप्रचयादैश्वर्यमनुभवितुं शक्नोति इति। सिद्धान्तपक्ष ईशानः परमात्मैव। ईशानशब्दादेव रूढात्परमात्मा प्रमीयते। तथा च रूढिशक्तिसहकारेण ईशानस्य परमात्मत्वं श्रुतिप्रमाणकम्। परिमाणलिङ्गाज्जीवत्वम्। श्रुतिलिङ्गवाक्यप्रकरणादिन्यायेन लिङ्गस्य श्रुत्या बाधात्परमात्मैवेशान शब्दार्थः। परिमाणोपदेशस्तु उपासकजीवतादात्म्येनोपासनाप्रतिपत्त्यर्थम् उपाधिकल्पितमादाय परमेश्वरस्यापि न विरुध्यते इति। तथा च योगार्थस्यैव वैशिष्ट्यस्य कथञ्चिज्जीवेऽपि सम्भवाद् योगार्थमात्रमभिधया प्रतिपादयतस्तत्वाधिकरणविरोधः स्पष्ट एव। ननु तात्पर्यार्थस्य चौरव्यवहारस्याप्रतीत्या बाधाल्लक्षणा कथन्नेत्याशङ्क्य समाधत्ते तात्पर्यार्थबाधस्तु● अत्रैवमेव पाठं मन्वता सरलाकृता समानार्थके पूर्वग्रन्थे बाधपदस्थाने बोधमिति संशोधयता ग्रन्थार्थविज्ञता स्फुटीकृता। स एव● समासकुक्षिनिक्षिप्तोऽपि तात्पर्यार्थबोधः परामर्ष्टव्यः पटोलपत्रं पित्तघ्नं नाडी तस्य कफापहेति चरकग्रन्थवत्। इति ज्ञाने● तात्पर्यज्ञाने व्यापारात्● व्यञ्जनाख्यात्। रिहावधेयम्● श्लेषस्थले द्वयोः प्रकृताप्रकृतयोः प्रतिपादनमसम्बद्धं नापतेत्तदर्थं य उपमानोपमेयभावः कल्पितः सोपमा ध्वनिरिति न सम्यक्, किन्तु गुणीभूतव्यङ्ग्यं पराङ्गीभूतव्यङ्ग्यं वेतीदमवधेयम्। रागावृतो● रक्तः

वाक्ये किमैश्वर्यविशिष्टः कश्चिज्जीवः प्रतिपाद्य ईश्वरो वेति संशये प्राप्ते—'शब्दादेव प्रमितः' इति सूत्रितमुत्तरमीमांसाकारैर्व्यासचरणैः। तस्मात्प्रागुक्तपद्येऽप्रकृतचोरव्यवहारो न शक्तिवेद्यः, अपि तु व्यक्तिवेद्य एव। मुख्यार्थबाधाद्यभावाल्लक्ष्योऽपि न शक्यते वक्तुम्। तात्पर्यार्थबाधस्तु तात्पर्यार्थबोधोत्तरबोध्यः। स एव तु कथं स्यादिति व्यञ्जनैव शरणीकरणीया। न हि चोरव्यवहारोऽत्र वक्तुर्विवक्षित इति ज्ञाने श्रोतुः कश्चिदुपायोऽस्ति ऋते सहृदयतोन्मिषितादस्माद् व्यापारात्।

इदं पुनरिहावधेयम्—'रागावृतो वल्गुकराभिमृष्टं श्यामामुखं चुम्बति चारु चन्द्रः' इत्यादौ तावत्समासोक्तिरिति

---

पूर्वपक्षो जीवो भवितुमर्हति तस्यैव परिमाणसम्भवात्। अनन्तस्य परमेश्वरस्याङ्गुष्ठपरिमाणत्वासम्भवात्। जीवोऽपि दुःशकतपःप्रयोज्यप्रचुरपुण्यप्रचयादैश्वर्यमनुभवितुं शक्नोति इति। सिद्धान्तपक्ष ईशानः परमात्मैव। ईशानशब्दादेव रूढात्परमात्मा प्रमीयते। तथा च रूढिशक्तिसहकारेण ईशानस्य परमात्मत्वं श्रुतिप्रमाणकम्। परिमाणलिङ्गाज्जीवत्वम्। श्रुतिलिङ्गवाक्यप्रकरणादिन्यायेन लिङ्गस्य श्रुत्या बाधात्परमात्मैवेशान शब्दार्थः। परिमाणोपदेशस्तु उपासकजीवतादात्म्येनोपासनाप्रतिपत्त्यर्थम् उपाधिकल्पितमादाय परमेश्वरस्यापि न विरुध्यते इति। तथा च योगार्थस्यैव वैशिष्ट्यस्य कथञ्चिज्जीवेऽपि सम्भवाद् योगार्थमात्रमभिधया प्रतिपादयतस्तत्वाधिकरणविरोधः स्पष्ट एव। ननु तात्पर्यार्थस्य चौरव्यवहारस्याप्रतीत्या बाधाल्लक्षणा कथन्नेत्याशङ्क्य समाधत्ते **तात्पर्यार्थबाधस्तु** ● अत्रैवमेव पाठं मन्वता सरलाकृता समानार्थके पूर्वग्रन्थे बाधपदस्थाने बोधमिति संशोधयता ग्रन्थार्थविज्ञता स्फुटीकृता। **स एव** ● समासकुक्षिनिक्षिप्तोऽपि तात्पर्यार्थबोधः परामर्ष्टव्यः पटोलपत्रं पित्तघ्नं नाडी तस्य कफापहेति चरकग्रन्थवत्। **इति ज्ञाने** ● तात्पर्यज्ञाने **व्यापारात्** ● व्यञ्जनाख्यात्। **रिहावधेयम्** ● श्लेषस्थले द्वयोः प्रकृताप्रकृतयोः प्रतिपादनमसम्बद्धं नापतेत्तदर्थं य उपमानोपमेयभावः कल्पितः सोपमा ध्वनिरिति न सम्यक्, किन्तु गुणीभूतव्यङ्ग्यं पराङ्गीभूतव्यङ्ग्यं वेतीदमवधेयम्। **रागावृतो** ● रक्तः

निर्विवादम्। चन्द्रपदस्थाने राजेति कृते तु शब्दशक्तिमूलो ध्वनिरिति च। तदत्रोभयत्रापि श्लिष्टविशेषणमाहात्म्याद-प्रकृतव्यवहारस्य प्रतीयमानस्य तुल्यत्वात्कथमेकत्र गुणीभावः, अन्यत्र प्राधान्यं च स्यात्। प्रकृतस्य प्राधान्यादप्रकृतस्य तु तदुपस्कारकत्वेनोभयत्रापि गुणीभावौचित्यात्। नहि विशेष्यस्य श्लिष्टतामात्रेण व्यङ्ग्यस्य प्राधान्यम्, अश्लिष्टत्वे चाप्राधान्यं शक्यं संपादयितुम्। नायकत्वप्रतीतिरपि क्वचिदर्थशक्तिमूलेन व्यञ्जनेन, क्वचिच्छब्दशक्तिमूलेन तुल्यैव। यैरपि समासोक्तौ प्रकृतधर्मिणि नायकत्वादेः प्रत्ययो नाभ्युपेयते, अपि तु नायिकादिव्यवहारस्यैव, ध्वनौ चाभ्युपेयते, तेषामपि व्यङ्ग्य-स्यैकत्र गुणत्वमन्यत्र प्राधान्यं च कस्य हेतोः स्यात्? प्रकृता-प्रकृतयोरौपम्यं गम्यमुच्यतामभेदो वा, सर्वथैव तस्य प्रकृतो-पस्कारकत्वाद् गुणीभाव एवोचितो न प्राधान्यम्। अन्यथा समासोक्तावपि व्यङ्ग्यस्य प्राधान्यापत्तेः। तस्माच्छ्लिष्टाश्लिष्ट-विशेष्या समासोक्तिरेवेयम्। पराङ्गरूपगुणीभूतव्यङ्ग्यभेद इत्यपि शक्यते वक्तुं यदि प्राञ्चो न कुप्यन्ति।

---

सुन्दरकिरणधवलितं रात्रिमुखम्। व्यङ्ग्यव्यवहारिनायकपक्षे अनुरक्तः सुन्दर-हस्तस्पृष्टं नायिकामुखमित्यर्थः। ध्वनिरिति अप्रकृतधर्मिण उपादानात्समासोक्ते-रभावादविरलविगलदित्यादिवदुपमा ध्वनिः। प्रकृतस्य प्राधान्यात् ● यथाऽ-प्रकृतस्योपमानतया प्रकृते उपयोगस्तथा प्रकृतस्योपमेयतयेत्यपि बोध्यम्। तुल्यैव ● उभयत्रापि व्यञ्जनासञ्चारात्। यैरपि कुवलयानन्दकारैः सर्वस्व-कारैर्वा। ननु पूर्वोक्तवस्तुत इत्यादिना मर्मप्रकाशदिशाऽलङ्कारमादाय ध्वनित्व-मक्षतमत आह **औपम्यं गम्यम्** ● । **प्रकृतोपस्कारकत्वात्** ● अत एव तत्र तत्र 'अप्रस्तुताभिधानं मा प्रसाङ्क्षीदिति तयोरुपमानोपमेयभावः कल्प्यते' इति कतिपयालङ्कारिकग्रन्थेष्वभिहितम्। **अन्यथा** ● व्यङ्ग्यतामात्रेण प्राधा-न्याङ्गीकारे। **पराङ्गरूप** ● यथा "अयं स रशनस्पर्शी पीनस्तनविमर्दनः।

सोऽयं श्लेषः सभङ्गोऽभङ्गश्चार्थालङ्कार एवेत्यौद्भटाः। उभावप्येतौ शब्दालङ्कारौ, शब्दस्य परिवृत्त्यसहत्वादन्वयव्यतिरेकाभ्यां तदाश्रितत्वावधारणात्। तृतीयस्त्वर्थालङ्कारः, अर्थमात्राश्रितत्वात्—इति मम्मटभट्टाः। अन्वयव्यतिरेकाभ्यां हि हेतुत्वावगमो घटं प्रति दण्डादेरिवास्तु, न त्वाश्रयत्वावगमः। स तु पुनस्तद्वृत्तित्वज्ञानाधीनः। इह हि सभङ्गश्लेषस्य शब्दद्वयवृत्तित्वं जतुकाष्ठन्यायेन, अभङ्गस्य चार्थद्वयवृत्तित्वमेकवृन्तगतफलद्वयवच्च स्फुटमेवेत्येकस्य शब्दालङ्कारत्वमपरस्यार्थालङ्कारत्वम्। यद्यपि द्वितीयस्यापि 'प्रतिप्रवृत्तिनिमित्तं शब्दभेदः' इति नये शब्दद्वयवृत्तित्वाच्छब्दालङ्कारत्वमुचितम्, तथापि शक्ततावच्छेदकानुपूर्व्यभेदादभेदाध्यवसानाच्छब्दद्वयवृत्तित्वज्ञानं

---

नाभ्युरूजघनस्पर्शी नीवीविस्रंसनः करः।।" इत्यादौ व्यज्ञयमानोऽपि शृङ्गारः परस्य करुणस्याङ्गं तथाऽत्र व्यज्यमानमप्यप्रस्तुतमुपमादि वा परस्य प्रस्तुताभिधानस्याङ्गम्। यद्यप्यस्याः पङ्क्तेः, व्यङ्ग्यमप्रस्तुतं तद्व्यवहारादि वा परस्य व्यङ्ग्यस्योपमादेरङ्गमिति व्याख्यानं कर्तुं प्रभूयते, तथापि एतादृशव्याख्याने प्राचां विरोधाभावाद् यदि प्राञ्चो न कुप्यन्तीति शेषो न संगच्छत इति तथा न व्याख्यातम्। त्यौद्भट्टाः● अर्थानुसन्धानमन्तरा चमत्कृत्यनुदयात्। इतः परं काव्यप्रकाशमतम्। परिवृत्तिसहत्वं पर्यायान्तरोपादानेऽपि तादृशार्थप्रतीतिः। शब्दान्तरे तादृशार्थाप्रतीतिः परिवृत्त्यसहत्वम्। एतन्मूलकान्वयव्यतिरेकौ। यादृशशब्दसत्त्वे एवालङ्कृतोऽर्थस्तद्विना च न तादृशोऽर्थः। एवमर्थनाऽपि अन्वयव्यतिरेकावूह्यौ। शब्दान्वयव्यतिरेकाभ्यां शब्दालङ्कारोऽर्थान्वयव्यतिरेकाभ्यामर्थालङ्कार इति व्यवस्था। तृतीयस्तु● एकधर्मपुरस्कारेण य उक्तः। जतुकाष्ठन्यायेन● काष्ठद्वयं यथा जतुना संयुज्यते लाक्षया काष्ठद्वयं वा संयुक्तं भवति, तथा संयोजिते शब्दद्वये सभङ्गस्य वृत्तित्वम्। वृन्तगत● शब्दरूपे वृन्तेऽर्थद्वयी फलद्वयम्। यथा तत्र फलयोरेव परस्परं श्लेषो वृन्तन्तु द्वयोश्श्लेषकम्, एवमत्रैकश्शब्दो द्वयोरर्थयोश्श्लेषकः। सभङ्गे तु शब्दयोरेव श्लेषः। प्रवृत्तिनिमित्तं शक्यतावच्छेदकम्। शक्ततापदे तदवच्छेदिका

दुःशकम्। अन्यथा 'प्रत्यर्थं शब्दनिवेशः' इति नये पराभिमतोऽर्थश्लेषोऽपि शब्दालङ्कार एव स्यात्। इत्यलङ्कारसर्वस्वकारादयः।

अयं चोपमेव स्वतन्त्रोऽपि तत्र तत्र सकलालङ्कारानुग्राहकतया स्थितः सरस्वत्या नवं सौभाग्यमावहन्नानाविधेषु लक्ष्येषु सहृदयैर्विभावनीय इति।

इति रसगङ्गाधरे श्लेषप्रकरणम्।

## अप्रस्तुतप्रशंसानिरूपणम्

अप्रस्तुतेन गम्येन वाच्यस्य प्रस्तुतस्योपस्करणे समासोक्तिरुक्ता। तद्वैपरीत्येनाप्रस्तुतप्रशंसोच्यते—

अप्रस्तुतेन व्यवहारेण सादृश्यादिवक्ष्यमाणप्रकारान्यतमप्रकारेण प्रस्तुतव्यवहारो यत्र प्रशस्यते साप्रस्तुतप्रशंसा।

प्रशंसनं च वर्णनमात्रम्, न तु स्तुतिः। 'धिक् तालस्योन्नतां यस्य च्छायापि नोपकाराय' इत्यादावव्याप्त्यापत्तेः।

---

पदगतानुपूर्वी एका अभङ्गस्थले। अतः शब्दयोरप्यभेदः। अन्यथा● सर्वथा शब्दभेदाङ्गीकारे अर्थभेदेनापि शब्दभेदापत्त्या।

॥ इति श्लेषप्रकरणम् ॥

## अप्रस्तुतप्रशंसानिरूपणम्

प्रस्तुतस्येत्यध्याहृत्य अप्रस्तुतेन प्रस्तुतस्य वर्णनमप्रस्तुतप्रशंसा। प्रशंसाशब्दस्य वर्णनमात्रमर्थः। तद्वैपरीत्येन● समासोक्तौ यादृशं प्रस्तुतं तादृशमत्राप्रस्तुतं यादृशमप्रस्तुत तत्र तादृशमत्र प्रस्तुतम्। तत्र प्रस्तुतस्य वाच्यता अत्र तु अप्रस्तुतस्य तत्राप्रस्तुतस्य गम्यताऽत्र प्रस्तुतस्येत्यर्थः फलति। वस्तुतोऽग्रे वाच्यत्वगम्यत्वयोरनिवेशं सूचयिष्यन् तदघटितमेव लक्षणं निर्दिशति अप्रस्तुतेन● ध्वनिमात्रेऽतिव्याप्तिवारणाय सादृश्येत्यादि तस्य च विवरणं मूले समायास्यति। धिक् तालस्योन्नतताम्● अप्रस्तुतेन तालव्यवहारेण

इयं च पञ्चधा—अप्रस्तुतेन स्वसदृशं प्रस्तुतं गम्यते यस्यामित्येका। कार्येण कारणमित्यपरा। कारणेन कार्यमिति तृतीया। सामान्येन विशेष इति चतुर्थी। विशेषेण सामान्यमिति पञ्चमी।

आद्या यथा—

'दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः
करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः।
इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं
नखानां पाण्डित्यं प्रकटयतु कस्मिन्मृगपतिः॥'

यथा वा—

'यस्मिन्खेलति सर्वतः परिचलत्कल्लोलकोलाहलै-
र्मन्थाद्रिभ्रमणभ्रमं हृदि हरिद्यूथाधिपाः पेदिरे।
सोऽयं तुङ्गतिमिङ्गिलाङ्गगिलनव्यापारकौतूहलः,
क्रोडे क्रीडतु कस्य केलिरभसत्यक्तार्णवो राघवः॥'

---

प्रस्तुतस्य कस्यचित्समर्थस्याप्यकिञ्चित्कुर्वतो व्यवहारो वर्ण्यते। स्वसदृशं● अप्रस्तुतसदृशम्। कार्येण● अप्रस्तुतकार्येण प्रस्तुतस्य कारणस्य वर्णनम्, एवमग्रेऽपि।

दिगन्ते श्रूयन्ते● अप्रस्तुतेन सिंहव्यवहारेण वाच्येन कस्यचिन्महाविक्रमस्य प्रतिवीराप्राप्तिर्गम्यते। मदेन मलिनो गण्डो येषान्त एवंभूता गजा मदोन्मत्ता दिग्गजा इति यावत्। सन्ति चेद्भीता दिगन्ते वर्तन्ते न सन्मुखे आयान्ति। तत्रापि वर्तते न वेति न निश्चयः केवलं श्रूयन्ते। न कैश्चिद् दृष्टाः। हस्तिन्यः स्त्रीजातितया दयापात्रम्। मृगाश्च अविक्रमशीलाः क्षुद्रजातयो मृगपतेः पोष्याः। एवं प्रतिभटस्याभावात् पुनरयं मृगपतिरिदानीम् अस्मिन् लोके विलक्षणतीक्ष्णाग्राणां नखानां गम्यानामस्त्राणाञ्च पाण्डित्यं कस्मिन् प्रकटयतु। न कुत्रापीत्यर्थः। यस्मिन् खेलति● अत्रापि पुनस्तादृशमेव गम्यम्। राघवव्यवहारोऽप्रस्तुतः। गम्यश्च कस्यचिन्महाविक्रमस्य युद्धरूप-

यथा वा—

'पुरा सरसि मानसे विकचसारसालिस्खल-
त्परागसुरभीकृते पयसि यस्य यातं वयः ।
स पल्वलजलेऽधुना मिलदनेकभेकाकुले
मरालकुलनायकः कथय रे कथं वर्तताम् ॥'

श्लिष्टविशेषणाप्येषा दृश्यते—

नितरां नीचोऽस्मीति त्वं खेदं कूप मा कदापि कृथाः ।
अत्यन्तसरसहृदयो यतः परेषां गुणग्रहीतासि ॥

समासोक्तिरत्रानुग्राहिकेति तु न वक्तव्यम् । तस्याः

---

क्रीडाक्षेत्राभावादिव्यवहारः । यस्मिन् राघवे समुद्रमध्ये क्रीडति सति सर्वतः परिचलतां कल्लोलानां कोलाहलैर्महाम्बीरा दिशामधीश्वरा इन्द्रादयोऽपि मन्थाचलस्य भ्रमणस्य भ्रमं पेदिरे प्राप्तवन्तः । पद्गतौ परोक्षलिटो बहुवचनम् । सोऽयम् । उन्नतानां तिमिङ्गलमत्स्यानां गिलनव्यापार एव कौतूहलं यस्यैवंविधः क्रीडारभसात्त्यक्तार्णवो राघवः, समुद्ररूपक्रीडास्थानाभावात् कस्य क्रोडे क्रीडतु । राघवः, सामुद्रिको महामत्स्यविशेषः । पुरासरसि ● पुरा मानसे सरोवरे विकचानां विकसितानां सारसानां पङ्क्तिभ्यः स्खलद्भिः परागैः सुरभीकृते पयसि यस्य हंसस्य वयः यातम् । स हंसकुलपतिः मिलद्भिरनेकैर्भेकैर्मण्डूकैराकुले अल्पजलाशयजले अधुना कथं वर्तताम्—रे कथय । अप्रस्तुतेनानेन हंसव्यवहारेण प्रस्तुतस्य कस्यचिदनुभुतानेकसुखसमृद्धेः कुतश्चित्कारणाद् दुर्गतौ यातस्य व्यवहारो गम्यते । नितरां नीचोऽस्मीति ● हे कूप ! नितरां नीचोऽस्मीति त्वं कदापि खेदं मा वृथाः । अत्यन्तं सजलमभ्यन्तरं यस्यैवंभूतः । यतः परेषां गुणस्य रज्जुरूपस्य पुरुषरूपादेर्भूम्यादिगन्धस्य वा ग्रहीतासि । अत्राचेतनस्य कूपस्य सम्बोधनं खेदवर्णनञ्चानुपपन्नमतोगम्यस्य नीचजातीयपुरुषस्य तादात्म्यारोपेण सङ्गमनीयम् । त्वं नीचजातीयतया खेदं मा कृथाः । यतस्तवहृदयमत्यन्तं सरसम् परगुणग्रहणप्रावीण्यञ्च तव श्रेष्ठौ गुणौ । अप्रस्तुतकूपव्यवहारो गम्यश्च तादृशपुरुषव्यवहारः ।

प्रकृतालङ्कारविरुद्धात्मिकात्वेनानुग्राहिकात्वायोगात् । यत्तु- "—'येनास्यभ्युदितेन चन्द्र गमितः क्लान्ति रवौ तत्र ते, युज्येत प्रतिकर्तुमेव न पुनस्तस्यैव पादग्रहः' इत्यत्र समासोक्तेरनुग्राहिका" इति मम्मटभट्टैरुक्तम्। तत्र विचार्यते— अत्र विशेषण-साम्यमहिम्ना प्रतीयमानः कापुरुषवृत्तान्तः किं प्रस्तुत आहोस्विदप्रस्तुतः ? । आद्ये समासोक्तेर्विषय एव नास्ति । 'परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः' इति समासोक्तेर्लक्षणस्य तैरेवाभिधानात् । परस्याप्रकृतस्येति तदर्थात् । द्वितीयेऽप्रस्तुत-प्रशंसाया नास्ति विषयः, 'अप्रस्तुतप्रशंसा सा या सैव प्रस्तुताश्रया' इति तल्लक्षणात् । प्रस्तुत आश्रयः प्रधानं यस्या

---

प्रकृतालङ्कारविरुद्धा ● समासोक्तौ गम्यस्याप्रस्तुतत्वं कूपस्य च प्रस्तुतत्वम् । प्रकृतालङ्कारे च कूपस्याप्रस्तुतत्वं गम्यस्य प्रस्तुतत्वम् । पादग्रहः ● अस्योत्तरार्धम्—क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नो मनाक्,

अस्त्वेवं जडधामता तु भवतो यद् व्योम्नि विस्फूर्जसे ॥ हे चन्द्र ! येनाभ्युदितेन रविणा क्लान्ति गमितोऽसि । तत्र रवौ ते प्रतिकर्तुमेव युज्यते, किन्तु तस्यैवापकर्तुरेव रवेः पादरूपकरग्रहणं न युज्यते । इदममायां क्षीणश्चन्द्रः सूर्यात्किरणान् गृह्णातीति पौराणिकप्रसिद्धिमादाय । क्षीणेन मयाऽगत्याऽनुष्ठितं यदि तदा अल्पमपि न लज्जसे । अस्तु एवं किन्तु भवतो जडधामता डलयोरभेदेन जलवत्तया तेजोविरहेण शैत्यमात्रम्, जलधामसमुद्र-त्वेन जडता मूर्खता वा । चैतन्ये लज्जा युक्ता, त्वन्तु यस्मात्कारणात् आकाशे प्रकाशसे । अत्र विशेष्यवाचकचन्द्रपदे श्लेषो नास्ति । विशेषणवाचकैः श्लेषेण कस्यचित्परैः पराभूतस्य क्षीणधनस्य पुनरपकारिणमेवोपजीव्य विस्फूर्जमाणस्य कापुरुषस्य वृतान्तोऽधिगम्यते । नास्ति ● तत्र प्रस्तुते वाच्यत्वस्याप्रस्तुते च विशेषणगम्यत्वस्य समीहितत्वात् । परोक्तिः ● भेदकैर्विशेषणैः । प्रस्तुतस्य स्फुटं प्रतीतिः । अप्रस्तुतस्य परस्य तु श्लिष्टविशेषणमाहात्म्यात्प्रतीतिः । द्वितीये ● कापुरुषस्याप्रस्तुतत्वे । तथा सति अत्र प्रस्तुतचन्द्रवर्णनमप्रस्तुत-

इति तदर्थात् । तस्माच्छ्लिष्टविशेषणोपक्षिप्तद्वितीयार्थमात्रं समासोक्तिरित्यभिप्रायेण यथाकथञ्चित् संगमनीयम् ।

इयं च सादृश्यमूलाप्रस्तुतप्रशंसोच्यते ।

अस्यां च वाक्यार्थः क्वचित्प्रतीमानार्थताटस्थ्येनैवावतिष्ठते—यथोक्तोदाहरणेषु । क्वचिच्च स्वगतविशेषणान्वययोग्यतामासादयितुं प्रतीयमानाभेदमपेक्षते ।

यथा—

'समुपागतवति दैवादवहेलां कुटज मधुकरे मा गाः ।
मकरन्दतुन्दिलानामरविन्दानामयं महामान्यः ॥'

यथा वा—

'तावत्कोकिल दिवसान्यापय विरसान्वनान्तरे निवसन् ।
यावन्मिलदलिमालः कोऽपि रसालः समुल्लसति ॥'

अत्र मृगपक्षिणोः संबोधनानुपपत्त्या प्रतीयमानांशतादात्म्यमपेक्ष्यते ।

---

कापुरुषाश्रयः स्याल्लक्षणन्तु अप्रस्तुतस्य वर्णनं प्रस्तुताश्रयम् । **तस्मात्** ● वस्तुतस्तल्लक्षितायाः समासोक्तेर्विषयाभावात् । मात्रपदेन प्रस्तुताप्रस्तुतत्वयोरभावो ध्वनितः । **यथाकथञ्चित्** ● समासोक्तिच्छायामाश्रित्य, उक्तञ्च तथैव काव्यप्रकाशटीकायां चक्रवर्तिनिर्मितायाम् । **इयञ्च** ● प्रथमभेदेन वर्णिता । **ताटस्थ्येन** ● वाच्यप्रतीयमानपदार्थयोः परस्परमभेदारोपाभावेन । **मपेक्षते** ● वाच्यमिति शेषः । **समुपागतवति** ● हे कूटज वृक्ष ? दैवात् समुपागतवति मधुकरे उपेक्षां मा कुरु । यतोऽयं मकरन्दभरितानां कमलानामपि सत्कार्यः । कूटजभ्रमरव्यवहारेण नीचगृहातिथिभूतमहापुरुषव्यवहारः प्रशस्यते । वृक्षभ्रमरयोर्वस्तुत एतादृशव्यवहारानुपपत्त्या तयोः प्रतीयमानपुरुषाभेदमारोप्य सम्बोधनोपेक्षासत्कारादीनां समन्वयः सम्पादनीयः । **तावत्कोकिल** ● प्रतिवस्तूपक्रमे व्याख्यातम् ।

'मलिनेऽपि रागपूर्णां विकसितवदनामनल्पजल्पेऽपि ।
त्वयि चपलेऽपि च सरसां भ्रमर कथं वा सरोजिनीं त्यजसि ॥'

अत्र त्यागानौचित्यहेतुत्वेन कमलिन्याः स्तुतिरूपं विशेषणमुपात्तम् । तच्च न संभवति । नहि भ्रमरे श्यामत्वादिर्दोषः, कमलिन्याः शोणत्वादिर्वा गुणः । येन स्तुतिः स्यात् । अतो वाच्यार्थस्य प्रतीयमानतादात्म्यं विशेष्यांशे विशेषणांशे चापेक्ष्यते ।

पूर्वत्रांशेन, इह तु साकल्येनेति विशेषः ।

क्वचिच्च प्रतीयमानमपि किञ्चिदंशे वाच्यतादात्म्यम् । वाच्यं च किञ्चिदंशे प्रतीयमानतादात्म्यमपेक्षते । यथा—

'सरजस्कां पाण्डुवर्णां कण्टकप्रकराङ्किताम् ।
केतकीं सेवसे हन्त कथं रोलम्ब निस्त्रपः ॥'

---

**मलिनेऽपि** ● समासोक्तौ व्याख्यातम् । **विशेषणम्** ● रागपूर्णां विकसितवदनामित्यादि । **श्यामत्वादिः** ● मलिनत्वादित्यर्थः । आदिना वाचालत्वचापल्ययोः परिग्रहः । एषां स्वाभाविकत्वान्न दोषगुणभावः । **स्यात्** ● तथा चैभिर्विशेषणैर्वस्तुतो भ्रमरस्य निन्दा सरोजिन्याः स्तुतिश्च नोपपद्यते । प्रतीयमाननायकतादात्म्ये भ्रमरे नायिकातादात्म्ये च सरोजिन्यां गृहीते नायकनायिकारूपतया निन्दास्तुती पर्यवस्यतः । **विशेष्यांशे** ● सम्बोधनाद्युपपत्तये भ्रमरादौ नायकादेः, कुत्सितमनोवृत्त्यादिवस्तुनः श्यामत्वादिविशेषणांशे । **पूर्वत्रांशेन** ● पूर्वपद्ययोर्वृक्षपक्षिणोर्विशेष्ययोरेव । **क्वचिच्च** ● सरजस्कामिति पद्यविषये प्रतीयमानं नायिकास्वरूपं कण्टकितत्वांशे केतकीतादात्म्यम् अपेक्षते । वाच्यश्च केतकीरूपं पाण्डुरत्वांशे नायिकातादात्म्यमपेक्षते ।

**सरजस्काम्** ● रोलम्बो भ्रमरः । हे भ्रमर ! निर्लज्जः सन् धूलिसहितां नायिकापक्षे ऋतुमतीं पाण्डुरवर्णां विरहव्याधिपाण्डुरिताम्, कण्टकसमूहै रोमाञ्चैश्चाकीर्णाम्, हन्त अयोग्यां केतकीं कथं सेवसे ? अनेन केतकीभ्रमर-

अत्र यथा 'सरजस्कत्वं वाच्यप्रतीयमानयोरपि सेवनानौचित्ये निमित्तम्, न तथा पाण्डुवर्णत्वकण्टकितत्वे। यतः पाण्डुवर्णत्वं केतक्यां न दोषः, प्रत्युत गुण एवेति पाण्डुरत्वांशे केतक्यां नायिकातादात्म्यमपेक्ष्यते। नायिकायां च कण्टकितत्वांशे केतकीतादात्म्यम्। पुलकितत्वस्य कामिनीत्यागाननुगुणत्वात्प्रत्युत तत्सेवनानुगुणत्वात्।

कार्येण कारणं गम्यं यथा—

'किं ब्रूमस्तव वीरतां वयममी यस्मिन्धराखण्डल<br>
क्रीडाकुण्डलितभ्रु शोणनयने दोर्मण्डलं पश्यति।<br>
नानाभूषणरत्नजालजटिलास्तत्कालमेवाभवन्<br>
विन्ध्यक्ष्माधर-गन्धमादनगुहासंबन्धिनो भूरुहाः॥'

अत्र विन्ध्यारण्यतरुभूषणेनारिपलायनं गम्यते।

यदि तु वक्ष्यमाणरीत्या पर्यायोक्तालङ्कारस्यायं विषय इत्युच्यते, तदेदं विविक्तमुदाहरणम्—

---

वृत्तान्तेन प्रस्तुतस्तादृशविशेषणविशिष्टनायिकारतनायकवृत्तान्तः प्रतीयते। **उभयोरपि**● केतकीनायिकयोः, क्वचिद् उभयोरिति पाठो नास्ति। **पाण्डुरत्वांशे**● पाण्डुरा नायिका दुर्बलतया न सेवनीया, तत्तादात्म्यापन्ना केतक्यपि तथा सम्भवेत्।

**कण्टकितत्वांशे**● सेवनप्रतिबन्धकरोमाञ्चभिन्नकण्टकितत्वांशे। सेवानुकूलतां कण्टकितत्वस्य त्वाह **पुलकितत्वस्य**● **किं ब्रूमस्तव**● हे पृथ्वीपुरन्दर! क्रीडया कुण्डलिते भ्रुवौ शोणे नयने यस्य तस्मिन् यस्मिंस्त्वयि कुण्डलितभ्रूः क्रियाविशेषणं वा, बाहुमण्डलं पश्यति सति विन्ध्यपर्वतस्य गन्धमादनस्य च गुहासम्बन्धिनो वृक्षास्तत्कालमेव अनेकभूषणमणिसमूहैः प्रकाशिता अभूवन्। आमर्षोदयानन्तरं क्रोधातिशयावलोकनादेवारयो गिरिगुहायां पलायन्ते। तद्भूषणजालवशा गुहावृक्षा उल्लसन्ति। अप्रस्तुतेन पलायनकार्येण गुहावृक्षोल्लासेन प्रस्तुतमरिपलायनं गम्यते, तदेवाह **अत्र**●। **वक्ष्यमाणरीत्या**●

'नितरां परुषा सरोजमाला न मृणालानि विचारपेशलानि ।
यदि कोमलता तवाङ्गकानामथ का नाम कथापि पल्लवानाम् ॥

अत्र पल्लवादितिरस्कारेण कार्येण तदङ्गानां सौकुमार्यातिशयः कारणम् । कार्यकारणभावश्चेह ज्ञानयोः । तेन पारुष्यस्य मृणालगतत्वेन ज्ञायमानस्य स्वरूपतस्तदङ्गसौकुमार्यजन्यत्वेऽपि न क्षतिः ।

कारणेन कार्यं गम्यं यथा—

'सृष्टः सृष्टिकृता पुरा किल परित्रातुं जगन्मण्डलं
त्वं चण्डातप निर्दयं दहसि यज्ज्वालाजटालैः करैः ।
संरम्भारुणलोचनो रणभुवि प्रस्थातुकामोऽधुना
जानीमो भवता न हन्त विदितो दिल्लीधरावल्लभः ॥'

---

यदि कार्यमपि प्रस्तुतं तदाऽस्य विषयाभावात्पर्यायोक्तं भवेत् । वृक्षभूषणस्याप्रस्तुतत्वे तु सम्यगेव । नितरां परुषा● कमलमाला अतिकठिनतया कोमलतया तव शरीरस्यातिविरुद्धा न कथञ्चित्सदृशी । मृणालानि तवाङ्गानीव वर्तन्ते न वेति विचारेऽपि शिथिलानि । यदि तव अनुकम्प्यानामङ्गानां 'कप्रत्ययोऽनुकम्पायाम्' कोमलता विचार्यते, तदा पल्लवानामतिकठिनतया कथैव का ? तत्रापि पदोलवानाम् । कारणम्● गम्यते । ननु सरोजमालादयस्तवाङ्गकान्यपेक्ष्यातिकठिना इति ज्ञानमेव तिरस्कारः कार्यम् । न च तत्सौकुमार्यातिशयेन जन्यतेऽपि तु सौकुमार्यज्ञानेन । तथा च कथं सौकुमार्यं कारणमित्यत आह कार्यकारणभावश्च● तिरस्काररूपज्ञानकार्यं प्रति तादृशसौकुमार्यातिशयज्ञानं कारणम् । नायिकां प्रति नायकोक्तिरियम् । सृष्टिः सृष्टिकृता● हे चण्डातपसूर्य ! पुरा तव सृष्टिकृता प्रजापतिना जगन्मण्डलं परित्रातुं सृष्टिः कृतेति शेषः । त्वञ्च ज्वालाकुलैः करैः किरणैर्निर्दयं जगदिति शेषः । दहसि, यस्मात्कारणात्तस्माद्वयं कल्पयामो यद् हन्त भवता अधुना क्रोधरक्तनयनः रणाङ्गणे प्रस्थातुमिच्छन् दिल्लीश्वरो न विदितः । अन्यथा

अत्र राजवर्णनाङ्गत्वेन रवेर्भयोत्पादने वर्ण्यत्वेन प्रस्तुते साक्षात्तदननुगुणत्वादप्रस्तुतेन प्रस्थानेन साक्षात्तदनुगुणं रिपुकर्तृकसूर्यमण्डलभेदनं गम्यते ।

यदि चात्र कारणं यथाकथञ्चित्प्रस्तुतमेवेत्युच्यते, तदेदमुदाहरणम्—

'आनम्य वल्गुवचनैर्विनिवारितेऽपि
रोषात्प्रयातुमुदिते मयि दूरदेशम् ।
बाला कराङ्गुलिनिदेशवशंवदेन
क्रीडाबिडालशिशुनाशु रुरोध मार्गम् ॥'

अत्र प्रवासान्निवृत्तोऽस्मीति प्रस्तुतेन कारणेन गम्यते ।

सामान्येन विशेषो यथा—

'कृतमपि महोपकारं पय इव पीत्वा निरातङ्कः ।
प्रत्युत हन्तुं यतते काकोदरसोदरः खलो जगति ॥'

---

रणभुवि गते तस्मिन् तच्छत्रवो वीरगत्या तव मण्डलं भेत्स्यन्तीति ज्ञात्वा गलितगर्वो भवान् एवं न दहेत् । अत्र राजप्रशंसा प्रधानतया प्रस्तुता तत्साधकं राज्ञः प्रस्थानेन रवेर्भयोत्पादनमपि प्रस्तुतम् । परं प्रस्थानमात्रेण न रवेर्भयं सिध्यति यस्मात्प्रस्थानकार्यं न रविभयस्य साक्षात्साधकं वीरगतिप्राप्तरिपुकर्तृकसूर्यभेदनमाक्षिप्यते । अत्रत्यसमन्वयग्रन्थेऽनुगुणशब्दस्य अनुकूलं साधकमर्थः । **कथञ्चित्** ● प्रस्थानकालिकसूर्योष्मवर्णनाभिप्रायकतया । **आनम्य** ● प्रणता भूत्वा चाटुवाक्यैर्मयि निवारितेऽपि रोषाद दूरदेशं प्रयातुम् उद्यते सति सर्वथा ममाग्रहं दृष्ट्वा बाला हस्ताङ्गुलिसंकेतद्वारा क्रीडामार्जारबालेन आशु मार्गं रुरोध । मार्गे मार्जारच्छिन्ने यात्राविहता भवतीति भावः । **कारणेन** ● विडालशिशुकरणकमार्गाऽवरोधेन । **कृतमपि** ● पयो दुग्धं काकोदरसोदरत्वात् । निरातङ्को निर्भीकः । काकोदरसोदरः सर्पसदृशः । प्रस्तुतो व्यक्तिविशेषः । महोपकारपयसोः शाब्दया सर्पखलयोरार्थ्या उपमाया अप्रस्तुत-

अत्र सामान्यार्थेन प्रस्तुतो विशेषो गम्यते। उपमाप्यस्या आनुगुण्येन स्थिता।

विशेषेण सामान्यं यथा—

'पाण्डित्यं परिहृत्य यस्य हि कृते बन्दित्वमालम्बितं
दुष्प्रापं मनसापि यो गुरुतरैः क्लेशैः पदं प्रापितः।
रूढस्तत्र स चेन्निगीर्य सकलां पूर्वोपकारावलीं
दुष्टः प्रत्यवतिष्ठते तदधुना कस्मै किमाचक्ष्महे॥'

अत्र दुष्टेषु कृत उपकारः परिणामे न सुखं जनयतीति प्रस्तुतं विशेषेण सामान्यं गम्यते।

यथा वा—

'हारं वक्षसि केनापि दत्तमज्ञेन मर्कटः।
लेढि जिघ्रति संक्षिप्य करोत्युन्नतमाननम्॥'

अत्र मर्कटवृत्तान्तेनाप्रस्तुतेन प्रस्तुतमनभिज्ञेषु रमणीय-वस्तुसमर्पणं नाशाय भवतीति सामान्यं गम्यते।

---

प्रशंसाङ्गत्वं संगमयति उपमाप्यस्याः● । पाण्डित्यम्● कथमपि स्तुति-पाठादिभिः कविर्नृपमन्वरञ्जयत्। विविधोपायैश्च राजासनं राजानं प्रापितवान्। तथोपकृतोऽपि राजा कवेर्विरोधमाचरतीति विशेषेण सामान्यं गम्यतेऽनेन। यतः यस्य कृते अर्थानुसारित्वं पाण्डित्यं परिहृत्य स्तुति-पाठकतामात्रं स्वीकृतम्।

यश्च राजा महद्भिः क्लेशैर्मनसाऽपि दुष्प्रापं नृपासनं प्रापितः। ण्यन्ताद्द्वि-कर्मकाद्धात्वर्थकर्तरि कर्मणि प्रत्ययः। सदुष्टस्तत्र राजासने आरूढ एव पूर्वान् उपकारसमूहान् हृदि निगीर्य मम विरोधी भवति चेत्, तदा अधुना कस्मै किं कथयामः कथनं व्यर्थम्। व्यङ्ग्यसामान्यमाह अत्र दुष्टेषु● । हारं वक्षसि● केनापि पात्रानभिज्ञेन वक्षसि उरसि अर्पितं हारं बानरो जिह्वया आस्वादयति,

एवं पञ्चप्रकारेयमप्रस्तुतप्रशंसा प्राचामनुसारेण निरूपिता।

वस्तुतस्तु प्रथमस्याप्रस्तुतप्रशंसाप्रकारस्य नानाविधत्वं संभवति। यत्रात्यन्तमप्रस्तुतेन वाच्येन प्रस्तुतं गम्यते स प्रकारो निगदित एव। यत्र च स्थलविशेषे वृत्तान्तद्वयमपि प्रस्तुतं सोऽप्येकः। यथा जलक्रीडाप्रकरणे भ्रमरकमलिन्यादिषु पुरःस्थितेषु, नायके च स्वनायिकायामननुरक्ते पार्श्ववर्तिनि नायिकासख्याः कस्याश्चिदुक्तौ 'मलिनेऽपि रागपूर्णाम्—' इत्यादिप्रागुदाहृते पद्ये।

अथात्र कथमप्रस्तुतप्रशंसा ? वाच्यार्थस्य प्रस्तुतत्वेनैतल्लक्षणानालीढत्वादिति चेत्, न, अप्रस्तुतशब्देन हि मुख्यतात्पर्यविषयीभूतार्थातिरिक्तोऽर्थो विवक्षितः। स च क्वचिदत्यन्ता-

---

नासा गन्धं गृह्णाति, संक्षिप्य हर्षातिरेकादाननमुन्नतं करोति। आननमित्यस्य स्थाने आसनमिति कुत्रत्येचित्पाठे तदुपर्युपविशतीत्यर्थः। **निगदित एव** ● प्रागुदाहरणेषु। **पुरःस्थितेषु** ● अनेन भ्रमरसरोजिन्योः प्रस्तुतत्वम्। **पार्श्ववर्तिनि** ● अनेन गम्यस्य नायकस्यापि, **मुख्यतात्पर्य** ● प्रधानं यत्तात्पर्यं तद्विषयीभूतो नायकस्तदतिरिक्तो भ्रमरः प्रकृतेऽप्रस्तुतो नायकश्च प्रस्तुतः। मुख्यत्वञ्च तात्पर्येऽन्यतात्पर्यानधीनत्वम्। भ्रमरं प्रति नायिकासंख्या उक्तिस्तु सन्निहितनायिकाननुरक्तनायकबोधनेच्छयैव, न तु स्वातन्त्र्येण भ्रमरबोधनेच्छया फलाभावात्। तथा च भ्रमरे तात्पर्यमेव नास्ति; अस्ति चेन्नायकविषयकतात्पर्याधीनमेव। नायके तात्पर्यन्तु अन्यानधीनमिति मुख्यम्। एतेन अत्र मुख्यत्वं यदि प्रस्तुतत्वं तदा तदुभयोरपि तुल्यमर्थोद्देश्यत्वम्। एवमपि प्राचामप्रस्तुतेनेति विशेषणपदवैयर्थ्यापत्तिः। एतावता विशेषेणालङ्कारान्तरत्वानङ्गीकारे साधारणविशेषणमहिम्ना प्रस्तुतस्य स्फूर्त्या समासोक्तिः।

असाधारणविशेषणमहिम्ना तत्स्फूर्तौ व्यङ्ग्यरूपकमिति त्वदुक्तविषयविभागस्याप्युच्छेदापत्तिः। दीपकगुम्फयोर्दृष्टान्तप्रतिवस्तूपमयोश्च भेदानापत्तिश्चेति चिन्त्यमिति मर्मप्रकाशोल्लासोऽग्रिम उपेक्षणीयमिति प्रतीकोऽप्यन्यस्तः

प्रस्तुतः क्वचित्प्रस्तुतश्चेति न कोऽपि दोषः। न च ध्वनिमात्रस्याप्रस्तुतप्रशंसात्वापत्तिरिति वाच्यम्। अत एव तत्र सादृश्यान्यतमप्रकारेणेति विशेषणमुपात्तमिति विभावनीयम्।

एतेन 'द्वयोः प्रस्तुतत्वे प्रस्तुताङ्कुरनामान्योऽलङ्कारः' इति कुवलयानन्दाद्युक्तमुपेक्षणीयम्। किञ्चिद् वैलक्षण्यमात्रेणैवालङ्कारान्तरताकल्पने वाग्भङ्गीनामानन्त्यादलङ्कारानन्त्यप्रसङ्ग इत्यसकृदावेदितत्वात्। इदं तु बोध्यम्—

अत्यन्ताप्रस्तुतस्य वाच्यतायां तस्मिन्नपर्यवसितया अभिधया प्रतीयमानार्थस्य बलादाकृष्टत्वेन ध्वनित्वं न निर्बाधम्। द्वयोः प्रस्तुतत्वे तु ध्वनित्वं निर्विवादमेव। एवं

---

परास्ततां नीतः। अर्थोद्देश्यत्वस्यापि नायक एव न भ्रमरे वृत्तित्वाच्च। समासोक्तौ प्रस्तुतधर्मिण एव वाच्यता। रूपके तु द्वयोरपि तुल्यमुपस्थानमिति सूक्ष्मभेदस्य सत्त्वाच्च। **मात्रस्याप्र** ● सम्पूर्णध्वनेरित्यर्थः। **अत एव** ● ध्वनिमात्रेऽतिव्याप्तेरेव। **एतेन** ● द्वयोरपि प्रस्तुतयोः स्थलेऽप्रस्तुतप्रशंसायाः संगमनेन। येन व्यवहारेण यस्य व्यवहारः प्रशस्यते तयोरुभयोरपि प्रशस्यप्रशंसकयोः प्रस्तुतत्वे प्रस्तुताङ्कुरनामालङ्कार इत्याह **द्वयोः** ● प्रस्तुतस्याङ्कुरत्वं नाम प्रस्तुतमिव प्रतीयमानता मुख्यतात्पर्यविषयातिरिक्तत्वे सति तात्पर्यविषयतेति यावत्। **तस्मिन्नपर्यवसितया** ● अत्यन्ताप्रस्तुतस्याभिधाविषयत्वेऽपि मुख्यतात्पर्यविषयताया अभावादकृतार्थया। **दाकृष्टत्वेन** ● अत्यन्ताऽप्रस्तुतस्य मुख्यतात्पर्याविषयत्वेऽपि कविना वाच्यतयोपन्यासस्याप्रासङ्गिकत्वापत्तिर्बलम्। **निर्विवादम्** ● अनुपपत्तेरभावेन। न च भ्रमरस्य सम्बोधनानुपपत्त्या प्रतीयमानतादात्म्यारोपेण व्यङ्ग्यस्य वाच्याङ्गत्वेन कथं ध्वनित्वमिति वाच्यम्। प्रस्तुते भ्रमरे नायके च तदनुपपत्तेरभावात्। तथाहि प्रस्तुते नायके न पूर्वोक्ताप्रासङ्गिकत्वापत्तिर्नायकसम्बोधन प्रसङ्गस्य सत्त्वात्। नीचोऽस्मीत्यादावत्यन्ताप्रस्तुते तु सर्वथैव कूपसम्बोधनादि व्यङ्ग्यं विना अनुपपन्नम्।

अत्र तु भ्रमरसम्बोधन विशेषणे नायकोद्देश्यकबोधमात्रं कल्प्यते, न तु नायिकाननुरागादिव्यवहारम्। किञ्च कस्यचिदंशस्य वाच्यनिष्पादकत्वेऽपि

सादृश्यमूलप्रकारे द्वैतम्। कार्यकारणभावसामान्यविशेषभाव-मूलास्तु चत्वारः प्रकारा गुणीभूतव्यङ्ग्यस्यैव भेदाः। अभिधादिस्पर्शलेशशून्यस्य केवलागूरणमात्रस्य ध्वनित्व-प्रयोजकत्वात्।

अथ—

'आपेदिरेऽम्बरपथं परितः पतङ्गा
भृङ्गा रसाल-मुकुलानि समाश्रयन्त।
संकोचमञ्चति सरस्त्वयि दीन-दीनो
मीनो नु हन्त कतमां गतिमभ्युपैतु ॥'

अत्र क्षीणराजादितदेकावलम्बपुरुषादिवृत्तान्ते प्रस्तुतेऽ-प्रस्तुतप्रशंसैवेति निर्विवादम्। यदा तु सरोवृत्तान्तो राज-वृत्तान्तश्चेत्युभयं प्रस्तुतम् तदापि प्रागुक्तदिशा सैव। यदा तु

---

न सम्पूर्णो गम्यमानो नायकव्यवहारो वाच्यस्याङ्गम्। एतेन इदं चिन्त्यम् भ्रमरसम्बोधनस्य तस्य तद्वृत्तिश्यामत्वादौ दोषादेर्वाच्यस्यानुपपद्यमानतया व्यङ्ग्येनैव तदुपपत्तेश्च गुणीभूतव्यङ्ग्यतया एवौचित्यादिति मर्मप्रकाशश्चिन्त-नीयः। तत्रत्यं प्रस्तुताङ्कुरलक्षणन्तु मुख्यतात्पर्यविषयीभूतप्रस्तुताङ्कुरस्य अतादृ-शेन प्रस्तुतेन ध्वननम्। **द्वैतम्** ● ध्वनिगुणीभूतव्यङ्ग्यभेदेन द्विविधत्वम्। केवलागूरणं सूचनम्। मात्रपदेनानुपपत्तिसूचनस्य व्यवच्छेदः। **आपेदिरे**● आश्रयविनाशे जाते आश्रितानां कीदृशी गतिरिति वर्ण्यते। हे सरः! निदाघादि-वशात्त्वयि जलरूपेण संकोचं गच्छति सति अञ्जू गतौ शत्रन्तः। त्वदाश्रिताः पक्षिणः परितः गगनमार्गं प्राप्नुवन् उदडीयन्त। त्वदाश्रितसरोजविरहिणो भ्रमराश्च आम्रमञ्जरीरसेवन्त। परम् उड्डयनशक्तेरभावात् त्वदेकमात्रशरण-स्त्वदधीनजीवनो मीनो हन्त दीनादपि दीनो दीनतरः त्वयि दीने सति वा दीनोऽयं कतमां गतिम् अङ्गीकरोतु। अप्रस्तुतेनानेन वर्णनीयप्रस्तुतमाह **अत्र क्षीणराजादि**● तदेकावलम्बो राजमात्राश्रयः। **निर्विवादम्** ● सर्वमतेन प्रस्तुताङ्गीकर्तृमतेऽपि तत्र विवादाभावात्। विवादस्थलमाह **यदा तु**●। **प्रागुक्त**● मलिनेऽपि रागपूर्णेत्यादौ भ्रमरनायकयोः प्रस्तुतयोरपि प्रस्तुता-

सरोवृत्तान्त एव प्रस्तुतस्तदा गुणीभूतराजवृत्तान्तरूप-व्यङ्ग्येऽस्मिन् पद्ये कोऽलंकारः ? न तावदियम्, प्रस्तुतस्यैव प्रशंसनात्। नापि समासोक्तिः, तज्जीवातोर्विशेषणसाम्यस्य सकलालङ्कारिकसम्मतस्यात्राभावात्। न च विशेषणसाम्य-प्रकार इव शुद्धसादृश्यमूलोऽपि तस्या एव प्रकारो वाच्यः, एकधर्मालीढत्वमन्तरेणैकालङ्कारत्वे सर्वेषामेकालङ्कारत्वापत्तेः।

---

प्रस्तुतत्वमिव। तज्जीवातो ● समासोक्तेरलङ्कारताप्रयोजकस्य। एकधर्मा-वलीढत्वमन्तरेण ● क्वचिद्विशेषणसाम्यस्य क्वचिच्च सादृश्यमूलकत्वस्य प्रयोजकत्वाभ्युपगमे अन्यप्रयोजकानामपि समासोक्तेः प्रयोजकतामाश्रित्य समेषां समासोक्तित्वं प्रसज्येत। एकस्यानुगतधर्मस्य सर्वलक्ष्यवृत्तित्वम् एकधर्मा-वलीढत्वम्। न च सादृश्याद्यन्यतमत्वमिवाप्रस्तुतप्रशंसायां समासोक्तावपि विशेषणसाम्यसादृश्यैतदन्यतरत्वमेवैकधर्ममादाय समासोक्त्या संग्रहोऽस्य क्रियतामिति वाच्यम्, असम्भवात्। अप्रस्तुतप्रशंसायास्तावतो भेदस्य सवरङ्गी-करात्तदनुगतधर्मगवेषणायामगत्याऽन्यतमत्वमङ्गीकार्यम्। एवमेवाति-शयोक्तावपि समासोक्तिलक्ष्यताया एतादृशेषु अप्रसिध्या अप्रस्तुतेन प्रस्तुत-प्रशंसायाः प्रतीतेरप्रस्तुतप्रशंसयैव सङ्ग्रहाय यत्नो ज्यायान् इत्येवोक्तं व्यव-स्थापकैरित्यादिना। किञ्च, अतिशयोक्तौ निगीर्याध्यवसानत्वमत्र च अप्रस्तुतेन प्रस्तुतस्य वर्ण्यत्वं प्रधानतया प्रयोजकम्, अन्यतमत्वन्तु प्रयोजकतावच्छेदक-कुक्षिप्रविष्टम्। एवं समासोक्तावपि वाच्यगम्यव्यवहारयोरभेदोऽध्यारोपो वा प्राधान्येन प्रयोजकः। आपेदिरे पुरा यत्र स्रोत इत्यादौ न तादृक् ताटस्थ्येनैवो-पस्कारकत्वात्। तथा च किमनुरोधेन समासोक्तिः स्यादित्यप्युक्तं ग्रन्थकृता प्राक्समासोक्तौ हीत्यादिना समासोक्तिप्रकरणे। एवञ्च अत्रेदं चिन्त्यम् अति-शयोक्त्यादिवत्प्रकृते सादृश्याद्यन्यतमप्रकारनिवेशवच्चान्यतरहेतुकाप्रस्तुतवृत्ता-न्तारोपत्वरूपैकधर्मावलीढत्वसम्भवेन समासोक्तेरेवात्राङ्गीकारे बाधकाभावः। किञ्चाप्रस्तुतेन प्रस्तुतं प्रशस्यत इत्यस्य कोऽर्थः ? यद्युत्कर्षाधानं तर्हि प्रतीय-मानार्थानध्यारोपविषयेषु दिगन्ते श्रूयन्त इत्याद्युदाहरणेष्वव्याप्तिः। नहि ताटस्थ्येन स्थितोऽप्यर्थो वाच्योत्कर्षक इति युक्तं सहृदयसंमतं वा। यदि प्रतीतिमात्रं तर्हि न प्रकृते। न ह्यत्राप्रस्तुतेन प्रस्तुतस्य प्रतीतिः। अप्रस्तुतेन

व्यवस्थापकैस्तद्भेदतया अनुक्तेश्च। अत एवालङ्कारसर्वस्व-कारादिभिर्विशेषणवाचिशब्दसाम्यं संरक्ष्यैव समासान्तराश्रयेण सादृश्यमूलत्वं प्रदर्शितम्, न तु तदुपेक्ष्येति चेत् ?

उच्यते—अप्रस्तुतप्रशंसैवात्रालङ्कारः । अप्रस्तुतस्य प्रशंसेति न तदर्थः । किंत्वप्रस्तुतेनेति । सा चार्थात्प्रस्तुतस्यैव । एवं च वाच्येन व्यक्तेन वा अप्रस्तुतेन वाच्यं व्यक्तं वा प्रस्तुतं यत्र सादृश्याद्यन्यतमप्रकारेण प्रशस्यते साऽप्रस्तुतप्रशंसेति । न तु वाच्येनैव व्यङ्ग्यमेवेति ।

स्यादेतत् । 'कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम्' इत्यादाविवात्रापि निगीर्याध्यवसाने-नैवोपपत्तिः शक्या कर्तुम् । तच्च पदार्थेन पदार्थस्य, वाक्यार्थेन वाक्यार्थस्य वा इत्यन्यदेतत्, अन्वयानुपपत्तिरिव प्रस्तावानुप-पत्तिरपि लक्षणाबीजम् । एवं चातिशयोक्त्यैवोपपत्तौ किं सादृश्यमूलाप्रस्तुतप्रशंसयेति । ननु निगीर्याध्यवसानं हि न तावदत्र संभवति । तत्र हि वाच्यतावच्छेदकरूपेण लक्ष्यस्य

---

प्रस्तुतार्थप्रतीतिमात्रकृत एव चमत्कार इति तन्मतेऽलङ्कारान्तरता सूपपादेति मर्मप्रकाशप्रकाशितोऽप्रकाश एव, ताटस्थ्येनाप्युपस्कारस्याङ्गीकारात् ।

प्रशंसा वर्णनमात्रमिति ग्रन्थकृतैवोक्तमिति विकल्पोऽनर्थकः । ताटस्थ्यमत्र न सर्वथाऽसम्बद्धं किन्तु भवतां मतेऽपि सादृश्येतरत्वेन सङ्ग्रहयोग्यमेवेत्यलम् । अत एवा● प्रकारान्तरस्य सादृश्यमूलकत्वादेः समासोक्त्यप्रयोजकत्वादेव । प्रदर्शितम् ● समासोक्तौ दन्तप्रभा पुष्पचितेत्यादिपद्ये । वात्रालङ्कारः● व्यक्तेनापि राजवृत्तान्तेन सरोवृत्तान्तस्य प्रशंसनात् । वात्राऽपि● आपेदिर इत्यादौ वाक्यार्थेन वाक्यार्थस्य निगरणात् । लक्षणाबीजम्● तात्पर्यविषय-स्यानुपपत्तिः । द्वयोः प्रस्तुतत्वस्थले उभयोरन्वये तात्पर्यादेकस्य निगरणेनोप-

प्रतीतिः, इह तु वाच्यताटस्थ्येनार्थान्तरस्येति विशेषात्। यत्र तु श्लेषादिना विशेषणसाम्यं तत्र तन्माहात्म्यादस्तु नामाभेदाध्यवसाय इति चेत्, इहापि वाच्यव्यवहाराभिन्नतयैव च प्रस्तुतव्यवहारप्रत्यय इत्यवैलक्षण्यमेवेति सत्यम्। 'यस्मिन् खेलति, दिगन्ते श्रूयन्ते' इत्यादौ वाच्यार्थताटस्थ्येनैव व्यङ्ग्यस्य प्रतीतेः सर्वसहृदयसम्मतत्वात्। क्वचित्तु संबोधनस्य तत्तद्विशेषणस्य चानुपपत्त्या अभेदांशोऽप्यपेक्ष्यते, न तावता सर्वत्राभेदेन प्रतीतिः। किं चाप्रस्तुतप्रशंसायां प्रस्तुतं व्यङ्ग्यमिति निर्विवादम्। निगीर्याध्यवसानेन तु लक्ष्यं स्यात्। अपि च यत्र वाच्यस्यात्यन्ताप्रस्तुतत्वं तत्राभिधाया अपर्यवसानात् स्यादपि कदाचिल्लक्षणाया अवकाशः। यदा तु द्वयोरप्यर्थयोः प्रागुक्तदिशा प्रस्तुतत्वं तदा तु बाधलेशास्फुरणाल्लक्षणागन्धोऽपि नास्ति। कुतः पुनर्निगरणं लक्षणैकदेशः। किंत्वागूरणमेवेति। तत्राप्रस्तुतप्रशंसायाः सादृश्यमूलाया आवश्यकत्वादन्यत्रापि तज्जातीयस्थले सैवोचिता।

---

पादनीयत्वात्। प्रतीतिः● गङ्गात्वेन तटस्य गङ्गापदात्। इह● आपेदिरे इत्यादौ सरोवृतान्तराजवृतान्तयोस्ताटस्थ्येन प्रत्ययात्। यत्र तु● नीचोऽस्मीत्यादौ। इहापि● पूर्वपक्षान्तरगतं समाधानम्। वाच्यव्यवहारा● इहापीत्यनेन सामान्यतोऽप्रस्तुतप्रशंसापरामर्शे इदम्। आपेदिर इत्यस्य परामर्शे तु प्रथमे राजवृतान्तमात्रस्य प्रस्तुतत्वपक्षाभिप्रायेण समन्वेयम्। सत्यम्● एतावान् पूर्वपक्षः। उत्तरस्तु अभेदस्याननुभवात् ताटस्थ्यप्रतीत्याऽप्युपस्कार्योपस्कारकभावात्। क्वचित्तु● मलिनेऽपीत्यादौ। न तावता● तत्रापि पदार्थनिगरणसम्भावनायामपि वाक्यार्थस्यानिगरणादस्या अवकाशः। अपि च यत्र● नीचोऽस्मीत्यादौ। यदा तु● मलिनेऽपि, आपेदिर इत्यादौ च। बाधलेश● एतेन मर्मप्रकाशीयध्वनित्वबाधकानुपपत्तिरस्थाने इति बोध्यम्। वाक्ये लक्षणाऽसम्भवोऽपि समुच्चेयः। किन्त्वा● आगूरणं ध्वननम्। तत्राप्रस्तुत● आपेदिर इत्यत्र। तज्जातीय●

यदि तु प्रकारस्यास्य ध्वनिप्रभेदत्वाद् ध्वनेश्चालङ्कार्यस्यालङ्कारत्वानुपपत्तिरिति सूक्ष्ममीक्ष्यते, तदाप्रस्तुतप्रशंसाया भेदान्तरमेव विषय इत्यपि वदन्ति ।

इति रसगङ्गाधरेऽप्रस्तुतप्रशंसानिरूपणम्

अथ पर्यायोक्तम्—

विवक्षितस्यार्थस्य भङ्ग्यन्तरेण प्रतिपादनं पर्यायोक्तम् ।

येन रूपेण विवक्षितोऽर्थस्तदतिरिक्तः प्रकारो भङ्ग्यन्तरम्। आक्षेपो वा ।

यथा—

'त्वां सुन्दरीनिवहनिष्ठुरधैर्यगर्व-
निर्वासनैकचतुरं समरे निरीक्ष्य ।
केषामरिक्षितिभृतां नवराज्यलक्ष्मीः
स्वामिव्रतात्वमपरिस्खलितं बभार ॥'

---

समासोक्तौ गते पुरा स्रोतो यत्रेत्यादौ । प्रकारस्यास्य● सादृश्यमूलकस्य । भेदान्तरमेव● कार्यकारणसामान्यविशेषाः ।

॥ अप्रस्तुतप्रशंसानिरूपणम् ॥

पर्यायोक्तनिरूपणम्

पर्यायेण प्रकारान्तरेण उक्तं कथनम् । अर्थाद्विवक्षितार्थस्येति शेषः । तत्फलितं लक्षणमाह **विवक्षितार्थस्य●** भङ्ग्यन्तरशब्दार्थमाह वृत्तौ **येन रूपेण●** येन प्रकारेण वक्तुमिष्टोऽर्थस्तद्भिन्नप्रकारेण प्रतिपादनं भङ्ग्यन्तरम् । विवक्षितमर्थं व्यञ्जनया प्रतिपादयितुं प्रकारान्तरेणाभिधया प्रतिपादनमित्यर्थः । व्यङ्ग्यमेव प्रकारान्तरेण यत्र प्रतिपादितमिति यावत् । **आक्षेपो●** अस्य पक्षान्तरबीजन्त्वग्रेऽत्रैव प्रकरणे अभिनवगुप्तपादाचार्यमतनिष्कर्षप्रतिपादने मूलकृतोक्तम् । विवक्षितार्थस्य आक्षेपेण प्रतिपादनम् । अनेन प्रकारेण विवक्षितार्थस्याभिधया प्रतिपादनं कार्यं येनाक्षिप्तो विवक्षितार्थो व्यङ्ग्यः स्यादिति सरलार्थः । **त्वां सुन्दरी●** सुन्दरीसमूहस्य कठिनमनिवार-

अत्र सर्वापि शत्रूणां राज्यसम्पत्त्वां प्राप्तेति विवक्षितोऽर्थो न ताद्रूप्येणाभिहितः, अपि तु स्खलत्पातिव्रत्या बभूवेत्याकारेण ।

यथा वा—

'सूर्याचन्द्रमसौ यस्य वासो रञ्जयतः करैः ।
अङ्गरागं सृजत्यग्निस्तं वन्दे परमेश्वरम् ॥'

अत्रापि गगनाम्बर इति सूर्यचन्द्रकररज्यमानवस्त्र इत्याकारेण, भस्माङ्गराग इत्यग्निसृज्यमानाङ्गराग इत्याकारेण च निरूपितः ।

'अस्यां च गम्यस्य येनाकारेण गम्यता तदतिरिक्ताकारेण वाच्यता । तेन पर्यायेण भङ्ग्यन्तरेणोक्तमभिहितं व्यङ्ग्यं

---

णीयं यद् धैर्यस्य गर्वं तस्य निवारणे एकमात्रं चतुरम्. त्वां निरीक्ष्य न कापि सुन्दरी धैर्यं धर्तुं प्रभवति, कामातुरा जायते, सौन्दर्यातिशयस्तवेति भावः। एवं त्वां संग्रामे दृष्ट्वा केषां शत्रुनरपतीनां नूतना राज्यलक्ष्मीरपि सुन्दरी अपरिस्खलितमच्युतं पतिव्रताधर्मं बभार, न केषामपि। समेषामरीणां राज्यलक्ष्मीस्त्वद्दर्शंवदा च्युतव्रता याता ।

अत्र प्रस्तुतराजरिपुलक्ष्मीव्यवहारोऽप्रस्तुतगतसतीत्वधर्मनायिकानायकव्यवहाराभेदेन प्रतीयमानो यद्यपि समासोक्तिमाश्रयति, तथापि भङ्ग्यन्तरस्य प्राधान्यात्पर्यायोक्तेनैव व्यवहारः। समासोक्तिरत्रोत्थापिकेति मूलकृताऽपि वक्ष्यते। व्यङ्ग्यर्थं विवक्षितमाह **सर्वाऽपि** ● प्रकारान्तरेण **प्रतिपादनमाह-स्खलित** ● स्खलितं पातिव्रत्यं यस्याः सा राजलक्ष्मीः। **सूर्याचन्द्रमसौ** ● सूर्यचन्द्रमसोर्द्वन्द्वे देवताद्वन्द्वे चेत्यनेन सूत्रेणानङ्। करैः किरणैः सूर्याचन्द्रमसोः किरणाः यस्य वस्त्ररूपतयोपयुज्यन्ते। अग्निश्च यस्य भस्मसम्पादनद्वारा अङ्गलेपं करोति। वृत्तौ इति शब्देन प्रथमेन विवक्षितोऽर्थः सूचितः। **गम्यस्य** ● व्यङ्ग्यस्य एवं गम्यता व्यङ्ग्यता। व्यङ्ग्यतावच्छेदकातिरिक्तधर्मावच्छिन्ना वाच्यतेत्यर्थः। त्वां सुन्दरीत्यादौ व्यञ्जनया राजलक्ष्मीकर्तृका

यत्रेति प्राचीनैर्निर्मितं लक्षणं व्यङ्ग्यत्ववाच्यत्वयोर्विरोधादसंगतमिति नाशङ्कनीयम्, एकस्यैव प्रकारभेदेन वाच्यत्वव्यङ्ग्यत्वयोरविरोधात्। यथा यावकमहारजनदाडिमीजपाकुसुमादिरूपाणां रक्तत्वादिना वाच्यत्वेऽपि तत्तद्वैजात्यरूपेण प्रत्यक्षत्वमेव, न तु वाच्यत्वम्। एवमिहापि' इति मम्मटभट्टाः।

अलङ्कारसर्वस्वकारस्तु—'गम्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्यायोक्तम्। गम्यस्यैव सतः कथमभिधानमिति चेत्, कार्यादिद्वारेण' इत्याह। तस्यायमाशयः—

---

नृपकर्मिका प्राप्तिरिति बोधः। अभिधया तु काकुसहभूतया नृपदर्शनजन्यं यत्पातिव्रत्यस्खलनं तद्वती राजलक्ष्मीरिति बोधः तथा च प्रकारभेदः स्फुट एव। यत्र● यस्मिन् प्रतिपादने। प्राचीनैः● काव्यप्रकाशकृद्भिः। विरोधात्● यो ह्यभिधीयते न स व्यज्यतेऽभिधाविषयातिरिक्त एव व्यञ्जनाप्रसारात्। धर्मिणि व्यङ्ग्यत्ववाच्यत्वयोर्विरोधादिति शङ्काभिप्रायः। उत्तरं तु जातिशक्तिनय इव न धर्मी अभिधाया विषयः, विषयत्वेऽपि शक्यतावच्छेदकरूपेण शक्यमभिधायाः विषयः। शक्यतावच्छेदकातिरिक्ते न प्रकारेण शक्यमपि न विषयीकरोत्यभिधा। तादृशेऽभिधाया अविषये व्यञ्जनाप्रवृत्तौ बाधकाभावः। काव्यप्रकाशगतनिर्विकल्पकसविकल्पकदृष्टान्त इव केचन विषयाः स्वभावत एव वाच्यवृत्तेरभिधाया अविषयास्तदा प्रकारान्तरेण वस्तूनि अवाच्यानि भविष्यन्तीति का कथेति प्रौढिवादेन अभिधाया अविषयदृष्टान्तं दर्शयति यथा यावक● यावकमलक्तकं महारजनं कुसुम्भम्। एषु रक्तिमाविशेषः प्रत्यक्षेणाकल्पते। नत्वयं रक्तादिशब्दस्य वाच्यतां भजते। मिहापि● पर्यायोक्तोदाहरणेऽपि यः प्रकारो व्यङ्ग्यस्य स न वाच्यस्य। पूर्वप्रतिपादनरीत्या धर्मिणोऽभिधायाः व्यञ्जनायाश्च विषयत्वादभिधायाः विषये व्यञ्जनाविषयताया अभावात् धर्मिण्येकस्मिन् व्यङ्ग्यत्ववाच्यत्वयोर्विरोधवादिनो मतमुपपादयति अलङ्कार● भङ्ग्यन्तरेणेत्यस्य कार्यादिनेत्यर्थस्तन्मते, पूर्वव्याख्यानरीत्या प्रकारान्तरेणेति व्याख्याने विरोधमाशंकते कथमभि● अभिप्रेतमाह कार्यादि● कार्येण

'चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य ।
आलिङ्गनोद्दामविलासवन्ध्यं रतोत्सवं चुम्बनमात्रशेषम् ॥'

इति प्राचीनपद्ये राहुशिरश्छेदकारीति व्यङ्ग्यं राहुवधूजनसंबन्धिचुम्बनमात्रावशिष्टरतोत्सवनिर्मातृत्वेन रूपेण प्रकारान्तरेणाभिधीयत इत्यस्यापि विवेचने क्रियमाणे राहुशिरश्छेदकर्तृत्वरूपो धर्मः स्वसमानाधिकरणेन तादृशरूपान्तरेण साक्षादुपात्तेन गम्यत इत्येव पर्यवस्यति । भगवतस्तु पूर्वप्रकान्तत्वाद्यच्छब्देनाभिहितत्वाच्च न व्यङ्ग्यत्वम् ।

---

वाच्येन व्यङ्ग्यस्य कारणस्य, एवं कारणेन व्यङ्ग्यस्य कार्यस्य । प्रायोऽत्र प्रकरणे अभिधावाच्यादिव्यवहारेण यथासम्भवं लक्षणालक्ष्यो धर्मादि संग्राह्यतयेष्टम् । भूयस्तया मूले व्याख्याने च तथा व्यवहृतमिति ध्येयम् । चक्राभिघात ● भगवता चक्रप्रहारेण राहुशिरश्छेदो विहितः । तेन शिरोमात्रस्य राहोर्वध्वाः रतिश्चुम्बनमात्रशेषा बभूव । अन्यशरीरावयवानामभावेनालिङ्गनमवरुद्धम् । अर्थोऽयं प्रतिपादितः पद्येन । यो हरिश्चक्राभिघातस्य प्रसभमाज्ञयैव न तु मध्ये कश्चिद् व्यापारस्तेन शैघ्र्यातिशयः सूच्यते । राहुपत्नीजनस्य रतोत्सवम् आलिङ्गने योऽधिको विलासस्तस्य वन्ध्यं तेन विरहितम्, चुम्बनमात्रं मुखमात्रेण शेषो यस्मिन्नेवभूतं चकार । अभिधीयते तेषामभिप्रेतमिति प्राचामाशयः । सर्वस्वकारमते तु प्रकारान्तरेण तादृशरतोत्सवकार्येण शिरश्छेदः कारण गम्यते । विवेचने ● आपाततस्ते भगवानेव तादृशरतोत्सवनिर्मातृत्वेन प्रतिपाद्यमानः शिरश्छेदकारित्वेन व्यज्यत इत्येकस्यैव प्रकारभेदाद्वाच्यत्वव्यङ्ग्यत्वे इति भाति, परं सूक्ष्मेक्षणे तादृशनिर्मातृत्वधर्मोऽभिधया प्रतिपाद्यते व्यज्यते तु तदतिरिक्तशिरश्च्छेदकारित्वमिति क्वैकत्र व्यङ्ग्यत्ववाच्यत्वे । इति स्फुटार्थः । निर्मातृत्वं शिरश्छेदकर्तृत्वमुभयोर्भगवति विद्यमानतया सामानाधिकरण्यम् । रूपान्तरं तादृशरतोत्सवनिर्मातृत्वम् । ननु तादृशरूपान्तरेण भगवतः प्रतिपादने व्यङ्ग्यतायाश्च को विद्वेषः ? इत्यत आह भगवतस्तु ● यच्छब्दस्य त्यदादेर्बुद्धिस्थत्वोपलक्षितं यद्विष्णुत्वं तदवच्छिन्ने शक्तत्वादभिधया विष्णुत्वप्रकारकबोधात् । यच्च बुद्धिस्थत्वं शक्यतावच्छेदकमङ्गीकृत्य केषाञ्चित् कुवलयानन्दसमर्थनं तदत्यन्तमसमञ्जसं बुद्धिस्थत्वस्य

एवम्—

'यं प्रेक्ष्य चिररूढापि निवासप्रीतिरुज्झिता ।
मदेनैरावणमुखे मानेन हृदये हरेः ॥'

इति प्राचीनपद्येऽपि शक्रैरावणौ मान-मद-मुक्तौ जाताविति व्यङ्ग्यमपि मान-मद-मोक-मात्रस्य व्यङ्ग्यत्वे पर्यवस्यति, धर्म्यंशस्याभिधागोचरत्वात् । एवं च यो व्यङ्ग्यांशः स न कदापि रूपान्तरपुरस्कारेणाभिधीयते, यश्चाभिधीयते धर्मी स तु तदानीमभिधाश्रयत्वाद् व्यञ्जनव्यापारानाश्रय एवेति व्यङ्ग्यस्य प्रकारान्तरेणाभिधानमसंगतमेव । तस्मात् कार्यादिमुखेनोक्तमिव पर्यायोक्तम् । तेनाक्षिप्तमित्येवार्थः । प्राचीनैर्धर्मिणोऽपि यद्व्यङ्ग्यत्वमुक्तं तद्वैयञ्जनिकबोधविषयस्य समस्तवाक्यार्थस्यैव

---

शक्यतावच्छेदकतायाः सर्वैस्तिरस्कारात् । किन्तु शक्यतावच्छेदकानुगमकत्वमेव तस्य । अन्यथा शक्यतावच्छेदकप्रकारकबोधसमर्थयाऽभिधया तत्प्रकारकानुभवविरुद्धबोधापत्तेः, विष्णुत्वादिप्रकारकानुभूतबोधानापत्तेश्च । अतः शक्यतावच्छेदके उपलक्षणमेव बुद्धिस्थत्वमिति सिद्धान्तग्रन्थप्रसिद्धिः । **यं प्रेक्ष्य** ● हयग्रीववधाख्ये काश्मीरिककविकर्तृके नाटक इदं पद्यम् । हयग्रीवश्च यच्छब्देन परामृष्टव्यः । कासुचिट्टीकासु रावणोऽपि परामृष्टः । यं दृष्ट्वा दीर्घकालनिवासेन प्रवृद्धाऽपि ऐरावतस्य मुखे मदस्य इन्द्रस्य हृदये मानस्य च निवासप्रीतिर्मदेन मानेन च त्यक्ता । **व्यङ्ग्यमपि** ● निवासप्रीतित्यागरूपेणाभिहितम् । **पर्यवस्यति** ● कियानंशोऽभिधया गतार्थः, कियांश्च व्यञ्जनाया विषय इति शेषः । अत्र हि अंशद्वयम्. शक्रैरावणौ धर्मिणौ मदमानत्यागश्च धर्मः । प्रथमांशस्य कृत आह **धर्म्यंश** ● तथा चावशिष्टो धर्म एव व्यञ्जनाविषयः । **व्यङ्ग्यांश** ● धर्मांशः । **कार्यादिमुखेन** ● कारणेन वाच्येन कार्यं व्यङ्ग्यं तथाभूतेन कार्येण कारणं व्यङ्ग्यमित्यादि । यत्तु अप्रस्तुतप्रशंसाप्रकरणे विमर्शिन्यां कार्यकारणयोः प्रस्तुत्वेऽपि कार्य्यात्कारणप्रतीतिवत्कारणात्कार्यप्रतीतेर्वैचित्र्याभावाच्चत्युक्तं न तन्मूलाभिप्रेतम् । वैचित्र्यञ्चात्रैव पण्डितराजेन वक्ष्यते । काव्यप्रकाशग्रन्थस्य गतिं दर्शयति **प्राचीनैः** ● । **वैयञ्जनिकबोध** ● शक्रैरावणकर्तृको हयग्रीवनिरीक्षणोत्तर-

व्यङ्ग्यत्वमित्यभिप्रायेण। तत्र च विवेके क्रियमाणे केचिद-भिधामात्रस्य गोचराः पदार्थाः, केचिच्च व्यक्तिमात्रगोचरा इति।

अभिनवगुप्तपादाचार्यास्तु—'पर्यायेण वाच्यादतिरिक्त-प्रकारेण व्यङ्ग्येनोपलक्षितमुक्तमभिहितं पर्यायोक्तम्' इति योगार्थं लक्षणं चाहुः। तेषामयमाशयः—यदि पर्यायशब्देन प्रकारान्तरं धर्मान्तरमुच्यते, तदा विवक्षितार्थावच्छेदकाति-रिक्तधर्मपुरस्कारेणाभिहितमिति योगार्थः स्यात्। तथा च 'दशवदननिधनकारी दाशरथिः पुण्डरीकाक्षः' इत्यादौ रामत्वातिरिक्तधर्मपुरस्कारेण रामस्यैवाभिधानात्पर्यायोक्त-प्रसङ्गः। न च व्यङ्ग्यं यत्र तेन प्रकारेणोक्तं तत्पर्यायोक्तमिति

---

कालिको भूतकालिकश्च मदमानत्यागः। पदार्थाः● पदार्था एव केचन केचिच्च● पदार्था इत्येव। समस्तवाक्यार्थस्य गम्यत्वन्तूक्तमेव। पदार्थस्य कस्यचिद् वाच्यत्वेऽपि तद्घटितस्य वाक्यार्थस्या भिधेयस्य व्यङ्ग्यत्वेऽपि बाधकाभावः। एवं स्फुटं लेखं दृष्टवतोऽपि अलङ्कारकौस्तुभकृतोऽधस्तनो लेखो न मोदाय विदुषाम्। तथाहि मदमानत्यागस्यापि कथं व्यङ्ग्यत्वम्? तत्प्रविष्टानां त्रयाणामर्थानां मदमानोज्झितशब्दोपात्तत्वे वाक्यकोटि-निविष्टत्वात्। वाच्येऽन्याप्रकारकबोधविषयत्वं व्यङ्ग्ये त्वन्याप्रकारकबोध-विषयत्वमिति चेत् तर्हि ऐरावणशक्रयोरपि कथं व्यङ्ग्यकोटिबहिर्भावोऽभि-हितः। मदादेरैरावणादेश्च वाच्यताभेदस्य ब्रह्मणाऽपि दुरुपपादत्वात्। एवं राहोरपि वाच्यतया राहुशिरश्छेदकारीत्यस्य व्यङ्ग्यत्वं न स्यादिति तद्ग्रन्थः।

व्यङ्ग्येनोप● पर्यायशब्देन व्यङ्ग्य गृह्यते। उक्तमित्यस्याभिहितमर्थः। व्यङ्ग्योपलक्षितमभिधाप्रतिपादितम्। योक्तप्रसङ्गः● विवक्षितार्थतावच्छेदकं रामत्वं तदतिरिक्तेन दशरथापत्यत्वादिना प्रतिपादनात्। व्यङ्ग्यमेव यत्र प्रकारान्तरेणाभिधीयते इत्येवार्थः। रामत्वेन रामस्यात्र व्यङ्ग्यत्वाभावान्नाति-

वाच्यम्, व्यङ्ग्यस्य योगार्थानन्तर्गतत्वात्। न च योगार्थानन्तर्गतत्वेऽपि लक्षणान्तर्गतत्वं तस्येति वाच्यम्। एवं तर्हि व्यङ्ग्यस्य लक्षणप्रवेशावश्यकत्वे पर्यायशब्देन व्यङ्ग्यस्यैव ग्रहीतुमुचितत्वात्। व्यङ्ग्येन ह्युपलक्षितमुक्तं प्रकारान्तरेणैव भवतीति प्रकारान्तरग्रहणं नात्यावश्यकमिति। अत एवास्माभिराक्षेपो वेति पक्षान्तरमप्युक्तम्।

इदं पुनरवशिष्यते—'वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्' इति सकलप्रसिद्धध्वन्युदाहरणेऽधम-

---

प्रसङ्ग इति शङ्कते न च ०। प्रकारान्तरणैव ० यदपि व्यङ्ग्येनोपलक्षितमुक्तन्तदपि प्रकारान्तरणैव भवति। तथा च योगार्थपर्यायशब्दस्य व्यङ्ग्येनोपलक्षितमर्थः। नात्यावश्यकम् ० व्यङ्ग्यस्योपरितोऽध्याहारे इति शेषः। तदर्थमात्रोत्थापकत्वेन त्वावश्यकमेव! अत एव ० विवक्षितार्थस्य व्यङ्ग्यस्य आक्षेपेण प्रतिपादनमित्यत्रैवाभिनवगुप्तपादाचार्यस्य स्वारस्यप्रतिभासादेवेत्यर्थः। एवं पक्षत्रयोपपादनेऽलङ्कारसर्वस्वकारस्य समाधानन्तु मर्मप्रकाशः प्रकाशयति, तथाहि औपाधिकभेदेन घटाकाशादिषु भेदप्रतीतिवत्तत्तद्धर्मरूपोपाधिभेदेन धर्मिणोऽपि भेदाद् व्यङ्ग्यस्याभिधाविषयत्वमस्त्येव। यद्वा व्यङ्ग्यतावच्छेदकापेक्षया वाच्यतावच्छेदकं यत्र चारुतरमित्यत्रैव लक्षणतात्पर्यम्। प्राप्ताप्राप्तविवेकन्यायेन तथैव तात्पर्योन्नयनाद् इति। वापीं स्नातुम् ० निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः। मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे। इति पादत्रयमादिमम्। ध्वनिप्रकरणे प्रागेव मूले सम्यग्विवेचितमिदम्। तदन्तिकमेव रन्तुं गतासीति व्यङ्ग्यशरीरं तत्र विशेषणविशेष्यभावविपर्यासेन त्वधमेन तेन कृतसम्भोगेति दूतीधर्मिकम्, सोऽधमस्त्वां भुक्तवान् इति नायकधर्मिकं वा संभवति। दूत्यपि अधमनिकटगमनविशिष्टा सती अधमनिकटगमननिषेधरूपेण प्रतिपादिता। द्वितीयो धर्मी नायकोऽपि दूतीसंभोगकर्ता अधमत्वेन प्रतिपादित इति व्यङ्ग्यस्यापि प्रकारान्तरेण पर्यायोक्तप्रसक्त्या गुणीभूतव्यङ्ग्यत्व-

निकटगमननिषेधरूपेण तन्निकटगमनविशिष्टायाः, अधमत्वेन रूपेण वा दूतीसंभोगकर्तुरभिधानात्पर्यायोक्तप्रसङ्गः प्राचीनपक्ष इवास्मिन्नपि पक्षे भवति । स च व्यङ्ग्यविशेषग्रहणेन तैरिवैतैरपि निरसनीयः । मध्यस्थपक्षे तु नेदमपि दूषणम् ।

तदेवं पक्षाणां निष्कर्षे स्थिते यदस्मिन् प्रकरणे कुवलयानन्दकारेणोक्तं तत्सर्वमविचारितरमणीयमेव । तथा हि यत्तावदुच्यते—"— 'नमस्तस्मै कृतौ येन मुधा राहुवधूस्तनौ' । अत्र भगवान्वासुदेवः स्वासाधारणरूपेण गम्यो राहुवधूकुचवैयर्थ्यकारकत्वेन रूपान्तरेणाभिहितः" इति, तन्न । अत्र हि राहुवधूकुचौ येन मुधा कृतावित्यभिहितेन राहुवधूकुचवैयर्थ्यकारित्वेन राहुशिरश्छेदकारित्वं व्यज्यत इति तावन्निर्विवादम् ।

---

मापद्येत । विशिष्टाया● दूत्या अभिधानादित्यत्रान्वयः । प्राचीनपक्षे● मम्मटपक्षे । अस्मिन्● अभिनवगुप्ताचार्यमते । तैरिवैतैरपि● मम्मटैरिवैभिरपि । व्यङ्ग्यविशेष● पदार्थतया प्रतिपादितोऽपि धर्मी परं तद्घटितस्य वाक्यार्थस्यानभिधानाद् व्यङ्ग्यत्वम् । न त्विदं वाच्याङ्गीभूतं वाच्यार्थस्य व्यङ्ग्यमन्तराप्युपपत्तेर्ध्वनिप्रकरणे उपपादितत्वात् । मर्मप्रकाशे तु विशेषश्च वक्तृवैशिष्ट्यादिसहकारणानपेक्षत्वम् । किञ्च तत्र व्यङ्ग्यापेक्षया वाच्ये चारुतरत्वाभावस्य सहृदयसम्मतत्वेनाक्षतेः । व्यङ्ग्यमेव हि तत्र वाच्याच्चारु । मध्यमपक्षे● अलङ्कारसर्वस्वमते । तन्मते कार्यादिद्वारस्याङ्गीकारेण दोषाभावात् । नमस्तस्मै● पूर्वार्धं लक्षणीभूतं पर्यायोक्तन्तु व्यङ्ग्यस्य वचोभङ्ग्यन्तराश्रयम् । येन राहुवधूस्तनौ व्यर्थौ विहितौ । शिरोमात्रेण राहुणा आलिङ्गनादेरसम्भवादित्यर्थः । स्वासाधारण्येन● वासुदेवत्वेन रूपेण निर्विवादम्●

भगवद्वासुदेवत्वं तु विशेषणमर्यादालभ्यं न काव्यमार्गीयव्यङ्ग्य-कक्षामारोढुं प्रभवति ।

---

तन्मतेऽपि प्रस्तुताङ्कुरविषयतयेष्टत्वात् । विशेषणमर्यादा ● आसाधारणधर्म-बोधकविशेषणमहिम्ना आसाधारणधर्मज्ञानद्वारा अर्थापत्त्याऽनुमानेन बोद्धुं योग्यम् । विशेषणज्ञानस्य कारणत्वविधया व्याचक्षाणा नावबुध्यन्तेऽस्य स्वारस्यम् । व्यङ्ग्यकक्षाम् ● अन्यत्रानुमेयादीनामपि व्यङ्ग्यत्वेन व्यवहारेऽपि व्यञ्जनामात्रगम्यायाः काव्यमार्गीयकक्षाया विषयतां न भजते । तेन राजाज्ञा-मात्रमेतदिति मर्मप्रकाशोक्तं चिन्तनीयम् । व्यञ्जनामाहात्म्यस्य तादृशस्यैव स्वीकारात् । न च शिरश्छेदकारित्वमसुन्दरमिति कुवलयानन्दसमर्थकानां शोभते तद्व्यङ्ग्यत्वस्य समर्थ्यग्रन्थे एव प्रस्तुताङ्कुरविषयतया समीहितत्वात् । यदप्यलङ्कारचन्द्रिकायाम् राहुशिरश्छेदकारित्वस्य वाच्यसिद्ध्यङ्गत्वेन तेनापि विवक्षितं व्यङ्ग्यं प्रधानभूतं वासुदेवत्वमादायैव तत्कथनौचित्यादिति तदपि न समञ्जसम् । तथाहि व्यङ्ग्यस्य प्रधानतया ध्वनित्वं विवक्षितं गुणीभूतव्यङ्ग्यत्वं वा ? नाद्यः त्वदुक्तविषयस्य गुणीभूतव्यङ्ग्यतायाः सर्वैरालङ्कारिकैरङ्गीकारात् । त्वन्मूलग्रन्थेऽपि भगवान् वासुदेवोऽभिहित इत्यादिना स्फुटमभिधाविषयताया उक्तत्वाच्च । नापि द्वितीयः, वाच्यसिद्ध्यङ्गत्वेन परित्यागफलाभावात् । अलङ्कारकौस्तुभकृतामप्ययमुल्लासः । लोकं पश्यति यस्याङ्घ्रिः स यस्याङ्घ्रि न पश्यति । ताभ्यामप्यपरिच्छेद्या विद्या विश्वगुरोस्तव ॥ १ ॥ गौतमपादः प्रथमेन पादेन, द्वितीयेन च शेषरूपपतञ्जलिगदः । वन्दे देवं जलधिशरधि देवतासार्वभौमम् । व्यासप्रष्ठाभुवनविदिता यस्य वाहाधिवाहाः ॥ भूषापेटी भुवन-मधरं पुष्करं पुष्पवाटी । शाटीपालाः शतमखमुखाश्चन्दनद्रुर्मनोभूः ॥ शरधीकरणं जलधिशयनस्य विष्णोस्त्रिपुरसहारे प्रसिद्धम् । व्यासप्रमुखा ऋषयो वेदानां वाहानामधिकृताः । पातालं नागरूपभूषणपेटी । गगनं चन्द्रस्वरूपपुष्पस्य वाटिका । वस्त्रदिशापाला इन्द्रादयः । भस्माङ्गरागायमाणः कामश्चन्दनतरुः । कुवलयानन्द उदाहरणभूतं पद्यद्वयम् । प्रथमे गूढपादत्वादिकं वाच्यप्राय-मेवेति पतञ्जलित्वाद्याकारेण व्यङ्ग्यत्वम्, एवं द्वितीये वेदत्वादिनाऽसाधारण-रूपेण व्यङ्ग्यत्वन्त्वथाऽप्यनुमन्तव्यमेवेति कुवलयानन्दकृतां रीतिः कथं-नाद्रियत इति । अत्रेदं चिन्त्यते—प्रथमे प्रकृत इव लोकदर्शनलोककर्तृकादर्शन-कार्याभ्यां कारणं गूढपादत्वादिकारणं व्यज्यत इति किमनुपपन्नम् । द्वितीयमपि

अन्यथा 'नमो राहुशिरश्छेदकारिणे दुःखहारिणे' इत्यत्रापि भगवद्वासुदेवत्वव्यङ्ग्यताप्रयुक्तं पर्यायोक्तमलङ्कारः स्यात्। विशेषणमर्यादालभ्यस्य च धर्मस्य किञ्चिद् व्यङ्ग्यतास्पर्शः सन्नपि न स काव्यमार्गे गण्यते, असुन्दरत्वात्। अन्विताभिधाने अतिविशेषवपुष इव सामान्यरूपाणां पदार्थानामन्वये। किं च 'राहुस्त्रीकुचनैष्फल्यकारिणे हरये नमः' इत्यत्र भगवतः

---

निगरणरूपकाभ्यामालिङ्गितत्वान्नास्योदाहरणं भवतु। परमेश्वरवाहत्ववेदत्वयोः प्रकृतकुचवैयर्थ्यकारित्ववासुदेवत्वयोरिवाक्षेप्याक्षेपकभावापन्नत्वात्। यदि न तादृशं तदा वेदत्वादिना व्यङ्ग्यत्वेनाप्युदाहरणमस्तु, अन्यस्य व्यङ्ग्यस्यानुपस्थानदशायाम्। अन्यथा● विशेषणमर्यादालभ्यस्यापि व्यङ्ग्यत्वेन स्वीकृतौ। अत्र कतिपयदीक्षितपक्षपातिनः। व्यङ्ग्यापेक्षया वाच्यस्य चमत्कारित्वे इष्टापत्तेः। अतत्वे तु चारुतरेणेति विशेषणदानेन व्यावृत्तेरिति वदन्ति। अत्रापि व्यङ्ग्यकृतश्चमत्कारः कश्चिदिति सहृदयहृदयं मन्वीत। अत इष्टापत्तिः सम्यङ् न प्रतिभाति। द्वितीये तु वासुदेवत्वमपेक्ष्य शिरश्छेदकारित्वं दुःखहारित्वञ्चाचार्विति कया रीत्या परीक्ष्येत। कौस्तुभकृतां 'प्रकारान्तरेणाभिधानेऽपि सहसैव भगवत्वप्रकारकबोधोदयान्नातिप्रसङ्गः' इति पङ्क्तिः संदिग्धभावार्था।

विशेषत आलोचने पण्डितराजपक्षेऽपि समायाति विस्तरभयान्नालोच्यते। किञ्चिद् व्यङ्ग्यता● आसाधारण्यस्यासन्नवर्तिदशायामिति शेषः। अन्विताभिधान● उपस्थित एवार्थः शाब्दविषयतां भजते नान्यः। उपस्थितिरपि शक्तिलक्षणादिसहकारेण नान्यसम्बन्धेन, अन्यथा घटपदादपि कदाचनोपस्थितस्य गगनस्य शाब्दत्वापत्तेः। अतः शाब्दविषयस्य संसर्गस्योपस्थिततये संसर्गरूपान्वयविशिष्टे पदार्थे पदानां शक्तिरुपेया। परं वाक्यार्थे विशेषेणसंसर्गाः परिस्फुरन्ति, न तु तेषु विशेषेषु शक्तिग्रहः सम्भवति, वाक्यार्थबोधात् प्राग्विशेषेणानुपस्थितेः। तथा च सामान्यतोऽभिधेयस्य विशेषतयाऽनभिधेयस्यापि संसर्गस्य वाक्यार्थबोधविषयस्य व्यङ्ग्यकल्पस्य न व्यङ्ग्यतया काव्यमार्गे आदरस्तथा विशेषणमर्यादया लभ्यस्य वासुदेवत्वस्य प्रकृते। विशेषवपुषः● विशेषाकारस्य संसर्गस्य। मन्वये● शाब्दबोधे। पदार्थानां● पदशक्यानां

स्वशब्देनाभिधेयस्य स्वासाधारणरूपेणाप्यगम्यत्वाद्राहुशिरश्छेद-कारित्वेनैव व्यङ्ग्यत्वमेष्टव्यम्, न स्वासाधारणरूपेण। न चात्र पर्यायोक्तं नास्तीति कस्यापि संमतम्।

यदप्युक्तम् 'सर्वस्वकारस्य लोचनकर्तुश्च सर्वोऽप्ययं क्लेशः किमिति न विद्मः' इति, तत्र यदर्थं तेषां क्लेशस्तत्तु तन्मत-निष्कर्षावसर एव निरूपितम्।

यदप्युक्तम् "–'चक्राभिघातप्रसभाज्ञया' इति प्राचीनो-दाहरणे यद्राहुशिरश्छेदावगमनं तत्र प्रागुक्तरीत्या प्रस्तुताङ्कुर एव। यत्तु प्रस्तुतेन राहोः शिरोमात्रावशेषेणालिङ्गनवन्ध्या-

---

संसर्गाणाम्। अथवा घटत्वेन घटः सामान्यतया घटपदाभिधेयः। घटेन जलमाहरेत्यादौ जलान्वयिनो घटस्य न सामान्यतया वाक्यार्थबोधे भानमपि तु अलाहरणयोग्यस्य सच्छिद्रेतरतया। तथा च सच्छिद्रेतरतयाऽनभिधेयस्य वाक्यार्थे च तथा प्रतीतिर्घटस्य व्यङ्ग्यकल्पता। अस्मिन् पक्षे विशेषवपुष इति पदार्थपरम्। अन्यच्च पूर्ववत्। प्रथमं तु स्फुटतया प्रसिद्धिं गतं द्वितीयमपि क्वचिदाप्यते। प्रकाशग्रन्थोऽप्येतद्विषयक एवमभिप्रायक एव। प्राप्यते च विभिन्नटीकासु मतद्वयमपि। **मेष्टव्यम्** ● न तु प्रस्तुताङ्कुरविषयतयाऽङ्गी-कारेण निर्वाहोऽनुपदमेव निरासात्। मर्मप्रकाशस्य 'मदेनैरावणमुखे' इत्यादि-काव्यप्रकाशोदाहरणे तादृशव्यङ्ग्यस्यैव सत्त्वाद् इत्युद्घोषः स्फुटं भेदप्रतीत्या विलाप एव। **कस्याऽपि** ● त्वां विहायान्येषां समेषां सर्वस्वकारादीनाम्। तथा च युक्त्यसहोऽपि क्वचित्प्राचामनुरोधेनापि व्याख्यायेत्। न सोऽपि प्राचामनु-रोधस्त इति भावः। एतेनालङ्कारसर्वस्वादविरोधं गुणं गणयन्तः कुवलयानन्द-समर्थकाः परास्ताः। **निरूपितम्** ● त्वदीयन्त्वज्ञानं दोश इति ध्वनितम्। **भिघात** ● चक्राभिघातमिति णमुलन्तं पाठो मर्मप्रकाशरीत्याश्रितं परं बहुत्रैव-मेव पाठो दृश्यते समस्तम्। **प्रस्तुताङ्कुर एव** ● प्रस्तुतेन कार्येण प्रस्तुतस्य-कारणस्यावगमनरूप इति प्रतिपादितञ्च। **यत्तु** ● यत्त्वित्येतदवगमनान्वयि

त्वाद्यापादनरूपे वाच्ये भगवतो रूपान्तरे उपपादिते भगवद्रूपेणावगमनं तत्पर्यायोक्तस्य विषयः" इति, तदपि न।

यदि राहुशिरश्छेदावगमनं त्वत्कल्पितस्य प्रस्तुताङ्कुरस्य विषयः स्यात्तदा किं पर्यायोक्तेन? भगवद्रूपेणावगमनं तु विशेषणमर्यादालभ्यत्वेनासुन्दरम् 'नमो राहुशिरश्छेदकारिणे' इत्यादाविव न कस्याप्यलंकारस्य विषय इत्युक्तमेव। प्रस्तुताङ्कुरस्य प्राचीनैरस्वीकाराच्च। स्वीकारे वा प्रस्तुतेन स्वसदृशो वाक्यार्थः प्रस्तुत एव यत्र व्यज्यते, स तस्य विषयोऽस्तु। न तु कार्येण प्रस्तुतेन कारणावगमनम्। अन्यथा 'ह्यप्रस्तुतेन कार्येण प्रस्तुतकारणावगमने अप्रस्तुतप्रशंसैव। प्रस्तुतेन कार्येण प्रस्तुतस्यैव कारणस्यावगमनं तु पर्यायोक्तस्य विषयः' इत्यलङ्कारसर्वस्वकारादिभिः प्राचीनैः कृतो विषयविभाग उच्छिन्न एव स्यात्। 'राहुवधूगतेन विशिष्टेन रतोत्सवेन राहुशिरश्छेदः कारणरूपो गम्यते। एवमन्यत्रापि पर्यायोक्तं ज्ञेयम्' इति त्वदुपजीव्यग्रन्थविरोधाच्च। तस्मादत्र राहुशिरश्छेदकारित्वेनावगमः पर्यायोक्तस्य विषयः, न तु भगवद्रूपेणेति सहृदयैराकलनीयम्।

---

तदित्यनेनपरामृश्यमानम्। किं पर्यायोक्तेन ● निर्विषयं स्यादितिभावः। तदुक्तो विषयो न भवितुमर्हतीत्याह भगवद् रूपेण ● असुन्दरत्वं काव्यमार्गानाश्रितत्वम्। तत्र हेतु र्विशेषणेति। लभ्यत्वं तत्स्वारस्यं प्राक् प्रदर्शितम्। विषयः ● असुन्दरत्वम्। प्राचीनासम्मतमलङ्कारमादाय प्राचीनखण्डनं न स्वकल्पितेनेत्यप्याह प्रस्तुताङ्कुरस्य ●। कारणावगमनम् ● एतद्विषयेऽस्याप्यङ्गीकारेऽलङ्कारान्तरविषयेऽतिप्रसङ्ग इति भावः। उच्छिन्नः स्यात् ● एवञ्च विषयविभागमनुरूध्याऽपि प्रस्तुताङ्कुरस्य सदृशविषयत्वमस्तु न तु कार्येण कारणावगमः। बहुत्रानुकरणीयस्य श्रीमतः सर्वस्वकारस्यापि विरोधं दर्शयति राहुवधू ●। विशिष्टेन ● आलिङ्गनविरहविशिष्टेन। भगवद्रूपेण ●

अस्मिश्चालङ्कारे व्यङ्गयं वाच्यपरम्। अप्रस्तुतप्रशंसायां तु वाच्यं व्यङ्गयपरम्। तेनायमलङ्कारो वाच्यसिद्धयङ्गगुणीभूतव्यङ्गयभेद इति ध्वनिकारानुयायिनः।

यत्तु—

"—'स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम्।
उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥'

---

अत्र मर्मप्रकाशविलासोऽयम्। पण्डितराजपरिष्कृताप्रस्तुतप्रशंसायाः शिरश्छेदकारित्वव्यङ्ग्यांशे प्रसक्त्या पर्यायोक्तवैयर्थ्यं कथं समाश्रीत ? न च द्वयोरपि प्रस्तुतत्वेन समाधानम्। आपेदिरेऽम्बरेत्यादौ द्वयोः प्रस्तुतत्वेन प्रस्तुताङ्कुराङ्गीकारापत्तेः। इष्टापत्तौ प्रस्तुताङ्कुरेण गतार्थता पर्यायोक्तस्यापद्यत एव। न च पर्यायोक्ते व्यङ्ग्यं वाच्यपरमप्रस्तुतप्रशंसायान्तु वाच्यं व्यङ्ग्यपरमिति वाच्यम् कस्त्वं भो इत्यादावप्रस्तुतप्रशंसायां व्यङ्ग्यस्यावाच्याङ्गत्वेन तस्याभेदकत्वात्। इति। तस्याक्षेपं पराजिहीर्षुरेव पण्डितराज आह सहृदयैराकलनीयम्। इदमाकलनस्वरूपम्। आपेदिर इत्यादौ यथाऽप्रस्तुतप्रशंसा तथामूले विचारितम्। मुख्यत्वञ्च परिष्कृत्य मर्मप्रकाशटीकायां शिथिलीकृतः। प्रस्तुताङ्कुरन्तु नैवाङ्गीकार्यम्। इत्यपि गतम्। कस्त्वं भोरित्यादिपद्यमलङ्कारसर्वस्वे नीचोस्मीत्यादिपद्यसमशीलम्। व्यवस्था तु यथापेदिर इत्यादिपद्ये विहिता तथैव समीचीना, तथैव व्यवस्थयात्रापि अप्रस्तुतप्रशंसा कथमायातीति गतार्थम्। किञ्च वाच्यं व्यङ्ग्यपरमित्यादेरपि वाच्यं व्यङ्ग्याङ्गमित्यर्थो न तथा सति ध्वनित्वापत्तेः। दर्शितञ्च मूलकृताऽप्रस्तुतप्रशंसायामपि गुणीभूतव्यङ्ग्यविवेचनम्। किन्तु वाच्यं स्वस्मिन् मुख्यं तात्पर्यं नावहति प्रस्तुते व्यङ्ग्य एवेत्याद्यूह्यम्। इति दिक्। वाच्यपरम् ० व्यङ्ग्यापेक्षया वाच्यार्थस्य प्राधान्यम्। व्यङ्ग्यपरम् ० वाच्यार्थापेक्षया व्यङ्ग्यार्थस्य प्राधान्यम्। इत्येवार्थोऽग्रिमसंदर्भेण स्फुटो जायते। वाच्यसिध्य ० वाच्यसिद्धेरङ्गं तत एव गुणीभूतं व्यङ्ग्यम्। वाच्यसिद्धिर्वाक्यार्थबोधस्तत्राङ्गं तत्र प्रकारीभूतमित्यर्थः। स्वसिद्धये ० स्वस्य शक्यार्थस्य परम्परया समभिव्याहृतपदार्थेऽन्वयसिद्धये स्वविशेष्यतया परस्याक्षेप उपादानम्। यथा कुन्ताः प्रविशन्तीत्यत्र कुन्तानामचेतनानां प्रवेशक्रियान्वयसिद्धये कुन्तविशिष्टानामाक्षेपः। इयमेवा-

इत्युक्तयुक्त्या लक्षणाद्वयाश्रितत्वादनयोरवान्तरोऽपि विषयभेदोऽस्ति" इति स्वमूलग्रन्थाशयं वर्णयता विमर्शिनीकारेणोक्तम्, तन्न । नहि 'चक्राभिघातप्रसभाज्ञयैव—' इति पद्ये चुम्बनमात्रशेषरतोत्सवांशे बाधोऽस्ति, येन लक्षणा स्यात् । एवमप्रस्तुतप्रशंसायामप्यप्रस्तुतस्य प्रस्तुते न लक्षणा, किं तु व्यञ्जनैवेति सर्वसम्मतम् । अन्यथा पर्यायोक्ते वाच्यस्य प्राधान्यम्, अप्रस्तुतप्रशंसायां तु गम्यस्येति सिद्धान्तस्य भङ्गः स्यात् । लक्षणायां हि लक्ष्यस्यैव प्राधान्यं स्यात्, न वाच्यस्य । 'यत्र वाच्योऽर्थोऽर्थान्तरं स्वोपस्कारकत्वेनागूरयति तत्र पर्यायोक्तम्, यत्र स्वात्मानमेवाप्रस्तुतत्वात्प्रस्तुतमर्थान्तरं प्रति समर्पयति तत्राप्रस्तुतप्रशंसा' इति तन्मूलग्रन्थविरोधाच्च । नहि लक्षणा आगूरणं भवति । तस्मात्पर्यायोक्ते वाच्यस्य प्राधान्यम्, अप्रस्तुतप्रशंसायां तु नेति तन्मूलग्रन्थस्य तात्पर्यम् ।

---

जहत्स्वार्थाप्युच्यते, लक्ष्यार्थे शक्यार्थस्यापि भासमानतयाऽत्यागात् । सैवोपादानलक्षणा । लक्षणलक्षणा तु परस्याशक्यार्थस्य समभिव्याहृतपदार्थेऽन्वयस्य सिद्धये स्वस्य शक्यार्थस्य समर्पणं त्यागः । यथा गङ्गायां घोष इत्यत्र तीरस्य घोषान्वयसिद्धये प्रवाहस्य त्यागः । इयमेव जहत्स्वार्था । लक्ष्यार्थे प्रकारतयाऽपि शक्यार्थस्याभानात् । शुद्धाया एव भेदद्वयं न गौण्या इति शेषार्थः । काव्यप्रकाशकारिकेयम् । दनयोरवान्तर● पर्यायोक्तस्योपादानलक्षणाश्रितत्वमप्रस्तुतप्रशंसाया लक्षणलक्षणाश्रितत्वम् । वान्तरोऽपि● प्रस्तुतत्वाप्रस्तुतत्वाकलनमन्तरेणापि लक्षणाभेदकृतः । अपिशब्देन मूलकृतोऽनुपदं मूले प्रतिपादितो विषयविभागः समुच्चीयते । स्वमूलग्रन्थोऽलङ्कारसर्वस्वम् । मुख्यार्थबाधाभावद्वारा लक्षणाभावं दर्शयति न हि● । **सर्वसम्मतम्●** अपसिद्धान्तप्रतिपादनं टीकाकृतः । प्रतीतिविरोधं दर्शयति अन्यथा● कस्यचिल्लक्षणाङ्गीकारे । टीकाकर्तुर्मूलग्रन्थविरोधो महान् दोष इति तमपि दर्शयति यत्र वाच्यो● एवं वाच्यम् । आगूरणं व्यञ्जनम् । अलङ्कारसर्वस्वमूलार्थं स्फोरयन्नाह तस्मात्●

इदं तु बोध्यम्—ध्वनिकारात्प्राचीनैर्भामहोद्भटप्रभृतिभिः स्वग्रन्थेषु कुत्रापि ध्वनिगुणीभूतव्यङ्ग्यादिशब्दा न प्रयुक्ता इत्येतावतैव तैर्ध्वन्यादयो न स्वीक्रियन्त इत्याधुनिकानां वाचोयुक्तिरयुक्तैव। यतः समासोक्तिव्याजस्तुत्यप्रस्तुतप्रशंसाद्यलङ्कारनिरूपणेन कियन्तोऽपि गुणीभूतव्यङ्ग्यभेदास्तैरपि निरूपिताः। अपरश्च सर्वोऽपि व्यङ्ग्यप्रपञ्चः पर्यायकुक्षौ निक्षिप्तः। नह्यनुभवसिद्धोऽर्थो बालेनाप्यपह्नोतुं शक्यते। ध्वन्यादिशब्दैः परं व्यवहारो न कृतः। नह्येतावतानङ्गीकारो भवति। प्राधान्यादलङ्कार्यो हि ध्वनिरलङ्कारस्य पर्यायस्य कुक्षौ कथंकारं निविशतामिति तु विचारान्तरम्।

अयं चालङ्कारः क्वचित्कारणेन वाच्येन कार्यस्य गम्यत्वे, क्वचित्कार्येण कारणस्य, क्वचिदुभयोदासीनेन संबन्धिमात्रेण संबन्धिमात्रस्य चेति विपुलविषयः।

तत्र 'त्वां सुन्दरीनिवह—' इति पद्ये पातिव्रत्यस्खलनेन कारणेन तं प्रति प्राप्तिः कार्यं गम्यते। समासोक्तिरत्रोत्थापिका। एतेन 'कार्यात्कारणप्रतीतिवत्कारणात्कार्यप्रतीतेर्वैचित्र्याभावात्' इति टीकाकारोक्तमपास्तम्।

---

एतावतैव● एतच्छब्दव्यवहाराभावमात्रेण तैर्भामहादिभिः। रयुक्तैव● अर्थस्य शब्दान्तरेण व्यवहारात्। तर्हि ध्वनिरूपस्यापि पर्यायोक्तकुक्षौ कथं निक्षेप इत्याह प्राधान्याद ●। विचारान्तरम्● वस्तुसिद्धौ कस्य प्राधान्यं कस्याप्राधान्यमिति विचारान्तरम्।

रत्रोत्थापिका● यथा च सा तथा पद्यव्याख्याने निरूपितम्। टीकाकारो● अलङ्कारसर्वस्वटीकाविमर्शिनी अप्रस्तुतप्रशंसाप्रकरणस्था प्राङ्निरूपिता। अपास्तम्● यथा क्रमेण व्यङ्ग्यव्यञ्जकयोः कार्यकारण-

'अपकुर्वद्भिरनिशं धृतराष्ट्र तवात्मजैः ।
उप्यन्ते मृत्युबीजानि पाण्डुपुत्रेषु निश्चितम् ॥'

अत्र बीजवापेन कारणेन कुलक्षयः कार्यरूपो गम्यते ।

कार्येण कारणस्य गम्यत्वे यथा—

'त्वद्विपक्षमहीपालाः स्वर्बालाधरपल्लवम् ।
पीडयन्तितरां तीव्रदारुणैर्दशनक्षतैः ॥'

अत्र वैरिणां सुरवधूसंभोगेन कार्येण मरणं कारणं गम्यते । तदुभयोदासीनेन यथा—'सूर्याचन्द्रमसौ यस्य—' इति पूर्वोदाहृते पद्ये सूर्यचन्द्रकररज्यमानवस्त्रत्वेन न कार्येण, नापि कारणेन, केवलं सहचरितेन गगनाम्बरत्वं गम्यते ।

एवम्—

'यश्चरणत्राणीकृतकमलासनपन्नगेन्द्रलोकयुगः ।
सर्वाङ्गावरणपटीकृतकनकाण्डः स वामनो जयति ॥'

---

प्रतीतिकृतश्चमत्कारस्तथा कारणकार्यभावप्रतीतिकृतोऽपीति । समासोक्तिकृतस्तु वर्तत एव । विपुलविषय इति तु अनुपदमेवोक्तम् । अपकुर्वद्भिः● हे धृतराष्ट्र ! निरन्तरं पाण्डुपुत्राणामपकारं कुर्वद्भिस्तव पुत्रैः पाण्डुपुत्रेषु निश्चितं मृत्युबीजानि उप्यन्ते रोप्यन्ते । वप् धातोः कर्मणि । पाण्डुपुत्रैरेषां विनाशो भविष्यतीतिभावः । त्वद्विपक्ष● तव शत्रुराजाः तीक्ष्णैः कठिनैश्च दन्ताघातैर्वीरगत्या स्वर्गताः सन्तः स्वर्गवेश्यानाम् अधरपल्लवम् अतिशयेन पीडयन्ति । समरमृता अमराङ्गनाभिः सह विहरन्तीति प्रसिद्धिः ।

उदासीनेन● कार्यकारणभावातिरिक्तसम्बन्धेन । कार्येण● रज्यमानवस्त्रत्वं गगनाम्बरत्वं प्रति न कार्यं न कारणम् । तदतिरिक्त सम्बन्धमाह सहचरितेन● साहचर्यं सम्बन्धः । यश्चरण● यो वामनो भगवान् बलेश्छद्मसमये उपानत् कृतं मृत्युलोकं पाताललोकं स्वर्गलोकं येन तथा सर्वशरीराच्छादनाय वस्त्रं कृतं ब्रह्माण्डं सकलं येन स सर्वोत्कर्षेण वर्तते । त्राणीपटीत्यत्र

इत्यत्र च्विप्रत्ययेन तद्भेदावगमाद्रूपकासंभवेन पर्यायोक्तं भवितुमर्हति । गम्यं चान्तर्व्याप्तचरणकत्वमन्तर्व्याप्ताङ्गकत्वं च ।

तदेवं संक्षेपतस्त्रिविधः । वाग्भङ्गीनां तु पर्यालोचने एकस्मिन्नेव विषयेऽनन्तप्रकारः संपद्यते किमुत विषयभेदे । यथा 'इह भवद्भिरागन्तव्यम्' इति विषये 'अयं देशोऽलङ्कर्तव्यः' इति, 'पवित्रीकर्तव्य' इति, 'सफलजन्मा कर्तव्यः' इति, 'प्रकाशनीय' इति, 'देशस्यास्य भाग्यान्युज्जीवनीयानि' इति, 'तमांसि तिरस्करणीयानि' इति, 'अस्मन्नयनयोः संतापो हरणीयः' इति, 'मनोरथः पूरणीयः' इत्यादिः । कार्यादीनां त्वारोपेण निष्पत्तिरन्वेष्टव्या ।

एवं च पर्यायोक्तस्य कार्यरूपाप्रस्तुतप्रशंसया विषयापहारमाशङ्क्य कार्यकारणयोरपि प्रस्तुतत्वे पर्यायोक्तम्,

---

च्विप्रत्ययान्ततयेकारः । कमलासनादीनां त्रयाणां लोकयुगमित्यत्रान्वयः । तद्भेदा॰ पादत्राणलोकयोः पटब्रह्माण्डयोर्भेदावगमात् । अभूततद्भावे च्विप्रत्ययात् । चरणत्राणतामनापन्नस्य तत्त्वसम्पादनात् । गम्यम्॰ सहलोकत्रयगतपादत्राणीकृतत्वेन सहचरितमिति शेषः । लोकत्रये व्याप्तचरणम्, मृत्युलोको ब्रह्मणोलोकः, पन्नगलोकं पातालम् इन्द्रलोकः स्वर्गः लोकयुगे एकपाद इति कृत्वेदं व्याख्यानम् । लोकद्वयमेव वा ग्राह्यम् । ब्रह्माण्डस्य वस्त्रीकरणाद् ब्रह्माण्डव्याप्तं विराजोऽङ्गम् । त्वारोपेण॰ कार्यकारणभावश्चेह ज्ञानयोरित्यप्रस्तुतप्रशंसाप्रकरणस्योक्तिवज् ज्ञाननिष्ठकार्यत्वादेर्विषये आरोपेणेत्यर्थः । अत्रत्यमर्मप्रकाशे 'अयञ्चालङ्कारः क्वचिदित्यादिरन्वेष्टव्येत्यन्तो ग्रन्थश्चिन्त्य इति कुवलयानन्दे ध्वनितं तट्टीकायां स्पष्टं तत एव बोध्यम्' इत्युपलभ्यते । न काचिट्टीका मद्दृग्गोचरमाप्ता यत्र स्पष्टं लिखित भवेत् । मूलग्रन्थस्तु कुवलयानन्दस्य कार्यकारणादिभेदप्रपञ्चं न मनुते कारणव्यङ्ग्यन्तु प्रस्तुताङ्कुरेण

कार्यस्याप्रस्तुतत्वे कारणस्य च प्रस्तुतत्वे कार्यरूपाप्रस्तुत-प्रशंसेति विषयविवेकः सर्वस्वकृता कृतः। तत्र न्यूनविषयया कार्यरूपाप्रस्तुतप्रशंसया बहुविषयस्यास्य विषयापहारो न संगच्छत एव। परं त्वनेन तस्या विषयापहारमाशङ्क्य विषयविभागः कर्तुमुचितः।

इति रसगङ्गाधरे पर्यायोक्तप्रकरणम्।

---

गतार्थयति ततः स्फुट एव विरोधः, स च गतेन मूलानुसारिणैव व्याख्यानेन खण्डित इति नात्र किञ्चिच्चिन्तनीयं प्रत्येमि। सर्वस्वकृता कृतः● इत्थं हि तस्य मूलग्रन्थः। ननु कार्यात्कारणे गम्यमानेऽप्रस्तुतप्रशंसायामिष्यमाणायां येन लम्बालकः सास्रः कराघातारुणस्तनः॥ अकारि भग्नवलयो गजासुरवधूजनः॥ १॥ चक्राभिघातेत्यादि॥ २॥ इत्यादौ सुप्रसिद्धे पर्यायोक्तविषयेऽ-प्रस्तुतप्रशंसाप्रयोगः। अत्र हि गजासुरवधूगतेन लम्बालकत्वादिना कार्येण कारणभूतो गजासुरवधः प्रतीयते तथा राहुगतेन विशिष्टेन रतोत्सवेन राहुशिर-श्छेदः कारणरूपो गम्यते। एवमन्यत्रापि पर्यायोक्तविषये ज्ञेयम्। तस्माद-प्रस्तुतप्रशंसाविषयत्वात्पर्यायोक्तस्य निर्विषयत्वप्रसङ्गः। नैष दोषः। इह यत्र कार्यात्कारणं प्रतीयते तत्र कार्यं प्रस्तुतमप्रस्तुतञ्चेति द्वयी गतिः। यत्र यत्र प्रस्तुतत्वं कार्यस्य कारणवत्तस्यापि वर्णनीयत्वात् तत्र कार्यमुखेन कारणं पर्या-योक्तमिति पर्यायोक्तालङ्कारः। तत्र हि कारणापेक्षया कार्यस्यातिशयसौन्दर्य-मिति तदेव वर्णितम्? तेनोक्तोदाहरणद्वये। अत्र हि गजासुरवधूवृतान्तोऽपि भगवत्प्रभावजन्यत्वात्प्रस्तुत एव। एवं राहुवधूवृतान्तोऽपि ज्ञेयम्। ततश्च नायमप्रस्तुतप्रशंसाविषयः। यत्र पुनः कारणस्य प्रस्तुतत्वे कार्यमप्रस्तुतं वर्ण्यते तत्र स्पष्टैवाप्रस्तुतप्रशंसा॥ इति॥ एवञ्चोपक्रमोपसंहारबलेन अप्रस्तुतप्रशं-सया कार्यरूपयैव सामान्यपर्यायोक्तस्य निर्विषयत्वाशङ्काग्रन्थाऽभिप्रेता। कार्यरूपाऽप्रस्तुतप्रशंसा तु कार्यात्कारणावगमनमात्रविषया न्यूनविषया। तद्विष-यातिरिक्ते कारणात्कार्याऽवगमने सन्दिग्धद्योतने च प्रवर्तमानं पर्यायोक्तं चरितार्थम् एव।

॥ इति पर्यायोक्तनिरूपणम् ॥

**अथ व्याजस्तुतिः—**

**आमुखप्रतीताभ्यां निन्दास्तुतिभ्यां स्तुतिनिन्दयोः क्रमेण पर्यवसानं व्याजस्तुतिः ॥**

तृतीयातत्पुरुषकर्मधारयाभ्यां योगार्थद्वयेन द्वयोरपि शब्दार्थत्वम् । आमुखेत्यादिविशेषणेन तयोः पर्यवसानाभावं वदन्बाधितत्वमभिप्रैति । अत एव नास्या ध्वनित्वम् । ध्वनौ हि निर्बाधेन वाच्येनाऽऽगूरणमहिम्नार्थान्तरमवगम्यते, न चैवं प्रकृते ।

---

व्याजस्तुतिनिरूपणम् ॥

**आमुख** ● शब्दतः प्रथमं प्रतीताभ्यामित्यर्थः । प्रथमं प्रतीयमाना निन्दा-स्तुतिरूपतया पर्यवस्यति । एवं प्रथमं प्रतीयमाना स्तुतिर्निन्दात्मना पर्यवस्यति यत्र तत्र व्याजस्तुतिरलङ्कारः । निन्दया प्रथमं प्रतीयमानया यत्र स्तुतिर्व्यज्यते तथाभूतया स्तुत्या च निन्दा व्यज्यते इति यावत् । ननु व्यञ्जिके निन्दा-स्तुती, व्यङ्ग्ये अपि ते तथा च स्तुतिनिन्दयोरुभयत्र कथं स्तुतिपदमात्रघटि-तस्य व्याजस्तुतिशब्दस्य प्रयोग इत्याशङ्क्य समाधत्ते **तृतीया** ● अयं भावः । व्याजस्तुत्युदाहरणे व्यञ्जकतया व्यङ्ग्यतया वा सर्वत्र स्तुतिर्वर्तते । यत्र व्यञ्जिका स्तुतिस्तत्र व्याजभूता सा कर्मधारयसमासेन गृह्यते यत्र च स्तुति-र्व्यङ्ग्या तत्र निन्दाव्याजेन सा स्तुतिरिति तृतीयातत्पुरुषसमासेन सा संगृह्यते । व्यञ्जिके निन्दास्तुती यत्र बाधिते भवतस्तत्रैवायमलङ्कारः । **अत एव** ● वाच्यार्थनिन्दास्तुत्योर्बाधितत्वादेव । आगूरणं व्यञ्जना । बाधितस्थले वाच्यार्थानुपपत्त्यैव तदुपपादकस्याक्षेपादर्थापत्तिविषयतया तत्र व्यञ्जनायाः प्ररोहाभावात् । **नचैवम्** ● वाच्यार्थस्याबाधितत्वात् । न च लक्षणाया गतिः, परस्परसम्बन्धाभावाद्वाक्यार्थस्यालक्ष्यत्वाच्च व्यञ्जनाया अवश्यं प्रसरात् ।

आद्या यथा—

'उर्वीं शासति मय्युपद्रवलवः कस्यापि न स्यादिति
प्रौढं व्याहरतो वचस्तव कथं देव प्रतीमो वयम् ।
प्रत्यक्षं भवतो विपक्षनिवहैर्द्यामुत्पतद्भिः क्रुधा
यद्युष्मत्कुलकोटिमूलपुरुषो निर्भिद्यते भास्करः ॥'

अत्र राजवर्णनप्रस्तावे निन्दा बाधिता स्तुतौ पर्यवस्यति ।

द्वितीया यथा—

'किमहं वदामि खल दिव्यमते गुणपक्षपातमभितो भवतः ।
गुणशालिनो निखिलसाधुजनान्यदहर्निशं न खलु विस्मरसि ॥

अत्र दुश्चरितोत्कीर्तनप्रस्तावे स्तुतिस्तथाभूता निन्दायाम् ।

---

आद्या● स्तुतिपर्यवसायिनी निन्दा । उर्वींशासति● शासतीति शत्रन्तं सप्तम्यन्तम् ।

मयि उर्वीं शासति सति कस्यापि उपद्रवलेशो न स्यादिति स्वशासनाभिमानं वदतस्तव वचः हे देव ! उपद्रवदर्शिनो वयं कथं विश्वसिमः । शत्रूणां वीरगत्या सूर्यमण्डलभेदनमुपद्रवं पादद्वयेन दर्शयति । भवतः शत्रुसमूहैः समरमरणेन स्वर्गं गच्छद्भिः क्रुधा युष्माकं कुलसमूहानां मूलपुरुषः सूर्यो यद् निर्भिद्यते तत्प्रत्यक्षम् । शत्रुव्यापारो निन्दामुखेनोपपादितः शत्रुक्षयप्रतीत्या स्तुतिमेवार्पयति । द्वितीया● निन्दापर्यवसायिनी स्तुतिः । किमहं वदामि● अत्रप्रतिपादिता गुणपक्षपातादिस्तुतिः खलनिन्दायामेव श्लेषेण विपरीतलक्षणया वा पर्यवसानं लभते । हे दिव्यमते खल ! भवतोऽभितो गुणानुरागितां कथमहं वर्णयामि । वर्णनातीतत्वात् । यत् गुणशालिनः सकलसज्जनान् निश्चयेन न विस्मरसि । साधुजनानां शत्रुतया स्मरणस्य गुणपक्षपातितया वर्णनेन स्तुतिर्वाच्या दुश्चरितोत्कीर्तनप्रस्तावेन बाधिता निन्दात्मना व्यक्ती भवति । तथाभूता बाधिता । स्तुतिपक्षे गुणपक्षपातः सन्नपि निन्दापर्यवसाने बाधितो विपरीतलक्षणया गुणद्वेषे श्लेषेण वा गुणपक्षस्य पातने परिणमते ।

अत्र चैक एवार्थः केनचिदाकारेणादौ स्तुतेर्निन्दाया वा विषयो भूत्वा प्रकरणादिमहिम्ना प्रकारान्तरेण निन्दायाः स्तुतेर्वा विषयो भवति । तत्र यावानंशो बाधितस्तावानेवान्यथात्वेन पर्यवस्यति । अंशान्तरं तु स्वभावेनैवावतिष्ठते ।

इयं चालङ्कारान्तरसंकीर्णा यथा—

'देव त्वां परितः स्तुवन्तु कवयो लोभेन, किं तावता
स्तव्यस्त्वं भवितासि यस्य तरुणश्चापप्रतापोऽधुना ।
क्रोडान्तः कुरुतेतरां वसुमतीमाशाः समालिङ्गति
द्यां चुम्बत्यमरावतीं च सहसा गच्छत्यगम्यामपि ॥'

---

तथैव मूलेऽपि वक्ति अत्र चैक एव● । यथात्रैव पद्ये गुणपक्षपातस्य स्तुतौ समुपयोगो गुणानुरागित्वाकारेण दुश्चरितवर्णनप्रस्तावरूपप्रकरणवशान्निन्दायां पर्यवसिततया गुणद्वेषित्वेन प्रकारेण विपयो भवति ।

पर्यवसितनिन्दायां सज्जनस्मरणादयो न बाधितास्ते तु स्तुतौ निन्दायाञ्च स्वभावतस्तिष्ठन्ति । गुणपक्षपातांशस्तु निन्दायां बाधितोऽन्यथात्वेन गुणद्वेषित्वेन परिणमति । अत्रान्यथात्वेनेति प्रतीकमादाय मर्मप्रकाशः । अत्र च लक्षणैव । एवञ्च स्तुतेर्लक्ष्यत्वान्न तमादाय ध्वनित्वम् । लक्षणायाः प्रयोजनीभूतः स्तुत्यतिशयादिः । व्यङ्ग्यमादाय ध्वनित्व इष्टापत्तिः । एवञ्चोपकृतं बहुनामेत्यादावयमेवालङ्कार इत्याहुः, इति प्राह। नचात्र यद्यनुभवसिद्धोऽयं मार्गस्तदा प्राक्तनेन ध्वनित्वनिवारकमूलग्रन्थेन विरोधमाकलयामः । वाच्यनिन्दादिमूला न स्तुत्यादिध्वनिर्वाच्यार्थस्य बाधितत्वादेतावत्परत्वात्तद्ग्रन्थस्य । पर्यवसितस्तुत्यादिमूलकव्यङ्ग्यं वस्त्वादाय ध्वनित्वनिष्पत्तौ विरोधाभावः । परन्त्विदम् अवधेयम् । अंशस्यैवान्यथात्वेन पर्यवसानमुक्तं ग्रन्थकृता । तथाचांशस्यैव विपरीतार्थे लक्ष्यार्थे प्रयोजनीभूताऽतिशयादिर्व्यज्यते नतु वाक्यार्थभूते पर्यवसितस्तुत्यादौ । उपकृतमित्यादौ तु सम्पूर्णस्यैव विपरीतार्थतयाऽनुपकार एव वाक्यार्थतां गतस्तत्रातिशयो व्यज्यतां नाम । तत्र व्यञ्जनाया लक्षणामूलत्वात् । न चात्र निन्दादिना स्तुत्यादिर्लक्ष्यते किन्तु व्यज्यते । ध्वनित्वनिराकरणेन वक्ष्यमाणग्रन्थेन च गुणीभूतव्यङ्ग्यत्वमेवायाति देवत्वांपरितः● समासोक्तौ

अत्र चापप्रतापस्य समासोक्त्या विटधौरेयव्यवहाराश्रयत्वप्रतीतिः । तन्मूला च निन्दा स्तुतौ पर्यवस्यति ।

यथा वा—

'अये राजन्नाकर्णय कुतुकमाकर्णनयन
स्फुरन्ती हस्ताम्भोरुहि तव कृपाणी रणमुखे ।
विपक्षाणां वक्षस्यहह तरुणानां निपतति
प्रगल्भाः श्यामानामनुपरतकामाः प्रकृतयः ॥'

अत्रार्थान्तरन्यासपोषिता ।

ननु कथमत्र व्याजस्तुतिः । वाच्याभ्यामेव निन्दास्तुतिभ्यां स्तुतिनिन्दयोर्गम्यत्वे तस्या अभ्युपगमात् । नह्यत्र चापप्रतापस्य

---

व्याख्यातम् । धौरेय● विटप्रधान इत्यर्थः । चापप्रतापस्य सर्वत्र व्यापनात् राज्ञः स्तुतिरेवाभाति निन्दाचापाततः प्रतीयमाना । अये राजन्● हे कर्णपर्यन्तदीर्घनयन राजन् ? कौतूहलं शृणु ! संग्रामे तव करकमले शोभायमानापि कृपाणीअहह आश्चर्यं तरुणानां शत्रूणां वक्षसि निपतति । श्यामास्त्रीत्वाल्लम्पटत्वं तस्या इत्यर्थान्तरन्यासं दर्शयति । श्यामास्त्रीणां स्वभावा अशान्तमदनविकारा धृष्टा भवन्ति । अथवा श्यामहृदयानां स्वभावा अशान्तलोभविकारा यत्र कुत्रापि प्रवृत्तिशीला भवन्ति । अर्थान्तर● सामान्येन श्यामानां स्वभावेन श्यामकृपाण्याः स्वभावः समर्थ्यते । समासोक्त्यापि प्रथमप्रतीतनिन्दामूलभूतं कामिजन व्यवहाराभिन्नव्यवहाराश्रयत्वमुपपादयते । नन्वनयोर्न निन्दा आमुखे प्रतीता अपितु व्यङ्ग्या । तथाहि प्रथमे चापप्रतापस्य वसुमत्याद्यालिङ्गनं द्वितीये कृपाण्याश्च शत्रुवक्षसि निपातो न निन्दास्पदो जायते । प्रतापस्य युवत्वाप्रतीतेर्वसुमत्यानायिकत्वासिद्धेः कृपाण्याश्च कामिनीत्वाप्रसिद्धेश्च । किन्तु समासोक्तिस्फूर्त्या चापप्रतापे नायकत्वं वसुमतीप्रभृतिषु विभिन्ननायिकत्वारोपपुरस्सरं वसुमतीप्रभृतिनायिकाविषयकचापप्रतापव्यवहारे विविधनायिकाविषयकनायकव्यवहाराभेदभानोपगमेन कामलम्पटव्यवहाराश्रयत्वप्रतीतौ । एवं द्वितीयेऽपि कृपाणीव्यवहारे स्वयं परगामिप्रगल्भ-

केवलस्य केवलवसुमत्याद्यालिङ्गनं वाच्यभूतं निन्दास्पदं भवति। समासोक्त्या त्वाविर्भूतो विटव्यवहारो निन्दास्पदमपि न वाच्यः, अपि तु गम्य इति चेत्, आमुखप्रतीतपदेन हि प्रतीतावपर्यवसितत्वमात्रमत्र विवक्षितम्। न तु वाच्यत्वपर्यन्तम्, गौरवात्। प्रकृते च किं तावता स्तव्यस्त्वमित्यादिना निन्दाया एवोपोद्वलनात्समासोक्तिसाचिव्येन सैव प्रथमं प्ररूढा पश्चाच्च स्तुतिरिति न कोऽपि दोषः।

एवं च—

'भाग्यं ते शाल्मलितरो वद किं परिकथ्यते।
द्विजैः फलाशया युक्तैः सेव्यसे यदहर्दिवम्॥'

---

नायिकाव्यवहारस्याभेदावगमपुरस्सरं स्वयं परगामिप्रगल्भनायिकाव्यवहाराश्रयत्वप्रतीतौ एव निन्दा व्यज्यते। तथा च प्रथमप्रातीतिको व्यवहारो न निन्दास्पदो द्वितीयप्रतीतिविषयस्तु यद्यपि निन्दास्पदः परं न वाच्योऽपि तु व्यङ्ग्यः। इति संशेते नन्वित्यादिना चोदित्यन्तेन। समाधानमाह **आमुख●** अयं भावः, अवश्यं प्रथमं न प्रतीता परं पश्चात्प्रतीयमानापि निन्दा न स्वरूपेण तिष्ठति अपितु स्तुतिरूपेण पर्यवस्यतीति निर्विवादम्। स्तुतिरूपेण पर्यवसानञ्च स्वरूपबाधमन्तरा न जायते। तथा पर्यवसायिनीं स्तुतिमपेक्ष्य प्रथमं प्रतीयत एव। एवञ्च प्राथम्यं बाधितत्वञ्च पूर्वमामुखशब्देन वर्णितं वर्तत एवेति कः प्रतिबन्धको लक्षणप्रवृत्तेः? अपर्यवसायित्वं बाधितत्वम्। प्रथमे निन्दाया वाच्यत्वेनाप्युद्गारः समासोक्त्या केवलं पुष्टिं नीतेत्यप्याह **प्रकृते च किं तावता●** उपोद्वलनम् आविर्भावमात्रम्। प्ररूढत्वं पुष्टिं नीतत्वम्। द्वितीयोदाहरणेऽप्येवमेव स्तुतौ पर्यवसितायां निन्दाऽपर्यवसिता भवति। यद्यपि द्वितीये मूले समासोक्तिर्नोक्ता किन्तु मर्मप्रकाशानुरोधेन मया व्याख्यातम्। किन्तु विवेचने चतुर्थपादान्तर्गतार्थान्तरन्यासेनापि समासोक्तिमन्तरापि लम्पटप्रगल्भनायिकात्वमवगन्तुं प्रभूयत इति कृत्वा मूलकृता समासोक्तिर्न दर्शितेति। आभासस्तु तस्या अपि। आशङ्कासमाधानमुभयत्रापि मूलग्रन्थे पद्यद्वयानन्तरमुत्थितम्। **एवञ्च●** अस्या अलङ्कारान्तरपोषितत्वे एव। भवतीत्यनेनान्वयि। **भाग्यं ते●** हे शाल्मलि वृक्ष! तव सुन्दरं भाग्यमस्ति

इत्यत्राप्रस्तुतप्रशंसासंकीर्णाप्येषा भवति ।

एतेन—

'किं वृत्तान्तैः परगृहगतैः किं तु नाहं समर्थ-
स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ।
देशे देशे विपणिषु तथा चत्वरे पानगोष्ठ्या-
मुन्मत्तेव भ्रमति भवतो वल्लभा हन्त ! कीर्तिः ॥'

इत्यत्र प्राचीनपद्ये "प्रक्रान्तापि स्तुतिपर्यवसायिनी निन्दा 'हन्त कीर्ति' रितिभणित्योन्मूलिता न तु प्ररोहं गमिता" इति

---

कथमवसादं तनुषे ? फलाशया युक्तैर्द्विजैर्यत् रात्रिन्दिवं सेव्यसे । द्विजैर्ब्राह्मणादिभिः सेवा भाग्यशालिभिर्लभ्यस इति प्रथमं स्तुतिः। फलाशयपदसन्निधानेन पक्षिभिः फलाशया सेव्यसे परं फल न ते प्राप्नुवन्तीति निन्दा पर्यवस्यति एवमप्रस्तुतशाल्मलिवृक्षवृत्तान्तेन प्रस्तुतः कश्चिद्बोध्य इति अप्रस्तुतप्रशंसाप्यत्र । एतेन● समासोक्त्यादिनाऽपि व्यञ्जकनिन्दादेः प्ररोहाभ्युपगमेन । किं वृत्तान्तैः● लोचनकारेण व्याजस्तुत्युदाहरणतयोक्तम् । तत्खण्डनमलङ्कारसर्वस्वकृता कृतम् । प्रथमं प्रतीयमाना निन्दा स्तुतिपर्यवसायिनी स्तव्यस्त्वमित्यादिपद्यसमशीला । परगृहगतैर्वृतान्तैः किं प्रयोजनम् । अनेन वक्तुमयोग्यकथनेन निन्दाया उपक्रमो विहितः । सद्वृत्तस्योद्घाटने मुखरता न दोषः । किन्तु अहं तूष्णीं स्थातुं न समर्थः, अतोऽवचनीयमपि वच्मि । तथाकृतौ कारणम्—दाक्षिणात्यस्वभावः स्वभावेन वाचलता । हे देव तव प्रिया कीर्तिः प्रतिदेशं हट्टेषु चत्वरेषु पानगोष्ठ्यां प्रमत्तेव भ्रमति । यत्र यत्र जनसंमर्दस्तत्र सर्वत्र प्रौढतया गीयते इत्यर्थः । कीर्त्यास्तादृशस्थानगानं गुण एवेति स्तुतिपर्यवसायिनी । उपक्रमे निन्दाया उद्बोधस्तु दर्शित एव पद्यव्याख्याने । समासोक्तिसाहाय्येन कीर्तौ लम्पटनायिकाव्यवहारप्रतीत्या सा निन्दा पुष्टिं नीयते । किञ्च प्रथमतः कीर्त्यभिन्नवल्लभायामेव तत्र तत्रोन्मत्ततया भ्रमणं प्रत्याय्य निन्दास्थितिं लभते । स्तुतिप्रस्तावप्रकरणवशाच्च प्रियकीर्तौ तादृशभ्रमणतात्पर्यग्रहेण स्तुतौ पर्यवसानं जायते । प्रक्रान्तापि● वृत्तान्तस्यावचनीयताद्योतनेन न्मूलिता● कीर्तौ तादृश भ्रमणप्रतीत्या बल्लभायामप्रतीत्त्या मूलान्निस्सारिता । प्ररोहं● पुष्टिं ।

यत्सर्वस्वकृतोक्तम् । यच्चापि तद्व्याख्यायां विमर्शिन्याम् 'अनुदाहरणमेवैतत्पद्यं व्याजस्तुतेः' इति ध्वन्यालोचनकारोक्ति कटाक्षेण लक्ष्यीकृत्योक्तम् तन्निरस्तम् । 'किं वृत्तान्तैः' इत्यादिना निन्दाया एव प्रथममुन्नयनात्समासोक्तेरुद्गतेर्वाच्यत्वस्यातन्त्रत्वात् । अन्वयक्रमेणादौ वल्लभयैवान्वये तस्याश्च कीर्त्यभिन्नत्वेनावस्थाने सति पश्चात्प्रकरणादिपर्यालोचनवशाद्व्युत्क्रमेणान्वयबोधाच्च । तस्माद्ध्वन्यालोचनकारैरुक्तमुदाहरणं संगतमेव ।

इयं च व्याजस्तुतिर्यस्यैव वस्तुनः स्तुतिनिन्दे प्रथममुपक्रम्येते तस्यैव चेन्निन्दास्तुत्योः पर्यवसानं भवेत्तदा भवति । वैयधिकरण्ये तु न, इति प्राचामलङ्कारशास्त्रप्रवर्तकानां समयः । अत एव यत्र शब्देनाभिधीयमाना स्तुतिर्निन्दा वा बाधितस्वरूपा निन्दायां स्तुतौ च स्वसमर्पणेन पर्यवस्यतीति तैस्तत्र तत्र स्वग्रन्थेषूपनिबद्धम् ।

---

अनुदाहरणम् ● निन्दायाः प्ररोहाभावात् । तन्निरस्तम् ● प्रकारद्वयेन प्ररोहस्य समर्थनात् । उद्गतेः स्फूर्तेः । ननु स्फूर्तौ अपि न वाच्यत्त्वमित्याशङ्कां निवारयति वाच्यत्त्वस्य। ● व्यञ्जकनिन्दास्तुत्योर्वाच्यत्वस्यालङ्कारत्वप्रयोजकत्वाभावात् । द्वितीय प्ररोहप्रकारमाह । अन्वयक्रमेणेत्यतः सतीत्यन्तेन । अन्वयक्रमश्च प्रथमं वल्लभाया उपादानम् । स्तुतौ पर्यवसानप्रकारमाह पश्चात्व्युत्क्रमेण ● प्रथमं वल्लभाविशेष्यकः पश्चात् कीर्तिविशेष्यकः । कुवलयानन्दमतेऽलङ्कारशास्त्रप्रवर्तकाचार्यविरोधप्रदर्शनाय स्वमतस्य तदनुरोधित्वदर्शनाय चोक्ताचार्यमत प्रदर्शयति इयञ्च ● वैयधिकरण्ये ● अन्यस्य स्तुतिनिन्दाभ्यामन्यस्य स्तुतिनिन्दयोर्वर्णने । अत एव ● व्यङ्ग्यव्यञ्जकयोः समानाधिकरण्यस्यैव व्याजस्तुतिप्रयोजकत्वात् । बाधितस्वरूपा ● इदञ्च तयोः सामानाधिकरण्ये हेतुः । एकविषयिण्येव स्तुतिर्निन्दा च परस्परं विरुद्धा सती पर्यवस्यमानयोत्तरया आमुख-

एवं च—

'परोपसर्पणानन्तचिन्तानलशिखाशतैः ।
अचुम्बितान्तःकरणाः साधु जीवन्ति पादपाः ॥

इत्यादिषु सांसारिकजननिन्दापर्यवसायिन्यामपि पादपस्तुतौ न व्याजस्तुतित्वम्, प्रथमप्रतीयमानस्तुतेरबाधितत्वात्। एवं निन्दया स्तुतेर्गम्यत्वेऽपि । तथा अन्यस्य स्तुत्यान्यस्तुतौ, अन्यनिन्दायां वान्यनिन्दायां गम्यमानायां नास्या अलङ्कृतेर्विषयः । पूर्वोक्तादेव हेतोः । यथा—

'ये त्वां ध्यायन्ति सततं त एव कृतिनां वराः ।
मुधा गतं पुराराते भवदन्यधियां जनुः ॥'

---

प्रतीता बाधिता भवति । वैयधिकरण्ये तु विरोधस्यैवासम्भवात् । कथं बाध्यबाधकभावः स्यादितिभावः । तैः● भरतमुनिभिः । परोपसर्पणा● जना जीविकायै परसमीपे कथं उपसर्पणं गमनं कार्यमिति चिन्तारूपा अनलस्य शिखास्तासां शतैः सह जीवन्ति । तदपेक्षया स्वभावादेव स्थावराः पादपाः—तादृशैरग्निशिखादिभिर्न चुम्बितं मनो येषां तादृशाः सन्तः साधु जीवन्ति । अत्र पादपानां स्थावराणां तादृशस्वभावस्य स्तुतिर्न स्वरूपतः परं सांसारिकलोभिजननिन्दापुष्ट्यर्थमेवेति तथापि न व्याजस्तुतित्वम् । तत्र कारणमाह—अबाधितत्वात् । पूर्वोक्तादेव● अबाधित्वादेव । ये त्वां ध्यायन्ति● हे पुरारे ये त्वां सततं ध्यायन्ति ते कुशलिषु श्रेष्ठाः । भवद्भिन्नं ध्यायतां तु जन्म व्यर्थतां गतम् । अत्र शिवध्यातॄणां स्तुतिर्वाच्या शिवान्यध्यातॄणां निन्दा च । ताभ्यां ध्येयस्य शिवस्य स्तुतिः । शिवान्यध्येयस्य निन्दा च व्यज्यते ।

परं पूर्ववाच्यस्तुतिनिन्दयोर्वैयधिकरण्येनाबाधान्न व्याजस्तुतिः । एवं स्थिते पूर्वयोः स्तुतिनिन्दयोर्बाधितत्वे एव व्याजस्तुतिरिति युक्तिशास्त्रसम्मते

अत्र पूर्वार्धोत्तरार्धगताभ्यां ध्यातृस्तुतिनिन्दाभ्यां ध्येयस्तुतिनिन्दयोरवगमः।

एवं स्थिते कुवलयानन्दकर्त्रा स्तुतिनिन्दाभ्यां वैयधिकरण्येन निन्दास्तुत्योः स्तुतिनिन्दयोर्वावगमे प्रकारचतुष्टयं व्याजस्तुतेर्यदधिकमुक्तं तदपास्तम्। यदि तु प्राचीनसंकेतसेतुं निर्भिद्य स्वरुचिरमणीया सरणिराद्रियते तदा निवेश्यन्तां सर्वेऽपि व्यङ्ग्यप्रकारा गुणीभूतव्यङ्ग्यप्रकारा वा अलङ्कारोदरेषु। निवेश्यतां वा व्याजस्तुतिरपि योगार्थालीढत्वादप्रस्तुतप्रशंसायाम्। निरस्यतां च कार्यकारणादिविषयकत्वदुराग्रहस्तस्या इति बहुव्याकुलीस्यात्।

एवं तर्हि पूर्वोक्तं प्रकारचतुष्टयं कुत्रान्तर्भवतु ? इति चेत्, व्यङ्ग्यभेदेष्विति गृहाण। नहि व्यङ्ग्यभेदाः सर्वेऽप्यपरिमिता अलङ्कारप्रकारगोष्पदे अन्तर्भावयितुं शक्यन्ते।

---

सिद्धान्ते। निन्दयो र्वा● स्तुत्या स्तुतिर्निन्दया च निन्देत्यादिरीत्या च। व्यङ्ग्यप्रकाराः● तत्र ध्वनेरलङ्कारत्वाभावादरूचेराह गुणीभूत● योगार्था● अप्रस्तुतेन प्रशंसा प्रस्तुतस्येत्यर्थे अप्रस्तुतनिन्दादिना प्रस्तुतस्तुत्यादिप्रशंसात्वेन संग्रहः। तस्या● अप्रस्तुतप्रशंसायाः। ननु यदि भवत्परिगणितालङ्कारविषयवहिर्भूतेषु अर्थेषु मयालङ्कारविषयता यदोपपाद्यते तदा भवत एव न्यूनता दोषो मम तु संग्रहो गुण एवेति चेत्तत्राप्याह नहि व्यङ्ग्यभेदाः● व्यङ्ग्यभेदा अपरिमिताः अलङ्कारप्रकारस्तु गोः पादमात्रम्। तथा च व्यङ्ग्यानामलङ्कारकुक्षौ निक्षेपासम्भवेऽपि प्राचीनसेतुभङ्गोऽनुचित एव। अत्र मर्मप्रकाशः। अत्रेदं चिन्त्यम्। व्यङ्ग्यभेदेष्वप्रस्तुतप्रशंसापर्यायोक्तस्वीकारवदत्राप्यलङ्कारत्वे बाधकाभावात्। न चाप्रस्तुतप्रशंसैवास्ताम् विनिगमकाभावात्। नहि लक्ष्य एव व्याजस्तुतिर्न व्यङ्ग्य इत्यत्र शपथातिरिक्तं प्रमाणमस्ति।

यच्चापि कुवलयानन्दकृता निन्दाया गम्यत्वे उदाहृतम्—

'अर्धं दानववैरिणा गिरिजयाप्यर्धं शिवस्याहृतं
देवेत्थं जगतीतले स्मरहराभावे समुन्मीलति ।
गङ्गा सागरमम्बरं शशिकला नागाधिपः क्ष्मातलं
सर्वज्ञत्वमधीश्वरत्वमगमत्त्वाम्, मां च भिक्षाटनम् ॥'

अत्र सर्वज्ञः सर्वेश्वरोऽसीति राज्ञः स्तुत्या व्याजरूपया मदीयवैदुष्यादि दारिद्र्यादि जानन्नपि बहुप्रदानेन रक्षितुं शक्तो मह्यं किमपि न ददासीति निन्दा व्यज्यते" इत्युक्तं च । तन्न ।

---

गुणीभूतव्यङ्ग्यत्वाच्च न ध्वनित्वम् । प्राचीनग्रन्थविरोधस्त्वकिञ्चित्करः । इति परं चिन्ताशिथिलोऽयम् । अप्रस्तुतप्रशंसादिस्तु प्राचीनसेतुसरणिरेव । प्राचीनसेतुभङ्गस्य कुवलयानन्दकृतस्य प्रयोजनन्तु न प्राभाव्यनेन प्रदातुम् । व्याजस्तुतेश्च प्राचीनपद्धतिप्रसिद्ध एव विषयोऽस्तु । सर्वत्राप्रस्तुतप्रशंसैवास्त्विति न पण्डितराजाभिधानम् । दण्डिना तु अप्रस्तुतप्रशंसा स्यादकाण्डे तु या स्तुतिः ।

सुखं जीवन्ति हरिणा वनेष्वपरसेविनः ॥

इत्यादिग्रन्थेनोक्तन्तदन्यत् । अर्धं दानव वैरिणा कमपि राजानं प्रति निरन्तरन्तदाश्रितस्य विदुषोऽपि दरिद्रस्योक्तिरियम् । हरिहरात्मकस्यैकविग्रहस्यैव सत्त्वेन विष्णुना शिवस्यार्धं शरीरमाहृतमर्धञ्च अर्धाङ्गिन्या पार्वत्या आहृतम् । हे देव ! इत्थं जगति शिवस्याभावे जाग्रति सति तदाश्रिता गङ्गा-सागरं, शशिकला गगनं, शेषनागः—पातालम् । सर्वज्ञत्वमधीश्वरत्वञ्च त्वां भिक्षाटनञ्च मामगमत् । सर्वाणि च तदाश्रितानि वस्तूनि ततो गतानि । तत्प्रसङ्गेन त्वमधीश्वरः सर्वज्ञश्च । अहन्तु त्वदाश्रितोऽपि भिक्षुरिति भावः । तादृशस्य समर्थस्य तव दरिद्रोऽहमिति विज्ञापयति वक्ता ।

निन्दापर्यवसायिनीं स्तुतिं वर्णयति दीक्षितः सर्वज्ञः । जानन्नपि सर्वज्ञत्वेन शक्तः अधीश्वरत्वेन । इत्युक्तञ्च तट्टीकायामलङ्कार-

'साधु दूति पुनः साधु कर्तव्यं किमतः परम् ।
यन्मदर्थे विलूनासि दन्तैरपि नखैरपि ॥"

इत्यनुपदमेव त्वदुदाहृतपद्येनास्यातितमां वैलक्षण्यात् । तत्र हि साधु किमतः परं कर्तव्यमिति वर्णैरुदीरिता साधुकारिणीत्वरूपा स्तुतिः श्रुतमात्रैव बाधिता सती विपरीतेऽर्थे स्वात्मसमर्पणेन पर्यवस्यति । इह तु सर्वज्ञत्वमधीश्वरत्वं च न तथा । राजवर्णनप्रस्तावे राजगताज्ञत्वपामरत्वयोरविवक्षितत्वात् । अत एव सर्वज्ञोऽपि मां न रक्षितवानसि इत्युपालम्भरूपापि निन्दा नात्र विवक्षिता । सर्वज्ञस्य समर्थस्य तव दरिद्रोऽहं रक्षितुं योग्य इति स्वविज्ञापनाया एव प्रत्युत

---

चन्द्रिकायां ननु राजवर्णनप्रस्तावे कथं स्तुतेर्व्याजरूपत्वमिति वाच्यम्, स्तुतिपर्यवसानविवक्षायां स्वीयभिक्षाटनोद्घाटनस्यासंगतत्वेन स्तुतेरुक्तनिन्दोपलम्भपर्यवसानस्यानुभवसिद्धत्वात् । इत्याह । **साधु इति** ● कयाचिन्नायिकया स्वनायकानुनयाय प्रहिता दूती संभोगेन दन्तनखक्षतचिह्नं धृत्वा गतवती तां प्रति नायिका वक्ति । इति ? त्वया साधु कृतं पुनरतो भिन्नं किं कर्तव्यम् । यस्मात् कारणात् मम प्रयोजनाय दन्तैरपि नखैरपि दुःखितास्ति । **वैलक्षण्यात्** ● अत्र साधुकारित्वप्रयुक्ता स्तुतिश्चतुर्थपादस्वारस्येन शीघ्रमेव विलीयते । राज्ञस्तु सर्वज्ञत्वाधीश्वरत्वप्रयुक्ता स्तुतिर्न तथा वक्तुर्भिक्षाटनकथनेन बाध्यते । **श्रुतमात्रैव** ● दूतीविरुद्धकर्मकारिण्या दूत्याबोधव्यतया तद्विजानन्त्या नायिकाया वक्तृतया च । **विपरीते** ● निन्दात्मनि । **न तथा** ● श्रुतमात्रेण दूरं तिष्ठतु पश्चादप्यबाध्यमानम् । यदि बाधिते स्यातां तदाऽज्ञत्वपामरत्वाभ्यां पर्यवस्यतः न च तथा सम्भवति इत्याह **राजवर्णनप्रस्तावे** ● चन्द्रिकोक्तं समाधानं निरस्यति **अत एव** ● अज्ञत्वपामरत्वयोरविवक्षितत्वादेव । ननु निन्दोपालम्भाऽविवक्षणे भिक्षोद्घाटनमसंगतमित्याशङ्कामपि भिक्षोद्घाटनस्योपालम्भनमन्तराऽपि विज्ञापनयाऽन्यथासिद्धिं दर्शयति **सर्वज्ञस्य** ● ।

विवक्षितत्वात्। अस्तु वा त्वदुक्तोपालम्भरूपा निन्दात्र गम्या। तुष्यतु भवानेवमपि। 'साधु दूति पुनः साधु' इति पद्ये साधुकारिणीत्वमिव नास्मिन्पद्ये सर्वज्ञत्वमधीश्वरत्वं च विद्युद्भङ्गुरप्रतिभमेति शक्यं वक्तुम्। उपालम्भरूपाया निन्दाया अनुत्थानापत्तेः प्रतीतिविरोधाच्चेति सहृदयैराकलनीयं किमुक्त द्रविणपुङ्गवेनेति।

इति रसगङ्गाधरे व्याजस्तुतिप्रकरणम्।

---

**विवक्षितत्वात्** ● स्तुतेर्बाधाभावेन न निन्दापर्यवसायिनी स्तुतिरिति सिद्धम्। तुष्यतु दुर्जन इति न्यायेन उपालम्भेनापि व्यङ्ग्येन भिक्षाटनस्योपपादनेऽपि उपालम्भोऽप्यवतिष्ठताम्। परं स्तुतेरप्यबाध्यत्वात् नेदमस्यालङ्कारस्य विषय इति उपसंहरति—**अस्तु वा** ●। न्यायं सङ्गमयति **तुष्यतु** ● **विद्युद्भङ्गुर** ● आमुखे प्रतीयमानं सदेव बाधितम्। **अनुत्थानापत्तेः** ● स्तुतेर्बाधमन्तरेति शेषः। किञ्च शिवस्याभावे यथा तत्तत्स्थानप्राप्तानां गङ्गादीनां न बाधस्तथा राज्ञि सर्वज्ञत्वाधीश्वरत्वयोर्वक्तिरि च भिक्षाटनस्य न बाध इत्याशयेनाह **प्रतीति** ● तेन अतिचिरकालकृतया सेवया दुःखितस्य ततोऽप्राप्तधनस्य भिक्षो राजसेवां त्यक्तुमिच्छत इदृशवाक्ये वक्तृवैशिष्ट्यादिसहकारेणापातप्रतीयमानस्तुतेर्निन्दापर्यवसायितया विद्युद्भङ्गुरप्रतिमत्वमस्त्येवेति सम्यगुक्तं द्रविडशिरोमणिना। पूर्वोक्तरीत्या स्वस्य भिक्षाटनोक्त्या चकारेण च तत्वस्यानुभवसिद्धत्वात्। साधु इति इत्युदाहरणेऽपि दूत्या दुश्चरितत्वादिवैशिष्ट्यं प्रमाणान्तरेण प्रागेव जानतां वाच्यार्थे बाधज्ञानं स्पष्टमेव। कस्त्वं वानर इत्यत्रापि अतिशयितवीरत्वेन प्रसिद्धहनुमतो निन्दा स्वात्मन्यपर्यवस्यन्ती इतरस्तुतिमादायैव पर्यवस्यति। इतरस्तुतेर्बलादाकृष्टत्वेन न ध्वनित्वमिति दिक्, इति मर्मप्रकाशविकाशश्चिन्तितो वेदितव्यः। राजस्तुतेर्विद्युद्भङ्गुरप्रतिमत्वस्य प्रतीत्यभावात्। सहृदयहृदयाननुभूतत्वात्। कस्त्वं वानर इत्यादि पद्यन्तु—

> कस्त्वं वानर रामराजभवने लेखार्थसंवाहकः।
> यातः कुत्र पुरागतः स हनुमान् निर्दग्धलङ्कापुरः॥

**अथाक्षेपः—**

**'उपमेयस्योपमानसंबन्धिसकलप्रयोजननिष्पादनक्षमत्वादुपमानकैमर्थ्यमुपमानाधिक्षेपरूपमाक्षेपः' इति केचिदाहुः ।**

**तन्मते चेत्थमुदाहरणं निर्माणीयम्—**

**'अभूदप्रत्यूहः कुसुमशरकोदण्डमहिमा**
**विलीनो लोकानां सह नयनतापोऽपि तिमिरैः ।**
**नवास्मिन्पीयूषं किरति परितस्तन्वि वदने**
**कुतो हेतोः श्वेतो विधुरयमुदेति प्रतिदिनम् ।'**

---

बद्धो राक्षससुनुनेति कपिभिः संताडितो भर्त्सितः ।
स क्रीडान्तपराभवो वनमृगः कुत्रेति न ज्ञायते ॥

अङ्गदं प्रति राक्षसस्य प्रश्नोत्तरम् । अत्रापि वैयधिकरण्ये आमुखप्रतीतस्य बाधाभावांशेऽयमलङ्कार इति प्रागेव विवेचितं नावशिष्यत इति दिक् । इति शम् ।

॥ इति व्याजस्तुतिनिरूपणम् ॥

## आक्षेपनिरूपणम्

अथाक्षेपः—अथेति विचारोपक्रमे । आक्षेपालङ्कारविचार उपक्रमत इत्यर्थः । आक्षेपालङ्कारस्य मतभेदेन निरूपणमेवास्मिन् प्रकरणे न त्विदं लक्षणमेव सिद्धान्तीभूतमिति प्रतिपाद्यते । तत्र कारणमाचार्याणां भिन्नरूपेण प्रवर्त्तनात् समेषां लक्षणानामनुगमकलक्षणस्याभावात् । प्राचीनपरिपाट्येव यथाकथमपि परिष्करणीया तत्रैव च कल्पनाया यावान् प्ररोहस्तावान् प्रदर्शनीयः । स्वकल्पनानुसारिपदार्थव्यवस्थितौ तु कियन्तोऽलङ्कारा नाम तो न स्युः ? कियन्तश्च कुत्र चिदन्तर्भवेयुः ? वाचोभङ्गीनामानन्त्यात्सहस्रशो नूतननामान उत्तिष्ठेयुरिति बहुव्याकुली स्यात् । तत्राक्षेपपदार्थोऽनुपपत्तिपूर्वककल्पनायां प्रसिद्ध इति वामनमतेन विशिष्टाक्षेपमाह । उपमेयस्योपमान● उपमानप्रयोज्यं सर्वं कार्यमुपमेयेन सिद्ध्यतीति किमर्थमुपमानमितिरीत्या कैमर्थ्येनोपमानस्य आक्षेपस्तिरस्कार—इति सरलोऽर्थः ।

अभूदप्र● हे तन्वि ! तवास्मिन् वदने परितः पीयूषं सुधां किरति

यथा वा—

'वसुधावलयपुरन्दर विलसति भवतः कराम्भोजे ।
चिन्तामणिकल्पद्रुमकामगवीभिः कृतं जगति ॥'

आद्ये उपमानप्रयोजननिष्पादनं शाब्दम्, द्वितीये त्वार्थमिति भेदः ।

अपरे तु—

'पूर्वोपन्यस्तस्यार्थस्य पक्षान्तरालम्बनप्रयुक्तो निषेध आक्षेपः ।' इत्याहुः ।

---

प्रक्षिपति वर्धतीति यावत् । अमृतकिरणकार्यस्य वदनेन सम्पादिते कामोद्वेजकत्वमपि सिद्धयति, तथाहि कामस्य धनुषो महिमा निर्विघ्नोऽभूत् । तापनाशनं तमोनिवारणञ्च चन्द्रकार्यमपि जातम् । यथाहि तिमिरैः सह लोकानां नयनतापोऽपि विलीनः । एवं सर्वप्रयोजनानां तव वदनेन निष्पत्तौ फलस्यापि हेतुत्वात् केन प्रयोजनेन अयं विधुः प्रतिदिनमुदेति ? किन्तु व्यर्थ एव ।

**वसुधावलय** ● हे पृथ्वीमण्डलस्वामिन् सततसमीहितदानशीले भवतः करकमले विलसति सति समीहितदातृत्वेन प्रसिद्धैरेभिः चिन्तामणिमन्त्रकल्पवृक्षकामधेनुभिर्जगति किं प्रयोजनं सम्पादितं न किमपि किन्तु व्यर्थास्ताः । उदाहरणद्वये वैचित्र्यं दर्शयति **आद्ये** ● अभूदित्यपि पद्ये पादत्रयेण चन्द्रकार्यं वदनेन निष्पाद्यते इति शब्देन उक्त्वा चतुर्थपादेन चन्द्रस्य कैमर्थ्यं प्रतिपादितम् । वसुधेत्यादिपद्ये तु चिन्तामणिप्रभृतीनामुपमानानां कैमर्थ्यं प्रतिपादनमात्रेणार्थात् कराम्भोजस्य उपमानकार्यनिष्पादनमाक्षिप्यते न तु शब्दतः प्रतिपाद्यते । कैमर्थ्यमाक्षेपं केचन प्रतीपभेदं मन्यन्ते । यथा कुवलयानन्दकारिकायाम् प्रतीपमुपमानस्य कैमर्थ्यमपि मन्वते, दृष्टञ्चेद् वदनं तस्याः किं पद्मेन किमिन्दुना ।

**अपरे तु** ● कस्येदं मतमिति विशेषतो न प्राप्तम् । चन्द्र ! संदर्शयात्मानमथवास्ति प्रियामुखम् । इत्यादिना तत्र तत्रोपलभ्यते । पक्षान्तरावलम्बनञ्चाथवाप्रभृतिभिः शब्दैः ।

तेषां मते इदमुदाहरणीयम्—

'सुराणामारामादिह झगिति झञ्झानिलहताः
पतेयुः शाखीन्द्रा यदि तदखिलो नन्दति जनः ।
किमेभिर्वा कार्यं शिव शिव विवेकेन विकलै-
श्चिरं जीवन्नास्तामधिधरणि दिल्लीनरपतिः ॥'

अत्र किमेभिरित्युत्तरार्धेन पूर्वार्धोक्तपक्षप्रतिक्षेपमात्रं पक्षान्तरालम्बनेन क्रियते ।

यथा वा—

'किं निःशङ्कं शेषे शेषे वयसि त्वमागतो मृत्युः ।
अथवा सुखं शयीथा जननी जागर्ति जाह्नवी निकटे ॥'

अन्ये तु—

" 'निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ।
वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ॥'

---

सुराणामारामा० जनानन्दहेतुतया कल्पवृक्षा अर्धेन प्रतिपादिताः स च पूर्वन्यस्तोऽर्थः । उत्तरार्धेन दिल्लीनरेन्द्र एव जननन्दन इति पक्षान्तर परिग्रहेण पूर्वस्य निषेधः सूचितः । शिव शिवेति अतिवैषम्यसूचकम् । पूर्वत्रात्रापि चोपमानापेक्षयोपमेये तत्तत्कार्यकारित्वस्यातिशयो व्यज्यते । यदि देवक्रीडावनतो झञ्झावातेन त्रोटिताः कल्पवृक्षाः पतेयुस्तर्हि सर्वो जनो नन्दति । वा विवेकविधुरैरेभिः किं कार्यं व्यर्थाः एते । तत्कार्यकारी दिल्लीनरेन्द्रो धरण्यां चिरञ्जीवी तिष्ठेत् । अधिधरणीत्यत्राव्ययीभावः ।

किं निःशङ्कम्० शेषे वयसि आगतस्त्वं किं निःशङ्कं शयनं करोषि । मृत्युरागतः, पक्षान्तरेण मृत्युभयमपाक्रियते । तद् गङ्गया अपमृत्योरपहरणाज्जीवनफलसद्गतिप्रापणाद्वा । अथवा सुखं शयीथाः सर्वविधकल्याणकारिणी गङ्गा माता निकटे जागर्त्ति । अन्ये तु मम्मटादयः वक्तुमिष्टस्य वस्तुनस्तद्गतं विशेषं व्यञ्जनया प्रतिपादयितुमिच्छया यो निषेध इव निषेधाभासः,

विशेषं व्यङ्ग्यरूपमर्थविशेषं वक्तुं विवक्षितस्य प्रकृतार्थस्य निषेधो निषेधसदृशः कथनादिप्रत्याख्यानरूपः। स वक्ष्यमाणविषय उक्तविषयश्चेति द्विविधः'' इत्याहुः।

तेषा मते इत्थमुदाहार्यम्—

'रीतिं गिराममृतवृष्टिकिरां त्वदीयां
तां चाकृतिं कृतिवरैरभिनन्दनीयाम्।
लोकोत्तरामथ कृतिं करुणारसार्द्रां
ज्ञातुं न कस्यचिदुदेति मनःप्रसारः॥'

अत्र करिष्यमाणस्य मनःप्रसारस्य निषेधो वर्णनीयस्यानिर्वाच्यतां बोधयितुम्।

'श्वासोऽनुमानवेद्यः शीतान्यङ्गानि निश्चला दृष्टिः।
तस्याः सुभग कथेयं तिष्ठतु तावत्कथान्तरं कथय॥'

---

आभासत्वञ्च बाधितत्वात्सनिषेध आक्षेप इति लक्षणम्। स च द्विविधः वक्ष्यमाणविषयः उक्तविषयश्च। इष्टस्य निषेधप्रयोजनं व्यञ्जनया विशेषप्रतिपादनम्। साहित्यदर्पणोक्त विध्याभासस्तु सर्वस्वकारमतेन संग्रहीष्यत एव।

रीतिं गिराम् ● त्वदीयां वाणीनां सुधास्यन्दिनीनां रीतिं ज्ञातुमित्यत्रान्वयि। कृतिवरैः प्रशंसनीयां प्रसिद्धां ताञ्चाकृतिम्।

अथ चार्थे करुणरसेन युक्तां लोकोत्तरां विलक्षणां कृतिं ज्ञातुं कस्यचिन्मनसः क्रिया नोदेति। मनः प्रसार उदेति परं वस्तुनो वैलक्षण्येन वस्तुनोऽचिन्तनीयतया मनोवृत्तिविषयो न भवतीत्यर्थः। मनसः प्रसादोऽन्तःकरणवृत्तिः। मनः प्रसाद इत्यपि क्वाचित्कः पाठः। तत्रापि स एवार्थः। मनसः प्रसादोनोदेति मनोऽप्रसन्नं जायते मनोविषयो न भवतीति यावत्। समन्वयं विदधाति करिष्यमाणस्य ● अनिर्वाच्यताशब्देन मनसाऽपरिच्छेद्यता विवक्षिता नत्वनुपक्रान्त्याया वाचोऽविषयतामात्रम्। किरामिति कृ' विक्षेपे धातोः क्विपि कीः, किरौ, किरः इति रीत्या षष्ठ्यन्तबहुवचनं गिरामित्यस्य विशेषणम्। तस्मादेव धातोः क····प्रत्यये द्वितीयैकवचनान्तं रीतेर्विशेषणमपि भवितुमर्हतीति ध्येयम्। उक्तविषयमुदाहरति श्वासोनु ● कयाचिद् दूत्या कानिचिद्

अलङ्कारसर्वस्वकारादयस्तु—

"प्राकरणिकस्यार्थस्य निषेधोऽप्रतिष्ठितत्वादाभासमात्ररूपः कस्यचिदर्थविशेषस्य विधानं व्यनक्ति स एकः। यश्चाप्राकरणिकस्य विधिस्तादृश एव सन्निषेधे पर्यवस्यति सोऽपर इत्युभयविधोऽप्ययमाक्षेपः।

तत्र निषेधाभासरूप आक्षेपस्तावद् द्विविधः—उक्तविषयो वक्ष्यमाणविषयश्चेति उक्तविषयोऽपि द्विविधः—क्वचिद्वस्तुमात्रनिषेधात्क्वचिद्वस्तुकथननिषेधात्। वक्ष्यमाणविषयस्तु वस्तुकथननिषेधात्मक एव सामान्यधर्मावच्छिन्नप्रतियोगिताकः शब्दात्समर्प्यमाणोऽपि विशेषरूपेष्टनिषेधात्मना स्थितो निषिध्यमानगतं विशेषान्तरमाधत्ते। सोऽपि द्विविधः—

---

विरहावस्थास्वरूपाणि विज्ञाप्य पुनर्विरहावस्थाया एव किमपि स्वरूपं कठिनं सातिशयं बोधयितुं कथनं निषेधति तथा चोक्तस्यैवानिर्वचनीयतां बोधयितुं निषेधः। शैथिल्यातिशयेन श्वासो न प्रत्यक्षः किन्त्वनुमानवेद्यः। अङ्गानि शीतानि निश्चला दृष्टिः। हे सुन्दर ? यत्तव वशादियं मरणासन्ना तस्याः कथा मरणसम्बन्धादेव विशेषतोऽकथनीयतया तिष्ठतु विषयान्तरसञ्चारार्थं कथान्तरं कथय। वक्तुमिष्टाया अपि तस्याः कथाया निषेधः मरणमेवैतदनन्तरं विरहेण भावीति अकथनीयतां प्रकाशयितुम्। **सर्वस्वकारादयस्तु** निषेधाभासाक्षेपलक्षणसूत्रन्तस्य उक्तवक्ष्यमाणयोः प्राकरणिकयोर्विशेष प्रतिपत्त्यर्थं निषेधाभास आक्षेपः। विध्याभासलक्षणसूत्रन्तु अनिष्टविध्याभासश्च। **यश्चाप्राकर** सूत्रानुसारादनिष्टस्येति शेषः। **तादृश** अनिष्टस्याप्राकरणिकस्य च विध्यसम्भवात् विध्यभासः सन्। **सामान्यधर्मा** यथा रेखलेत्यादौ खलसम्बन्धिवृत्तान्तकथनत्वेन सामान्यधर्मेणावच्छिन्ना प्रतियोगिता यस्यैवंभूतः खलसम्बन्धिवृत्तान्तसामान्यकथनस्य निषेधः। **रूपेष्ट** पैशुन्यादिवृतान्तकथननिषेधरूपेण। **विशेषान्तरम्** चिन्तितदुःखप्रदत्वम्। अग्रिमग्रन्थसंयोजनपुरस्सरं सङ्गमनीया पङ्क्तिः।

सामान्याश्रययत्किंचिद्विशेषनिरूपणानिरूपणाभ्याम् । तत्र निरूपितेषु यत्किंचिद्विशेषेषु प्रयोजनाभावादप्रवर्तमानो निषेधो वक्ष्यमाणेष्टविषय एव संपद्यते । अनिरूपितेषु तु सुतराम् । चतुर्विधेऽप्यस्मिन्नाक्षेपे इष्टोऽर्थः, तस्य च निषेधः तस्याप्यसत्यत्वम्, अर्थगतविशेषप्रतिपादनं चेति चतुष्टयमुपयुज्यते । तेन नात्र निषेधविधिः । न वा विहितनिषेधः । अपि तु निषेधेनासत्येन विधेराक्षिप्यमाणत्वाद्योगार्थादाक्षेपः । स च प्रागुक्तदिशा चतुर्विधः ।

विधिना त्वसत्येन निषेधस्याक्षेपे अपरोऽयमाक्षेपः । अत्रापि अनिष्टोऽर्थः, तस्य विधिः, तस्याप्याभासत्वम्, अर्थगतविशेषप्रतिपादनश्चेति चतुष्टयमुपयुज्यते ।" इत्याहुः ।

---

पैशुन्यादिविशेषनिषेधेच्छया सामान्यतः खलवृतान्तकथनं निषिद्धम् । तत्प्रयोजनं विलक्षणदुःखप्रदानस्य व्यञ्जनम् । एतद्विषये सर्वस्वकारस्य मूलन्तु तच्च सामान्यप्रतिज्ञायां किञ्चिद् विशेषनिष्ठत्वेन निषिध्यते । सामान्याश्रय ● यद् किञ्चिद् विशेषं निरूप्य निषेधः । विशेषस्य निरूपणमन्तरापि निषेधः । नेष्टविषयः ● निरूपितानां निषेधस्य निःप्रयोजनतया अनिरूपितस्यापीष्टस्य निषेध आयाति । सुतराम् ● अन्येषां निषेधाप्रतीत्या इष्टस्येव निषेधः सिद्धयति । अंशान्तरस्योपादाने तु उपात्तांशस्यापि निषेधः शब्देनाभासते । सर्वोदाहरणे चत्वारोविषया अलङ्कारजीवातुभूता अवधेया इत्याह चतुर्विधे ● । तेन ● असत्यत्वेनैव । योगार्थात् ● यौगिकमात्रशक्तया । रूढिशक्तया तु आक्षेपे उक्तो विशेषोऽभिधीयते । चतुर्विधः ● निषेधाभासः । आक्षेपो द्विधा निषेधाभासो द्वितीयश्च वक्ष्यमाणो विध्याभास एकविधः । निषेधाभासः प्रथमं द्विविधः । वक्ष्यमाणविषयः उक्तविषयश्चेति । वक्ष्यमाणविषयो द्विविधः । यत् किञ्चिद् विशेषनिरूपणपुरस्सरं निषेधस्तादृशनिरूपणमन्तरा निषेधः । उक्तविषयोऽपि द्विविधः । वस्तुमात्रनिषेधो वस्तुकथननिषेधश्चेति । विध्याभासं लक्षयति विधिना ● । अनिष्टोऽर्थः ● अनिष्टस्य विधानादेव विद्यथाभासत्वम् । उक्तविषयस्य

एतेषां मते चेत्थमुदाहरणं निर्माणीयम्—
'न वयं कवयस्तव स्तवं नृप कुर्वीमहि यन्मृषाक्षरम् ।
रणसीम्नि तवावलोकने तरुणार्को दिनकौशिकायते ॥'
'मां पाहीति विधिर्विधेयविषयो वाच्यः स्वतन्त्रे कथं
नोपेक्ष्यो भवतास्मि दीन इति गीः श्लाध्या न संख्यावताम् ।
एवं दोषविचारणाकुलतया देव त्वयि प्रोन्मुखे
वक्तव्यप्रतिभादरिद्रमतयः किंचिन्नहि ब्रूमहे ॥'
'रे खल तव खलु चरितं विदुषामग्रे विविच्य वक्ष्यामि ।
अलमथवा पापात्मन्कृतया कथयापि ते हतया ॥'

---

निषेधाभासस्य वस्तुनिषेधोदाहरणम् न वयम्● राजानं प्रति कवेरुक्तिः । हे नृप ! न वयं कवयः । कवित्वे अर्थशून्यापि स्तुतिर्जायते । यद् येन अर्थशून्यान्यक्षराणि यस्मिन्तं स्तवं कुर्वीमहि । कवित्ववस्तुनिषेधादुत्तरार्थे स्तवे सत्यत्वविशेषोगम्यते । रणाङ्गणे तवावलोकने सति सैन्यसंघोत्थित धूलिवशादरूणोऽपि सूर्यो दिवाऽप्यदृश्यमानतया दिने कौशिक उल्लूक इवाचरति । उपमाप्यनुग्राहिका । अत्रेष्टोऽर्थः कवित्वम्, कवित्वनिषेधः, कविकृतेर्निषेधस्यासत्यत्वम् उत्तरार्धप्रतिपादिते विशेषस्य सत्यत्वस्य प्रतिपत्तिरिति चत्वारो विषयाः । उक्तविषयस्य निषेधाभासस्य वस्तुकथन निषेधोदाहरणम् मां पाहीति● कस्यचिद् रक्षादाने समीहमानस्य तत्समर्थं कमपि राजानं प्रत्युक्तिः । मा याहीति क्वाचित्के पाठे नायिकाया नायकं प्रत्युक्तिः, परमस्मिन् पक्षे प्रोन्मुखे इत्यस्य स्थाने प्रस्थिते इति सम्यक् पाठः स्यात् । मां पाहीति आज्ञायां लोट् प्रत्ययस्यार्थः विधिः विधेयभृत्यादिविषयः स्वतन्त्रे पुरुषे कथं वाच्यः ? दीनइति हेतोर्भवता नोपेक्ष्य इति वाणी बुद्धिमतां कातरतया न प्रशंसनीया । हे देव ! त्वयि सन्मुखे एवं सर्वविधेऽपि प्रार्थनाप्रकारे दोषस्य विचारणया आकुल्येन वक्तव्यस्य वचनप्रकारविशेषस्य निर्दोषस्य स्फूर्तौ दरिद्रा मति येषां ते एवंभूताः किञ्चिदपि न ब्रूमहे । अत्रेष्टोऽर्थः रक्षणं, तस्य निषेधः, तस्यासत्यत्वं, रक्षणस्यावश्यानुष्ठेयताविशेषस्य प्रतिपादनम् । वक्ष्यमाणविषयस्य निषेधाभासस्य किञ्चिद्विशेषनिरूपणमन्तरा सामान्यनिषेधस्योदाहरणम् रे खल● रे खल ? तव पैशुन्यादिचरितं

'श्वासोऽनुमानवेद्यः शीतान्यङ्गानि निश्चला दृष्टिः ।
तस्याः किं वा पृच्छसि निर्दय तिष्ठत्वसौ हता वार्ता ॥'

तत्राद्यपद्ये कवेरुक्तौ कवित्वनिषेधो बाधितो मिथ्यावादित्वनिषेधात्मना पर्यवस्यन्नुत्तरार्धगतस्यार्थस्य सत्यस्वरूपं विशेषं व्यनक्ति। एवं द्वितीयपद्ये रक्षणदानयोः कथनस्येष्टत्वान्निषेधो बाधितस्तयोर्विवक्षितत्वे पर्यवस्यन्नवश्यानुष्ठेयताम्। तृतीये खलसंबन्धिवृत्तान्तकथनत्वेन सामान्यरूपेण प्रकृतपैशुन्यादिवृत्तान्तकथनस्य वक्ष्यमाणस्य निषेधः कथ्यमानस्तस्य चिन्तितदुःखप्रदताम्। चतुर्थे कंचन तत्संबन्धिन्या वार्तया अंशं श्वासतानवादिकं कथयित्वा क्रियमाणो निषेधो वक्ष्यमाणमरणवार्ताविषयः संस्तस्या मुखादनिःसरणीयताम्। एषु निषेधस्याप्रतिष्ठानान्न विहितनिषेधः, नापि निषेधविधिः।

'तपोनिधे कौशिक रामचन्द्रं निनीषसे चेन्नय किं विकल्पैः।
निरन्तरालोकनपुण्यधन्या भवन्तु वन्या अपि जीवभाजः॥'

---

निश्चयेन विविक्तं कृत्वा विदुषामग्रे वक्ष्यामि। अथवा न वक्ष्यामि। हे पापात्मन् दुष्टया कृतया तव चर्चयाऽपि अलम्। चर्चाऽपि न कर्त्तव्या। कथापि खलु पापानामलमश्रेयसे यत इति न्यायात्। अत्र सामान्यकथननिषेधद्वारा पैशुन्यविशेषस्य निषेधः। अत्रापि पूर्ववत् पैशुन्यादिकथनस्येष्टत्वं तस्य निषेधस्तस्याभासत्वं खलस्य पैशुन्यादिवृत्त्या अतिदुःखदातृत्वविशेषस्य प्रतिपादनम्। वक्ष्यमाणविषयस्य निषेधाभासस्य किञ्चिद् विशेषनिरूपणपुरस्सरमंशान्तरनिषेधाभिधित्सया सामान्यकथननिषेधस्योदाहरणं श्वासोऽनुमानवेद्यः● अत्र विरहिण्याः काश्चनावस्थाः पूर्वार्धेन निरूप्य आसन्नमरणावस्थाकथननिषेधाभिप्रायेण तद्विषयकवृतान्तसामान्यकथनस्य निषेधः। अत्रापि वृतान्तकथनस्येष्टस्य निषेधः तस्याभासत्वेन मरणासन्नताविशेषस्य प्रतिपादनम् प्रयोजनम्। निषेधस्याप्रति● निषेधस्य बाधितत्वेन। विध्याभासस्याक्षेपस्योदाहरणम् तपोनिधे● पुत्रनयनमनिच्छतोऽपि दशरथस्य

अत्र पुत्रस्नेहाकुलस्य दशरथस्य वाक्ये नयेतिविधिर्बाधितो मा नयेतिनिषेधे पर्यवसितोऽन्यथा तु मम प्राणवियोगो भविष्यतीत्यर्थं व्यनक्तीति विध्याभासरूपोऽयमाक्षेपः ।

एवमुदाहरणेषु स्थितेषु प्राचीनमतानुसारीण्याक्षेपोदाहरणान्येषां मतेऽनुदाहरणान्येव । इत्थं च प्राथमिकमतसिद्ध आक्षेपः प्रतीपप्रभेदः । द्वितीयमतसिद्धस्तु विहितनिषेध एव, न पुनराक्षेपः । तत्र निषेधस्यानाभासरूपत्वात् । इति तदाशयः ।

इतरे तु—

"—'निषेधमात्रमाक्षेपः ।'

चमत्कारित्वं चालङ्कारसामान्यलक्षणप्राप्तमेव । तच्च

---

विश्वामित्रं प्रति कथनं विधिरूपेण नो जीविष्यामीति सूचनार्थम् । हे तपोनिधे कौशिक विश्वामित्र रामचन्द्रं नेतुमिच्छसि चेत् नय विविधकल्पनाभिरेवं प्रयोजनमेतादृशोऽयमिति आदिभिः किम् ? कल्पना न कार्या । अहन्तु हतभाग्यः परं वनवासिनो निरन्तरदर्शनजन्यपुण्यातिशयेन धन्याः सन्तो जीवन्तो भवेयुः । अत्रापि पूर्वोक्तरीत्या पुत्रनयनस्यानिष्टत्वं तस्य लोटा विधानम्, तस्य बाधितत्वेन नो जीविष्यामीति विशेषप्रतिपत्ति च स्वयमेव दर्शयति । अत्र पुत्रस्नेह● । प्राचीनमतविवेचनं सर्वस्वकारमतेनाह एवमुदाहर● । प्रतीपभेद ● वामनसम्मताक्षेपस्य यथा प्रतीपभेदत्वं तथा प्राङ्निरूपितम् । विहितनिषेध एव● वस्तुमात्रमलङ्कारतामभजमानम् । आक्षेपालङ्कारताऽबाधकमाह तत्र निषेधस्य● तेषूदाहरणेषु निषेधस्याबाधितत्वेनाभासत्वाभावात् । यत्र तु निषेधस्याभासत्वं विशेषप्रतिपत्तिः प्रयोजनञ्च तस्यै तेन संग्रहः । तृतीयेन वामनमतेन तु न सर्वकारस्य मतविरोधोऽपि तु संक्षिप्तोक्तस्य तस्य विकाशमात्रमित्याद्यभिप्रेत्याह तदाशयः । इतरे● पूर्वोक्तमत चतुष्टयानुगामिवक्ष्यामाणलोचनकारोदाहरणपर्यवसायि च लक्षणं निर्नित्सवः । निषेधमात्रम्● अपह्नुतिभिन्नमित्यादिशेषः । साधारणनिषेधेऽतिव्याप्तिं परिहरति चमत्कारित्वम्● । तच्च● चमत्कारित्वञ्च । सर्वोदाहरणानुगत-

व्यङ्ग्यार्थे सति संभवतीति । सव्यङ्ग्यो निषेधः सर्वोऽप्याक्षेपालङ्कारः । एवं चोपमेयकृतोपमानकैमर्थक्य—पक्षान्तरालम्बनकृतप्राचीनपक्षकैमर्थक्य—विशेषप्रतिपादनप्रयोजकोक्तवक्ष्यमाणकथनकैमर्थक्यानामनुपदोक्तनिषेधविध्याभासयोश्च संग्रहः" इत्यप्याहुः ।

अथाक्षेपध्वनिस्तन्मतानुसारेणोदाह्रियते—

'त्वामवश्यं सिसृक्षन्यः सृजति स्म कलाधरम् ।
किं वाच्यं तस्य वैदुष्यं पुराणस्य महामुनेः ॥'

अत्र येषामुपमानकैमर्थ्यमाक्षेपस्तेषां त्वयि सति किं कलाधरेणेत्यंशमादाय, येषां च निषेधमात्रमाक्षेपस्तेषां ब्रह्मणो वैदुष्यं नास्तीत्यंशमादाय च ध्वनिः ।

ननु किं वाच्यं तस्य वैदुष्यमिति वैदुष्योक्तेः सबाधाया झटिति वैदुष्याभावे पर्यवसानात्, उपमानकैमर्थ्यस्यापि झगित्येव प्रतीतेर्वाच्यकल्पत्वात्कथं नाम ध्वनित्वं स्यादिति ? । नैष दोषः । ब्रह्मणो हि त्वां सिसृक्षतः करणपाटवसंपत्त्यर्थमादौ

---

वं दर्शयति एवञ्चोपमेयः● प्रथमकैमर्थ्यपर्यन्तं प्रथमपक्षो द्वितीयकैमर्थ्यं यावत् द्वितीय पक्षः, कथनकैमर्थ्यावधिस्तृतीयपक्षः । अनुपदोक्तेत्यादिनोक्तं, सर्वस्वकारमतम् । प्रथमद्वितीयपञ्चमपक्षे ध्वन्नुदाहरणमाह, त्वामवश्यं सिसृक्षन्● यो विधिस्त्वामवश्यं स्रष्टुमिच्छन् हस्तलाघवसम्पादनाय चन्द्रं सृजति स्म । तस्य पुराणस्य परमप्राचीनशिल्पिनो महामुनेर्ब्रह्मणः वैदुष्यं कला निपुणता किं कथनीयम् । अपूर्वं येन तव शरीरं निष्पन्नम् । अथवा तव प्रतिरूपकं निकृष्टं कलाधरं सृजतस्तस्य वृद्धत्वादेवोहापोह शैथिल्यात् किं वैदुष्यं वाच्यम् । वाच्यमिव शीघ्रतया प्रतीयमानतया ध्वनित्वाभावं शङ्कते ननु किं● व्यङ्ग्यमन्तराऽपि वाच्यार्थविश्रान्त्या ध्वनित्वमवस्थापयति ब्रह्मणो हि● वैदुष्यस्य बाधे हि झगिति वैदुष्याभावः पर्यवस्येत् ।

पाण्डुलेखवदिन्दुं निर्मितवतः किं वैदुष्यं वाच्यमिति वैदुष्योक्ते-र्निर्बाधत्वादादौ सत्यां विश्रान्तौ पश्चादवश्यं पुराणस्येत्येतदर्थ-पर्यालोचनेन वैदुष्याभाव—चन्द्रकैमर्थ्ययोः पर्यवसानमिति न ध्वनित्वस्खलनम् ।

येषां त्वाभासरूप एव निषेध आक्षेपस्तेषां न प्रागुक्त आक्षेपध्वनिः, अपि त्वयम्—

'त्वां गीर्वाणगुरुं सर्वे वदन्तु कवयस्तु ते'
समानकक्षस्तेनासीत्येषोऽर्थस्तु मतो मम ॥'

अत्र कवेर्वाक्ये बाधितत्वादाभासरूपो नाहं कविरिति निषेधो गम्यमानो मिथ्यावादित्वाभावरूपेण पर्यवस्यन्नुत्त-रार्धार्थस्य सत्यतारूपं विशेषं गमयति ।

इत्थं स्वस्वाभिमानभेदादाक्षेपाणां भेदात्तद्ध्वनीनां स्थिते विवेके—

---

बाधाभावे तु अवश्यं पुराणस्येत्यर्थपर्यालोचनेनेति क्व वाच्यायमानत्वम् । अत्र निषेधमात्रस्य व्यङ्ग्यत्वान्निषेधाभासस्य चाव्यङ्ग्यत्वादाह येषां त्व● । त्वां गीर्वाण● सर्वे त्वां गीर्वाणगुरुं बृहस्पतिं वदन्तु नाम यतस्ते कवयोऽर्थ-शून्यानामपि गिरां प्रयोक्तारः । अहन्तु न कविरतः सत्यार्थमेव ब्रवीमि यत् तेन गीर्वाणगुरुणा सदृशोऽसि । एष एवार्थः सत्यतया मम मतः । कविवाक्येन वस्तुतः स्वकवित्वनिषेधस्य बाधिततया निषेधाभासत्वेन तिष्ठतीत्याह अत्र कवेः● कवित्वनिषेधोमिथ्यावादित्वनिषेधात्मा तेन च सत्यताविशेषस्य प्रतीतिः । विवेके● नैकविधएव ध्वनिः समेषामाचार्याणां मते इति विवेके स्थिते एकमतेनोदाहरणे ध्वनित्वासम्भवे नैवेदं ध्वनेरुदाहरणमिति वक्तुं न युक्तम् मतान्तरेण ध्वनित्वनिष्पत्तौ । तथा च लोचनकारोदाहरणे निषेधरूपस्य पञ्चमपक्षोदाहरणध्वनित्वसम्भवेन तन्निराकरणं स्वमतेन न युक्तम् ।

'स वक्तुमखिलाञ्शक्तो हयग्रीवाश्रितान् गुणान् ।
योऽम्बुकुम्भैः परिच्छेदं ज्ञातुं शक्तो महोदधेः ॥'

इति पद्यं ध्वनिकारैराक्षेपध्वनित्वेनोदाहृतम् 'स्वाभिमताक्षेपानभिव्यक्तेरनुदाहरणमेवैतत्' इति निर्युक्तिकं वदन्नलङ्कारसर्वस्वकृत्परास्तः । न ह्याभासरूप एव निषेध आक्षेप इत्यस्ति वेदस्याज्ञा । नापि प्राचामाचार्याणाम् । न चापि युक्तिः । येन ध्वनिकारोक्तमुपेक्ष्य त्वदुक्तं श्रद्दधीमहि । प्रत्युत वैपरीत्यमेवोचितम् । ध्वनिकृतामालङ्कारिकसरणिव्यवस्थापकत्वात् । न ह्यस्मिञ्शास्त्रे आक्षेपादिशब्दसंकेतग्राहकं प्रमाणान्तरमस्ति, ऋते प्राचीनवचनेभ्यः । अन्यथा सकलविपर्यासापत्तेः ।

यत्तु—

'नरेन्द्रमौले न वयं राजसंदेशहारिणः ।
जगत्कुटुम्बिनस्तेऽद्य न शत्रुः कश्चिदीक्ष्यते ॥'

इति पद्यमलङ्कारसर्वस्वकारमतेनोदाहृत्येत्थमुक्तं कुवलयानन्दकृता—'अत्र संदेशहारिणामुक्तौ न वयं संदेशहारिण इति निषेधोऽनुपपन्नः संधिकालोचितकैतवचनपरिहारेण यथार्थ-

---

स वक्तुम्● यः पुरुषो जलघटैः सागरस्य परिमाणं ज्ञातुं शक्तः स एव हयग्रीवस्य भगवतोऽखिलान् गुणान् वक्तुं शक्तः । तथा च निषेधरूपस्याक्षेपस्योदाहरणं ध्वनिर्युक्तम् स्वामि● निषेधाभासो विध्याभासो वा । निर्युक्तिकस्य स्वीकारे बीजाभावमाह नहीत्यतो णामन्तेनायुक्तिमात्रावलम्बिनामपि नाङ्गीकारार्हमित्याह न चापि● । वैपरीत्यम्● ध्वनिकृतो विरोधे सर्वस्वमतस्योपेक्षा । वैपरीत्ये हेतुमाह ध्वनिकृताम्● अन्धस्य यष्टिरिवालङ्कारसरणौ । प्रमाणान्तरम्● आचार्यवचोव्यवहारातिरिक्तम् । अन्यथा● प्राचां मार्गानुसरणमन्तरा । वस्तुनिषेधात्मकस्य निषेधाभासस्योदाहरणं नरेन्द्रमौले● सन्धिस्थापनाय समागतस्य राजदूतस्य राजानं प्रत्युक्तिः

वादित्वे पर्यवस्यन्सर्वजगतीपालकस्य तव न कश्चिदपि शत्रुभावेनावलोकनीयः किं तु सर्वेऽपि राजानो भृत्यभावेन संरक्षणीया इति विशेषमाक्षिपति' इति। तन्न। त्वदुक्तस्य

---

हे राजभूषण ! न वयं राजसंदेशप्रदातारो दूताः किन्तु सत्यवादिनो वस्तुस्थितिसूचकाः। अद्येदानीं जगत्कुटुम्बं कुर्वतस्ते कश्चिदपि शत्रुर्नेष्यते। अत्र पण्डितराजस्येदं मतम्। राजसंदेशहारिणस्तस्य निषेधानुपपत्त्या राजसंदेशहारिपदस्य सन्धिकालिककैतववक्तृत्वे लक्षणया कैतववक्तृत्वनिषेधेन वस्तुस्थितिवादित्वं विशेषोव्यज्यते। अलङ्कारसर्वस्वकारोऽपि बालक नाहमित्यादौ तु वास्तववादिर्विशेषो गम्यते इत्युक्तम्। वास्तवं सत्यत्वम्। आदिपदेन लोभविरहादिः। वास्तव आदिर्यस्य शीघ्रं गत्वा संजीवयेत्यादेरित्यादिसर्वस्वकाराभिप्रायप्रदर्शनमलङ्कारचन्द्रिका कृतवती तु कुवलयानन्दसमर्थनाग्रहिलतैव। तादृशाभिप्रायासम्भवात्। वस्तुवादित्वम् आदिः पूर्ववदर्थः। सर्वराजानो भृत्यभावेन परिपालनीया इत्यादि तु उत्तरार्धस्य व्यङ्ग्यम्। पूर्वार्धव्यङ्ग्येन यथार्थत्वादिना उत्तरार्धव्यङ्ग्यस्य परिपुष्टिर्जायते। निषेधाभासस्य तद्व्यञ्जकत्वे सामर्थ्याभावात्। अनुभवविरोधाच्च। अन्यथा उत्तरार्धस्य जगत्क्षेमप्रिया नित्यं शमं दातुं समागता इति विपरिणामेऽपि तादृशं व्यङ्ग्यं स्थानं लभेत। यत्तु सत्यवादित्वमात्रं न चमत्कारि अतोऽधिकं व्यञ्जनीयमित्यादिमर्मप्रकाशादिलेखनं तदपि आग्रहमूलकमेव। वाचोभङ्ग्या व्यञ्जनमेव वस्तुनः सौन्दर्यं नान्यत्स्वभावसिद्धं किमपि,अन्यथा बीभत्सस्थले व्यङ्ग्यमात्रस्यासौन्दर्यापत्तेः। व्यज्यतां यत् किञ्चिदन्यदपि यथा रुचि परं सत्यत्वादिविशेषस्य व्यङ्ग्यस्य व्यङ्ग्यं तदित्यवधार्यताम्। निषेधाभासव्यङ्ग्यन्तु सत्यत्वादिकमेवेति स्वीकुरु। यदपि चन्द्रिकाकृता निषेधाभावे नोत्तरार्धमात्रेणोक्तविशेषो व्यङ्ग्यो भवति सन्धिकालोचितकैतव वचनत्वेनापि सम्भाव्यमानत्वात् अपितु तत्कालीनसन्ध्यभिप्रायमात्रावगमइत्यादि तदपि रसगङ्गाधराभिप्रेतानवबोधमूलतां प्रथयति। तथाहि निषेधाभावे सत्यत्वाप्रतीत्या कैतववचनत्वं सम्भाव्येतेत्येवैतेषां वचःसारः। पण्डितेन्द्रप्रतिपादितसत्यत्वादिविशेषस्य धर्मिभूत उत्तरवाक्यार्थ एव। उत्तरांशेन व्यज्यते तत्र सत्यत्वप्रतीति र्निषेधाभासेन सम्पाद्यत इत्येव पण्डितेन्द्रेणोच्यते तन्नावगतम्। एतेन चन्द्रिकागुरुमर्मप्रकाशोऽपि नाहं

विशेषस्य निषेधाव्यङ्ग्यत्वात्। नहि 'न वयं राजसंदेशहारिण' इत्युक्ते 'तव न कश्चिदपि शत्रुभावेनावलोकनीयः, किं तु सर्वेऽपि राजानो भृत्यभावेन संरक्षणीया' इति विशेषोऽवगम्यते। अवगम्यते च जगत्कुटुम्बिन इत्याद्युत्तरार्धे प्रयुक्ते। यो हि निषेधमात्रसामर्थ्याक्षिप्तो विशेषस्तं निषेध आक्षिपतीति युक्तं वक्तुम्, न तु परकीयं विशेषम्। तथा हि राजसंदेशहारिणा प्रयुक्ते 'न वयं राजसंदेशहारिण' इति वाक्ये स्वस्मिन् स्वनिषेधस्य बाधाद्राजसंदेशहारिपदेन लक्षणया राजसंदेशहारिनिष्ठकैतववचनप्रयोक्तृत्वादिधर्मवन्त उपस्थाप्यन्ते। प्रयोजनं च तन्निषेधे सति स्वगतस्य सत्यवक्तृत्वादेः, स्ववचनगतस्य सत्यत्वादेर्वा प्रत्ययः। अयमेव च विशेषस्याक्षेपः। एवं स्थिते किमुच्यते तव न कश्चिदपि शत्रुभावेनेत्यादि।

यदि तु पूर्वोक्तादेव बाधाद्राजपदस्य शत्रुलक्षणया न वयं शत्रुसंदेशहारिण इति प्राप्तेनार्थेनास्मत्स्वामिनः शत्रव एव न भवन्ति, किं तु भृत्यभावेन पालनीया इति विशेषोऽवगम्यत इत्युच्यते, तदा तृतीयकक्ष्यारूढो नास्मत्स्वामिन इति निषेध आक्षेपः स्यात्, न तदुत्थापकस्त्वदुक्तो यथाश्रुतनिषेधः, यदि तु परम्परया यथाकथञ्चिद्विशेषोत्थापकोऽप्याक्षेप इत्युच्यते, तथापि 'संधिकालोचितकैतववचनपरिहारेण यथार्थवादित्वे पर्यवस्यन्' इत्यादेस्त्वद्वचनस्यासंगतिरेव। नहि यथार्थवादित्वेन केवलेन त्वदुक्तो विशेष आक्षेप्तुं शक्यते, किं तूत्तरार्धेनाक्षिप्तः

---

दूतीत्यादि कुवलयानन्दोदाहरणमुखेन प्रवर्त्तमानः शिष्यसम्मानयोगक्षेमश्चिन्तितो वेदितव्यः। इति दिक्। नहि न वयम् [illegible] नहीति अवगम्यत इत्यनेनान्वयि। निषेधमात्र [illegible] मात्रपदेनोत्तरार्धस्य व्यवच्छेदः। इतोऽपि

परिपोष्टुम्। तस्माद्यत्र त्वया निषेधस्य पर्यवसानमुक्तं स एव विशेषस्तस्याक्षेप्यः, न तु विशेषान्तरम्। अत एव "—'बालक नाहं दूती—' इत्यत्र दूतीत्वस्य वस्तुनो निषेधेन वस्तुवादित्वादिर्विशेषो व्यज्यते" इत्यलङ्कारसर्वस्वकृतोक्तं संगच्छते।

इति रसगङ्गाधरे आक्षेपनिरूपणम्

**अथ विरोधमूलालङ्काराः—**

**एकाधिकरणसंबद्धत्वेन प्रतिपादितयोरर्थयोर्भासमानैकाधिकरणासंबद्धत्वम्, एकाधिकरणासंबद्धत्वभानं वा विरोधः।**

**यद्वा—**

**एकाधिकरणासंबद्धत्वेन प्रसिद्धयोरेकाधिकरणसंबद्धत्वेन प्रतिपादनं सः।**

**स च प्ररूढोऽप्ररूढश्च। प्ररोहश्च बाधबुद्धयनभिभूतत्वम्।**

---

चन्द्रिकाकृतां प्रयासोऽयुक्तः। परकीयमुत्तरार्धीयम्। **तस्माद्यत्र** ● यथार्थवादित्वे। **विशेषान्तरम्** ● भृत्यभावेनेत्यादि। बालक! नाहं दूती तस्याः प्रियोऽसीति न मम व्यापारः। सा म्रियते तवायशः एतं धर्माक्षरं भणामः। इत्यस्य प्राकृतच्छाया सर्वस्वग्रन्थे वर्तते। तथा च तन्मत व्याख्यानेऽपि तन्मूलग्रन्थविरोधो महान् दोषः।

॥ इत्याक्षेपनिरूपणम् ॥

## विरोधाभासनिरूपणम्

प्रकरणविच्छेदार्थमाह **अथ विरोध** ● विरोधाभासाङ्गविरोधं लक्षयति **एकाधिकरण** ● शनिरशनिश्चेत्यादावतिप्रसङ्गवारणाय तयोरित्यन्तम्, तत्र तथाप्रतिपादनाभावात्। **भासमानै** ● भासमानमेकाधिकरणे असम्बद्धत्वमसम्बन्ध इत्यर्थः। इदञ्च विरोधस्य संसर्गाभाववस्तुस्वरूपत्वे, ज्ञानस्वरूपत्वे तु भानं विशेष्यीकृत्य लक्षयति **एकाधिकरणा** ● वाचो भङ्गया अलङ्कारप्रयोजकत्वात्प्रतिपादनरूपविरोधलिलक्षयिषया आह **यद्वा** ● **बाधबुद्धय** ●।

तद्वैपरीत्यमप्ररोहः । तत्राद्यो दोषस्य विषयः, द्वितीयश्चालङ्कारस्य । अत एवेमं विरोधाभासमाचक्षते । आ ईषद् भासते इत्याभासः । विरोधश्चासावाभासश्चेति । आमुख एव प्रतीयमानो झगिति जायमानाविरोधबुद्धितिरस्कृत इति यावत् । तत्रापि कार्यकारणादिबुद्धचनालीढो विरोधाभासो विरोधालङ्कारः । तदालीढस्तु विभावनादिर्वक्ष्यमाणः ।

अस्य च जाति–गुण–क्रिया–द्रव्याणां पदार्थानां मध्ये जातेर्जाति–गुणक्रिया–द्रव्यैः, क्रियायाः क्रिया–द्रव्याभ्याम्, द्रव्यस्य द्रव्येणेत्यपुनरुक्ता दश भेदाः ।

क्रिया चात्र न वैयाकरणानामिव शुद्धा भावना । नापि नैयायिकानामिव स्पन्दरूपा । किं तु तत्तद्धातुवाच्या विशिष्टव्यापाररूपा ।

उदाहरणम्—

'कुसुमानि शरा मृणालजालान्यपि कालायसकर्कशान्यभूवन् ।
सुदृशो दहनायते स्म राका भवनाकाशमथाभवत्पयोधिः ॥

---

वस्तुतो विरोधो न प्रतिवध्यते स च दोषः । शीघ्रं प्रतिवध्योऽलङ्कारः । त्यपुनरुक्ताः ● असंकीर्णाः । द्रव्यस्य जात्यादिभिर्भेदाः प्रागुक्तभेदेषु अन्तर्भूता इति न पृथग् गणनीया इति भावः । शुद्धा भावना ● फलानुकूलत्वेन प्रतीयमाना लिङ्गसङ्ख्यानन्वयिनी कारकान्वयिनी असत्वसाध्यादिशब्दैर्व्यवह्रियमाणा । स्पन्दरूपा ● क्रियामात्रम् । उदाहरणविरलताप्रसङ्गात् । किन्तु ● फलविशिष्टव्यापाररूपं धात्वर्थमात्रम् । जातेर्जात्या जात्यन्तरैश्च विरोधस्योदाहरणम्–कुसुमानि शराः ● विरहिण्याः अद्भुतावस्थावर्णनम् । सुदृशः कृते पीडाजनकतया सुकुमारतया प्रसिद्धान्यपि कुसुमानि शरा अभूवन् । अत्र शरत्वकुसुमत्वजात्योर्विरोधः । मृदून्यपि मृणालजालानि काललोहवत् कठिनान्यभूवन् । अत्र मृणालत्वजातेः कार्कश्यगुणेन विरोधः, शीतला

अत्र पुरः स्फुरन्नपि जात्यादीनां विरोधो विरहिणीदुखजनकत्वविमर्शनान्निवर्तते ।

'त्वयि दृष्टे त्वया दृष्टे भवन्ति जगतीतले ।
महान्तोऽप्यणवो राजन्नणवश्च महत्तराः ॥'

'खलानामुक्तयो हन्त कोमलाः शीतला अपि ।
हृदयानीह साधूनां छिन्दन्त्यथ दहन्ति च ॥'

'विचारिते महिमनि त्वदीये नित्यनिर्मले ।
परमात्मन् गगनमप्याधत्ते परमाणुताम् ॥'

'हर्षयन्ति क्षणादेव क्षणादेव दहन्ति च ।
यूनः स्मरपराधीनान्निर्दया हन्त योषितः ॥'

---

पूर्णिमारात्रिः कामोद्दीपकतया दहनोऽग्निरिव आचरति, दाहं जनयति । अत्र राकात्वस्य दाहक्रियया विरोधः । अथानन्तरं व्यामोहवशाद् गृहाकाशं लघुपयोधिरभवत् । अत्राकाशत्वस्य पयोधिद्रव्येण विरोधः । विरोधस्याभासत्वं सङ्गमयति अत्र पुरः● प्रथमम् । गुणस्य गुणान्तरेण विरोधं वैचित्र्याय द्विधोदाहरति त्वयि दृष्टे● राजानं प्रति कवेरुक्तिः । यथासङ्ख्येन चान्वयः । महान्तोऽपि तव दर्शनवेलायां तव तेजसाऽभिभूता अणवो लघवो भवन्ति । तव कृपादृष्टिपातेन चाणवोऽपि महान्तः किमु महत्तरा भवन्ति इति भावः । एवंरीत्या चान्वयो विधेयः । महत्त्वाणुत्वयोर्विरुद्धयोरुपादानम् । भावलक्षणे सप्तमी द्वितीये दृष्टे भावेक्तः त्वत्कर्मकदर्शनकर्तारो महान्तोऽणवो भवन्ति । त्वत्कर्तृकदर्शनोत्तरकाले अणवो महत्तरा इति योजना । गुणस्य क्रियया विरोधोदाहरणम् खलानामु● कोमलस्य च्छेदनं शीतलस्य च दाहो विरुद्धः । गुणस्य द्रव्यस्योदाहरणम् विचारिते● परमाणुतया परममहतो गगनस्य विरोधः । गगनापेक्षया महत्तरो महिमा व्यज्यते । क्रियायाः क्रियया विरोधस्योदाहरणम् हर्षयन्ति● दाहहर्षणयोर्विरोधः । हन्तेति आश्चर्ये । निर्दया योषितः कामवशान् तरुणान् क्षणादेव संयोगेनानन्दयन्ति, क्षणादेव वियोगेन दहन्ति च । क्रियाया द्रव्येण-

'कान्तारे विलपन्तीनां त्वदरातिमृगीदृशाम् ।
देवनानि समाकर्ण्य हरिद्भिरपि चुक्षुभे ॥'

इत्यादि स्वयमूह्यम् ।

अत्र जात्यादिरिति धर्ममात्रं विवक्षितम्, उपलक्षणपरत्वात् । तेन 'यः किल बालकोऽपि पुराणपुरुषः', 'विशुद्धमूर्तिरपि नीलाम्बुदनिभः', 'जगद्धितकृदपि जगदहितकृत्', 'अगोद्धारकोऽपि नागोद्धारकः' इत्यादौ सखण्डोपाधेरभावस्य च परिग्रहः ।

वस्तुतो जात्यादिभेदानामहृद्यत्वाच्छुद्धत्वश्लेषमूलत्वाभ्यां द्विविधो ज्ञेयः ।

ननु 'हितकृदप्यहितकृत्', 'अगोद्धारकोऽपि नागोद्धारकः'

---

त्यस्योदाहरणम् कान्तारे● क्षोभक्रियाया दिशाभिर्विरोधः । देवनं परिदेवनं व्यवहारो वा । देवनं व्यवहारे स्यादित्यादिकोशात् । इत्यादि● द्रव्यस्य द्रव्येण विरोधादिकम् । वक्ष्यमाणरीत्या विच्छित्तिविशेषानाधायकत्वाद् ग्रन्थविस्तरभयादन्यत्र वर्णनाच्चाह स्वयमूह्यम् । यथाऽऽकाशहिमाचलद्रव्ययोर्विरोधः प्रतिलवविवर्धमानत्वत्कीर्तिकदम्बसंबाधम् । आकाशमपि महीश्वरहिमवानिति कौतुकं भाति । विवक्षितम्● न तु नैयायिकादीनां संकुचितम् । कोऽपि● प्रथमवयस्त्वचरमवयस्त्वयोरुपात्तयोर्विरोधः पुराणप्रतिपादितमूर्तित्वेन परिहारः । श्वेतमूर्तित्वश्यामत्वयोर्विरोधो निर्दोषमूर्तित्वेनाविरोधः । हितकर्तृत्वहितकर्तृत्वाभावोपाध्योर्विरोधः, कृतीछेदन इत्यस्य क्विप्प्रत्ययान्तस्य शत्रुच्छेत्तृत्वेनाविरोधः । पर्वतोद्धारकत्वतदुद्धारकत्वाभावयोर्विरोधोऽविरोधस्तु द्वितीयस्य नगगजस्य कालियनागस्य वोद्धारकत्वार्थकत्वेन । अखण्डोपाधेर्जातिसमशीलतया आह सखण्डोपाधेः● धर्मग्रहणेनाभावस्याप्यत्र भेदे जातितया गणना । ज्ञेयः● विरोधो द्विविधो ज्ञेयः शुद्धः श्लिष्टश्च । शुद्धो निश्लेषः कुसुमानि शरा इत्यादि, श्लिष्टश्च पुराणमूर्तीत्यादि ।

इत्यादौ विरोधस्य प्रतिभामात्रम्, श्लेष एव त्वलङ्कारः। तस्य स्वविषये प्रायशः सर्वालङ्कारापवादकत्वादिति चेत्, कविः शृणोति।

इदं तु बोध्यम्—यत्रापिशब्दादिर्विरोधस्य द्योतकस्तत्र विरोधः शाब्दः, अन्यत्र त्वार्थ इति तावत्प्राचां सिद्धान्तः। तत्र शाब्दत्वं शब्दकरणकप्रतीतिगोचरत्वं विरोधस्य न घटते। 'त्रयोऽप्यत्रयः' इत्यादौ नियतेषु विशेषणविशेष्यसंसर्गेषु

---

**प्रतिभासमात्रम्●** विरोधत्वेन विरोधस्फूर्तावपि नालङ्कारभावेनावस्थानम्, श्लेषेण बाधात्। उत्तरमाह कविः शृणोति अयं भावः—यावत्कश्चित्कविर्न शृणोति तावदेव श्लेषस्यापवादत्वं प्रतिभासेत। श्लेषप्रकरणे श्लेषस्यापवादस्य स्फुटतया न कश्चिदपि कविः सन् श्लेषस्य निरवकाशत्वं मनुते इति।

**करणक●** शब्दकरणिका प्रतीतिः शाब्दबोधः, अपिशब्दस्य द्योतकतया विरोधस्योपस्थित्यसम्भवात् पदादुपस्थितस्यैव प्रकारविशेष्यत्वात्, विशेषण-विशेष्यत्वासम्भवः। न क्वचिद्विरोधस्य संसर्गता आकाङ्क्षाबललभ्या। एतादृशापिशब्दसमभिव्याहारे तत्कल्पनेऽपि योग्यताज्ञानासम्भवाद् बाधबुद्धेश्च विरोध-संसर्गकबुद्धिं प्रत्यपि स्वतन्त्रप्रतिबन्धकताया अनुभवसिद्धत्वादन्यथाऽविरुद्धा-विमावित्यादिनिश्चयसत्त्वेऽपि विरोधसंसर्गकबाधापत्तेः। यथा त्रयोऽत्रय इत्यादौ त्रयोऽत्रेरपत्यानीति अविरोधबुद्धिः, विरोधबुद्धिस्तु अभिमन्येत तदा त्रिभिन्ना-स्त्रय इत्येवाकारो भवेत्। प्रथमञ्च स शाब्दबोध एव न जायेत, द्वयोः पदार्थ-योर्योग्यताऽज्ञानात्ऽन त्रयस्त्रिभिन्ना इति बाधबुद्धिपराहतत्वाच्च। वैयञ्जनिक-बोधे बाधबुद्धेरप्रतिबन्धकत्वम् आहार्यबोधो वा कल्प्येत, तथाऽपि त्रिपदार्थो विशेष्योऽत्रिपदार्थश्च विशेषणम्। नामार्थयोरभेद इति नियमादभेदश्च संसर्ग इति विरुद्धयोरप्यनयोर्बोधे न कामपि शाब्दविषयतामाश्रयति विरोध इति नाविदितं शाब्दसरणिप्रविष्टानाम्। सरला तु सरला नैतादृशे विषये ग्रन्थ-कृद्धृद्यं स्पृशन्ती विषयगहनतया च स्खलन्ती नापातती निर्दोषावसेया सूरिभिः। ननु बालकत्वाधिकरणे बालकेऽवृत्तित्वात्पुराणत्वस्य यथा बालकत्व-पुराणत्वयोर्विरोधस्तथा घटघटाभावयोरपि विरोधः प्रसिद्धतरः। तत्र घट-

विरोधस्य कुत्राप्यसमावेशात्। न च तदधिकरणावृत्तित्वमिव तत्प्रतियोगिकत्वमपि विरोधः। तथा च प्रकृते नञर्थोत्तर-पदार्थयोः प्रतियोगित्वस्य संसर्गत्वात्संसर्ग एव विरोधस्य समावेश इति वाच्यम्। 'सुप्तोऽपि प्रबुद्धः' इत्यादौ तथाप्य-समावेशात्। नहि सुप्तः 'सुप्तत्वविरुद्धत्ववदभिन्न इति शाब्दधीरनुभवसिद्धा, येन लक्षणादिकुसृष्टौ यतेमहि। अत्राहुः— 'सुप्तोऽपि प्रबुद्धः', 'त्रयोऽप्यत्रयः' इत्यादिषु विरोधोदाहरणेषु शब्दद्वयेन शयितत्वजागरितत्वादिधर्मद्वयस्यादावुपस्थितौ

---

घटाभावयोः प्रतियोगित्वं संसर्गः। घटाभावे घटविरोधो नाम घटाभावे घट-प्रतियोगिकत्वम्। तेन तत्प्रतियोगिकत्वमपि विरोधपदार्थः। स च नञ्त्रिपदार्थयोः संसर्गतया शाब्दविषयो भवत्येवेति नालीकं विरोधस्य शाब्द-विषयत्वमित्याशयेनाशङ्कते न च तदधि● सम्भवत्येवं नञ्समभिव्याहारे, तदभावे तु न शाब्दो विरोधस्येत्यभिप्रायेण समाधत्ते सुप्तोऽपि प्रबुद्धः●। रनुभवसिद्धा● प्रबुद्धशब्दस्य जागरणवानर्थः। पूर्वोपपादितरीत्या सुप्ता-भिन्नो जागरणवानित्येव बोधः। एकत्र विशेषणतयोपस्थितस्यान्यत्र विशेषण-तया विशेष्यतया वा अन्वयो न भवति। सुप्तत्वस्यैव न विरोधे न वा प्रबुद्धत्वे विशेषणत्वं प्रबुद्धत्वस्य वा विशेष्यत्वमिति प्रथमोऽनुभवविरोधः। सुप्त-प्रबुद्धयोरभेदे सम्पादिते बुद्धत्वे सुप्तत्वविरुद्धत्वं भासत इत्यभिप्रायेण द्विधा तयोर्भाने सकृदुच्चरितः शब्दः सकृदेवार्थं गमयतीति न्यायविरोधो द्वितीयः। अपिशब्दस्य द्योतकतया विरुद्धत्वोपस्थितेरभावात्प्रकारविशेष्यत्वासम्भवात्तत्त्वे तृतीयः। विरोधस्य संसर्गत्वे नामार्थयोरभेद इति न्यायविरोधश्चतुर्थोऽ-नुभवविरोधो वेदितव्यः। इत्यादि विस्तरभिया न प्रतन्यते। तेन सुप्तत्व-विरुद्धं प्रबुद्धत्वन्तद्वदभिन्न इत्यादिबोधो न सम्भवति, येन विरोधस्य शाब्दधीगोचरताऽऽयायात्। कुसृष्टौ● यदि विरोधस्य कयाऽपि रीत्या शब्द-करणकप्रतीतिगोचरत्वं स्यात्तदा तदनुसारिलक्षणनिर्माणे क्लृप्टकल्पना क्रियेत। एवं स्थिते शक्त्या लक्षणया वा विरोधविषयकशाब्दाभावे प्रकारान्तरेण विरोधज्ञानतत्फलप्रतिपादनपरेषु मतेषु प्रथमं प्राचां मतमाह अत्राहुः●।

संबन्धिज्ञानादपिशब्दसाचिव्यात्तद्गतो विरोधोऽपि स्मर्यते। अनन्तरं च प्रतिबन्धकज्ञानसामग्र्या बलवत्त्वाद्विरुद्धाविमौ धर्माविति मानसे वैयञ्जनिके वा विरोधबोधे जाते तेन प्रतिरोधाच्छयितजागरितयोरभेदबुद्धेरनुत्पादाद् द्वितीयशक्त्या प्रादुर्भावितं द्वितीयार्थमादायान्वयबोधः, न तु विरुद्धार्थम्। विरोधधीश्च शिथिलमूला निवर्तमानापि कविसंरम्भगोचरतया चमत्कारकारणमिति प्राचां निष्कर्षः।

नव्यास्तु—'अर्थद्वयप्रादुर्भावं विना विरोधाभास एव न संभवति। तत्रैको विरोधस्योल्लासकः, द्वितीयश्चान्वयबोध-विषय इति तत्सत्यम्। परं तु अन्वयबोधविषये द्वितीयार्थे विरोधोल्लासकोऽप्यर्थो भेदेऽपि श्लेषभित्तिकाभेदाध्यवसाय इत्युक्तदिशा अभिन्नतया भासते। एवं चाविरुद्धं द्वितीयार्थ-

---

**सम्बन्धिज्ञानात्** ● सुप्तत्वजागरणयोर्विरोधः सम्बन्ध इति ज्ञानात्। **विरोधोऽपि** ● विरोधोपस्थितिर्जाता परं न पदजन्या। तत्कालमेव द्वितीयशक्त्याऽविरुद्धार्थस्याप्युपस्थितिरिति पृथग्विरोधविषयकोऽविरोधविषयको वा बोध इति जिज्ञासायामाह **प्रतिबन्धक** ● अनुपदमेव प्रथमबुद्धेः प्रतिबन्धकत्वं वक्ष्यति। विरोधबुद्धिः प्रतिबन्धिका तत्सामग्री प्रबला। पद-प्रयोज्योपस्थितेरभावादाह **मानसे** ● शाब्दभिन्नो मानसिको बोधः। विरोधबोधस्य शाब्दत्वमभिप्रेत्याह **वैयञ्जनिके** ● वैयञ्जनिकबोधस्य पदवृत्त्या-ऽनियन्त्रितत्वात्। **प्रादुर्भावितम्** ● विरुद्धार्थसहैवोपस्थापितम्। अन्वय-बोधः शाब्दबोधः। **शिथिलमूला** ● मूलं कारणं शिथिलम्। यथार्थानुभवा-भावाद् व्यञ्जनायाश्चागतिकगतित्वात्। अविरुद्धार्थविषयिण्यपि कथमपि विरुद्धार्थविषयिणी बुद्धिरिति विरोधस्फूर्तिलेशं सम्पादयतां मतमाह **नव्यास्तु** ●। **श्लेषभित्तिका** ● शब्दैकसाधर्म्यमूलकाभेदारोपात्। **भासते** ● सुप्तोऽपि प्रबुद्ध इत्यत्र सुप्ताभिन्नो जागरणाभिन्नज्ञानाश्रयः। त्रयोऽपीत्यादौ त्रिभिन्नाभिन्नात्रिसम्बन्ध्यपत्यानि त्रीणीत्यादिरीत्या बोधः।

मादायान्वयबोधे सत्यपि स्वास्पदीभूतस्य विरुद्धार्थस्य निःशेषतया निवृत्तेरभावादर्धमृतः श्वसन्निव विरोधोऽपि मानसं बोधान्तरमारोहति। अत एव चमत्कारीत्युच्यते। नहि निःशेषतया निवृत्तश्चमत्कारं जनयितुमीष्टे। न चान्तरेण चमत्कारजनकतामलङ्कारो भवति। तस्माद्विरोधधियो नातीव शिथिलमूलत्वम्, नापि चात्यन्तिकी निवृत्तिः' इत्याहुः।

---

अनुभवानुरोधादगत्या सकृदुच्चरितार्थस्यापि द्विधा भानमङ्गीक्रियते। अपिशब्दादिविरोधव्यञ्जकसामग्रीसमवधाननियामकत्वान्नान्यत्र हरिरित्यादौ अश्वारोहिसुगेन्द्रस्य बोधः। विरोधस्य शाब्दे न भानमपि तु विरुद्धार्थस्येति अवधापयति विरुद्धार्थस्य ● स्वं विरोधः। अविरुद्धार्थे परतन्त्रतया विषयस्यापि विषयताऽस्त्येवेति न निःशेषनिवृत्तिः। विरोधिनो विरुद्धार्थेन साक्षादन्वयाभावादर्थयोर्विरुद्धतया अस्फूर्तंमृतत्वम्। अविरुद्धार्थे परतन्त्रीभूतस्यापि विरोद्धस्फूर्तौ कारणत्वेन जीवितत्वम्। विरोधविषयको न शाब्दबोधोऽपि तु शाब्दानन्तरं ज्ञानस्य विषय इति स्फोरयति **मानसम्** ● इतोऽनन्तरं प्राचीनमतापेक्षया स्वमते उत्कर्षं दर्शयति **अत एव** ● अविरुद्धार्थबोधानन्तरमपि विरोधस्फूर्तेः। **नातीव** ● शाब्दाविषयत्वेऽपि स्फूर्तिसामग्रीसत्त्वात्। अत्र मर्मप्रकाशस्य प्रकारान्तरोल्लासः। सुप्तोऽपि प्रबुद्ध इत्यादौ समानाधिकरणविभक्त्यर्थयोरभेदः। अपिशब्देन च समभिव्याहृतैकपदार्थतावच्छेदकविरुद्धत्वमपरपदार्थतावच्छेदके द्योत्यते। तत्र गमकद्वयसत्त्वात्प्रकरणादेर्नियामकस्याभावाच्चार्थद्वयमपि युगपदवभासते तत्राभेदस्य मुख्यवाक्यार्थत्वात्तद्योग्यार्थस्य विरुद्धार्थश्लेषनिमित्तकाभेदाध्यवसायेन विशेषणत्वं विरुद्धार्थस्य तत्रेति युक्तम्। एवञ्च स्वापविरुद्धजागरणाभिन्नविशिष्टज्ञानाश्रय इति बोधः। यत्र त्वपिशब्दाभावस्तत्र प्रथमतः शाब्दान्वयबोधे जाते सहृदयतावशाद् द्वितीयार्थोपस्थितौ विरहाद्युद्बोधकसहकृतैकसम्बन्धिज्ञानविधया विरुद्धोपस्थितौ व्यञ्जनयैव तादृशबोधः। अत एवापिशब्दाभावे विरोधो व्यङ्ग्य इत्याहुः। विरोधस्याभासत्वञ्चाहार्यबोधविषयत्वात्कार्यनिष्पादकत्वाभावेनेति। अत्रालङ्कारकौस्तुभकृतां कल्पनाभारः स्वतन्त्र एव। सुप्ताभिन्नो ज्ञानाभिन्न-

ननु अपिशब्दादीनां प्रयोगे शाब्दो विरोधो भासत इति तथाप्यसंगतम्। निपातानां शाब्दिकनये शक्तेरस्वीकारादिति चेत्, न। निरूढलक्षणाया इव निरूढद्योतनाया अपि शक्तिसमकक्षत्वात्।

अथ जात्योर्द्रव्ययोश्च विरोधालङ्कारो न भवितुमीष्टे। 'कुसमानि शराश्चन्द्रो वाडवो दुःखिते हृदि' इत्यादावारोपमूलस्य रूपकस्यैवोल्लासात्। यदि च सत्यप्यारोपे विरोधाभास उच्यते, उच्यतां तर्हि 'मुखं चन्द्रः' इत्यत्रापि स एव।

---

जागरणवानित्येव बोधः। अयञ्चाहार्यो वैयञ्जनिको वा बोधः। विरोधिज्ञानस्य प्रतिबध्यमन्वयिपदार्थाभिन्नत्वेनाज्ञायमानस्यैव विरोधिपदार्थस्य ज्ञानमिदन्तु न तथेति शक्त्याऽप्यनाहार्यः शाब्दबोधः। यद्वा आहार्ययोग्यताज्ञानसम्पत्तौ शाब्दे बाधाभावः। एकोऽयं प्रकारः। द्वितीयस्तु सुप्तज्ञानिनोरन्वयो विरोधसमानाधिकरणाभेदेन। अपिशब्दस्तात्पर्यमत्रैव नियमयति तत्समभिहारस्याश्रयणान्नान्यत्रैवम्। विरोधसंसर्गकतया न विरोधज्ञानस्य प्रतिबध्यम्। अथवा सुप्तस्य विरोधी सुप्ताभिन्नश्च प्रबुद्धपदार्थः। व्युत्पत्तिवैचित्र्याच्च नान्यत्रातिप्रसङ्गः। इति तृतीयः। एवं कल्पकानां यथारुचि कल्पनाप्रवाहे ममाऽपि विरुद्धयोरिव यदभिधानमिति काव्यप्रकाशपङ्क्त्या प्ररोहन्ती कल्पनाकिङ्करी न सुमनसां मनसोऽवसादाय स्यादिति पुरोढौकयामि। उक्तपङ्क्तेः विरुद्धयोरिवाविरुद्धार्थयोः प्रतिपादनमित्यत्र तात्पर्यादन्वयप्रतियोग्यविरुद्धपदार्थे विरुद्धपदार्थस्य सादृश्यं भासते। सादृश्यञ्च श्लिष्टशब्दैकमूलम्। यथाऽन्येषां मते यस्याः कस्याश्चिदन्वयनियतव्युत्पत्तेरतिप्रसङ्गो व्युत्पत्तिवैचित्र्यात्समाधीयते तथात्रापि। विरुद्धार्थनान्वयाद्यथाविरोधस्फूर्तिस्तथा विरुद्धसदृशाविरुद्धान्वयेऽपीति विरोधस्फूर्तिमूलकश्चमत्कारः सुरक्षितो जायते। तथा च सुप्ताभिन्नो जागरणसदृशज्ञानवानिति बोधाकारः। रूपकस्यैवो० अभेदारोपस्य रूपकस्वरूपत्वाद् अभेदारोपमन्तरेण विरोधस्याप्यनुल्लासात्। स एव० विरोधाभास एव। तथा च सिद्धान्तभङ्गः। रूपकं विरोधाभासस्यापवाद

न च रूपकविषयस्य सर्वस्यापि विरोधेनाक्रान्तत्वान्निर्विषयत्वा-पत्त्या स्वविषये रूपकं विरोधस्य गुणादौ सावकाशस्यापवाद इति वाच्यम्। 'कुसुमानि शराः' 'मृणालवलयादि दवदहन-राशिः', 'चन्द्रो वाडवः', 'शङ्करचूडापगा कालिन्दी' इत्यादौ त्वदभीष्टविरोधस्यासिद्धिप्रसङ्गादिति चेत्, सत्यम्। इह हि अलङ्कारवर्गे यो यत्र सहृदयचमत्कृतिपथमवतरति स एव तत्रालङ्कार इति निर्विवादम्। एवं च रूपके 'मुखं चन्द्रः' इत्यादौ यद्यप्यस्ति विरोधस्तथापि न स तत्र प्रतिपिपाद-यिषितः। अपि तु चन्द्रनिष्ठाह्लादकत्वादिसकलगुणानां मुखे प्रतिपत्त्यर्थं चन्द्राभेद एवेति स चमत्कारी, न विरोधः। प्रत्युत सन्नपि विरोधो विवक्षितार्थाननुगुणत्वानुदूषित इति नालङ्कारः, विद्यमानताया अकिञ्चित्करत्वात्। 'कुसुमानि शराः' इत्यादौ तु विरहिण्यादीनामवस्थाया अत्यद्भुतत्वस्य विवक्षितत्वात्तदानुगुण्यायान्तर्गभितोऽप्यार्थो विरोधः समुल्ल-

इत्याशङ्कते न च रूपक०। निर्विषयत्वा० तेन रूपकस्य निरवकाशत्वम्। सावकाशस्येति विरोधस्य विशेषणम्। तर्हि जात्योर्द्रव्ययोश्च विरोधोदाहरणानि रूपकेणोपलभ्येरन् इत्याशयेनोत्तरयति कुसुमानि० दवदहनराशिरित्यस्य वनाग्निसमूहः। शङ्करचूडेत्यादिकाव्यप्रकाशोदाहरणस्य खण्डः। गङ्गा रिपु-कामिनीकज्जलसम्पर्काद्यमुनेति सम्बन्धः ननु गुणत्वानु० अत्रत्यपाठे काचित्त्रुटिः प्रतिभाति, परं पाठान्तरस्यानुपलम्भादेवमेव योज्यते। गुणत्वेन दूषित इति सुपाठः प्रतीयते। विवक्षितार्थश्चन्द्रवृत्त्याह्लादकत्वादीनां समेषां गुणानां मुखे प्रतीतिः। तदनुकूलो मुखचन्द्रयोरभेदो न तु विरोधः प्रत्युत प्रतिकूलः। स्फुरन्नपि विवक्षितार्थप्रतिकूलत्वेन पश्चाद् दूषितः। अनुगुणस्य विवक्षा तत्रारोपकुक्षिप्रविष्टोऽपि विरोधश्चमत्काराधायकत्वादलङ्कारस्तत्राद्-भुतत्वस्याभेदारोपेण विरोधमन्तरा प्रतीत्यभावात्। विरुद्धयोरेवाभेदेऽद्भुतत्त्व-मित्याशयेन विरोधविषयं व्यवस्थापयति कुसुमानि शरा० विरोधस्थलेऽपि

सतीति स एवालङ्कारः। न चैवमपि रूपकस्थले विरोधोऽविवक्षतत्वान्मा नामभूदलङ्कारः, विरोधस्थले तु 'कुसुमानि शराः' इत्यादौ विरोधोत्थापनार्थमभेदस्यावश्यं विवक्षणीयत्वाद्रूपकापत्तिरिति वाच्यम्, विरोधविवक्षानालिङ्गितत्वस्य रूपकलक्षणे निवेश्यत्वात्।

यद्वा अभेदस्यात्र विरोधोत्थापनार्थमुपात्तस्याचमत्कारित्वाद्रूपकालङ्कारत्वमयुक्तम्। तत्तदलङ्कारलक्षणेषु अलङ्कारसामान्यलक्षणे वा चमत्कारित्वस्योक्तत्वात्। यदि तु विरहिण्याद्यवस्थाया अत्यद्भुतत्वादि न विवक्षितमप्यर्थश्च न गर्भीकृतः, किं तु पीडाजनकत्व-श्यामत्वाद्यतिशयमात्रं विवक्ष्यते, तदात्र रूपकमेव। यदि वा नगरविशेषस्थितेरद्भुतत्वविवक्षया यत्र हि नारीणां मुखं चन्द्र इत्युच्यते, तदा विरोधाभास एवेति ध्येयम्।

ननु 'सुप्तोऽपि प्रबुद्धः' इत्यादौ यथैकेनार्थेन विरोधस्योत्थापनमपरेण च निवृत्तिः, एवम् 'गङ्गायां घोषः', 'मञ्चाः क्रोशन्ति', 'कुन्ताः प्रविशन्ति' इत्यादावपि शक्येन तस्योत्थापनं लक्ष्येण च निवृत्तिरिति विरोधाभासप्रसङ्गः। न च

---

रूपकस्य विवक्षा अन्यथा विरोध एव नोदियादित्याशङ्कते विरोधस्थले● । निवेश्यत्वात्● तथा च विरोधविवक्षयाऽसहचरितः अभेदो रूपकबीजम्। तत्सहचरितस्तु विरोधस्येति व्यवस्था। लक्षणे निवेशमन्तरा समाधानमाह यद्वा● अभेदो विरोधमुत्थाप्यैव विरमति न विवक्षितार्थमलङ्करोति यत्रोपमानवृत्तिगुणाद्याक्षिप्योपमयशोभातिशयं जनयेदभेदस्तत्राभेदस्यालङ्कारप्रयोजकत्वम्। तत्रैव रूपकम्। यत्र विरोधः काव्यार्थेऽद्भुतत्वं विवक्षितं सम्पादयितुमलन्तत्र विरोधस्यालङ्कारतेत्यनुभवानुरोधेन व्यवस्था। तदाऽत्र● कुसुमानि शरा इत्यादौ। रूपकाभासेऽपि विरोधं दर्शयति यदि वा●। तदा●

दृष्टान्ते विरोधोत्थापक–निवर्तकयोरर्थयोः शक्त्यैवोपस्थितिः, दार्ष्टान्तिके तु पृथग्वृत्त्येति वैलक्षण्यमिति वाच्यम्। सत्यपि वैलक्षण्ये त्वदुक्तविरोधाभासलक्षणातिप्रसङ्गस्यानिवारणात्। न हि लक्षणे विरोधोत्थापक-निवर्तकयोरेकवृत्तिवेद्यत्वमेकजातीयवृत्तिवेद्यत्वं वा विवक्षितम्। तथा सति 'कुसुमानि शराः' इत्यादौ प्राचीनरीत्याऽव्याप्तिप्रसङ्गादिति चेत्, विरोधस्यात्र प्रतिभानेऽपि कविसंरम्भागोचरत्वेनाचमत्कारित्वात्।

अयं च विरोधालङ्कारः कुवलयानन्दकृता उत्प्रेक्षाशिरस्कोऽप्युदाहृतः। यथा—

'प्रतीपभूपैरिव किं ततो भिया विरुद्धधर्मैरपि भेतृतोज्झिता।
अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक्चारदृगप्यवर्तत॥' इति।

---

अद्भुतत्वविवक्षादशायाम्। **वृत्तिवेद्यत्वम्** प्रथमविवक्षायां तु सुप्तोऽपि प्रबुद्ध इत्यादौ जागरणज्ञानयोरेकशक्तेरभावाच्छ्लेषस्थलमात्रेऽव्याप्तिप्रसङ्गः। सजातीयेत्यादिनिवेशः। लक्षणास्थले लक्षणा अभिधा भिन्नजातीया। श्लेषस्थले तु अभिधाद्वयी सजातीयेति निर्वाहः। **प्राचीनरीत्या** रूपकस्थले प्राचीनमते उपमानबोधकपदस्योपमानसदृशे लक्षणा। तथा च विरोधोत्थापकवृत्तीरूपकसमशीला लक्षणा। विरोधनिवर्तिका चाभिधैवेति सजातीयवृत्तेरभावादव्याप्तिप्रसङ्गः। **संरम्भागोचर** निरूढाभिन्नलक्षणावृत्त्या प्रतिपिपादयिषतः कवेर्लक्षणामूलकव्यञ्जनया प्रयोजनीभूतार्थप्रतीतिः कृतिगोचरो न तु शक्यार्थलक्ष्यार्थयोर्विरोधप्रदर्शनम्। **अयं च** उत्प्रेक्षाशिरः प्रधानं यस्य उत्पेक्षाप्रधानं विरोधाभासमपेक्ष्य। दीक्षितमते उत्प्रेक्षाङ्गस्य विरोधस्याप्यलङ्कारता। पण्डितराजमते स्फुरन्नपि विरोध उत्प्रेक्षया सर्वथा मारितो नालङ्कारतां भजते। नैषधे नलवर्णनमिदं **प्रतीपभूपैः** यथा नलभयेन विरोधिभूपाला भेदं विरोधमत्यजन् तथा विरुद्धधर्मैरपि भेतृता

विरोधप्रतीत्यनन्तरं यत्रार्थान्तरप्रतिपत्त्या विरोधस्य समाधानं तत्र विरोधाभास इष्यते। यथा—'रिपुराजिरसभावभञ्जनोऽप्यरिपुराजिरसभावभञ्जनः' इत्यादौ। इह तूत्प्रेक्षया विरोधसमाधानात्मिकया मुखस्थितया विरोधस्योत्थानमेव भग्नमिति कथमनुतिष्ठन्नेव विरोधश्चमत्कारमूलमलङ्कारभावं वहेत्।

इति रसगङ्गाधरे विरोधनिरूपणम्।

---

आश्रयभेदभावमसामानाधिकरण्यरूपं विरोधित्वमत्यज्यत समानेऽधिकरणे उषितमिति, इत्याद्युत्प्रेक्ष्यते। एकस्मिन्नपि नलधर्मिणि अमित्रजित्त्वमित्रजित्त्वयोः, विगतचारदृक्त्वचारदृक्त्वयोर्विरुद्धयोः समावेश उक्तः। शत्रुजेतृत्वसूर्यजेतृत्वाभ्यां विवेकदृक्त्वचारदृक्त्वाभ्याञ्चाविरोधः। विरोधाभासः● अन्यालङ्कारापेक्षया न गुणीभूतः। रिपुसमूहरसभावयोर्भञ्जनः। अरेः पुराणामजिराणां सभानाञ्चावभञ्जनः। यथा विरोधः। स्वमतमाह इह तू● विरोधसमा● विरोधविमर्दिन्या। मुखस्थितया● प्रधानतया विवक्षिता। भग्नम्● पूर्वमेवोत्प्रेक्षया विरोधत्यागात् कथं विरोधस्य श्वसनमपीति भावः। अत्र मर्मप्रकाशः—अत्रेदं चिन्त्यम्, प्रतापभूपैरित्यादौ हि विरुद्धधर्मगततया स्वाश्रयभेदकत्वत्यागोत्प्रेक्षायां विरुद्धतयाऽवभासमानपदार्थानां श्लेषमित्तिकाभेदाध्यवसायेनाविरुद्धतादात्म्यापन्नानां सहवासो निमित्तम्। एवं च निमित्तांशे विरोधालङ्कारमुपजीव्यैव विरोधत्यागोत्प्रेक्षा अर्थान्तरानुगृहीता। पश्चात्तत्साधनत्वेन स्थितेत्युत्प्रेक्षाङ्गमत्र विरोधः इति। एवमेवानुयायिनी अलङ्कारचन्द्रिका च। तत्रेदं चिन्त्यम्—सत्यं विरोधत्यागोत्प्रेक्षायां विरोधस्यावश्यकता, परं विशेषणज्ञानविधया किमुपयोगिवस्तु अलङ्कारतां भजते, तर्हि त्यागस्याऽप्यलङ्कारताप्रसङ्गः कथन्नापतेत्। किञ्च विरोधमुपजीवत्युत्प्रेक्षा पर विरोधालङ्कारं विरुद्धशब्दात्थापितं वा? इत्यत्राप्यनुभवः सहृदयानां प्रष्टव्यः। न विरोधालङ्कारस्याद्भुतत्वव्यञ्जकस्य त्यागोत्प्रेक्षा, किन्तु असमानाधिकरण्यस्य विरुद्धपदोपस्थाप्यस्य अन्यच्च विरोधालङ्कारो यदि उत्प्रेक्षाङ्गं स्यात्तदोत्प्रेक्षायामद्भुतत्वं व्यञ्जयेत्, न वा? धर्मयोरसमानाधिकरण्यमात्रमपि तु तयोरद्भुतत्वमित्यलं विस्तरेणेति दिक्।

॥ इति विरोधाभासनिरूपणम् ॥

अथ विभावना—

कारणव्यतिरेकसामानाधिकरण्येन प्रतिपाद्यमाना कार्योत्पत्तिर्विभावना ।

तदुक्तम्—'क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना' इति । क्रियाशब्देनात्र कारणं विवक्षितम् ।

अत्र कारणव्यतिरेकसामानाधिकरण्येन कार्योत्पत्तौ निबध्यमानायामापाततो विरोधः प्रतिभासमानोऽपि तदितरकारणकल्पनया निवर्तते ।

यथा—

'विनैव शस्त्रं हृदयानि यूनां विवेकभाजामपि दारयन्त्यः ।
अनन्तमायामयवल्गुलीला जयन्ति नीलाब्जदलायताक्ष्यः ॥'

अत्र हि दारणे शस्त्रं कारणम् । तदभावेऽपि दारणमुपनिबध्यमानमापाततो विरुद्धमपि कामिनीविलासरूपहेतुकतया पर्यवस्यति ।

---

अथ विभावनाप्रकरणम्

विशिष्टा प्रसिद्धकारणाभावसामानाधिकरण्येन भावना कार्य्यस्य उत्पत्तिः । विगता कारणस्य भावना यस्यां कार्य्योत्पत्तौ सेति योगसम्वलितरूढेरर्थः । केचन अधिकरणेऽपि ल्युटं व्याचक्षते । **कारण**● कारणस्याभावो यत्र वर्तते तत्र वर्णिता कार्य्योत्पत्तिः । **तदुक्तं**● काव्यप्रकाशकृतेति शेषः । **निवर्तते**● तथा प्रसिद्धकारणाभावेऽपि यत्रेतरकारणसमवधानप्रयुक्तैव कार्योत्पत्तिर्न तु आकस्मिकी तत्रैव विभावना । असम्भवन्त्यां कार्योत्पत्तौ नेयमिति उत्तरत्र स्फुटीभविष्यति । **विनैव शस्त्रम्**● शस्त्रं विनैव विचारशीलानामपि तरुणानां हृदयानि दारयन्त्यः पीडयन्त्यः असंख्यमायाकृताः सुन्दरलीला यासान्ताः नीलकमलस्य दलमिव दीर्घे नेत्रे यासान्ताः कामिन्यः सर्वोत्कर्षेण वर्तन्ते । दारयन्त्य इति दृधातोर्ण्यन्तस्य शत्रन्तस्य स्त्रियां रूपम् । मायामयेत्यत्र प्राचुर्यार्थ-

नन्वत्र यस्य कार्यस्योत्पत्तिर्निबध्यते नहि तदीयकारणत्वेनावगतस्य व्यतिरेकः प्रतीयते। यदीयकारणव्यतिरेकश्च प्रतीयते नहि तस्य कार्यस्योत्पत्तिर्निबध्यते। दारणं चेह पीडाविशेषो विवक्षितः, न तु द्विधाभावः। शस्त्रं च न कामपीडायाः कारणम्, अपि तु द्वैधीकरणस्येति चेत्, न, मुख्यं हि दारणं द्विधाभावनम्। गौणं च कामादिजनितपीडाविशेषः। तयोर्गौणमुख्ययोर्दारणयोः सादृश्यमूलेनाभेदाध्यवसानरूपेणातिशयेन सति भेदस्थगने, द्विधाभावनकारणमपि शस्त्रं कामपीडाकारणं संपद्यते। तदभावे चात्र कार्याभिन्नतयाध्यवसितस्य पीडाविशेषस्योपनिबन्धनान्न दोषः।

एवं चास्मिन्नलङ्कारे सर्वत्रापि कार्यांशे अभेदाध्यवसानरूपातिशयोक्तिरनुप्राणकतया स्थिता। तया च पायसादिपिण्डवदेकीकृतस्य वस्तुतः सदृशवस्तुद्वयस्यैकावयवसम्बन्धिकारणव्यतिरेकसामानाधिकरण्येनापरावयवमादाय पर्यवसानं भवति।

---

स्यानन्तशब्देनोक्ततया विकारार्थं एव मयट्। तदा लीलया कर्मधारयः। अत्र दारणं कार्यं कामपीडाविशेषो न तु द्विधाभवनम्, कामपीडाविशेषस्य न च शस्त्रं कारणम् इत्यनुपपत्तिमाशङ्कते नन्वत्र●। यस्य● पीडाविशेषस्यावगतस्य कामिनीविलासस्य। यदीय● द्विधाभावकारणस्य शस्त्रस्य व्यतिरेकः। तस्य● द्विधाभावस्य। गौणं च● द्विधाभावसदृशत्वेन लक्ष्यतया गौणत्वम्। अतिशयेन● द्विधाभावेन पीडाविशेषस्य निगरणेन। स्थगनं तिरोधानम्। कार्याभिन्न● द्विधाभावाभिन्नतया। सर्वत्रापि● इदं सर्वस्वमतेन, स्वमते तु क्वचिद्रूपकेणाभेदाध्यवसनमित्यग्रे स्फुटीभविष्यति। पायसादि● मावा इत्यादिभाषाप्रसिद्धपिण्डादिकं वस्तुतोऽनेकद्रव्यं

तत्र च कार्यांशः कारणाभावरूपविरोधिनो बाध्यतयैव स्थितः, न बाधकतया। कार्यांशस्य कल्पितत्वात् कारणाभावस्य च स्वभावसिद्धत्वात्।

अत एव कार्यांशो रूपान्तरेण पर्यवस्यति । अत एव च समबलविरोधिद्वयघटिताद् विरोधालङ्कारादस्य वैलक्षण्यम्। तथा चोक्तम्—

'कारणस्य निषेधेन बाध्यमानः फलोदयः ।
विभावनायामाभाति विरोधोऽन्योन्यबाधनम् ॥'

इत्याहुः ।

अथातिशयोक्तिर्न सर्वस्यां विभावनायामनुप्राणिका, किं तु क्वचित् ।

'निरुपादानसंभारमभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥'

---

तथा विदारणमपि अतिशयेनैकतामापन्नं यद्यपि, तथापि तस्य द्विधाभावः पीडा च द्वाववयवौ सदृशौ । तत्रैकस्यावयवस्य यत्कारणं तद्व्यतिरेके अपरावयवकार्यस्योत्पत्तिर्व्यज्यत इति भावः । बाध्यतयैव● अत एव द्विधाभावस्य शक्यार्थस्य त्यागात्पीडाविशेषस्य लक्ष्यता। न बाधकतया● अन्यथा बाध्यस्य कारणाभावस्यैवार्थान्तरपरत्वं स्यात् । कल्पितत्वात्● स्वरूपे द्विधाभावेऽपर्यवसानात् पीडाविशेषे च पर्यवसानात्। कारणस्य● कारणाभावेन शक्त्याभिहितस्य फलस्योदयो बाध्यमानो भवति। विरोधे तु समबलतया नैकेनापरस्य बाधनमपि तु परस्परविरोधित्वमेव। निरुपादन● जगच्चित्रमुपादानानां मषीहरिताललेखनीप्रभृतीनां संभारं विनैव अभित्तावेव कुर्वते कलया चन्द्रकलया चित्रादिनिर्माणकलादिभिश्च श्लाघ्याय तस्मै शूलिने नमः। उपादानसंभारेण भित्तावेव चित्रं कुर्वाणानां शिल्पिनामपेक्षया अतिशयिततया व्यतिरेको ध्वन्यत इति ध्वनिप्रकरणे गतम्। पण्डित-

इत्यत्र विभावनायामतिशयोक्तेरध्यवसानमूलाया अननुप्राणकत्वादिति। ननु कारणाभावे कार्योत्पत्तिरसंभवन्ती कविना अभिप्रायविशेषेण निबध्यमाना हि विभावना। न चात्रोपादानान्तराभावे जगत उत्पत्तिः परमेश्वरादसंभवन्ती येन विभावना स्यात्। 'नासदासीत्', 'सदेव सोम्येदमग्र आसीत्', 'आत्मा वा इदमेक एवाग्र आसीत्', 'असद्वा इदमग्र आसीत्ततो वै सदजायत' इत्यादिश्रुतिभ्यः, 'अहमेवासमेवाग्रे

---

राजमतेऽत्र विभावना अतिशयोक्तिमन्तरापि रूपकेणाभेदाध्यवसानस्य कार्यांशे सम्भवात्। अतिशयोक्तिप्राणितविभावनामङ्गीकुर्वतां सर्वस्वकाराणां मतेऽत्र विषयविषयिणोर्जगच्चित्रयोरुपादानादतिशयोक्तेरभावान्न विभावना, किन्तु रूपकमेव।

विमर्शन्युक्तविभावनाखण्डनरीत्या आशङ्कते ननु कारणाभावो●। अभिप्राय● यस्य व्यतिरेकः प्रतिपादितस्तदतिरिक्तेनाप्रसिद्धेनापि कारणेन सम्भवति कार्योत्पत्तिरित्यभिप्रायेण। अत्र तु कारणान्तरं विनापि निबध्यमाना कार्योत्पत्तिः सम्भवति तदेवाह नचात्रो● जगच्चित्रनिर्माणसमयादतिरिक्तो न कश्चित् संभाररूपो न वा भित्तिस्थानापन्नः कश्चिदासीत्, केवलं परमेश्वर एवासीदिति श्रुतिस्मृतिभ्यः प्रमाणयति—नासदास त्परमेश्वरादतिरिक्तं किमपि असदपि नासीत्। हे सौम्य! इदं दृश्यमानं जगच्चित्रं ब्रह्मरूपमेव अग्रे नामरूपाभिव्यक्तेः प्रागासीत्। अव्याकृतमपि जगत्स्वरूपं परमेश्वरादतिरिक्तं किमपि नासीत्। तथा चानया छान्दोग्य (६।२।१) श्रुत्या सृष्टेः प्राग् ब्रह्मातिरिक्तसद्वस्तुनोऽभावः सिध्यति। अत्रत्यसंदर्भेण आकाशचित्रतया वर्णितस्यापि जगतो दर्शनगुहाप्रवेशच्चिरव्यापयिषया अनित्यत्वं खण्डयन्ती सरला सरलैव। एवमर्थं ऐतरेय (१।१; अथवा (४।३।२।१-२) श्रुतिमप्युदाहरति आत्मा वा● पूर्वत्र यः सत्पदेनाभिहितः स एवात्रात्मपदेनोच्यतेऽन्यत्पूर्ववत्। तैत्तरीय (२।२७) श्रुतिमाह असद् वा● इदं जगदग्रे नामरूपाभ्यामव्याकृत ब्रह्मरूपमासीत् तदनन्तरं नामरूपाभ्यां व्याकृतमभवत्। स्मृतिमप्याह अहमेवास● अग्रे नामरूपाभिन्नात्सतोऽसतश्च भिन्नं

नान्यद्यत्सदसत्परम्' इत्यादिस्मृतिभ्यश्च सृष्टिकाले भगवदतिरिक्तवस्तुजातप्रतिषेधावगमात्। तस्मादत्र विभावनाया एव संभावना नास्ति क्व पुनरतिशयोक्त्यनुप्राणितत्वव्यभिचार इति चेत्, न, अत्र हि भगवतः सकाशात् केवलस्य जगत उत्पत्तिर्न कवेरभिप्रेता। येन तस्या उपादानान्तरव्यतिरेकेऽपि भगवतः सकाशात्संभवादसंभवमूला विभावना न स्यात्। किं तु जगद्रूपस्य चित्रस्य। चित्रस्य च केवलस्योपादानानां मषी-हरितालादीनामाधारस्य भित्त्यादेश्चाभावे केवलाकाशे जागर्त्येवोत्पत्तेरसंभवः। स च तस्य जगद्रूपतानुसंधानात् तत्कारणतदाश्रयव्यतिरेकमादाय निवर्तत इति 'निरुपादानसंभारम्' इत्यत्र निष्प्रत्यूहैव विभावनेति भवत्यतिशयोक्त्यनुप्राणितत्वव्यभिचारः। एतेन 'विभावनायां सर्वत्रातिशयोक्तिरनु-

---

अहमेवात्मा आसम् अन्यत्र। तस्मात् ● जगच्चित्रस्य कारणान्तरनिबन्धनं न कवेरभिप्रेतमतः। व्यभिचार● एतावद्विमर्शिनीप्रतिपादनम्। यदि विभावनात्र स्यात्तदाऽतिशयोक्तेरभावाद्विभावनाया अतिशयोक्तिव्यभिचारः स्यात्। कवेरभिप्रेता● जगच्चित्रोत्पत्तिरेव कवेरभिप्रेता। स च● असम्भवश्चेति निवर्तते इत्यनेनान्वेति। चित्राभिन्नजगतः कारणस्य जगदाश्रयस्य च व्यतिरेके चित्रोत्पत्तेर्वर्णनान्नासम्भविनी चित्रोत्पत्तिः। चित्रकारणव्यतिरेक एव चित्रोत्पत्तिरसम्भविनी स्यात्. न तु जगत्कारणव्यतिरेके। पूर्वपक्षस्य तु असम्भविनीं कार्योत्पत्तिमादाय न विभावनेत्यभिप्रायः। अन्ततो जगतो यथा परमेश्वरादुत्पत्तिः सामर्थ्यातिशयात् तथा चित्रस्येत्यवसेयम्। निष्प्रत्यूहैव● अत्र सत्यमाशङ्कते कौस्तुभकारः। अग्रे कार्यांशे यद्विषयितावच्छेदकं तदवच्छिन्नकार्यतानिरूपितकारणतावच्छेदकावच्छिन्नप्रतियोगिताकारणव्यतिरेक एव विभावनेति साधयिष्यति पण्डितराजः। अत्र विषयितावच्छेदकचित्रत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकमपीत्वहरताल-त्वादिकं न तद्धर्मावच्छिन्नप्रतियोगिताककारणव्यतिरेको वर्णितोऽपि तु

प्राणिका' इति सर्वस्वकारोक्तिरपास्ता। तथा "–'निरुपादान-संभारम्' इत्यत्र विभावनाया एवाभावात् कुत्र व्यभिचारः" इति वदन् विमर्शिनीकारोऽपि प्रत्युक्त इति। उच्यते—मा स्म भूत्सर्वत्र विभावनायामतिशयोक्तिरनुप्राणिका। आहार्या-भेदबुद्धिमात्रमेवानुप्राणकम्। तच्च क्वचिदतिशयोक्त्या, क्वचिच्च रूपकेणेति न दोषः।

यत्तु—"कारणं विना कार्योत्पत्तिरेका विभावना। कारणानामसमग्रत्वे द्वितीया। सत्यपि प्रतिबन्धके कार्योत्पत्ति-स्तृतीया। अकारणात्कार्योत्पत्तिश्चतुर्थी। विरुद्धात्कार्यजन्म पञ्चमी। कार्यात्कारणजन्म षष्ठी। क्रमेणोदाहरणानि—

'अप्यलाक्षारसासिक्तं रक्तं तन्व्याः पदाम्बुजम्।'
'अस्त्रैरतीक्ष्णकठिनैर्जगज्जयति मन्मथः।'
'सातपत्रं दहत्याशु प्रतापतपनस्तव।'

---

उपादानसंभारत्वसामान्यधर्मावच्छिन्नप्रतियोगिताकः। तथा च कथं पंडित-राजमतेऽपि विभावनाभावनेति। अतोऽत्र विशेषकार्यचित्रसमवधाने सामान्यवाचकस्यापि उपादानादिपदस्य मषीत्वादिविशेषधर्मावच्छिन्ने लक्षणां कृत्वा समाधानं देयम्। न तेन कश्चिद् ग्रन्थविरोधः। उच्यते● स्वसिद्धान्तः। क्वचिच्च● निरूपादानमित्यादौ। यत्तु● अयं हि कुवलया-नन्दस्य ग्रन्थः समानार्थेन कियता विपरिणामेनात्र दर्शितः।

विभावना विनापि स्यात् कारणं कार्यजन्म चेत्।
अप्यलाक्षारसासिक्तं रक्तं तच्चरणद्वयम्॥
हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मता।
अस्त्रैरतीक्ष्णकठिनैः जगज्जयति मन्मथः॥
कार्योत्पत्तिस्तृतीया स्यात् सत्यपि प्रतिबन्धके।
चित्रं तपति राजेन्द्र प्रतापतपनस्तव॥

'शङ्खाद्वीणानिनादोऽयमुदेति महदद्भुतम् ।'
'शीतांशोः किरणा हन्त दहन्ति सुदृशो दृशौ ।'
'यशःपयोधिरभवत् करकल्पतरोस्तव ।'

इति षट्प्रकारां विभावनामुदाजहार कुवलयानन्दकृत् । तत्रेदं वक्तव्यम्—

'कार्योत्पत्तिस्तृतीया स्यात् सत्यपि प्रतिबन्धके ।'
'अकारणात् कार्यजन्म चतुर्थी स्याद्विभावना ॥'

इत्यादिभिर्विभावनाप्रकारानालक्षयता विनापि कारणं कार्योत्पत्तिरित्यप्येको विभावनाप्रकार इत्युक्तं भवति ।

---

अनातपत्रमुत्सृज्य सातपत्रं द्विषद्गणम् ।
अकारणात् कार्यजन्म चतुर्थी स्याद् विभावना ॥
शङ्खाद् वीणानिनादोऽयमुदेति महदद्भुतम् ।
विरुद्धात् कार्यसम्पत्तिर्दृष्टा काचिद् विभावना ॥
शीतांशुकिरणास्तन्वीं हन्त सन्तापयन्ति ताम् ।
कार्यात् कारणजन्मापि दृष्टा काचिद् विभावना ॥
यशःपयोराशिरभूत् करकल्पतरोस्तव ।

अतीक्ष्णकठिनैः । कृतद्वन्द्वस्य नञा समासः । तीक्ष्णकठिनभिन्नैः । तीक्ष्णं कठिनं चैवास्त्रं कारणं समग्रम् । तद्भिन्नञ्चास्त्रमसमग्रमिति दीक्षिताभिप्रायः । तीक्ष्णं कठिनञ्चैवास्त्रं कारणं तद्भिन्नमस्त्रमकारणमिति पण्डितराजाशयः । सातपत्रमित्यत्र आतपत्रं प्रतिबन्धकम् । वीणानिनादकारणीभूतवीणातो भिन्नः शङ्खोऽकारणमभिप्रेतः । शीतांशोः शीताः किरणा दाहस्य विरोधिनः । सुलोचनाया नेत्रे । यशःपयोधिरित्यत्र, पयोधेर्मन्थनादुद्भूतात् कल्पतरोः पयोधेरुद्भवो वर्णितः । अत्रोपमानयोरेव कार्यकारणभावेन प्रकृते उपयोगः । तथा च रूपकेणाभेदाध्यवसानम् । मतविशेषविवेचनायां परिणामोऽपि सम्भवति । परमतिशयोक्तेः सर्वत्रानुप्राणिता न दीक्षितस्याप्यभिमतेत्यवधेयम् । इत्युक्तं भवति ● विभावनाविनापीत्यादौ प्रथमेत्यनुक्तावपि

अन्यथा चतुर्थीत्वाद्यसंगतेः। एवं च यथा—'सादृश्यमुपमा भेदे', 'तद्रूपकमभेदो य उपमानोपमेययोः' इत्यादिभिर्लक्षितस्योपमा-रूपकादिसामान्यस्य पूर्णादयः सावयवादयश्च भेदा उक्तास्तथेह किं तद्विभावनासामान्यलक्षणम् ? यल्लक्षितस्य विभावनासामान्यस्यामी भवतोक्ताः प्रकारा उपपद्येरन्। कारणं विना कार्योत्पत्तेस्तु प्रकारान्तःपातित्वात्। अथातिशयोक्त्यादिष्विव तादृशसकलप्रकारान्यतमत्वं सामान्यलक्षणमुन्नेयमिति चेत्, एवमपि प्रथमप्रकाराद् द्वितीयप्रकारस्य वैलक्षण्यं दुरुपपादमेव। कारणाभावेऽपि कार्योत्पत्तिरित्यत्र कारणतावच्छेदकसंबन्धेन कारणतावच्छेदकावच्छिन्नप्रतियोगिताकाभावस्य विवक्षितत्वात्। प्रकारान्तरस्वीकारापेक्षया

---

प्रथमभेदतया साभिमता। **एवञ्च यथा●** सर्वत्र भेदवर्णन सामान्यलक्षणपूर्वकमेव दृश्यते। **पातित्वात्●** तथा च तद्विशेषलक्षणं तत्र सामान्यलक्षणमपि अन्यथान्यभेदानां प्रथमभेदान्तर्भावेण च द्वितीयत्वादिवर्णनग्रन्था उच्छिद्येरन्। चन्द्रिकाकारस्तु तन्त्रेण सामान्यलक्षणत्वमपि तस्य वर्णयन् न्यूनतां परिजिहीर्षुरग्रिमग्रन्थान् असमञ्जसगर्ते पातयन् धन्यो ग्रन्थसमर्थकः। स्वयमेव तदभिप्रेतं सामान्यलक्षणं पूरयति। **अथाति●** **वच्छेदकसम्बन्धेन●** सम्बन्धनिवेशस्य न प्रकृते उपयोगः। किन्तु वस्तुस्वरूपमनुरुध्यैवमुक्तम्। कारणतावच्छेदको यो धर्मस्तदवच्छिन्ना प्रतियोगिता यस्याभावस्य तादृशः कारणव्यतिरेको ग्राह्यः। यदि जगज्जयं प्रति अस्त्रत्वेन कारणता तदा नास्त्रत्वावच्छिन्नप्रतियोगिताकोऽभाव उपनिबद्धः, किन्तु तीक्ष्णत्वकठिनत्वावच्छिन्नप्रतियोगिताकः। अन्वयव्यतिरेकाभ्यान्तु तीक्ष्णत्वकठिनत्वविशिष्टमस्त्रं कारणं सिद्धं तत्र कारणतावच्छेदकमस्त्रत्वमिव तीक्ष्णत्वं कठिनत्वञ्च तदवच्छिन्नप्रतियोगिताकोऽभावो वर्तते एव, दण्डरहितपुरुषाधिकरणे दण्डित्वावच्छिन्नप्रतियोगिताभाववत्। नन्ववच्छेदकधर्मप्रवेश्यैव तद्ग्रन्थसङ्गतिरित्याशङ्कां समाधत्ते। **प्रकारान्तर●** अत्र कारणतावच्छेदकं कारणत्वं वर्णयन्ती प्राय एतादृशस्थले त्रुटिमाचरन्ती अनुपासितगुरुचरणतया

तादृशविवक्षाया एव लघुत्वात्। एवं प्रतिबन्धकमपि कारणाभाव एव, प्रतिबन्धकाभावस्य कारणत्वात्। इति तृतीयोऽपि भेदो न विलक्षणः चतुर्थेऽपि भेदे कारणाभाव आर्थः। 'शङ्खाद्वीणानिनादोऽयम्' इत्युक्ते वीणां विनैवेति प्रत्ययादवैलक्षण्यम्। तस्मादाद्येन प्रकारेण प्रकारान्तराणामालीढत्वात् षट्प्रकारा इत्यनुपपन्नमेव।

यदि तु यथाकथंचित्कुवलयानन्दोक्तिः समर्थनीयेत्याग्रहस्तदेत्थं समर्थ्यताम्—तथा हि विनापि कारणं कार्यजन्मेति विभावनायाः सामान्यलक्षणम। इयं च तावद् द्वेधा—शाब्दी, आर्थी च। शाब्दी त्रिविधा—प्रतिबन्धकातिरिक्तकारणव्यक्तिप्रतियोगिकाभावोक्तिपूर्विका, सत्यामपि कारणव्यक्तौ यदवच्छिन्नत्व-

---

अवच्छेदकसरणेः सर्वथाऽपरिचिता गहनं विषयं स्पृशन्ती अनुचितसाहसा सरला हन्त मुग्धान् छात्रान् हन्ताज्ञानान्धे निमज्जयति। तीक्ष्णत्वादेः कारणतावच्छेदकत्वस्वीकार उक्तिसम्भवेऽपि कारणत्वाभिप्रायेणैव दीक्षितैर्भेदान्तरवर्णनादिति कौस्तुभकृत आक्षेपोऽस्फुटोऽपि स्फुटीकरणीयः। तीक्ष्णत्वं न कारणतावच्छेदकमपि तु स्वतन्त्रं कारण मिति मनीषा चेत्, परं न समीचीना। तदभावस्योक्ततया पुनरपि संग्रहणापत्तेः। गुणस्य तस्य स्वातन्त्र्येण कारणत्वस्याहृद्यत्वात्समग्रपदस्वारस्येन दीक्षितानभिप्रेतसूचनाच्च। सहकारिकारणत्वेऽपि संग्रहप्रसंगो निर्बाध एव। **एवं प्रतिबन्धकमपि●** प्रतिबन्धकसत्त्वे कारणाभावस्यावश्यं सद्भावात्। **कारणत्वात्●** अभावाभावस्य प्रतियोगित्वनये तस्याकारणत्व अभावाभावस्यातिरिक्तत्वनये वा आर्थः कारणभावोऽक्षत एव। **प्रतिबन्धका●** प्रतिबन्धकातिरिक्तं यत्कारणं तद्व्यक्तिः प्रतियोगिनी यस्यैवंभूतस्याभावस्य कथनपूर्विका आद्या व्यक्तिप्रतियोगिककथनं कारणतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावस्य न निवेश इत्यभिप्रायेण। द्वितीयामाह **सत्यामपि●**। **यथा** अस्त्रकारणव्यक्तौ सत्यामपि तीक्ष्णत्वकठिनत्वाभावप्रयुक्तोऽन्यत्र जयाभावः सिद्धस्तयो-

वैकल्यप्रयुक्तः कार्याभावस्तद्वैकल्योक्तिपूर्विका। स च कारणतावच्छेदकधर्मः क्वचित्कारणतावच्छेदकसंबन्धश्च, प्रतिबन्धकोक्तिपूर्विका चेति। आर्थ्यपि त्रिविधा—प्रकृतकार्यसमानजातीयकार्यान्तरस्य कारणात् । प्रकृतकार्यविरुद्धकार्यस्य कारणात्। स्वकार्याद् वा प्रकृतकार्यस्योत्पत्तिरिति । एतदर्थकमेव ह्यकारणादित्यादि ।

इयं च विभावना द्विविधा—उक्तनिमित्तानुक्तनिमित्ता च ।

तत्रानुक्तनिमित्ता 'विनैव शस्त्रं' इत्यत्र दर्शिता । विलासानां मन्मथपीडाजनकानामनुपात्तत्वात् ।

---

स्तीक्ष्णत्वकठिनत्वयोरभावकथनपूर्विका जयकार्यस्योत्पत्तिरिति लक्षणसमन्वयः। अत्र च तादृशजनकतावच्छेदको धर्मस्तीक्ष्णत्वं कठिनत्वं च। अन्यत्राप्यनुगमार्थमाह क्वचित् ● चेति तृतीयेति शेषः। प्रकृतकार्य ● प्रकृतकार्यं वीणानिनादस्तत्कारणात् शङ्खादिति प्रथमा। द्वितीयामाह-प्रकृतकार्य ● प्रकृतकार्यस्य दाहस्य विरुद्ध कार्यं शैत्यं तत्कारणं शीतांशोः किरणाः। अत्र मर्मप्रकाशस्य समर्थनान्तरम्। अत्र केचित् शाब्दे आद्या आर्थत्वे उत्तराः पञ्च। तत्र द्वितीये कारणे कारणतावच्छेदकगुणादिवैकल्यदर्शनेन तदवच्छिन्नकारणाभावः प्रतीतिस्त्वार्थी। अस्तु वा शाब्दी। तथापि स्वरूपतः कारणभावकथनात् कारणगतधर्मवैकल्यद्वारेण तद्विशिष्टकारणाभावकथने विच्छित्तिविशेषात्। एतेन प्रथमप्रकाराद् द्वितीयप्रकारस्य वैलक्षण्यं नेत्यपास्तम्। तृतीये प्रतिबन्धकाभावस्य कारणत्वनये तदभावकथनं शाब्दम्। अभावाभावस्य प्रतियोगित्वनये तस्याकारणत्वनयेऽभावाभावस्यातिरिक्तनये वा इत्यर्थः। आद्ये भावाक्तेति पूर्वस्माद्विशेषः। चतुर्थ्यां प्रकृतसजातीयकार्यान्तरस्य कारणभिन्नात्कथनमिति कारणाभाव आर्थ एव। पञ्चम्याञ्च प्रकृतकार्यविरुद्धकार्यस्य कारणात् कथनमिति आर्थ एव। षष्ठ्यान्तु कार्यात् कारणस्येति स एवार्थ इत्याहुः। अत्र प्रकारान्तरपरीक्षा विस्तरभिया न वितन्यते।

उक्तनिमित्ता यथा—

'यदवधि विलासभवनं यौवनमुदियाय चन्द्रवदनायाः ।
दहनं विनैव तदवधि यूनां हृदयानि दह्यन्ते ॥'

अत्र हि उपात्ते यौवने दाहहेतुत्वं पर्यवस्यति ।

यत्तु—

'असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साऽथ वयः प्रपेदे ॥'

---

भ्रष्टाक्षरत्वेन सम्भाविताप्युद्धृता । नेत्यपातमित्यत्रैतावदेवोच्यते, यत्सत्यं वैलक्षण्यं लक्ष्ये परं विलक्षणस्यापि द्वितीयस्य प्रथमलक्षणेन सग्रहो मा प्रसाङ्क्षीत् तदर्थं यत्नस्तु लक्षणे प्रथमद्वितीययोर्विधेयः । यदवधि ● । यत्तु वक्ष्यमाणविकल्पकारणवर्णनवद् यौवनदहनयोरपि विकल्पकारणत्वं कथं न पर्यवस्यति इति कौस्तुभकृता आशङ्कितं तस्येदमेव मार्जनम् । अग्रिमे कारणं यौवनमिति शब्दत उक्तमासवस्य च कारणत्वं प्रसिद्धमेवेति विकल्पकारणत्वम् । अत्र तु कारणशब्देन नापि यथा प्रकारान्तरेण कारणत्वमुच्यते तथाभिहितम् । तथा च किमनुरुध्य विकल्पकारणत्वापत्तिः । नाप्यवधित्वोक्त्या कारणत्वावगम इति तदुक्तिरलम्, अवधिमात्रस्य कारणत्वाभावात् । नैव च यौवनमवधिरत्रोपात्तमपि तु यौवनोदयकाल इति सूक्ष्ममीक्षणीयम् । **असंभृतम्** ● अथ सा बाल्यात्परं वयो यौवनं प्रपेदे । तच्च यौवनं शृङ्गारसंभारमन्तराऽपि शरीरस्य भूषणम् । मदस्य मद्यभिन्नं द्वितीयं कारणम् । कामस्य पुष्पभिन्नं द्वितीयमस्त्रम् । अत्रालङ्कारसर्वस्वकारस्येत्थं ग्रन्थः । अत्र हि द्वितीये पादे मदस्य प्रसिद्धं यदासवाख्यं कारणं तदभावेऽपि यौवनहेतुकत्वेनोपनिबन्धः कृतः । असम्भृतं मण्डनमिति, कामस्य पुष्पव्यतिरिक्तमस्त्रमिति च । अत्र विवदन्ते । इयमेव विभावना इति केचित् संभरणस्य पुष्पाणाञ्च मण्डनमस्त्रं प्रत्यहेतुत्वात् । एकगुणहानौ विशेषोक्तिरित्यन्यो रूपकमेवाधिरोपितवैशिष्ट्यमिति त्वपरे ।

अत्र द्वितीयचरणे आसवाभावेऽपि मदस्य प्रतिपादना-द्यौवनस्य चोक्तत्वादुक्तनिमित्ता विभावना। न तु प्रथमतृतीय-चरणयोः, संभरणपुष्पयोर्मण्डनमस्त्रं च प्रत्यहेतुत्वात्।" इत्य-लङ्कारसर्वस्वकारादिभिरुक्तं तत्र विचार्यते—विरोधमूला हि विभावनाद्यलङ्काराः। विरोधस्यैव विद्युत्प्रभावादापाततः प्रति-भासमानस्य चमत्कारबीजत्वात्। अत्र ह्यासवभिन्नत्वविशिष्टं मदकारणत्वं यौवनस्योक्तम्। एवं च यौवनस्य मदकारणतायाः शब्देनैवोपात्तत्वाद् यागे व्रीहियवयोरिव मदे यौवनासवयोः परस्परनिरपेक्षकारणत्वावगतेर्विरोधस्य लेशतोऽप्यप्रतिभानाद् विभावनैव नास्ति। कुतः पुनरुक्तनिमित्ता विभावना? न चासवस्य प्रसिद्धमदकारणत्वात्तेन विना मदोत्पत्तिवर्णने विरोध-प्रतिभा भवत्येवेति वाच्यम्। भवेत्सा, यदि यौवनस्य मद-कारणत्वं कविना साक्षान्न प्रतिपाद्येत। प्रतिपादिते तु तस्मिन् प्रसिद्धकारणातिरिक्ततया कविना प्रतिपादितमिदमपि प्रसिद्ध-कारणमिव कारणान्तरं भविष्यतीति वैकल्पिककारणताप्रति-भानान्न विरोधप्रतिभानं भवितुमर्हति। तस्मादत्र प्रथमतृतीय-चरणयोर्न्यूनाभेदरूपकम्। द्वितीयचरणे तु प्रतीयमानोत्प्रेक्षेति

---

आरोप्यमाणस्य प्रकृते सम्भवात् परिणाम इत्यद्यतनाः। अयं ग्रन्थो लेखकैर्विपर्यासित इति खिद्यता विमर्शिनीकारेण द्वितीयपाद एव, विभावनेति सर्वस्वकारमतं निश्चक्षुषे। तदनुसृत्य तन्मतमाह अत्र द्वितीय● विरोधस्य लेशतो● विना कारणं कथं कार्यमिति विरोधस्येत्यर्थः। विकल्प-कारणस्थले यथा व्रीहिणा यवाभावेऽपि यागनिष्पत्तौ न विरोधः, तथा आसवाभावेऽपि यौवनान्मदनिष्पत्तिर्न विरोधलेशमावहति।

कविश्चासवमिव यौवनमपि स्वतन्त्रं मदकारणमेव निबध्नाति। तस्माद् विरोधस्यानुल्लासात्। न्यूनाभेद● यौवनं मण्डनं परं मण्डनं

विवेकः । अस्मन्निर्मिते तूदाहरणे दहनस्यैव प्रसिद्धदाहकारणत्वाद्यौवनस्य दाहकारणताया अश्रुतत्वाद्दहनमन्तरेण दाहोत्पत्तिवर्णने विरोध आपाततः प्रतीयत एवेति सहृदयैराकलनीयम् ।

अथ 'लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति' इत्यत्र विभावनापत्तिः ? नन्वस्तु, किं नश्छिन्नमिति चेत्, आलङ्कारिकैरत्र तस्या अनङ्गीकारात् । ननु कारणतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वेन कारणाभावो विशेषणीयः । प्रकृते च कारणत्वावच्छिन्नप्रतियोगिताकः प्रसिद्धकारणत्वावच्छिन्नप्रतियोगिताको वाऽभावो न तादृशरूपावच्छिन्नप्रतियोगिताक इति चेत्, 'खला विनैवापराधं भवन्ति खलु वैरिणः' इत्यत्र

---

संभृतं यौवनन्त्वसंभृतम् । यौवनं कामस्यास्त्रं परं पुष्पयुक्तमिदं पुष्पव्यतिरिक्तम् । अत्र कौस्तुभकृतः लोकप्रसिद्धकारणताकस्य मद्यस्य व्यतिरेकेऽपि यौवनान्मदोत्पत्त्यभिधाने विरोधस्य प्रतिभाने बाधकाभावः । अन्यथा द्वयोर्निरपेक्षकारणत्वप्रतीतौ यौवनान्मदोत्पत्तौ चमत्कारानुपपत्तेः । आलोकपरामर्शव्यतिरेकेण धूमपरामर्शादनुमित्यनुत्पत्त्यादिवदनुपपत्त्यभावादिति वदन्ति । अत्रेदं वक्तव्यम् ।

मदस्य कारणमित्येवोक्तं न तु मदोत्पत्तिः । विभावनासम्पत्त्यर्थन्तु मदोत्पत्तौ तात्पर्य्यमुन्नेयम् । आसवस्य मदकारणस्य भेद एव यौवने प्रतिपादितो न तु मदोत्पत्तौ आसवाभावसामानाधिकरण्यम् । ततश्चासवभिन्नं मदकारणं यौवनमित्यत्र तात्पर्यं स्फुटमुन्नीयते । चमत्कारस्तूत्प्रेक्षाकृतोऽनुपपत्त्यमूलोऽपि विराजत एव इति दिक् । अथ लुब्धक● पूर्वार्धन्तु मृगमीनसज्जनानां तृणजलसन्तोषविहितवृत्तीनाम् । यथासङ्ख्येनान्वयः । अत्र निष्कारणशब्देन कारणसामान्याभाव उक्तोऽतिव्याप्तिः । इष्यते तु विभावना उपात्तकार्यस्य कारणविशेषाभावोपादाने । अत्र तु कारणत्वेन कारणस्य प्रसिद्धकारणत्वेन कारणस्याभाव उक्तः । कारणतावच्छेदको योऽपराधत्वादिस्तेन कारणस्याभावो वक्ष्यते लक्षणे इत्याशयेन शङ्कते ननु● कारणतावच्छेदकं

तथाप्यतिव्यापनात्। अपराधाभावस्य तथात्वात्। न च कार्यांशोऽतिशयोक्त्यालीढत्वेनाभेदनिश्चयालीढत्वेन वा विशेषणीय इति वाच्यम्, खला विनैवापराधं दहन्ति खलु सज्जनान्' इत्यादौ तथापि दोषानुद्धारादिति चेत्, मैवम्, कार्यांशे यद्विषयितावच्छेदकं तदवच्छिन्नकार्यतानिरूपितायाः कारणताया अवच्छेदकमिह ग्राह्यम्। दाहत्वं चेह विषयितावच्छेदकम्। तदवच्छिन्नाभिन्नत्वेन पीडाया अध्यवसानात्। नहि दाहत्वावच्छिन्नकार्यतानिरूपितकारणताया अवच्छेदकमपराद्धत्वम्, अपि तु दाहत्वावच्छिन्नाभिन्नत्वे-

---

येन रूपेण कारणत्वं तदवच्छिन्ना प्रतियोगिता यस्याभावस्य। कारणं नास्तीत्याकारकोऽभावः कारणत्वावच्छिन्नप्रतियोगिताकः। एवं प्रसिद्धकारणं नास्तीत्याकारकः प्रसिद्धकारणत्वावच्छिन्नप्रतियोगिताकः। दण्डो नास्तीत्याकारकोऽभावः घटकारणतावच्छेदकदण्डत्वधर्मावच्छिन्नप्रतियोगिताकः। एवमपराधो नास्तीत्याकारकोऽभावो वैरकारणतावच्छेदकापराधत्वधर्मावच्छिन्नप्रतियोगिताक एवंरीत्योह्यम्। सरला त्वेतादृशं स्थलन्नावबुध्यत इति ध्येयम्। व्यापनात् अपराधं नास्तीत्याकरकस्याभावस्य तादृशस्यात्रोपादानात्। नुद्धारात् दाहेन वैरस्य निगरणेनातिशयोक्तिसंस्पर्शात्। कार्यांशे प्रागिदमत्र व्युत्पादनीयं किमपि कार्यतावच्छेदकं किञ्चिच्च कारणतावच्छेदकमिति। घटं प्रति दण्डः कारणम् इत्यादौ घटे द्रव्यत्वपृथ्वीत्वादेः सत्त्वेऽपि घटत्वमेव कार्यतावच्छेदकम्, द्रव्यस्य पार्थिवस्यापि घटभिन्नस्य पटस्य दण्डेनाजननात्, सर्वस्य घटस्य च जननात्। एवमेव दण्डनिष्ठकारणतावच्छेदकं दण्डत्वं न पृथ्वीत्वद्रव्यत्वे दण्डभिन्नस्य द्रव्यस्य पार्थिवस्यापि अकारणत्वात्। तत्र घटत्वावच्छिन्ना कार्यता दण्डत्वावच्छिन्नकारणता इति व्यवहारः। प्रकृते दाहेन वैरं कार्यमध्यवसितम्, साहित्यसम्प्रदायेन विषयतावच्छेदकं वैरत्वं विषयितावच्छेदकं दाहत्वम्। दाहं प्रति दहनं कारणम्। दाहत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकं दहनत्वं दहनत्वावच्छिन्नप्रतियोगिताकोऽभावो दहनो नास्तीत्याकारकस्तस्योपादाने विभावना समीहिता। अपराधाभावस्तु अपराधत्वावच्छिन्नप्रतियोगिताकः। अपराधत्वञ्च

नाध्यवसिता या पीडा तन्निष्ठकार्यतानिरूपितकारणताया इति तदवच्छिन्नप्रतियोगिताकाभावसामानाधिकरण्येन कार्योत्पत्तिवर्णनेऽपि नात्र विभावनाप्रसङ्गः।

यदि तु 'खला विनैव दहनं दहन्ति जगतीतलम्' इति क्रियते तदा भवत्येव विभावना।

एवम्—

'कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम्।
सा च सुकुमारसुभगेत्युत्पातपरंपरा केयम्॥'

इति परकीयपद्येऽतिशयोक्त्युदाहरणेऽस्त्येव विभावना। परंतु 'कमलमनम्भसि' इत्यंशे शाब्दी। 'कमले च' इत्यादौ त्वार्थीति संक्षेपः।

इति रसगङ्गाधरे विभावनाप्रकरणम्।

---

न दाहत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकम्, अपि तु पीडात्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकम्। **तन्निष्ठ**● पीडानिष्ठपीडात्वावच्छिन्न। **तदवच्छिन्न**● अपराधत्वावच्छिन्न। **भवत्येव**● तादृशस्योपादानात्। एवं निवेशं कौस्तुभकृतो न वाञ्छन्ति, परमतिप्रसङ्गवारकमपि न निर्दिशन्ति। एवं निवेशे निरुपादानेत्यादौ तत्प्रदर्शितो दोषः तत्रैवोद्धृतः। **कमलमनम्भसि**● जलभिन्ने शरीरे कमलम्। कमलेन मुखं कुवलयाभ्यां नेत्रे कनकलतिकया गौरशरीरञ्च निगीर्यन्ते। आधारस्यापि कारणत्वात् प्रसिद्धाधाराभावनिबन्धने कारणाभावस्यापि निबन्धनात्। विरोधोऽपि आधाराभावस्य आधेयस्य कनके सौकुमार्यस्य च। विषयिणां कमलादीनामाधाराभाववर्णने विरोधो विषयमुख्याधारप्रतीत्या निवर्तत इति पूर्ववदनुसंधातव्यमिति एवंशब्देन सूचितम्। **त्वार्थी**● कुवलयाधाराभावस्यानुपादानादर्थात् कल्पनीयत्वात्।

॥ इति विभावनानिरूपणम् ॥

अथ विशेषोक्तिः—

प्रसिद्धकारणकलापसामानाधिकरण्येन वर्ण्यमाना कार्यानुत्पत्तिर्विशेषोक्तिः ।

तत्र सत्यपि कारणसमवधाने कार्यस्यानुत्पत्तौ विरोधः प्रतिभासमानः प्रसिद्धेतरकारणवैकल्यधिया निवर्तते ।

यथा—

'उपनिषदः परिपीता गीतापि च हन्त मतिपथं नीता ।
तदपि न हा विधुवदना मानससदनाद् बहिर्याति ॥'

यथा वा—

'प्रतिपलमखिलांल्लोकान्मृत्युमुखं प्रविशतो निरीक्ष्यापि ।
हा हतकं चित्तमिदं विरमति नाद्यापि विषयेभ्यः ॥'

---

## अथ विशेषोक्तिनिरूपणम्

कञ्चिद्विशेषं बोधयितुमुक्तिरिति केचित् । वस्तुतो विलक्षणः शिष्यमाणः शेषो यस्यामुक्तौ इति योगरूढेरर्थः । प्रसिद्धकारणसमवधाने कार्यानुत्पत्तिकथनेन ● शेषस्य चमत्कारिणः प्रसिद्धेतरस्य कारणतावगम्यते । यद्व्यतिरेकनिबन्धना कार्यानुत्पत्तिः । व्यङ्ग्यस्यापि प्रसिद्धेतरकारणव्यतिरेकस्यानुपपत्तिमूलकतया गुणीभूतव्यङ्ग्यत्वमिति ध्येयम् । प्रसिद्ध ● प्रसिद्धकारणानां कलापः समूहः । यश्चावगम्यमानो विरोधनिवर्तक इत्याह प्रसिद्धे ● वैकल्यमभावः । तथा च कारणाभावस्य प्रतिबन्धकधिया वेति द्विविधोऽपि व्यवहारो ग्रन्थकारस्य ।

उपनिषदः ● परिपीता लक्षणया अर्थतोऽवगमनेन विवेचिताः । मतिपथं बुद्धिविषयत्वम् । मानससदनं हृदयस्थानम् । विधुवदनाविषयकोऽनुरागो हृदि वर्तत एव ।

प्रतिपलम् ● प्रतिक्षण मृत्युमुखं प्रविशतः सकलान् लोकान् न केवलं श्रुत्वा किन्तु साक्षात् कृत्वापि सर्वलोकस्य क्षणभङ्गुरत्वं दृष्ट्वाऽपि तदन्तःपातित्वेन ममाप्यनित्यत्वेऽवसितेऽपि विषयस्थैर्यवासनावासितं कष्टं हतकं

अत्रोपनिषदर्थविमर्शे सकललोकानित्यत्वज्ञाने प्रसिद्ध-विरतिहेतौ सत्यपि विरत्यनुत्पत्तिवर्णनाद्रागाधिक्यरूपं प्रतिबन्धकं प्रतीयते । इयमनुक्तनिमित्ता । विरत्यनुत्पत्तिनिमित्तस्य प्रतिबन्धकस्यानुपात्तत्वात् ।

अत्रैव 'रागान्धं चित्तमिदम्' इति निर्माणे उक्तनिमित्ता । केचिदचिन्त्यनिमित्तां तृतीयामामनन्ति । उदाहरन्ति च—

'स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं यस्य शम्भुना न बलं हृतम् ॥'

अनुक्तनिमित्तायां निमित्तं निमित्ततावच्छेदकरूपेण चिन्त्यमानं प्रतीयते । इह तु न तथा । किं तु भविष्यति किञ्चिन्निमित्त-

---

गाढानुरागदोषाविलमिदं चित्तम् अद्यापि न विरमति । विषयेभ्यश्चित्तस्य विरामो वैराग्यं विरतिर्वोच्यते । विषयस्य क्षणभङ्गुरत्वसाक्षात्कारस्य वैराग्यहेतोः सत्त्वेऽपि वैराग्यानुत्पत्तिरनुपपद्यमाना वासनाधिक्यं प्रतिबन्धकं कल्पयति । अत्रोपनि● अध्यात्मशास्त्राणामात्मेतरानित्यत्वासत्यत्वगमकानामुपनिषद्गीतादीनां विचारः सकललोकानित्यत्वसाक्षात्कारश्च वैराग्यहेतुरिति पद्यद्वयमिभिणेन विवेचनम् । प्रसिद्ध● हेतुपदेन कर्मधारयः । प्रसिद्धे सप्तम्यन्तपाठो वा वर्णनीयः । रागाधिक्यम्● राग इच्छा तस्याः पर्यवसानं संस्कारात्मिकायां वासनायाम् । धर्माधर्मयोरपि कथञ्चित् रागशब्दस्य वृत्तिर्नाप्रसिद्धिं तनुते, तदा प्रारब्धकर्मप्राबल्यमपि रागाधिक्यमित्यस्य व्याख्यानं युक्तमेव । केचिदचि● काव्यप्रकाशादयः । एकस्त्रीणि असहायो निःसारशरः कुसुमायुधः त्रीणि जगन्ति जयति । अहोऽद्भुतं बलमस्य । यस्य शरीरं हरतापि शम्भुना बलं न हृतम् । येन दग्धोऽपि जयत्येव । उक्तनिमित्तायां प्रतिबन्धकमुच्यतेऽनुक्तायाञ्च विशेषरूपेण गम्यते । तृतीयायान्तु गम्यमानमपि निमित्तं न विशेषरूपेण प्रतीयते किमपि विलक्षणमचिन्त्यमस्तीत्याकारेण परामृश्यते । विशेषरूपेण ज्ञानमित्यस्य विवरणमाह निमित्तता● यथा पूर्वत्र रागाधिक्यत्वेन रूपेण रागाधिक्यस्य चिन्ता । इह तु●

मित्याकारेणेत्यनुक्तनिमित्तातोऽचिन्त्यनिमित्ताया भेद इति ह्येषामाशयः। अन्ये तु --'नानुक्तनिमित्तायां चिन्त्यत्वं निमित्तविशेषणम्, भेदान्तरकल्पनागौरवप्रसङ्गात्। किं तु चिन्त्यमचिन्त्यं चेति द्विप्रकारकमपि निमित्तं यत्र नोक्तं सानुक्तनिमित्ता। तेनाचिन्त्यनिमित्ता अनुक्तनिमित्तातो न पृथग्भावमर्हति' इत्याहुः।

अत्र च कारणसमवधानं कार्यानुत्पत्तेर्बाध्यमिति बहवः। वस्तुतस्तु कार्यानुत्पत्तिरेवास्मिन्नलङ्कारे बाध्या।

---

अचिन्त्यनिमित्तिकाया उदाहरणे एकस्त्रीणीत्यादौ। तथा अनुक्तनिमित्ततो भेदोऽस्यात एव त्रैविध्यमिति भावः। **अन्ये तु** ● अनुक्तनिमित्ततायां तृतीयायामन्तर्भावयन्तो द्विधावादिनः। यदि चिन्त्यं निमित्तं नोक्त यस्या इत्यनुक्तनिमित्तताया अर्थः स्यात्तदाऽचिन्त्यं निमित्तं यत्र नोक्तं तद् न गृह्येत, किन्तु निमित्तं नोक्तं यत्रेत्येवार्थः। **इत्याहुः** ● काव्यप्रकाशचक्रवर्तिविवृत्यादिषु युक्तञ्चैतत्। अचिन्त्यमिति निमित्तस्यैव विशेषणं न तूक्त्यनुक्त्योः।

तस्य भेदकत्वेऽपि एवं त्रिभागः स्यात्। विशेषोक्तेः कार्यानुत्पत्तिर्द्विधा चिन्त्यनिमित्ता अचिन्त्यनिमित्ता च। उक्तानुक्तघटितस्तु द्विविध एव। **बहवः** ● कार्यानुत्पत्तिः कारणं विनैव भवेत्। कारणसत्त्वेऽपि स्याच्चेत्सर्वत्रैवानुत्पत्तिः प्रसज्येत। अत एव कार्यानुत्पत्तेरुपपादनाय प्रसिद्धेतरत्कारणं कल्प्यत इति वदन्ति सर्वस्वमूलानुसारिणः। विमर्शिनीकारस्तु विशेषोक्तौ कार्याभावेन कारणसत्ताया एव बाध्यमानत्वमिति पाठो लेखककल्पितोऽपपाठः। तथा हि हरतापि तनुं यस्येत्यादौ बलाहरणेन कार्याभावेन तनुहरणरूपं कारणं न बाध्यते, अपि तु सत्यपि तनुहरणाख्ये समग्रे कथनं बलं हृतमिति कार्याभावस्यैव बाध्यत्वेन प्रतीतिः। तस्मादेवं विशेषोक्तौ कारणसत्तया कार्याभावस्यैव बाध्यत्वमुन्नेयम्। इति पाठो ग्राह्यः। एतदेव राजानकतिलकेनाप्युक्तम्--कारणसामग्र्यमिति बाधकत्वेनैव प्रतीयते कार्यानुत्पत्तिस्तु बाध्यत्वेन इति। ग्रन्थकृच्च प्रायस्तन्मतानुवर्त्येव। तदनुसारमेवाह **वस्तुतस्तु** ● दुर्बलं बलवता बाध्यते कारणसमवधानन्तु अप्रामाण्यज्ञानानास्कन्दितं न तथा कार्यानुत्पत्तिरिति

'कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने ।
नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥'
'स एक स्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं यस्य शम्भुना न बलं हृतम् ॥'

इति प्राचीनप्रसिद्धोदाहरणेषु कारणसमवधानस्य कामशरीरनाशरूपस्य प्रमाणसिद्धत्वेन बाध्यत्वायोगात् । यतः कामस्य शरीरनाशेऽपि शक्तिबलयोर्नाशः कुतो न जात इत्येव सर्वजनीनः प्रत्ययः न तु शक्तिबलयोः सतोः कथं शरीरनाश इति ।

'दृश्यतेऽनुदिते यस्मिन्नुदिते नैव दृश्यते ।
जगदेतन्नमस्तस्मै कस्मैचिद्बोधभानवे ॥'

---

भावः । कर्पूर इव ● कर्पूरस्यदाहेऽपि यथा सुगन्धः प्रसरति तथाऽस्यापि शक्तिः । शरीरदाहे शक्तेरविनाशे हेतुरवार्यवीर्यत्वम् । कर्पूरोदाह एवोपमानं न शक्तिमत्त्वेऽपि इति केचित् । अन्ये तु इषद्दग्धकर्पूरः सुरभितरस्तथायमपि शक्तिमत्तर इति वदन्ति । उत्तरमते शक्तिनाशकारणता नायातीति पूर्वमतं ज्यायः । अधिकं प्रकाशटीकायां बालरामायणे तृतीयकाण्डे पद्यमिदम् । प्रमाणसिद्धत्वमप्रामाण्य ज्ञानानास्कन्दितत्वम् । प्रत्ययः ● शक्तेरनाशेऽनुपपन्नत्वप्रत्ययः । अनुत्पत्तिज्ञानमपि अनुपपन्नत्वेन ज्ञातं सन्नकल्पकमिति भावः । दृश्यतेऽनुदिते ● विभावनाविशेषोक्त्योर्भ्रमनिवारणाय प्रत्युदाहरणमिदम् । जीवब्रह्मात्मैक्यबोधसूर्ययो रूपकेण वर्णनमत्र । अज्ञानमूला जगत्सृष्टिरिति शाङ्करवेदान्तसिद्धान्तः । जीवात्मैक्यविषयकमज्ञानं जगन्मूलम् । जीवात्मनोरैक्यस्य बोधो यदोदेति तदा तादृशमज्ञानं नाशमुपैति । आत्मा च ब्रह्म अज्ञाने नष्टे तन्मूलकजगतोऽपि न भानम् । तादृशबोधस्योदयाभावे तु अज्ञानस्य विद्यमानतया जगदपि दृश्यते । बोध एव भानुरित्यर्थे मयूरव्यंसकादित्वात्समासः । सूर्यस्योदयानुदयावादाय तु आसीत्प्रसक्तिस्तयोरलङ्कारयोः । सूर्योदयसत्त्वे तत्कार्यस्य जगद्दर्शनस्याभावे विशेषोक्तेः ।

इत्यत्रोदयाभावे जगद्दर्शनस्य, उदयसत्त्वे दर्शनाभावस्य वर्णनेऽपि न विभावनाविशेषोक्ती। नह्यत्र साहजिकसूर्योदयो वर्ण्यते। येन तयोः प्रसङ्गः स्यात्। तथात्वे तूक्तिसंभव एव न स्यात्। किंतु ब्रह्मात्मैक्यबोधसूर्योदयः। तस्य च जगददर्शनमेव कार्यम्। न तु जगद्दर्शनम्। तथात्वे तु सूर्योदयस्येवास्याप्युक्तिसंभवो न स्यात्। अत एव व्यतिरेकोल्लासस्ताद्रूप्यरूपकालीढे संगच्छते।

कारणाभावकार्याभावयोर्यत्र प्रतियोगितावच्छेदकविशिष्टवैशिष्टयेन श्रुत्या प्रतिपादनं तत्र विभावनाविशेषोक्त्योः शाब्दत्वम्। यथा—

---

सूर्यानुदयसत्त्वे सूर्योदयकार्यस्य जगद्दर्शनस्य भावे विभावनायाः प्रसक्तेः। **तूक्ति सम्भवः** ● सर्वथा बाधितएवार्थः स्यात्। **तथात्वे** ● सूर्योदय इव बोधोदयस्यापि कार्यं स्यात्तदापि बाधितं स्यात्। अतः सूर्योदयकार्यविपरीतं बोधोदयकार्यम्। **व्यतिरेको** ● व्यतिरेकस्य व्यङ्ग्यता। सूर्योपमानापेक्षया जीवात्मैक्यबोध उपमेये विशेषस्य प्रतीतेः। अभेदासम्भवे तद्धर्मवत्तया ताद्रूप्यरूपकालङ्कृतेऽत्र काव्ये। **विशिष्टवैशिष्ट्ये** ● न्यायमुक्तावल्यां निर्विकल्पकनिरूपणावसरे विशिष्टवैशिष्ट्यावगाहिबुद्धिर्दर्शिता। घट इति विशिष्टबुद्धिः। घटत्वविशिष्टघटविषयिणी।

तत्र विशेषणीभूतायां घटत्वजातौ किमपि विशेषणं नास्ति। घटवद् भूतलं घटविशिष्टं भूतलमित्याकारिका वा विशिष्टवैशिष्ट्यावगाहिबुद्धिः। तत्र भूतलविशेषणे घटेऽपि घटत्वं विशेषणं वर्तते। घटत्वविशिष्टस्य वैशिष्ट्यं सम्बन्धो भूतले भासत इति संक्षिप्तपरिचयोऽस्याः। प्रकृतेचाभावस्थले घटो नास्तीत्यादौ नञर्थोऽभावो विशेष्यस्तत्र प्रतियोगितावच्छेदकं यद् घटत्वं तद्विशिष्टस्य घटस्य प्रतियोगितानामकसम्बन्धोऽभावे भासते। तथा च कारणतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकः कारणाभावोभावनायामेवं विशेषोक्तौ कार्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकः कार्याभावः शब्दतः प्रतिपाद्यते तत्रानयोः शाब्दत्वमिति स्फुटार्थः। विभावनायां मूल एव समन्वयोऽपि वर्तते। अत्र तु द्वितीयपद्ये न विरमति इत्यादिना विरतेरभावः शाब्दः।

'भगवद्वदनाम्भोजं पश्यन्त्या अप्यहर्निशम् ।
तृष्णाधिकमुदेति स्म गोपसीमन्तिनीदृशः ॥'

लोके ह्यसंनिकर्षस्तृष्णाकारणम् । तदभावे संनिकर्षेऽपि तृष्णोपनिबद्धा । तथा संनिकर्षस्तृप्तिकारणम् । तस्मिन्सत्यपि तृप्त्यभावो बोधितः । परन्तु कारणाभाव–कार्याभावयोर्न प्रागुक्तप्रकारेण प्रतिपादनमित्यार्थत्वमेव तदुभयसंशयशंकरस्य । अमुमेव चार्थं मनसिकृत्य मम्मटभट्टैः 'यः कौमारहरः' इति

---

**भगवद् वदना●** श्रीकृष्णमुखकमलमहर्निशं पश्यन्त्या अपि गोपाङ्गनादृशः तृष्णा अधिकं यथा स्यात्तथा उदेति स्म । अत्र ह्यभावो न शब्दत उक्तोऽपि तु तृप्तिविरोधितृष्णोदयवर्णनेनार्थवदवसीयते । **तदभावे●** तस्याः असन्निकर्षस्याभावरूपे सन्निकर्षे इत्यर्थः । तृप्तिकारणं सन्निकर्षोऽपि शब्दतोनोपात्तो येन स्फुटं विभावना स्यादपि तु मुखदर्शनोक्त्यार्थादवसीयते । **तदुभय●** विभावनाविशेषोक्ती तत्पदार्थौ । संशयस्तूभयोस्तुल्यकक्षत्वात् । संशययोः संकरः । **अमुमेव●** कारणतावच्छेदकरूपेण कारणस्याभावोपादाने विभावना कार्यतावच्छेदकरूपेण कार्यस्याभावोपादाने विशेषोक्तिः । भगवदित्यादिग्रन्थ इवैकतरस्य निर्णयाभावेन विभावनाविशेषोक्तिसंशययोः संकर इतीदृशम् ।

यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपाः ।
ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ॥
सा चैवास्मि तथापि तत्र सुरतव्यापार लीलाविधौ ।
रेवारोधसि वेतसी तरुतले चेतः समुत्कण्ठते ॥ १ ॥

भूयः सम्भोगोत्कण्ठितायाः सखीं प्रत्युक्तिः । यद्यपीत्यस्य तथापीत्यनेनाक्षिप्तस्य द्योतको हि शब्दः सर्वत्र वाक्येऽन्वेति, प्रथमश्चकारोऽवधारणार्थो द्वितीयश्चाप्यर्थः । अस्मीति अहमर्थे विभक्तिप्रतिरूपकमव्ययम् । तच्छब्दः सर्वत्र बुद्धिस्थस्योपभुक्तस्य द्योतकः । मालतीपदेन वासन्तिकलता ग्राह्या, न तु जातिश्चैत्रे तस्याः अप्रसङ्गात् । यः कौमारहरः । बाल्यञ्च नात्युद्भूतकामावस्थम् । तस्याः कौशलेन हर्ता वरो मया स्वयं वृतो मनोहरः स एवोप-

पद्यमुदाहृत्योक्तम्—'अत्र स्फुटो न कश्चिदलङ्कारः' इति ।

वामनस्तु—'एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिः' इत्याह। उदाजहार च—'द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यम्' इति। अत्र हि—द्यूते राज्यं तादात्म्येनारोप्यते। तत्र सिंहासनरहितं हि द्यूतं सिंहासनसहितराज्यतादात्म्यं कथं वहेदित्यारोपोन्मूलकयुक्तिनिरासायारोप्यमाणे राज्येऽपि सिंहासनराहित्यं कल्प्यते। तेन दृढारोपं रूपकमेवेदम्, न विशेषोक्तिः।

---

भुक्त एव। यद्यपि चैत्रमासस्य ज्योत्स्नावत्योऽपि पूर्वमुपभुक्ता एव। विकसितायाः मालत्याः संस्पर्शेन सौरभवन्तो रत्युत्पादने दक्षाः कदम्बवृक्षसम्बन्धिनो वायवस्ते एवोपभुक्ता एव। अहमपि कृतसंभोगानुभवैव। एवं नास्ति उत्कण्ठा कारणन्तथापि तत्र कृतानुभवेऽपि सुरतव्यापारस्य लीलायाः अङ्गरागमण्डनादिविधाया विधाने उपभुक्तेऽपि रेवातटे वेतसीलतावेष्टिते तरोस्तल उपभोगाय चेतः समुत्कण्ठते। अत्र विभावनाप्रयोजकस्योत्कण्ठाकारणस्यानुपभोगस्याभावो न शब्दत उपात्तः, किन्त्वर्थादवसेय एवं विशेषोक्तिविषयस्यानुत्कण्ठाया अभावोऽपि। उभयोस्तुल्ययोगक्षेमत्वात्कतरोऽनयोरत्रेति निर्णयाभावादुभयोः संशय एव इत्याह अत्र स्फुटो ● विभावनात्वेन विशेषोक्तित्वेन वा स्फुटता नास्तीति भावः। साहित्यदर्पणेऽपि एवमेव संशय उपपादितः। सतोऽप्यप्रतीतिरस्फुटता। अस्फुटतायां संशयस्य जाग्रतत्वात्। अथवा स्फुटो नेत्यस्य शाब्दो नेत्यर्थः आर्थस्तु संशयसंकरो वर्तत एव। संदेहसंकरोऽप्यस्फुट एवेति काव्यप्रकाशटीकाया अपि शाब्दो-नेत्यत्रैव तात्पर्यम्। अत्र पद्ये काव्यप्रकाशीयस्फुटशब्दस्य शाब्दार्थतामनभिसंधाय दर्पणस्याक्षेपः, अनुप्रासो वर्तमानोऽपि प्रकृतश्रृङ्गारानपेक्षिततया नालङ्कारतां भजते, अस्मीत्यस्य क्रियापदाभावेन समेषां प्राकरणिकत्वाच्च न दीपकम्। एवं परिसङ्ख्यासमुच्चयादीनां प्रसङ्गो निरसनीय इति वितानाद् विरम्यते। त्यारोपोन्मूलक● अभेदारोपस्या विरोधि यद् वैधर्म्यं तन्नि-

एवं च—

'अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः।
अभाललोचनः शंभुर्भगवान्बादरायणः॥'

इति पौराणपद्येऽपि रूपकमेव। तथा गुणाधिक्यकल्पनायामपि तदेव। यथा—

'धर्मो वपुष्मान्भुवि कार्तवीर्यः' इत्यादौ।

एतेन 'एकगुणहान्युपचयादिकल्पनायां साम्यदार्ढ्यं विशेषणम्' इति विशेषालङ्कारं लक्षयन्तोऽपि प्रत्युक्ताः।

इति रसगङ्गाधरे विशेषोक्तिप्रकरणम्।

अथासंगतिः—

विरुद्धत्वेनापाततोभासमानं हेतुकार्ययोर्वैयधिकरण्यमसंगतिः॥

---

रासाय। एवञ्च● व्यासरूपे बादरायणे ब्रह्मविष्णुमहेशतादात्म्यसिद्धये वैधर्म्यनिरासाय। ब्रह्मण्यचतुर्वदनत्वं हरौ द्विबाहुत्वं शम्भौ भाललोचन-रहितत्वमारोपणीयम्। धर्मो वपुष्मान्● सशरीरे कार्तवीर्येऽशरीरस्य धर्मस्य तादात्म्यसिद्धये धर्मेऽपि सशरीरत्वमारोपणीयम्। हानिरेकस्य गुणस्याभावकल्पना। उपचयोऽविद्यमानस्य गुणस्याधिकस्य कल्पना यथोक्तयो-रुदाहरणयोः। लक्षयन्तो● प्रतीतिसिद्धरूपकेण निर्वाऽलङ्कारान्तरकल्पना-क्लेशं मुधैव सहमानाः।

॥ इति विशेषोक्तिप्रकरणम् ॥

## अथासंगतिप्रकरणम्

संगतिः सम्बन्धः कार्यकारणयोः सामानाधिकरण्यरूपस्तद्विपरीता असंगतिः कार्यकारणयोर्वैयधिकरण्यम्। इति योगार्थः। तत्र वैयधिकरण्ये विरुद्धत्वेनाव-भासमानत्वं विशेषणं प्रक्षिप्य लक्षणं निर्दिशति विरुद्धत्वेना● विरुद्धत्व-प्रकारकज्ञानविषयो वैयधिकरण्यं कार्यकारणयोरित्यर्थः। विरुद्धत्वप्रकारकञ्च

स्वरूपतो हेतुत्वाभावात्तज्ज्ञानं स्वापनाशे हेतुत्वेनाभ्युपगन्तव्यम्। एवं च तस्य कथं वैयाधिकरण्यमिति चेत्, न। प्रयोजकस्यापि हेतुपदेनात्र ग्रहणाददोषः। प्रयोजकत्वं च चापस्पर्शस्य भ्रमात्मकरोषानुमितिलिङ्गत्वात्।

उदाहरणम्---

'अङ्गैः सुकुमारतरैः सा सुकुमानां श्रियं हरति।
प्रहरति हि कुसुमबाणो जगतीतलवर्तिनो यूनः॥'

यथा वा—

---

कालमधिकरणमादाय तयोः कार्यकारणभावः। रोषस्य कालिकसम्बन्धेन काले सत्ता कार्यस्वापनाशस्तु शत्रुनृपे वर्णितः। हेतुत्वाभाव● चापस्पर्शो न स्वापनाशहेतुर्लीलया कृते चापस्पर्शे स्वापनाशाभावाद्व्यभिचारात्। किन्तु क्रोधप्रयुक्तचापस्पर्शस्य ज्ञानं स्वापनाशे हेतुः। तच्च यस्य स्वापनाशस्तस्मिन्नेवेति न व्यधिकरणता दोषः, अन्यथासिद्धमपि प्रयोजकमुच्यते तेन कारणस्य नियतपूर्ववर्तिनोऽन्यथासिद्धस्य च ग्रहणात् लक्षणसमन्वयाभावान्न दोषः। यदा लीलयाऽपि नेपालेन्द्रेण चापस्पर्शः कृतस्तदानीमपि कदाचिदयं राजा रोषवान् चापस्पर्शाद् रणक्षेत्रवदित्यादिरीत्या शत्रुनृपतेर्भ्रमात्मिकारोषानुमितिर्जाता तद्वशाच्च स्वापनाशो जायते तत्र स्वापनाशं प्रतिरोषानुमितिः साक्षात्कारणम्, अनुमितिजनकश्चापस्पर्शो हि स्वापनाशम्प्रत्यन्यथासिद्धोऽपि प्रयोजकस्तस्य च हेतुत्वेन ग्राह्यस्य नेपालेन्द्रे स्वापनाशानधिकरणे सत्त्वात्समायाति वैयधिकरण्यमिति भावः। अङ्गैः सुकुमारतरैः● कुसुमसुकुमारतामपेक्ष्याधिकसुकुमारशरीरेण कामबाणीभूतकुसुमानां श्रियोहरणमपराधो नायिकायाम्। अपराधकारणजन्यः कुसुमबाणकर्तृकः प्रहाररूपो दण्डो जगतीतलवर्तिनि युवमात्रे इति न नायिकायामिति वैयधिकरण्यस्य वर्णनाल्लक्षणसंगतिरसंगतेः। सौकुमार्यातिशयप्रयुक्तां शोभां विलक्षणां भावयतां यूनां कामपीडेति पर्यवसितार्थमादाय वैयधिकरण्यप्रयुक्तां विरोधो निवर्तते, कार्यकारणयोः कामपीडाशोभाभावनयोर्युवसु सामानाधिकरण्यात्।

'दृष्टिर्मृगीदृशोऽत्यन्तं श्रुत्यन्तपरिशीलिनी ।
मुच्यन्ते बन्धनात्केशा विचित्रा वैधसी गतिः ॥'

अत्राद्योदाहरणे शुद्धा, द्वितीये तु श्लेषोपबृंहितेति विशेषः । प्रहरतीत्यत्राभेदाध्यवसायलक्षणेनातिशयेनापराधनिमित्तकताडनरूपतयावस्थिते कामपीडने विषय्यंशमालम्ब्य तं प्रति समानाधिकरणतया प्रसिद्धस्य हेतोरपराधरूपस्य वैयधिकरण्यज्ञानात्पुरः स्फुरन्विरोधो विषयांशविमर्शोत्तरम् तं प्रति कुसुमश्रीहरणाभिव्यक्तशोभाविशेषस्य भावनोपनीतस्य तद्भावनाया वा हेतुत्वस्य प्रतिसंधानान्निवर्तत इत्यभेदाध्यवसानमनुप्राणकम्, विरोधाभासश्चोत्कर्षकः । एवमन्यत्रापि बोध्यम् ।

अस्यां च विभावनायामिव कार्यांशेऽतिशयोक्त्यनुप्राणनमावश्यकम् । अन्यथा विरोधो दुष्परिहर एव स्यात्, इत्य-

---

दृष्टिर्मृगी● मृगनयनाया नेत्रं कर्णपर्यन्तगामि अतिदीर्घम् बन्धनमुक्ताः केशा इति वस्तुस्थितोऽर्थः । अर्थान्तरमादाय पूर्वार्धस्य लक्षणसमन्वयः । श्रुतिर्वेदः अन्तो वेदान्तः । वेदान्तवाक्यपरिशीलनं मुक्तिं प्रति कारणम् । यस्य वेदान्तवाक्यपरिशीलनं तस्यैव मुक्तिर्नान्येषामिति तयोः सामानाधिकरण्येनैव कार्यकारणभावः । अत्र तु दृष्टौ वेदान्तवाक्यपरिशीलनं केशानां मुक्तिरिति वैयधिकरण्यम् । वास्तविकेऽर्थे विरोधाभावाद्विरोधनिवृत्तिः । विषय्यंश● अतिशयेन निगरणेन कामपीडाविषयिणः प्रहारस्याध्यवसायः । प्रहारमादाय विरोधो वैयधिकरण्यात्, कामपीडामादाय तु न विरोध इत्याह विषयांश● भाविता शोभा कामपीडाहेतुः प्रसिद्धा शोभा, यद्यपि नायिकायां तथापि भाविता शोभा युवजनेषु । तस्याः सत्त्वञ्च स्वविषयभावनावत्त्वसम्बन्धेन । शोभाभावनाया एव कामपीडाहेतुत्वमाश्रित्य पक्षान्तरमाह भावनाया वा● । इत्यभेदा● श्लेषन्निमित्तकमध्यवसानं बोध्यन्नत्वतिशयकृतम् । चोत्कर्षकः● वैयधिकरण्यभावनानिबन्धनचमत्कृतेः पोषकः । दुष्परिहर● अध्यवसानमन्तरा आरोपासम्भवेन विषयविषयिभावाभावात्पूर्वोक्तविषयांशमादाय

लङ्कारसर्वस्वकारादीनां मतम्। तच्च 'दृष्टिर्मृगीदृशः' इत्यस्मन्निर्मितोदाहरणे व्यभिचारादसंगतम्। नहि 'मुच्यन्ते बन्धनात्केशाः' इत्यत्र केशबन्धनमुक्त्यंशेऽतिशयोक्तिरस्ति। किंतु श्लेषभित्तिकाभेदाध्यवसानमात्रम्। तस्माद् येन केनापि प्रकारेण कार्यांशेऽभेदाध्यवसानमावश्यकमिति तु संगतम्।

यद्यपि 'दृष्टिर्मृगीदृशः' इत्यादौ कारणांशेऽपि श्लेषादिनाभेदाध्यवसायः संभवति, तथापि नासौ तदंशे नियतः।

'खिद्यति सा पथि यान्ती कोमलचरणा नितम्बभारेण।
स्विद्यन्ति हन्त परितस्तद्रूपविलोकिनस्तरुणाः॥'

इत्यादौ भारजनितखेदांशे तदभावात्। न च तत्रापि जलपूर्णघटादिभारजनितखेदेन सह नितम्बभारजनितखेदस्याभेदाध्यवसायोऽस्त्येवेति वाच्यम्। नितम्बभारजनितखेदस्य

---

परिहारासम्भवादिति तदभिप्रायः स्यात्। अलङ्कारसर्वस्वविमर्शिनीग्रन्थः। सा बालावयमित्यादावन्यनिमित्तमप्रगल्भवचनत्वमन्यदन्यच्चात्रनिमित्तकम्। इत्यनयोरभेदाध्यवसाय इति सर्वस्वम्। तत्रैव प्रतीके अनेनातिशयोक्तिरस्या अपि अनुप्राणकत्वेन कटाक्षिता। अन्यथाहि विरोधो दुष्परिहरः स्यात्॥ इति विमर्शिनी। केशबन्धन● बन्धनमुक्त्या न कस्यचिन्निगूहणम्। कारणांशे● कर्णसमीपगामित्व वेदान्तपरिशीलनेन निगीर्णम्।

खिद्यति सापथि● चरणस्य सुकुमारतया भारासहिष्णुतया नितम्बभारप्रयुक्तखेदः कारणं नायिकायां परिश्रमप्रयुक्तश्च स्वेदस्तु कार्यभूतो नायिकात्रिलोकिषु युवजनेषु। तदभावात्● अभेदाध्यवसानाभावात् कारणांशेऽभेदाध्यवसानं न नियतम्। नितम्बभारजनितखेदेन जलपूर्णघटादिभारजनितखेदो निगीर्ण इत्याशङ्कते न च तत्रापि●। समाधत्ते नितम्बभार● अय भावः। यथात्रैव कार्यांशे श्रमातिशयप्रयोज्यप्रस्वेदस्य विषयिणो वैयधिकरण्यविरोधोत्थापनाय कामपीडाप्रयोजनस्वेदस्य विषयस्य विरोधपरिहारायापेक्षा, न तथा कारणांशे कस्यचिदपेक्षा।

स्वस्वरूपेणापि खेदजनकत्वेन भारान्तरजनितखेदाध्यवसायानपेक्षणात्। 'सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः' इति प्राचीनानां पद्ये बालात्वस्त्रीत्वाद्यंशे तल्लेशस्याप्यसंभवाच्च।

यत्तु 'विरोधालङ्कारे ह्येकस्मिन्नधिकरणे द्वयोः संबन्धाद्विरोधप्रतिभानम्, असंगतौ त्वधिकरणद्वय इति तस्मादस्य वैलक्षण्यम्' इति विमर्शिनीकार आह, तदसत्। इहापि तत्तत्कार्यतावच्छेदकधर्मतत्तत्कारणवैयधिकरण्यरूपयोर्धर्मयोरेकस्मिन्कार्यरूपेऽधिकरणे संबन्धादेव विरोधप्रतिभानोत्पत्तेः। तस्मा-

---

कातराः सा पीनोन्नतिमत्पयोधरभरं धत्ते विनम्रा वयम्। साक्रान्तजघनस्थलेन गुरुणा गन्तुं न शक्ता वयम्। दोषैरन्यसमाश्रितैरपटवो जाताः स्म इत्यद्भूतम्। इत्यवशिष्टं पादत्रयम्। कारणांशे निगरणस्य सर्वथैव योग्यतानास्तीति तल्लेशत इत्यनेनोक्तम्। आह● असंगतेः प्रकरणे विरुद्धकार्यकारणप्रस्तावादिह लक्ष्यत इति सर्वस्वमूलप्रतीकमादाय अस्त्वेवमपि कार्यकारणयोभिन्नदेशत्वेन विरोधगणनाद् इत्येतावत्येव त्रुटिताक्षरापंक्तिरुपलभ्यते मूलपुस्तके। विरुद्धयोरेकस्मिन्नधिकरणे सम्बन्धो विरोधालङ्कारे-असंगतौ तु समानाधिकरणयोरपि अधिकरणद्वये वर्णनमिति तदभिप्रायमाकलय्य खण्डयति इहापि● कार्ये कार्यतावच्छेदकं कारणसामानाधिकरण्यञ्च तिष्ठति। कारणवैयधिकरण्यं कार्ये नास्ति कार्यतावच्छेदकमस्ति। अकार्ये कारणवैयधिकरण्यमस्ति कार्यतावच्छेदकञ्च नास्तीतिकारणवैयधिकरण्यस्य कार्यतावच्छेदकस्य च भिन्नदेशत्वेन विरुद्धत्वेन विरूद्धयोः कार्यतावच्छेदककारणवैयधिकरण्योरेकस्मिन् कार्येऽधिकरणेऽसंगतेरुदाहरणेऽपि वर्णनात् नायं विशेष इति भावः। कार्यतावच्छेदके कारणवैयधिकरण्यसमानाधिकरणत्वं वर्णितं स्यात्तदा विरोध उत्तिष्ठेत् न तथोदाहरणेषु वर्णितमिति कथमिदं संगच्छते कौस्तुभकृतां प्रत्यवस्थानम्, युक्तम् कारणवैयधिकरण्ये कार्ये वर्णिते कार्यतावच्छेदके कारणवैयधिकरण्यसामानाधिकरण्यस्यार्थात्सिद्धत्वात्। यत्किञ्चिद् व्यतिरेक प्रयुक्ताविरोधस्फूर्तिस्तत्रासंगतिः।

द्विरोधालङ्कारे उत्पत्तिविमर्शे विनैव विरोधप्रतिभानम्। इह तूत्पत्तिविमर्शपूर्विकैव विरोधप्रतिभोत्पत्तिः इति वैलक्षण्यमिति।

वस्तुतस्तु—व्यधिकरणत्वेन प्रसिद्धयोः समानाधिकरणत्वेनोपनिबन्धने विरोधालङ्कारः। समानाधिकरणत्वेन प्रसिद्धयोर्द्वयोर्वैयधिकरण्येनोपनिबन्धनेऽसंगतिः।

प्रागुक्तासंगतिलक्षणे हेतुकार्ययोरिति च 'समानधिकरणमात्रोपलक्षणम्। तेन 'नेत्रं निरञ्जनं तस्याः शून्यास्तु वयमद्भुतम्' इत्यत्र निरञ्जनत्व-शून्यत्वयोरुत्पादकभावलक्षणसंबन्धानन्तर्भावेण शुद्धसमानाधिकरणत्वेन प्रसिद्धयोरप्यसंगतिः संगच्छते। यथाश्रुते तु सा न स्यात्। इत्थं च स्फुट एव विरोधालङ्कारादसंगतेर्भेदः।

---

यत्र स्वरूपेण सा तत्र विरोध इति विभाग इति कौस्तुभकृतो विभागोऽपि न स्फुटः, विरोधस्याभासत्वद्योतनाय यत्किञ्चिद्व्यतिरेकस्य विरोधेऽपि सम्भवात्। **विरोधालङ्कारो●** विरोधे विरुद्धयोरेकत्र समावेशमात्रं न विरुद्धयोः कार्यकारणभावोऽप्यभिप्रेतो येन तन्नियता उत्पत्तिरपि परामृश्येत। असंगतौ तु कार्यकारणभावोऽस्तीति उत्पत्तेः परामर्शोऽवश्यमायाति। यत्तु कौस्तुभकृतः किसलयकरचरणाऽपि खलु कुवलयनयना मृगाङ्कवदनाऽपि। अहह नवचम्पकाङ्गी तथापि तापयत्याश्चर्यम्। इति संस्कृतोद्धृते प्राकृतपद्ये तापोत्पत्तिमनुसन्धायैव विरोधस्फूर्तिरिति विरोधेन संकीर्णमित्याहुस्तदित्थं विवेचनीयम्। अवश्यं तत्र तापयत्यन्तेन तापोत्पत्तिरुपनिबद्धा परं किसलयकुवलयचन्द्रमसां शीतानां तापेनापि विरोधो न तु तापोत्पत्त्यैवेति तत्र कार्यकारणमुखेनावर्णनादुत्पत्तौ तात्पर्यविशेषाभावाच्च। अत एव वा अरुचेराह **वस्तुतस्तु●** उत्सर्गापवादमुखेन काव्यप्रकाशवृत्तिवर्णितं चक्रवर्ति टीकायां स्फुटमभिहितम्। **नेत्रम्●** कुत्रचिन्नेत्रे निरञ्जने इत्यपि पाठः। शून्यत्वमभावो नोत्पाद्यम्। **सम्बन्धानन्तर्भावे●** कार्यकारणभावाभावेन। शुद्धत्वमपि कार्यकारणभावाना-

यस्तु पुनर्विरोधालङ्कारादतिरिक्तः शुद्धविरोधांशो विरोधमूलेषु सर्वेष्वलङ्कारेष्वनुस्यूतः, औपम्यांश इवोपमामूलेषु, सोऽलङ्काराणां कतिपयानां निर्वर्तकः, न तु स्वयं पृथगलङ्कारास्पदम्, अलङ्काराणां भणितिविशेषमात्ररूपत्वात्। एवं च विमर्शिनीकारोक्तमपि पद्यमनयैव दिशा नीयते तदा न दोषः।

यत्तु—

"—'अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा।
अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा॥
अपारिजातां वसुधां चिकीर्षन्द्यां तथाऽकृथाः।
गोत्रोद्धारप्रवृत्तोऽपि गोत्रोद्भेदं पुराऽकरोः॥'

---

लिङ्गितत्वम्। द्विविधोहि विरोधः—एकोवस्तुनोः स्वभावसिद्धः, द्वितीयः कविभणितिभङ्गीकृतप्रतीतिविषयः। द्वितीयोऽलङ्कारस्वरूपः। प्रथमस्त्वलङ्कारोत्थापको नालङ्कारः। इत्याह यस्तु● विरोधमूलेषु● अथविरोधमूलालङ्कारा इत्यादारभ्य वर्णितेषु। पद्यमनयैव● पद्यमितिपाठः सम्यङ्न संदर्भशुद्धः प्रतिभाति परं तथैवोपलभ्यते। अलङ्कारोत्थापकविरोधवस्तु आदाय विरोधासंगत्योर्विभागप्रतिपादनग्रन्थः समन्वीयते चेन्न दोषः। इतस्तन्नेत्यतः प्राक् खण्डनायदीक्षितमतमुपन्यस्यति यत्तु● अन्यत्राधिकरणे कर्तुमिष्टस्य ततोऽन्याधिकरणे करणम्। अन्यविशेष्यककरणीयप्रकारकचिकीर्षया अन्यविशेष्यककरणीयप्रकारकप्रवृत्तिरिति यावत्। यथा वसुधा अपारिजाता भवतु इतीच्छया दिवि अपारिजातविषयिणीप्रवृत्तिः। आलम्बनताख्यविषयतासम्बन्धेन प्रवृत्तिं प्रति तादृशसम्बन्धेन चिकीर्षा हेतुरित्यभिप्रेत्य। तादात्म्येन कार्यं प्रति साध्यताख्यविषयताविशेषसम्बन्धेन प्रवृत्तिर्हेतुः। यत्कार्यविषयिणीप्रवृत्तिस्तदेव कार्यम् इतियावदभिप्रेत्य द्वितीयमाह अन्यत् कर्तुं प्रवृत्तस्य● यथा पृथिव्युद्धारविषयिणी प्रवृत्तिः पर्वतस्योद्भेदश्च कार्यम्। पृथिवीपक्षे अपगतमरिजातं यस्यास्ताम्। द्याञ्च● परिजातरहिताम्।

अत्र श्रीकृष्णं प्रति शक्रस्योपालम्भवाक्ये भुवि चिकीर्षिततया तत्र करणीयमपारिजातत्वं दिवि कृतमित्येकाऽसंगतिः। पुरा गोत्राया उद्धारे प्रवृत्तेन वराहरूपिणा तद्विरुद्धं गोत्राणां दलनं खुरकुट्टनैः कृतमिति द्वितीया।

यथा वा—

'त्वत्खड्गखण्डितसपत्नविलासिनीनाम्
भूषा भवन्त्यभिनवा भुवनैकवीर।
नेत्रेषु कंकणमथोरुषु पत्रवल्ली
चोलेन्द्रसिंह तिलकं करपल्लवेषु॥'

'मोहं जगत्त्रयभुवामपनेतुमेत-
दादाय रूपमखिलेश्वरदेहभाजाम्।
निःसीमकान्तिरसनीरधिनामुनैव
मोहं प्रवर्धयसि मुग्धविलासिनीनाम्॥'

---

गोत्रा पृथिवी गोत्रं पर्वतः। भुवनेषु प्रधानवीरश्चोलदेशाधिपः, तव खड्गेन खण्डितानां शत्रूणां रमणीनां विलक्षणा अलङ्कारा भवन्ति करकर्तव्यं कङ्कणं नेत्रेषु श्यामिकाचिह्नम्, अथ कपोलोचिता पत्ररचना उरुषु, पल्लवयुता लता, ललाटतिलकं करपल्लवेषु तिलमिश्रितं जलमुक्तम्। जगत्त्रय● हे अखिलेश्वर कृष्ण! लोकत्रयशरीरधारिणां मोहं गीताद्युपदेशद्वारा निवारयितुमेतन्मानुषं रूपमादाय निःसीमेन कान्तिरसानां समुद्रेण अमुनैव मोहनिवर्तकरूपेण मुग्धानां विलासिनीनां मोहं समेधयसि। ननुकङ्कणादेरन्यत्र करणीयत्वं

अत्राद्योदाहरणे कंकणादीनामन्यत्र करणीयत्वं प्रसिद्धमिति नोपन्यस्तम् । भवतिना भावनारूपाऽन्यत्र कृतिराक्षिप्यते इति लक्षणानुगतिः' इति कुवलयानन्दकृताऽसंगतेरन्यद् भेदद्वयं लक्षयित्वोदाहृतम् ।

तन्न । तत्र तावत् 'अपारिजातां वसुधां चिकीर्षन्द्यां तथा कृथाः' इत्यत्र पारिजातराहित्यचिकीर्षया कारणभूतया सह पारिजातराहित्यस्य कार्यस्य विरुद्धवैयधिकरण्योपनिबन्धनात्, विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसंगतिः' इति प्राथमिकासंगतितो वैलक्षण्यानुपपत्तेः । आलम्बनाख्यविषयतासंबन्धेन चिकीर्षायाः सामानाधिकरण्येन कार्यमात्रं प्रति हेतुत्वस्य प्रसिद्धेः ।

---

नैव वर्णितमित्याशङ्कयाह अत्राद्योदाहरणे● भावना यत्नापरपर्याया । विरुद्धं● तेषामेवेदं प्राथमिकमसंगतेर्लक्षणम् । कार्यकारणयोर्विरुद्धं भिन्नदेशत्वरूपं वैयधिकरण्यमसंगतिरिति तस्यार्थः । अत्रापि कारणीभूतपारिजातराहित्यचिकीर्षया वसुधास्थितया पारिजातराहित्यं कार्यं दिवीति विरुद्धं वैयधिकरण्यमुपनिबद्धमितिप्रथमेन संग्रहात्पृथङ्निरूपणं व्यर्थम् । न चासंगतिसामान्यलक्षणं तद्विशेषोदाहरणेषु तत्समन्वयो गुण एवेति वाच्यं सामान्यलक्षणत्वे तात्पर्याभावात् । सामान्यलक्षणतात्पर्ये सति विशेषोदाहरणानामेव सामान्योदाहरणतया 'विषं जलधरैः पीतं मूर्च्छिताः पथिका जनाः इति प्राथमिकासंगतेरुदाहरणदानासङ्गते । तत्र विशेषलक्षणयोः संकुचितयोरसंगतेश्च । यदि चिकीर्षादिकारणविशेषमादाय विशेषत्वमस्य रोचयेद् विषादिकारणविशेषेणानन्तभेदापत्तेः। प्रदर्शितञ्च काव्यप्रकाशप्रदीपोद्योते एवमेव प्रथमया द्वयोर्गतार्थत्वं नागोजीभट्टमहोदयैः । यत्त्वत्र दीक्षितकुलाङ्करतया मर्मप्रकाशेन अलङ्कारचन्द्रिकया च नात्र कार्यकारणयोर्वैयधिकरण्यप्रयुक्ता विच्छित्तिरपितु अन्यत्र कर्तव्यस्यान्यत्रकरणप्रयुक्तेति उक्तन्तदपि आग्रहमात्रम् । अन्यत्र कर्तव्यत्वम् अन्यत्र करणं कः पदार्थ इति विवेचनायाम् अन्यत्र कार्यविषयिणी चिकीर्षा अन्यत्र कार्यं कृतिर्वा इत्येवायाति तथा च वैयधिकरणत्वरूपताऽपि तस्येति कथन्न वैयधिकरण्यप्रयुक्ता विच्छित्तिः ? आलम्बनत्वाख्य● उपादानताख्य-

अत्राद्योदाहरणे कंकणादीनामन्यत्र करणीयत्वं प्रसिद्ध-मिति नोपन्यस्तम्। भवतिना भावनारूपान्यत्र कृतिराक्षिप्यते इति लक्षणानुगतिः' इति कुवलयानन्दकृताऽसंगतेरन्यद् भेदद्वयं लक्षयित्वोदाहृतम्।

तन्न। तत्र तावत् 'अपारिजातां वसुधां चिकीर्षन्द्यां तथा कृथाः' इत्यत्र पारिजातराहित्यचिकीर्षया कारणभूतया सह पारिजातराहित्यस्य कार्यस्य विरुद्धवैयधिकरण्योपनिबन्धनात्, विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसंगतिः' इति प्राथमिकासंगतितो वैलक्षण्यानुपपत्तेः। आलम्बनाख्यविषयतासंबन्धेन चिकीर्षायाः सामानाधिकरण्येन कार्यमात्रं प्रति हेतुत्वस्य प्रसिद्धेः।

---

नैव वर्णितमित्याशङ्क्याह अत्राद्योदाहरणे० भावना यत्नापरपर्याया। विरुद्धं० तेषामेवेदं प्राथमिकमसंगतेर्लक्षणम्। कार्यकारणयोर्विरुद्धं भिन्न-देशत्वरूपं वैयधिकरण्यमसंगतिरिति तस्यार्थः। अत्रापि कारणीभूतपारिजात-राहित्यचिकीर्षया वसुधास्थितया पारिजातराहित्यं कार्यं दिवीति विरुद्धं वैयधि-करण्यमुपनिबद्धमितिप्रथमेन संग्रहात्पृथङ्निरूपणं व्यर्थम्। न चासंगतिसामा-न्यलक्षणं तद्विशेषोदाहरणेषु तत्समन्वयो गुण एवेति वाच्यं सामान्यलक्षणत्वे तात्पर्याभावात्। सामान्यलक्षणतात्पर्ये सति विशेषोदाहरणानामेव सामान्यो-दाहरणतया 'विषं जलधरैः पीतं मूर्च्छिताः पथिका जनाः इति प्राथमिका-संगतेरुदाहरणदानासङ्गते। तत्र विशेषलक्षणयोः संकुचितयोरसंगतेश्च। यदि चिकीर्षादिकारणविशेषमादाय विशेषत्वमस्य रोचयेद् विषादिकारणविशेषेणा-नन्तभेदापत्तेः। प्रदर्शितञ्च काव्यप्रकाशप्रदीपोद्योते एवमेव प्रथमया द्वयोर्गतार्थत्वं नागोजीभट्टमहोदयैः। यत्त्वत्र दीक्षितकुलकिङ्करतया मर्मप्रकाशेन अलङ्कार-चन्द्रिकया च नात्र कार्यकारणयोर्वैयधिकरण्यप्रयुक्ता विच्छित्तिरपितु अन्यत्र कर्तव्यस्यान्यत्रकरणप्रयुक्तेति उक्तन्तदपि आग्रहमात्रम्। अन्यत्र कर्तव्यत्वम् अन्यत्र करणं कः पदार्थ इति विवेचनायाम् अन्यत्र कार्यविषयिणी चिकीर्षा अन्यत्र कार्यं कृतिर्वा इत्येवायाति तथा च वैयधिकरणत्वरूपताऽपि तस्येति कथन्न वैयधिकरण्यप्रयुक्ता विच्छित्तिः? आलम्बनत्वाख्य० उपादानताख्य-

न च पारिजातराहित्यस्याभावरूपस्य नित्यत्वात्कारणाप्रसिद्धिरिति वाच्यम्। आलङ्कारिकनये तस्यापि जन्यत्वस्येष्टेः। लक्षणे कार्यकारणपदयोरुपलक्षणत्वस्योक्तत्वाच्च। 'गोत्रोद्धारप्रवृत्तोऽपि' इत्युदाहरणे तु 'विरुद्धात्कार्यसंपत्तिर्दृष्टा काचिद् विभावना' इति पञ्चमविभावनालक्षणाऽऽक्रान्तत्वाद्विभावनयैव गतार्थत्वादसंगतिभेदान्तरकल्पनानुचिता, गोत्रोद्धारविषयकप्रवृत्तेर्गोत्रोद्भेदरूपकार्ये विरुद्धत्वात्। सिद्धान्तेऽपि

---

विषयताविशेषसम्बन्धेन यत्र चिकीर्षा तत्र समवायसम्बन्धेन कार्यम्। समानाधिकरणयोरेवायाति। अत्रापि चन्द्रिकासहचरितो मर्मप्रकाशः—चिकीर्षायाः कृत्यन्यथासिद्धतया कार्यजननाभावः। उक्त सम्बन्धेनाधिकारणान्तर्भावेण चिकीर्षाया अहेतुत्वात् तत्र चिकीर्षितस्यान्यत्र करणे व्यभिचारात्। इति मर्म विध्यति। कार्यं प्रति चिकीर्षायाः कारणातायै न ग्रन्थं वितानयामि परं कृतिं प्रवृत्त्याख्यां प्रति चिकीर्षायाः कारणत्वं मर्मप्रकाशेनापि रोच्यते। मया व्याख्याताऽपि सा कारिका प्रवृत्तिं प्रति चिकीर्षायाः कारणतयैव। तथा च चिकीर्षाव्यधिकरणे दिवि कृतेर्वर्णनाद् वैयधिकरण्यं समुपनिबद्धम्। कृतिचिकीर्षयोः सामानाधिकरण्येनैव कार्यकारणभावोऽन्यथा कपाले चिकीर्षयातन्तुषु घटविषयकप्रवृत्त्यापत्तिः। प्रमादेन कृत एवेति चेत् प्रमादपदार्थ एव परीक्ष्यताम्। प्रमादेन तन्तुषु घटोपादानताभ्रमः। तद्दशाचोपादानाख्यविषयतासम्बन्धेन चिकीर्षाऽपि कृतिस्थले कथन्न जायताम्? यद्यपि मर्मप्रकाशेऽस्फुटैरक्षरैः पूर्वासंगतौ विरुद्धत्वेन भासमानत्वं तन्त्रम् अत्र तु विरोधो दुःसमाधेय इत्युपलभ्यते तदपि न समञ्चति अर्थान्तरेण विरोधस्य परिहारात्। यस्तु वस्तुस्वरूपोऽपरिहार्यो विरोधः स तु अन्य एवेति पण्डितराजेनात्रैव व्यवस्थापितमेवेति। विरुद्धत्वात् ● विरुद्धात् कारणात् कार्यसम्पत्तिरिति पञ्चमविभावनायाः स्वरूपम्। कार्यं प्रति घटविषयकप्रवृत्तिरेवानुकूला अन्यविषया च विरुद्धेति प्रसिद्धमेव। एतेन विरुद्धत्वेन प्रसिद्धयोरेव विभावनेति मर्मप्रकाशोक्तं चिन्तितम्। पुनरपि इत्थं तयोर्दीक्षितभक्तयोरुपालम्भरूपेऽस्मिन् वचसि विरुद्धकृतिभानप्रयुक्त एव चमत्कारः, तत्र तु विरोधनिवृत्तिकृतोऽपीति

विभावनाविशेषोक्त्योः संकर एवात्रोचितः। 'नेत्रेषु कंकणम्' इत्यादौ कंकणत्वनेत्रालङ्कारत्वयोर्व्यधिकरणत्वेन प्रसिद्धयोः सामानाधिकरण्यवर्णनाद्विरोधाभासत्वमुचितम्। एवं मोह-निवर्तकत्व-मोहजनकत्वयोरपीति। ननु तवापि विरोधाभासे-

---

महान् विशेष इति मर्मप्रकाशः। अलङ्कारचन्द्रिकातु गोत्रोद्धारप्रवृत्तेर्गोत्रोद्भेदनिवर्तकत्वाभावेन विरुद्धत्वाभावात्। कथञ्चित्तदभ्युपगमेऽपि अन्यत्कार्यं कर्तुं प्रवृत्तेन तद्विरुद्धकार्यक ़णरूपासंगतिरपि मोहं जगत्त्रयभुवामित्यादौ चमत्कारित्वेन लब्धावकाशा न निवारयितुं शक्यते। न चात्रमोहनिवर्तकान्मोहोत्पत्तेः सैव विभावनेति वाच्यम् मोहनिवर्तकस्य तदप्रतीतेः। अत एव न विरोधाभासोऽपीत्याह। अत्र विरुद्धकार्यकरणादुपालम्भः कथन्न सिध्यतीति मर्मप्रकाशः प्रष्टव्यः। विरोधनिवृत्तिरत्रापि समीहितेति अधुनैवावेदितम्। भिन्नदेशत्वं विरुद्धत्वमभिप्रेतं न निवर्त्यनिवर्तकभाव इति चन्द्रिकास्मारयितव्या। कार्यकरणेत्यादितत्कथनमपि न विभावयति विभावनायामपि कारण-विरुद्धकार्योत्पत्तेः कारणस्य विरुद्धत्वेनार्थादेव कार्यस्य विरुद्धत्वमायाति। सिद्धवदप्रतीतेरिदमपि न समीचीनम्। मोहमित्यादिपद्ये विधेयमुत्तरार्धं पूर्वार्धस्योद्देश्यतया सिद्धत्वस्यावश्यकत्वात्। तन्मतेनैव तत्खण्डनं विधाय स्वमतमपि दर्शयति **सिद्धान्ते तु** ● अत्रापि चन्द्रिकाविलासः—विशेषोक्ति-कथनन्त्वत्रासंगतमेव। नहि गोत्रोद्धारप्रवृत्तिरूपकारणसत्त्वेऽपि गोत्रोद्धार-कार्यस्यानुपपत्तिरिह प्रतिपाद्यते किन्तु कार्योत्पत्तिरेवेति विभावनीयम्। इत्थमत्र विभावना—यः कौमारहर इत्यादाविव गोत्रोद्धारप्रवृत्तिकारण-सत्त्वेऽपि तत्कार्यस्य गोत्रोध्धारस्यानुत्पत्तेः। आर्थिकविशेषोक्तौ बाधकाभावः। तथैवोक्तकाव्यप्रकाशानुयायिनोऽपि वदन्ति। **सामानाधिकरण्य** ● अलङ्कारस्याध्याहारेण प्रसिद्धस्य उचितमिति। नेत्रपदन्तूपात्तमेव। तथा च मानस-सामानाधिकरण्यबोधे बाधकाभावः। न सर्वत्र विरोधाभासोदाहरणे शाब्द एव सामानाधिकरण्यबोध आश्रीयतेऽव्याप्तिप्रसङ्गात्। एतेन 'समानविभक्तित्वाभावात्सामानाधिकरण्यस्य शब्दादप्रतीतेरभेदस्याभावाच्च चिन्त्यमिति मर्मप्रकाशोक्तं चिन्तितं जातम्। ययोर्विरोधप्रतीतिस्तयोरर्थान्तरमादाय सामानाधिकरण्यप्रतीतेश्चेति तदुक्तिर्न कमपि विशेषमासादयति। श्लेषस्थले

नैवोपपत्तेर्विभावनादिकल्पनानर्थक्यमिति चेत्, न। दत्तोत्तरत्वात्।

इति रसगङ्गाधरेऽसंगतिनिरूपणम्।

अथविषमालङ्कारः।

अननुरूपसंसर्गो विषमम्।

अनुरूपमिति योग्यतायामव्ययीभावः। अनुरूपं यत्र न विद्यत इति विगृहीतेन बहुव्रीहिणा योग्यतारहितमुच्यते। योग्यता च युक्तमिदमिति लौकिकव्यवहारगोचरता। संसर्गश्च

---

तथा सम्भवेऽपि अन्यत्रासम्भवात्। नहि श्लेष एव विरोध इति स्फुटं तत्र। इत्यलं विस्तरेण। यत्त्वत्र विरोधाभासमपि समावेशयन्ती टीका असंगतेः सङ्गतिं कुर्वाणा न केवलमस्य, अपि तु विमर्शिन्याः काव्यप्रकाशस्य च विषयं दीक्षितानुरक्ता द्वेष्टीत्यलमेतावतैव। **दत्तोत्तरत्वात्** ● अत्र सरला तु विरोधे तु समबलयोर्विरोधः। विभावनायान्तु कारणाभावेन वाच्यकार्योत्पत्तिरित्यादि-वैलक्षण्यं पूर्वमुक्तमिति लिखन्ती विस्मृतग्रन्था प्रतिभाति। अहन्तु केवलं विशेषप्रकरणस्थं कार्यकारणादिबुद्ध्यनालीढो विरोधाभासो विरोधालङ्कारः, तदालीढस्तु विभावनादिर्वक्ष्यमाण इति ग्रन्थं स्मारयामि। विरोधमूलकेषु सर्वेषु अनलङ्कारोऽपि विरोधोऽनुस्यूत इत्यप्युक्तम्।

॥ इत्यसंगतिनिरूपणम् ॥

अथ विषमालङ्कारनिरूपणम्

विगतः समो यत्रेत्यभिप्रायेण न अनुरूपः संसर्गो यत्रेति समासेन सदृश-संसर्गरहितस्य यस्य कस्याऽपि वर्णने विषमालङ्कारः प्रसज्येतेति भिया विसदृश-संसर्गस्य वर्णनीयत्वभिया समासद्वयेन व्याचष्टे **अनुरूप** ● अव्ययं विभक्ति-समीपसमृद्धीत्यादिसूत्रेण यथार्थेऽव्ययीभावसमासः। यथार्थोऽप्यत्र योग्यता-रूपः। योग्यता वीप्सा-पदार्थानतिवृत्तिसादृश्यानि यथार्थाः। रूपस्य योग्यम् अनुरूपमित्यस्वपदविग्रहः। समासे विलक्षणशक्तिवशाद् योग्यताऽनुरूप-

तावद् द्विविधः—उत्पत्तिलक्षणः संयोगादिलक्षणश्च। तत्रो-त्पत्तिलक्षणस्य संसर्गस्यायोग्यत्वं कारणात् स्वगुणविलक्षणगुण-कार्योत्पत्त्या, इष्टसाधनतया निश्चितात् कारणादनिष्टकार्यो-त्पत्तिभिः। संयोगादिलक्षणस्यापि संसर्गिणोरन्यतरगुणस्वरूप-तिरस्कार्यान्यतरगुणस्वरूपतया अयोग्यत्वम्। एवं चाननुरूप-संसर्गत्वेन सामान्येनोक्ता वक्ष्यमाणाश्च सर्वे प्रभेदाः संगृह्यन्ते।

---

शब्दार्थोऽवशिष्यते, न तु रूपस्य योग्यता। लौकिकपदेन लोकव्यवहार-कुशलः शब्दव्यवहारे भ्रमप्रमादरहितः। गोचरता विषयता, ज्ञानादि-विषयता याचितमण्डनन्यायेन शब्दात्मकव्यवहारगोचरता उक्ता। लाघवाद् योग्यतायां शक्तिः, पार्ष्टिकोऽभेदान्वयो लक्षणया। वैश्वदेवी-पिङ्गाक्षीप्रभृतिषु पूर्वमीमांसाधिकरणानि अनुरुद्ध्य भूषणादौ व्यवस्थापितं द्रव्यवाचित्वं लाघवा-नुरोधी नाद्रियते, एवम् अव्ययीभावसमासस्य समासान्तरे न प्रवेश इति व्यभिचरितां केषाञ्चिदुक्तिमपि उपेक्षते। रूपम् अनु इति सरलाया विग्रहो व्याकरणप्रक्रियाऽनभिज्ञतामूलकः। विग्रहे यत्रेति यत्पदार्थः संसर्गः। अननु-रूपस्य अयोग्यस्य संसर्गिणः संसर्ग इति तत्पुरुषसमासे संसर्गिणोऽयोग्यतया संसर्गेऽपि अयोग्यता आयाति, तथाऽपि साक्षात् संसर्गेऽयोग्यताबोधनाय लाघवाच्च कर्मधारयं स्वीकरोति। संसर्गस्यायोग्यतायां संसर्गिणोऽयोग्यता-मर्थादभिप्रैति। उत्पत्तिलक्ष● कार्यकारणभावः, संयोगादीत्यत्र सहवासादि-रादिशब्दार्थः।

**स्वगुणवि●** स्वं कारणं कारणस्य गुणाद्विलक्षणो गुणो यस्य कार्यस्य तादृशकार्यस्योत्पत्त्या। **संयोगादिलक्ष●** अयोग्यत्वमित्यत्रान्वयः। गुणः स्वरूपञ्च, अन्यतरस्य गुणस्वरूपाभ्यां तिरस्कार्ये अन्यतरस्य गुणस्वरूपे यस्य संसर्गस्य संसर्गिणोस्तस्य भावस्तथा। अत्रत्यपाठे मुद्रितविरामचिह्नविभ्रमाद् महत् काठिन्यमभूत् पङ्क्तिशोजनायाम्। हिन्द्यां संस्कृते च लेखनव्यसनिनो यथाकथञ्चिद् व्याचक्षाणाः स्वयमज्ञानवशान्न तथा क्लिश्यन्तोऽपि पाठकान् व्युत्पत्तिशालिनो महति कष्टेऽपातयन्। संयोगादिलक्षणस्यापीत्यनन्तरं संसर्गिणो-रित्यतः प्राक् पूर्णविरामचिह्नम् अमुद्रयत, तेन संयोगादिलक्षणस्यापीत्यस्य

क्रमेणोदाहरणानि—

'अमृत-लहरी-चन्द्र-ज्योत्स्ना-रमा-वदनाम्बुजा-
न्यधरितवतो निर्मर्यादप्रसाद-महाम्बुधेः ।
उदभवदयं देव त्वत्तः कथं परमोल्वण-
प्रलय-दहन-ज्वाला-जाला-कुलो महसां गणः ॥'

अत्र माधुर्य-शैत्याह्लादकत्वप्रसादाद्यनेकगुणयुक्तात्कारणात्त द्विरुद्धगुणयुक्तस्य प्रतापस्योत्पत्तिरित्यननुरूपः कार्यकारणभावः।

---

कार्योत्पत्तिभिरित्यत्र अन्वयं व्यभ्राम्यत, अद्यावधिमुद्रितपाठस्तथैवोलभ्यते, अग्रे च भगवानेव जानाति। तत्रोत्पत्तिलक्षणस्य संसर्गस्यायोग्यत्वम् इत्यत्र हेतुस्तृतीयान्तद्वयेनोपस्थाप्यते—एकं गुणकार्योत्पत्त्या, द्वितीयं निष्टकार्योत्पत्तिभिः। तथा च अनयोस्तृतीयान्तयोर्मध्ये पूर्णविरामचिह्नं सर्वथाऽनुचितम्, पूर्वतृतीयान्तरं लघुः, द्वितीयतृतीयान्तोत्तरं च पूर्णो विरामो युज्यते। अस्य बहुवचनार्थो मूल एव स्फुटो भविता। संयोगादिलक्षणस्यापीत्यन्तरम् अयोग्यत्वमित्यतः प्राक् च न किमपि विरामचिह्नं युज्यते, किन्तु अयोग्यत्वमित्यनन्तरं पूर्णविरामचिह्नमुचितम्। तथा च द्विधा उत्पत्तिलक्षणस्य संसर्गस्य अयोग्यत्वम्। १ प्रथमः—कारणगुणविलक्षणगुणकस्य कार्यस्योत्पत्त्या, द्वितीयः—इष्टसाधनतया निश्चितात् कारणादनिष्टकार्योत्पत्तिभिः। यद्यपि द्वितीये बहुवचनेन त्रयो व्युत्पाद्यन्ते, तथापि एकोक्तिकवलीकृतत्वेन द्वितीय एव प्रकारः।

अमृतलहरी● हे देव! प्रसादसमुद्रात् त्वत्तः संतापगुणको महसां तेजसां गणः प्रतापः कथमुदभवत् समुदपद्यत इति कारणगुणप्रसादविरुद्धसंतापगुणकस्य प्रतापस्योत्पत्त्या प्रथमस्योदाहरणम्। 'ततः प्रभवति' इत्यनेन अपादानतया युष्मच्छब्दात् पञ्चम्यास्तसिल्। महाम्बुधिः समर्यादः परं प्रसादमहाम्बुधिर्भवान् निमर्यादः, समुद्रजलापेक्षया प्रसादस्य प्राचुर्यं व्यज्यते। प्रसादे शैत्याधिक्यं वर्णयितुम् अधरितवत इत्यन्तं पञ्चम्यन्तम्। अधराणि न्यूनानि कृतवतः, नामधातुः। सुधातरङ्गः, चन्द्रस्य प्रकाशः, लक्ष्मीमुखकमलानि तिरस्कृतानि। परम उत्कटः प्रलयवह्निः, तस्य ज्वालाजालेन व्याप्तो भवतां प्रतापः। स्वयमेवोदाहरणं समनुगमयति अत्र● अमृतलहरीतो माधुर्यस्य चन्द्रज्योत्स्नातः शैत्यस्य लक्ष्मीमुखकमलेभ्य आह्लादकत्वस्याधिक्यं व्यक्तम्।

अभेदाध्यवसानलक्षणेनातिशयेन समवायिकारणरूपतया स्थिते निमित्तकारणे समवेतकार्यरूपतया स्थिते निमित्तकार्ये वा विषय्यंशमवलम्ब्य स्फुरितो विरोधो विषयांशविमर्शोत्तरं निवर्तते इतोह्यप्यभेदाध्यवसानस्यानुप्राणकत्वम्, तदुत्थापितविरोधाभासस्य च परिपोषकत्वम्। अयमेव चांशोऽत्र कविप्रतिभानिर्मितत्वादलंकारताबीजम्।

---

अभेदाध्यवसा० अभेदारोपफलकेन अतिशयेन विशेषेण। स्थिते० अध्यवसिते। प्रतापो निमित्तकारणस्य कार्यं निमित्तिकार्यम्, तस्य प्रतापस्य निमित्तकारणं राजा। अत्र पद्ये प्रतापस्य निमित्तिकार्यताया राज्ञश्च निमित्तकारणताया वाचकं द्योतकं न किमप्युपात्तम्, किन्तु कार्यकारणस्वभावपर्यालोचनया प्रतापस्य निमित्तिकार्यत्वं राज्ञश्च निमित्तकारणत्वं व्यवस्थितं लौकिकम्। परं कविः प्रतापं समवेतकार्यं राजानञ्च उपादानं समवायिकारणं वर्णयति। यद्यपि प्रभवति योगे अपादानसंज्ञा नोपादानस्यैव नियता अपि तु कारणमात्रस्य, तथापि कथंचदनुचितविरोधस्फूर्त्यनुरोधेन उपादानतया वर्णने तात्पर्यमवसीयते। उपादानता समवायिकारणता चैकैव। अत एव प्रतापस्य समवेतकार्यता राज्ञश्च समवायिकारणता न लौकिकी कविप्रतिभोत्थिता आरोप्यमाणा विषयिणी, समवायिकारणे समवायसम्बन्धेनोत्पद्यमानं कार्यं समवेतकार्यम्। यस्मिन् कारणे समवायसम्बन्धेन कार्यमुत्पद्यते तत्कारणं समवायिकारणमिति परिभाषा तयोः। समवायिकारणसमवेतकार्ययोः सजातीयगुणकत्वं लौकिकम्। तच्चात्र न वर्णितमिति विरोधस्फूर्तिः। निमित्तकारणनिमित्तिकार्ययोः न समानगुणकत्वं लौकिकमिति न विरोधः। प्रतापस्य निमित्तिकार्यता राज्ञश्च निमित्तकारणता लौकिकी आरोपस्थानं विषयः। तच्चाध्यवसितम्। निमित्तकारणं राजा समवायिकारणतया वर्ण्यते, निमित्तिकार्यञ्च प्रतापः समवेतकार्यतया गृह्यते, तदा तयोर्गुणयोः सजातीयताया अभावाद् विरोधः स्फुरति। समवायिकारणत्वसमवेतकार्यत्वे विषयिणी। तदादाय विरोधः, निमित्तकारणत्व-निमित्तिकार्यत्वे विषयः, तस्य पर्यालोचनायां विरोधपरिहारः। विषयविषयिणोरैक्यभानम् अभेदाध्यवसानम्। तत्र विषयी विषयश्च द्वावंशौ विषयिणमंशमादाय विरोधभानम्, विषयमंशमा-

इष्टसाधनतया ज्ञातात्कारणादनिष्टकार्योत्पत्तिभिरित्यत्रैकशेषघटित एकशेषो बोध्यः। न इष्टमनिष्टम् अनर्थः। तादृशकार्योत्पत्तिश्च। न इष्टकार्योत्पत्तिरनिष्टकार्योत्पत्तिः, सा चेत्यनिष्टकार्योत्पत्ती। ते च अनिष्टकार्योत्पत्तिश्च। अनिष्टकार्योत्पत्तयः ताभिरिति। अनेनेष्टकार्यानुत्पत्त्यनिष्टकार्योत्पत्ती मिलिते एको भेदः। प्रत्येकं च भेदद्वयम्। इति त्रयो भेदाः संगृहीता भवन्ति। इष्टं च—स्वस्य किंचित्सुखसाधन-

---

दाय विरोधपरिहारः। अत्रापि मुद्रितपाठे विपरीतः कष्टप्रदः पाठः। विपर्ययांशमालम्ब्य स्फुरितो विरोधो विपर्यांशविमर्शोत्तरं निवर्तत इति पाठो युज्यते। मुद्रितश्च क्वचित् प्रथमं विपर्यांशं पश्चाच्च विपर्ययांशमिति विपरीतम्, अन्यत्र उभयत्र विपर्यांशमिति। सरला तु अतिमुग्धा यथोपलब्धपाठमेव शत्रून् राज्ञ आदाय परे राजान इति कृत्वा निःसंकोचं बहुलमनर्गलं व्याचष्ट। प्रौढाऽपि चन्द्रिका अत्र विषयिविपर्यांशयोर्विमुग्धा वृथैव प्रतापस्य कोशदण्डौ कारणे अवर्णयत्। समेऽत्र भ्रान्ताः परिहरणीयाः। हन्तेयं सरला प्रदीपोद्द्योतेऽपि प्रविष्टा अशुद्धमेव पाठं रक्षितवती न कश्चिदशोधयत्।

द्वितीयम् उत्पत्तिलक्षणस्य भेदं त्रिधा व्याचष्टुमुपक्रमते **इष्टसाधनतया●** एकशेषं विधाय पुनः कृत एकशेषघटितो द्विरेकशेषः। **तादृशकार्यो●** अनर्थभूतकार्योत्पत्तिः। उत्पत्त्या नञोऽन्वयं वर्णयति न **इष्ट●** इष्टकार्यानुत्पत्तिरित्यर्थः। द्वयोरनिष्टकार्योत्पत्तिशब्दयोः प्रथम एकशेषो द्विवचनान्तेन सूचितः। इष्टकार्यानुत्पत्तिःप्रथमस्यार्थः, अनर्थभूतकार्योत्पत्तिर्द्वितीयस्यार्थः। अग्रिमेण द्विवचनान्तेन तेशब्देन एते द्वे गृह्येते। यद्यपि इष्टकार्यानुत्पत्त्यनिष्टकार्योत्पत्त्योरेकमेवोदाहरणम्। मूले 'मिलिते एको भेदः' इत्यनुपदमेव वक्ता, तथा चार्थव्यक्तिभेदाभावे शब्दद्वयप्रयोगस्य तन्मूलकस्यैकशेषस्य द्विवचनस्य चानुपपत्तिः, तथापि एकस्मिन्नेवोदाहरणे उत्पत्त्यनुत्पत्तिपदार्थौ नैकतां गतौ भिन्नावेव, उत्पत्त्यनुत्पत्तीष्टानिष्टभेदमूलकश्च विभाग इति समुपपद्यते। यथा हेत्वाभासविभागे दुष्टहेतुभेदाभावेऽपि दोषाणां भेदाद्विभागः, उच्यते च 'उपधेयसंकरेऽपि उपाधेरसङ्करः' इत्यादि।

वस्तुप्राप्तिर्दुःखसाधनवस्तुनिवृत्तिश्च परस्य दुःखसाधनवस्तु-प्रापणम्, सुख-साधन निवृत्तिश्चेति चतुर्विधम्। तेनेष्टाप्राप्तिघटिते भेदद्वयेऽपि चातुर्विध्यम्। अनिष्टं च—स्वस्य दुःखसाधन-वस्तु-प्राप्तिः, परस्य सुख-साधन-वस्तु-प्राप्तिः, दुःख-साधन-वस्तुनाश-श्चेति त्रिविधम्। स्वस्येष्टाप्राप्तिस्तु गणितेति नानिष्टे गण्यते। तेनानिष्टप्राप्तिघटिते भेदद्वयेऽपि त्रैविध्यम्।

---

तत्रापि इत्थं चिन्त्यताम्—अनुत्पत्तिर्द्विधा—अनर्थोत्पत्तिसंवलिता तदसंवलिता च। एवम् अनिष्टोत्पत्तिरपि द्विधा—इष्टानुपत्तिसंवलिता तदसम्वलिता च। तथा च चत्वारो भेदा युज्यन्ते, कथं त्रय इति। अत एव निर्णयसागरमुद्रिते 'ते च अनिष्टकार्योत्पत्तिश्च अनिष्टकार्योत्पत्तिश्च' इति पाठेन द्वितीय एकशेषस्त्रयाणां शब्दानां सूच्यते। यत्र एकं द्विवचनान्तं द्वे च एकवचनान्ते, तथा च द्वितीयैकशेषेण चतस्रो व्यक्तयो गृहीता। तथाप्येवं विविच्यताम्—इष्टानुत्पत्तेर्भेदयोः प्रथमो भेदः, मिलिता अनर्थोत्पत्तिः, द्वितीयश्च केवला-इष्टानुत्पत्तिः, अनर्थोत्पत्तेः प्रथमो भेदः मिलिता अनिष्टोत्पत्तिः। तथा च प्रथमस्तृतीयश्च एक एव। तथा च द्वितीयः इष्टानुत्पत्तिः केवला अनर्थोत्पत्तिः इति तिस्र एव व्यक्तयः, अत एव मूले संगृहीता इत्युक्तम्, न तु संकलिता इति। द्वयोर्द्वयोः संकलनं चतुर एव कुर्यात्। परं द्वितीय एकशेषः पूर्वोक्तरीत्या त्रयाणां शब्दानां युज्यते। निर्णयसागरे च संकोचेन संशयेन वा एकः शब्दः कोष्ठकवलितः कृतः स न युक्तः, बहिरेव न्याय्यः। द्विवचनान्तेन मिलितस्य ग्रहणे प्रत्येकमुभयोर्ग्रहणाय शब्दद्वयापेक्षणात्। तथा च शब्दद्वयेन द्वितीयैक-शेषकरणं समेषामशुद्धमिति जातम्। यदि च तेशब्देन पृथग्भूते केवले द्वे, मिलितयोः कृते एकः शब्दस्तदा शब्दद्वयेन द्वितीय एकशेषो युज्यते। अनुत्पत्तिसहितोत्पत्तिरेका एकशब्दस्य पात्रं भवति।

त्रिविधम् ● ननु इष्टविपरीतं सर्वमनिष्टम्, इष्टञ्च चतुर्विधं परिगणितम्, तद्विपरीतेन अनिष्टेनापि चतुर्विधेन भाव्यम्, कथं त्रिविधमुच्यते? यथा सुख-साधनवस्तुप्राप्तिः स्वस्येष्टत्वेन गृहीता, तथा स्वस्य सुखसाधनवस्तुनोऽप्राप्ति-रनिष्टं कथन्न चतुर्थं गण्यते इत्यत आह स्वस्येष्टा ● इष्टानुत्पत्तिशब्देन प्रधानभेदबोधकेन गृहीत एवेति पुनरनिष्टशब्देन ग्रहणं न युज्यते, व्यक्ति-भेदाभावे भेदगणनाया असंभवात्।

दिङ्मात्रं तूपदर्श्यते ।

उदाहरणम्—

'दूरीकर्तुं प्रियं बाला पद्मेनाताडयद्रुषा ।
स बाणेनाहतस्तेन तामाशु परिषस्वजे ॥'

अत्र प्रियदूरीकरणरूपेष्टार्थं प्रयुक्तेन पद्मताडनरूपेण कारणेन प्रियदूरीकरणं तु दूरापास्तम्, प्रत्युत तत्कर्तृकपरिष्वङ्ग-रूपानिष्टस्योत्पत्तिः ।

यथा वा—

'खञ्जनदृशा निकुञ्जं गतवत्या गां गवेषयितुम् ।
अपहारिताः समस्ता गावो हरि-वदन-पङ्कजालोकात् ॥'

---

इष्टस्याप्राप्तिम् अनिष्टस्य प्राप्तिञ्चोदाहरति दूरीकर्तुं● न प्रौढा, किन्तु बाला, अत एव प्रियदूरीकरणमभीष्टम् रुषा क्रोधेन दूरीकर्तुं बालत्वादेव कामबाणेन पद्मेन अताडयत्, स प्रियः तेन बाणेन हतः कामपीडितस्य कामिन्येवौषधम् इति आशु तां प्रियां परिसष्वजे समालिङ्गितवान् ।

खञ्जनदृशा● गाश्चारयन्त्या कयाचिद् गोपबालया खञ्जनपक्षिसदृश-दीर्घचञ्चललोचनया विनष्टां काञ्चित् धेनुम् अन्वेषयितुं लतावितानमण्डल-मण्डितं मण्डपरूपं रहःस्थानसदृशं गतवत्या श्रीकृष्णमुखकमलावलोकनमवाप्य हारितहृदयया मनसि तद्रूपे रममाणे अन्यानि इन्द्रियाणि क्रियाशून्यानि जातानि, अतः समस्ता इन्द्रियाणि गावः अपहारिताश्चोरिताः, अपहृणिच् क्तः । रक्षको हि शयनशीलो भवति चौराणां प्रेरकः, तथेयम् अपि कृष्णरूप-संल्लग्नमनाः सुषुप्तकल्पा अपहारस्य प्रयोजिका । हेतुपदाध्याहारक्लेशं विहाय ल्यप्लोपे कर्मणि पञ्चमी व्याख्याता । गवेषणं धेन्वा अपहरण-मिन्द्रियाणाम्, परं शब्दैकमूलकेनाभेदाध्यवसायेन अपहृतानीन्द्रियाणि गावो जग्ताः ।

पूर्वोदाहरणे वास्तवमेवानिष्टम्, इह तु सकलेन्द्रियहरणं यद्यपि लोकेऽनिष्टप्रायमेव, तथापि तत्पुरस्कारेणेह चमत्कृतिराहित्याद् गोहरणपुरस्कारेणैव चमत्कारात् श्लेषमूलकाभेदाध्यवसाने सकलसुरभिहरणरूपानिष्टात्मना स्थितं तदिति विशेषः ।

गवेष्यमाणगवीरूपेष्टाप्राप्तेरनुक्तत्वात्केवलानिष्टप्राप्तेरिदमुदाहरणम्, पूर्वं तूभयस्येति विशेषो न वाच्यः, समस्तगवीहरणेन सामान्येन गवेष्यमाणाया अपि गोरपहारस्य प्रत्ययात् ।

एवमिष्टाप्राप्त्यनिष्टप्राप्त्युभयकृता संसर्गस्याननुरूपता सामान्येनोक्ता ।

पूर्वोक्तचतुर्भेदाया इष्टाप्राप्तेः पूर्वोक्तत्रिभेदेनानिष्टेन संसृष्टावियमेव द्वादशविधा ।

---

पूर्वोदाहरणापेक्षया मूले विशेषं दर्शयति **वास्तवमे०** दूरीकरणं समीहमानाया आलिङ्गनं वस्तुतोऽनिष्टम्। यदि व्याजरोषा स्यात्तदा न वस्तुतोऽनिष्टम्, वास्तवस्य वर्णनेऽलङ्कारताबीजं कविप्रतिभा न स्पृशेत् । तत्रापि कामिन्या कामबाणेन कामुकताडनम् उपायः कामुकदूरीकरणस्येति असंगतिभानं कविप्रतिभाविलसितमेवेति चिन्त्यम् । **अनिष्टप्राय०** मरणकल्पत्वात् । वस्तुसौन्दर्याभावाद् न चमत्कृतिः । सुरभिहरणात्मना इन्द्रियहरणस्य भानं पुरस्कारः । स्थितं प्रतिभासमानम्, तत् सकलेन्द्रियहरणम्, विशेषः पूर्वोदाहरणादिति शेषः। **गवेष्यमाण०** अन्विष्यमाणा गौर्न लब्धेति इष्टाप्राप्तिरनुक्ता । **समस्तगवी०** समस्ताःपदेन सर्वगवीणामपहारस्यं स्फुटमुक्ततया तदन्तर्गताया अन्वेष्यमाणगव्या अपहारोऽवश्यं जात इति इष्टाप्राप्तिरपि उक्तैव ।

**सामान्येनोक्ता०** गतयोरुदाहरणयोरिष्टस्याप्राप्तिरनिष्टस्य प्राप्तिश्च समान्येन अवान्तरभेदसमन्वयमन्तरा उदाहृता । संभवति च तत्रापि इष्टस्यानिष्टस्य च विशेषस्य चमत्कारः, परं न तथा विवृत्तः। **द्वादशविधा०**

तत्र स्वस्य सुखसाधन-वस्त्वप्राप्ति–दुःख-साधन-वस्तु-प्राप्तिरूप उभयभेदस्तावदुदाहृतः ।

स्वस्य दुःख-साधन-वस्त्वनिवृत्ति–दुःखान्तर-साधनावाप्ति-रूपद्वयं यथा—

'रूपारुचिं निरसितुं रसयन्त्या हरिमुखेन्दुलावण्यम् ।
सुदृशः शिव शिव सकले जाता सकलेवरे जगत्यरुचिः ॥'

अत्र यद्यपि ब्रह्मदर्शनोत्तरं जातायामपि जगति वैराग्य-

---

चतुर्विधेष्टाप्राप्तिः प्रत्येकं त्रिविधस्य अनिष्टस्य प्राप्त्या सम्मिलिता चतुर्धा सती चतस्रो द्वादशधा जाताः । उदाहृतः● गतयोरुदाहरणयोः सुखसाधनवस्तुन इष्टविशेषस्य अप्राप्तिर्दुःखसाधनवस्तुनोऽनिष्टविशेषस्य प्राप्तिश्च विशेषद्वय-मुदाहृतम् ।

स्वस्य दुःख● यस्य दुःखसाधनवस्तुनो निवृत्तये प्रयासस्तद्दुःखसाधन-वस्तु न निवृत्तं तद्भिन्नदुःखसाधनवस्तुनोऽवाप्तिर्जाता, एतादृशानिवृत्त्य-प्राप्तिवस्तुद्वयमुदाहरति रूपारुचिं● अरुचिरोगनिरासाय रसविशेषौषधेः सेवनं प्रसिद्धम्, प्रस्तुताया अपि नायिकाया रूपारुचिर्जाता, जगतो यत्किमपि सुन्दरं वस्तु अवलोकयति न तत्र मनोऽरमत, एषा रूपारुचिः । न तत्र नेत्रदोषो यतः सुदृशः, तामरुचिं निरसितुं श्रीकृष्णमुखचन्द्रसौन्दर्यं स्वदितुं प्रवृत्ता क्रमशो रसवती जाता, तन्मयीभूता रसयन्त्या तन्मयतामनुभवन्त्याः, तन्मयीभावश्च ततोऽन्यत्र मनसोऽगमनेन, लोकस्थितिश्च यत्र विषये मनो गच्छति तद् रोचते, यत्र मनो न गच्छति तद्विषया अरुचिः । अस्या अपि सुनयनाया मनः श्रीकृष्णमुखचन्द्रसौन्दर्यं विहाय कलेवरे स्वशरीरे तत्सम्बन्धिनि जगति प्रपञ्चे न गच्छति, अतः सर्वविषयिणी अरुचिर्जाता । शिवशिवेति महावैषम्यद्योतकः । अस्या अरुचेः प्रथमा अवस्था मनसो गमनाभावो रमणा-भावो वा यावद्विषयेषु दोषदृष्टिर्न समुदैत, सा प्रथमाऽवस्थैवात्र कवेरभिप्रेता, यतोऽस्या अरुचेर्दुःखान्तरसाधनत्वमभिप्रेतम् । तच्च रोगरूपतायामेव संभवति । दोषदृष्टेः समनन्तरन्तु द्वितीया अवस्था, विषयरागो नश्यति विगतरागत्वं वैराग्यं वा निगद्यते, तस्याः स्वतन्त्रसुखरूपतया दुःखसाधनत्वाभावान्नात्र

लक्षणायामरुचौ भगवद्वदनलावण्यदर्शनाद्रूपारुचिर्विलक्षणा या काचित्सा निवृत्तैवेति वक्तुं शक्यते, तथापि जगदरुचित्वेन सकलारुचीनामभेदाध्यवसायाद्रूपारुचिनिवृत्तेरप्रत्यय एव। अन्यथा सुखहेतोर्वैराग्यलक्षणाया अरुचेर्दुःखान्तरसाधनत्वं दुरुपपादं स्यादिति भवत्युभयोदाहरणम्।

परस्य दुःखसाधनानवाप्तिः स्वस्य दुःखान्तरसाधनप्राप्ति-रित्युभयं यथा—

'पुरो गीवार्णानां पुलकितकपोलं प्रथयतो
भुजप्रौढिं साक्षाद् भगवति शरं संमुखयितुम्।
स्मरस्य स्वर्बाला-नयन-सुम-मालार्चितमहो
वपुः सद्यो भालानलभसितजालास्पदमभूत्॥'

---

ग्रहणमिति मूलेऽपि वक्ति। विलक्षणा॰ जगद्। रूपे भिन्ना रूपमात्रविषयिणी अरुचिः। रप्रत्ययः॰ रूपस्यापि जगदन्तर्गततया जगदरुचित्वेन रूपारुचे-रवस्थानप्रत्ययाद् विरोधात्। अन्यथा॰ द्वितीयावस्थाया वैराग्यलक्षणाया ग्रहणे। त्युभयो॰ दुःखसाधनरूपारुचेरनिवृत्तेस्ततोऽधिकदुःखसाधनजगद-रुचेरवाप्तेश्च।

द्विविधस्य अनिष्टस्योत्पत्तिमुदाहर्तुं प्रक्रमते परस्य दुःख॰। पुरो गीर्वा-णानाम्॰ देवानां पुरः समक्षं बाहुबलाधिक्यं हर्षवशात् प्रफुल्लकपोलं यथास्यात्तथा प्रख्यापयतः कामस्य वपुः अहो सपदि एव शिवललाटवह्निप्रदीप्त-जालानाम् आस्पदं स्थानम् अभूत्। शीघ्रमेव भस्माभूदित्यर्थः। भसित-शब्दस्य धात्वर्थानुरोधेन दीप्तं भस्म वा अर्थः। साक्षाद् भगवति शिवे बाणं संमुखीकर्तुम् आरोपयितुं वेति भुजप्रौढिप्रथनस्य प्रयोजनम्। कोमलं सुन्दरञ्च कामशरीरं प्रलयकालानलपात्रं जातमित्यहो? सौकुमार्यं सौन्दर्यञ्च स्वर्गललनानयनान्येव सुमानि पुष्पाणि तेषां मालाभिः पूजितं सत्कृतमिति। अत्र परस्य शिवस्य न किमपि दुःखसाधनमभूत्, स्वस्य त्वानङ्गत्वमनिष्टं जातमित्युदाहरणम्।

परस्य सुखसाधनानिवृत्तिः स्वस्य दुःखसाधनप्राप्तिरित्युभयं यथा—

'न मिश्रयति लोचने सहसितं न संभाषते
कथासु तव किं च सा विरचयत्यरालां भ्रुवम् ।
विपक्षसुदृशः कथामिति निवेदयन्त्या पुरः
प्रियस्य शिथिलीकृतः स्वविषयोऽनुरागग्रहः ॥'

अत्र कयाचित्प्रौढनायिकया सपत्न्यां प्रियेणाज्ञातयौवनात्वेनैव विदितायां तदनुरागप्रतिबन्धार्थं प्रियस्य पुरस्तदीयदुर्गुणानावेदयन्त्या चिकीर्षितोऽर्थो न संपादितः स्वस्मिन्ननुरागक्षतिश्च संपादितेति यद्यपि सुखसाधननिवृत्तेर्दुःखसाधनरूपत्वान्न पृथग्गणनोचिता, तथापि दुःखसाधननिवृत्तौ सुखस्येव सुखसाधननिवृत्तौ प्रतिनियतकारणजन्यत्वेन दुःखस्यानैयत्यात्पृथगुपादानम् ।

---

**परस्य सुख●** परस्य नवसपत्न्याः सुखसाधनस्य प्रियानुरागस्य अनिवृत्तेः, स्वस्य सपत्नीं वर्णयन्त्याः प्रौढाया दुःखसाधनस्य प्रियानुरागशैथिल्यस्य प्राप्तेश्चोभयोरुदाहरणम् अग्रिमं पद्यं **न मिश्रयति●** त्वया साधं वार्तालापप्रसङ्गे नयने न मेलयति, लज्जावशादधोदृष्टिरेव तिष्ठति; अपेक्षितमुत्तरमात्रं ब्रूते न सस्मितं जल्पति; सहचरीषु मध्ये प्रसङ्गागतासु तव चर्चासु सा तव प्रिया शुश्रूषमाणाऽपि विरसतां नाटयन्ती वक्रां भ्रुवं करोति इति । इत्थं सपत्नीसुनयनायाः कथां प्रियस्य नायकस्य सम्मुखं निवेदयन्त्याः प्रौढ्या अज्ञातयौवनत्वग्रहदृढस्य प्रियस्य स्वीयच्छलनिन्दकत्वसूचनया स्वविषयः स्वीयशुद्धत्वालङ्कृतः अनुरागस्य असाधारणप्रेम्णो ग्रहो दृढं ज्ञानम् आस्था पूर्वं दृढोऽपि अधुना शिथिलः कृतः । अभूततद्भावे च्विः ।

**चिकीर्षितो●** नवनायिकायां शिथिलानुरागः । **यद्यपि●** महताश्रमेण सम्पादितस्य सुखसाधनस्य कुतश्चित् कारणात् सुखमन्तरैव निवृत्तिर्दुःखं जनयति दुःखसाधनं जायते । **स्यानैयत्यात्●** भवतु नाम क्वचित्तथा-

एवमष्टावन्येऽप्युभयभेदाः ऊह्याः ।

केवलेष्टाप्राप्तिर्यथा—

'प्रभातसमयप्रभां प्रणयिनि ह्नुवाना रसा-

दमुष्य नयनाम्बुजं सपदि पाणिनामीलयत् ।

अनेन खलु पद्मिनी-परिमलालिपाटच्चरैः

समीरशिशुकैश्चिरादनुमितो दिनेशोदयः ॥'

---

विशेषसामग्रीवशात् परं न नियतं सुखसाधननिवृत्तौ दुःखजननम्, कचित्तथाव्यवहारोऽपि भाराद्यपगमे सुखीसंवृत्तोऽहमित्यत्रेव भाक्तः, भारकृतदुःखस्याभाव एव तत्र मुख्यः । दुःखं प्रति सुखसाधनाभावः कारणं स्यात् सुखाभाव एव वा दुःखं स्यात्, तदा नियतं भवेत्, न च तथाऽस्ति ततो न नियतम् । पूर्वं तु विनिगमनाविरहः, दुःखसाधननिवृत्तिरेव सुखसाधनं कथं न ? दुःखाभाव एव सुखं कथं न ? सुखदुःखसाधनविरहिण्यां सुख-दुःखोभयाभाववत्यां सुषुप्तौ व्यभिचारात् । सुखं विलक्षणो गुणो न दुःखाभाव-मात्रम्, सुखसाधनञ्च विभिन्नं कारणं न दुःखसाधननिवृत्तिमात्रमित्युच्यते, तदा तुल्ययुक्त्या दुःखस्यापि एषैव गतिः, न सुखाभावो दुःखम् किन्तु स्वतन्त्रो गुणः; न वा सुखसाधननिवृत्तिमात्रेण जायते दुःखम्, अपि तु स्वतन्त्रेण नियत-कारणेन ।

प्रभातसमय● प्रणयिनिष्ठसंभावनाविषयभूतां प्रियेण संभावितामिति यावत् । प्रभातसमयस्य बालसूर्यप्रकाशं सहवासरसमपेक्ष्य ह्नुवाना अपलपन्ती गोपयन्ती वा तदुपायतया अमुष्य प्रियस्य सपदि नेत्रकमलं हस्तेन आमीलयत्, नयननिमीलने क्रीडा, तथैव अपलापः सम्भवेत् । सूर्यप्रभामुद्दिश्य जात्या-विकसितं नेत्रकमलं स्वयन्न निमीलेदिति णिचः प्रयोगः, पाणेश्चोपयोगः । खलुः विपरीतताद्योतकः । अनेन प्रियेण कमलसौरभसमूहचौरैः बालपवनैः मन्दसमीरैः करणैः चिराद् एतावता कालेन सावधानतया दृढव्याप्तिज्ञानोदयात् सूर्योदयोऽनुमितः । समयोऽयमवश्यं सूर्योदयस्य कमलसौरभसुरभिपवन-सञ्चारात् । समयोऽयमवश्यं कमलविकासस्य वायुद्वारा तत्सौरभानुभवादि-त्यादि ज्ञातमिति भावः । ह्नु अपह्नवे कर्तरि शानच्, आली समूहः पाटच्चर-श्चौरः, शिशवश्छलं न परिचिन्वन्ति निःसंकोचं यत्र तत्र प्रविशन्ति निःसरन्ति

अत्र प्रियतमकर्तृकप्रभातविषयकज्ञानाभावः कामिन्याः सुखसाधनतयेष्टः। स च तया साध्यमानोऽपि न सिद्ध इतीष्टाप्राप्तिरेव। यद्वा तादृशज्ञानं तस्या दुःखसाधनम्, तन्निवृत्तिरूपं चेष्टं साध्यमानमपि न तथेति सैव। एवं च द्विप्रकारापीष्टाप्राप्तिरेवात्र संभवति। प्रकारान्तरं चास्या अप्यूह्यम्।

केवलानिष्टप्राप्तिर्यथा—

'मुकुलित-नयनं करिणो गण्डं कण्डूयतो विषद्रुतटे।
उदभूदकाण्डदहनज्वालाजालाकुलो देहः ॥'

अत्र नेष्टाप्राप्तिः मुकुलितनयनमित्यनेन कण्डूयनजन्यसुखस्य प्राप्तेः, किं त्वनिष्टप्राप्तिरेव।

अस्या अपि भेदद्वयं यथायथमूह्यम्। ग्रन्थविस्तरभयान्नेहोदाह्रियते।

---

च। नर्मकर्मणि न ततग्रहास्तथा प्रौढाः संकुचन्ति इति शिशुशब्दोऽत्रोपयुज्यते। दिनोदयपर्यायाणां सूर्याद्यपेक्षया दिनेशशब्दो हृदयङ्गमः। **तयेष्टः** ● तेन सुखसाधनरूपेष्टस्याप्राप्तिः। दुःखसाधननिवृत्तिरूपेष्टस्याप्राप्तिं वर्णयति **यद्वा** ●।

**मुकुलित** ● कण्डूयनसुखवशाद् मुकुलिते निमीलिते नयने यस्मिन् तत् तथा क्रियाविशेषणम्। विषवृक्षस्य पार्श्वे गण्डं कण्डूयतः करिणो देहः अकस्मादेव अग्निज्वालासमूहेन आकुलो जातः। कण्डु-यक्-शतृ षष्ठ्येकवचने कण्डूयत इति। स्वस्य दुःखसाधनवस्तुप्राप्तिरूपस्य अनिष्टस्य प्राप्तेरिदमुदाहरणम्। अस्या अनिष्टप्राप्तेः परस्य सुखसाधनवस्तुप्राप्तिरूपस्य दुःखसाधनवस्तुनिवृत्तिरूपस्य च अनिष्टस्य प्राप्तेरुदाहरणार्थमाह **यथायथ** ●।

एते चेष्टसाधनत्वेन निश्चितात्कारणादनिष्टकार्योत्पत्तीनां सर्वेऽपि प्रभेदा वक्ष्यमाणविषादनालङ्कारसंकीर्णा एवेति तत्प्रकरणे निरूपयिष्यामः ।

यत्तु— 'अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमा'दिति विषमभेदलक्षणं निर्माय अपिशब्दसंगृहीततया इष्टानवाप्तिश्चेति प्रत्येकमपि विषमपदेनान्वयः' इत्युक्तं कुवलयानन्दकृता, तन्न; अव्युत्पत्तेः । अस्मिन्ग्रामे देवदत्तस्य द्रव्यस्यापि लाभोऽस्तीत्यादौ द्रव्यशब्दोत्तरापिशब्दसमुच्चितस्य विद्यादेर्द्रव्यान्वयिन्येवान्वयाद् द्रव्यस्य लाभो विद्यायाश्च लाभ इति धीरिति निर्विवादम् । प्रकृते त्वनिष्टस्याप्नोतिनान्वयः, इष्टानवाप्तेश्च तच्छब्दपरामृष्टेन विषमेणेति वैषम्यात् । प्रत्युत लक्षणवाक्येऽपि शब्दोऽनिष्टां धियमुत्पादयति, अनिष्टस्यावाप्तिरिष्टस्य चेति प्रतीतेः । चकारसमुच्चितया इष्टानवाप्त्या अनिष्टावाप्तेरेकवारं

---

वक्ष्यमाणविषादना● अभीष्टार्थविरुद्धलाभो विषादनम् इति वक्ष्यमाणम् । तत्रत्यानि निरूपणाक्षराणि चेत्थम्—यत्र तु इष्टार्थं प्रयुक्तादेव कारणाद्विरुद्धार्थलाभस्तत्र तादृशकारणविरुद्धयोरुत्पाद्योत्पादकभावलक्षणसंसर्गस्याननुरूपत्वाद्विषमम् इष्यमाणविरुद्धार्थलाभमत्त्वाच्च विषादनमिति संकीर्णतैव इति ।

यत्तु● तस्येष्टस्यार्थस्य समुद्यमात् प्रयुक्तात्कारणाद् अनर्थस्यावाप्तिरेकं विषमम्, अपिशब्दाद् इष्टस्य अर्थस्य अनवाप्तिर्द्वितीयं विषमम् इत्यर्थः । प्रत्येकं प्रधानवाक्योक्ता अनर्थस्यावाप्तिः अपिशब्दसूचिता इष्टानवाप्तिश्च विषमपदेनान्वयं लभमानाः विषमभेदाः भवन्ति । अव्युत्पत्तेः● व्युत्पत्तिश्च अपिशब्दपूर्ववर्तिपदार्थस्य यत्रान्वयस्तत्रैव अपिशब्दगृहीतस्यान्वयः । तस्या अत्रातिक्रमणम् । आप्नोतिना अवाप्तिशब्दार्थेन । विषमेण● विषमभेदवर्णनाय । अनिष्टां धियं दर्शयति अनिष्टस्या● इष्टस्य अवाप्तिश्चेति । स्वयं भेदत्रितयस्य द्योतनाय व्याख्याति चकार● चकारेण समुच्चिता इष्टानवाप्तिरनिष्टावाप्तेरङ्गतां गता सहैव विषमेणान्विता मिलिता विषमस्यैको भेदः ।

मिलितायास्तत्पदपरामृष्टेन विषमेणान्वयाद्वाक्यावृत्त्या वारान्तरे च प्रत्येकमन्वयाद् भेदत्रयसंग्रह इति तु स्यादपि, न त्वपिशब्द-विकत्थनम् ।

यदपि तेनैवोदाहृतम्—'भक्ष्याशयाऽहिमञ्जूषां दृष्ट्वाऽऽखुस्तेन भक्षितः' इति । अत्र क्त्वाप्रकृतिक्रियाकर्तृकर्तृकोत्तरकालवर्ति-क्रियान्तरस्याप्रयुक्तत्वादगम्यमानत्वाच्च प्रविष्ट इति पदा-काङ्क्षितया न्यूनपदत्वम् ।

---

वाक्यावृत्त्या● सम्पूर्णस्य लक्षणवाक्यस्य आवृत्तिः तत्र लक्षणोक्ता अनिष्टा-वाप्तिश्चकारसूचिता च इष्टानवाप्तिश्च परस्पराङ्गताम् अभजमाना स्वतन्त्रा विक्रमेणानुगता केवला विषमस्य भेदद्वयमिति कथमपि त्रयाणां संग्रहः। तस्य कथञ्चित्त्वं स्यादपिशब्देन ध्वनितम् । अपि-च-शब्दयोर्निप तत्वेऽपि प्रयोगस्थानविशेषादन्वयसामर्थ्यविशेषः । चशब्दोऽवाप्तेरुत्तरं प्रयुज्यमानो विषमेणान्वयं प्रयोजयेत् । तद् ध्वनति विकत्थनशब्दः । मर्मप्रकाशः—'अपिशब्दस्यावाप्तिपदोत्तरमुत्कर्षेणान्वये तु न किञ्चिदधिकम्' इति ब्रूते। चकारसमुच्चयं न विरुणद्धि । तथा च दीक्षितसमर्थनपरोऽपि अपिशब्दस्य यथास्थानमप्रयोगेण, चशब्देनैव समीहितसिद्धेरपेवैयर्थ्येन च दीक्षितस्य न्यूनतामङ्गीकरोत्येव । समानमार्गस्थितायाः कुवलयानन्दटीकाया अपि एषैव गतिः ।

भक्ष्याशया● आखुर्मूषकः सर्पमञ्जूषां दृष्ट्वा तत्र भक्षणीयवस्तुप्राप्ति-समीहया प्रविष्टस्तेन अहिना भक्षितः । क्त्वाप्रकृतिर्दृशधातुस्तदर्थक्रिया दर्शनम्, तत्कर्ता आखुः तत्कर्तृका उत्तरकालवर्तिनी क्रिया प्रवेशक्रिया अपेक्षिता । परम-प्रयुक्ताऽतो न्यूनपदत्वं दोषः । गम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजिका, न तु क्त्वाप्रत्ययस्य । यां क्रियां विना कारकविभक्तिर्नोपपद्यते सा आक्षिप्ता क्रिया गम्यमानोपपद्यते, समानकर्तृकोत्तरकालिकीं क्रियां विना अनुपपद्य-मानोऽपि क्त्वाः न प्रविष्टक्रियां विना, भक्षित इति प्रविष्टं विना नोपपद्यते इति चेत् सत्यम् वाक्यार्थो नोपपद्यते इत्युच्यतां न क्त्वा, वाक्यार्थानुपपत्त्या लक्षणादिरुपास्यते, न क्रिया आक्षिप्यते । यदपेक्षितं पदं विना वाक्यार्थो नोपपद्यते क्लेशेन च कल्प्यते, तत्रैव न्यूनपदत्वं दोष इत्यभिप्रेत्याह

यदपि केवलेष्टानवाप्तौ तेनैवोदाजह्रे—

'खिन्नोऽसि मुञ्च शैलं बिभृमो वयमिति वदत्सु शिथिलभुजः।
भरभुग्नविततबाहुषु गोपेषु हसन् हरिर्जयति ॥'

इति। तदपि न रमणीयम्, अत्र भरभुग्नविततेत्यादिना बाहुगतास्थिसंधिभङ्गरूपानिष्टप्राप्तेः साक्षादुपात्तत्वात्सर्वाङ्ग-चूर्णीभाव-गर्वापहाररूपायाश्च स्फुटं गम्यमानत्वात् कथ-मिष्टाप्राप्तिमात्रमित्युच्यते ? एतेन 'शैलपतनरूपानिष्टावाप्तिस्तु भगवत्कराम्बुजस्पर्शमहिम्ना न जाता' इति यदुक्तं तदप्य-सारमेव, अनिष्टानामुक्तत्वात्।

---

अगम्यमानत्वाच्चेति। मर्मप्रकाशस्त्वत्र खण्डितप्रायपाठो नाभिप्रेतं स्फोरयति, तत्समानव्यसना चन्द्रिकाटीका तु प्रविष्टपदस्य गम्यमानतामेव आगृह्णाति।

**खिन्नोऽसि** ● त्वं श्रान्तोऽसि, पर्वतं मुञ्च, वयं बिभृमः इति गोवर्धनो-द्धरणप्रसङ्गे वदत्सु गोपेषु तेषां परीक्षेच्छया हरिः शिथिलभुजोऽभूत्। हरेर्भुजे शिथिले जाते भरेण पर्वतभारेण भुग्ना अपि नता विस्तृता बाहवो येषां तेषु गोपेषु जातेषु तेषाम् अज्ञातस्वपरबलानां गोपानां क्षिप्रकारित्वेन हासं कुर्वन् हरिः जयति। **संधिभङ्ग** ● अस्थिसन्धीनां भङ्गो दृढत्वविरोधिनी शिथिलता, येन बाहवो भुग्ना अपि नता जाताः। अत्र भङ्गशब्दस्य त्रोटनमर्थ-मनुसन्धाय मर्मप्रकाशः 'अधात्वर्थत्वात्' इत्यनेन आक्षिपति। उपात्तभुग्नतो-पयोग्येवात्र भङ्गशब्दार्थ इति न दोषः। **स्फुटं गम्य** ● गोपानां विशेष-शैथिल्यदर्शनमन्तरा हरेर्हासो नोदियात्, तेन सर्वाङ्गचूर्णीभावस्य गर्वापहारस्य च स्फुटता। गर्वेण गोपानां न प्रवृत्तिरपि तु खेदापहारसमीहयेति अभिप्रयन् मर्मप्रकाशो मुग्धः, स्वेदापहारसमीहैव बलाभिमानसंभूता, तत एव च हासो हरेः। कुवलयानन्दमूलस्य तट्टीकाया मर्मप्रकाशस्य वा तथा भावो भवतु नामपरं भुग्नः-हसन्-प्रभृतिपदानि विरचयतः काव्यकर्तुर्नाभिप्राय इत्यभि-प्रायेण आह **मुक्तत्वात्** ● तथैवाभिप्रयन्नपि तथा विरचयति चेत् काव्यं दुष्टं कथं स्यादुदाहरणम् ?

एवमुत्पत्तिलक्षणसंसर्गस्याननुरूपत्वं निरूपितम्। संयोगादिलक्षणसंसर्गस्याननुरूपत्वं यथा—

'वनान्तःखेलन्ती शशकशिशुमालोक्य चकिता
भुजप्रान्तं भर्तुः श्रयति भयहर्तुः सपदि या।
अहो सेयं सीता शिव शिव परीता श्रुतिचलत्-
करोटीकोटीभिर्वसति खलु रक्षोयुवतिभिः॥'

अत्र सतीशिखामणेर्भगवत्या राघवधर्मपत्न्याः परमप्रभावयुक्तत्वाद्राक्षसीभिरनाश्यत्वेऽपि रक्षःकर्तृकनाशस्वरूपयोग्यतावच्छेदकमनुष्यत्वजातियोगेन स्वरूपस्य रक्षोदर्शनेन

---

सीताराक्षस्योः सहवासरूपसंयोगससर्गस्याननुरूपतामुदाहरति **वनान्तः** ● पादद्वयेन सीताया अतिभीरुतां दर्शयति। वनमध्ये स्वैरं क्रीडमाना अतिभीरुर्मनोहरं शशशिशुं दृष्ट्वाऽपि चकिता भवति, नैतावदेव, न जाने किं करिष्यतीति भिया सपदि या सीता भयहर्तुः भर्तुः भुजयोर्मध्ये प्रविशति। सहवासस्य अत्यन्तवैषम्यं द्योतयन्ति अहो शिव शिवेत्यादयः। एवं भीरुः सा सीता कर्णयोश्चलन्त्यः करोटीनां शिरोऽस्थ्नां कोट्यः कोणा यासान्ताभिः राक्षसपत्नीभिः परीता परितो व्याप्ता च सति खलु न म्रियते। **स्वरूपयोग्यता** ● राक्षसो मनुष्यनाशं प्रति कारणम्, मानुषी च सीता, परं तस्याः परमप्रभावो नाशप्रतिबन्धको भवति तेन सीतानाशो न संभवति। कारणं द्विविधं फलोपधायकं स्वरूपयोग्यञ्चेति वृद्धिनिमित्तस्य तद्धितस्यारक्तविकारे इति सूत्रस्य सिद्धान्तकौमुदीपाठे पठ्यते। एवं कार्यमपि द्विविधम् उत्पद्यमानं स्वरूपयोग्यञ्च। एकेन येन दण्डेन घटो जन्यते तदतिरिक्तानां समेषां दण्डानां स्वरूपयोग्यं कार्यं घटः, कार्यतावच्छेदकघटत्वजातिमत्त्वात्। तथैव राक्षसैर्मनुष्यनाशो भवति, अतः सीतानाशोऽपि स्वरूपयोग्यकार्यम् योग्यतानियामकमनुष्यत्वजातिमत्त्वात्। अतः प्रतियोगितासम्बन्धेन रक्षःकर्तृकनाशं प्रति तादात्म्यसम्बन्धेन मनुष्यः कारणमिति वा कार्यकारणभावो द्रष्टव्यः। सीतायां नाशस्यानुत्पादेऽपि सीता नाशस्य स्वरूपयोग्या, कारणतावच्छेदक-

सौन्दर्यसौकुमार्यादीनां गुणानां च नाश्यत्वेन विरुद्धत्वात्समानाधिकरणसंयोगरूपः संसर्गोऽननुरूपः ।

ननु—

'क्व शुक्तयः क्व वा मुक्ताः क्व पङ्कः क्व च पङ्कजम् ।
क्व मृगाः क्व च कस्तूरी धिग् विधातुर्विदग्धताम् ॥'

इत्यादौ वस्तुकथनमात्रे विषमालङ्कारप्रसङ्गः । न चेष्टापत्तिः, वस्तुवृत्तस्य लोकसिद्धत्वेनालङ्कारत्वायोगात् । यतो बहिरसन्तः कविप्रतिभामात्रकल्पिता अर्थाः काव्येऽलङ्कारपदास्पदम् । न च 'यथा पद्मं तथा मुखम्' इत्यादौ सादृश्यस्य लोकसिद्धत्वात्कविप्रतिभानुत्थापितत्वेऽपि कथमलङ्कारत्वमिति वाच्यम्, सादृश्यरूपे सादृश्योत्थापके वा अभिन्नधर्मेऽभेदांशस्य

---

धर्मो मनुष्यत्वजातिः, योग्यतावच्छेदिका तादृशजातिमती सीता । स्वरूपतः सीताया अनाश्यत्वेऽपि गुणाना नाशादवश्यं विरोध इत्याह विरुद्धत्वात् ● ।

लोकसिद्धत्वेना● अत्र अलङ्कारकौस्तुभः—तदसत्, तत्राप्यनुपपत्तेः कविप्रतिभाधीनत्वात्, शुक्तिमुक्तयोः सम्बन्धानुपपत्तेर्लोके प्रसिद्धिविरहात्, प्रत्युत तत्सम्बन्धस्यैव प्रसिद्धत्वात्, इत्याह । तत्रेत्थं चिन्तनीयम्—सत्यं शुक्तिमुक्तयोः सम्बन्धः सृष्टिकृतो लौकिकः, परं तद्द्वारा क्षुद्रमहर्घयोरनुपपद्यमानः सम्बन्धः किं कृतः ? स एव कविप्रतिभाकृत इति कौस्तुभाभिप्रेतं प्रतिभाति, तदेव न सम्यक्, लोको विधातुर्विदग्धतां वक्ति, तस्यानुपपद्यमानतया धिगिति ब्रूते च । तन्नूनं चतुर्थपादार्थसंमिश्रणमन्तरा कौस्तुभेनाऽचिन्ति । शुक्तिमुक्तयोः क्षुद्रमहर्घयोश्च सम्बन्धो विधातृविहितो लौकिकः । तस्याप्युक्ततया च लोकेभ्यो न रोचते इत्यपि लौकिकं किं प्रतिभाधीनं स्यात् । क्व सा कुसुमसाराङ्गीत्यादौ सीताराक्षसीसंसर्गो लौकिकः परं कुसुमसारखदिराङ्गारयोः सम्बन्धो न लौकिकः, तस्यानुपपत्तिश्च कथं लौकिकी स्यादिति भवेदुदाहरणम् ।

त्थापके वा● उभयवृत्तिप्रसिद्धधर्म एव सादृश्यमिति मते सादृश्यरूपे इति, उभयवृत्तिप्रसिद्धधर्मकृतं सादृश्यमिति मते तु सादृश्योत्थापके इति ।

कविप्रतिभामात्राधीनत्वात्। नहि पद्ममुखयोः शोभारूपो धर्मो जात्यादिवद्वस्तुत एकोऽस्ति। यो हि जात्यादिरूपो वस्तुत एकस्तदुत्थापितं सादृश्यमलङ्कारबहिर्भूतमेव। यथा—'पद्ममिवास्या मुखं द्रव्यम्' इत्यादौ। एवं च 'वनान्तःखेलन्ती' इति पद्यप्रतिपाद्यायाः सीता-राक्षसवधूसंसर्गाननुरूपताया लौकिकीत्वेन कविप्रतिभानपेक्षत्वान्नालङ्कारत्वम्। एतेन—

'अरण्यानी क्वेयं धृतकनकसूत्रः क्व स मृगः
　क्व मुक्ताहारोऽयं क्व च स पतगः क्वेयमबला।
क्व तत्कन्यारत्नं ललितमहिभर्तुः क्व च वयं
　स्वमाकूतं धाता कमपि निभृतं पल्लवयति॥'

इत्यलङ्कारसर्वस्वकृतोदाहृतमपि प्रत्युक्तम्। इयमेव च पद्यान्तरेऽपि कविप्रतिभानुत्थापितार्थके सरणिरिति सत्यम्।

एवं तर्हि—

'क्व सा कुसुमसाराङ्गी सीता चन्द्रकलोपमा।
क्व रक्षःखदिराङ्गारमध्य-संवास-वैशसम्॥'

---

पद्ममुखयोर्नैक आह्लादकरो धर्मो येन सादृश्यं समुदियात्। किन्तु कविप्रतिभाधीनेनाभेदारोपेण उभयोः सौन्दर्यविशेषयोरेकीकरणेन सादृश्यं जागर्ति।

अरण्यानी● ब्रह्मणोऽभिप्रायो गुप्तोऽस्माद्दृशैरचिन्तनीयः। स्वाभिप्रायानुसारं जगत् तनोति, तस्य विलक्षणवस्तुसंसर्गो नास्माकं तर्कगोचरः। तथा चायं सृष्टिकृतो विलक्षणसंयोगो लौकिक एव। क्वशब्दस्य प्रत्येकमन्वयो द्वयोर्महावैषम्यद्योतकः, इदं महदरण्यं क्व, मृगस्य संभवेऽपि कनकसूत्रधारी मृगः क्व, मुक्तामाला क्व, साधारणः पक्षी च क्वः। इयं साधारणी अबला क्व, सुन्दरं सर्पराजस्य कन्यारत्नम्, वयं च साधारणमहिलाः क्व, तथापि समेषां समागमः। क्व साकुसुम● रक्षांसि खदिराङ्गारास्तेषां मध्ये संवासः, तस्य

इति पद्यमुदाहरणं गृहाण ।

अत्र हि केवलसीतायाः केवलराक्षसीनां च संसर्गस्याननुरूपतायां सत्यामपि न सा कवेर्विवक्षिता । किं तु कुसुमसार-खदिराङ्गारसंसर्गस्याननुरूपता सेति स्फुटमेवास्यामलौकिकत्वात्कविप्रतिभापेक्षत्वम् ।

इति रसगङ्गाधरे विषमालङ्कारनिरूपणम् ।

अथ समालङ्कारः—

अनुरूपसंसर्गः समम् ।

संसर्गः पूर्ववद् द्विविधः । तत्रोत्पत्तिलक्षणस्य संसर्गस्यानुरूपत्वं कारणात्स्वसमानगुणकार्योत्पत्त्या, यादृशगुणकवस्तुसंसर्गस्तादृशगुणोत्पत्त्या, यत्किञ्चिदिष्टप्राप्त्यर्थं प्रयुक्तात्

---

वैशसं कठोरत्वं क्रूरत्वम् अनुचितं वा । विवक्षिता● लौकिकीत्वेन । सेति सा अननुरूपता विवक्षितेत्यर्थः । अन्यच्चानुपदमेव कौस्तुभालोचनायामुक्तमवसेयम् ।

॥ इति विषमालङ्कारनिरूपणम् ॥

समालङ्कारनिरूपणम

रूपस्य योग्यमनुरूपम्, इत्यादि योग्यतायामव्ययीभावसमासादिर्विषमालङ्कारवदूहनीयः । योग्ययोर्योग्यश्च संसर्ग इति द्विविधः समासो भासते परम् अयोग्यसंसर्गिणोः संसर्गोयोग्यो न संभवतीतिदृशा अनुरूपः संसर्ग इति लाघवमूलकः कर्मधारय एव समासः सम्यक् । अननुरूपयोः संसर्गिणोः संसर्गस्य अननुरूपतयैव व्यावृत्तेः । पूर्ववत्● विषय इव, उत्पत्तिलक्षणः संयोगादिलक्षणश्च, आदिपदेन सहवासादिर्ग्राह्यः । प्रथमस्य त्रिविधां योग्यतां वर्णयति तत्रोत्पत्तिः● द्विविधं कारणम्, सगुणद्रव्यं गुणो वा, प्रथमं कारणसदृशं कार्यम्, सादृश्यं सजातीयगुणवत्तया, द्वितीये गुणिनः कार्यस्य उपेक्षा, अपि तु गुणस्यैवोत्पत्तिः, तत्रापि कार्ये गुणे कारणगतगुणसजातीयता

कारणात्तत्प्राप्त्या च । उत्कटेष्टान्तरप्राप्तौ तु प्रहर्षणं वक्ष्यते । संयोगादिलक्षणस्यापि संसर्गिणोरन्यतरगुणस्वरूपानुग्राह्या-न्यतरगुणस्वरूपतयाऽनुरूपत्वम् । एवं चानुरूपसंसर्गत्वेन सामान्यलक्षणेन सर्वे भेदाः संगृहीता भवन्ति ।

यथा—

'कुवलयलक्ष्मीं हरते तव कीर्तिस्तत्र किं चित्रम् ।
यस्मान्निदानमस्या लोकनमस्याङ्घ्रिपङ्कजस्तु भवान् ॥'

यथा वा—

---

अपेक्षिता, तदर्थमेव यादृशतादृशशब्दयोरुपादानम्, तृतीयं यदुद्देशेन कारणं प्रयुक्तं तत्फलप्राप्त्या उद्दिष्टफलमपेक्ष्य अभीष्टतरस्य फलान्तरस्य प्राप्तावपि समं नेष्यते, किन्तु उद्दिष्टस्यैव फलस्य प्राप्तौ, तदैव कार्यकारणभाव-संसर्गस्यानुरूपतां संघटत इति ब्रूते । उत्कटे● साक्षात्तदुद्देश्यकयत्नमन्तराऽ-प्यभीष्टार्थलाभ इत्यादिः । उत्कटत्वम् इच्छागतम् अखण्डोपाधिः, यथा आस्तिककामुकस्य व्यभिचारे प्रवृत्तिः । स्वरूपानुग्राह्य● अनुग्रहोऽनुकूलता, यथा अनाथो बालः शिशुस्नेही च कश्चिद् दयालुः संसर्गिणौ अनाथस्य स्नेहिनो रक्षकस्य अपेक्षा, अपरस्य स्नेहो दया च गुणौ, ताभ्यामनाथत्वं गुणोऽनुगृह्यते, अनाथत्वानुकूलावपरस्य दयास्नेहौ गुणौ इति ।

कुवलय● तव कीर्तिः कुवलयशोभां जयति तत्र किं वैलक्षण्यम्? कीर्तिर्हि सूर्यविकसितकमलाज्जाता रात्रिविकासिनः कुमुदस्य शोभां हरतीति स्वभाव एव । लोकनमनीयपदकमलाज्जाता उत्कृष्टा कीर्तिर्भूमण्डलस्यापि शोभां हरेदेव । निदानम् आदिकारणम्, क्यजन्ताद् नमस्यधातो यप्रत्यये टापि स्त्रीलिङ्गो नमस्याशब्दः, लोकैर्नमस्या पूजा यस्यैवंभूतम् अङ्घ्रिरेव पङ्कजं यस्य तस्मात् । समालङ्काराय कीर्तिलक्ष्म्योः कमलजातत्वं पर्याप्तम् । कुवलयेत्यत्र श्लेषः, कीर्तेः कारणं राजा, परमत्र पङ्कजनिदानत्वे तात्पर्यम्, पादापेक्षया पङ्कजस्यात्र प्रकृते उपयोगः, कुवलयलोकयोः कमलशोभालोकलक्ष्म्योश्चात्रा-भेदाध्यवसायः । यथा कमलम् अन्यां शोभां हरति तथा कमलाज्जाता कमलसमानशीला कीर्तिरपीति कार्यकारणयोः समानगुणकत्वस्योदाहरणम् । अथवा कीर्तेर्निदानं राजा तत्कीर्तिकार्यस्य च समानगुणकत्वं विवक्षितम् ।

'मन्त्रार्पितहविर्दीप्तहुताशनतनूभुवः ।
शिखास्पर्शेन पाञ्चाल्याः स्थाने दग्धः सुयोधनः ॥'

पूर्वं कारणकार्यधर्मयोः श्लेषेणैक्यसंपादनम्, इह तु मरणदाहयोरभेदाध्यवसानरूपेणातिशयेनेति विशेषः ।

द्वितीयो भेदो यथा—

'वडवानल-कालकूट-लक्ष्मी-मकर-व्यालगणैः सहैधितः ।
रजनीरमणो भवेन्नृणां न कथं प्राणवियोगकारणम् ॥'

लक्ष्मीरप्यत्र मारकत्वेनैव कवेर्विवक्षिता ।

तृतीयो यथा—

नितरां धनमाप्तुमर्थिभिः क्षितिप त्वां समुपास्य यत्नतः ।
निधनं समलम्भि तावकी खलु सेवा जनवाञ्छितप्रदा ॥'

---

लोकजयित्वं कीर्तौ लोकनमनीयचरणकमलत्वेन राजनि च । कुवलयलक्ष्मीपदे श्लेषेण लोककुमुदशोभयोरैक्यम् । कृत्यप्रत्ययान्तवन्नमस्यशब्दव्याख्यानं न सम्यक् प्रतिभाति ।

**मन्त्रार्पित●** मन्त्रैरर्पितेन हविषा दीप्ताद् हुताशनादग्नेस्तन्वाः भूरुत्पत्तिर्यस्याः पाञ्चाल्या द्रौपद्याः चूडास्पर्शेन दुर्योधनः दग्धः स्थाने युज्यते । द्रौपद्या हुताग्नेः समुद्भवः पौराणिकः । केशकर्षणञ्च तस्या महाभारतीयं प्रसिद्धमेव । दाहगुणकादग्नेर्दाहगुणिकायाः द्रौपद्याः कार्यस्य समुद्भवो वर्णितः ।

**वडवानल●** वडवाग्नि-विष-लक्ष्मी-ग्राहादिसर्पगणैः सह वृद्धिंगतः परिपोषितो वा रजनीरमणश्चन्द्रो विरहिजनानां प्राणविनाशकारणं कथं न भवेत् ? सहवासिनः समे प्राणहारकाः, अतश्चन्द्रोऽपि तथा युज्यते इति द्वितीयस्योदाहरणम् । एधित इति कर्तरि क्तप्रत्ययान्तः ।

**नितराम्●** हे राजन् अधिकं धनं प्राप्तुम् इच्छुभिः प्रयासेन त्वां संसेव्य निधनम् अधिकं धनं सम्प्राप्तम् । तव इयं तावकी सेवा जनवाञ्छितस्य प्रदायिनी खलु । बहुधनोद्देशेन प्रयासो बहुधनप्राप्तिश्चेति समालङ्कारः ।

[ अत्र मरण–बहुधनयोः श्लेषेणैक्ये बहुधनरूपेष्टात्मना वाञ्छितार्थाप्तिरूपसमालङ्कारचमत्कारः । ] अत्र व्याजस्तुतौ मुखे धनप्राप्तिरूपस्तुतिस्फूर्तिदशायां समालङ्कारस्तावदप्रत्यूह एव । मरणप्राप्तिप्रतीतिदशायां तु व्याजस्तुतेरेव पूर्णाङ्गतया तया विषमालङ्कारो बाध्यते ।

यत्तु कुवलयानन्दकृता—

'उच्चैर्गजैरटनमर्थयमान एव
त्वामाश्रयन्निह चिरादुषितोऽस्मि राजन् ।
उच्चाटनं त्वमपि लम्भयसे तदेव
मामद्य नैव विफला महतां हि सेवा ॥'

---

निधनपदे श्लेषेण मरणस्फूर्तौ स्तवव्याजेन निन्दायां व्याजस्तुतिः । लभेः कर्मणि चिणि नुमागमे समलम्भीति । तावकीत्यत्र अणन्तात् ङीप् । गद्ये अत्रेतश्चमत्कारपर्यन्तः कोष्ठगतः पाठः सर्वत्र पुस्तके वास्ति, अतोऽत्र मूलपाठो यथावन्न प्रतिभाति । अस्य कोष्ठगतस्य स्वीकारे पुनरग्रे 'अत्र' इति पाठोऽनावश्यकः । किञ्च 'स तावदप्रत्यूह एव' तच्छब्देन परामर्शयुक्तः पाठः सम्यक् स्यात्, न तावत् पुनः समालङ्कारोल्लेख इति चिन्तनीयम् ।

ननु स्तुतिदशायां सम इव निन्दादशायाम् इष्टसमुद्योगान्निधनानिष्टप्राप्त्या विषमो विराजतामित्याशङ्क्य समाधत्ते **मरणप्राप्ति** ● बाधकत्वे हेतुः पूर्णाङ्गता । व्याजस्तुतिर्हि सम्पूर्णं विषयमाङ्गं गृह्णती चतुर्थपादार्थेन पूर्यते, विषमे चतुर्थपादस्य नापेक्षा, विषमस्य वस्तूनि व्याजस्तुतेरेवाङ्गानि । विषमेण पूर्णाङ्गता व्याजस्तुतेः । अतो नात्र विषमश्चमत्कारीति भावः प्रतिभाति । अग्रिमग्रन्थटीकाप्रटीकादिभिरेतादृशस्थले दीक्षितो विषमसंकरमभिप्रैतीत्यपि आयात्येव । स्तुतिदशायां निधनशब्दस्य बहुधनार्थकत्वे व्याजस्तुतेरनुदयात्-समालङ्कारो निर्बाधं विजृम्भते । निन्दादशायां समुदिता व्याजस्तुतिः स्फुरन्तमेव विषमं शमयति ।

**उच्चैर्गजै** ● अधिकरणशक्तिप्रधानस्याव्ययस्य ग्रहणे उन्नतपर्वतादिस्थानेऽर्थः । अनव्ययस्य विशेषणपरकस्य ग्रहणे उन्नतैर्गजैरित्यादिरर्थः ।

इत्युदाहृत्य, 'अत्र व्याजस्तुतौ यद्यपि स्तुत्या निन्दाभिव्यक्तिविवक्षायां विषमालङ्कारः, तथापि प्राथमिकस्तुतिरूपवाच्यकक्षायां समालङ्कारो न निवार्यते' इत्युक्तम्। तत्रोदाहरणे मामुच्चाटनं लम्भयसे इति द्विकर्मकत्वं कथम्? 'गति' आदिसूत्रस्य प्राचीनरीत्या नियमविधित्वपक्षे लभेरण्य-

---

भ्रमणं कामयमान एव हे राजन् त्वाम् आश्रयम् आधारं शरणं वा कुर्वन् इह तव शरणे चिराद् वसामि, वस्धातोः क्तप्रत्यये सम्प्रसारणे उषित इति। त्वम् अत्र माम् तदेव उच्चाटनम् उच्चभ्रमणं लम्भयसे प्रापयसि, लभेर्णिचि नुमि रूपम्, द्विकर्मकम्, अहं लभे त्वं प्रेरयसि, अण्यन्तस्य कर्तुरस्मदर्थस्य ण्यन्ते कर्मसंज्ञा। तदेव पदस्वारस्यादुभयत्र उच्चेति अनव्ययमेव सम्यक् प्रतिभाति। निन्दायाम् उच्चाटनमित्यस्य वैरस्यपूर्वकं विद्रावणमर्थः। हि यतः महतां सेवा विफला नैव।

विषमालङ्कार॰ अर्थिन आश्रितस्य आशाभङ्गविद्रावणाभ्यां संसर्गोऽननुरूपः निवार्यते॰ प्रार्थितप्राप्तयोः शब्दैक्येन समानतया, अनुरूपवस्तुप्राप्तेश्च। चतुर्थपादार्थः पक्षद्वयेऽपि समन्वेति, निन्दा च महत्त्वाभावाभिव्यञ्जनया।

द्विकर्मकत्वं कथम्॰ ण्यन्तस्य धातोर्हि द्विकर्मकत्वं गतिबुद्धिप्रत्यवसानेत्यादिसूत्रेणैव, न तु अकथितञ्चेत्यनेन, अन्यथा पाचयत्योदनं देवदत्तेनेत्यादेरपि द्विकर्मकत्वापत्तेः। गतिबुद्धीत्यादिनियमेन यथा कर्तुरीप्सिततमेत्यादिविहिता कर्मसञ्ज्ञा निवार्यते, तथा अकथितञ्चेति सूत्रविहिताऽपि। अन्यथा पाचयतेर्योगेऽपि तदापत्तेः। एतेन 'संयोगानुकूलव्यापारो लभेरर्थः, णिजर्थस्य अनुकूलव्यापारस्य योजने वहेः समानार्थकः। धात्वर्थव्यापाराश्रयस्य मामित्यस्य अकथितञ्चेत्यनेन कर्मसंज्ञा, गत्यादिनियमश्च पाचयत्योदनं देवदत्तेनेत्यादिव्यावृत्त्या चरितार्थः? इत्यादिमर्मप्रकाशाग्रहः परास्तः। नियमेन पाचयतेर्व्यावृत्तिर्न लम्भयतेरत्र विनिगमकाभावात्। अत एव माघकवेः सितं सितिम्ना सुतरामित्यादौ न द्विकर्मकत्वम्। किञ्च विधित्ववादिनयेऽत्र कर्तरि तृतीया प्राप्ता, तदानीं कर्तृत्वाविवक्षायामेव कर्मसञ्ज्ञा मर्मप्रकाशेन साधनीया, तथा च अपादान-सम्प्रदानाधिकरणानामेव प्राप्तिस्थलेऽकथित-

न्तकर्तुः कर्मत्वस्य व्यावर्तनात् । यदा तु—

परत्वादन्तरङ्गत्वादुपजीव्यतयापि च ।
प्रयोज्यस्यास्तु कर्तृत्वं गत्यादेर्विधितोचिता ॥'

इति नवीनरीत्या अपूर्वविधित्वमुच्यते, श्रौतं णिजन्तार्थक्रियायाः प्राधान्यमुत्सृज्याऽऽर्थं पूर्वक्रियाया एव प्राधान्यमनुरुध्यते, तदा त्वप्रसक्तिरेवेति । उच्चाटनं मया लम्भयसे इति तु भाव्यम् । एवमपि लभेर्यथाकथञ्चिद् गत्यर्थतां संपाद्य प्रयोग उपपाद्यते, तथापि 'प्राथमिककक्षायां समालङ्कारो न

---

कर्मसञ्ज्ञा, न तु करणादीनामिति शब्देन्दुशेखरविरोधं सहमानः स्फुटमाग्रहिल इत्याशयेन सामान्यकर्मत्वं व्यावर्तयति कर्मत्वस्य● नियमाकारश्च णिजर्थव्यापारप्रयोज्यधात्वर्थव्यापाराश्रयस्य कर्मसञ्ज्ञा चेत्, गतिबुद्ध्यादिधात्वर्थव्यापाराश्रयस्यैव । महानस्य विचारविषयो व्याकरणग्रन्थेनैव जिज्ञासुभिरवसेयः । अत्र विवेचने विस्तरः कोमलमतीनां विरसश्च स्यात् । एवं नियमरीत्या व्यवस्थाप्य अपूर्वविधिमतमुपस्थापयति **परत्वाद●** कर्मसंज्ञातः कर्तृसञ्ज्ञायाः परत्वात् । कर्मसञ्ज्ञा णिजर्थव्यापाराश्रयकर्तुरीप्सिततमत्वमपेक्षते, कर्तृसञ्ज्ञा च न णिजर्थव्यापारमाश्रयत इति **अन्तरङ्गा,** तथैव कर्तृसञ्ज्ञा उपजीव्यापि णिजर्थव्यापाराश्रयस्य कर्तृसञ्ज्ञायां जातायामेव कर्तुरिष्यमाणस्य कर्मसञ्ज्ञा स्यादिति कर्तृसञ्ज्ञा कर्मसञ्ज्ञामुपजीवयति । प्राचीननव्यमतनिष्कर्षं प्रदर्शयति **श्रौतं●** शाब्दबोधे धात्वर्थव्यापारस्य विशेष्यतया णिजर्थव्यापारो भासते, अतो णिजर्थव्यापारस्य शाब्दं श्रौतं प्राधान्यम्, तमपेक्षमाणा कर्मसञ्ज्ञा बलवतीति नियमवादिनो बलम्, णिजर्थक्रियायाः प्रयोजनमर्थो धात्वर्थव्यापारः, अतो धात्वर्थव्यापारस्य आर्थं प्राधान्यम्, प्रयोजनं हि सर्वापेक्षया बलवत् । तेन धात्वर्थव्यापारापेक्षिणी कर्तृसञ्ज्ञा बलवती इति अपूर्वविधिवादिबलम् । तदा बलवत्या कर्तृसञ्ज्ञया बाधात् कर्मसञ्ज्ञाया अप्रसक्तिरेव । नियमवादिमते तु प्राप्तायाः कर्मसञ्ज्ञाया नियमेन वारणमिति विशेषः । प्रकृते तु समानमेव फलम्, कर्तृतृतीया । कथञ्चित् समाधानं स्वयमारचयति **एवमपि लभे●** वहिर्गत्युपसर्जनकप्रापणार्थकः । तस्य गत्यर्थतामाश्रित्य गतिबुद्धीत्यादिसूत्रप्राप्ता 'नीवह्योर्न' इति वार्त्तिकेन निराक्रियते यथा तथा प्रापणार्थकस्य लभेरपि गत्यर्थतामाश्रि-

निवार्यते' इत्यनेन 'द्वितीयकक्षायां विषमालङ्कारोऽस्तु नाम' इत्यागूरितमसदेव, तादृशवैषम्यस्य निन्दारूपस्य व्याजस्तुतिविषयत्वेन तयापवादस्यैव न्याय्यत्वात्। न च वैपरीत्यम्, परिपूर्णचमत्कारभूमेर्व्याजस्तुतेस्तवाप्यनपह्नवात्।

संयोगादिलक्षणस्यानुरूपता द्वेधा—स्तुतिपर्यवसायिनी निन्दापर्यवसायिनी च।

आद्या यथा—

'अनाथः स्नेहार्द्रां विगलितगतिः पुण्यगतिदां
पतन्विश्वोद्धर्त्रीं गदविदलितः सिद्धभिषजम्।
तृषार्तः पीयूषप्रकरनिधिमत्यन्तशिशुकः
सवित्रीं प्राप्तस्त्वामहमिह विदध्या समुचितम्॥'

---

त्येत्यर्थः। यद्यप्यन्यत्र वहिर्न गत्यर्थ इत्यप्युक्तम्, तथापि सूत्रवार्तिकरीत्या सम्पादनीयम्। यद्यपि 'न वेति विभाषा' इति सूत्रे हरति भारमित्यत्राप्राप्तौ 'हृक्रोरन्यतरस्याम्' इति विभाषेति भाष्योक्तेर्न यथाकथञ्चिद् गत्यर्थस्य ग्रहणमायाति तथापि प्रापणार्थभिन्नहरतिप्रभृति प्रासङ्गिकमिति कृत्वा सन्तोष्टव्यम्।

इत्यागूरि● आगूरितम् अनुक्तमपि अभिप्रेतम्। विषयत्वेन● तादृशवैषम्यं विना व्याजस्तुतेः पर्यवसानं न स्यात्। न्याय्यत्वात्● इष्टार्थसमुद्यमादनिष्टप्राप्तिरूपविषमेण तु निन्दाया अवश्यं प्रसञ्जनात्। अथवा अपवादशब्दो बाधकपरः। वैषम्यं पद्यस्य सम्पूर्णांशान् न व्याप्नोति, चतुर्थपादार्थस्य तत्रानुपयोगात्। अतो न कवेरभिप्रेतम्. सर्वान् अंशान् व्याप्नुवाना व्याजस्तुतिश्चतुर्थपादार्थाभिनिवेशिनः कवेस्तात्पर्यविषयः। चमत्कारिणा भूषणेन साकं शरीरे वर्तमानोऽपि अलङ्कारोऽभिभूतो न नायिकाङ्गमलङ्करोति। एवं विषमो व्याजस्तुत्या कुक्षौ कृतः काव्यशरीरं सम्पादयन्नपि वस्तुभूतो नालङ्कारः। अयं सर्वोऽप्यभिप्रायः परिपूर्णपदस्वारस्यादायाति। एतेन 'परस्परविषयपरिहारेण' सावकाशत्वात् संकर एवोचित इति मर्मप्रकाशार्थिश्चिन्तितः। प्रकृते परिहृतविषयाभावश्चेत्यलमतिविस्तरेण। अनाथः स्नेहार्द्रां● गङ्गां प्रतिभक्तस्योक्तिः। इह संसारे अहं त्वां प्राप्तः, पादत्रयोक्तः

अनाथत्वादिविशिष्टस्य स्नेहार्द्रत्वादिविशिष्टेन संसर्गस्यानुरूपता भागीरथीस्तुतिपर्यवसायिनी ।

द्वितीया यथा—

'युक्तं सभायां खलु मर्कटानां शाखास्तरूणां मृदुलासनानि ।
सुभाषितं चीत्कृतिरातिथेयी दन्तैर्नखाग्रैश्च विपाटितानि ॥'

अत्राप्रस्तुतगतत्वेन स्थिता निन्दा तदाक्षिप्ते प्रस्तुते पर्यवस्यति ।

एवं यथा विषमालङ्कारस्त्रिभेदस्तथा तद्विपरीतभेदत्रययुक्तः समालङ्कारोऽपि प्रपञ्चितः ।

यत्तु—'विरूपकार्यानर्थयोरुत्पत्तिर्विरूपसंघटना च विषमम्' इति विषमालङ्कारं लक्षितवता 'तद्विपर्ययः समम्' इति समालङ्कारं लक्षयित्वा—"तत्पदेनात्र विषमालङ्कार-

---

प्रथमान्तोऽहमो विशेषणम् द्वितीयान्तश्च त्वामित्यस्य, प्रथमान्तार्थो यादृशगुणकस्तदनुकूलगुणको द्वितीयान्तार्थः । अनाथत्वस्य अनुकूलं स्नेहार्द्रत्वं वात्सल्यपूर्तिः, सद्गतिरहितस्य स्वर्गमोक्षदात्री अनुकूला, सन्मार्गादधोगच्छन् सकलोद्धारविधायिन्याऽनुगृह्यते, रोगविशीर्णस्य अनुग्राहकं सिद्धमवश्यफलदम् औषधम्, पिपासाकुलः सुधासमूहसमुद्रेण सञ्जीव्यते, अत्यन्तबालं हि माता अनुगृह्णाति । स्यानुरूप● अनुकूलता, सद्गुणानिकरेण स्तुतिः पर्यवस्यति । युक्तं सभायाम्● वानराणां सभा वर्ण्यते । तत्र तेषां स्वाभाविकगुणक्रियाणां वर्णनम्, तदप्रस्तुतम्, तस्य प्रयोजनाभावात् । प्रस्तुतञ्च अशिक्षितानां कलहशीलानां समुद्धतानां समावृत्तम् । यथा पात्रं तथा दानमिति रीत्या वर्णनम् । कोमलम् आसन तरूणां शाखा, सुभाषितं नीतिप्रभृतीनां व्याख्यानं चीत्कारः, दन्तैर्नखैश्च कर्तनं छेदनञ्च अतिथिसत्कारः, अतिथि ढक् ङीपः ।

विरूप● विरूपस्य समवायिकारणेनासदृशस्य कार्यस्योत्पत्तिः प्रथमः । इष्टसमुद्यमाद् अनर्थस्य अनिष्टकार्यस्योत्पत्ति द्वितीयः । विरूपपदादेवैता-

संबन्धी विरूपसंघटनारूपश्चरम एव भेदो गृह्यते। तद्विपर्ययस्यैव चारुत्वात् 'न त्वाद्यभेदद्वयम्' तद्विपर्ययस्य कारणादनुरूपकार्योत्पत्तिरूपस्य, वाञ्छितार्थप्राप्तिरूपस्य च वस्तुसिद्धतया चारुताविरहात्। एवं चानुरूपसंघटनात्मक एव समालङ्कारः। न तु विषमालङ्कार इव भेदत्रयात्मकः" इत्यलङ्कारसर्वस्वकृतोक्तम्। विवेचितं च विमर्शिनीकृता—'कारणादनुरूपकार्योत्पत्तिर्हि लोकप्रसिद्धा। नहि तस्या उपनिबन्धश्चारुतामावहति' इति। तदुभयमसत्। वस्तुतोऽननुरूपयोरपि कार्य-कारणयोः श्लेषादिना धर्मैक्यसंपादनद्वाराऽनुरूपतावर्णने वस्तुतोऽनिष्टस्यापि तेनैवोपायेनेष्टैक्यसंपत्ताविष्टप्राप्तिवर्णने च चारुताया अनुपदमेव दर्शितत्वात्। तस्मात् सममपि त्रिविधमेव।

इति रसगङ्गाधरे समालङ्कारनिरूपणम्

---

दृशोऽर्थो ध्वन्यते। असदृशयोरयोग्ययोस्सम्बन्धस्तृतीयः। विरूपयोः संघटना असदृशयोः सम्बन्धः। वस्तुसिद्धतया ● कविप्रतिभाया अनुपयोगात्। सत्यं वस्तुस्वरूपयोस्तयोर्नालङ्कारः, परं कवेरचनाविशेषे वैचित्र्यसम्पन्ने नूतने कविप्रतिभायाः समुपयोगात् समालङ्कारः संभवतीत्याशयेनाह तदुभयम् ● मूलं व्याख्यानञ्च। वैचित्र्यं विना विरूपसंघटनाऽपि नालङ्कार इति विषमे प्रतिपादितम्। वैचित्र्यमेव दर्शयति धर्मैक्य ● अननुरूपयोरपि यत्र अनुरूपतावर्णनम्, न च व्याहतम्, उभयोरैक्यसम्पादनात्। ऐक्यम् अभेदाध्यवसायञ्च सम्पादयन्ति श्लेषादयः, शब्दैक्यादर्थैक्यस्यारोपात्। यथा कुवलयलक्ष्मीं हरते इत्यादौ कार्यकारणयोः कीर्तिकमलयोर्धर्मस्य कुवलयलक्ष्मीहारकत्वस्य श्लेषेणैक्यसम्पादनम्। नितरां धनम् इत्यादौ इष्टस्य बहुधनस्य अनिष्टस्य च मरणस्य ऐक्यसम्पादनम्। तेनैव श्लेषादिनैव।

॥ इति समालङ्कारनिरूपणम् ॥

**अथ विचित्रालङ्कारः—**

**इष्टसिद्ध्यर्थमिष्टैषिणा क्रियमाणमिष्टविपरीताचरणं विचित्रम् ।**

**विपरीतत्वं च प्रतिकूलत्वम् ।**

**यथा—**

**'बन्धोन्मुक्त्यै खलु मखमुखान्कुर्वते कर्मपाशा-**
**न्न्तःशान्त्यै मुनिशतमतानल्पचिन्तां वहन्ति ।**
**तीर्थे मज्जन्त्यशुभजलधेः पारमारोढुकामाः**
**सर्वं प्रामादिकमिह भवभ्रान्तिभाजां नराणाम् ॥"**

---

अथ विचित्रालङ्कारनिरूपणम्

**इष्टसिद्ध्य●** इष्टफलप्राप्तये तत्फलेच्छुना तदिष्टफलाननुकूलाचरणमित्यर्थः । तत्फलेच्छया तत्फलविरुद्धफलजनकमाचरणमिति यावत् । प्रतिकूलत्वं तद्विरुद्धफलजनकत्वम् । **बन्धोन्मुक्त्यै●** जन्ममरणपरम्परा बन्धः । यज्ञादिकर्माणि न बन्धविमोचकानि, प्रत्युत 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इत्यादिशास्त्ररीत्या कर्मणां भोगः, भोगात्पुनः कर्म, इति जन्ममरणपरम्परा आपतत्येव, अतो मुक्तेर्विरुद्धफलं बन्धस्तज्जनका यज्ञप्रधानाः कर्मपाशाः । शास्त्रैकसिद्धस्यास्य यथाशास्त्रं फलव्यवस्थया 'तमेतं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यादिशास्त्रेण विविधाचार्यव्याख्यानेन च यज्ञादिकर्मणां साक्षात्परम्परया ब्रह्मज्ञाने उपयोगो ब्रह्मज्ञानञ्च मुक्तिं सम्पादयति, मुक्तिश्च बन्धनिवृत्तिरूपेति विरोधनिवृत्तिः । अन्तःकरणे शान्तिश्चिन्ताविरहेण । असंख्यमुनिमतानां बहुविधचिन्ताया धारणं शान्तिविरुद्धफलजनकम् । मुनिमतच्चिन्ता अध्यात्मविचारः, चिन्तामूलं विनाशयन् स्वयमपि विनश्यतीति विरोधनिवृत्तिः । पापसमुद्रात् पारम् आरोढुं कामानां तीर्थे निमज्जनं विपरीतफलजनकम् निमज्जनं हि अधोगमनस्योपायो न तु परारोहस्य, पुण्यकर्मणा हि निमज्जनेन पापराशेर्विलयेन पापसमुद्रात् सुखेन परारोह इति विरोधापगमः । सांसारिकमिथ्याज्ञानविह्वलानां नराणां सर्वं कर्म जगति प्रमादाद् मनसोऽनवधानाद् जायते । प्रमादाज्जातं प्रामादिकम् । पाशो हि बध्नाति न कर्म, तदा कर्मणां कथं बन्धफलकत्वमिति

अत्र प्रथमचरणगतं विचित्रं रूपकानुप्राणितम्, यज्ञादिकर्मकरणस्य यज्ञादीनां पाशत्वासिद्धौ बन्धमुक्तिविपरीतत्वासंगतेः । द्वितीयचरणगतं तु शुद्धम्, शान्तौ चिन्तायाः स्वरूपेणैव विपरीतत्वात् ।

यदि तु इष्टैषिणो भ्रान्तत्वाभिव्यक्तेस्तुल्यत्वात्स्वतः सिद्धे इष्टे तदनुकूलाभासप्रयोगोऽपीष्टैषिकर्तृको विचित्रमित्युच्यते, लक्षणे च विपरीतपदस्थानेऽननुकूलपदं न्यस्यते, तदा इदमप्युदाहरणम् । यथा—

'विष्वद्रीचा भुवनमखिलं भासते यस्य धाम्ना
सर्वेषामप्यहमयमिति प्रत्ययालम्बनं यः ।
तं पृच्छन्ति स्वहृदयगतावेदिनो विष्णुमन्या-
नन्यायोऽयं शिव शिव नृणां केन वा वर्णनीयः ।।'

---

**रूपकानु●** अन्यथा पाशत्वासिद्धिः । मुक्तिविरीतं बन्धः । तथा च कर्मसु पाशतादात्म्यारोप आवश्यकः । ननु मुमुक्षोर्मुक्तिविरुद्धबन्धफलककर्मकरणं भ्रान्त्यधीनमिति तादृशलक्षणमेव निर्मातुमुपक्रमते **भ्रान्तत्वाभि●** इष्टं स्वतः सिद्धम्, यथाऽग्रिमपद्ये हृदयसाक्षिकं ब्रह्म, न च सिद्धस्य कश्चिदनुकूलो जनको वा भवति, क्वचिदनुकूलतया प्रयुक्तोऽपि वस्तुतोऽननुकूलतया भासते, तादृशस्थलेऽपि विचित्रालङ्कार इष्यते चेत्, तर्हि इष्टेच्छुकस्य इष्टेच्छया इष्टानुकूलाभासप्रयोगो विचित्रमिति लक्षणं फलति । पूर्वलक्षणे सिद्ध्यर्थमिति निवेशो वर्तते । न च स्वतः सिद्धेष्टे तल्लक्षणं प्रवर्तयितुं शक्यते, सिद्धस्यानुकूलत्वाभावेऽपि अनुकूलाभासस्तु संभवतीति इदं लक्षणं संप्रवर्तते ।

**विश्वद्रीचा●** यस्य विष्णोः सर्वत्रव्यापिना स्वयंप्रकाशेन स्वात्मकचैतन्यतेजसा अखिलं भुवनं भासते सर्वोऽपि अयं विष्णुरहमेवेति प्रत्येति, तादृशप्रतीतेर्विषयो विष्णुः । समेषां हृदये स्थितः, मनसैवानुद्रष्टव्यमित्यादिश्रुत्यनुसारम् अन्तःकरणवृत्तौ चैतन्यमभिव्यज्यते इति रीत्या सर्वगतस्य हृद्गतत्वम् । एवं स्वमनोगोचरमपि विष्णुं ये न विदन्ति अन्यांश्च पृच्छन्ति,

अत्र जीवरूपेण सकललोकप्रत्यक्षसिद्धस्य परमेश्वरस्य प्रतिपत्त्यर्थं परान् प्रति प्रश्नोऽनुकूलाभासः। मुख्यमनुकूलं तु स्वहृदयमेव। 'यत्साक्षादपरोक्षात्' इति वचनात्।

न च कारणाननुरूपं कार्यमिति। विषमभेदोऽयं वाच्यः,

---

अयं नराणां क्रमः अन्याय्योऽनुचितः। अज्ञानविनाशं विना केन वारणीयः, यावदज्ञानं स्थास्यत्येव। इति संक्षेपतोऽर्थः। 'न तद्भासयते सूर्यो न शशाङ्को न पावकः। नेमा विद्युतो भान्ति कुतोऽयमग्निः॥ 'तस्य भासा सर्वमिदं विभाति' इत्यादिश्रुतिगीतार्थः प्रथमपादेन गृहीतः। शिव शिवेत्यज्ञान-खेदातिशयः। विष्णुर्व्यापकश्चेतन एक एव आत्मा, भेदे मानाभावाद् गौरवाच्च, आत्मभेद औपाधिकः, अन्तःकरणावच्छिन्नं चैतन्यं जीवः, तस्य आत्मा-विष्णुरेव चेतनः, चैतन्यमन्तरा चक्षुरादितेजांसि न प्रकाशयन्ति अतश्चैतन्य-मेव सर्वभासकम्, अहं प्रत्ययस्य जीवो विषयश्चेद्विष्णुरपि विषयः, अय-मित्यादिप्रतीतिविषयो घटादिरपि विष्णुरेव, घटः सन्नित्यादौ सदंशस्य विष्णु-रूपत्वात्, लाघवात् सत्ता एकैव ब्रह्मरूपा, घटत्वोपाधिकः सदंशो विष्णुरेव। रूपाद्यभावेन चक्षुराद्यविषयत्वाद्धृदयेनैव वेदितव्यस्य विष्णोर्हृदयं स्थानम्। अहमि कस्यापि संशयविपर्ययौ न भवत इति विष्णोरपि संशयविपर्ययाभाव-सूचनया महाश्चर्यं पोष्यते। विष्वगञ्चता सर्वव्यापिना विष्वद्रीचा विषुर-व्ययो व्याप्तौ विषु अञ्चु टा टेरद्रिरादेशः, प्रतीचा उदीचा यथा लघुकौमुद्यादौ साध्यते तथाऽस्य सिद्धिः। 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' इति पाणिनि-सूत्रम् अद्र्यादेशविधायकम्। गद्ये अनुकूलाभास इत्येव पाठो विशेषसम्मतः। कुत्रचिद् अनुकूलाभासः पाठः खण्डित उपलभ्यते। साक्षाद् ● इन्द्रियाद्यन-धीनप्रत्यक्षस्वभावम्।

केचनेदं विषमेऽन्तर्भावयन्ति कौस्तुभकृताऽपि विषमप्रकरणे तथोच्यते, बन्धोन्मुक्त्यै इत्यादिपद्यविषये 'उन्मुक्तिपाशयोः कार्यकारणभावानुपपत्ति-सत्त्वात्' लिख्यते च। ननु विचित्रेऽपि कार्यकारणभावानुपपत्तेः सत्त्वाद-किञ्चित्करं प्रतिभाति। सर्वेषां खण्डनाय प्रक्रमते न च कारणाननुरूप ●। पुरुषकृतेः पुरुषयत्नस्य। आचरणपदेन यत्नस्योपादानात्। द्वितीयलक्षणेऽपि

विषमे पुरुषकृतेरनपेक्षणात् । कार्यकारणगुणवैलक्षण्येनैव तद्भेदनिरूपणाच्च ।

इति रसगङ्गाधरे विचित्रालङ्कारनिरूपणम् ।

अथाधिकालङ्कारः—

आधाराधेययोरन्यतरस्यातिविस्तृतत्वसिद्धिफलकमितरस्यातिन्यूनत्वकल्पनमधिकम् ॥

---

अनुकूलाभासप्रयोगो वर्तते तत्रापि पुरुषयत्न आयाति । वैलक्षण्येनैव● विषमे कार्यकारणयोः गुणकृतं स्वरूपकृतं वा वैलक्षण्यमात्रमपेक्षितम् । विचित्रे तु कार्यविरुद्धफलानुकूलप्रयास इति स्फुटो भेदः ।

यद्यस्यापि वैषम्येन संग्रहस्तदा सर्वेषां विरोधमूलानामेकस्मिन् संग्रहः क्रियतां को वारयिता । इदमुपलक्षणं भ्रान्तत्वविशेषोऽपि प्रयोक्तरि पुरुषे भासते । विषमे तस्य नापेक्षा । सर्वस्वग्रन्थेऽप्येवम्, स्वनिषेधप्रतीतेः । विपरीतप्रतीत्या तु स्वनिषेधो विभ्रमस्य विषयः । यथा तमालनीलाशरदिन्दुपाण्डुयशस्त्रिलोक्याभरणं प्रसूते'त्यादि । इह तु अन्यथा प्रतीतिरिति । विमर्शिन्यामपि 'नीलयाऽपि पाण्डुयशः प्रसूतमिति विपरीतप्रतीतिबलादेतन्नोपद्यते इति ह्यत्र प्रतीतिः । अन्यथेति निषेधबलाद्विपरीतप्रत्यय इति । किञ्च विषमे विरूपस्य कारणबलात् स्वयमेवोत्पत्तिरिह च तन्निष्पतये प्रयत्न इति ।

॥ इति विचित्रालङ्कारनिरूपणम् ॥

अधिकालङ्कारनिरूपणम्

आधारा● आधारस्य अतिविस्तारसाधनाय आधेयस्य अतिन्यूनताकल्पनम् । एवम् आधेयस्य अतिविस्तारसाधनाय आधारस्यातिन्यूनताकल्पनम् अधिकनामालङ्कार इति लक्षणवाक्यस्य सरलार्थः ।

यथा—

'लोकानां विपदं धुनोषि तनुषे संपत्तिमत्युत्कटा-
मित्यल्पेतरजल्पितैर्जडधियां भूपाल मा गा मदम् ।
यत्कीर्त्तिस्तव वल्लभा लघुतरब्रह्माण्डसद्मोदरे
पिण्डीकृत्य महोन्नतामपि तनुं कष्टेन हा वर्तते ॥'

अत्र ब्रह्माण्डस्यातिसूक्ष्मत्वकल्पनेन कीर्त्तेराधेयायाः परममहत्त्वं फलितम् । तेन च व्याजस्तुतिः परिपोष्यते ।

'गिरामविषयो राजन् विस्तारस्तव चेतसः ।
सावकाशतया यत्र शेते विश्वाश्रयो हरिः ॥'

अत्र सावकाशतयेत्यनेन कल्पितया आधेयन्यूनतया आधारस्य महत्त्वं पर्यवस्यति ।

यदि तु सावकाशतयेति विशेषणं विश्वाश्रय इत्यत्रापि योज्यते, तदा शृङ्खलारूपस्याधाराधिकालङ्कारस्येदमेवोदाहरणम् ।

---

राजानं कविर्व्याजेन प्रशंसति लोकानां ● जडबुद्धिमतां बहुकथनैः गर्वं मा कुरु इति वाच्या निन्दा, तत्रोक्तम् उत्तरार्धवाच्यं कीर्तेः कष्टेन वर्तनम्, न्यूनस्य ब्रह्माण्डाधारस्य कल्पनया प्रियकीर्तेः अतिविस्तारसिद्धया स्तुतिर्व्यज्यते । अधिकालङ्कारेण परिपोष्यते ।

गिराम● महाभक्त इति व्यज्यते । तव चेतसो विस्तारो वाचा न वर्णयितुं शक्यते, अतो महामनाः, तेन विश्वस्य अवकाशयुक्त आश्रयो हरिस्तव मनसि वर्तते । चेतसि हरिर्यदि सावकाशस्तदा आधेयो हरिर्न्यूनश्चेतश्च महद् । इत्येव वर्णयति अत्र सा● ।

यदि तु● हरौ विश्वं सावकाशम्, तेन विश्वमपेक्ष्य हरेराधारस्य विस्तारः, हरेरपेक्षया चेतस आधारस्य विस्तार इति शृङ्खला फलति ।

'ब्रह्माण्डमण्डले मान्ति न ये पिण्डीकृता अपि ।
परम्परापरिचिता वसन्ति त्वयि ते गुणाः ॥'

अत्रोभयविधस्याप्यलङ्कारस्य सामानाधिकरण्यम् ।

लक्षणे कल्पनमित्यनेन यत्राधाराधेययोरन्यतरस्य न्यूनत्वमधिकत्वं च वास्तवम्, तत्र नातिप्रसङ्गः ।

एवं च—

'काहं तमो-महदहंखचराग्निवार्भू-
संवेष्टिताण्डघटसप्तवितस्तिकायः ।
क्वेदृग्विधाविगणिताण्डपराणुचर्या-
वाताध्वरोमविवरस्य च ते महित्वम् ॥'

इति श्रीभागवतदशमस्कन्ध(१४।११ गतं ब्रह्मस्तुतिपद्यमस्यालङ्कारस्यानुदाहरणमेव । दिक्कालानवच्छिन्नस्य परमेश्वरस्य भूम्नः सर्ववेदसिद्धत्वेन कविप्रतिभानुल्लिखितत्वात् ।

---

**ब्रह्माण्ड**● सर्वगुणशाली श्रीमान् इति वक्ति । ब्रह्माण्डापेक्षया महान्तो गुणा ये संकुचिता अपि न भान्ति, गुणान् अपेक्ष्य त्वं महान् यत्र त्वयि महति अवकाशे वर्तमानाः, अत एव परिचयहीनास्तिष्ठन्ति ।

**अत्रोभय**● आधेयस्य आधारस्य च महत्त्वं सिद्ध्यति ।

**काहम्**● श्रीमद्भागवतदशमस्कन्ध (१४।११) पद्यम् । एतैः संवेष्टितो ब्रह्माण्ड एव घटः । स च सप्तवितस्तिपरिमाणः, स एव शरीरं यस्यैवंविधोऽहं लघुः क्व ? प्रकृति-महद्‌अहङ्कार-आकाश-वायु-तेजः-जल-पृथिवीभिः संवेष्टितः, ते महित्वं च क्व ! इदृशानि अनन्तानि ब्रह्माण्डानि एव परमाणवः, तेषां भ्रमणाय वायुमार्गा गवाक्षा रोमविवराणि यस्य तस्य ते, अतोऽतितुच्छत्वात्त्वयाऽनुकम्पनीयोऽहमिति श्रीधराभिप्रेतो

एतेन—

'द्यौरत्र क्वचिदाश्रिता प्रविततं पातालमत्र क्वचित्
क्वाप्यत्रैव धरा धराधरजलाधारावधिर्वर्तते ।
स्फीतस्फीतमहो नभः कियदिदं यस्येत्थमेभिः स्थितै-
र्दूरे पूरणमस्तु शून्यमिति यन्नामापि नास्तं गतम् ॥'

इत्यलङ्कारसर्वस्वकारेण यदुदाहृतं तदपि प्रत्युक्तम् ।

इति रसगङ्गाधरेऽधिकालङ्कारनिरूपणम् ।

---

भावः । भूम्नो ब्रह्मणः । द्यौरत्र क्व ● कश्चिद् जगदधिष्ठानभूतस्य ब्रह्मणो वर्णनं व्याख्याति, अन्यश्च अलङ्कारकौस्तुभादिर्गगनवर्णनमेवावसाययति । ब्रह्मणः कृते शून्यं शब्दम् आस्तिका न रोचयन्ते, विमर्शिनी अपि उदाहरणं नाङ्गीकरोति । अस्यानुदाहरणत्वे कविप्रतिभाया अनुपयोग एव ग्रन्थसन्दर्भात् समायाति । अत्र अलङ्कारकौस्तुभः—पर महत्परिमाणे गगने वृत्तिनियामक-सम्बन्धेन वस्तूनां स्थितेरप्रसिद्धतया तथावर्णने कविप्रतिभासिद्धत्वमिति भवत्युदाहरणम् । अत्रेत्थं चिन्त्यताम्—गगने वस्तूनां वृत्तिवर्णने कवेस्तात्पर्यं गगनस्यातिमहत्त्ववर्णने वा ? प्रथमे असम्बन्धे सम्बन्धोऽतिशयो नाधिकस्य प्रसङ्ग इति कथमुदाहरणम् ? द्वितीये गगनस्य तादृशं महत्त्वं वस्तुसिद्धं न कविप्रतिभानिर्वर्तितमिति । अत्र द्यौः—गगनपक्षे अन्तरीक्षम्, अन्यत्र गगनं स्वर्गादिर्वा । धराधरस्य पर्वतमेघादेर्जलाधारः समुद्रोऽवधिर्यस्या सा धरा पृथ्वी । ब्रह्मवर्णने परममहत् परिमाणमपि नभ इदं कियत् ? अति क्षुद्रमर्थः । गगनवर्णने इदं नभः कियत् ? अनिर्णयपरिमाणम् अपरिमितमर्थः । वस्तु-हीनस्य स्थानस्य शून्यं नाम, अत्र तु सर्वाणि वस्तूनि सावकाशानि समासानि, तथापि वस्तुहीनं स्थानमिति नाम नास्तं गतम् ।

॥ इत्यधिकालङ्कारनिरूपणम् ॥

अथान्योन्यालङ्कारः—

द्वयोरन्योन्येनान्योन्यस्य विशेषाधानमन्योन्यम् ।

विशेषश्च क्रियादिरूपः, ।

यथा—

'सुदृशो जितरत्नजालया सुरतान्तश्रमबिन्दुमालया ।
अलिकेन च हेमकान्तिना विदधे कापि रुचिः परस्परम् ॥

अत्र गुणरूपविशेषाधानम्, रुचेर्गुणत्वात् । न च विधानरूपक्रियात्मकविशेषाधानमिह शङ्क्यम्, भावनासामान्यरूपस्य विधानस्याचमत्कारित्वेनाविशेषत्वात् ।

'परपूरुषदृष्टिपातवज्राहतिभीता हृदयं प्रियस्य सीता ।
अविशत् परकामिनीभुजङ्गीभयतः स्वरमेव सोऽपि तस्याः ॥'

अत्र क्रियारूपविशेषाधानम् ।

---

### अन्योन्यालङ्कारनिरूपणम

द्वयोरेको द्वितीये विशेषं करोति, द्वितीयोऽपि प्रथमस्य विशेषं करोतीति संक्षिप्तार्थः ।

क्रियादि● आदिपदेन गुणः सुदृशो● सुनयनायाः रत्नमालातोऽपि सुरतावसाने अधिकसुन्दरी श्रमस्वेदबिन्दुमाला सुवर्णवर्णेन ललाटेन रोचते, रत्नमाला यथा सुवर्णसंगता रोचते, न तथा लौहादिसंगता; सुवर्णमपि यथा रत्नमालया रोचते, न तथा लोहशृङ्खलया, सुवर्णमुत्तमस्थानं ललाटमपि तादृशस्वेदबिन्दुमालया उत्तमया रोचते । परस्परशोभावर्द्धनमिति भावः । भावना● यद्यपि रुचिविधानं विशेषः, तथापि लाघवाद् रुचिरेव तथास्तु । परपुरुष● सीतारामौ परस्परं परस्परस्य हृदयं प्राविशताम् । तत्र प्रथमे हेतुः—पतिव्रताया उपरि परपुरुषस्य दृष्टिपात एव वज्रेण आघातः, तस्माद् भीता सीता । द्वितीये हेतुः —एकपत्नीव्रतस्य परकामिनी व्रतभङ्गिनी विषभरा सर्पिणी, तस्या भयं रामस्य । पतिपत्न्योः परस्परं हृदये धारणं व्रतरक्षकमित्युपदिश्यते ।

यत्तु—

"—'यथोर्ध्वाक्षः पिबत्यम्बु पथिको विरलाङ्गुलिः ।
तथा प्रपापालिकापि धारां वितनुते तनुम् ॥'

अत्र प्रपापालिकायाः पथिकेन स्वासक्त्या पानीयदान-व्याजेन बहुकालं स्वमुखावलोकनमभिलषन्त्या विरलाङ्गुलि-करणतश्चिरं पानीयपानानुवृत्तिसंपादनेनोपकारः कृतः । तथा प्रपापालिकयापि स्वमुखावलोकनमभिलषतः पथिकस्य धारातनुकरणतश्चिरं पानीयदानानुवृत्तिसंपादनेनोपकारः कृतः" इति कुवलयानन्दकार आह, तन्न, तावदियं

---

प्रवेशक्रियाविशेषः । गाथासप्तशत्याः प्राकृतपद्यस्य संस्कृतमय उदाहरणम्— यथोर्ध्वाक्षः● पथिको यथा चिरं जलपानस्योपायं करोति तथा प्रपापालिकाऽपि चिरं पाययितुं धारां सूक्ष्मां कुरुते, नायिकामुखम् अवलोकयितुम् उर्ध्वे अक्षिणी यस्य स पथिकः । सर्वं जलं मुखे न यातु इति धिया अञ्जलौ विरलाः सावकाशा अङ्गुलयो यस्य सः । प्रपा पानीयशाला पनीसरेति लोकप्रसिद्धा, तस्याः पालिका जलदायिका पथिकप्रेमबद्धा नायिका । कुवलयानन्दपङ्क्तिः परिचाययति अत्र● पालिकाया इत्यस्य उपकार इत्यत्र सम्बन्धः, पथिकेनेति उपकारः कृत इत्यस्य कर्तृपदम्, उभयत्र स्वपदेन पथिकस्य परामर्शः । पथिकः स्वस्मिन्नासक्तायाः जलदानच्छलेन चिरं पथिकमुखावलोकनम् इच्छन्त्याः विरलाङ्गुलीकरणद्वारा बहुकालं पानीयदानानुवृत्तिकरणेन उपकारम् अकरोद् इति प्रथमवाक्यस्य सारल्यम् । तथेत्यादिद्वितीयवाक्येऽपि पालिकयेति उपकारः कृत इत्यस्य कर्तृपदम् । पथिकस्येत्यस्योपकार इत्यनेन सम्बन्धः । स्वपदेन प्रपापालिका । प्रपापालिका स्व ( पालिका ) मुखावलोकनम् इच्छन्त पथिकं धारासूक्ष्मकरणेन चिरं पानीयदानानुवृत्तिसम्पादनेन उपकृतवतीति द्वितीय-वाक्यसारल्यम् । तावदियम्● आयुष्मत इति आक्षेपः । यथा व्युत्पत्तिस्तथा प्रथमवाक्ये द्वितीयवाक्ये च स्वशब्देन न परामर्शः संघटते । यथा च त्वयाऽभिप्रेयते न तथा व्युत्पत्तिः । व्युत्पत्त्यनुसारं स्वशब्देन परामर्शं दर्शयति

**पदरचनैवायुष्मतो ग्रन्थकर्तुर्व्युत्पत्तिशैथिल्यमुदगिरति। तथाहि स्वमुखावलोकनमभिलषन्त्या इत्यत्र स्वशब्दस्य प्रपापालिका-विशेषणघटकत्वेन प्रपापालिकाबोधकत्वमेव न्याय्यम्, न पान्थबोधकत्वम्। एवं स्वमुखावलोकनमभिलषत इत्यत्रापि पान्थबोधकत्वमेव, न त्वदिष्टप्रपापालिकाबोधकत्वम्। एवं स्थितेऽर्थासंगतिः स्पष्टैव। न च सर्वनाम्नां बुद्धिस्थप्रकारा-वच्छिन्ने शक्तत्वादिष्टबोधोपपत्तिरिति वाच्यम्, तदिद-मस्मद्युष्मदादिष्विव तत्तद्विशेषव्युत्पत्तेरपि कल्पनीयत्वात्। सा च प्रकृते यद्विशेषणघटकत्वेन स्वनिजादयः शब्दा**

---

तथाहि ● कुवलयानन्दसमर्थनं शङ्कते न च सर्व ● तत्-शब्देन क्वचिद् घटः क्वचिच्च पटो बुद्ध्यते, घटत्वं बुद्धिस्थः प्रकारः, तदवच्छिन्नो घटो बुद्ध्यते, तथैवात्र प्रपापालिकात्वं पथिकत्वं वेष्टं बुद्धिस्थः प्रकारः,। तदवच्छिन्नौ ● तदवच्छिन्नप्रपापालिकापथिकौ बुद्ध्येयाताम्। नैतावत्या निर्वाह इति खण्ड-यति तदिदम ● प्रथमतः सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वनियमः, ह्यो राजपुरुषः समागच्छत् सोऽधुना भक्षतीत्यादौ राजा भक्षतीति न कथमपीष्यते, तदत्र सन्निहितान्वयिप्रधानपरामर्शी युज्यते, न तु यथाकथमपि बुद्धिस्थस्य, शाब्दिकव्युत्पत्तिं विना वक्तृबुद्धेः श्रोत्रा ज्ञातुमशक्यत्वात्। तच्छब्देन परामर्श परोक्षो बुद्धिस्थप्रकारः, इदमा प्रत्यक्षो बुद्धिस्थप्रकारः, अस्मदा वक्तृत्वसमा-नाधिकरणो बुद्धिस्थप्रकारः, एवमादिशब्देन युष्मदा सम्बोध्यत्वसमानाधि-करणो बुद्धिस्थप्रकारो गृह्यते। यथा एषां विशेषव्युत्पत्तिस्तथा स्वशब्दस्यापि। यद्विशेषण ● यादृशविशेष्यस्य यद्विशेषणबोधकम्, तद्घटकाः स्वनिजादयः शब्दाः, तादृशविशेष्यबोधकाः। यथा स्वदाररतानामित्यादौ विप्राणामित्यस्य विशेषणं स्वदाररतानामिति तद्घटकः स्वशब्दो विप्रपरः न तु अहमर्थपरः। तथा प्रकृते प्रथमवाक्ये विशेष्यं प्रपापालिका तद्विशेषणं स्वमुखावलोकन-विषयकाभिलाषवत्त्वं तद्बोधकं स्वमुखावलोकनमभिलषन्त्येति तद्घटकः स्वशब्दः प्रपापालिकापरः स्यात्, न कथमपि पथिकपरस्तेनासङ्गतिः स्फुटैव। पथिकस्य न किमपि विशेषणं यद्घटकतया स्वशब्दसन्निवेशः। स्वासक्त्ये-त्यस्यापि अभिलाषेऽन्वयः। एवं द्वितीयवाक्ये पथिको विशेष्यस्तद्विशेषणं

उपात्तास्तद्बोधका इत्येवंरूपा। तेन—'स्वदाररतानां विप्राणामहं भक्तः, देवदत्तस्य पुत्रः स्वमातृभक्तः' इत्यादौ मदीयदाररतानामिति देवदत्तमातृभक्त इति च न कस्याप्यभ्रान्तस्य

---

स्वमुखावलोकनविषयकाभिलाषवत्त्वम्, तद्बोधकं स्वमुखावलोकनमभिलषत इति तद्घटकः स्वशब्दः पथिकपरः स्यान्न कथमपि प्रपापालिकापरस्तथा चासंगतिः। अत्र घटकत्वेनेत्यस्योत्तरं स्वनिजादय इत्यतः प्रक् 'क्रियाकारकभावातिरिक्तसम्बन्धेनान्वयिनः' इति शेषो ज्ञेयः। तेन यस्य विशेष्यस्य विशेषणबोधकघटकाः क्रियाकारकभावातिरिक्तसंम्बन्धेनान्वयिपराः स्वनिजादयः शब्दा उपात्ताः, तादृशविशेष्यपरा इति व्युत्पत्तिः फलति। कुवलयानन्दवाक्यद्वये मुखे स्वपदार्थस्यान्वयः क्रियाकारकभावातिरिक्तसम्बन्धेन स्फुट एव। तथा चासंगतिरवतिष्ठते स्वदाररतानामित्यस्य स्वदाररतब्राह्मणकर्मकभजनकर्ताऽहमिति बोधः। नात्राहमर्थविशेषणघटकः स्वशब्दः। देवदत्तस्येत्यस्य स्वमातृकर्मकभजनकर्ता देवदत्तपुत्र इत्यर्थः। तत्रापि स्वशब्दो न देवदत्तविशेषणघटकः, अपि तु पुत्रविशेषणघटकः। क्रियाकारकभावेनान्वयस्थुले व्युत्पत्तिरियमुदास्ते, व्युत्पत्त्यन्तरं कल्प्यते, क्रियाकारकभावेनान्वयपराः स्वनिजादयः शब्दाः प्रधानक्रियाकर्तृपराः। क्रियाकारकभावेनान्वयाभावात् कुवलयानन्दवाक्यद्वये मूलप्रदर्शितवाक्यद्वये च नास्याः प्रवृत्तिः। अत एव पण्डितराजेन नेमामत्र अवातारयत्। स्वाश्रितानां विप्राणामयं पालकः, अथवा अनेन स्वाश्रिताः पाल्यन्ते—इत्यादौ आश्रितपदार्थाश्रयणे स्वम् अधिकरणम्। प्रधानक्रियाकर्तृपरः स्वशब्दः। एवमेव स्वाज्ञाकारिणां कल्पवृक्षोऽयमित्यत्र आज्ञापने स्वं कर्ता, तेन तत्र स्वशब्द इदमर्थपरः। अलङ्कारचन्द्रिकाकारस्तु दीक्षितसमर्थनाय अनुपदोक्तं वाक्यद्वयमुदाहृत्य पण्डितराजोक्तव्युत्पत्तौ व्यभिचारश्चोद्भाव्य 'मुख्यविशेष्यविशेषणघटकस्य स्वनिजादिशब्दस्य मुख्यविशेष्यगामित्वम्' इति व्युत्पत्तिं प्रादर्शयत्। अन्यत्र न स्वविशेष्यगामित्वनियम इति प्रास्फोरयत्। स्वदाररतानामित्यादीनां कृते तात्पर्याय भारं दत्वा समतुष्यत। तत्र पण्डिताश्चिन्तयन्तु—कुवलयानन्दवाक्यद्वयेऽपि उपकारो मुख्यविशेष्यः, न तु पथिकः प्रपापालिका वा। तत्कथमियं व्युत्पत्तिः कुवलयानन्दवाक्यसमर्थनायोपस्थिताऽपि न तं स्पृशति? स्वाश्रितानां विप्राणामयं पालक इत्युदाहरन्नपि व्युत्पत्तिफलं स्वाश्रिता

स्वरसवाहिनी प्रतीतिः। अत एव—'निजतनुस्वच्छलावण्यवापीसंभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः' इत्यत्र 'दण्डपादगता तनुः प्रतीयते, भवानीगता तु सा अपेक्षिता' इति व्युत्पन्नशिरोमणिभिर्मम्मटभट्टैः काव्यप्रकाशेऽभिहितम्। न चेदं श्रुतिकाटवादिवत् काव्यमात्रविषयं दूषणमिति वाच्यम्,

---

अनेन पाल्यन्ते इत्यादौ न दृष्टिं प्रसारयति संकुचितदृष्टिरलङ्कारचन्द्रिकाकारः। कर्मप्रत्यये न भवति कथमपि कर्ता मुख्यविशेष्यः। तात्पर्यार्थभारदानन्तु तस्य सर्वथानवधानम्, तात्पर्यवर्णनपराया एव व्युत्पत्तेरत्र पराक्रान्तत्वात्। व्युत्पत्तिं तात्पर्यनिर्णयाय प्रदर्श्य पुनस्तात्पर्यभारदानं नोचितम्। तस्य गुरुर्गुरुमर्मप्रकाशो विशिष्टलेखनेऽभिशप्तः क्वचित् क्वचित् संसूचनामात्रपरश्चिराद्विदुषामुपेक्षणीयोऽशुद्धिबहुलविषूचिकाग्रस्तोऽत्रापि किञ्चिद्वक्ति, महाविदुषामादरात् समुद्धरामि।

अत्रेदं चिन्त्यम्—स्वशब्दादयो यद्विशेषणघटकास्तद्विशेष्यान्विततद्विशेष्येतराबोधका इति व्युत्पत्तेः समभिव्याहृतपदार्थे तद्बोधकत्वव्युत्पत्तेरेव चानुभवबलेन स्वीकारः, नहि पथिकस्तद्विशेष्यान्वित इति।

अत्र संगमनीयम्—कुवलयानन्दप्रथमवाक्ये प्रपापालिकाया उपकारेऽन्वयः, उपकारस्य पथिकस्य च कृतावन्वयः, प्रपापालिकायाः पथिके कथमपि नान्वयः। मर्मप्रकाशस्य अन्तिमोंऽशो नहि पथिकेत्यादिस्तथैव। परं तथा स्वीकारे कुवलयानन्दस्य खण्डनपर एव समन्वीयते, न समर्थनपरः। नहि पथिकस्तद्विशेष्यान्वितविशेष्येतर इति खण्डितोऽन्तिमोंऽशः कल्प्यते चेत्, समर्थनपरः प्रतिभाति, परं न समर्थयतीति स्वयमेव चिन्तनीयतां याति। पथिकस्य प्रपापालिकारूपविशेष्यत्वाभावात् तद्बोधकत्वासंभवात्। एवमेव द्वितीयवाक्यमपि न समर्थयति, देवदत्तस्य पुत्र इत्यादौ देवदत्तबोधकत्वं स्वशब्दस्य वारयति, स्वदाररतानामित्यादौ विप्रविशेष्येण परम्परयान्विताहमर्थविशेष्यबोधकत्वं न वारयितुं शक्नोति। स्वाश्रितानामित्यादौ मुख्यविशेष्यबोधकत्वं संरक्षति। एवं स्वाज्ञाकारिणामित्यादावपि।

स्वप्रदर्शितव्युत्पत्तौ काव्यप्रकाशसाक्षितां दर्शयति अत एवम् अभवन्मत्तसम्बन्धदोषप्रसङ्गे समुदाहृतं पद्यम्—

शाब्दव्युत्पत्तौ काव्यस्यानन्तर्भावात्। मदीयदाररतानामिति, देवदत्तमातृभक्त इति च तात्पर्येण प्रागुक्तवाक्यप्रयोक्तुरनुपहसनीयतापत्तेश्च। किं च परस्परोपकारो हि स्वव्यधिकरणव्यापारसाध्य एव चमत्कारित्वाल्लक्षणघटकः, न तु स्वसमानाधिकरणतत्साध्योऽपि। तत्र हि तुषारशिशिरीकरणन्यायेनान्यव्यापारस्यानावश्यकतया चमत्कारिताविरहात्।

---

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः।
भर्तुर्नृत्यानुकारे जयति निजतनु ·············· ।
इत्यादिमूले।

अत्र भवानीदण्डपादस्य विशेषणं न कस्यापि विशेष्यम्। दण्डपादविशेष्यस्य विशेषणं तादृशविशेषाम्भोजलीलाविधावत्त्वम्, तद्बोधकघटको निजशब्दो दण्डपादपरः।

**स्यानन्तर्भा =** उक्तो नियमो न काव्यमात्रपरः, किन्तु काव्याकाव्यसाधारणवाक्यविषयः। काव्येऽकाव्ये च तादृशव्युत्पत्तिस्तात्पर्यनिर्णायिका। काव्यमात्रविषयकत्वे आह **मदीयदार●** स्वदाररतानां त्रिप्राणामहं भक्तः, देवदत्तस्य पुत्रः स्वमातृभक्त इति प्रागुक्तवाक्यद्वयम्।

पद्यस्यानुदाहरणतां वर्णयति **किं च पर●**। **स्वव्यधिक●** यस्मिन्नुपकारस्तदन्यनिष्ठो व्यापारः, स्वव्यापारेण यदा फलं मिलति, तदा न उपकारव्यवहारः, किन्तु अन्यस्य व्यापारेण फलं लभ्यते तदोपकारव्यवहारः। अन्योन्यपदे द्विरन्यपदस्य समावेशात्तथा स्वारस्यमपि। तथा च विरलाङ्गुलिकरणेन पथिककर्तृकं प्रपापालिकामुखावलोकनमेव फलमुपकारः, न तु प्रपापालिकाकर्तृकं पथिकमुखावलोकनम्, तस्य धारातनुकरणत एव सिद्धेः। पथिककर्तृकचिरकालिकप्रपापालिकामुखावलोकनफला चिरं पानीयदानानुवृत्तिर्विरलाङ्गुलिकरणेन जाता सैवानुवृत्तिर्यदि धारातनूकरणेनापि साध्यते, तदा तुषारस्य शीतलकरणमिव व्यर्थम्। विरलाङ्गुलितयापि जाता चिरं पानीयदानानुवृत्तिः प्रपापालिकाकर्तृकं पथिकमुखावलोकनं चिरं साधयति, न तत्रापि धारातनूकरणं सार्थकम्। यद्युच्येत—पथिकेन प्रपापालिकया च स्वं स्वम् इष्टं चिरं स्वस्वप्रियमुखावलोकनं साधयितुं स्वीयो व्यापारोऽनुष्ठीयत इति कथ-

इह हि धारातनूकरणाङ्गुलिविरलीकरणयोः कर्तृभ्यां स्वस्वकर्तृकचिरकालदर्शनार्थं प्रयुक्तयोस्तत्रैवोपयोगश्चमत्कारी, नान्यकर्तृकचिरकालदर्शन इत्यनुदाहरणमेवैतदस्यालङ्कारस्येति सहृदया विचारयन्तु ।

इति रसगङ्गाधरेऽन्योन्यालङ्कारनिरूपणम् ।

---

मन्यतरस्य वैयर्थ्यमिति तदाप्याह तत्रैवोपयोग ● यदिष्टं साधयितुं यो व्यापारस्तस्य तदेव फलम्, नान्यदिष्टम् । यदि एकस्य व्यापारस्य फलद्वयं तदाऽन्यतरो व्यापारो वृथा । यदि एकस्यैकमेव फलं तदा यस्य व्यापारस्तस्य फलं परस्य फलाभावादुपकारो दुर्घट इति भावः । किञ्च व्यज्यमानो रतिभावः परस्परालम्बन उभयत्र पृथक्, तस्यानुभावोऽपि चिरं स्वप्रियमुखावलोकनं पृथक्, पथिकनिष्ठस्य रतिभावस्यानुभावः पालिकाकर्तृकं पथिकमुखावलोकनं न भवेत् । पथिकनिष्ठस्य पालिकालम्बनस्य रतिभावस्य कार्यं 'प्रपापालिका मम मुखं चिरं पश्येत्' इति समीहेति यत्सहृदयहृदयं मनुते तस्य मतानुसारं तादृशसमीहयापि पथिकस्य विरलाङ्गुलिकरणं तदा स्वफलेन साकं परस्यापि उपकारः संभवतीत्यभिप्रायेण सहृदया विचारयन्तु इत्याह ।

एतादृशेन व्याख्यानेन दत्तोत्तरोऽपि गुरुमर्मप्रकाश इत्थम्—स्वस्वोपकारसत्त्वेऽपि परस्परोपकारोऽप्यस्त्येव, न चमत्कारीति रिक्तं वचः । किञ्च यथातथाशब्दव्यत्यासेन पूर्वोत्तरार्धव्यत्यासेन चास्य पुनः पाठे परस्परोपकारस्य चमत्कृतस्य प्रतीतेस्तदभिप्रायेणोदाहरणमेव । अपि च प्रकरणादिसहायेनापि परस्परोपकारप्रतीतिश्चमत्कृतैवेति चिन्त्यमिदमिति दिक् । अत्र किञ्चेत्यादिना पुनः पाठेन किमभिप्रेयते इति चिन्त्यम्, यथायथा विरलाङ्गुलिकरणं तथातथा धारायास्तनुत्तरविधानमिति चेत्, पानीयदानानुवृत्तिरुच्छिद्येत, पानीयपानमवरुध्येत, तादृशः पद्ये शब्दो नास्ति, कुवलयानन्दमूलस्वरसताऽपि न प्रतीयते । अलङ्कारकौस्तुभस्तु स्वोपकारसंकीर्णपरस्परोपकारोदाहरणता दीक्षिताऽभिप्रेतेति वर्णयति । पण्डितराजाभिप्रायमनुवदत्येव, न खण्डयति ।

॥ इत्यन्योन्यालङ्कारनिरूपणम् ॥

अथ विशेषालङ्कारः—

प्रसिद्धमाश्रयं विना आधेयं वर्ण्यमानमेको विशेषप्रकारः। यच्चैकमाधेयं परिमितयत्किञ्चिदाधारगतमपि युगपदनेकाधारगततया वर्ण्यते, सोऽपरो विशेषप्रकारः।

युगपदिति विशेषणाद् वक्ष्यमाणे पर्याये नातिव्याप्तिः। एवं च ग्रन्थान्तरगतानि लक्षणान्यतिप्रसक्तान्येव।

"यच्च किञ्चित् कार्यमारभमाणस्यासम्भाविताशक्यवस्त्वन्तरनिर्वर्तनं स तृतीयो विशेषप्रकारः। एवं चैतदन्यतमत्वं विशेषालङ्कारसामान्यलक्षणम्" इति प्राञ्चः।

तत्र प्रथमः प्रकारो द्विविधः—आधारान्तरगतत्वेनाधेयं वर्ण्यमानम्, निराधारत्वेन च।

क्रमेणोदाहरणानि—

'अये राजन्नाकर्णय कुतुकमाकर्णनयन-
त्वदाधारा कीर्तिर्वसति किल मौलौ दशदिशाम्।
त्वदेकालम्बोऽयं गुणगणकदम्बो गुणनिधे
मुखेषु प्रौढानां विलसति कवीनामविरतम्॥'

---

विशेषालङ्कारनिरूपणम्

प्रसिद्धाश्रयं— प्रसिद्धस्य आधारस्य वर्णनं विना आधेयस्य वर्णनम्। तच्च प्रसिद्धाधारव्यतिरिक्ताधारगतत्वेन निराधारत्वेन च वर्णने सम्भवतीत्यग्रे ग्रन्थे वर्तते। पर्याये— आधेयस्य तत्र क्रमशोऽनेकाधारगतत्वम्। लक्षणान्य— यतो युगपत् पदाघटितानि तानि। यच्च— प्राचीनग्रन्थप्रारम्भः। कश्चित् किञ्चित् कार्यमारभते, तदा तेनैव यत्नेन असम्भावितम् अशक्यञ्च अन्यद् वस्तु सिद्ध्येत्, तदा तृतीयो विशेष इत्यर्थः।

अये राज— हे कर्णमभिव्याप्य नयने यस्य सम्बुद्धौ दीर्घनेत्र! सामुद्रिकप्रशंसा दीर्घनेत्रस्य। राजन् आश्चर्यं शृणु, कीर्तेः गुणगणगुम्फस्य च अन्या-

अत्र दिङ्मौलिगतत्वेन।

'युक्तं तु याते दिवमासफेन्दौ तदाश्रितानां यदभूद्विनाशः।
इदं तु चित्रं भुवनावकाशे निराश्रया खेलति तस्य कीर्तिः॥'

द्वितीयः प्रकारो यथा—

'नयने सुदृशां पुरो रिपूणां वचने वश्यगिरां महाकवीनाम्।
मिथिलापतिनन्दिनीभुजान्तःस्थित एव स्थितिमाप रामचन्द्रः॥'

तृतीयः प्रकारो यथा—

'कोदण्डच्युतकाण्डमण्डलसमाकीर्णत्रिलोकीतलं
रामं दृष्टवतां रणे दशमुखप्राणापहारोद्यतम्।
दुर्दर्शोऽपि नृणामभूदुरुमरुद्वेगप्रचण्डीकृत-
ज्वालाभिर्जगतीतलं कवलयन् कालानलो गोचरः॥'

---

धारगतत्वात्, त्वम् आधारो यस्याः सा कीर्तिर्न त्वयि एव, अपि तु दिशां मस्तके तिष्ठति, आपातत उद्रेकं प्राप्नुवती एव निन्दा सद्यो भासमानया कीर्तेः सर्वत्र व्याप्त्या प्रशंसया अपोद्यते। एवमेवोत्तरार्धेऽपि—हे गुणाकर! त्वम् एक आधारो यस्य एवंभूतो गुणगणसमूहः, अन्यत्र गत इत्यापाततो निन्दा। प्रौढाः कवयो निरन्तरं तं कवयन्तीति प्रशंसा।

युक्तं तु● आसफखानाभिधे यवनराजचन्द्रे स्वर्गं याते, आश्रयस्य विनाशे आश्रितानां विनाशो यद् अभूत् तद् युक्तम्। परम् आश्रयविनाशेऽपि तस्य कीर्तिर्निराश्रयैव सर्वत्र भुवने खेलति इदं तु आश्चर्यम्।

नयने● श्रीजानकीभुजमध्यस्थित एवं श्रीरामचन्द्रो बहुषु आधारेषु स्थितिं प्रापदिति युगपदनेकाधारगतत्वस्योदाहरणम्। बहव आधाराः पूर्वार्धनिर्दिष्टाः सुदृशां सुनयनानां नयनेषु शत्रूणाम् अग्रे पदवाक्यपारंगतानां महाकवीनां काव्येषु।

कोदण्ड● दशमुखस्य प्राणानामपहाराय उद्यतं रामं रणे साक्षात्कृतवतां जनानां दुःखेन दृश्यमानः, खलप्रत्यान्तः। अपि कालवह्निर्नयनगोचरो दृष्टोऽभूत्। द्विर्दृश्धातोः प्रयोगेण समभिव्याहृतो गोचरशब्दो दृग्गोचरपर एव स्यात्। भयंकरं राममुपस्थापयति प्रथमपादेन। धनुषो युगपच्च्युतानां

अत्र रामदर्शनं कुर्वतां कालानलदर्शनरूपाशक्यवस्त्वन्तर-निर्वर्तनम् ।

ननु—

'लोभाद्वराटिकानां विक्रेतुं तक्रमानिशमटन्त्या ।
लब्धो गोपकिशोर्या मध्येरथ्यं महेन्द्रनीलमणिः ॥'

इति वक्ष्यमाणप्रहर्षणविषमालङ्कारयोगे तृतीयप्रकारस्यातिव्याप्तिः, दधिविक्रयमारभमाणाया नीलमणिप्राप्तिवर्णनादिति चेत्, न; अत्र चाशक्यवस्त्वन्तरनिर्वर्तने तदभेदाध्यवसायनिबन्धनत्वं विशेषणम् । 'कालानलो वीक्षितः'

---

बाणानां मण्डलेन आच्छादितं त्रिलोकीतलं येन तम् । कालानलोऽपि ज्वालाभिर्जगतीतलं भक्षयन् । उरुणा महता मरुतां वेगेन भृशमुद्दीप्ता ज्वालाः । कालानलस्य दर्शनरूपम् अशक्यम् असंभावितं वस्त्वन्तरं तस्य सिद्धिः । रामदर्शनमारभमाणस्य अशक्यकालानलदर्शनम् । लोभाद्व● अल्पमूल्यानां वराटिकानां लाभलोभात् तक्रं दधि विक्रेतुं न दिवसे एव किन्तु निशां यावत्, आङ्मर्यादाभिविध्योरित्यव्ययीभावः, अटन्त्या भ्रमन्त्या गोपबालिकया रथ्याया मध्ये 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः । श्रीकृष्णरूपो महान् इन्द्रनीलमणिः लब्धः । प्रहर्षण● इन्द्रनीलमणिमुद्दिश्य यत्नमन्तरेण तादृशमणिप्राप्त्या प्रहर्षणम् । तुच्छवस्तुविषयकयत्नस्य महर्घवर.फलमननुरूपः संसर्गो विषमः । तयोः संकरः । अशक्यवस्त्व● किञ्चित् कार्यम् आरभमाणस्य पुरुषस्य असंभावितस्य अशक्यस्य च वस्तुनः सिद्धिरिति अस्य स्वरूपम् । तत्र सिद्धौ आरभ्यमाणस्य कार्यस्य अशक्यवस्तुनश्च योऽभेदाध्यवसायस्तत्प्रयोज्यत्वं विशेषणं देयम्, निर्वर्तनं सिद्धिः, निबन्धनत्वं प्रयोज्यत्वम् । तथा च यत् किञ्चित् कार्यम् आरभमाणस्य तेन कार्येण सहाभेदाध्यवसायप्रयोज्या या असंभावितस्य अशक्यस्य च वस्त्वन्तरस्य सिद्धिरिति स्वरूपं फलितम् । अभेदस्य अध्यवसायः आरोप आहार्यानाहार्यसाधारणः । तादृशं लक्षणं समनुगमयति कालानलो● । रामः कालानलः, रामदर्शनं कालानलवीक्षणमिति वा अभेदाध्यवसायः । निर्वर्तितं सिद्धम् । गोचरपदस्थाने

इत्यनुपदमुदाहृते विशेषालङ्कारे यथा अशक्यवस्त्वन्तररूप-कालानलवीक्षणं रामकालानलयोस्तद्दर्शनयोर्वा अभेदाध्यव-सानेन निर्वर्तितम्, न तथा 'दधि विक्रेतुमटन्त्या' इत्यत्र महेन्द्रनीलमणिदर्शनमित्यदोषः ।

न च भगवति नीलमण्यभेदाध्यवसानेन निर्वर्तितमेव तदिति वाच्यम्, किञ्चित् कार्यमारभमाणस्येत्यत्र यत्कार्यं विशेषणतया प्रविष्टं तेन सहाशक्यवस्त्वन्तरस्याभेदस्य विवक्षितत्वात् । प्रकृते च तक्रविक्रयेण सह नीलमणेरभेदस्यानध्यवसानात् ।

न चातिशयोक्त्या विशेषालङ्कारतृतीयप्रकारस्य गतार्थत्वं वाच्यम्, एतदुदाहरणे रामस्य विषयस्य कालानलेन विषयिणा निगरणाभावात् । नापि रूपकेण, विषय-विषयिणोः समाना-धिकरण्यविरहेणारोपासिद्धेः । न च स्मृत्या, कालानलस्य वीक्षणकर्मत्वश्रवणेन स्मृतिकर्मत्वासिद्धेः । तस्मादशक्य-वस्त्वन्तरकरणं विशेषालङ्कारस्यैव प्रभेद इति प्राचामाशयः ।

---

वीक्षितः पाठमनुरुध्यात्र तथा लेखः । तेन प्रकृतपद्ये विशेषं वारयति न तथा ● नाभेदाध्यवसायनिर्वर्तितमित्यर्थः । तक्रविक्रय-महेन्द्रनीलमणि-दर्शनयोर्नाभेद इति भावः । प्रकृते च ● आरभ्यमाणं कार्यं तक्रविक्रयरूपं तेन सह प्रकृते नीलमणेरभेदो नास्ति ।

तृतीयप्रकारस्य विशेषभेदखण्डनमाशङ्कते न चाति● । रोपासिद्धेः● रामः कालानल इत्याद्याकारकस्य अभेदान्वययोग्यताव्यञ्जकस्य सामानाधि-करण्येनोपपादनस्यात्राभावाद् अभेदारोपो न सिद्ध्यति । वीक्षण● वीक्षणं चाक्षुषप्रत्यक्षम् । वीक्षित इति पाठे क्तप्रत्ययेन साक्षात् कर्मत्वस्योक्तिः । गोचर इति पाठे दृग्गोचर इति तदर्थो वर्णित एव, दृग्गोचरत्वमेव चाक्षुष-प्रत्यक्षविषयत्वम् । तदेव चाक्षुषकर्मत्वम् ।

विशेषस्य सामान्यलक्षणं नास्ति येनायं तृतीयः प्रकारस्तेन संगृह्येत, अतोऽस्य तृतीयप्रकारस्य अलङ्कारान्तरत्वमेव कथन्नाङ्गीक्रियेतेति चिन्तयति

अत्र विचार्यते—विशेषालङ्कारस्यायं प्रभेद इति कथं विज्ञायते ? नहि रूपकादिवदलङ्कारस्य किञ्चित् सामान्यलक्षणमस्ति, येन तदाक्रान्तत्वेनाशक्यवस्त्वन्तरकरणत्वस्य तत्प्रकारतामभ्युपगच्छेम। न चान्यतमत्वमेव तथाविधमस्तीति वाच्यम्, अनेनैव प्रकारेणेतरालङ्कारभेदत्वस्यापि सुवचत्वात्। अनुगतलक्षणं विना प्राचीनोक्तिराज्ञामात्रमेव राज्ञामिति तदपेक्षया पृथगलङ्कारतोक्तिरेव रमणीया।

---

अत्र विचार्यते●। अनेनैव● यथा अन्यतमत्वेन विशेषेण संग्रहे आग्रहस्तथा अन्यतमत्वघटितलक्षणेन अलङ्कारान्तरेणापि संग्रहीतुं शक्यते। प्राचीनोक्तिर्न विनिगमकयुक्ता, अपि तु राज्ञाम् आज्ञामात्रम्।

अत्र अलङ्कारकौस्तुभकाराः—स्वनिरूपितव्यभिचारिप्रतियोगिकत्वस्यानुगतधर्मस्य वक्तुं शक्यत्वात्, आधाराधेयानां कार्यकारणानाञ्च परस्परनिरूप्यनिरूपकभावसत्त्वात्। आद्ये आधेयस्य प्रतियोगिन आधाररूपस्य निरूपकव्यभिचारात्। द्वितीयेऽपि एकवृत्तिरेवापरत्र वृत्त्या तद्व्यभिचारस्याविशेषात्। तृतीयेऽपि कारणरूपप्रतियोगिनः कार्यरूपनिरूपकव्यभिचारात्। न चैवं विभावनाविशेषोक्त्योरतिप्रसक्तम्, तत्रापि कार्यकारणव्यभिचारादिति वाच्यम्, किञ्चिन्निरूपकसाहचर्यस्यापि विवक्षितत्वात्। अत्रैकत्राधेयस्याधारान्तरसम्बन्धेऽपि आधारसाहचर्यं विवक्षितम्। एवं कारणस्य स्वप्रतियोगिकार्यसाहचर्यमपि तथा। विभावनायान्तु कारणान्तराधीना यद्यपि कार्योत्पत्तिस्तथापि तस्याविवक्षितत्वान्न व्यभिचारः। कारणाभावेऽपि कार्योत्पत्तिप्रयोज्यचमत्कारस्य तत्रानुमतत्वात्। विशेषोक्तावपि कारणस्य कार्यव्यभिचारित्वे कार्यान्तरसाहचर्यानभिमतत्वात्, सत्यपि कारणे कार्यानुत्पादमात्रचमत्कारस्यैव तत्राभिमतत्वादिति।

अस्य सरलार्थो न सुगमो नातिप्रचलितशब्दप्रयोगाद् अशुद्धेश्च व्याख्यानमपेक्षते। अत्र प्रतियोगिशब्दो नाभावस्य सम्बन्धस्य वा प्रतियोग्यर्थे, किन्तु नित्यसाकांक्षवस्तुनः परस्परं निरूप्यनिरूपकभावो भवति, यथा आधारः कस्यचिदाधेयस्यैव, एवमाधेयमपि कस्यचिदाधारस्यैव। तयोश्च निरूप्यनिरूपकभावः। एकश्चापरस्य प्रतियोगी। अत्र अभावघटित-

अपि च 'येन दृष्टोऽसि देव त्वं तेन दृष्टो हुताशनः' 'तेन दृष्टा वसुंधरा' इत्यादौ वस्त्वन्तरस्य हुताशन-वसुधादर्शनादेरशक्यासंभावितत्वयोरभावात् प्रकृतालङ्कारासंभवेन निदर्शना स्वीक्रियते यदि, तदा 'येन दृष्टोऽसि देव त्वं तेन दृष्टः सुरेश्वरः' इत्यादौ विशेषालङ्कारेऽपि सैव शरणीक्रियताम्। नहि हुताशन इत्यत्र सुरेश्वर इत्यत्र च विच्छित्तिभेदोऽस्ति।

---

व्यभिचारपदसमभिव्याहृतप्रतियोगिपदस्यैतादृशार्थो दुरूहो जायते। यस्य निरूपकस्य व्यभिचारस्तत् स्वनिरूपितव्यभिचारप्रतियोगिकम्। अत्र व्यभिचारिपदपाठोऽशुद्धो व्यभिचारपाठेनार्थसंगतेः। एवमग्रे 'आधाररूपस्य निरूपकव्यभिचाराद्' इत्यत्र 'निरूपकस्य व्यभिचाराद्' इति पाठः शुद्धः।

यथा प्रथमस्य प्रथम प्रकारे त्वदाधारा कीर्तिर्दिङ्मौलिगता त्वामाधारं व्यभिचरति। द्वितीये निराश्रयत्वेन वर्णने आधेयमाधारं व्यभिचरत्येव। द्वितीयप्रकारे श्रीरामचन्द्राधेयस्य निरूपक आधारः श्रीजानकीभुजान्तः। अन्यत्र तस्य व्यभिचारः। तृतीयप्रकारे श्रीरामदर्शनस्य कारणं रामदर्शनं वा कारणं न कालानलदर्शनस्य कारणं येन तत्कार्यं स्यात्। अतो निरूपककार्यस्य व्यभिचारः। विभावनाविशेषोक्त्योरतिप्रसङ्गभङ्गाय साहचर्यमपि निवेशितम्, तथा च यस्य स्वनिरूपकस्य साहचर्यं व्यभिचरश्च तत्त्वं लक्षणं फलितम्। पूर्वोक्तोदाहरणेषु आधेयस्याधारोऽप्युक्तः कारणस्य कार्यमपि। इति लक्षणसमन्वयः। अत्र चिन्त्यताम्—नायमनुगमप्रकारः सम्यक्, कप्रत्ययसूचितबहुव्रीहिमूलकतया अननुगतयत्तदर्थप्रवेशात्। किञ्च बहवो निरूप्यनिरूपकभावापन्नाः पदार्था जगति प्रसिद्धाः। तेषां वर्णनेऽपि अतिप्रसज्येत। यथा पितृता-पुत्रता-भ्रातृता-स्वसृता-मातृता-प्रतियोगिता-विषयताः प्रभृतयः। अपि च प्रस्तुतोऽसंभाविताशक्यकार्यविशेषस्तु उपेक्षित एव विदुषा। अत एव रमणीयेत्युक्तं पण्डितराजेन, अनुगमासंभवो मूलम्।

प्रागुक्तस्य तृतीयप्रकारस्योदाहरणं निदर्शनया कवलीकृतमिति वक्तुमुपक्रमते अपि च● क्रुद्धोग्रतासाधर्म्ये हुताशन उपमानम्। क्षमावत्त्वे वसुन्धरा।

प्रकृतालं● विशेषालङ्कारासंभवेन। इत्यादौ● सुरेश्वरस्य अशक्यासंभावितवस्तुतयाऽपि, एतादृशनिदर्शनाकरम्बिते। विच्छित्ति● आर्थौपम्य-

एवं च प्राचीनानुसारेण 'कोदण्ड—' इत्यादि यदस्माभिरुदाहृतं तदपि न विशेषसरणिमारोढुमिष्टे । एतेन 'त्वां पश्यता मया लब्धं कल्पवृक्षनिरीक्षणम्' इत्यादिकुवलयानन्दोक्तमुदाहरणं गतार्थम् । तस्मादिदमुदाहरणम्—

> किं नाम तेन न कृतं सुकृतं पुरारे
> 　　दासीकृता न खलु का भुवनेषु लक्ष्मीः ।
> भोगा न के बुभुजिरे विबुधैरलभ्या
> 　　येनार्चितोऽसि करुणाकर हेलयापि ॥

अत्र यावत्त्रिवर्गप्राप्तिरशक्यकरणम् । नह्यत्र भगवदर्चनेन सुकृतकरणादीनां सादृश्यं विवक्षितम्, येन निदर्शनादि संभाव्येत, किं तु कार्यकारणभावः । एवं चेदानीमशक्य-

---

चमत्कारस्योभयत्र समानत्वात् । तदपि न॰ तत्रापि निदर्शनाच्चमत्कारसाम्राज्यात् । त्वां पश्यता॰ त्वद्दर्शनं कल्पवृक्षनिरीक्षणमिति निदर्शनायाः स्फुटत्वात् ।

अत्र गुरुमर्मप्रकाशः—अशक्यवस्त्वन्तरकरणकृताधिकचमत्कारसत्त्वादिदं चिन्त्यम् इति । तदपि चिन्तनीयम्—वस्त्वन्तरं वस्त्वन्तरकरणञ्च सर्वं निदर्शनागर्भगतमुपमानम् । तत्रोपमानं द्विविधं शक्यसंभावितम्, अशक्यसंभावितं च । तादृशविशेषोपमानकृता विच्छित्तिस्तादृशोपमानगर्भितनिदर्शनाविच्छित्तेरेव विशेषस्ततः पृथग्वा ? आद्ये निदर्शनाविशेष एव विशेषः स्यात् । द्वितीये निदर्शनयाऽस्पृष्टमेवोदाहरणं युक्तम् । तदेवाह—**तस्मादिदम्**॰ प्रथमपादेन सर्वविधो धर्मो द्वितीयेन अर्थस्तृतीयेन च सर्वो भोगः कामो हेलयाऽपि शिवार्चनेन क्रियत इति वर्णयेति । सुकृतं पुण्यं धर्मः, लक्ष्मीः संपत् । दासीकृता अर्जिता, देवैरपि अप्राप्या भोगाः । **एवञ्च**॰ सादृश्यस्यानभिप्रेतत्वादभेदस्य च सादृश्यसन्निहिततरत्वात् । द्वयोरित्यत्र विशेषेणेति शेषः । विशेषेण विषमप्रहर्षणयोः सङ्कर इष्यते । नन्वयं तृतीयः प्रकारः पार्थक्यं भजन्नपि न नामान्तरेण

वस्त्वन्तरनिर्वर्तने अभेदाध्यवसाननिबन्धनत्वं न विशेषणम्। न च 'दधि विक्रेतुमटन्त्या' इत्यत्रातिव्याप्तिः, द्वयोः संकरस्य तत्रेष्टेरिति वदन्ति।

इति रसगङ्गाधरे विशेषालङ्कारनिरूपणम्।

अथ व्याघातः—

यत्र ह्येकेन कर्त्रा येन कारणेन कार्यं किञ्चिन्निष्पादितं निष्पिपादयिषितं वा तदन्येन कर्त्रा तेनैव कारणेन तद्विरुद्ध-कार्यस्य निष्पादनेन निष्पिपादयिषया वा व्याहन्यते स व्याघातः।

अत्र व्याघाते पूर्वकर्त्रपेक्षया कर्त्रन्तरस्य वैलक्षण्यप्रत्ययाद् व्यतिरेकसिद्धिफलम्। कर्तृत्वं चेह कार्योद्देशेन प्रवर्तमानत्वम्। प्रयोजनं चास्याविवक्षाया अनुपदमेव वक्ष्यामः।

---

प्रसिद्धः ततो नामान्तरान्वेषणं कर्तव्यमथवा अन्यतमत्वेन विशेषेण संगृह्यतामत आह वदन्ति● विचारसरणिरेवेति भावः।

॥ इति विशेषालङ्कारनिरूपणम् ॥

## व्याघातालङ्कारनिरूपणम्

परस्परविरुद्धांशेन संघटितो वाक्यार्थद्वयात्मको व्याघात इति साधारणोऽर्थः। कार्यांशे विरोधमादाय इच्छाघटितानर्घटितत्वाभ्यां लक्षणद्वयं निर्दिशति। यत्र● एकः कर्ता येन कारणेन यत् कार्यं निष्पादयति, तद्भिन्नः कर्ता तेनैव कारणेन तद्विरुद्ध कार्यं निष्पादयति, तदा एकविधो व्याघातः। कश्चित् कर्ता येन कारणेन यत् कार्यं निष्पादयितुमिच्छति तदन्यः कर्ता तेनैव कारणेन तद्-विरुद्धं कार्यं सम्पादयितुम् ईहते तादृशो द्वितीयो व्याघातः। वैलक्षण्यात्● समानसामग्र्या विरुद्धकार्यजननं विभिन्नकर्तृकौशलाधीनमिति कर्तृवैलक्षण्य-प्रतीतिः। अनुपदमेव● पाण्डित्येन प्रचण्डेनेत्यादिपद्यविवरणावसरे।

उदाहरणम्—

दीनद्रुमान् वचोभिः खलनिकरैरनुदिनं दलितान् ।
पल्लवयन्त्युल्लसिता नित्यं तैरेव सज्जनधुरीणाः ॥

इह श्रुतिप्रतिपादितवचनत्वरूपैकधर्मपुरस्कारेणाभिन्नीकृतयोः परुषमधुरवचनयोरेकत्वाध्यवसानात्पुरः स्फुरन् विरोधः प्रातिस्विकरूपेण तत्तत्कार्यहेतुताविमर्शान्निवर्तत इति विरोधमूलत्वम् ।

इदं तु नोदाहरणम्—

पाण्डित्येन प्रचण्डेन येन माद्यन्ति दुर्जनाः ।
तेनैव सज्जना रूढा यान्ति शान्तिमनुत्तमाम् ॥

अत्र दुर्जन-सज्जनयोर्मद-शमकर्तृत्वेऽपि न तदुद्देशेन प्रवृत्तिरिति लक्षणगतकर्तृविशेषणेनासंग्रहः । न चास्य व्याघातो-

---

दीनद्रुमान् ● खलसमूहैः प्रतिदिनं वचनैः दीनरूपाः वृक्षाः दलिताः, प्रहर्षशीलाः सज्जनपुङ्गवाः वचनैरेव सदा पल्लवयन्ति, दीनाः दलिताः पीड्यन्ते वृक्षाश्च शुष्यन्ति, सज्जनवचोभिर्दीनाः सुखिनस्तद्रूपा वृक्षाश्च सुधासेचनेन पल्लविताः हरिताः जायन्ते। कारणमेकं वचनम्। कार्यं विरुद्धं दलनं पल्लवनञ्च। ननु खलवचनानि कटूनि सज्जनवचनानि च मधुराणि विभिन्नानि विरुद्धकार्यजननं युक्तमेवेति आशङ्कां समाधत्ते श्रुतिप्रति ● श्रुतिः शब्दः । अस्तु नाम कटुत्वमधुरत्वाभ्यां वचनयोर्विभेदः, परं न तेन रूपेण पद्ये प्रतिपादनम्, किन्तु शब्दतो वचनत्वेन एकधर्मेण कटुमधुराणि एकीकृत्य पद्ये उक्तम्, अतो विरोधः। प्रातिस्वि ● = स्वं स्वं प्रति प्रतिस्वम्, तेन प्रवृत्तं प्रातिस्विकम्। कटुवचनं दीनदलनं प्रति मधुरवचनञ्च दीनपल्लवनं प्रति कारणमिति विशेषकार्यकारणभावेन विरोधपरिहारः । नोदाहर ● पारिभाषिककर्तृत्व भावात् । पाण्डित्येन ● प्रखरपाण्डित्येन दुर्जनानां मदः, तेनैव सज्जनानां सर्वोत्तमा स्थिरा शान्तिः। यदपेक्षयोत्तमा न भवतीत्यनुत्तमा। न तदुद्देशेन ● पाण्डित्यद्वारा मदोपार्जने न दुर्जनस्य प्रवृत्तिः। एवं सज्जनस्यापि शमोत्पादने। तेन न पारिभाषिक-

दाहरणत्वे को दोष इति वाच्यम् । आश्रयविशेषस्वभाव-साचिव्येनैकस्यैव कारणस्य विरुद्धकार्यद्वयजनने बाधक-विरहाद् व्याहतेरेवाभावादुदाहरणत्वासंगतेः । न हि लोक-सिद्धोऽर्थः काव्यालङ्कारास्पदं भवितुमर्हति ।

अपरो व्याघातो यथा—

विमुञ्चसि यदि प्रिय प्रियतमेति मां मन्दिरे
तदः सह नयस्व मां प्रणययन्त्रणायन्त्रितः ।
अथ प्रकृतिभीरुरित्यखिलभीतिभङ्गक्षमान्न
जातु भुजमण्डलादवहितो बहिर्भावय ॥

इदं दण्डकां प्रविविक्षुं भगवन्तं दाशरथिं प्रति भगवत्या जानक्या वाक्यम् ।

उभयविधेऽप्यस्मिन् व्याघाते पूर्वकर्तुरभीष्टव्याहननं तुल्य-मिति प्राचां सिद्धान्तः । तथा च तेषामुदाहरणम्—

---

कर्तृत्वम्, तदुद्देशेन प्रवर्तमानत्वं कर्तृविशेषणम् । आश्रयविशेष ● व्याघात-स्याभावादित्युत्तरम् । आश्रयविशेषस्यस्वभावो दुर्जनता सुजनता च । साचिव्यं सहकारिकारणम् । पाण्डित्यं दौर्जन्यसहकारेण मदं सौजन्यसहकारेण च शांतिं प्रसूते इत्यर्थः । तथा च मदशान्त्यादेरेककारणकत्वाभावः ।

विमुञ्चसि ● हे प्रिय, यदि अहं तवातिशयेन प्रिया प्राणेभ्योऽपि गरीयसी, तेन हिंसकबहुले प्राणसंकटे वने स्वयं गच्छन् मां सुरक्षिते गृहे त्यजसि, तर्हि तथा न सभवति; प्रेमबन्धनेन दृढं बद्धो भवान् मां विहाय कथं गन्तुमर्हसि ? सह दृढं बद्धयोरेकं विहाय द्वितीयः कथं गन्तुं प्रभवेत् ? अतो मां सह नय । यदि मां विहाय गन्तुं प्रभवसि, तदा क्व प्रेमयन्त्रणा ? कुतश्चास्मि प्रियतमा ? अथ-यदि स्वभावतो भयशीलाऽस्मि इति भयस्थाने न नेतुम् ईहसे, तदापि अवहितः सावधानो भव, न मम परित्यागो युज्यते, किन्तु निर्भय-स्थाने स्थापनम् सकलभयानां नाशने समर्थं तव भुजमण्डलं ततः कदापि बहिर्न कुरु; सर्वदैव तवोत्सङ्गयोग्या । इच्छाबलाद् वाक्यद्वयेऽपि आयाति । कर्तुरभीष्ट ● पूर्वपद्ये खलनिकराणाम् अभीष्टं सज्जनैर्व्याहन्यते, अत्र च श्रीरामस्य अभीष्टं श्रीसीतोक्तिर्व्याहन्ति ।

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥ इति ।

अत्र विचार्यते—व्यतिरेक एवात्रालङ्कारः । जयिनीर्विरूपाक्षस्य वामलोचना इति तस्यैव प्रकाशनात् । न चात्र व्यतिरेकोत्थापकतया व्याघातः स्थित इति वाच्यम्, एवमपि तस्यालङ्कारताया असिद्धेः । न ह्यलङ्कारोत्थापकेनालङ्कारेणैव भवितव्यमिति नियमः । 'आननेनाकलङ्केन जयतीन्दुं कलङ्किनम्' इत्यादाविव वस्तुमात्रेणापि व्यतिरेकोत्थापनोपपत्तेः । न ह्यस्योक्तप्रकारव्यतिरेकनिर्मुक्तो विषयोऽस्ति, येन स्वातन्त्र्यमभ्युपगच्छेम । तस्मादलङ्कारान्तराविनाभूतालङ्कारान्तरवदिहाप्यवान्तरोऽस्ति विच्छित्तिविशेषोऽलङ्कारभेदक इति प्राचामुक्तिरेवात्र शरणम् ।

---

दृशा दग्धम् ● ताः कामिनीः स्तौमि याः शिवस्य जयिनीः जयशीलाः, इनन्ताद् ङीप् द्वितीयाबहुवचनम् । जयकारणं शिवस्य विरूपम् अक्षि, कामिन्यश्च सुन्दरलोचनाः ! पूर्वार्धेन लोचनशक्तिरपि अतिशेते । शिवः कदाचन भूतकाले कामदेवं नेत्रेण ददाह, कामिन्यस्तु सुन्दरनयनाभ्यामेव युवमनस्सु कामं रक्षन्ति। भूतवर्तमानप्रत्ययावपि व्यतिरेकव्यञ्जकौ **असिद्धेः** ● अलङ्कारोत्थापकस्य अलङ्कारत्वानियमात्, उत्तरत्र अकलङ्केनेति वस्तुना व्यभिचारात् । **न ह्यस्यो** ● व्यतिरेकाभावस्थले व्याघातः कुत्रचिदलङ्कारतां दधाति चेद् व्यतिरेकसहचरोऽपि तादृशः । न च तथाऽस्ति व्यतिरेकं विना न भवतीति अविनाभावसम्बन्धः । **तस्माद्** ● औपम्येन अविनाभूता अनन्वयादयो नान्यतरस्यालङ्कारतां व्याप्नुवन्ति, तथा व्यतिरेकोऽपि व्याघातस्य अलङ्कारतां न व्यवच्छिनत्ति । **विच्छित्तिविशेषो** ● व्याघातव्यतिरेकयोश्चमत्कारो विभिन्नोऽलङ्कारविभेदं तनोति । यथाऽनन्वये सादृश्यस्य द्वितीयसादृश्यपरिहारस्य च चमत्कारः पृथक्, परं सादृश्यपरिहारस्य प्राधान्याद् न विवादः । अत्र व्याघातव्यतिरेकयोर्न तथा, उभयोः कविसंरम्भगोचरत्वात् । व्यञ्जने क्षारतिक्तयोर्यथा

यत्तु —

लुब्धो न विसृजत्यर्थं नरो दारिद्र्यशङ्कया ।
दातापि विसृजत्यर्थं तयैव ननु शङ्कया ॥

इति कुवलयानन्द उदाहृतम्, तन्न ।

---

आस्वादभेदः । कटककुण्डलयोः सुवर्णयोरन्यतरलाभप्रसङ्गे कश्चित् सुवर्णेन कटकेन, अपरः सुवर्णेन कुण्डलेन प्रसीदति, तत्र व्यापकस्य सुवर्णस्य तदवान्तरस्य च प्रसादसाधनता लोकस्य भिन्नरुचित्वात् । अत्र एककारणेन विरुद्धकार्यजननं व्याघातः, उपमानापेक्षया उपमेयस्यातिशयो विभिन्ने वस्तुनी चमत्कारविभेदस्य प्रयोजने विशेषविच्छित्तेः क्षणप्रभेव अस्थिरता, क्षणप्रभा कादम्बिनीमिव काव्यमलङ्करोत्येव एषा भावना अग्रिमे अपरे मतेऽप्यनुसन्धेया ।

विचारमिमं नानुमनुते कौस्तुभकारः । एवं हि तदुक्तिः - सादृश्यविवक्षायामेव व्यतिरेक इत्यसकृद्व्यवस्थापितत्वात् । अत्र च शिवनायिकयोर्धर्मान्तरेणापि सादृश्यानभिमतेः स्पष्टत्वाद् इति । लोचनेन महाकार्यसम्पादनम्, अद्भुतशक्तिशालिलोचनवत्त्वादिकं धर्मो कथन्न सादृश्योत्थापकः । अनभिमतेः स्फुटताऽपि दुरवापा, साधारणधर्मस्य कविवाग्गोचरत्वात् । विवक्षाऽपि न सम्यक् सादृश्यस्य वस्तुतोऽवस्थाने एतावदेव युक्तमुक्तम्, उपमेयातिशयस्य विवक्षाया एव व्यतिरेके युक्तत्वात् ।

**लुब्धो न** ● लुब्धः=कृपणो धनव्ययेन दारिद्र्यमापतेदिति शङ्कया धनदानं न करोति, उदारो दाता धनदानं विना जन्मान्तरे दरिद्रो भवेयमित्याशङ्कया धनदानं करोति । एकयैव दारिद्र्यशङ्कया कारणेन विरुद्धे धनदानादाने उपात्ते इति व्याघातः कुवलयानन्दाभिप्रेतः । **तन्न** ● अत्रत्यं ग्रन्थस्य खण्डनोपपादनं चिरात् परिभ्रष्टमिति प्रतिभाति । कृपणो व्ययभयेन दानं न करोतीति लोकसिद्धोऽर्थः । उदारो जन्मान्तरसुखापेक्षयापि ददातीति शास्त्रसिद्धोऽर्थः, कविसंरम्भविषयवस्तुनोऽभावान्नालङ्कार इति कारणमूह्यते । कश्चित्तु—अत्र कर्त्रोः स्वस्वक्रियायां परस्परेण बाधा नायातीति व्याघात एव नास्तीति ब्रूते । 'मन्ये पूर्वकर्तुरभीष्टव्याहननं तुल्यमिति पूर्वोक्तं मूलम् अत्र बलं प्रयच्छेत् । परं न सुस्थिरम् । पूर्वः कर्ता धनदानं दारिद्र्यकारि मनुते, परश्च कर्ता धनस्य अदानं दारिद्र्यकरं साधयति । कुवलयानन्दमूलस्य पूर्वोत्तरार्ध-

एवं श्लेषातिशयोक्त्याद्युपायोन्मीलितेन किञ्चिदंशाभेदाध्यवसानेनामुख एव प्रादुर्भावितो यो विरोधो विच्छित्तिमात्रात्मा क्षणप्रभावदननुवर्तमानस्तन्मूलका विरोधाभासादयो व्याघातान्ता अलङ्कारा निरूपिताः।

ते च नानारूपं वैचित्र्यं भजतो विरोधाभासस्यैव प्रभेदाः, न तु ततोऽतिरिक्ताः, काञ्चनस्येव कङ्कणादय इत्येके। रूपकदीपकादीनामौपम्यगर्भाणामुपमाभेदत्वापत्तेर्बहु व्याकुली-

---

पक्षप्रतिपक्षरूपे' इत्यादिवचनम् एतादृशव्याघातोपपादनायेति सम्भावये। संक्षिप्ततरलेखकः प्राचीनो गुरुमर्मप्रकाशः पण्डितराजकृतखण्डनस्य खण्डनं करोति, तद्रहितः पण्डितराजस्याभिप्राय इत्थम्—प्रथमा शङ्का तात्कालिकी। द्वितीया जन्मान्तरीयेति नैकं कारणमिति। विभिन्नकालिकयोरपि अभेदाध्यवसायादेकत्वमिति तत्खण्डनम्। चन्द्रिकायामपि तथैव। तत्रापि वदन्ति—लक्षणे कर्तुर्निवेशात् कर्तृभेदप्रयुक्तविभेदयोः कारणयोरेकत्वाध्यवसायः न तु भिन्नकालिकयोरिति। लक्षणेऽत्र 'तदुद्देशेन प्रवर्तमानत्वम्' कर्तृत्वं परिभावितम्, पूर्वार्धे प्रवर्तमानत्वं नास्ति, किन्तु प्रवृत्तेरभावः प्रतिपादित इति पण्डितराजाभिप्राय ऊह्यताम्।

विरोधमूलकालङ्कारनिरूपणमुपसंहरति एवं श्लेषा● अभेदाध्यवसायस्य उपायः श्लेषः, अतिशयः, आदिपदाद् बिम्बप्रतिबिम्बभावादिः। किञ्चिदंश● यथाऽत्र कारणांशे। आमुखः प्रारम्भः। आरोपमूलको विरोधो जायमान एव चमत्कुर्वन् निवर्तते। अत एव विद्युदिवास्थिरः स्थिरश्च विरोधो लौकिकः स्यान्न तु कविकल्पितः, अत एव च विरोध इव आभासते, न तु वस्तुतो विरोधः। विरोधमूलको विरोधाभास एवैकोऽलङ्कारोऽन्ये च विरोधमूलका विरोधाभासस्यैव अवान्तरप्रभेदाः, न तु स्वतन्त्र इति मतं वर्णयति। ते च नाना● तद्विपरीतमतमाह रूपक● सत्यं विरोधमूलकेषु अलङ्कारेषु विरोधाभासस्य छाया। एवं तत्तच्चमत्कृतिष्वपि विरोधाभासचमत्कृतेश्छाया, आरोपमूलकस्य क्षणप्रभस्य विरोधस्य अस्थिरतया सद्यस्तदाभासस्य स्फूर्तेः, परं न विरोधाभासचमत्कृतिरेव, किन्तु नानाविधारोपोपजीविनां नानाविरोधानां कार्यानुत्पत्त्युत्पत्ति-

स्यादिति परस्परच्छायामात्रानुसारिणो भिन्नविच्छित्तयो भिन्ना एवेत्यपरे।

इति रसगङ्गाधरे व्याघातालङ्कारनिरूपणम्।

अथ शृङ्खलामूला अलङ्काराः—

तत्र—

पङ्क्तिरूपेण निबद्धानामर्थानां पूर्वंपूर्वस्योत्तरोत्तरस्मिन्, उत्तरोत्तरस्य वा पूर्वंपूर्वस्मिन् संसृष्टत्वं शृङ्खला।

तच्च कार्यकारणता–विशेषण–विशेष्यतादि नानारूपम्

इयं च न स्वतन्त्रतोऽलङ्कारः, वक्ष्यमाणप्रभेदैर्गतार्थत्वात्। नह्यस्यास्तैर्विना विविक्तो विषयोऽस्ति। यथा हि रूपकादिष्वनुप्राणकतया स्थितोऽप्यभेदांशः समानधर्मांशो वा न पृथगलङ्कारः, एवं प्रकृतेऽपीत्याहुः। तदपरे न क्षमन्ते। सावयवादिभेदै रूपकस्य, पूर्णा लुप्तादिभिरुपमायाश्च गतार्थत्वात् स्वतन्त्रालङ्कारता न स्यात्। न हि विशेषनिर्मुक्तं सामान्यमस्ति, येन विविक्तो विषयः स्यात्। तस्माच्छृङ्खलाया एव कारण-

---

विशेषादिघटितानां चमत्कृतयोऽप्यनुपह्नवनीया अलङ्कारभेदप्रयोजिकाः। या छायामनुसरति तस्या विलोपो न संभवति।

॥ इति व्याघातालङ्कारनिरूपणम् ॥

शृङ्खलामूलालङ्कारनिरूपणम्

पङ्क्तिरूपेण● क्रमरूपेण संसृष्टत्वं संसर्गः। तच्च● संसृष्टत्वं कार्यता-कारणता-विशेषणता-विशेष्यता। तस्माच्छृ● यथा रूपकस्य सावयवादिभेदाः

मालादयो भेदा इति। मतयोरनयोस्तत्त्वमुपरिष्टाद् विवेचयिष्यामः।

सैव शृंखला आनुगुण्यस्य कार्यकारणभावरूपत्वे कारणमाला।

तत्र पूर्वं पूर्वं कारणं परं परं कार्यमित्येका। पूर्वं पूर्वं कार्यं परं परं कारणमित्यपरा।

यथाक्रमेण यथा—

लभ्येत पुण्यैर्गृहिणी मनोज्ञा तया सुपुत्राः परितः पवित्राः।
स्फीतं यशस्तैः समुदेति नूनं तेनास्य नित्यः खलु नाकलोकः॥

स्वर्गापवर्गौ खलु दानलक्ष्मीर्दानं प्रसूते विपुला समृद्धिः।
समृद्धिमल्पेतरभागधेयं भाग्यं च शंभो तव पादभक्तिः॥

इह च यद्यादौ कारणोक्तिः स्तूयते, तदा पुनस्तस्य कारणम् तस्यापि कारणमिति, तत्कस्यचित् कारणम्, तदपि कस्यचिदिति

---

उपमायाश्च पूर्णा-लुप्तादिभेदास्तथा शृङ्खलायाः कारणमालादयो भेदाः। यिष्यामः● सारप्रकरणान्ते विविक्तत्वविवेचनावसरे पूर्वमतस्यैवावस्थापनम्।

कारणमालानिरूपणम्

आनुगुण्यस्य● अनुकूलसम्बन्धस्य कार्यत्वकारणत्वरूपत्वे शृङ्खलायां कारणमाला इत्यर्थः।

पूर्वपूर्वकारणमुत्तरोत्तरं कार्यमित्यस्योदाहरणम्—लभ्येत● नाकलोकः स्वर्गलोकः।

पूर्वपूर्वकार्यमुत्तरोत्तरं कारणमित्युदाहरति स्वर्गापवर्गौ● दानमेव लक्ष्मीः, अल्पेतरद् बहु।

वा कारणमाला युक्ता। यदा तु कार्योक्तिस्तदा तस्य कार्यम्, तस्यापि कार्यमिति, तत् कस्यचित् कार्यं तदपि कस्यचिदिति वा युक्ता। सर्वथैव यः शब्दः कार्यकारणतोपस्थापक आदौ प्रयुक्तः स एव निर्वाह्यः। एवंक्रमेण निबन्धनमाकाङ्क्षानुरूपत्वाद् रमणीयम्। अन्यथा तु भग्नप्रक्रमः स्यात्।

यथा प्राचीनानां पद्यम् —

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते।
गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागप्रभवा हि संपदः॥

अत्र जितेन्द्रियत्वं विनयस्य कारणं श्रुत्वा जितेन्द्रियत्वस्यापि किं कारणमिति, विनयः कस्य कारणमिति वा आकाङ्क्षोदेति। कारणस्यैव श्रुतिवशात् पूर्वमुपस्थितेः। कारणं तु ज्ञातम्, कार्यं पुनरस्य किमिति क्वचिदाकाङ्क्षा तु कार्यत्वकारणत्वयोः संबन्धिपदार्थत्वात् कारणश्रुत्युत्तरमेकसंबन्धिज्ञानाधीनकार्यत्वोपस्थित्या सङ्गमनीया। न त्वसौ सार्वत्रिकी। एवं च विनयः कस्य कारणमित्याकाङ्क्षायां गुणप्रकर्षो

---

सर्वथैव ● यथा पूर्वपद्ये लभ्येतेति फलबोधकस्योत्तरत्रापि सम्बन्धः। उत्तरपद्ये प्रसूते इति कारणान्वयिन उत्तरत्रापि सम्बन्धः।

जितेन्द्रियत्वम ● जितेन्द्रियत्वं कारणमुपक्रान्तम्, तदनन्तरञ्च विनयकार्यं गुणप्रकर्षः ततो गुणप्रकर्षः कारणम्, ततोऽपि जनानुरागः कारणम्। अतो भग्नप्रक्रमः।

क्वचिदाकांक्षा ● क्वचिदेव प्रकारान्तरेण सम्बन्धिज्ञानेन, न तु उपक्रमाधीना, उपक्रमात्तु कारणस्यैवाकाङ्क्षा नियता।

एकसम्बन्धिज्ञानमपरस्य स्मारकम्, यथा हस्ति-हस्तिपकयोः सम्बन्धिनोरेकस्य ज्ञानमपरस्य स्मारकम्। तथा कार्यकारणयोः सम्बन्धिनोः कारणस्य

विनयादवाप्यत इति वाक्यं यद्यपि फलतः परिपूरकं भवति, तथापि न साक्षादित्यहृदयङ्गममेव। यथा गुणप्रकर्षात् किमाप्यत इत्याकाङ्क्षायां गुणाधिके पुंसीति।

अत्र च कथितपदत्वं न दोषः। प्रत्युत पदान्तरेण तस्यार्थस्योक्तौ रूपान्तरेण स्थितस्य नटस्येव प्रत्यभिज्ञाप्रतिरोधकत्वाद्विवक्षितार्थसिद्धेरकुण्ठितत्वविरहाद् दोषः स्यात्। शब्दादुपस्थितेऽर्थे, प्रवृत्तिनिमित्तमिव शब्दोऽपि विशेषणतया भासते। तथा चोक्तम्— 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते' इति। तत्तच्छब्दस्य विशिष्टश्चार्थः स्वरूपेणाभिन्नोऽपि विशेषणभेदाद्विलक्षण. प्रतीयते कुण्डगोलकादिवत्। ननु कुण्डगोलकादिपदेषु

---

ज्ञानं कार्यस्योत्थापकम्। फलतः● विनयो गुणप्रकर्षस्य कारणमिति बोधजननद्वारा। तथा● फलतो गुणप्रकर्षार्जनानुराग आप्यते इति बोधद्वारा। नटस्येव● पूर्वरङ्गे दुष्यन्तवेषो नरो येन परिधानेन अङ्गरागादिना च उपतिष्ठते यदि ततो द्वितीये प्रवेशे भिन्नवस्त्रोपवस्त्राङ्गरागादिभिरुपतिष्ठेत सोऽयं दुष्यन्त इति सामाजिकैर्न प्रत्यभिज्ञायेत। चिरेण केनचिदेव प्रवीणेन नाटकीयपाठादिना कष्टेन परिचीयेत। तथैव पर्यायान्तरप्रयोगे। यथा रवेरुदयास्तमनयोरेकरूपता विवक्षिता। रक्तशोणादिनानापर्यायप्रयोगे न सफला भवति। न वा एकरूपता सिद्ध्यति। विवक्षितस्य अर्थस्य ज्ञानं कुण्ठितं जायते, कथमपि चिरेण कष्टेन समानार्थतानुसन्धानादिना ज्ञाने जातेऽपि समारब्धः प्रयासः कुण्ठित एव। इत्येव अकुण्ठितत्वविरहशब्देनोच्यते। प्रवृत्तिनिमित्तमिव● घटशब्दाद् घटस्योपस्थितौ शब्दबोधे वा घटे प्रवृत्तिनिमित्तघटत्वमिव घटशब्दोऽपि प्रकारः। वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारताश्रयत्वमिति प्रवृत्तिनिमित्तलक्षणमन्यत्रोक्तं सपदकृत्यं व्याख्यातञ्च। मादृते● शब्दसम्बन्धं शब्दप्रकारकतां विना। 'अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते' इत्यस्योत्तरार्धं वाक्यपदीयम्। अनेन सर्वं ज्ञानं शब्दविषयकमिति राद्धान्तः सूच्यते, किन्तु शब्दजबोधे एव शब्दमानस्य काव्यस्थले उपयोगित्तथैव व्याचष्टे ग्रन्थकारः। घटशब्दस्य कुम्भशब्दस्य च एक एवार्थः, परं घटशब्दविशिष्टतया कुम्भशब्दविशिष्टतया च

मृतामृतभर्तृकत्वादिरूपविशेषणघटितं प्रवृत्तिनिमित्तमित्यस्तु भिन्नाकारः प्रत्ययः। ताम्रः शोणो रक्त इत्यादौ तु ताम्रादिशब्दानां शक्तत्वेन शक्यतानवच्छेदकत्वाच्छक्यतावच्छेदकस्य च गुणगतजातिविशेषस्याभिन्नत्वादभिन्नाकारः प्रत्यय एवोचित इति चेत्, सत्यम्।

उदेति सविता ताम्रस्ताम्र एवास्तमेति च।
संपत्तौ च विपत्तौ च महतामेकरूपता॥

इत्यत्र वैलक्षण्यशून्यतारूपस्यैकरूप्यस्य यथा प्रत्ययः, न तथा 'उदेति सविता ताम्रो रक्त एवास्तमेति च' इत्यत्र, इति सकलानुभवसिद्धम्। एवं च प्रवृत्ति-निमित्तभिन्नस्यापि शब्दस्य यदि शक्यविशेषणत्वं वैलक्षण्यान्यथानुपपत्त्यानुभवबलेन च सिद्धम्, तदा तदनुगुणैव व्युत्पत्तिः शब्दानां कल्प्यते। सा च वृत्तिसंबन्धेनार्थविशिष्टशब्दज्ञानत्वेन शब्दविशिष्टार्थोपस्थिति-

---

विलक्षणः प्रतीयते। मृतामृत● अमृते जारजः कुण्डो मृते भर्त्तरि गोलक इति स्मृतिः। ताम्रशोणरक्तशब्दाः शक्ताः, न शक्यार्थविशेषणत्वेन शक्यतावच्छेदकाः नानाशब्दार्थविशेषणीभूतशक्यतावच्छेदकञ्च गुणगतजातिरूपं रक्तत्वमेकम्, एक एवेति कथं भिन्नाकारप्रत्ययः स्यात्? नुभवसिद्धम्● ज्ञाने शक्य-शक्यतावच्छेदकावेव विषयो न शक्तः शब्द इत्यभिप्रायेण आशङ्का। शक्ये शक्यतावच्छेदकमिव शक्तः शब्दोऽपि विशेषणमिति शब्दस्वरूपविशेषणविषयभेदेन पर्यायान्तरेण प्रयोगे भिन्नाकारः प्रत्यय इत्यनुभवबलादास्थीयते। तेन चोक्तपद्ये ताम्रस्य द्विरुपादानेन ऐकरूप्यप्रत्ययः संरक्ष्यते, कथितपदत्वञ्च ऐक्यरूपतारक्षायै गुणतां बिभर्ति। व्युत्पत्तिः● साधारणतया नियम उच्यते। येन शब्देन योऽर्थो बुध्यते स शब्दस्तस्मिन्नर्थे विशेषणमिति नियमः। शास्त्रीयदिशा कार्यकारणभावपरिज्ञानं व्युत्पत्तिरुच्यते, तदेव दर्शयति सा च● प्रथमः साधारणकार्यकारणभावः सकलशब्दार्थविषयकः। अभिधा लक्षणा व्यञ्जना च वृत्तिः शब्दार्थयोः परस्परं सम्बन्धः।

त्वेन च सामान्यकार्यंकारणभावरूपा । घटत्वादितत्तत्प्रवृत्तिनिमित्तप्रकारकबोधत्वेन तु वृत्तिसंबन्धेन घटविशिष्टपदज्ञानत्वादिना च विशेषतोऽपरः कार्यकारणभावः, विशेषसामग्रीसहिताया एव सामान्यसामग्र्या जनकतेति न कश्चिद्दोषः। यद्वा वृत्तिसम्बन्धेन घटादिविशिष्टपदज्ञानत्वेन घटादिपदघटत्वोभयप्रकारकघटादिविशेष्यकोपस्थितित्वेन च कार्यकारणभावः । पदार्थोपस्थितिशाब्दबोधयोः समानाकारत्वाच्छाब्द-

---

वृत्तिसम्बन्धेन शब्दोऽर्थेऽर्थश्च शब्दे विशेषणं तेन विशिष्टश्चोच्यते। पदज्ञानात् पदार्थस्य पृथगुपस्थितिः शाब्दबोधं प्रति कारणमिति असकृद् ग्रन्थे समागतं विवृतञ्च। एवमेव पदार्थानां पृथगुपस्थितिं प्रति पदज्ञानं कारणमित्यपि समागतम्। तथा च वृत्तिसम्बन्धेन अर्थविशिष्टशब्दज्ञानं वृत्तिसम्बन्धेन शब्दविशिष्टार्थोपस्थितिं प्रति कारणम्। **विशेषतो** ● तत्तद्विशेषणविशेष्यः पदः तदर्थनामग्राहं विभिन्नः कार्यकारणभावः। वृत्तिसम्बन्धेन घटविशिष्टघटपदज्ञानं घटत्वप्रकारकघटविषयकबोधं प्रति कारणम्। सामान्यविशेषौ सहैव प्रवर्तेते कश्चिद्विशेषो नास्ति सामान्यञ्च वर्तते इति न संभवति। अतः सामान्यकार्यकारणभावेन काचिदापत्तिर्दातुं न शक्यते, विशेषसामग्रीं विना सामान्यसामग्र्या कार्याजननात्। इत्येवाह **विशेष** ● एवञ्च शाब्दप्रत्यये प्रकारतया तदर्थशक्तशब्दभानाय एकः सामान्यकार्यकारणभावः, अतिप्रसङ्गभङ्गो विशेषकार्यकारणभावेन दर्शितः। अर्थे शब्दस्य प्रवृत्तिनिमित्तस्य च भानाय विशेषकार्यकारणभावमेव एकं सर्वापत्तिवारकं दर्शयति। **यद्वा** ● वृत्तिसम्बन्धेन घटार्थविशिष्टघटपदज्ञानं घटशब्द-घटत्वोभयप्रकारकघटविशेष्यकोपस्थितिं प्रति कारणमिति रीत्या बोध्यम्। **समानाकार** ● समानविषयत्वादित्यर्थः। उपस्थितौ विषयः शब्दः शाब्दबोधेऽपि विषयो भविष्यत्येव। आकाङ्क्षाप्रयोज्यसंसर्गतान्यविषयतासम्बन्धेन शाब्दबोधं प्रति विषयतासम्बन्धेनोपस्थितिः कारणमिति कार्यकारणभावः। उपस्थितौ यः प्रकारः स शाब्दबोधेऽपि प्रकारः, परं विशेष्यस्य नियमो नास्ति, उपस्थितिविशेष्यस्यापि शाब्दबोधे प्रकारत्वं जायते। विशेष्यस्यापि समानतानियमं व्याचक्षाणा नूतना सावधानाऽपि चन्द्रिकाऽत्र स्खलति। समानविशेष्यकत्व-

बोधेऽपि पदभानम् । अनुभवबलाच्च प्रामाणिकं गौरवं न दोषाय । एतदभिसंधायैवोक्तम्—'न सोऽस्ति' इत्यादि ।

इति कारणमालानिरूपणम् ।

**अथैकावली—**

**सैव श्रृंखला संसर्गस्य विशेष्य-विशेषणभावरूपत्वे एकावली ।**

**सा च पूर्वंपूर्वस्योत्तरोत्तरं प्रति विशेष्यत्वे विशेषणत्वे चेति द्विधा । तत्राद्ये उत्तरोत्तरविशेषणस्य स्थापकत्वापोहकत्वाभ्यां द्वैविध्यम् ।**

---

संरक्षणाय मुख्यविशेष्यताऽन्यविशेष्यतासम्बन्धेन शाब्दबोधं प्रति विशेष्यतासम्बन्धेनोपस्थितिः कारणम् । प्रकारत्वासमानाधिकरणविशेष्यता मुख्यविशेष्यता । यद्वा कल्पनीयकार्यकारणभावे कारणताकार्यतावच्छेदकानां गुरुत्वम्, येषां मते शाब्दप्रत्यये न शब्दस्य भानम्, तन्मतसिद्धकार्यकारणभावापेक्षया द्वयमपि इदं गुरुतरमिति समाधत्ते—न दोषाय । शाब्दप्रत्यये शब्दभानमनुभूयते तदनुसारीदं प्रामाणिकम्; अन्येषां कार्यकारणभावस्तु अनुभवविरुद्धः । पूर्वस्मिन्तु सामान्यविशेषद्विविधकार्यकारणभावस्यापेक्षया गुरुतरैककल्पनं लघु एव इति दिक् ।

॥ इति कारणमालानिरूपणम् ॥

## एकावलीनिरूपणम्

स वै● पूर्वं सामान्यतो लक्षिता, अनुकूलसम्बन्धस्य विशेष्यविशेषणभावरूपकत्वे सा श्रृङ्खला एकावलीत्यर्थः । पूर्वपूर्वस्योत्तरोत्तरं प्रति विशेष्यत्वे प्रथमा विशेषणत्वे द्वितीयेत्याह—सा च● तत्राद्ये● पूर्वपूर्वस्य विशेष्यत्वे उत्तरोत्तरं विशेषणमेव भवेत् । तच्च विशेषणं स्थापकम् अपोहकञ्चेति द्विधा ।

स्वसंबन्धेन विशेष्यतावच्छेदकनियामकत्वं स्थापकत्वम्। स्वव्यतिरेकेण विशेष्यतावच्छेदकव्यतिरेकबुद्धिजनकत्वमपोहकत्वम्।

उदाहरणम्—

स पण्डितो यः स्वहितार्थदर्शी हितं च तद्यत्र परानपक्रियाः।
परे च ते ये श्रितसाधुभावाः सा साधुता यत्र चकास्ति केशवः॥

अत्र स्थापकम्।

नायं स यो न स्वहितं समीक्षते न तद्धितं यत्र परानुतोषणम्।
न ते परे यैर्न हि साधुताऽऽश्रिता न साधुता सा न हि यत्र माधवः॥

---

स्वसम्बन्धेन● यस्य विशेषणस्य सम्बन्धेन विशेष्यतावच्छेदकस्य नियमनं जायते तद्विशेषण स्थापकम्। विशेष्यतावच्छेदकव्याप्यधर्मनिरूपणमिति यावत्। यथा अनुपदं वक्ष्यमाणोदाहरणे स्वहितार्थदर्शित्वं विशेष्यतावच्छेदकस्य पाण्डित्यस्य नियामकं न्याय्यम्। यत्र यत्र हितार्थदर्शित्वं तत्रैव पाण्डित्यमिति हितार्थदर्शित्वं स्थापकम्। यद् विशेषणं स्वाभावेन विशेष्यतावच्छेदकस्य अभावबुद्धिं जनयति तदपोहकम्। यदभावव्यापको विशेष्यतावच्छेदकस्याभावः, विशेष्यावच्छेदकाभावव्याप्यो योऽभावस्तत्प्रतियोगित्वमिति यावत्। यथा वक्ष्यमाणोदाहरणे आर्यस्य विशेषण स्वहितसमीक्षकत्वं विवक्षितम्। तदभावेन आर्यत्वाभाव उच्यते, स्वहितसमीक्षकत्वाभाव आर्यत्वाभावबुद्धिं जनयति।

स पण्डितो● अनपक्रिया अपकाराभावः। साधव एव परे।

नार्यः● साधुभिन्नाः परेऽपि न ग्राह्याः, साधूनामेव तोषणं कार्यम्। हरिभक्तिरेव साधुता।

प्रकारान्तरेण भेदं वर्णयन् कौस्तुभकारः पण्डितराजमते दोषं पश्यति—

न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम्।
न षट्पदोऽसौ कलगुञ्जितो न यो न गुञ्जितं तन्न जहार यन्मनः॥

अत्रापोहकं पूर्वपूर्वस्योत्तरोत्तरम् ।

यद्यपि स्थापकेऽप्यपोहकत्वं गम्यते यो न स्वहितार्थदर्शी स न पण्डित इत्यादि तथा अपोहकेऽपि स्थापकत्वम्, यो हितं समीक्षते स आर्यं इत्यादि, तथापि शब्देन नोच्यत इत्यदोषः ।

धर्मेण बुद्धिस्तव देव शुद्धा बुद्धया निबद्धा सहसैव लक्ष्मीः ।
लक्ष्म्या च तुष्टा भुवि सर्वलोका लोकैश्च नीता भुवनेषु कीर्तिः ॥

अत्र पूर्वेण पूर्वेण स्वाव्यवहितमुत्तरोत्तरं विशेष्यते ।

अस्मिश्चैकावल्या द्वितीये भेदे पूर्वपूर्वैः परस्योपकारः क्रियमाणो यद्येकरूपः स्यात्, तदाऽयमेव मालादीपकशब्देन व्यवह्रियते प्राचीनैः । तथा चोक्तम्—'मालादीपकमाद्यं चेद्यथोत्तरगुणावहम्' इति । तत्र मालाशब्देन शृङ्खलोच्यते, दीपकशब्देन दीप इवेति व्युत्पत्त्या एकदेशस्थं सर्वोपकारकमुच्यते । येनैकदेशस्थसर्वोपकारकक्रियादिशालिनी शृङ्खलेति पदद्वयार्थः । एवं च दीपकालङ्कारप्रकरणे प्राचीनैरस्य लक्षणाद्दीपकविशेषोऽयमिति न भ्रमितव्यम्, तस्य सादृश्यगर्भतायाः सकलालङ्कारिकसिद्धत्वात् । इह च शृङ्खलावयवानां पदार्थानां सादृश्यमेव नास्तीति कथंकारं दीपकतावाचं श्रद्दधीमहि ।

---

अत्र उत्तरोत्तरविशेष्यतावच्छेदकनिश्चामकतायाः स्वव्यतिरेकेण विशेष्यतावच्छेदकव्यतिरेकप्रयोजकतायाश्चाभावादिति । परं न तथा प्रतिभाति, अत्रापि सुचारुपङ्कजत्वे अपोहत्वस्याबाधात् । सुचारुपङ्कजत्वव्यतिरेकेण जलत्वाभावबुद्धेरुपपादनात्, जलत्वावच्छेदेन सुचारुपङ्कजत्वायोगव्यतिरेकश्च जलं सुचारु पङ्कजमेवेति फलति ।

**धर्मेण**● निबद्धा स्थिरीकृता । **विशेष्यते**● परं शुद्धत्वनिबद्धत्वादिनानाप्रकारेणोत्तरस्योपकारः । एकविधोपकारसत्त्वे आह **अस्मिश्चै**● गुणावहम् उपकारकम् । **पदद्वय**● मालादीपकपदयोः । तेषां शृङ्खलानिबद्ध-

तेषां प्रकृताप्रकृतात्मकत्वविरहाच्च । विवेचितं चेदं सोदाहरणं दीपकप्रकरणेऽस्माभिरिति नेहातीवायस्यते । एतेन 'दीपकैकावलीयोगान्मालादीपकमिष्यते' इति यदुक्तं कुवलयानन्दकृता तद्भ्रान्तिमात्रविलसितमिति सुधीभिरालोचनीयम् ।

इति रसगङ्गाधर एकावलीनिरूपणम् ।

अथ सारः—

सैव संसर्गस्योत्कृष्टाप्रकृष्टभावरूपत्वे सारः ।

तत्रापि पूर्वंपूर्वापेक्षयोत्तरोत्तरस्योत्कर्षापकर्षाभ्यां द्वैविध्यम् ।

'संसारे चेतनास्तत्र विद्वांसस्तत्र साधवः ।
साधुष्वपि स्पृहाहीनास्तेषु धन्या निराशयाः ॥

इमं चालङ्कारमेकानेकविषयत्वेन पुनर्द्विविधमामनन्ति । एकविषयतायामवस्थादिभेदाश्रयणमावश्यकम् । उत्कर्षापकर्षयोर्भेदनियतत्वात् । नह्यवस्थादिभेदकं बिना किञ्चिदपि वस्तु स्वापेक्षया स्वयमधिकं न्यूनं वा भवितुं प्रभवति ।

---

पदार्थानाम् एतेन● मालादीपकशब्दे दीपकशब्दस्य अलङ्कारविषयकत्वाभावात् । अत्र मर्मप्रकाशः—तत्रापि दीपकशब्दस्योपकारकपरत्वम्, अत एव तैर्दीपकप्रकरणात् पृथगेकावल्युत्तरमुक्तोऽयमित्येतदुक्तिरेव भ्रान्तेति । योगशब्दप्रयोगेण एकावलीव दीपकशब्दोऽपि दीपकालङ्कार एव प्रतिभाति, तेन अत्रासंगतिः । अन्यथा प्राचीनानामिव योगशब्दं न प्रयुञ्जीत ।

॥ इति एकावलीनिरूपणम् ॥

अथ सारनिरूपणम्

सैव● शृङ्खला एव, संसर्गस्य यथा संसारे इत्यादौ धन्यत्वसम्बन्धस्य । पूर्वपूर्वापेक्षया उत्तरोत्तरस्य उत्कर्षः प्रथमः, तथैवापकर्षो द्वितीयः । संसारे● धन्यत्वस्योत्कर्षः, स्पृहा इच्छा आशयो वासना । एकस्यापि अवस्थाभेदेनोत्कर्षादिवर्णने एकविषयः प्रथमः, अनेकवस्तुविषयो द्वितीय इति आह इमं च● ।

एकविषय उत्तरोत्तरोत्कर्षो यथा—

'जम्बीरश्रियमतिलङ्घ्य लीलयैव
व्यानम्रीकृतकमनीयहेमकुम्भौ ।
नीलाम्भोरुहनयनेऽधुना कुचौ ते
स्पर्धेते खलु कनकाचलेन सार्धम् ॥'

अत्र पूर्वपूर्वावस्थाविशिष्टाभ्यां कुचाभ्यामुत्तरोत्तरावस्थाविशिष्टयोस्तयोरेवोत्कर्ष इत्येकविषयत्वम् । यद्यपि परिमाणभेदेन द्रव्यभेदोऽपि मतविशेषे शक्यते वक्तुम्, तथापि कुचत्वेनाभेदाश्रयणेन तत्राप्येकविषयत्वं सूपपादम । यदि च वक्ष्यमाण एकाश्रये क्रमेणानेकाधेयस्थितिरूपः पर्यायोऽत्र प्रतीयते, तदा सोऽप्यस्तु । नहि तेन पूर्वपूर्वापेक्षयोत्तरोत्तरोत्कर्षरूपः सारोऽन्यथासिद्धः शक्यः कर्तुम् ।

अनेकविषयः स एव यथा—

'गिरयो गुरवस्तेभ्योऽप्युर्वी ततोऽपि जगदण्डम् ।
जगदण्डादपि गुरवः प्रलयेऽप्यचला महात्मानः ॥'

---

जम्बीर● लघुत्वे जम्बीरश्रीः ततो यौवने सुवर्णकुम्भशोभा, व्यानम्रीकृतमधरीकृतम् । अतिशयेन वृद्धिं गच्छतोः मेरुपर्वतस्पर्धा, महत्त्वोत्कर्षः । मतविशेषे● न्यायदर्शने । तन्मते विभिन्नपरिमाणयोरेकाश्रयताविरोधः । परिमाणपरिवर्तने पूर्वपरिमाणस्य नाश उत्तरस्य नूतनस्य उत्पादः । परिमाणनाशश्च आश्रयनाशजन्यः । तेन पूर्वद्रव्यस्य नाश उत्तरस्य च द्रव्यस्योत्पाद इत्याह द्रव्यभेदोऽपि● मुक्तावल्याः परिमाणप्रकरणे संक्षेपेण व्युत्पादितमस्ति ।

गुरुत्वोत्कर्षमुदाहरति गिरयो● महात्मसु गुरुत्वपराकाष्ठा । काठकोपनिषदस्तृतीयवल्याम्—इन्द्रियेभ्यः परा ह्यर्थाः अर्थेभ्यश्च परं मनः । मनसस्तु

वेदेऽप्ययमलङ्कारो दृश्यते—

'महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥'

पूर्वं गुणकृत उत्कर्षः, इह तु स्वरूपमात्रकृत इति विशेषः ।

न चात्र गुणकृत उत्कर्षो वाच्यः । पुरुषस्य निर्गुणत्वेनाभ्युपगमात् । न च तत्रापि विनाशरहितत्वादिर्गम्यमानो गुण उत्कर्षक इति वाच्यम् । तस्य तादृशाधिकरणभिन्नत्वे मानाभावात् ।

अनयैव दिशापकर्षोऽप्युदाहार्यः ।

इदं तु बोध्यम्—एकविषये शृङ्खलाया अचारुत्वात्तदनुप्राणितः सारो न चारुतां धत्ते । तस्याः स्वाभाविकभेदापेक्षत्वेनावस्थादिकृतेऽनुल्लासात् । अत एवास्मिन्विषये वर्धमानकालङ्कारोऽन्यैरङ्गीकृतः । तल्लक्षणं च 'रूपधर्माभ्यामाधिक्ये वर्धमानकम्' इति कृतम् । तस्मात्कारणमालादिर्यथा शृङ्खलैकविषयः, न तथा सारः शक्यो वक्तुम्, एकविषयेऽ-

---

परा बुद्धिः बुद्धेरात्मा महान् परः । ततः परतरमुदाहरति महतः [illegible] शारीरकभाष्येऽप्युद्धृतमेतदुत्कृष्टत्वम्, तदपि सूक्ष्मतया महत्तया आत्मतया च । वासनामया अर्थाः सूक्ष्माः संकल्पाधीनविषयप्रयोगेन मनः परम्, बुद्धेः परत्वं मनसस्तदधीनतया । [illegible]हत आत्मनः समस्तबुद्धिसमष्टिरूपस्य हिरण्यगर्भस्य व्यष्टिबुद्ध्यपेक्षया परत्वम् । तदपेक्षया वेदान्तसम्मतायाः मायायाः सांख्यसम्मतप्रकृतेर्वा परत्वम्, तदपेक्षया पुरुषस्य व्यापकतया परमगमनीयतया च पुरुषस्य आत्मनो ब्रह्मणो वा परत्वम् । पूर्वं तु [illegible] इन्द्रियादिमहत्पर्यन्तम्, न्यायसम्मतगुणैः सत्त्वादिगुणेन वा उत्कर्षः । इह [illegible] आत्मनि भिन्नत्वे [illegible] विनाशरहितत्वादेस्तादृशात्मभिन्नत्वे मानाभावात् । उत्कर्षाधायकगुणस्य आश्रयभिन्नत्वसंभवात् ।

लङ्कारान्तराभ्युपगमप्रसङ्गात् । 'गुणस्वरूपाभ्यां पूर्व-पूर्व-वैशिष्ट्ये सारः' इति तु लक्षणं सारस्य युक्तम् । सच क्वचिच्छृङ्खलानुप्राणितः, क्वचित्स्वतन्त्र इत्यनेकविषयत्वमेक-विषयत्वंच सुस्थम् ।

एवं शृङ्खलाविषयाणामलङ्काराणां विच्छित्तिवलक्षण्य-स्यानुभवसिद्धत्वात्पृथगलङ्कारत्वे सिद्धे शृङ्खलाया विरोधाऽ-भेदसाधर्म्यादिवदनुप्राणकतैवोचिता, न पृथगलङ्कारता, तथात्वेऽभेदादीनामपि पृथगलङ्कारतापत्तेः । पूर्णालुप्तादौ तु न विच्छित्तिवैलक्षण्यम्, अपि तूपमाविच्छित्तिरेवेति संप्रदायः ।

ननु केयं विच्छित्तिः ? उच्यते — अलङ्काराणां परस्पर-विच्छेदस्य वैलक्षण्यस्य हेतुभूता जन्यतासंसर्गेण काव्यनिष्ठा कविप्रतिभा, तज्जन्यत्वप्रयुक्ता चमत्कारिता वा विच्छित्तिः ।

इति रसगङ्गाधरे सारनिरूपणम् ।

---

न्यैरङ्गी● अत्र तु एकविषयकसारेऽन्तर्भाव्यते । सुस्थम्● शृङ्खलानु-प्राणित्वेऽनेकविषयः, शृङ्खलयैव अनेकविषयत्वसम्पादनात् । एकविषयत्वे वर्धमानकविषये स्वतन्त्रः सारः । विरोधा● विषमादीनां विरोधेन रूपकादी-नामभेदेन उपमादीनाञ्च साधर्म्येणानुप्राणितत्वम् । यथा विरोधादयो न पृथगलङ्कारास्तथा शृङ्खलाऽपि । कविप्रतिभा●प्रतिभा समवायसम्बन्धेन कवौ, प्रतिभया काव्यं जन्यते, विभिन्नाः प्रतिभा विभिन्नालङ्कारगुणयुतानि काव्यानि सृजन्ति । जन्यतासम्बन्धेन काव्यजननी प्रतिभा काव्ये तिष्ठति सैव विच्छित्तिः । प्रतिभाविशेषादलङ्कारविशेष इति भावः । वा विच्छित्तिः● विच्छित्तिर्हि सहृदयमनोवेद्या, नाङ्गुल्या निर्देष्टुं शक्यते, न वा प्रसिद्धपर्याय-शब्देन व्याख्यातुमर्हा, तेन परिचयः कथमपि सम्पाद्यते. प्रतिभाविशेषा-ज्जायमानेन काव्यविशेषेण सहृदयानां किञ्चिद्विशेषसुखं जायत इति अनुभूयते । तथा च प्रतिभाजन्यो विशेषः काव्यनिष्ठः सुखविशेषः चमत्कारजनकः स एव विच्छित्तिः ।

॥ इति सारनिरूपणम् ॥

अथ काव्यलिङ्गम् —

**अनुमितिकारणत्वेन सामान्यविशेषभावाभ्यां चानालिङ्गितः प्रकृतार्थोपपादकत्वेन विवक्षितोऽर्थः काव्यलिङ्गम् ।**

उपपादकत्वं च तन्निश्चयजनकज्ञानविषयत्वम् । अनुमानार्थान्तरन्यासयोर्वारणायानालिङ्गितान्तम् । उपमादिवारणायोपपादकत्वेनेत्यन्तम् । पञ्चम्यादिशब्दप्रतिपादितहेतुत्वकस्य

---

अथ काव्यलिङ्गनिरूपणम्

**अनुमिति** ● तृतीयान्तद्वयार्थं अनालिङ्गितत्वघटकालिङ्गितत्वे विशेषणम् । आलिङ्गितत्वञ्च प्रकारकज्ञानविषयत्वम् । तथा च अनुमितिकरणत्वाप्रकारकं निरूप्यनिरूपकभावापन्ना या सामान्यविशेषनिष्ठाविषयता तदनिरूपक यदन्यप्रकारकं ज्ञानं तद्विषय इति अर्थ इत्यस्य विशेषणम् । शाब्दबोधजनकतात्पर्यविषय इति विवक्षितशब्दार्थः । येन तात्पर्येण यादृशः शाब्दबोधो जायते तादृशशाब्दबोधविषय एव तात्पर्यविषयः । तृतीयार्थप्रकारकत्वं शाब्दबोधेऽन्वेति । तेन उपपादकत्वप्रकारकशाब्दबोधजनकतात्पर्यविषय इत्यर्थः फलितः । वस्तुतो द्विधाज्ञानस्य प्रवेशे फलं न प्रतिभातीति अनुमितिकरणत्वाप्रकारकः परस्परनिरूप्यनिरूपकभावापन्नसामान्यविशेषनिष्ठविषयत्वानिरूपक उपपादकत्वप्रकारको यः शाब्दबोधस्तज्जनकतात्पर्यविषयोऽर्थः काव्यलिङ्गम् इत्यर्थः । तात्पर्ये जनकत्वं साक्षात्परम्परासाधारणं प्रयोजकत्वरूपम् । सरलार्थस्त्वेवम्—कस्यचिदर्थस्य साधकोऽयमर्थ इति कवेरभिप्रेतोऽर्थः काव्यलिङ्गम् । स च साधकोऽनुमितिकरणमिति तात्पर्यं न स्यात् । एवं साध्यसाधकयोः सामान्यविशेषभावे न तात्पर्यं तदा इति ।

**तन्निश्चय** ● उपपाद्यत्वेन साध्यत्वेन वा अभिप्रेतो यः प्रकृतार्थः, । तस्य यो निश्चयस्तज्जनकं यदुपपादकज्ञानं तद्विषय उपपादकोऽर्थः । **मानार्थ** ● अनुमानवारणाय प्रथमतृतीयान्तम्, अर्थान्तरन्यासवारणाय द्वितीयं तृतीयान्तम् । **उपमादि** ● अनुमितिकरणभिन्नं सामान्यविशेषभावानापन्नञ्च सदृशादिवस्तु, तद्विषयकोपमादि । उपमाया उपमानोपमेययोरुपपाद्योपपादकभावो न भवति । **पञ्चम्यादि** ● पञ्चावयवघटकहेतुवाक्यघटकपञ्चमी तसिप्रभृतिप्रत्ययैर्हेतुत्वमुच्यते, तदपि हेतुत्वं ज्ञापकत्वं ज्ञाप्यत्वं वा मतभेदेन निरुच्यते, आकाङ्क्षाभास्यसंसर्गविशेषवर्णनेन अन्वयबलात् समान

हेतोरेव वारणायोपपादकत्वेन विवक्षित इति। न तु शब्दात् तेन रूपेण बोधित इत्येतदर्थंफलकम्। तेन 'भयानकत्वात्परिवर्जनीयोयोदयाश्रयत्वादसि देव सेव्यः' इत्यादौ नायमलङ्कारः। गम्यमानहेतुत्वकस्यैव हेतोः सुन्दरत्वेनालङ्कारिकैः काव्यलिङ्गताभ्युपगमात्।

तच्च सुबन्ततिङन्तार्थत्वाभ्यां तावद् द्विविधम्। आद्यमपि शब्दान्तरार्थविशेषितशरीरम्, शुद्धैकसुबन्तार्थरूपं चेति द्वेधा। अत्राप्याद्यं साक्षात्परम्परया वा वाक्यार्थविशेषितम्,

---

एवार्थः स्फुरति। पञ्चम्यादिप्रकृतेरर्थ उपपादक एव सिध्यति। यथा धूमज्ञानजन्यं ज्ञानं पर्वते वह्निरिति ज्ञानं तद्विषयः पर्वते वह्निः। तथा च वह्निज्ञानजनकं धूमज्ञानं तद्विषयो धूम उपपादकः। हेतोरेव● केचन हेतुमलङ्कारं व्याचक्षते। विवक्षित● तात्पर्यविषय उपपादकत्वं न तु वाच्यमपेक्षितमिति भावः। तदेव ब्रूते, न तु शब्दादित्यनेन। भयानक● वर्जनीयत्वस्य उपपादक भयानकत्वम्, भयानकत्वज्ञानेन परिवर्जनीयत्व ज्ञानम्, एवमग्रेऽपि। अत्रालङ्कारकौस्तुभो ग्रन्थस्य पूर्वापरविरोधमाकलयति—विनिन्द्यानीत्यादौ हरन्ती घटकशया हेतुत्वमुच्यते—तत्र काव्यलिङ्गमङ्गीकरोति भयानकत्वादित्यादौ, पञ्चम्या हेतुत्वोक्तौ न हरिं पश्यन् मुच्यते इत्यादौ मुक्तिं प्रति हरिदर्शनस्य हेतुताप्रतीतिः सर्वानुभवसिद्धा इति। हरन्तीपदं त्वमित्यत्र साकाङ्क्षं तत्रैवान्वेति। न च तत्र हेतुताप्रतीतेरवसरः पश्चाच्च अनवरतहरणं श्रमे सति नोपपद्यते इति श्रमाभावस्योपपादकम्। श्रमसंभवे हरणविरामप्रसङ्गात्। तथा च हेतुत्वस्य तात्पर्यविषयतैव तत्र नाभिधाविषयता, भयानकत्वादित्यादौ तु पञ्चमीवाच्यतैव हेतुत्वस्येति मूलाभिप्रायानभिज्ञतैव हेतुः प्रतिभाति तस्य। मुक्तिं प्रति हरिदर्शनस्य हेतुता शास्त्रान्तरसिद्धा न कामपि अनुपपत्तिं द्वारीकरोतीति दृष्टान्तवैषम्यञ्च। तच्च● काव्यलिङ्गम्, सुबन्तार्थस्तिङन्तार्थश्च। आद्य सुबन्तार्थरूपं शब्दान्तरार्थविशेषितशरीरं शुद्धञ्च द्वे। शब्दान्तरपदेन वाक्यं सुबन्तं पदमात्रञ्च। तेन तद्वाक्यार्थविशेषितं सुबन्तार्थविशेषितञ्च द्विधा। तेन सुबन्तार्थस्य त्रयो भेदाः। तिङन्तार्थस्य द्वौ मिलितौ पञ्च संजाताः, तत्र

सुबन्तार्थमात्रविशेषितं चेति द्विभेदम् । तिङन्तार्थभूतमपि साक्षात्परम्परया वा वाक्यान्तरार्थविशेषितम्, सुबन्तार्थमात्र-विशेषितं चेति द्विप्रकारम् । शुद्धभेदस्तु तिङन्तार्थस्य न संभवति, क्रियायाः कारकविशेषितत्वावश्यंभावात् । शिष्टमग्रे निरूपयिष्यते ।

उदाहरणम्—

"विनिन्द्यान्युन्मत्तैरपि च परिहार्याणि पतितै-
रवाच्यानि व्रात्यैः सपुलकमपास्यानि पिशुनैः ।
हरन्ती लोकानामनवरतमेनांसि कियतां
कदाप्यश्रान्ता त्वं जगति पुनरेका विजयसे ॥'

अत्र ह्यनन्यसाधारणतया प्रतिपादितस्य भगवत्या भागीरथ्या उत्कर्षस्यापाततोऽघटमानस्योपपादनायानवरत-

---

विशेषितानां चतुर्णां साक्षाद् परम्परया वा भेदेन संकलिता नव । कारक● कारकान्वयं विना क्रियास्वरूपानिष्पत्तेः ।

विनिन्द्या● गङ्गास्तवः—निरन्तरम् एनांसि पापानि हरन्ती अपि त्वं गङ्गे कदापि श्रान्ता न भवसि, अतो जगति त्वमेवैका सर्वाधिका, अतः सर्वान् समर्थान् विजयसे । सर्वथा कठिनक्रियाशीलायाः श्रमाभावस्त्वयि एव उपलभ्यते । पापानि च असंख्यानि, बहुवचनवशात् कियताम् असंख्यातानां लोकानाम् । जात्याऽपि उत्कृष्टानि पापानि यानि पापिष्ठैरपराद्धैश्चापि विगर्हितानि इति पूर्वार्धेन दर्शयति । यानि पापानि उन्मादयुक्ता विनिन्दन्ति, महापातकिनोऽपि यानि परिहरन्ति, समुचितसंस्कारहीना यानि वक्तुमनर्हाणि मन्वते, कथापि खलु पापानामलमश्रेयसे यतः इति न्यायात् । पिशुनाः सूचकास्तु सविस्मयरोमाञ्चं यानि दूरीकुर्वन्ति । अत्र क्रियारूपं हरणं श्रमस्य कारणं न तु श्रमाभावस्येति शत्रा हेतुत्वमुच्यत इति केषाञ्चिदुक्तिर्न संघटते । ह्यनन्य● अन्यस्मिन्नेतादृशोत्कर्षो न संभवति, क्षुद्रस्य पापस्य कतिपयानामेव वा पापानां हरणेन एतादृशोत्कर्षो न घटते इति आपातत इत्यनेन

सकललोकपापहरणसमानाधिकरणः श्रमाभावः सुबन्तमात्रार्थ-विशेषितः सुबन्तार्थो विशेषवपुर्हेतुत्वेनोपात्तः ।

त्रपन्ते तीर्थानि त्वरितमिह यस्योद्धृतिविधौ
करं कर्णे कुर्वन्त्यपि किल कपालिप्रभृतयः ।
इमं तं मामम्ब त्वमथ करुणाक्रान्तहृदये
पुनाना सर्वेषामघमथनदर्पं दलयसि ॥'

अत्र सकलदेवतीर्थदर्पदलनस्य सिद्धये स्वात्मपवित्रीकरणं वक्त्रा निबद्धम्। तच्च क्षुद्रत्वात्तादृशसिद्ध्यसमर्थं विशेष-कान्तरमाकाङ्क्षतीति तीर्थकर्तृकत्रपाकरणम्, कपालिप्रभृति-कर्तृककर्णमुद्रणं चेति वाक्यार्थद्वयं स्वात्मरूपकर्मद्वारा

---

सूच्यते, धिकरण● हरणं श्रमाभावश्च भागीरथ्यां वर्तेते मात्रार्थ● सुबन्तमात्रं हरन्तीति तदर्थेन हरणेन विशिष्टोऽत एव विशेषाकारो विलक्षणः श्रमाभाव उत्कर्षहेतुत्वेनोपात्तः ।

वाक्यार्थविशेषितं सुबन्तार्थं लिङ्गमुदाहरति त्रपन्ते तीर्थानि● गङ्गा-स्तवः, स्तोतुः गङ्गां प्रति निवेदनम् । यस्य मम उद्धारकरणे शीघ्रं विधातु-मसामर्थ्याद् स्वस्मिन् पापनिवारणसामर्थ्यस्य प्रसिद्धेश्च सर्वाणि तीर्थानि लज्जन्ते । शिवादयो देवा अपि उद्धरणकाठिन्यात् ममोद्धारकथां श्रोतुमपि अनिच्छन्तः कर्णच्छिद्रं कराङ्गुल्या आच्छादयन्ति । अथ—किन्तु हे दयावशीभूतमना मातः, तं प्रसिद्धं तीर्थदेवादिसामर्थ्यरहितपावनम् इमं तव शरणागतं मां पापिनं पवित्रीकुर्वाणा सर्वेषां तीर्थदेवादीनां पापदलनाभिमानं नाशयसि ।

स्वात्म● सकलदेवतीर्थदर्पदलनस्य सिद्धौ वक्तृव्यक्तिपवित्रीकरणं लिङ्गम् । क्षुद्रत्वा● एकव्यक्तेः पवित्रीकरणं लघु क्षुद्रं कार्यं न तेन तेषां दर्पदलनं संभवतीति वक्तृव्यक्तेर्विशेषताम् असाधारण्यं वा सम्पादयितुं पूर्वार्धे पद्ये वाक्यद्वयस्योपादानम् । यद्व्यक्तिकर्मकपवित्रीकरणासामर्थ्यात्तीर्थेषु त्रपा शिवादिदेवानां कर्णेऽङ्गुलीकरणञ्च तादृशवाक्यार्थभूतविशिष्टक्रियाभ्यां सा वक्तृव्यक्तिर्विशिष्यते, तेन तादृशक्रियाद्वयं वक्तृव्यक्तेर्विशेषकम् ।

विशेषकमुपात्तम् । तद्विशिष्टं च तादृशपवित्रीकरणं भागीरथ्यु-पारूढं तादृशकार्योपपादनसमर्थमिति भवति हेतुः ।

'पद्मासन-प्रमुख-निर्जर-चित्तवृत्ति-
दुष्प्राप दिव्यमहिमन्भवतो गुणौघान् ।
तुष्टूषतो मम नितान्तविशृङ्खलस्य
मन्तुं शिशोः शिव न मन्तुमिहासि योग्यः ॥'

अत्र शिशुत्वं शुद्धैकसुबन्तार्थोऽपराधक्षमाकरणे हेतुः । तथा दिव्यमहिमत्वमचिन्त्यमाहात्म्यं सुबन्तार्थविशेषित-सुबन्तार्थरूपं ब्रह्मादिचित्तदुष्प्रापत्वे । एवं तादृशपरमेश्वरगुण-कर्मकस्तवो मन्तौ । तादृशस्तवे च विशृङ्खलत्वमिति शुद्ध-सुबन्तार्थोदाहरणे विशिष्टसुबन्तार्थस्याप्युदाहरणम् ।

---

तद्विशिष्ट● तादृशवाक्यार्थद्वयविशिष्टं यद्वक्तृव्यक्तिपवित्रीकरणं भागीरथी-निष्ठ तत् सर्वतीर्थदेवानां पापदलनदर्पदलने लिङ्गम् इति काव्यलिङ्गलक्षण-समन्वयः ।

नैकविधं शुद्धसुबन्तार्थ लिङ्गं समुदाहरति पद्मासन● ब्रह्मादिदेवानां चित्तवृत्तिभिर्दुःखेन अवगाह्यो विलक्षणो महिमा यस्य तत्सम्बुद्धौ हे शिव ! भवतो गुणसमूहान् स्तोतुमिच्छतोऽत्यन्तमुच्छृङ्खलस्य मम शिशोरिह विषये मन्तुम् अपराधं मन्तुं न योग्योऽसि । शिशुत्वम्● शिशोरपराधः सर्वैः क्षम्यते, अतः शुद्धः शब्दान्तरार्थेनाविशेषितः शिशोः सुबन्तस्यार्थोऽपराध-क्षमाकरणे हेतुरुक्तः । अत्रैवांशे सुबन्तार्थविशेषितसुबन्तार्थस्य हेतुत्वं सङ्गमयति तथा दि● दिव्यमहिमत्वेन विशेषितम् अचिन्त्यमाहात्म्यं सुबन्तार्थरूपं ब्रह्मादिमनसोऽप्यगोचरत्वे हेतुः । ब्रह्मादिमनोऽगोचरस्य शिवस्य स्तवेन वाग्गोचरत्वनयनमपराधः, अतः स्तवोऽपराधे हेतुरित्याह एवमादिना । गम्भीरस्तु विवेकी स्तवस्याशक्यत्वात् स्तवे न प्रवर्तेत, विशृङ्खलस्तु विवेकाभावादशक्येऽपि स्तवे प्रवर्तते, तेन विशृङ्खलत्वं स्तवस्य कारणम् ।

'तवालम्बादम्ब स्फुरदलघुगर्वेण सहसा
मया सर्वेऽवज्ञापुरपथमनीयन्त विबुधाः ।
इदानीमौदास्यं यदि भजसि भागीरथि तदा
निराधारो हा रोदिमि कथय केषामिह पुरः ॥'

अत्र निराधार इत्यादिनाभिव्यक्ते वक्तृनिष्ठसकलकर्तृकद्वेषे आत्मकर्तृकावज्ञापुरपथनयनरूपः सुबन्तार्थविशेषितस्तिङन्तार्थं उपपादकः ।

'विश्वास्य मधुरवचनैः साधून्ये वञ्चयन्ति नम्रतया ।
तानपि दधासि मातः काश्यपि यातस्तवापि च विवेकः ॥'

---

तिङन्तार्थस्य उपपादकत्वमुदाहरति तवालम्बा● हे मातर्भागीरथि ! तवानुकम्पावशात् त्वं मे महान् अवलम्बः सहाय इति विश्वासान्महान् गर्वः समजनि, भवति च गर्वोऽनुचितकारयिता, अतोऽहं सर्वान् देवान् तिरस्कारनगरमार्गम् अनयम् । तवापेक्षया न्यूनताबुद्ध्या तिरस्कृतान् अकरवम् ।

तिरस्कारश्च द्वेषहेतुरिति सर्वे देवा मां द्विषन्ति । अतस्तेभ्यः शुभाशा तु दूरे, तेषां समक्षमपि गन्तुं नार्हामि । अत एव निश्शरणो निराधारोऽस्मि । इदानीं च त्वम् उदासीना न मद्वत्सला, हा त्वमेव कथय इह जन्मनि केषां समर्थानां पुरः रोदिमि ? अपराधी बालस्ताडनभयान्मातुरुत्सङ्गे नारोहति परं मातुः समक्षमेव रोदिति समीहते च यन्माता रोदनदुःखेन ममापराधं क्षमेत, वात्सल्येन आमन्त्रयेत्, पुनश्च तदुत्सङ्गतः सर्वक्लेशनिवृत्तिमनुभवेयम् । इति मातृवत्सलभावं कविरभिप्रैति इति प्रतिभाति । भिव्यक्ते● यदि अन्ये देवा वक्तारं प्रीणीयुस्तदा वक्ता निःशरणः कथं स्यात् ? वक्तृविषयकः सकलदेवानां द्वेष इति भावः । अनीयन्तेति तिङन्तस्यार्थो नयनरूपः, सुबन्ताः कर्मकर्तृपदानि तेषामर्थैर्विशेषितः द्वेषस्य साधकस्तिरस्कार इति भावः ।

परम्परया तिङन्तार्थविशेषितस्य तिङन्तार्थस्योपपादकत्वमुदाहरति विश्वास्य● कश्यपस्यापत्यं स्त्री सम्बुद्धौ हे पृथिवि ? गम्भीराया क्षमाया-

अत्रापि पृथिवीविवेकनाशोपपादने तिङन्तार्थस्य धारणस्य सुबन्तार्थविशेषितस्य तस्यैव जनधारणात्मनो वा असामर्थ्यात् साधुवञ्चनरूपपूर्ववाक्यार्थविशेषितं धारणं हेतुः। विशेषणत्वं च कर्मणि विशेषणत्वात्परम्परया बोध्यम्।

एते च भेदाः प्राचीनकल्पितपदार्थ–वाक्यार्थभेदद्वयवचचातुर्यमात्रेण कल्पिताः, न तु वैचित्र्यविशेषेण।

अथानुमानादस्य को विशेषः? ननु व्याप्यत्व–पक्षधर्मत्वाभ्यां ज्ञायमानमेवार्थसाधकमनुमानम्, स्वरूपेण ज्ञायमानं प्रकृतार्थोपपादकं काव्यलिङ्गमिति विशेष इति चेत्, न, उपपादकं हि सत्यां युक्तौ। सा तु सति व्यभिचार-पक्षावृत्तित्वयोरन्यतरस्यापि ज्ञाने न संभवति। यथा 'विनिन्द्यान्युन्मत्तैः' इत्युदाहृतपद्ये तादृशश्रमाभाव उत्कर्ष-व्यभिचरितो भागीरथ्यवृत्तिर्वेति ज्ञाने जात्वपि न सर्वोत्कर्षः सेद्धुमीष्टे। सेद्धुमीष्टे च सर्वोत्कर्षाव्यभिचरितो भागीरथी-

---

स्तवापि विवेको यातः, सदसद्विवेकिनी नासि, साधुभिः पुण्यशीलैः सह महापातकिनः खलानपि दधासि, तानित्यनेन परामृश्यान् पूर्वार्धेन दर्शयति। विश्वस्तस्य वञ्चनं महापातकम्, विश्वासश्च मधुरवचनैर्नमनेन च। पूर्वार्धोपात्तसाधुवञ्चनादिवाक्यार्थेन विशेषितस्तानिति सुबन्तार्थो धारणकर्म, तेन कर्मणा विशेषितो धारणरूपस्तिङन्तार्थो विवेकनाशस्योपपादकः। पूर्वार्धवाक्यार्थस्तानिति कर्मद्वारा धारणस्य विशेषणमिति परम्परया उदाहरणम्। केवलं धारणं जनसाधारणस्य वा धारणं विवेकनाशसाधने न समर्थमिति एतादृशविशेषितस्य उपपादकत्ववर्णनं मूलव्याख्यानस्याशयः।

व्याप्यत्व● व्याप्यत्वं व्याप्तिर्व्याप्तिविशिष्टत्वं वा, स्वरूपेण● व्याप्ति-पक्षधर्मताविशिष्टत्वमन्तरा। सति● ज्ञाने इत्यस्य विशेषणम्। व्यभिचार-ज्ञानं व्याप्यत्वज्ञानविरोधि। तथा च व्याप्तिपक्षधर्मतयोर्ज्ञानाभावे युक्तिरपि न समुदेति। व्यभिचरितो● व्याप्तिज्ञानाभावः, भागीरथ्यवृत्त्यनेन पक्ष-

वृत्तिश्चेति ज्ञाने । एवं हेतोः सर्वत्राप्युपपाद्याव्यभिचरितत्वज्ञान एवोपपत्तिः । अन्यथा तु इदमेवमनेवं वा स्यादिति संदेह एव । तस्मादुपपत्तिसमर्थनादिविलक्षणशब्दप्रयोगा आलङ्कारिकाणामनुमितिसरणिमेवाभिनिविशन्ते । न च समर्थनाद् दृढप्रत्ययः, न त्वनुमितिरिति वाच्यम् । स ह्यीन्द्रियसन्निकर्षाभावान्न प्रात्यक्षिकः । अनुमितिसामग्र्या बलवत्त्वान्न शाब्दः । अत एव न मानसोऽपीति । सत्यम्, काव्यलिङ्गं प्रकृतार्थोपपादकम् । उपपत्तिश्चानुमितिरेव । व्यभिचरितत्वेऽपि हेतोस्तदानीं व्यभिचारास्फूर्त्तेः । तथापि नानुमानालङ्कारस्यात्र विषयः । श्रोतुर्यल्लिङ्गकानुमितिबुबोधयिषया कविः काव्यं निर्मिमीते तल्लिङ्गमनुमानालङ्कृतेर्विषयः, काव्यव्यापारगोचरीभूतानुमितिकरणमिति निष्कर्षः । काव्यलिङ्गज्ञानजानु-

---

धर्मताज्ञानाभावश्च प्रदर्शितः । वोपपत्ति● तथा च काव्यलिङ्गेऽपि अनुमाने इव व्याप्तिपक्षधर्मताज्ञानेऽपेक्षिते । अन्यथा● युक्तिविरहितोपपादकः संशयस्यैव जनकः । व्यवहारं समनुगमयति तस्मादु● । दृढप्रत्य● तथा च काव्यलिङ्गोपपादकेन समर्थ्यते, अनुमानेन चानुमीयत इति भेदः । काव्यलिङ्गोपपादकेनापि परिशेषादनुमितिरेवेति दर्शयति सहीन्द्रिय● काव्यलिङ्गोपपादकेन जायमान उपपत्तिरूपो न प्रत्यक्षम्, समानविषयकं शाब्दबोधं मानसज्ञानं च प्रति अनुमितिसामग्र्या बलवत्त्वेन तस्याः प्रतिबन्धकत्वात् । पपादकम्● अनुमापकम् । ननु व्यभिचारसामग्रीसत्त्वेऽपि काव्यलिङ्गोपपादकेन उपपत्तिप्रत्ययः समुदेति, स च शाब्दबोधरूपः, व्यभिचारसामग्रीसत्त्वे अनुमितिसामग्र्या अभावात् शाब्दबोधस्याप्रत्यूहत्वादित्याशङ्कायामाह व्यभिचरितत्वेऽपि● व्याप्तिज्ञानसत्त्वे व्यभिचारज्ञानाभावाद् बलवत्या अनुमितिसामग्र्याः सत्त्वेन शाब्दबोधानुपपत्तेः । यत्तु अनुमितौ व्याप्तिज्ञानं करणमत्र तु व्यभिचारज्ञानाभावमात्रम् अपेक्षितमिति कौस्तुभकृतो व्यवस्थापन तत्तु न सम्यक्, सुषुप्तिसाधारणस्य व्यभिचारज्ञानाभावस्याकिञ्चित्करत्वात् । व्यभिचारज्ञानाभावे काव्यशब्दै-

मितिस्तु न कविना श्रोतुर्बुबोधयिषिता । अत एवासौ न काव्यव्यापारगोचर. । श्रोतुः केवलं कारणवशाज्जायत इति नास्त्येवात्र जायमानायामप्यनुमितावनुमान.लङ्कृतेर्विषयः । 'तस्मिन्मणिव्रातमहान्धकारे' इति वक्ष्यमाणपद्ये तु बुबोधयिषितैवानुमितिरित्यस्त्यनुमानविषयः । अपि च कविनिबद्धप्रमात्रन्तरनिष्ठा ह्यनुमितिरनुमानालङ्कृतिं प्रयोजयति । श्रोतृनिष्ठा महावाक्यार्थनिश्चयानुकूला तु काव्यलिङ्गमिति महान्विशेषः । एवं च काव्यलिङ्गातिप्रसङ्गवारणायानुमानलक्षणप्रविष्टानुमितौ काव्यव्यापारगोचरत्वं विशेषणं देयम् ।

---

व्याप्तिज्ञानोदये बाधकाभावाच्च । यदपि तस्यैव अप्रामाण्यग्रहसत्त्वेऽपि काव्यलिङ्गमुपपादयति नानुमानमिति तदपि न तोषावहम्, अप्रामाण्यग्रहसत्त्वे पूर्वोक्ताया युक्तेरपि अभावेन काव्यलिङ्गोपपत्तेरप्यभावात् । श्रोतुर्य● अनुमानालङ्कारोदाहरणे अनुमितिः कविना कथमपि निबध्यते, अभिधया व्यञ्जनया वा काव्यशब्देनैव श्रोता अनुमितिमवबुध्यते, काव्यलिङ्गोदाहरणे तु नानुमितिर्निबध्यते, नापि श्रोता अनुमितिं जानीते, परं साध्यं साधकञ्चैवमुपवर्ण्यते येन तादृशसाधकेन लिङ्गेन श्रोता तं साध्यमनुमिनोति इति भावः । व्यवस्थान्तरं दर्शयति अपि च● अनुमानोदाहरणेषु निबद्धप्रमातरि अनुमितिर्न काव्यश्रोतरि । काव्यलिङ्गोदाहरणेषु काव्यश्रोतरीति महान् विभेदः ।

तिप्रसक्तम्● मर्मप्रकाश इत्थं समर्थयति, नात्र कुवलयानन्दस्य न्यूनता, तद्ग्रन्थ एव प्राचीननव्यभेदेन द्विधा व्याख्यानम् । यत्र समर्थकमपेक्षते समर्थनीय वस्तु तत्र समर्थकोपपादकं काव्यलिङ्गम्, अर्थान्तरन्यासे तु समर्थनीयं सामान्यं विशेषो वा समर्थकं नापेक्षते, केवलप्रतीतिदार्ढ्याय सामान्यविशेषयोरन्यतरस्योपपादनमिति प्राचीनाना विषयव्यवस्थापना, तस्मिन्मते नार्थान्तरन्यासेऽतिप्रसक्तिः । नव्यमते च समिष्यते तथा विशेषणम् इति । तत्रेत्थं चिन्तनीयम्—सामान्यविशेषौ नित्यसाकाङ्क्षौ हि पदार्थौ । सामान्यमपेक्ष्य किमपि कश्चिद्विशेषोऽस्ति । विशेषञ्च कञ्चिदपेक्ष्य किञ्चित् सामान्यम् । एवमेवार्थान्तरन्यासोदाहरणेषु सामान्यविशेषवाक्यार्थौ ।

यत्तु 'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थकम्' इति कुवलयानन्दकारो लक्षणमकार्षीत्तदपि सामान्यविशेषभावानालिङ्गितत्वविशेषणरहितं चेदर्थान्तरन्यासे स्यादेवातिप्रसक्तम्।

यद्यपि—

"—'यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरम्
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥'

'मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षास्तवागतिज्ञं समबोधयन्माम्।
व्यापारयन्त्यो दिशि दक्षिणस्यामुत्पक्ष्मराजीनि विलोचनानि ॥'

---

परस्परं सापेक्षौ, सापेक्षतयैव नित्यसाकाङ्क्षौ वाक्यैकवाक्यतां गच्छतः, एकवाक्यतां विना अर्थान्तरन्यासो न स्थानं लभेत, सामान्यविशेषवस्तुनोस्तादात्म्यसंभवेऽपि वाक्यार्थयोस्तु समर्थ्यसमर्थकभाव एव सम्बन्धः। बहवश्च आलङ्कारिकाः समर्थनाघटितमेव लक्षणं विदधति। ततश्च समर्थनीयपदमात्रेण कथं तुष्यतु पण्डितराजः इति।

**यत्त्वन्नेत्र** ● सीतामुद्दिश्य रामस्योक्तिः। हे प्रिये, यद् इन्दीवरं तव नेत्रसमानकान्ति तद् दैववशात् सलिले मग्नम्। तव मुखच्छायासदृशश्चन्द्रः सोऽपि मेघैराच्छादितः। येऽपि तव गमनसदृशगमना राजहंसास्तेऽपि गताः, एवंरीत्या दैवेन तव सदृशदर्शनेन मम मनोविनोदलेशोऽपि न सह्यते। अत्र बहवो व्याख्यातारः 'मग्नम् इतः गताः' इत्यत्र अन्तर्भावितण्यर्थोऽस्तीति व्याचक्षते, प्रेरणाकर्तृत्वस्य दैवनिष्ठस्य सम्पादनेन दैवपक्षकानुमितौ पक्षधर्मता ससुखं सम्पद्यते। एवं सति कौस्तुभाभिप्रेतमधस्तनं समाहितं भवति—नायिकाङ्गसादृश्याश्रयविघटकत्वादिति हेतुर्न सिद्ध्यति, सादृश्यदर्शनस्यैव विघटकत्वादिति तद्ग्रन्थः। ण्यर्थकर्तृत्वस्य दैवनिष्ठत्वे सादृश्याधारविघटकत्वस्य शब्दत एव दैवे सिद्धत्वात्। विघटकत्वं न विनाशित्वमात्रं येन मज्जनव्यवधापनगमनानि न व्याप्नुयात्, किन्तु मज्जनादिसाधारणम्। अहन्तु न तदावश्यकं मन्ये दैवस्य कार्यमात्रं प्रति निमित्तकारणत्वाद्धेतुतथाऽप्युपपत्तेः कर्तृत्वस्यानावश्यकत्वात्।

**मृग्यश्च** ● दक्षिणस्यां दिशि ऊर्ध्वपक्ष्मपङ्क्तीनि नयनानि सञ्चालयन्त्यः कुशाङ्कुरचरणे अपेक्षारहिताः मृग्यः तव गतेर्ज्ञातारं मां सम्यगबोधयन्।

पूर्वत्र पादत्रयार्थोऽनेकवाक्यार्थरूपश्चतुर्थपादार्थे हेतुः। उत्तरत्र तु संबोधने व्यापारयन्त्य इति मृगीविशेषणत्वेनानेकपदार्थो हेतुरुक्तः'' इत्यलङ्कारसर्वस्वकृतोक्तम् अनुमोदितं च कुवलयानन्दकृता। तदुभयमसत्। अनुमानार्थान्तरन्यासविषये हेत्वलङ्कारो नेति तावत्सर्वसम्मतम्। अन्यथा तयोरुच्छेदापत्तेः। अयं चानुमानस्यैव विषयः। चतुर्थचरणे दैवरूपे पक्षे नायिकाङ्गसादृश्यदर्शनजन्यसुखासहिष्णुत्वरूपसाध्यस्य चरणत्रयवेद्येन यत्तदङ्गसादृश्याधारविघटकत्वेन हेतुना सिद्धेः स्फुटत्वात्। दैवं नायिकाङ्गसादृश्यदर्शनजन्य-मदिष्टसुखासहिष्णु, तत्तन्नायिकाङ्गसादृश्याधारविघटकत्वात् मदीयशत्रुभूतयज्ञदत्तादिवदिति च प्रयोगः। मृग्यश्चेति द्वितीयपद्ये यद्यपि संबोधने वक्तृनिष्ठे मृगीनेत्रव्यापारो ज्ञायमान उत्पादकः, तथापि नासावुत्पादकता अनुमितिकारणताया अतिशेत इत्यनुमानालङ्कार एव युक्तः। इयांस्तु विशेषः—

---

वाक्यार्थरूपः ● तत्तन्नायिकाङ्गसादृश्याधारविघटकत्वरूपः। पादार्थे ● नायिकाङ्गसादृश्यदर्शनजन्यमदिष्टसुखासहिष्णुत्वरूपे। नानेक ● निर्व्यपेक्षान्तार्थः विलक्षणनेत्रपक्ष्मचालनादिः। हेत्वलङ्कारो ● काव्यलिङ्गालङ्कारः।

अत्र कौस्तुभकृतः—उत्पलादिमज्जनोपपत्त्यर्थमेव चतुर्थचरणोपन्यासात्। तदुक्तरीत्या च विपरीतोपपाद्यैरुपपादकभावलाभात्। तस्य चानभिमतत्वात्। व्यभिचारास्फुरणदशायामनुमितिः संभवत्येवेत्यभिधाने तु उपपादकत्वस्यापि संभवात्। त्वदुक्तोदाहरणेऽपि गङ्गा सर्वोत्कृष्टा महापापनाशकत्वाद् इत्यनुमानसंभवाच्च इति। प्राय एतत् प्राक्तनव्याख्यानेन समाहितप्रायम्। उत्पलादीनां समयेन प्रकृत्यैव मज्जनादिकम्, न तदुपपादकमपेक्षते किन्तु विप्रलम्भपोषकतयोपात्तानि दुःखदाने सुखहरण एवोपपद्यन्ते। अत एव कौस्तुभकृत एव विपरीतोपपाद्योपपादकभावप्रसङ्गः। किंश्च पण्डितराजेन अनुमानात् काव्यलिङ्गस्य विषयभेदः प्रदर्शितः। तेन तदुदाहरणे नानुमानस्य प्रसङ्गः। न तत्र अनुमितिः काव्यव्यापारगोचरः। न च कविनिबद्धप्रमातरि, अपि तु श्रोतरि इति।

यत्पूर्वपद्येऽनुमितिर्गम्या, इह पुनर्बुध्यतेर्वाच्या । [ मृग्यो दक्षिणानिलसम्पर्कवत्यः, दक्षिणाभिमुखविलक्षणनेत्रव्यापारवत्वात् ] इति च प्रयोगः । वैलक्षण्यं चोत्पक्ष्मेत्यादिनोक्तं बोध्यम् ।

अत्र वदन्ति—काव्यलिङ्गं नालङ्कारः । वैचित्र्यात्मनो विच्छित्तिविशेषस्याभावात् । स हि जन्यतासंसर्गेण कविप्रतिभाविशेषः, तन्निर्मितत्वप्रयुक्तश्चमत्कृतिविशेषो वेत्युक्तम् । नचानयोरन्यतरस्याप्यत्र संभवः । हेतुहेतुमद्भावस्य वस्तुसिद्धत्वेन कविप्रतिभानिर्वर्त्यत्वायोगात् । अत एव चमत्कृतिरपि दुर्लभा । श्लेषादिसंमिश्रणेन विच्छित्तिविशेषोऽत्राप्यस्तीति तु न वाच्यम् । तस्य श्लेषाद्यंशप्रयोज्यत्वेन काव्यलिङ्गस्यालङ्कारतायास्तथाप्यसिद्धेः । यत्र तूपस्कारकवैचित्र्याद्विलक्षणं तदुपस्कार्यवैचित्र्यं तत्रास्तु नामोपस्कारकादुपस्कार्यस्य

---

**तेर्वाच्या** ● अनुमितेर्बोधनेऽनुमानं गम्यत्वे काव्यलिङ्गमिति मर्मप्रकाशस्य व्यवस्थाऽत्र प्रतिभाति, परं पण्डितराजस्य प्रागुक्तव्यवस्थाद्वयवन्न निरापदमिति बोध्यम् ।

**णानिल** ● पद्ये प्रसङ्गे चानिलस्य सम्बन्धाभावादनुमानप्रयोगे तदुल्लेखः समस्यैका । विप्रलम्भरतिपोषणस्य प्रसङ्ग एव । दक्षिणानिलश्च तदुद्दीपने दक्ष एव । उद्दीपनश्चासौ न विरहिजनविरहदावस्यैव, अपि तु पशुपक्षिप्रभृतीनामपि, तेन पशुपक्ष्यादिष्वपि कश्चिच्चेष्टाविशेषः कवेरभिप्रेतः । तस्य शीततया सर्वाङ्गमुत्तरदिशि कृत्वा दक्षिणाभिमुखीनां मृगीणां तादृशो नेत्रव्यापारः । दक्षिणदिक्स्थितायास्तवाङ्गसम्पर्की पवनो मृगीनेत्रव्यापारद्वारा तव अगतिज्ञं माम् अबोधयत्, दक्षिणानिलसम्पर्कवत्यो मृग्यो वा विलक्षणनेत्रव्यापारद्वारा माम् अबोधयन् । तादृशानिलसम्पर्कनेत्रव्यापारादिषु स्वभावोक्तेस्तादृशव्यापाराणाञ्च संबोधने चोपयोगवर्णनमुत्प्रेक्षायाश्च सम्बन्धं घटयति चेदस्तु, न तेनानुमानपरिहारः । पाठभ्रंशकल्पने तु 'दक्षिणदिगिङ्गणवत्यः' इति पाठः सम्यक् प्रतिभाति, इङ्गणं सूचनम्, नेत्रेण अनुकूलप्रतिकूलसूचनायाः प्रसिद्धत्वात् । विरही सर्वत्र स्वप्रियं पश्यतीति दिशा तादृशसम्बोधनम् ।

**भाविशेषः** ● कविप्रतिभाजन्यं वैचित्र्यमिति भावः । चमत्कृतिरानन्दविशेषः । **तूपस्कारक** ● काव्यलिङ्गे श्लेषाद्युपस्कारकं हेतुफलोत्प्रेक्षयोरतिशयोक्तेरिव । उपस्कार्यश्लेषादेः काव्यलिङ्गम् अतिशयोक्तेर्हेतुफलोत्प्रेक्षे । लङ्कार

पृथगलङ्कारत्वम् । यथातिशयोक्तेर्हेतुफलोत्प्रेक्षयोः । यत्र तूपस्कारकवैचित्र्य एव विश्रान्तिस्तत्रोपस्कार्यमनलङ्कार एव । यथा प्रकृते ।

एवं तर्हि बहूनामलङ्कारत्वेन प्राचीनैरूरीकृतानामनलङ्कारतापत्तिरिति चेत्, अस्तु । किं नश्छिन्नम् । तस्मात् 'निर्हेतुरूपदोषाभावः काव्यलिङ्गम्' इत्यपि वदन्ति ।

इति रसगङ्गाधरे काव्यलिङ्गनिरूपणम् ।

---

एव ● काव्यलिङ्गस्थलीयश्लेषादेरेव वैचित्र्यमनुभूयते, न तु श्लेषादिवैचित्र्यप्रयुक्तं काव्यलिङ्गवैचित्र्यम् । वदन्ति ● प्राचीनानामननुरोधेन यथामति कल्पनाशीला इति शेषः । एतदनलङ्कारत्ववर्णनं तुच्छमिति कौस्तुभकृतः । लौकिकत्वेऽपि कविप्रतिभामात्रजन्यतया चमत्कारजनकत्वात् । एतदीयहेतुहेतुमद्भावस्य लोकसिद्धत्वाभावाच्च । न ह्युक्तमुखालोकोच्छेदादीनां महामोहतादाम्यादिहेतुत्वं क्वचित्सिद्धम् । किञ्चैवमुपमादेरप्यलङ्कारत्वं न स्यात्, सादृश्यस्य वास्तवत्वेन कविप्रतिभाकल्पितत्वविरहात् । न च तत्रापि उपमाप्रयोजकसाधारणधर्माभेदांशे तत्कल्पितत्वमेवेति वाच्यम् रमणीयत्वादिनिमित्तधर्मस्यापि लोकसिद्धत्वात् । अभेदांशस्यैव शक्तिकल्पिततया तदंशस्यैवालङ्कारत्वम् न तु सादृश्यस्येत्युक्तदोषापरिहाराच्च । चमत्कारजनकस्य लौकिकस्याप्यलङ्कारत्वे बाधकाभावादिति । अत्र चिन्तनीयम्—लौकिकत्वे सति कविप्रतिभामात्रजन्यत्वं कथं संभवति ? लौकिकानां पदार्थानां कविप्रतिभया संयोजनमिति तु संभवेत् । यथा विनिन्द्यान्युन्मत्तैरित्यादौ एनसां विशेषणानि कविप्रतिभानिवर्तितानि अन्यानि च शास्त्रसिद्धानि । किञ्चैवमुपमादेरित्यादेः समाधानं तु मूले दत्तमेव । अतिशयस्य अभेदांशस्य वा वैचित्र्यापेक्षया उपमावैचित्र्यस्य पृथक्त्वेनानुभवात् । तेषामलङ्कारत्वे बाधाभावात् ।

चमत्कारजनकस्य लौकिकस्याप्यलङ्कारत्वमिति न काव्यसमीक्षकानां वचः, अस्तु नाम लौकिकपदार्थैरपि कश्चिच्चमत्कारः, परं काव्यालङ्कारः कविप्रतिभासंस्पर्शमन्तरा कथमुत्तिष्ठेत ?। यदि पूर्वोक्तोदाहरणेषु प्रदर्शित उपपादकः सर्वथा लोकसिद्धस्तदा नास्त्येव काव्यलङ्कारता, यदि अल्पीयसी अपि कविप्रतिभा तत्रोपयुज्यते, तदा काव्यालङ्कारत्वं कथं परिहरणीयमिति अनुभववशादास्थेयम् । प्रदर्शितश्च सर्वोदाहरणेषु तथा पण्डितराजेन । अत एव वदन्तीत्युच्यते ।

॥ इति काव्यलिङ्गनिरूपणम् ॥

**अथार्थान्तरन्यासः—**

**सामान्येन विशेषस्य, विशेषेण सामान्यस्य वा यत्समर्थनं तदर्थान्तरन्यासः ।**

समर्थनं चेदमेवमनेवं वा स्यादिति संशयस्य प्रतिबन्धक इदमित्थमेवेति दृढप्रत्ययः । निश्चय इति यावत् । तत्र प्रकृतयोः सामान्यविशेषयोः समर्थ्यत्वम्, अप्रकृतयोर्विशेषसामान्ययोः समर्थकत्वं प्रायशो दृश्यते ।

तच्च तावत्साधर्म्यवैधर्म्याभ्यां द्विविधम् ।

उदाहरणम्—

'करिकुम्भतुलामुरोजयोः क्रियमाणां कविभिर्विशृङ्खलैः,
कथमालि शृणोषि सादरं विपरीतग्रहणा हि योषितः ॥

अत्र संबोध्यकर्तृकस्य तदीयकुचवृत्तिकरिकुम्भतुलासादरश्रवणस्यानौचित्यं प्रतिपाद्यते । तच्च तस्यानिष्टसाधनत्वे संगच्छते, अनिष्टसाधनत्वमपि तादृशश्रवणमिष्टसाधनमिति बुद्ध्या श्रवणं कुर्वाणायाः कान्ताया भ्रान्तात्वं विना दुरुपपादमिति

---

अर्थान्तरन्यासालङ्कारनिरूपणम्

उपपादकादर्थादन्यस्यार्थस्य न्यासः स्थापनं समर्थनमिति यावत् । स चार्थः क्वचित् सामान्यं विशेषश्च । सामान्यविशेषयोः समर्थ्यसमर्थकभावेऽयमलङ्कारः इति भावः । दृढप्रत्ययः● अप्रामाण्यसंशयानास्कन्दनं दार्ढ्यम् । तच्च● समर्थनञ्च, साधर्म्यमन्वयसहचारो वैधर्म्यं व्यतिरेकसहचारः । यो धूमवान् स वह्निमानिति प्रथमः द्वितीयश्च यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति । सामान्येन विशेषसमर्थनमुदाहरति—करिकुम्भ● हे आलि उत्कृष्टस्योपमानत्वं निकृष्टस्य चोपमेयत्वमिति शृङ्खलां जहद्भिः कविभिः क्रियमाणा स्तनयोः करिकुम्भोपमां सादरं कथं शृणोपि, अतो भ्रान्तासि । यतो योषितां भ्रान्तं ज्ञानं साधारणम् । तस्या● अनौचित्यं तादृशश्रवणस्यानिष्टसाधनत्वे

स्त्रीत्वेन भ्रान्तात्वं प्रतिपाद्यते । तच्च संबोध्यस्त्रीविशेष-भ्रान्तात्वरूपस्य विशेषस्य सामान्यं समर्थकं च ।

'उपकारमेव कुरुते विपद्गतः सद्गुणो नितराम् ।
मूर्च्छां गतो मृतो वा रोगानपहरति पारदः सकलान् ॥'

अत्र विपद्गतसद्गुणकर्तृकोपकारस्य सामान्यस्य प्रकृतस्य मूर्च्छित-मृतपारदकर्तृकं रोगापहरणं विशेषः, उदाहरणतया समर्थकं च । पारदवृत्तान्ते प्रकृते तु पूर्वार्धोत्त-रार्धयोर्व्यत्यासे कृते सामान्यस्य विशेषसमर्थकताप्यत्रैव संभवति ।

'अहन्नेको रणे रामो यातुधानाननेकशः ।
असहाया महात्मानो यान्ति काञ्चन वीरताम् ॥'

अत्र विशेषस्य सामान्यं समर्थकम् ।

वैपरीत्ये तु सामान्यस्य विशेषः ।

'असहाया—' इत्युत्तरार्धमपास्य 'नूनं सहायसंपत्ति-मपेक्षन्ते बलोज्झिताः' इति कृते विशेषस्य वैधर्म्येण सामान्यम् ।

---

संगच्छते । प्रतिपाद्यते ● त्वं भ्रान्ता, स्त्रीत्वाद् अन्ययोषिदिव, इत्यादि-रीत्या ! भ्रान्तिश्चानिष्टतादृशश्रवणस्य इष्टसाधनत्वेन ज्ञानमत्र । सामान्यम् ● सर्वासां भ्रान्तत्वम् । उभयोरपि विपर्ययादुपकार्योपकारकभावे उदाहरणमाह उपकारमेव ● निगदव्याख्यातम् । तथा ● तथैव क्वचिन्न मुद्रितः । अहन् हन्धातोर्लङि प्रथमपुरुषैकवचनम् । अनेकशः यातुधानान् राक्षसान् । काञ्चन ससहायानपेक्ष्यातिशयिताम् । वैधर्म्येण ● एकोऽसहायवाची । वीरो रामो यातुधानहनने सहायं नापेक्षते स्म, बलित्वाद् अन्यो दुर्बलः स सहायमपेक्षते इति सामान्योदाहरणम् । न तथा दुर्बलो रामस्तस्मान्न सहायमपेक्षत इति विशेषः । अत्र सरला विपरीतं लिखति एवमन्यत्रापि । वैपरीत्यम् । दुर्बलाः सहायमपेक्षन्त इति सामान्यं समर्थ्यम् । यश्च बली न स सहायमपेक्षते इति

अर्धवैपरीत्ये दुर्बलवृत्तान्ते प्रकृते तु वैपरीत्यम् ।

अस्मिन्नलङ्कारे समर्थ्य-समर्थकभाव आर्थः शाब्दश्चालङ्कारताप्रयोजकः। न तु काव्यलिङ्गे हेतुहेतुमद्भाव इवार्थ एव। हि यत् यतः इत्यादेः प्रतिपादकस्याभावे आर्थः। स तु कथितः 'मूर्च्छां गतो मृतो वा' इत्यत्र। तत्सत्त्वे शाब्दः। सोऽपि 'विपरीतग्रहणा हि' इत्यत्र।

यथा वा—

'भवत्या हि व्रात्याधमपतितपाखण्डपरिषत्-
परित्राणस्नेहः श्लथयितुमशक्यः खलु यथा।
ममाप्येवं प्रेमा दुरितनिवहेष्वम्ब जगति
स्वभावोऽयं सर्वैरपि खलु यतो दुष्परिहरः ॥'

अत्र भगवत्या भागीरथ्याः स्तोतुश्च वृत्तान्तयोर्विशेषयोः समर्थकस्य चतुर्थचरणप्रतिपाद्यस्य सामान्यस्य समर्थकता यत इत्यनेनोच्यते।

ननु सामान्यार्थो विशेषार्थसमर्थक इत्यस्य सामान्यव्याप्तिज्ञानं विशेषानुमितिप्रयोजकमित्येवार्थः पर्यवस्यति, स्वभावादेर्दुष्परिहरत्वादिव्यभिचारज्ञानदशायां तादृशार्थस्य समर्थकत्वाप्रतिपत्तेः, प्रतीतिविशदीकरणं समर्थकेन क्रियते

---

वैधर्म्येण यथा रामो यातुधानहनने इति विशेषः समर्थकः। इत्यत्र हि शब्देन उपात्तः। उपमाऽलङ्कृतं विशेषं समर्थ्यमुदाहरणमिदम्, भवत्या हि हे अम्ब ! यथा निश्चयवत्या व्रात्यानामधमानां पतितानां पाषण्डानाञ्च समूहस्य परित्राणे यः स्नेहः स श्लथयितुं शिथिलीकर्तुमशक्यस्तथा संसारे पापपुञ्जेषु ममापि प्रेमा दुःखेन परिहर्तुं शक्यः। विशेषः। समर्थकञ्च सामान्यं सर्वैरपि स्वभावो दुष्परिहर एव। ननु चेदित्येतावत्पर्यन्तं शङ्का ग्रन्थः। कविः

नानुमानमिति प्राचीनप्रवादस्त्वविचारितरमणीय इति नायं भेदोऽनुमानादतिशेते। अतिशेते च विशेषार्थेन सामान्यार्थ-समर्थनरूपोऽधिकरणविशेषारूढसहचारज्ञानाहितव्याप्तिज्ञानदार्ढ्यात्मेति चेत्, कविः शृणोति।

नचैवमपि विशेषस्य सामान्यसमर्थनं नार्थान्तरन्यासभेदो भवितुमीष्टे, प्रागुक्तोदाहरणालङ्कारेणैव गतार्थत्वादिति वाच्यम्, इवादिप्रयोगाभावस्यैवात्र ततो वैलक्षण्यात्। एवमपि वाचकाभावादार्थोऽयमुदाहरणालङ्कारोऽस्तु, न त्वर्थान्तरन्यासभेद इति चेत्, इदमस्ति वैलक्षण्यम्—

---

शृणोति● संदिग्धोऽस्याभिप्रायः स्वीयाः कल्पना जागृयुर्व्याख्यातॄणाम्। अत्र मर्मप्रकाशः—कविनिबद्धप्रमात्रन्तरनिष्ठा ह्यनुमितिरनुमानालङ्कारस्य विषय इत्यादिना काव्यलिङ्गालङ्कारे दत्तोत्तरत्वादिति भाव इति लिखति। अयं भावः—एवं वर्णनेन श्रोतुरनुमितिर्जायतान्नाम परं कविनिबद्धप्रमातुर्न जायते। यथा तस्मिन् मणिव्रातेत्यादिपद्ये पुरवासिनां निबद्धानां कोकदर्शनेन दिवसावसानानुमितिर्न तथाऽर्थान्तर्न्यासोदाहरणे। केवलमत्र समर्थ्यसमर्थक-भावानुसारिणौ सामान्यविशेषौ वर्ण्येते। हिशब्देनापि नानुमितिर्निबद्ध्यते। एवञ्च पूर्वोक्तं काव्यव्यापारगोचरीभूतत्वमपि अनुमितिविशेषणमनुसन्धेयम् इति। अस्मिन् पक्षे च नायं भेदोऽनुमाना। दित्यत्रानुमानालङ्कारा। दित्यर्थः। मन्ये कथयतीत्यादीनां प्रयोगाभावात् कथमनुमितीति वाच्यं प्रतीयमानस्य तस्य स्वीकारे बाधकाभावात्। धिकरणविशेषा● यथा पारदरूपेऽधिकरणविशेषे उपारूढो यः 'यो यः सद्गुणः स स विपद्गतोऽप्युपकुरुते, यथा मूर्छां गतो मृतो वा पारदः' इति सहचारस्तत्प्रयोज्ये व्याप्तिज्ञाने दार्ढ्यसम्पादनमेव विशेषेण पारद-वृत्तान्तेन सद्गुणवृत्तान्तस्य समर्थनमित्यर्थः। न च अनुमितिकरणस्य व्याप्ति-ज्ञानादेरेवास्यालङ्कारतया कथमनुमानालङ्कारादयमतिरिच्यत इति वाच्यम्, सिद्धान्तेऽनुमितिरूपस्यैवानुमानालङ्कारस्य सिद्धान्तितत्वादिति। परमस्मिन् पक्षे कविः शृणोतीति वाक्यस्थं कविपदं न तादृक् स्वारस्यमावहति। कवयितॄणां यां चमत्कृतिमुदिश्य काव्यरचना न तामनुमानं स्पृशतीत्येव स्वारस्यं प्रतिभाति। अथवाऽल्पव्यतिरेकात् कविपदमालङ्कारिकपरम् आलङ्कारिक-

सामान्यार्थसमर्थकस्य विशेषवाक्यार्थस्य द्वयी गतिः। सामान्यगत एवेत्येका। अनुवाद्यविधेयांशस्तु सामान्यगत एवेत्येका। अनुवाद्यविधेयोभयांशेऽपि विशेषत्वमित्यपरा। तत्राद्या उदाहरणालङ्कारस्य विषयः, द्वितीया त्वर्थान्तरन्यासभेदस्य। एवं च 'मूर्च्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः' इत्युदाहरणालङ्कारगते विशेषे उपकारमेव कुरुत इति प्राचीन-

---

सिद्धान्तव्याकोप इति कविः शृणोत्यनेन प्रतिपिपादयिषितं प्रतिभाति। तच्च नानुमानालङ्कारखण्डनपरतया सम्यक्तामञ्चति, अनुमानालङ्कारस्य चमत्कृत्याधायकतायास्तैरप्यङ्गीकारात्। किञ्च न चैवमपि विशेषस्येत्यादिनाऽग्रिमशङ्काग्रन्थेऽपिशब्दोऽप्येवं न विशेषमाधत्ते, अनुमानमिवोदाहरणालङ्कारस्यापि कविः शृणोतीत्यादिना वारणे विशेषाभावात्। मम तु आलङ्कारिकसिद्धान्तविरोधाहितस्य संशयस्य कविः शृणोतीत्यनेन वारणे सिद्धान्तान्तर्गतं सदेहमुत्थापयितुं शङ्काग्रन्थेऽपि विशेषं द्योतयत्येव। तस्माद् इत्यादिश्चेदन्तः शङ्काग्रन्थो नैयायिकसम्मतानुमानाविशेषोत्थापकः। कविः शृणोतीत्यनेनेदं प्रतिपिपादयिषितम्—लोकसिद्धं तादात्म्यं कार्यकारणभावादिकञ्चादाय समुत्थितं व्याप्तिज्ञानञ्चादाय लौकिकमनुमानं प्रवर्तते। यथा शिंशपावृक्षयोस्तादात्म्यम्। तत्र शिंशपात्वेन वृक्षत्वेनैव तादात्म्यात्। अत्र तु दुष्परिहरत्वसामान्यमात्रेण सर्वस्वभावभागीरथीस्तोतृस्वभावयोस्तादात्म्यं कविकल्पनामात्रोत्थितं न वस्तुतोऽनुमानाङ्गम्। परं लोकसिद्धानुमानमिवोपपाद्यतेऽर्थान्तरन्यासे इत्येव कविकल्पनाचातुर्यम्। लौकिके तु बाधज्ञानं प्रतिबन्धकमत्र कविप्रतिभाने तु नेत्यपि। इत्यादिकमूह्यं विद्वद्वरैः। प्रतीतिविशदीकरणमनुमितिरेव परं तस्या मूलं न लोकसिद्धं वास्तविकमपि तु कविकल्पनामात्रोदितम्। प्रतीतौ वैशद्यान्तरं न किमपि प्रसिद्धमित्येतावतैव ततो विद्वेषः। अत्र तु अन्ततोऽनुमितिरायात्येव इति दिक्। गतिः● उदाहरणेऽर्थान्तरन्यासे च। द्यांशमात्रे● पारदमात्रे। विधेयांश● उपकारकरणम् एकमेव सामान्यांशगतम्। सद्गुणपारदयोः सामान्यविशेषभावः। अंशतो भेदे सामान्यविशेषभावः। उपकारकरणे एकस्मिन् सामान्यविशेषभावाभावात्। योभयांशे● तत्र सद्गुणपारदयोः, उपकारकरणरोगापहरणयोश्च सामान्य-

सामान्यार्थगतैव यथोक्तरूपेण क्रिया विधेया। 'रोगानपहरति पारदः सकलान्' इत्यर्थान्तरन्यासगते तु पृथगुपात्तविशेष-रूपेणेति।

लक्षणे त्वस्य विशेषेणेत्यत्रोभयांशविशेषो ग्राह्यः। तेनोदा-हरणालङ्कृतौ नातिप्रसङ्गः। यदि चायमल्पो विशेषो नास्योदाहरणालङ्कारात् पृथगलङ्कारतां साधयितुं प्रभवति, अपि तु तद्विशेषतामित्युच्यते, तदा उदाहरणालङ्कारोऽर्थान्तर-न्यासस्य, दृष्टान्तस्य प्रतिवस्तूपमा, रूपकस्यातिशयोक्तिश्च विशेषः। उपमैव चार्थी स्मरणभ्रान्तिमत्संदेहा इत्यपि सुवचं स्यात्, तत्रापि विशेषस्याल्पत्वात्। किञ्चोदाहरणालङ्कारो न प्राचां मनःसन्तोषमावहति, उपमयैव तैस्तस्य निरासात्। अतस्तेषां विशेषेण सामान्यस्य समर्थनमर्थान्तरन्यासं विना नान्यत्र प्रवेष्टुमीष्ट इति।

अत्र हि प्रतिज्ञा—हेत्ववयवयोरिवाकाङ्क्षाक्रमप्राप्तं समर्थ्यसमर्थकवाक्ययोः पौर्वापर्यमिति न मन्तव्यम्। न ह्यत्र

---

विशेषभावः। विशेषरूपेण● रोगापहरणत्वेन विधेया। ग्राह्यः● अनु-वाद्यविधेयोभयगतविशेषेणेति विवक्षणीयमिति भावः। प्रतिवन्दितयोत्तरमार-चयति तदा● एते तेभ्यो भिन्ना अलङ्कारा व्यपदिश्यन्तेऽत इषद्विशेषेणापि अलङ्कारान्तरकल्पनेत्यालङ्कारिकसिद्धान्तस्तेनात्राप्यल्पेनापि विशेषेणार्थान्तरन्यासस्य नोदाहरणमतिक्रमणीयम्। किञ्च नैयायिकानामुदाहरणावयवो महानसम् इत्येव प्रयुज्यते, न वह्निमन्महानसम्, तथैवालङ्कारिकोदाहरणेऽपि विधेयविशिष्टस्यैव विशेषता शब्दमर्यादया लभ्यते। विधेयविशिष्टन्तु विशेषतां दधदपि नोदाहरणतां भजत इत्यपि बोध्यम्। प्राचामुदाहरणपार्थक्यमनङ्गी-कुर्वाणानां मते तु अर्थान्तरन्यासस्य गतार्थता न शङ्कितुमपि शक्यत इत्याह किञ्चोदाहर● उदाहरणमुपमायां गतार्थयता। मर्थान्तरन्यासञ्चोपमातो विवेच-यतां प्राचामपि उदाहरणादस्यालङ्कारस्य विशेषोऽनुभवपथं गत इति भावः। वाकाङ्क्षाक्रम● अयं पर्वतो वह्निमानिति प्रतिज्ञोत्तरं कुत इत्याकाङ्क्षा जायते

इति सकलालङ्कारिकसिद्धं काव्यलिङ्गोदाहरणमसंगतं स्यात्। अपरार्धे वाक्यार्थद्वयस्य कारणत्वेनार्थान्तरन्यासोदाहरणतापत्तेः ।

यदपि विमर्शिनीकार आह—"विशेषेणापि सामान्यसमर्थने यत्र सामान्यवाक्यार्थस्योपपादनापेक्षत्वं तत्रार्थान्तरन्यासः। यत्र पुनः स्वतः सिद्धस्यैव विशदीकरणार्थं तदेकदेशभूतो विशेष उपादीयते तत्रोदाहरणालङ्कारः । यथा 'निमज्जतीन्दोः किरणेष्विवाङ्कः' इत्यत्र" इति ।

तदपि न ।

'निजदोषावृतमनसामपि सुन्दरमेव भाति विपरीतम् ।
पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम् ॥'

इति प्राचीनसंमतोदाहरणे सामान्यवाक्यार्थस्यार्थस्यासंदिग्धत्वेनोपपादनानपेक्षत्वात् । न हि दोषेण भ्रमो भवतीत्यर्थे पामरस्याप्यस्ति संशयः, येनोपपादनापेक्षा स्यात् । अस्त्येव

---

दपि भवन्तं प्रणतवान् । नमन्मुक्तः सम्प्रत्यहमतनुरग्रेऽप्यनतिमान्, तदीश ! क्षन्तव्यं तदिदमपराधद्वयमपि ॥ पुराजन्मनि कस्मिन्नपि कस्मिन्नपि क्षणेऽपि न प्रणतवानिति तु समर्थ्यम् । समर्थकं वपुःप्रादुर्भावः । नमने मुक्तिप्रसक्त्या शरीरं न स्यात् । इदानीं नमन्नपि अग्रे न नंस्यामि इत्यस्य अतनुरिति समर्थकम् । मुक्तिर्भविष्यतीति निश्चयात् । आह॰ प्रायोऽल्पीयानेव भेदस्तत्पङ्क्त्याः । काव्यप्रकाशोद्धृतं पद्यमुदाहरति निजदोषा॰ दोषेण विपरीतग्रहणं भवतीति सामान्यं समर्थ्यम् । यथा पित्तदोषेण शुक्लशङ्खस्य पीतत्वेन ग्रहणं विशेषः समर्थकः । तर्कस्थले॰ धूमो वह्निव्यभिचारी न वेति संशयनिराशाय धूमो यदि वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यादित्याकारक आहार्यारोपशरीरस्तर्क उपस्थाप्यते । तर्कस्थले आहार्यस्य संशयस्यावश्यकता न भवति तर्कात्मकं ज्ञानमेवाहार्यम् । तथा च यथा तर्क आहार्यस्तथाऽत्र

तर्कस्थल इवाहार्योऽत्रापि संशय इति चेत्, त्वदुक्तोदाहरणालङ्कारेऽपि तस्य साम्राज्यात्।

तस्मादस्मदुक्तैव व्यवस्थानुसर्तव्या।

कुवलयानन्दकारस्तु—"यस्मिन् विशेषसामान्यविशेषाः स विकस्वरः', 'अनन्तरत्नप्रभवस्य—' इत्यादि।

'कर्णारुन्तुदमन्तरेण रणितं गाहस्व काक स्वयं
माकन्दं मकरन्दशालिनमिह त्वां मन्महे कोकिलम्।
धन्यानि स्थलसौष्ठवेन कतिचिद्वस्तूनि कस्तूरिकां
नेपालक्षितिपालभालतिलके पङ्के न शङ्केत कः॥'

पूर्वमुपमारीत्या, इह त्वर्थान्तरन्यासरीत्या विकस्वरालङ्कारः इत्याह तत्तुच्छम्। 'उपकारमेव कुरुते' इत्युदाहरणा-

---

दोषेण विपरीतग्रहणं जायते न वेत्याकारकः संशय इच्छावशात्समुदियात्तदर्थं समर्थकापेक्षेति पूर्वपक्षः। आहार्यसंशयस्य सर्वत्र सौलभ्यादुदाहृतनिमज्जतीत्यादौ दोषो गुणसन्निपाते निमज्जति न वेत्याहार्यसंशयापत्तेः समर्थनापत्तेः। अनन्तरत्नप्रभवेत्यादिः। स्मदुक्ता० प्रतीतिवैशद्यार्थमित्यनेन। यस्मिन्-विशेष० यस्मिन् प्रथमं विशेषस्तत्समर्थनार्थं सामान्यं ततः तस्याप्यदृढतया समर्थनार्थं पुनर्विशेषान्तरमुपादीयते। अनन्तरत्न० उदाहरणालङ्कारान्ते व्याख्यातमिदम्। अस्य उपमानरीत्या विशेषान्तरस्य न्यसने इत्यादिः। अर्थान्तरन्यासविधया यथा कर्णारुन्तुदः.....मर्माणि तुदतीत्यर्थे विध्वरुषोस्तुद् इत्यनेन खशि मुमि संयोगान्तलोपः। हे काक! कर्णव्यथाकरं रणितं विनैव मञ्जरीरससहितमाम्रवृक्षं समाश्रय। इह आम्रवृक्षे त्वां कोकिलं मन्महे! ननु कथं कोकिलतया काकस्य मननमित्याशङ्कायां समर्थनाय सामान्यं कतिचिद्वस्तूनि स्थानसौष्ठवेन धन्यानि जायन्ते तथा त्वमपि कोकिलो भविष्यसि। तस्य सामान्यस्य समर्थनाय पुनर्विशेषः। तिलके स्थानेऽन्यत्रोपलभ्यमानः पतिते पाठः स्फुटः। नेपालराजभाले यदि पङ्कं पतेत् तदाऽपि कस्तूरी नेति कः शङ्केत

लङ्कारोक्तास्मदुदाहरणे प्राथमिकविशेषस्याभावात्त्वदुक्तो विकस्वरालङ्कारो न संभवतीति कश्चिदलङ्कारस्त्वयापि वाच्यः। एवं चार्थान्तरन्यासस्य तस्य चार्थान्तरन्यासप्रभेदयोश्च संसृष्टयैवोदाहरणानां त्वदुक्तानां गतार्थत्वे नवीनालङ्कार-स्वीकारानौचित्यात्। अन्यथोपमादिप्रभेदानामनुग्राह्यानु-ग्राहकतया संनिवेशेऽलङ्कारान्तरकल्पनापत्तेः। 'वीक्ष्य रामं घनश्यामं ननृतुः शिखिनो वने' इत्यत्राप्युपमापोषितायां भ्रान्तावलङ्कारान्तरत्वप्रसङ्गाच्च।

इति रसगङ्गाधरेऽर्थान्तरन्यासनिरूपणम्।

अथानुमानालङ्कारः—

अनुमितिकरणमनुमानम्।

अनुमितिश्चानुमितित्ववती। अनुमितित्वं चानुमिनोमीति

---

न कोऽपि। तत्र पङ्कमपि मृगमदतामेतीति भावः। प्राथमिक● प्रथमं विशेषस्यानिरूपणात्। त्वयाऽपि● उदाहरणस्यातिरिक्ततामनङ्गीकुर्वता। एवञ्चा● यथा च इषद्वैशिष्टयेऽप्युदाहरणस्यान्यत्रान्तर्भावेऽपि कृती तथा विकस्वरस्यापि युज्यते। तस्य च● उदाहरणस्यार्थान्तरन्या। सस्य च संसृष्टया अनन्तरत्नेत्यादेः, अर्थान्तरन्यासभेदयोर्विशेषस्य सामान्येन सामान्यस्य च विशेषेण च संसृष्टया कर्णारुंतुदमित्यादेः। कल्पनापत्तेः● एतेन शृङ्खलाकृत-चमत्कारस्याधिकसत्त्वमिति मर्मप्रकाशोक्तं चिन्तितम्। तादृशोपमादेरप्यलङ्का-रान्तरतापत्तेः, शृङ्खलाया अलङ्कारान्तरत्वप्रयोजकतायाः सारप्रकरणे मूलकृतैव खण्डनाच्च। उपमाया भ्रान्तिपोषकत्वे समुदाहरति वीक्ष्य रामम्●।

॥ इत्यर्थान्तरन्यासनिरूपणम् ॥

अथानुमानालङ्कारनिरूपणम्

अनुमीयतेऽनेनेति करणल्युटा अनुमितेः करणं लिङ्गादिरर्थः। भावे ल्युटा अनुमितिरर्थस्तस्याप्यनुमानालङ्कारत्वं प्रकरणान्तेऽत्र वक्ष्यति। अनुमितिकरण-घटितामनुमितिं लक्षयति अनुमितित्व● अनुमितित्वजातिमत्त्वमनुमिते-

मानससाक्षात्कारसाक्षिको जातिविशेषः। व्याप्तिप्रकारकपक्षधर्मतानिश्चयजन्यज्ञानं वानुमितिः। तस्याश्च करणं व्याप्तिप्रकारकलिङ्गनिश्चय इत्येके। व्याप्यत्वेन निश्चीयमानं लिङ्गमित्यपरे। इदं च साधारणमनुमानम्। अस्य च कविप्रतिभोल्लिखितत्वेन चमत्कारित्वे काव्यालङ्कारता।

यथा—

'तस्मिन् मणिव्रातहतान्धकारे पुरे निशालोपविधानदक्षे।
सद्यो वियुक्ता दिवसावसानं कोकाः सशोकाः कथयन्ति
नित्यम्॥'

---

र्लक्षणम्। सामान्यालङ्कारप्रकरणे वक्ष्यमाणरीत्याप्यनुमित्याः संग्रहायान्यथा लक्षयति व्याप्तिकारक● एतादृशविषमेषु सरला स्खलेदेवेति छात्रैः सावधानैर्भाव्यम्। व्याप्यस्य हेतोः पक्षे वृत्तित्वं पक्षधर्मता। पर्वते वह्निव्याप्यो धूमः, पर्वतो वह्निव्याप्यधूमवान् इति वा ज्ञानं व्याप्तिप्रकारकपक्षधर्मतानिश्चयो गृह्यते। उभयत्र ज्ञाने धूमस्य पर्वते वृत्तित्वं व्याप्तिश्च प्रकारतया भासते। व्याप्तिः प्रकारो यत्र तथाभूतः पक्षधर्मताया निश्चय इत्यर्थः। स एव परामर्शपदेनोच्यते। तज्जन्यं ज्ञानमनुमितिः। तादृशपक्षधर्मतानिश्चयजन्ये संस्कारे तद्ध्वंसे चातिव्याप्तिवारणाय द्वितीयं ज्ञानपदम्। तादृशपक्षधर्मतानिश्चयजन्येऽनुव्यवसाये संशयोत्तरं तादृशव्याप्यवत्तारूपविशेषदर्शनोत्तरजायमाने प्रात्यक्षिकनिश्चयेऽतिव्याप्तिस्तु न शङ्क्या। सामान्यप्रकरणे प्राप्यक्षिकज्ञानस्यापि संग्राह्यताया वक्ष्यमाणत्वात्। करणम्● आसाधारणं कारणम्, धूमौ वह्निव्याप्य इत्याकारकः। त्वपरे● आचार्यमतेनेदम्। अस्मिन्मते लिङ्गं धूमः पूर्वमते धूमज्ञानमिति विशेषः। फलभेदस्तु ज्ञायमानं लिङ्गन्तु करणं नहि, इति कारिकायां मुक्तावल्यामनुमानप्रकरणे स्फुटः। साधारणम्● नैयायिकानां प्रसिद्धं सर्वसम्मतम्। कविप्रतिभोल्लिखितत्व विशिष्टमनुमानमलङ्कारः। कविप्रतिभोत्थितत्वेन च चमत्कारिता, साधारणस्य लौकिकत्वात्। तस्मिन् मणिव्रात● मणिसमूहेन हतोऽन्धकारो यस्या निशायाः लोपकरणे, पक्षे तस्मिन् पुरे सद्यो विमुक्ता अत एव सशोकाः कोकाः सर्वदा दिवसावसानमनुमापयन्ति। अयं समयो दिवसावसानं कोक-

अत्र कथनं स्फुटः बोधः। स चानुमित्यात्मकः कोकवियोगरूपस्य लिङ्गस्य व्याप्यत्वेन निश्चयात् कारणादुत्पद्यते। तत्र चान्धकारविशेषाभावस्य तत्सामान्याभावत्वेनाऽध्यवसाने सति निशालोपविधानदक्षतासिद्धौ दिवसावसानसिद्ध्यभावप्रयुक्ता दिवसावसानानुमितिरित्यस्ति कविप्रतिभोल्लिखितत्वम्। वक्ष्यमाणमुन्मीलितमिति न मन्तव्यम्। तस्याप्यनुमानताया एव एवं स्थापयिष्यमाणत्वात्।

यथा वा—

अम्लायन्यदरातिकैरवकुलान्यग्लासिषुः सत्वरं
दैन्यध्वान्तकदम्बकानि परितो नेशुस्तमां तामसाः।
सन्मार्गाः प्रसरन्ति साधु नलिनान्युल्लासमातन्वते
तन्मन्ये भवतः प्रतापतपनो देव प्रभातोन्मुखः॥'

---

वियोगवत्त्वादित्यनुमानप्रयोगः। यदा यदा कोकवियोगस्तदा तदा दिवसावसानमिति सहचारग्रहणे व्यभिचारानुत्थाने सति कोकवियोगो दिवसावसानत्वव्याप्य इति ज्ञानविषयीभूतात् कोकवियोगलिङ्गादनुमितिः। संचार पर मतानुसारिलिङ्गस्य करणतामते इति समनुगमयति। कोकवियोग● ननु निशालोपोऽन्धकारसामान्याभावः, मणिव्रातैश्चान्धकारविशेषस्यैव विनाशो विधीयत इति कथं निशालोपसिद्धिरित्याशङ्क्योत्तरयति तत्र चान्ध● अन्धकारविशेषाभावोऽन्धकारसामान्याभावत्वेनाध्यवसीयत इति भावः। सरला तु न जाने किमर्थमन्धकारविशेषेऽन्धकारत्वमारोपयति। द्ध्यभाव● अयमभिसन्धिः। साध्यनिश्चयरूपा सिद्धिरनुमितौ प्रतिबन्धिका। निशालोपेन दिवसावशानस्यासिद्धया प्रतिबन्धकाभावे इतरकारणप्रयुक्तानुमितिरिति। एवं शुद्धौ लिङ्गलिङ्गिनावुदाहृत्य रूपकानुप्राणितौ तावुदाहरति अम्लायन्● अत्र सूर्यस्वरूपप्रतापोदयः साध्यते तत्कार्यभूतानि लिङ्गानि पादत्रये उपात्तानि। ग्लै म्लै हर्षक्षय इत्यनयोर्लुङि लङि च रूपम्। तपनोदये कैरवकुलानि म्लायन्ते तमःसमूहाः ग्लायन्ते तमसामिमे उलूकादयो निलीयन्ते मार्गप्रसारो जायते नलिनानि विकसन्ति प्रतापोदयेऽपि शत्रुकुलानि-

पूर्वत्र लिङ्गलिङ्गिनोः शुद्धत्वम्, इह तु रूपकानुप्राणितत्वमिति विशेषः। कविप्रतिभोल्लिखितत्वं पुनः स्फुटमेव।

इह यत्र लिङ्गलिङ्गिनोः सत्त्वं तत्र मन्ये, शङ्के, अवैमि, जाने इत्यादिपदानामनुमितिबोधकत्वम्, यत्र तु सादृश्यादिनिमित्तसद्भावस्तत्रोत्प्रेक्षाबोधकतेति विवेकः। तेन—

'मन्मथामात्यमायान्तमहं मन्ये महामहम्।
चक्षुश्चमत्कृतिं धत्ते यदहो किल कोकिलः॥'

इत्यादावनुमैव, नोत्प्रेक्षा।

अत्रेदं बोध्यम्—मन्ये इत्यादिवाचकपदोपादाने वाच्यमनुमानम्। यथानन्तरोक्ते। वक्ति, कथयतीत्यादिलक्षकपदोपादाने लक्ष्यम्। यथा 'कोकाः सशोकाः' इत्यादौ। तदन्यतरानुपादाने साध्याक्षिप्तायामनुमितौ प्रतीयमानम्। यथा 'अम्लायन्—' इति पद्ये 'तद्भावी तव देव संप्रति महोमार्तण्डबिम्बोदयः' इति चतुर्थचरणनिर्माणे। साध्यस्याप्यनुपादाने लिङ्गमात्रोपादानेन यत्रागूर्यमाणं साध्यं तत्र ध्वन्यमानम्। यथा—

---

अम्लायन्, दैन्यानि अम्लासिषुः, तमोगुणप्रधाना निलीयन्ते स्म, सतां कर्मणां प्रसारोऽभूत्, साधवः प्रफुल्लिता जाताः। आरात्यादीनां कैरवादिभिः सहाभेदाद् रूपकम्। मन्मथामात्य● कामदेवसचिवं महोत्सवं वसन्तमायान्तं मन्ये यस्मात् कारणात् कोकिलः चक्षुषः चमत्कृतिं धत्ते। अयं वसन्तमहोत्सवः कोकिलचमत्कारित्वात्। इत्यनुमानप्रयोगः। सादृश्यनिमित्तकमननाभावान्नोत्प्रेक्षा। साध्याक्षि● साध्येनाक्षिप्तायाम्। महोमार्तण्ड●

'गुञ्जन्ति मञ्जु परितो गत्वा धावन्ति संमुखम् ।
आवर्तन्ते विवर्तन्ते सरसीषु मधुव्रताः ॥'

अत्र शरदागमस्य साध्यस्यानुमानं ध्वन्यते । एवमेषा व्यवस्था न प्रागुक्ते करणमनुमानमिति नये संगच्छते । करणस्य ज्ञायमानलिङ्गत्वपक्षे वाच्यतायाः केवलाया आपत्तेः । लिङ्गज्ञानत्वपक्षे वाच्यत्वलक्ष्यत्वयोरनापत्तेः । अतोऽनुमितिरेवानुमानम्, तस्याश्च वाच्यत्व-लक्ष्यत्व-प्रतीयमानत्व-ध्वन्यमानत्वानां साम्राज्यं ल्युटश्च करण इव भावेऽपीति ।

इति रसगङ्गाधरेऽनुमाननिरूपणम् ।

---

तेजोरूपस्य सूर्यस्य । प्रतीयमानं निगीर्णन् । ध्वन्यते ● शरदागमः साध्यो नोपादीयते तत्कारणानि लिङ्गान्युपादीयन्ते । अयं शरदागमः कालः सरसीषु भ्रमराणां मञ्जुगुञ्जनादिकार्य्यात् । मेषा ● व्यज्यमानत्वादि । केवलायाः ● लिङ्गानुपादानेऽनुमानालङ्कारस्यैवाप्रसक्तेरुपादाने वाच्यतैव स्यात्, कथञ्चिल्लक्ष्यतासम्भवेऽपि व्यङ्ग्यता कुत्रापि न स्यात् । रनापत्तेः ● अत्र सरलेऽपि सरला विपरीतं पतति । लिङ्गस्यैव वाच्यत्वलक्ष्यत्वयोः सम्भवेन ज्ञानस्य वाच्यत्वलक्ष्यत्वयोरसम्भवात् । भावेऽपीति ● अत्र विधिपदमध्याहृत्य ल्युटः करण इव भावेऽपि विधिरिति मर्मप्रकाशस्य व्याख्या । सरला तु अन्यत् पदमेवापकर्षति । न च वक्ष्यमाणसामान्यग्रन्थीयकरणपक्षीयसिद्धान्तकरणं पूर्वापरग्रन्थयोर्विरोधमापादयतीति वाच्यम् । तत्र कुवलयानन्दखण्डनप्रसङ्गेन तन्मतेनैव करणपक्षस्योत्थापनात् । कुवलयानन्दे तु प्रमाणालङ्कारत्वेन वर्णनात् करणपक्ष एवाभिहितः । एतेन कौस्तुभोक्त आक्षेपः समाहितो ज्ञेयः । अथवा करणपक्षेऽपि लिङ्गस्य वाच्यत्वेऽपि साध्यस्य वाच्यत्वलक्ष्यत्वव्यङ्ग्यत्वान्यादाय व्यवस्था सम्पादनीया । अंशस्य करणमात्रस्य वाच्यत्वेऽपि अंशिनो व्यङ्ग्यतायाः सम्भवात् ।

॥ इत्यनुमानालङ्कारनिरूपणम् ॥

अथ यथासंख्यम्—

उपदेशक्रमेणार्थानां सम्बन्धो यथासंख्यम् ।

पदार्थानतिवृत्तिरूपे यथार्थेऽव्ययीभावः । संख्याया अनतिवृत्तिश्च प्रथमस्य प्रथमेनैव, द्वितीयस्य द्वितीयेनैवेत्यादिक्रमेण सम्बन्धे भवतीति योगार्थ एव लक्षणम् ।

यथा—

'यौवनोद्गमनितान्तशङ्किताः शीलशौर्यबलकान्तिलोभिताः ।
संकुचन्ति विकसन्ति राघवे जानकीनयननीरजश्रियः ॥'

अत्र 'यौवनोद्गमनितान्तशङ्किताः संकुचन्ति, शौर्यबलकान्तिलोभिता विकसन्ती'ति प्रथम–द्वितीय–क्रिययोः क्रमेण प्रथम–द्वितीय–विशेषणावच्छिन्नेन कर्त्रान्वयः । स च शाब्दः, समासाभावेन शब्दानामप्यन्वयात् । भावसंधिश्चात्र प्रधानम् ।

यथा वा—

---

अथ यथासंख्यालङ्कारनिरूपणम्

संख्यामनतिक्रम्य यथासंख्यम् । सङ्ख्याया अनतिक्रमणञ्च संख्येयानतिक्रमेण । तथा चैकत्वसंख्याविशिष्टस्य संख्येयस्य एकत्वसंख्याविशिष्टेनैव संख्येयेन । एवं द्वित्वसंख्याविशिष्टस्य संख्येयस्य द्वित्वसंख्याविशिष्टेनैव संख्येयेनान्वय इति । यथार्थे ● अव्ययमित्यादिसूत्रेण । सम्बन्धे ● सतीति शेषः । विशेषेण यथासंख्यपदार्थजिज्ञासुभिर्महामहोपाध्यायपण्डितजयदेवमिश्रकृता शास्त्रार्थरत्नावली पठनीया । विस्तरधिया न वितन्यते । यौवनोद्गम ● तारुण्योद्भवे लज्जा जायते, लज्जावशाद् नितान्तं शङ्का संजाता यासां ताः । शीलेन शौर्येण बलेन कान्त्या चौत्सुक्यवशात् लोभिताः । जानकीनयनान्येव नीरजानि तेषां शोभाः । विशेषणावच्छिन्नया नयननीरजश्रिया कर्त्रान्वयः । शब्दानामपि ● शब्दानामन्वयप्रयोजकाकाङ्क्षामत्त्वात् । भावसंधि ● शङ्कौत्सुक्ययोर्भावयोः संधिः प्रधानं

'द्रुमपङ्कजविद्वांसः सर्वसंतोषपोषकाः ।
मुधैव हन्त हन्यन्ते कुठार-हिम-दुर्जनैः ॥'

इह दीपकानुप्राणकम् ।

यथा वा—

'वृन्दापितृगहनचरौ कुसुमायुधजननहननशक्तिधरौ ।
अरिशूललाञ्छितकरौ भीतिं मे हरताम् ॥'

इहोभयत्रार्थः । पूर्वं समासेन समासान्वयेऽवयवानामन्वयस्य पार्ष्ठिकत्वात् ।

इत्यादिरपरिमितोऽस्य विषयः ।

अथ क्रमेणान्वयबोधे किं नियामकम् ? अत्र केचित्— "योग्यताज्ञानमेव नियामकम् । तथाहि 'वृन्दापितृगहनचरौ' इत्यत्र हरौ श्मशानचारित्वस्य, हरे वृन्दावनचारित्वस्य च बाधितत्वादन्वयबोधाभावे हरौ वृन्दावनचारित्वस्य, हरे श्मशानचारित्वस्य च योग्यत्वादन्वयबोधो जायमानः क्रमिकान्वयबोधे पर्यवस्यति । एवमन्यत्रापि" इत्याहुः ।

---

तदुपस्कारकतया यथासंख्यस्यालङ्कारत्वमिति भावः । द्रुमपङ्कज ● वृक्षकमलविदुषां हननकर्तृभिः कुठारतुषारदुर्जनैः क्रमेणान्वयः । सर्वपोषकत्वं हननकर्मत्वं साधारणम् । अत एवाह दीपकानुप्राणकम् । वृन्दापितृ ● वृन्दावनश्श्यमशानचारिणौ कामस्य जननशक्तेः हननशक्तेश्च धरौ सुदर्शनेन त्रिशूलेन च लाञ्छितः करो ययोस्तौ । पार्ष्ठिकत्वात् ● पृष्ठे पश्चाद्भवः । समासे पृथगन्वये सामर्थ्याभावेन समास एव न स्यात् । द्वन्द्वस्थले द्वन्द्वघटकपदार्थानामेकत्रान्वये सामर्थ्यं पृथगन्वये सामर्थ्याभाव एव तिष्ठेत् । अतः समासवशात्समुदायस्यैव समुदायान्वयेन प्रथमं बोधः । पश्चाच्च यथासङ्ख्यमन्वय इति पार्ष्टिकः । बाधितत्वाद ● अर्थस्यान्वयस्य । अबाधो बाधाभावो योग्यतेति योग्यतालक्षणं

अन्ये तु—"योग्यताज्ञानस्य नियामकत्वे क्रमभङ्गस्य दोषता न स्यात् । 'कीर्तिप्रतापौ भातस्ते सूर्याचन्द्रमसाविव' इत्यादौ कीर्तौ चन्द्रसादृश्यस्य प्रतापे सूर्यसादृश्यस्य च व्युत्क्रमेणोक्त-स्यापि योग्यतावशादेव प्रतीत्युपपत्तेः । न हि क्रमिकमेव योग्यम्, अपक्रममयोग्यम् । येन तव मुख्यार्थहतिः स्यात् । भवति चानु-भवसिद्धा सा । तस्मादन्वयिसमसंख्यपदार्थज्ञानस्य यथासंख्या-न्वयबोधत्वं कार्यतावच्छेदकं वाच्यम् । एवं च 'कीर्तिप्रतापौ' इत्यत्र च यथाश्रुतानां यथासंख्यान्वयबोधो बाधनिश्चयपराहत इति मुख्यार्थहतिसंभवात् क्रमभङ्गस्य दोषत्वसाम्राज्यम् ।

नन्वन्वयिसमसंख्यपदार्थानां यदि यथासंख्यान्वयबोधो व्युत्पत्तिसिद्धस्तदा 'यथासंख्यमनुदेशः समानाम्' इति सूत्रं व्यर्थं स्यात् । तदुदाहरणेषु 'लोमादिपामादिपिच्छादिभ्यः शनेलचः' इत्यादिषु लौकिकसामग्रीबलादेव यथासंख्यान्वयबोधोपपत्तेः । योग्यतामात्रबलात् तथा बोधोपपादकमते तु शास्त्रमात्रचक्षुष्कैः प्रकृतिविशेषप्रत्ययविशेषसम्बन्धरूपाया योग्यताया अज्ञानात्तेषां

---

सङ्गमयति । मुख्यार्थहतिः ● मुख्यार्थबाधः । सा ● क्रमभङ्गस्य दोषता । च्छेदकम् ● अन्वयिनः पदार्थाः समसंख्याका इत्याकारकं ज्ञानं कारणम्, क्रमि-कान्वयबोधः कार्यः कार्यता तादृशबोधे तादृशबोधत्वं कार्यतावच्छेकम् । परा-हतः ● बाधनिश्चयेनावरुद्धः । कीर्तिप्रतापावित्यत्रापि अन्वयिनः पदार्थाः समसङ्ख्याका इति ज्ञानं जायते । तथा च क्रमिकबोधेनैव भाव्यम् । क्रमिकबोधे च कीर्तौ सूर्य्यसादृश्याभावनिश्चयः प्रतापे चन्द्रसादृश्याभावनिश्चयश्च बाधरूपः प्रतिबन्धकः । तथा च तादृशबाधितशाब्दजनकशब्दप्रयोगे क्रमभङ्गस्य दोषता आयाति । व्युत्पत्तिसिद्धः ● विशेषानुशासनमन्तरा लोकसिध्यकार्यकारणभाव-ज्ञानेन । शास्त्रमात्र ● अयं प्रयोग ईदृश एव साधुर्नाऽतादृश इति ज्ञाने शास्त्र-

यथासंख्यान्वयबोधार्थं 'यथासंख्यम्' इति सूत्रमिति चेत्, न; ममापि प्रागुक्तव्युत्पत्तिरहितानां तादृशबोधार्थं सूत्रसार्थक्यात्" इत्याहुः ।

इदं तु बोध्यम्—यथासंख्यान्वयबोधो यथा तथास्तु नाम, नात्रागृह्लीमः । यथासंख्यमलङ्कारपदवीमेव तावत्कथमारोढुं प्रभवतीति तु विचारणीयम् । नह्यस्मिन् लोकसिद्धे

---

मेव चक्षुर्येषां ते तैः । प्रयोगवशाज्ज्ञाने तु लोमादीनां शप्रत्ययेन, पामादीनां न प्रत्ययेन पिच्छादीनाञ्चेलच्प्रत्ययेनान्वये तात्पर्यमिति लोमशपामनपिच्छिलादिप्रयोगदर्शनेनोन्नेतुं प्रभूयते । शास्त्रमात्रचक्षुष्कानां तथा तात्पर्यनिर्णयाभावात्सूत्रमेव शरणीकर्तव्यमिति सूत्रसार्थकम् । ममाऽपि ● यथासंख्यबोधं प्रति अन्वयिपदार्थानां समसंख्याकत्वज्ञानं कारणमिति व्यवस्थापयतः । प्रागुक्त ● कार्यकारणभावरूप । तादृश ● कार्यकारणभावबोधार्थम् । इत्याहुः ●

अत्र मर्मप्रकाशः—वस्तुतस्तु यथासंख्यसूत्रबलात्पाणिनिप्रयोगेषु पार्ष्ठिक तथाऽवयबोधे द्वन्द्वादेः साधुत्वेऽपि अन्यत्र न साधुत्वम् । किन्तु समुदितान्वयबोधमात्र एवेति तदभिप्रायकास्ते प्रयोगा असाधव एव । अलङ्कारस्तु द्वितीयरीत्या व्यस्ते चरितार्थ इति बोध्यम् । इति मनुते । अत्र पार्ष्ठिकान्वयबोधस्थलीयसमस्तानां बहूनां वाक्यानामसाधुत्वमपेक्ष्य शास्त्रे तात्पर्यज्ञानोपायाभावात्सूत्रम् । लौकिकप्रयोगेषु सति तात्पर्यज्ञाने भवति यथासंख्यबोधः । यद्वा यथासंख्यसूत्रबलात् समस्तस्थले प्राथमिक एव बोधो यथासंख्येन न भवति, पार्ष्ठिकस्तु भवत्येव । पाणिनिप्रयोगे तु प्राथमिकोऽपि इति चिन्ता ।

कौस्तुभकृतामित्थमुत्थानम् । उक्तकार्यकारणभावज्ञाने देवदत्तयज्ञदत्तयोरजावयोधनं भवानीभवयोर्गणेशस्कन्दौ तनयौ इत्यादावपि तस्य कारणस्य सत्त्वाद् यथासंख्यान्वयापत्तिवारणाय यथासंख्यान्वय बोधं प्रति एकमात्रवृत्तियोग्यताज्ञानाभावः कारणम् उभयसाधारणयोग्यताबोधो वा प्रतिबन्धक इत्यस्यापि कल्पने गौरवात् प्रथममतमेव ज्यायः । क्रमभङ्गस्य दोषता तु आसत्त्यज्ञानप्रयुक्ततया । अन्वयप्रतियोगिनामव्यवधानेनोपस्थितिरासत्तिः तद्वैपरीत्यं क्रमभङ्गो स्पष्टम् इति । तत्रेदं चिन्तनीयम्—यद्युपस्थापकपदयोरव्यवधानेन उपस्थितिरूपाया आसत्तेः सम्पत्तिस्तदा यथासङ्ख्यबोधेऽपि पदव्यवधानं वर्तत एव ।

कविप्रतिभानिर्मितत्वस्यालङ्कारताजीवातोर्लेशतोऽप्युपलब्धि - रस्ति, येनालङ्कारव्यपदेशो मनागपि स्थाने स्यात्। अतोऽप-क्रमत्वरूपदोषाभाव एव यथासंख्यम्। एवं चोद्भटमतानुयायि-नामुक्तयः कूटकार्षापणवदरमणीया एव। एतेन यथासंख्यमेव क्रमालङ्कारसंज्ञया व्यवहरतो वामनस्यापि गिरो व्याख्याता इति तु नव्याः।

इति रसगङ्गाधरे यथासंख्यनिरूपणम्।

अथ पर्यायः—

क्रमेणानेकाधिकरणमेकमाधेयमेकः पर्यायः। क्रमेणानेका-धेयकमेकमधिकरणमपरः।

एतदन्यान्यत्वं च सामान्यलक्षणम्, न तु योगार्थमात्रम्, अतिप्रसक्तेः। 'परावनुपात्यय इणः' इति पाणिनिस्मृत्या। अनुपात्ययमात्रस्य घञुपाधित्वेनोक्तेः। नाप्यन्यत्। अन्यतरा-

---

किञ्चोक्ते अजाव्यन्वितं धनत्वेन धनमेवान्वयि न अजावयः इति दिक्। जीवातोः ○ प्रयोजकस्य। स्थाने ○ युक्तः। यथासंख्यान्वयानुकूलशब्द-प्रयोगमात्रेण प्रतिभाया उपयोगस्तु पाणिनितादृशसूत्रेऽप्यस्ति। गिरो ○ उप-मेयोपमानानां क्रमसम्बन्धतः क्रम इतिरूपाः। व्याख्याताः ○ यथासंख्य-समानार्थत्वेनालङ्कारताप्रयोगजकरूपरहिततया च। उपमाकृतश्चमत्कारस्तूपमयैव कवलीक्रियते।

इति यथासंख्यालङ्कारनिरूपणम्।

अथ पर्यायालङ्कारनिरूपणम्

दन्यान्य ○ आभ्यां भिन्नं यद्यत्तद्भिन्नत्वमेतदन्यतरत्वमिति यावत्। योगार्थ ○ क्रममात्रम्। क्रमिकवर्णनेऽन्यालङ्कारोदाहरणेऽप्यतिप्रसक्तेः। नाप्यन्यत् ○ भिन्नं किमप्यनुगतं लक्षणं न सम्भवति। अन्यतरत्वप्रवेशं

घटितस्य निर्वक्तुमशक्यत्वात् । अत्राद्यलक्षणे प्रागुक्तविशेषालङ्कारद्वितीयभेदेऽतिप्रसङ्गवारणाय क्रमेणेति । तत्र चाधेयस्य युगपदेकाधारसम्बन्धान्नातिप्रसङ्गः । द्वितीयलक्षणे वक्ष्यमाणसमुच्चयालङ्कारातिव्याप्तिवारणाय तदिति विवेकः ।

उदाहरणम्—

'आयाता कमलासनस्य भवनाद् द्रष्टुं त्रिलोकीतलं
गीर्वाणेषु दिनानि कानिचिदथो नीत्वा पुनः कौतुकात् ।
भ्रान्त्वा भूवलये महाकविकुलोपास्या तवास्याम्बुजे
राजन् संप्रति सत्यधामनि गिरां देवी सुखं वर्तते ॥'

अत्र प्रथमचरणगतमधिकरणमार्थम् । विश्लेषावधिपंचम्यां विश्लेषस्योपश्लेषमन्तरेणासिद्ध्या औपश्लेषिकाधिकरणस्याक्षेपगम्यत्वात् । कमलासनस्य भवने स्थित्वा आयातेति ल्यब्लोप-

---

विना न किमपि लक्षणं पर्यायस्य भवति । आद्यलक्षणे ● प्रथमभेदलक्षणे । समुच्चया ● तत्र युगपदेवानेकक्रियारूपाधेयानामेकत्रान्वयो जायते । आयाता कमलासनस्य ● गिरां देव्याः सरस्वत्या एकस्याः कविसमूहस्योपास्याया ब्रह्मणो भवनं त्रिलोक्यां सूराः, भूवलयः, राजमुखाम्बुजञ्चानेकमधिकरणं वर्णितम् । ननु कमलासनभवनस्यापादानत्वेनैवोपादानात्कथन्तस्याधिकरणत्वमित्याशङ्क्य समाधत्ते—अत्र ● प्रथमचरण ● विभागस्य संयोगपूर्वकत्वेन कमलासनभवनाद् विभागोऽर्थात् तत्र भवने संयोगमप्यवगमयतीत्यर्थः । विश्लेषो विभागः, उपश्लेषः सम्बन्धः । औपश्लेषिकाधिकरण ● बटे गावः सुशेरते इत्यादौ बटसमीपे सम्बन्धेन यथा बटस्याधिकरणत्वं तथा भवनस्याप्युपश्लेषप्रतीत्या भवनस्याऽप्यधिकरणत्वम् । ननु प्रासादे स्थित्वा प्रेक्षते इत्यर्थे प्रासादात् प्रेक्षत इतिवत् पञ्चमी न विभागार्थिकेति शङ्कायास्तत्राप्यधिकरणत्वस्य लक्ष्यत्वप्रदर्शनेन समाधानमारभते भवने स्थित्वा ● कमलासनभवनं स्थितेरधिकरणं तत्र च पञ्चम्या लक्षणैव । शाब्दत्वञ्च शब्दवाच्यत्वमन्यत्सर्वमार्थम् । अत आर्थत्वं सम्यगेव । ल्यब्लोप ● ल्यबन्तस्य क्त्वान्तस्य वाऽप्रयोगे ल्यबन्ताद्यर्थनिरूपित-

पञ्चम्यामपि ल्यबन्तक्रियाधिकरणे पंचम्या लाक्षणिकत्वादवाच्यतैव। 'ल्यब्लोपे कर्मण्यधिकरणे च' इति वार्त्तिकस्य निरूढलक्षणासमर्पकतेति राद्धान्तात्। इतरचरणत्रयगतं तु शाब्दम्।

यथा वा—

'मकरालयस्य कुक्षौ स्थित्वा सदनेऽमृताशिनां च चिरम्।
सम्प्रति निर्दोषे ते राजन् वदनाम्बुजे सुधा वसति॥'

पूर्वमवरोहः इह स्वारोहः पूर्वपूर्वत्यागेऽरुचिबीजोपादानं चेति विशेषः।

अपरः पर्यायो यथा—

'विदूरादाश्चर्यस्तिमितमथ किञ्चित्परिचया-
दुदञ्चच्चाञ्चल्यं तदनु परितः स्फारितरुचि।
गुरूणां सङ्घाते सपदि मयि याते समजनि
त्रपाघूर्णत्तारं नयनयुगमिन्दीवरदृशः॥'

---

कर्मणि अधिकरणे वा तदर्थबोधिका पञ्चमीत्यर्थः। तथा च पञ्चमी लक्षणयैवाधिकरणबोधिका। लक्षणाया अनादि ● पात्पर्यमूलतया निरूढात्वम्। विभक्तौ न लक्षणेति राद्धान्तस्तु शास्त्राबोधिततत्पर्यायाः स्वारसिक्या वा लक्षणाया निवारकः। अथवा प्रकृतेरेव तदधिकरणे लक्षणा पञ्चमी तात्पर्यग्राहिकेति व्यवस्थाप्यताम्। शक्तिकल्पने च पञ्चम्या नानार्थत्वं समापतेत्। सर्वथा शाब्दस्योदाहरणमारचयति मकरालयस्य ● मकरालयः समुद्रः। अमृताशिनो देवाः। अधिकरणार्थकसप्तमीसत्त्वादखिलमधिकरणं शाब्दम्। विशेषं दर्शयति पूर्वमवरोहः ● पूर्वपद्ये उपरितो वाग्देव्या अधोगमनम्। अत्र तु अधस्तात्समुद्रादुपरि गमनम्। पूर्व-पूर्व ● पूर्वस्य मकरालयस्य पूर्वस्य देवसदनस्य च त्यागे। मकरालयत्वात्समुद्रस्य कुत्सितस्थानत्वमेवं मृतभोजित्वात्, अमरणधर्माणां स्वेषामेव भोक्तृत्वाच्च। विदूरादाश्चर्य ● कमलनयनाया नयनयुगं दूराद् दृष्ट्वा असम्भावितागमनस्यागमनवशाज्जातेन आश्चर्येण स्तिमितम्। किञ्चित्प्रिय इति

अत्र क्वचिदनपावृते स्थलविशेषे गुरूञ्शुश्रूषमाणायाश्चिरप्रोषितमसंभावितागमनं प्रियमकस्मादालोकितवत्याः कस्याश्चिन्नयनयुगरूप एकस्मिन्नधिकरणे विशेषणीभूतानां स्तिमितत्वादीनामाधेयानां युगपदसम्भवात् कारणक्रमवशाच्च क्रमिकत्वम् ।

यथा वा—

'प्रथमं श्रितकञ्जकोरकाभावथ शोभामनुभूय कन्दुकानाम् ।
अधुना श्रयितुं कुचौ यतेते दयिते ते करिशावकुम्भलीलाम् ॥'

अत्रापि कुचत्वेनैकीकृते कुचरूपेऽधिकरणे परिमाणविशेषाणाम् ।

यदि च कुचयोः पूर्वपूर्वस्वरूपापेक्षया उत्तरोत्तरस्वरूपस्योत्कर्षः प्रतीयते, तदा एकविषयः सारोऽप्यस्तु, विषयभेदाच्च न बाध्यबाधकभावः ।

यत्तु—

---

सम्भावनया उदगच्छत् चाञ्चल्यं यस्मिन् तथा भूतम् । तत्पश्चादधिकपरिचयात् विकसितम्, तदनन्तरमतिसन्निधाने त्रपया घूर्णन्ती तारा यस्मिंस्तत् समजनि, **कारणक्रम** ● पूर्वं सम्भावनामात्रं कदाचित् प्रियः स्यादिति ज्ञानं स्तिमितत्वार्जकम्, तदनन्तरं स एवेति ज्ञानम् औत्सुक्यम्, चाञ्चल्यसाधकम् । ततो रागातिशयात्स्फारितत्वम्, सन्निधौ तु त्रपोदयादाघूर्णितत्वम् । **प्रथमं श्रित** ● प्रथमं लघुत्वात् कमलकोरकसादृश्यम् । तत्समृद्ध्या कन्दुकसादृश्यम्, ततोऽपि विपुलतया कुम्भसादृश्यम् । परिमाणोपचयापचययोराश्रयपरिवर्तनापेक्षितत्त्वेन कुचानां भेदेऽपि तदेवेति प्रत्यभिज्ञया कुचस्यैकत्वेनैकमधिकरणम् । **विषयभेदाच्च** ● पूर्वपूर्वापेक्षया उत्तरोत्तरयोरुत्कर्षः सारस्य विषयः । क्रमेणैकस्मिन् कुचेऽनेकाधेयसम्बन्धः पर्यायस्येति न बाध्यबाधकभावः । यथैकस्मिन् देवदत्ते विषयभेदात्पुत्रत्वपितृत्वादीनाम् ।

'बिम्बोष्ठ एव रागस्ते तन्वि पूर्वमदृश्यत ।
अधुना मृगशावाक्षि हृदयेऽप्येष दृश्यते ॥'

इति कुवलयानन्दकृता विकासपर्यायो निजगदे तच्चिन्त्यम् । एकसंबन्धनाशोत्तरमपरसंबन्धे सत्येव पर्यायपदस्य लोके प्रयोगात् 'श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः' इति काव्यप्रकाशोदाहृते, 'प्रागर्णवस्य हृदये——' इत्यादिसर्वस्वकारोदाहृते च तथैव दृष्टत्वाच्च । अस्मिन्नलङ्कारलक्षणेऽपि क्रमपदेन तादृशविवक्षाया औचित्यात् । तस्मादत्रैकविषयः सारालङ्कार उचितः, ये रत्नाकरादयो वर्धमानकालङ्कारमामनन्ति स चायुष्मता नोट्टङ्कित एव

---

बिम्बोष्ठ एव ● हे तन्वि ! पूर्वं तव बिम्बोष्ठ एव रागः अदृश्यत, बिम्बमिवौष्ठस्तस्मिन्, ओत्वोष्ठयोः समासेवेति वार्त्तिकेन पररूपम् । रागः रक्तिमा, हे कुरङ्गनयने ! अधुना एष रागोऽनुरागरूपो हृदयेऽपि दृश्यते, लालिमानुरागयोरेकशब्दोपस्थितिमूलकाभेदाध्यवसायः । विकासपर्याय ● उत्तरोत्तरं रागस्योत्कृष्टतया विकासाद् विकासपर्यायनामको भेदः । अत्र कुवलयानन्दे 'अत्र रागस्य पूर्वाधारपरित्यागेनाधारान्तरसंक्रमणमिति विकासपर्यायः' इति पाठो दृश्यते । रसगङ्गाधरमनुसृत्य 'आधारापरित्यागेन' इति पाठ एव श्रेयान् ।

श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः,
पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम् ।
धत्ते वक्षः कुचसचिवताम् अद्वितीयन्तु वक्त्रम्,
त्वद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ।

सम्पूर्णपद्यम् । केचन टीकाकारा अस्य मूलस्थतां नाङ्गीकुर्वन्ति, तनुतायाः श्रोणीभागस्य त्यागपूर्वकं मध्यभागसेवनम् । प्रागर्णवस्य ● अयं पूर्णोऽशः—

नन्वाश्रयस्थितिरियं किल कालकूट केनोत्तरोत्तरविशिष्टपदोपदिष्टः ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥

अत्राऽपि त्यागपूर्वकमेवोत्तरसम्बन्धः । तस्मादत्रैक ● बिम्बोष्ठ इत्यादौ । सार ● एवञ्च प्रकाशकृतामपि विकासादिपर्यायविशेषाननङ्गीकुर्वतां न विरोधः ।

इदं तु बोध्यम्—

'प्रथमं चुम्बितचरणा जङ्घाजानूरुनाभिहृदयानि ।
आश्लिष्य भावना मे खेलतु विष्णोर्मुखाब्जशोभायाम् ॥'

अत्र न तावत्पर्यायः, उत्तरोत्तरसम्बन्धस्य पूर्वपूर्वत्यागपूर्वकत्वाविवक्षणात् । यतोऽत्र मुखविषयकभावनायाः सर्वाङ्गविषयकत्वम् । अत एव खेलत्वित्युक्तम्, न तु मज्जत्विति । तथा—

'पूर्वं नयनयोर्लग्ना ततो मग्ना मनस्यभूत् ।
अथ सैव प्रियस्यासीत् सर्ववेदनगोचरा ।''

इत्यत्रापि । नापि सारः, उत्तरोत्तरस्योत्कर्षापकर्षयोरभावात् । तस्मादेवमादौ शुद्धक्रमालङ्कारोऽतिरिक्त इत्यप्याहुः ।

इहान्यदप्यवधेयम्—यत्राधाराधेयतत्सम्बन्धक्रमेषु क्वचिदपि कविकल्पनापेक्षा तत्रैवायमलङ्कारः । यत्र तु सर्वांशे लोकसिद्धत्वं न तत्र कश्चिदलङ्कारः । अत एव 'श्रोणीबंधस्त्यजति तनुतां सेवते मध्यभागः, पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम्' इति काव्यप्रकाशकृता 'प्रागर्णवस्य हृदये वृष-

---

दीक्षितस्य तु विकाससंकोचादिवद् वर्धमानकोऽपि स्वीकर्तव्य आसीत् । अतो न्यूनता । एतेन 'अत्रेदं चिन्त्यम्—भेदप्रतीतौ सत्यामेव सार इत्यस्य प्राचीनसम्मतत्वेन तदभावात्, अत्र हि रागयोः श्लेषेणाभेदाध्यवसायात् । वर्धमानकरूपालङ्कारस्वीकारापेक्षया पर्यायपदार्थस्य साधारण्यमाश्रित्यानेन संग्रहस्यैवोचितत्वाच्च । अत एव प्रकाशकृताऽपीदं पर्याये उदाहृतम्' इति मर्मप्रकाशो विवेचितः । भेदे एव सारस्य प्राचीनसम्मतत्वे मानाभावात् । पर्यायप्रसिद्धार्थाऽऽमपेक्षात्पेक्ष्यसारेणैव संग्रहस्यौचित्याच्च । **प्रथमचुम्बित** भावना प्रथमं चरणे ततो जङ्घाजानुनाभिहृदयेषु तदनु च मुखकमलशोभायाम् इति क्रमेण अनेकानि अधिकरणानि । **तथा** क्रमिकत्वेऽपि पूर्वपूर्वस्य त्यागाभावेन पर्यायाभावः । **इहान्यद** क्रमा

लक्ष्मणोऽथ कण्ठेऽधुना वससि वाचि पुनः खलानाम्' इति सर्वस्वकृता च निदर्शितम् । अत्रोभयत्राप्याधारभेदाद्भिन्न आधेयः कविना एकताध्यवसानेनैकीकृतः । अस्मद्दत्तोदाहरणेषु तु क्रमोऽपि कल्पितः । न हि ब्रह्मलोकस्थया देवतया, पयोधिस्थया सुधया च, वाचो वाङ्माधुर्यस्य चाभेदो लोकसिद्धस्तादृशः क्रमो वा । एवं स्थिते 'अधुना पुलिनं तत्र यत्र स्रोतः पुराभवत्' इति कुवलयानन्दगतमुदाहरणं 'यत्र पूर्वं घटस्तत्राधुना पटः' इति वाक्यवल्लौकिकोक्तिमात्रमित्यनुदाहार्यमेव ।

इति रसगङ्गाधरे पर्यायनिरूपणम् ।

अथ परिवृत्तिः—

परकीययत्किञ्चिद्वस्त्वादानविशिष्टं परस्मै स्वकीययत्किञ्चिद्वस्तुसमर्पणं परिवृत्तिः ॥

क्रय इति यावत् ।

सा च तावद् द्विविधा—समपरिवृत्तिर्विषमपरिवृत्तिश्चेति । समपरिवृत्तिरपि द्विविधा—उत्तमैरुत्तमानां न्यूने-

---

लङ्कारे । क्रमोऽपि [illegible] अपिना आधेयस्यैकताऽपि । नहि ब्रह्म [illegible] आयाता कमलासनस्येत्यादिपद्ये सुधया वाङ्माधुर्यस्याभेदः । अधुनापुलिनं यत्र [illegible] पुरास्रोतो यत्रेत्यादि समासोक्तिपठितस्यैवार्थतः खण्डश्ठशश्च लेखनं प्रतिभाति । अत्र मर्मप्रकाश आगृहणाति-गम्भीरजलस्य स्रोतस्त्वेनाल्पजलविद्यमानतायां सुशकगमत्वेन कविना पुलिनत्वारोपे उदाहरणमेव । इति । पुलिनत्वारोपे कथं कवेस्तात्पर्यमवसीयेतेति न प्रतिभाति ।

इति पर्यायनिरूपणम् ।

अथ परिवृत्त्यलङ्कारनिरूपणम्

परिवर्तनं परिवृत्तिस्तदेव परिवर्तनमर्थतो दर्शयति परकीय[illegible]आदानं ग्रहणम् ।

न्यूनानां चेति। विषमपरिवृत्तिरपि तथा—उत्तमैन्यूनानां न्यूनैरुत्तमानां चेति।

क्रमेणोदाहरणानि—

'अङ्गानि दत्त्वा हेमाङ्गि प्राणान् क्रीणासि चेन्नृणाम्।
युक्तमेतन्न तु पुनर्लोचनाम्बुरुहद्वयम्॥'

अत्र पूर्वार्धं एव समपरिवृत्तिः, उत्तरार्धे तु विषमैव।

'अस्थिमालामयीं दत्त्वा मुण्डमालामयीं तनुम्।
गृह्णतां त्वत्पुरस्थानां को लाभः स्मरशासन॥'

'गरिमाणमर्पयित्वा लघिमानं कुचयुगात् कुरङ्गदृशाम्।
स्वीकुर्वते नमस्ते यूनां धैर्याय निर्विवेकाय॥'

'किमहं कथयामि योषितामधरं बिम्बफलं समर्प्य याः।
सुरसानि हरन्ति हन्त हा विदुषां पुण्यफलानि सत्वरम्॥'

---

**अङ्गानि दत्त्वा** ● प्राणग्रहणपूर्वकमङ्गानां समर्पणम्। **पूर्वार्धे** ● अङ्गप्राणयोः समत्वमभिप्रेत्य। **उत्तरार्धे** ● प्राणानां महतामादाने न्यूनस्य लोचनद्वयस्य दानम्। अत्रादानप्रदाने कविप्रतिभासम्पन्ने अतोऽलङ्कारता।

द्वितीयां परिवृत्तिमुदाहरति **अस्थिमाला** ● स्मरशासनः शिवस्तत्पुरी काशी, अस्थिमालामयी तनुः येन शरीरेण काशीलाभः। मुण्डमालामयी तनुः शिवलोकप्राप्तानां शिवसदृशी। काशीलाभेन शिवलोकप्राप्तिरत्रोटङ्किता। ग्राह्यप्रदेययोरुभयोर्न्यूनता।

प्रथमां विषमपरिवृत्तिं दर्शयति **गरिमाणम** ● गुरोर्भावो गरिमा गुरुत्वमिमनिच्प्रत्ययान्तः, प्रियस्थिरेत्यादिसूत्रेण साधितः, तथैव लघिमाऽपि लघुत्वम्, स्वीकुर्वते चतुर्थ्यन्तधैर्यायेत्यस्य विशेषणम्।

न्यूनस्य दानेनोत्तमग्रहणमुदाहरति **किमहं कथयामि** ● योषितामित्यत्र शेषत्वविपक्षायां षष्ट्या योषित ईत्यर्थः। बिम्बफलसदृशम् अधरोष्ठं दत्त्वा सुरसानां पुण्यफलानां ग्रहणम्। सरलाकृता अधरेत्यस्य धराशून्यम्, सुरसेत्यस्य भूमिसहितमिति व्याख्यातम्।

एषु दानादानव्यवहारः कविकल्पित एव, न तु वास्तवः, यत्र वास्तवस्तत्र नालङ्कारः। यथा—'क्रीणन्ति प्रविकचलोचनाः समन्तान्मुक्ताभिर्बदरफलानि यत्र बालाः।'

इदं चापरं बोध्यम्—अत्र परस्मै स्वकीययत्किञ्चिद्वस्तुसमर्पणमित्येतावत्पर्यन्तं लक्षणे विवक्षितम्, न तु स्वकीययत्किञ्चिद्वस्तुत्यागमात्रम् 'किशोरभावं परिहाय रामा बभार कामानुगुणां प्रणालीम्' इत्यत्रातिव्याप्तापत्तेः। न चेदं लक्ष्यमेवेति वाच्यम्, पूर्वावस्थात्यागपूर्वकमुत्तरावस्थाग्रहणस्य वास्तवत्वेनानलङ्कारत्वात्। एवं स्थिते 'विनिमयोऽत्र किंचित्त्यक्त्वा कस्यचिदादानम्' इत्यलङ्कासर्वस्वकृता यल्लक्षणं परिवृत्तेः कृतम्, यच्च 'किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम्' इत्युदाहृतम्, तदुभयमप्यसदेव।

इति रसगङ्गाधरे परिवृत्तिनिरूपणम्।

अथ परिसंख्या—

सामान्यतः प्राप्तस्यार्थस्य कस्माच्चिद्विशेषाद्व्यावृत्तिः परिसंख्या।

---

प्रविकच ● विकसितलोचनाः। किशोरभावं बाल्यस्य त्यागमात्रम्, न तु परस्मै समर्पणम्। प्रणाली रीतिः मार्गो वा काममनुससारेत्यत्र पर्यवसानम्। वास्तवत्वेन ● कविप्रतिभानुल्लिखितत्वेन।

वल्कलम् ● उत्तरार्धन्तुं वद प्रदोषे स्फुटचन्द्रतारके विभावरी यद्यारुणाय कल्पते।' मप्यसदेव ● अन्यालङ्कारविषयस्य कविप्रतिभाविषयत्वेऽपि विनिमयांशे कविप्रतिभाया अनुपयोगात् विनिययालङ्कारस्योदाहरणतां न भजते एवेति भावः।

इति परिवृत्त्यलंकारनिरूपणम्।

नियमोऽप्यस्मिन् दर्शने निरुक्तलक्षणाक्रान्तत्वात् परिसंख्यैव । पाक्षिकप्राप्तियुगपत्प्राप्तिरूपस्यावान्तरविशेषस्याविवक्षणात् ।

अत एव वैयाकरणानां मते परिसंख्यापि नियमशब्देनोच्यये । तथाहि—'कृत्तद्धितसमासाश्च' इत्यत्र समासग्रहणं नियमार्थमिति हि तेषां सिद्धान्तः । तत्र हि समासे पाक्षिक्याः प्रातिपदिकससंज्ञायाः प्राप्तेरभावात् कथं नाम पराभिमतो नियम उपपद्यते ? युगपद्धि समाससमासेतरपदसंघातयोः 'अर्थवत्—' सूत्रं प्राप्तमिति परिसंख्या भवितुमर्हति ।

पूर्वतन्त्रे तु नियमपरिसंख्ययोर्भेदेन परिभाषणम् । यदाहुः—

---

अथ परिसङ्ख्याऽलङ्कारनिरूपणम्

परेर्वर्जनार्थकतया संख्याशब्दस्य बुद्धयर्थकतया च बुद्धया परिवर्जनम् व्यावृत्तिः । अथवा परिसंख्यानं परिच्छेदो व्यावृत्तिः परिसंख्या । विशिष्टां तां लक्षयति **सामान्यतः** ● यथा सेवायां यदि साभिलाषमसि इत्यादौ यस्य यस्य फलप्राप्तिः प्रयोजनवशात्तेषां समेषां सेवा प्राप्ता । तत्र धनिनां श्रेष्ठिनां राज्ञां विष्णोश्च सेवा प्राप्ता । ततो लक्ष्मीपतिः सेव्यतामित्यनेन लक्ष्मीपतेः सेवाविधाने न तात्पर्यं व्यर्थतापत्तेः । श्रेष्ठिसेवेव लक्ष्मीपतिसेवाया अपि प्रयोजनवशादेव विधिमन्तरेणैव प्राप्तत्वात् । अपि तु लक्ष्मीपतेरतिरिक्तो न सेव्यतामित्यत्रैव तात्पर्यम् । तेन लक्ष्मीपत्यतिरिक्तात् श्रेष्ठिरूपाद् राजरूपाद्वा परिशेषात्सेवाया व्यावृत्तिः । नियमस्य परिसंख्यायाश्च लक्षणमनुपदमेव वक्ष्यत्युदाहरिष्यति च । नियमस्थलेऽपि कुतश्चिद्विशेषाद्व्यावृत्तिः परिसंख्यायायाञ्च तथैव । नियमपरिसंख्ययोश्च यः समानोंऽशो विशेषाद्व्यावृत्तिः सा व्यावृत्तिरेव परिसंख्यालङ्कारस्य लक्षणम् । नियमे पाक्षिकप्राप्तिः परिसंख्यायां युगपत्प्राप्तिरित्यनयोर्विशेषः स च विशेषोऽस्मिन्न् लक्षणे न निविष्टस्तेनायाति यदस्मिन्नलङ्कारदर्शने नियमोऽपि परिसंख्यापदेन गृह्यते तदेवाह **नियमोऽप्य** ● **नियम उपपद्यते** ● समासस्य प्रातिपदिकसंज्ञेति समासग्रहणस्यार्थः ।

तस्योदाहरणं राजन् ङस् पुरुष सु इति तस्यामेवावस्थायां समाससंज्ञा भवति ।

'विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्ते परिसंख्येति गीयते ॥'

विधिः—'स्वर्गकामो यजेत' इत्यादिः । यागादेः प्रकारान्तरेणाप्राप्तेः । नियमः—'व्रीहीनवहन्ति, समे देशे यजेत' इत्यादिः । पुरोडशनिर्माणफलोपधायकतावच्छेदककोटिप्रविष्टाया वितुषतायाः संपादकत्वेनावहननस्य प्राप्तेर्नखविदलन-

---

राजपुरुष इत्यवस्थायां न समाससंज्ञा न वा प्रातिपदिकसंज्ञा । सुबन्तयोरेव समाससंज्ञाविधानात् । अशुध्धायां सरलायां न मुग्धेन भाव्यमित्यवधेयम् । राजन् ङस् पुरुष सु इत्यत्र प्रत्येकमुभयोः प्रत्ययान्ततदादित्वेऽपि समुदायस्य प्रत्ययान्ततदादित्वाभावादर्थवत्सूत्रेण नित्यैव प्रातिपदिकसंज्ञा प्राप्ता भवति, न पाक्षिकी । यत्र पाक्षिकी विकल्पेन प्राप्तिस्तत्रैव मीमांसकानां नियमविधित्वम् । तच्च समासग्रहणे न समन्वेति, तथापि समासग्रहणस्य नियमविधित्वं वैयाकरणा यदि व्याचक्षते तदा नूनं परिसंख्यामेव नियमं वदन्ति ते । पराभिमतो मीमांसकपरिभाषितः । परिसंख्या तु संभवति यत्रोच्यते तत्र ततोऽन्यत्र च युगपदेव यदि केनापि प्राप्तिस्तदा परिसंख्या भवति । समासस्य प्रातिपदिकसंज्ञोच्यते तत्र राजन् ङस् पुरुष सु इत्यत्र समासे ततोऽन्यत्र च चैत्रो ग्रामं गच्छति इत्यादिवाक्ये सममेवार्थवत्सूत्रेण प्रातिपदिकसंज्ञा प्राप्ता । तत्र समासस्य प्रातिपदिकसंज्ञावचनं स्वार्थे व्यर्थतयाऽनुपपन्नं सद् वाक्यरूपाद्विशेषात् प्रातिपदिकसंज्ञां व्यावर्तयति । समाससदृशसंघातस्य चेत्प्रातिपदिकसंज्ञा तदा समासस्यैव, न तु समासेतरसमाससदृशसंघातरूपवाक्यस्येत्यर्थः समासग्रहणशास्त्रस्य प्रतिफलति । समाससदृशसंघातश्च यत्र संघाते पूर्वो भागः पदमिति कौमुद्यामुक्तम् । तथैव परिसंख्यां संगमयति युगपद्धि ● पूर्वतन्त्रे पूर्वमीमांसाशास्त्रे । केनाप्यप्राप्तेऽपूर्वो विधिः । प्राप्तेत्यत्र भावे क्तः प्राप्तिरित्यर्थः । पाक्षिकप्राप्तौ नियमविधिः । यत्र विधीयते तत्र ततोऽन्यत्र च युगपत् प्राप्तौ परिसंख्याविधिः । प्रकारान्तरेण ● यागस्य स्वर्गसाधनत्वं न प्रत्यक्षेण न वाऽनुमानादिशब्दमन्तरा प्राप्तमतोऽपूर्वोऽयं विधिः । व्रीहिनव ● व्रीहिकर्मकोऽवघातो विधीयते । यागाङ्गपुरोडाशनिष्पत्त्यर्थं तण्डुलानामपेक्षा । तण्डुलानां साधकोऽवघातो विधीयतेचेद् व्यर्थः स्यात् । यतोऽवघातस्तण्डुलसाधक इति पामरप्रसिद्धतया प्राप्तत्वात् । अतोऽवघातेनैव पुरोडाश-

समवधानकालावृत्तित्वेन, यागाधिकरणतया समदेशप्राप्तेर्विषमदेशसमवधानकालावृत्तित्वेन च पाक्षिकत्वात् परिसंख्या—'इमामगृभ्णन्शनामृतस्येत्यश्वाभिधानीमादत्ते', 'पञ्च पञ्चनखा भक्ष्याः' इत्यादिः। रशनाग्रहणलिङ्गेनाश्वाभिधानीगर्दभाभिधान्योरादानस्य युगपत्प्राप्तत्वात्।

इत्यलमप्रकृतचिन्तया।

इयं तावद् द्विविधा—शुद्धा प्रश्नपूर्विका च। द्विविधाप्यार्थी शाब्दी चेति चतुर्विधा।

---

साधकास्तण्डुला निष्पादनीया इति नियमविधाने तात्पर्यम्। नियमस्य च नियमापूर्वं फलम्। तण्डुलसाधकान्तरस्य नखविदलानादेर्व्यावृत्तिः। यदा अवघातं विना नखविदलादिना कश्चिद् व्रीहीन् वितुषीकरोति तदावघातस्याप्राप्तया पाक्षिकी प्राप्तिः। पुरोडाशनिर्माणोपधायको वितुषो व्रीहिस्तत्रोपधायकता तदवच्छेदिका व्रीहिवृत्तिर्वितुषता। **कालावृत्तित्वेन** ● नखविदलनकालेऽवघातस्याप्राप्त्या एवं विषमदेशे हवनकाले समदेशस्याप्राप्त्या चेत्यर्थः। समे जुहोतीत्यस्यापि समदेशविधाने न तात्पर्यन्तस्य सुविधावशाद्विषमदेशवत्समदेशस्यापि स्वयमेव प्राप्तेः, अपि तु सम एव जुहुयादिति नियमेन विषमदेशव्यावृत्तौ। **इमामगृभ्णन्** ● क्वचिद् मकारस्थाने हकारः पठ्यते। हकारस्य स्थाने भकारविधानं सिद्धान्तकौमुद्यां वैदिकप्रक्रियायामुपलभ्यते। इदं वाक्यम् इमामिति मन्त्रमश्वरशनाग्रहणे श्रुत्या विनियुङ्क्ते। मन्त्रे चास्मिन् रशनाशब्दश्रवणात् शब्दसामर्थ्यरूपाल्लिङ्गप्रमाणाद् गर्दभरशनाग्रहणइवाश्वरशनाग्रहणेऽपि मन्त्रस्य विनियोगः प्राप्त एवेति अश्वरशनाग्रहणे विनियोगे न तात्पर्यमपि तु अश्वरशनाग्रहण एव विनियोक्तव्य इति परिसंख्यया गर्दभरशनाग्रहणे विनियोगव्यावृत्तौ। पूर्वोक्ताद् रशनाग्रहणलिङ्गप्रमाणाच्च युगपदेव गर्दभरशनाग्रहणे प्रतिपाद्यमानाश्वरशनाग्रहणे च मन्त्रस्य विनियोगप्राप्तिर्न पाक्षिकी न वा अप्राप्तिः। एवमेव प्रसिद्धमुदाहरति **पञ्च पञ्च** ● देवलस्मृतौ पञ्च पञ्चनखा भक्ष्या धर्मतः परिकीर्तिताः। गोधा कूर्मः शशः खड्गी शल्लकश्चेति ते स्मृताः॥ कुत्रचिद् रामायणेऽपि पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव। शशकः शल्यको गोधा खड्गी कूर्मोऽथ पञ्चमः॥ इत्युपलभ्यते।

यथा—

'सेवायां यदि साभिलाषमसि रे लक्ष्मीपतिः सेव्यतां
चिन्तायामसि सस्पृहं यदि चिरं चक्रायुधश्चिन्त्यताम् ।
आलापं यदि काङ्क्षसे मधुरिपोर्गाथा तदालप्यतां
स्वापं वाञ्छसि चेन्निरर्गलसुखे चेतः सखे सुप्यताम् ॥'

अत्र यदि घटितवाक्यैर्निवेदितस्य रागप्राप्तस्य सेवादेः कर्मतायाः परमेश्वरे विषान्तरे च प्राप्तत्वेन लोडर्थघटित-वाक्यार्थवैयर्थ्यप्रसङ्गाद्विषयान्तरं न सेव्यम्—इत्यादिरूपा विषयान्तरे तत्तत्क्रियाकर्मत्वव्यावृत्तिस्तात्पर्यविषयतया कल्प्य-मानत्वादार्थी शुद्धा च ।

'किं तीर्थं हरिपादपद्मभजनं किं रत्नमच्छा मतिः
किं शास्त्रं श्रवणेन यस्य गलति द्वैतान्धकारोदयः ।

---

इदं वाक्यं न पञ्चानां भक्षणविधानार्थम्, स्वादरागप्रमाणात् शूकरमांसादाविव एषामपि भक्षणस्य स्वयमेव प्राप्तेः । किन्तु एते पञ्च पञ्चनखा एव भक्ष्याः, नेतरे शूकरादय इति व्यावृत्त्यर्थम् । शूकरादीनामेषाञ्च युगपदेव रागप्रमा-णात् प्राप्तिः । सेवायां यदि ● रे सखे चेतः यदि रागवशात् कस्यचित् सेवायामभिलाषायुक्तमसि तर्हि लक्ष्मीपतिः सेव्यताम् । सेवाकर्म विष्णुः क्रियतां नान्यत्किमपि । एवमग्रेऽपि एवं चिन्तायाः स्मरणस्य कर्म विष्णुः क्रियताम् । आलापः शब्दः गाथा चरितगाथा । निरर्गलं जागरणशङ्काविरहितं नित्यं मोक्षरूपम् । सुप्यतामिति स्वपूधातोरेव भावे सम्प्रसारणे कृते । विषयान्तरे ● अनेन सेवाकर्मताया युगपत्प्राप्तिर्दर्शिता । तत्र परमेश्वरे लक्ष्मीपतौ अन्यत्र चान्यस्मिन् विषये । वैयर्थ्य ● रागत एव प्राप्तौ विष्णौ सेवाकर्मताविधानं व्यर्थं स्यात् । तत्तत्क्रिया ● सेवादिक्रिया । शब्दतो व्यावृत्तिः 'विषयान्तरं न सेव्यतामित्यादिरूपा नोक्ता, किन्तु लोडर्थघटितवाक्यार्थवैयर्थ्यप्रसङ्गेन व्यावृत्तौ तद्वाक्यस्य तात्पर्यं कल्प्यते । तादृशतात्पर्यविषयीभूता व्यावृत्तिरार्थी प्रश्नाभावात् शुद्धा । किं तीर्थम् ● अच्छा स्वच्छा आत्मविषयिणी । यस्य वेदान्तशास्त्रस्य ।

किं मित्रं सततोपकाररसिकं तत्त्वावबोधः सखे
क: शत्रुर्वद खेददानकुशलो दुर्वासनासञ्चयः ॥

अत्र हरिपादभजनादिकमेव तीर्थादिकम्, नान्यदित्यर्थस्तात्पर्यमर्यादया प्रतीयत इत्यार्थी प्रश्नपूर्विका च ।

'तीर्थं गङ्गा तदितरदपां निर्मलं संघमात्रं
देवौ तस्याः प्रसवनिलयौ नाकिनोऽन्ये वराकाः ।
सा यत्रास्ते स हि जनपदो मृत्तिकामात्रमन्यत्
तां यो नित्यं नमति स बुधो बोधशून्यस्ततोऽन्यः ॥'

अत्र मात्रादिपदैस्तीर्थत्वादिव्यावृत्तिः प्रतीयत इति शाब्दी शुद्धा ।

'किं मित्रमन्ते सुकृतं न लोकाः किं ध्येयमीशस्य पदं न तोकाः ।
किं काम्यमव्याजसुखं न भोगाः किं जल्पनीयं हरिनाम नान्यत् ॥'

---

द्वैतं भेदस्तद्रूपस्तत्कारणरूपो वा ब्रह्मणः सर्वात्मत्वविषयकाविद्यारूपोऽन्धकारस्तस्य द्वैतभावरूप उदयः । सततोपकारकारि किं मित्रमिति प्रश्नः । रसिक इति तत्त्वावबोधविशेषणानुकूले पाठे किं मित्रमित्येतावन्मात्रं प्रश्नः । दुर्वासनानां रागादिदोषहेतुभूतमिथ्याज्ञानसंस्काराणाम् ।

तीर्थं गङ्गा॰ कुत्रचित् तदितरमयामितिमकारघटितोऽशुद्धः पाठो मुद्रितः । तदितरदपामिति दकारघटितः शुद्धः । देवी पार्वती देवश्च महेश्वरः । पुमान् स्त्रिया इति सूत्रेण पुंस एकशेषः । प्रसव उत्पत्तिस्थानमधिकरणे प्रत्ययः, हिमालयो निलयो निवासो ययोस्तौ, अथवा जनकनिवासौ हरिहरौ, अन्ये नाकिनो वराका नाके स्वर्गे वसन्तोऽपि न देवाः । सा गङ्गा । तां गङ्गाम् । बुधो ज्ञानवान् । बोधशून्यो ज्ञानरहितो मूर्खः । द्वितीयचतुर्थपादयोः स्फुटैव व्यावृत्तिर्दर्शिता । प्रथमतृतीययोर्मात्रशब्देन । संघ एव न तीर्थम् । मृत्तिका एव न जनपदः । मात्रशब्दस्यान्ययोगव्यवच्छेदे शक्तिः प्रसिद्धा । अन्यस्य सम्बन्धस्य व्यावृत्तिरिति तत्सरलार्थः । यथा अपां संघे तीर्थत्वसम्बन्धस्य मृत्तिकायां जनपदत्वसम्बन्धस्य व्यावृत्तिर्मात्रशब्दतः । तदाह अत्र मात्रादिपदैः॰ किं मित्रमन्ते॰

अत्र शाब्दी प्रश्नपूर्विका च ।

इति प्राचां मतम् ।

अन्ये तु "व्यावृत्तेरार्थत्व एव परिसंख्यालङ्कारः, अन्यथा तु शुद्धा परिसंख्यैव । यथा हेतुत्वस्यार्थत्व एव हेत्वलङ्कारः, अन्यथा हेतुमात्रम् । अतो भेदद्वयमेवास्याः" इत्याहुः ।

अपरे तु "व्यावृत्तेरार्थत्वेऽपि नालङ्कारत्वम् । 'पञ्च पञ्चनखा भक्ष्याः, समे यजेत, रात्सस्य' इत्यादावपि तदापत्तेः । किन्तु कविप्रतिभानिर्मिता या तादृशव्यावृत्तिस्तस्याः । यथा—'यस्मिन् शासति वसुमतीपाकशासने महानसेषु संतापः, शरधिहृदयेषु सशल्यता, मञ्जीरेषु मौखर्यम्, भेरीषु ताडनम्, कामिनीनां कुन्तलेषु कौटिल्यम्; गतिषु मान्द्यम्' इत्यादौ ।

---

सुकृतं पुण्यम्, लोकाः संसारिजनाः, तोकाः अपत्यानि न चिन्तनीयानि तोकं सन्तानसुतयोरिति हैमात् पुत्रपौत्रादयोऽपि । काम्यम् अभिलषणीयम् । अव्याजसुखं दुःखेनामिश्रितं मोक्षरूपं सुखम् । भोगाः विषयसेवनम् । अन्यथा तु शाब्दी शुद्धा अलङ्कारभावमनापन्ना अलौकिकत्वाभावात् । हेतुमात्रं लोकसिद्धकारणस्य अलङ्कारतामनापन्नस्य वर्णनम् ।

भेदद्वयं प्रश्नपूर्विका अप्रश्नपूर्विकाश्च । **रात्सस्य** पाणिनेः सूत्रमिदं रेफात्परस्य पदान्तस्य संयोगान्तस्य सकारस्य कर्तुरित्यादौ लोपविधायकम् । तादृशसकारस्य संयोगान्तस्य लोप इति सूत्रेण लोपस्य सिद्धतया रेफात्परस्य पदान्तस्य संयोगान्तस्य सकारस्यैव लोपो नान्यस्येति परिसंख्यया रेफात्परस्य तादृशस्य सकारभिन्नस्य लोपव्यावृत्त्यर्थम् । तेन उर्क परिमार्ट इत्यादौ न संयोगान्तलोपः । **तदापत्तेः** परिसंख्याया अलङ्कारतापत्तेः । तेषु एव मात्रादिपदाभावेऽपि व्यावृत्तेस्तात्पर्यविषयत्वात् । अनुपपत्त्या कल्पितताया व्यावृत्तेर्न परिसंख्यालङ्कारत्वमित्यभिप्राय ऊहितुं शक्यते । **प्रतिभानिर्मिता** कविप्रतिभावशादेव व्यावृत्तेः सिद्धिर्नानुपपत्त्या । **यस्मिन्** पृथ्वीपतौ यस्मिन् शासनं कुर्वति सति महानसेषु एवं संतापो न मानसादिषु क्लेशादिकम्, तूणीरमध्ये एव बाणसहितत्वं नान्यत्र विघ्नकण्टका-

अत्र हि प्रथमान्तार्थः कविप्रतिभया एकीकृत इति तद्द्वारा तत्प्रतियोगिकव्यावृत्तिर्निर्मिता। एवं च 'सेवायां यदि साभिलाषमसि' इत्यत्र नान्यः सेव्य इत्यर्थस्य प्रतीतेः परिसंख्यास्तु, न तु परिसंख्यालङ्कारः। व्यावृत्तेर्वास्तवत्वेन कविप्रतिभानपेक्षणात्। 'किं तीर्थं हरिपादपद्मभजनम्' इत्यत्र तु प्रश्नपूर्वकं दृढारोपरूपकम्, अन्यथा 'न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते' इत्यत्रापि परिसंख्यापत्तेः। 'किं शास्त्रम्' इत्यंशे तु परिसंख्यामात्रम्। 'तीर्थं गङ्गा तदितरदपां निर्मलं संघमात्रम्' इत्यत्रापि परिसंख्यैव शुद्धा। प्रागुक्ताद्धेतोरनार्थत्वात्। तस्मात् 'महानसेषु संतापः' इत्यादिकमेवास्या उदाहरणम्'' इत्याहुः।

इति रसगङ्गाधरे परिसंख्यानिरूपणम्।

---

दिकम्, नूपुरादिभूषणेषु एव ध्वनिर्नाश्रितजनेषु वाचालता, मृदङ्गेष्वेव ताडमंनापराधिषु दण्डः, सुन्दरीणां केशेषु वक्रिमा न प्रजावर्गेषु वञ्चनाद्याकारः, गमने मन्दता, न विचारेषु। ननु महानसादिषु अग्निसंतापस्य प्राप्त्या तद्वाक्यं व्यर्थं सदग्निजन्यसंतापमेवेतरेभ्यो व्यावर्तयेन्न क्लेशादिकम्। किञ्च पञ्च पञ्चेत्यादौ प्राप्तस्य भक्षणस्यैवेतरेभ्यः शूकरादिभ्यो व्यावृत्तिर्न दर्शनादेस्तथा अग्निजन्यसंतापभिन्नस्य क्लेशादेर्व्यावृत्तौ परिसंख्याऽपि न सम्भवेदित्याशङ्कायाः समाधानं कविप्रतिभायाः संपर्कञ्च दर्शयति अत्र हि प्रथमान्तार्थः ● उच्यमानव्यावर्त्यमानयोरभेदाध्यवसानेनैक्ये क्लेशादिरूपसंतापस्यैव प्राप्तिस्तस्यैव च व्यावृत्तिः। तत्प्रतियोगिक ● तस्य व्यावृत्तिरित्यर्थः। व्यावृत्तिरभावः। संतापस्य व्यावृत्तौ संतापो व्यावृत्तेः प्रतियोगी स प्रतियोगी यस्या व्यावृत्तेस्तादृशी व्यावृत्तिः। **न तु परिसंख्या** ● अभेदयोग्यतयाऽनुपादानाद् रूपकस्याप्यभावः। **अन्यथा** ● एतादृशस्थले रूपकानङ्गीकारे। **परिसंख्यामात्रम्** ● अलङ्कारत्वरहितम्। **शुद्धा** ● अलङ्कारभावविवर्जिता प्रश्नरहिता च। अनलङ्कारे हेतुमाह **प्रागुक्ताद्धेतोः** ● कविप्रतिभानपेक्षणात्। अन्ये तु मते आर्थत्वाभावान्न परिसंख्या।

॥ इति परिसंख्यालङ्करनिरूपणम् ॥

अथार्थापत्तिः—

केनचिदर्थेन तुल्यन्यायत्वादर्थान्तरस्यापत्तिरर्थापत्तिः ।

न्यायश्च कारणम् ।

सा च प्रकृतेन प्रकृतस्य, अप्रकृतेनाप्रकृतस्य, प्रकृतेनाप्रकृतस्य, अप्रकृतेन प्रकृतस्येति तावच्चतुर्भेदा प्रत्येकमर्थान्तरस्य साम्यन्यूनाधिक्यैर्द्वादशविधा । ततो भावाभावत्वाभ्यां चतुर्विंशतिभेदाः ।

दिङ्मात्रेणोदाह्रियते—

'लीलालुण्ठितशारदापुरधियामस्मादृशानां पुरो
विद्यासद्मविनिर्गलत्कणमुषो वल्गन्ति चेद्वालिशाः ।
अद्य श्वः फणिनां शकुन्तशिशवो दन्तावलानां शशाः
सिंहानां च सुखेन मूर्धनि पदं धास्यन्ति शालावृकाः ॥'

अत्र प्रकृतेनाप्रकृतस्यापाद्यमानस्य साम्यं मालारूपता च ।

---

अथार्थापत्त्यलङ्कारनिरूपणम्

अर्थादापादनमुपस्थापनम् । यथा पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र पीनत्वं भोजनाधीनं दिवाभोजननिषेधे रात्रिभोजनमुपस्थापयति । **साम्यन्यूना** ● सदृशेन सदृशस्य, सदृशेन न्यूनस्य, न्यूनेनाधिकस्येत्यादिभेदाः । **भावत्वाभावत्वाभ्याम्** ● भावेनाभावस्य, अभावेन भावस्येत्यादिभेदाः ।

**लीलालुण्ठित** ● महाधियामग्रेऽल्पधियो प्रौढिस्थापनं चेद् अद्य श्वो वा फणिनां मूर्धनि पक्षिशावकाः सुखेन पदं धास्यन्ति । लीलया लुण्ठितं शारदामन्दिरं यया तादृशी धीर्येषां तेषाम् अस्मादृशानां पुरः पाठशालातो विनिर्गलन्तो विद्याकणास्तान् चोरयन्तो मूर्खाश्चेद् वल्गन्ति वैदुष्येन उपतिष्ठन्ते । दन्तावलाः गजाः, शालावृकाः शृगालाः श्वानो वा प्रकृतो विदुषां संवादः, अप्रकृताः सर्पादीनां वृत्तान्ताः, आपादको विदुषां वृत्तान्तः, आपाद्यमानं सर्पादीनां वृत्तम् ।

'यदि ते चरणाम्बुजं हृदा वहतो मे न हतो विपद्गणः ।
अथ चण्डकरेण मण्डिते दिनमध्येऽपि जितं तमोगणैः ॥'

अत्र न हत इति विद्यमानतारूपात् प्रकृतार्थाज्जितमित्यापाद्यमानस्याप्रकृतार्थस्य सर्वोत्कर्षेण वर्तनरूपस्याधिक्यम् ।

न चात्र विपद्गणस्यावस्थानमात्रेण तमोगणानामवस्थानमापादयितुमुचितम्, न तु जयः, अनानुरूप्यादिति शंक्यम् । भगवच्चरणसन्निधाने यद्येकस्य विपद्गणस्य स्वास्थ्यम् तदा समुचित एव बहूनां तमोगणानां सूर्यसन्निधाने जय इति न दोषः ।

'सदैव स्नेहार्द्रे सुरतटिनि निष्किञ्चनजने
यदि त्वं नाधत्से सुरभिरिव वत्से मयि कृपाम् ।
तदा चिन्तारत्नत्रिदशपतिभूमीरुहमुखा
ददीरन्नर्थिभ्यः किमिति कणभिक्षामपि जडाः ॥'

अत्राभावेनाभावापादनम् । स्नेहार्द्रजाह्नवीरूपप्रकृतार्थापेक्षया चिन्तारत्नादीनां जडत्वेन न्यूनत्वं च ।

एतेष्वापाद्यमानमप्रकृतम् ।

---

**यदि ते चरणा** ● यदि भगवद्भक्तस्य विपल्लेशस्तदा सूर्यसन्निधाने तमोगुणानां विजयः । आपाद्यमानविजयस्य आपादकापेक्षया आधिक्यं दर्शयति **अत्र न हतः** ● विपदामहननेन विपदां विद्यमानता प्रतिपादिता । जयशब्दार्थः सर्वोत्कर्षेण वर्तनम् । अवस्थानेनावस्थानमेवापादयितुं योग्यमित्याशङ्क्यते **न चात्र** ● भगवत्सन्निधाने विपदवस्थानम्, सूर्यस्य तमोगणैर्जयसदृशमेवेत्याशयेन समाधत्ते **भगवच्चरण** ● **सदैव स्नेहार्द्रे** ● सुरतटिनि, गङ्गे, सुरभिर्धेनुः । चिन्तितस्यार्थस्य दातृरत्नं चिन्तामणिः त्रिदशपतिरिन्द्रस्तस्य भूमिरुहाः फलिनः कल्पवृक्षाः । यदि तव कृपा मयि न स्यात्तदा चिन्तारत्नादयोऽर्थिभ्यः कणभिक्षामपि न ददीरन् । **अत्राभावेन** ● कृपाया अभावेन दानाभावः ।

'मामनुरक्तां हित्वा यदि राजन् पुरुषसिंह यातोऽसि ।
मुक्त्वा वनमिदमेष्यति वनलक्ष्मीमत्र किं चित्रम् ॥'

इयं राज्ञा नलेन मुक्ताया अरण्ये दमयन्त्या ध्यानोपनीतं तमेव प्रत्युक्तिः । अत्रापाद्यमानो वनवृत्तान्तोऽपि संनिहितत्वात् प्रकृत एवेति द्वयमपि प्रकृतम् । पुरुषसिंहापेक्षया वनस्य नपुंसकत्वान्न्यूनत्वम् । अत एव किं चित्रमित्युक्तम् ।

'उदुम्बरफलानीव ब्रह्माण्डान्यत्ति यः सदा ।
सर्वगर्वापहः कालस्तस्य के मशका वयम् ॥'

अत्राप्रकृतेन ब्रह्माण्डादनेन समस्तभूतानामनित्यत्वं कैमुतिकन्यायेन प्रकृतं प्रतिपाद्यते ।

'न भवानिह मे लक्ष्यः क्षत्रवर्णविलोपिनः ।
के वा विटपिनो राम कुलाचलभिदः पवेः ॥'

रामं प्रति जामदग्न्यस्येयमुक्तिः । अत्र प्रतिवस्तूपमा महा-

---

मामनुरक्ताम् ● यथा मम तव सम्बन्धः, तथा वनवनलक्ष्म्योरपि । मां विहाय यदि त्वं यातोऽसि तदा त्वदपेक्षया नपुंसकत्वाद् न्यूनं वनं वनलक्ष्मीं त्यक्त्वा यास्यति अत्र किमाश्चर्यम् ? नवविरहे मनोविलसितं नलं प्रति दमयन्ती-वचनम् । द्वयमपि ● आपाद्यमापादकञ्च वनस्याप्युपस्थितेः उदम्बरफलानीव ● ब्रह्माण्डभक्षकस्य कालस्य वयं क्षणिकाः के, मशका इव । ब्रह्माण्डादनं ब्रह्माण्डभक्षणम् । कैमुतिक ● सर्वं यदाऽनित्यं तदा वयं किम् ? अर्थाद् वयमप्यनित्या एवेत्यस्माकमनित्यत्वव्यवस्थापनं प्रकृतम् । न भवानिह ● क्षत्रियमात्रस्य नाशकस्य मम न भवान् लक्ष्यः, एको भवान् क्षत्रियव्यक्तिर्बालस्तस्य तु विलोप एव भवेदित्युपमेयवाक्यार्थः । पर्वतभिदो वज्रस्य वृक्षाः के, न किमपि लक्ष्यस्थानम् । वज्रेण तादृशेन वृक्षाणां छेदनमेव स्यादित्युपमानवाक्यार्थः, यथा वज्रस्य विटपिनो न लक्ष्याः, तथा भवानपीति अलक्ष्यत्वतुच्छत्वादिसाधर्म्यप्रतीतिः । तच्च साधर्म्यं भिन्नशब्दोपादानाद् वस्तुप्रतिवस्तुभावकृतम् । द्वयोश्च

वाक्यार्थः। तस्याश्च दलद्वयमुपमेयवाक्यार्थ उपमानवाक्यार्थश्च। तत्रोपमेयवाक्यार्थगतायामर्थापत्तावापाद्यमानस्तन्निमित्तभूतश्चेत्युभावप्यर्थौ प्रकृतौ। उपमानवाक्यार्थगतायां त्वप्रकृताविति।

अनया दिशान्यदप्यूह्यम्।

अत्र विचार्यते—नेयं वाक्यवित्संमतायामर्थापत्तौ निविशते। आपादकस्यार्थस्यापतितमर्थं विनानुपपत्तेरत्राभावात्, नाप्यनुमाने। आपततोऽर्थस्यापादकासमानाधिकरणत्वेन व्याप्यत्व पक्षधर्मत्वयोर्दूरापास्तत्वात्। न च येन कारणेनैकार्थसिद्धि-

---

वाक्यार्थयोरार्थमौपम्यमिति स एव महावाक्यार्थ इत्याह महावाक्यार्थ ● सम्पूर्णपद्यप्रतिपाद्यः। आपाद्यमान ● रामविलोपः तत्कारणीभूतः क्षत्रियवर्णविलोपः। त्वप्रकृतौ ● वृक्षभेद आपाद्यमानः पर्वतभेदकत्वमापादकम्। वाक्यविदो मीमांसकाः। विनानुपत्ते ● यथा पीनत्वं भोजनं विनाऽनुपपन्नं सदापाद्यस्य भोजनस्यापादकं न, तथा अल्पधियां विदुषामग्रे बल्गनं शकुन्तशिशूनां फणिनां मूर्धनि पदाधानं विनाऽनुपन्नम्। अपि तु येन कारणेन तादृशबल्गनं तेनैव कारणेन तादृशपदाधानमिति विवक्षितं लक्षणवाक्येन। तथा चानुपपत्तेरभावाद् अर्थापत्तिप्रमाणभिन्न एव समाननामालङ्कार इति। दूरापास्तत्वात् ● आपाद्यापादकयोस्तादृशवल्गनपदाधानयोः सामानाधिकरण्यं नास्ति, वल्गनस्याल्पधीषु पदाधानस्य च शकुन्तशिशुषु वर्तमानत्वात्। किञ्चात्र पक्षो हेतुर्वा न व्यवस्थितो येन व्याप्तिः पक्षधर्मता वा कल्प्येत। अन्यत्रापाद्यमन्यत्रापादकम्। यथा वह्निधूमयोरेकाधिकरणे स्थितिस्तथा न क्वापि स्थितिः। कालोऽपि न भवितुमर्हति। अर्थयोः सम्भावनामात्रविषयत्वात्। न चायं कालः फणिनां मूर्ध्नि पक्षिकर्तृकपदाधानवान्। महाधियामग्रेऽल्पधियां वल्गनात्। यस्मिन् काले तादृशवल्गनं नास्ति तस्मिन् काले तादृशपद्दाधानमपि नास्ति यथा ह्यः, इति व्यतिरेकव्याप्त्युपस्थानेनानुमितिरूपैवापत्तिरिति वाच्यम्, साधनाभावसाध्याभावयोः सहचाररूपा व्यतिरेकव्याप्तिर्न साधनेन साध्यानुमितौ क्षमते, आपाद्यज्ञानस्य सम्भावनात्मकत्वाच्च। न च येन ●

स्तेनैव लिङ्गेनापरार्थानुमानमिति वाच्यम्, अर्थान्तरसिद्धेरनुमित्यात्मकताविरहात् । यतोऽयमर्थोऽपि भवितुमर्हतीति बुद्धेराकारः, न तु भवत्येवेति । नापि यद्यर्थातिशयोक्तौ, तस्या विपरीतार्थ एव द्वयोर्विश्रान्तेः । न चेह तथा, आपादकस्य सिद्धत्वादापततश्च संभाव्यमानत्वाद् यथाश्रुत एव विश्रान्तेः ।

---

येन कालविपर्ययेण धृष्टत्वादिना तादृशवल्गनं तेनैव कालविपर्ययेण तादृशपदाधानस्यापि अनुमितिः । तत्प्रयोगश्चास्मिन् काले पक्षिणः फणिनां मूर्धनि पदमाधास्यन्ति कालवैलक्षण्यात् धृष्टत्वाद्वा, महाधियामग्रेऽल्पधियां वल्गनात् । इति । उत्तरमाह—अनुमित्यात्मकता ● दृष्टान्तविधया यथा-तथाशब्दाभ्यामनुपादानाद् यदिचेदादिशब्दैरापाद्यापादकभावेनैवोपादानाच्चेत्यपि बोध्यम् । मर्हतीति ● कदाचिन्नापि भवेदिति व्यभिचारशङ्काकवलितः । भवत्येव● यथा धूमं दृष्ट्वा वह्निरस्त्येव । यथा वा मम पिता कश्चिदस्त्येव स च मनुष्य एवेति शङ्कालेशशून्यः । तथा अनुमिनोमि, अर्थादापादयामि इत्यनयोरनुव्यवसाययोर्भेदाद् अनुमितित्वमर्थापत्तित्वञ्च विभिन्नैव जातिः । विश्रान्तेः● यथा राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः । तस्या मुखं तदा साम्यपराभवमवाप्नुयात्—इत्यादौ आपाद्यः साम्यपराभव आपादकश्चन्द्रस्याकलङ्कभाव उभावप्यसिद्धौ । अत्र 'तु' आपादकः 'बलगन्ति चेद् बालिशाः' इत्यादौ सिद्धतयोपन्यस्तः । आपादकस्य ज्ञानं निश्चयात्मकमापाद्यस्य सम्भावनात्मकमतिशयोक्तौ तु उभयोः सम्भावनात्मकम् । यत्तु मर्मप्रकाशे अलङ्कारचन्द्रिकायाञ्च न्यूनत्वाधिकादिभिरर्थापत्तिभेदस्य त्वया कल्पनवत् तस्यातिशयोक्तेरेव तथाविधभेदस्य कल्पने क्षत्यभाव इति प्रतिपादितम् । तदित्थं विवेचनीयम् । किमस्ति किञ्चिद्विनिगमकम् ? ग्रन्थसमन्वयाग्रहमन्तरेण । ग्रन्थसमन्वयस्तु पण्डितराजस्यापि अपेक्ष्यते । अर्थापत्तिभेदकल्पनेऽपि नास्ति विनिगमकमिति चेद् दत्तावधानो भव । यस्य कस्यापि सामान्यं लक्षणं यत्र समन्वयमेति तस्य तद्भेदता उचिता । अतिशयोक्तेस्तु न सामान्यं किञ्चिल्लक्षणम् । अन्यतमत्वेन लक्षणं विधायान्तर्भावस्तु अनेकेषां सम्भवाद् अतिव्याप्त्यापत्तेः । येषामन्यतमत्वेऽन्तर्भावः सम्प्रदायसिद्धो न तेन व्याप्यतेऽयं भेदः । यथा यद्यर्थातिशयोक्तिभेद आपादकस्य सिद्धत्वादिति मूले प्रतिपादितमेव । न्यूनाधिकादिभेदेषु चार्थापत्तेः सामान्यं स्वरूपं समन्वयमेवैतीति तद्भेदतैवोचिता । अतः पुनरपि

तस्माद् येन न्यायेनैकोऽर्थः सिद्धस्तेनैव न्यायेनापरोऽप्यर्थः सेद्धुमर्हतीत्येवंरूपेयमर्थापत्तिः ।

अस्यां चार्थान्तरं लोकेऽविद्यमानमपि कविना स्वप्रतिभया कल्पयित्वा यद्यापाद्यते तदालङ्कारत्वम् । यथा 'फणिनां शकुन्तशिशवः' इत्यादौ । अन्यथा तु 'कैमुतिक'न्यायतामात्रम् ।

यथा 'उदुम्बरफलानीव' इत्यादौ प्राचीनरीत्या तु प्रागुदाहृतमस्माभिः । अत एव तत्र 'कैमुतिकन्यायेनेत्युक्तम् ।' एवं च 'कमपरमवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः । 'अवस्थेयं स्थाणोरपि भवति सर्वामरगुरोर्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी' इत्यादिसर्वस्वकृता यदुदाहृतं तन्नातीव हृदयङ्गमम् ।

यत्तु—'कैमुत्येनार्थसिद्धिः काव्यार्थापत्तिरिष्यते' इति कुवलयानन्दकृता अस्या लक्षणं निर्मितं तदसत् । कैमुतिक-

---

सामान्यस्वरूपं स्फोरयति तस्माद्येन न्यायेन ● सामान्यलक्षणे प्रथममुक्ते तुल्यन्यायेति पदं दृष्ट्वा अलङ्कारचन्द्रिका एवं मोहमेति त्वदुक्तं लक्षणमयुक्तं स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहामित्यादौ कैमुत्यन्यायविषयार्थापत्तावव्याप्तेः, कैमुतिकन्यायस्य न्यूनार्थविषयत्वेन तुल्यन्यायत्वाभावादापादनाप्रतीतेश्चेति । येन न्यायेनेन्दुर्जितस्तेनैव सरसीरुहामपि जय इत्यापादनप्रतीतिर्लक्षणसमन्वयश्च । तुल्यार्थो न्याये विशेषणं न तु आपाद्ये । आपाद्य एव न्यूनत्वादिकमुक्तं पण्डितराजेन स्फुटमेवेति नेत्रे विस्फार्य मोहोऽपनेयः । अन्यथा तु ● कविकल्पनयाऽसुरभीकृतन्तु । न्यायतामात्रम् ● मात्रपदेनालङ्कारभावो व्यवच्छिद्यते । कमपरवशम् ● अस्य पूर्वार्धम् इदं पशुपतिरपि तान्यहानि कृच्छ्रादगमयदद्रिसुतासमागमोत्कः ।

अवस्थेयम् ● अस्यापि पूर्वार्धमित्थमलङ्कारः शङ्काकरनरकपालं परिकरो विशीर्णाङ्गो भृङ्गी वसु च वृष एको गतवयाः । हृदयगङ्गम् ● सहृदया

न्यायस्य न्यूनार्थविषयत्वेनाधिकार्थापत्तावव्याप्तेः। यथा—

'तवाग्रे यदि दारिद्र्यं स्थितं भूप द्विजन्मनाम्।
शनैः सवितुरप्यग्रे तमः स्थास्यत्यसंशयम्॥'

अत्र शनैःशब्दमहिम्ना राजाग्रे दारिद्र्यस्थित्यपेक्षया सूर्याग्रे तमोऽवस्थानं दुःशकमेवेत्यवगतमपि न्यायसाम्यादापाद्यते, न तु कैमुतिकन्यायेनेति।

इति रसगङ्गाधरेऽर्थापत्त्यलङ्कारनिरूपणम्।

अथ विकल्पः—

विरुद्धयोः पाक्षिकी प्राप्तिर्विकल्पः।

एकस्मिन् धर्मिणि स्व-स्व-प्रापक-प्रमाण-प्राप्तयोरत एव तुल्यबलयोर्विरुद्धयोर्विरुद्धत्वादेव युगपत्प्राप्तेरसंभवात् पाक्षिक्येव प्राप्तिः पर्यवसन्ना।

---

नामिति शेषः। कविप्रतिभाऽनपेक्षणादिति हेतोश्च। न्यून्यार्थविषयः ● यथा उदुम्बरफलानीवेति पद्ये महद् ब्रह्माण्डं भक्षयतः कालस्य मशकानामस्मादृशां भक्षणं न्यूनविषयकम्। वव्याप्तेः ● यदि ते चरणाम्बुजमित्यादिपद्ये। मर्मप्रकाशविद्रावणं प्रागेव कृतमिति दिक्।

॥ इत्यर्थापत्त्यलङ्कारनिरूपणम् ॥

अथ विकल्पालङ्कारनिरूपणम्

विविधः कल्पः, एवं कुरु अथवैवं कुरु इति प्रतीतिसाक्षिकः। विविधता च विरोधादेव स्यादन्यथोभयोः समुच्चय एव प्रसज्येत। विरोधश्चैककालासम्भवित्वम्। विरोधोऽपि तुल्यबलयोरेव भवति, न्यूनबलस्य तु बलवत्ताऽस्तित्वमेवार्दयेत् स्याद्विविधः कल्पः। तुल्यबलत्वञ्चोभयोः प्रमाणप्राप्तत्वे इत्यादिकं विवेचयति विरुद्धयोः ● पक्षे भवा पाक्षिकी। एकस्य कल्पस्यानवसरेऽन्यस्यावसरः। स्वस्व ● स्वं प्राप्तिविषयो योऽर्थस्तस्य प्रापकं यत्प्रमाणं तेन प्राप्तौ।

अयं च समुच्चयस्य प्रतिपक्षभूतो व्यतिरेक इवोपमायाः। अत्र च विकल्प्यमानयोरौपम्यमलङ्कारताबीजम्, तदादायैव चमत्कारस्योल्लासात्। अन्यथा तु विकल्पतामात्रम्। यथा—'जीवनं मरणं वाऽस्तु नैव धर्मं त्यजाम्यहम्' इत्यादौ। अत्र जीवनमरणयोर्नौपम्यस्य प्रतीतिः।

'प्राणानर्पय सीतां वा गृध्राँस्तर्पय वा द्विजान्।
यमं भजस्व रामं वा यथेच्छसि तथाचर॥'

अत्रार्पणतर्पणभजनेषु मानरक्षणप्रमाणेन यथाक्रमं कर्मतया प्राणगृध्रयमानाम्, जीवनरक्षणप्रमाणेन सीताद्विजरामाणां प्राप्तानां यौगपद्यासंभवात् पर्यायेण प्राप्तिः। कर्मणोः क्रियाफलेनैव समानधर्मेणौपम्यम्।

नन्वत्र यथार्पि - तर्प्यादिधात्वर्थफलरूपधर्मैक्यात् कर्मणोरौपम्यं गम्यते, तथा 'जीवनं मरणं वा' इत्यादौ सत्तारूपधर्मै-

---

प्रतिपक्ष ● समुच्चयस्य युगपत्पदार्थानामन्वयो विषयः। विकल्पे तु युगपदुभयोरन्वयाऽसम्भवः समुच्चयेऽन्वयिनो न पदार्था विरुद्धा अत्र च विरुद्धाः। रताबीजम् ● कविप्रतिभाऽपेक्षी अंशः। विकल्पातामात्रम् ● यथा उदिते जुहोति अनुदिते जुहोति इत्यादिवद्वस्तुस्वरूपमात्रम्। प्रतीतिः ● अस्य विचारांशः अग्रिमसन्दर्भेण पूरणीयः। प्राणानर्पय ● रावणं प्रति श्रीरामदूतस्योक्तिः। यदि त्वं रावणः मानी, तदा मानिनां मानः प्राणेभ्योऽपि गरीयान् इति मरणं स्वीकुरुष्व संग्रामेण। यदि जिजीविषुस्तदा सीतामर्पयेत्यादि। अर्पणे प्राणानां सीतयाश्च विकल्पः, तर्पणे गृध्राणां रामपथप्रवृततया द्विजानां विकल्पः, भजने रामस्य यमस्य च। कर्मतया ● मानेन प्रमाणेन अर्पणे प्राणानां तर्पणे गृध्राणां भजने यमस्य च कर्मतया प्राप्तिः। एवं क्रमो जीवनपक्षेऽपि बोध्यः। द्यासम्भवात् ● जीवनमानयोस्तादृशपरिस्थितौ विरोधात्। कर्मणोः ● सीताप्राणयोरर्पणक्रियाफलेन त्यागेन गृध्रद्विजन्मनोस्तर्पणक्रियाफलेन तृप्त्यादिना यमरामयोर्भजनक्रियाफलेन तृप्त्या च समानधर्मेणेत्यर्थः।

क्याज्जीवनमरणयोः कर्त्रोरपि तद् गन्तुं युज्यते इति चेत्, युज्यते, न तु गम्यते । अथ तत्कुतो हेतोः ? कवितात्पर्यविरहादिति गृहाण । नह्यत्र मरणं जीवनं च समानमिति कवेरभिप्रेतम् । किन्तु 'विषं भुङ्क्ष्व मा चास्य गृहे भुङ्‌थाः' इतिवद् धर्माद्धेतोर्मरणमपि ज्यायः, न तु धर्मत्याग इति निषिद्धगतद्वेषाधिक्यम् । तदर्थं च मरणस्योपात्तत्वादविवक्षिताधिकरणकतया औपम्यस्यानिष्पत्तिरेव ।

क्वचिल्लुप्तं समानधर्ममादायाप्यौपम्यस्य गम्यत्वेऽयमलङ्कारः । यथा भगवद्गीतासु 'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्' अत्र महीभोगस्वर्गप्राप्त्योरुत्तमत्वेनौपम्यं विवक्षितम् । तथा च धात्वर्थयोरयं विकल्प इत्येके । आख्यातार्थयोरित्यपरे । सर्वथैव न महीस्वर्गयोरिति स्थितम् । तयोः

---

सत्तारूपः ● अस्तु शब्दप्रतिपाद्येन धर्मेण जीवनमरणकर्त्रोः । गम्यते ● व्यज्यते । तत्कुतो ● तद् अगमनम् । निषिद्धगत ● धर्मत्यागविषयकाधिको द्वेषः । उपमामात्रे नैव धर्मेत्यादेरनुपयोगापातात् । तदर्थञ्च ● द्वेषाधिक्यव्यञ्जनार्थम् न तु औपम्यार्थम् । अविवक्षितमधिकरणं यस्यौपम्यस्य तदौपम्यमविवक्षिताधिकरणं तस्य भावस्तया औपम्याधिकरणस्य मरणस्याविवक्षितत्वादित्यर्थः । अत्र सरलायाः क्लिष्टकल्पनया अधिकरणपदस्य स्वीकृत्यर्थे प्रयासो न जाने कया अनुपपत्त्या । धात्वर्थयोर ● एकस्मिन्नर्जुने धर्मिणि प्राप्तिभोगयोः कर्मान्वितयोः । एके धात्वर्थव्यापारस्य प्राधान्यवादिनो वैय्याकरणाः । नैय्यायिकमतेनाह आख्यातार्थयो ● स्वर्गप्राप्तिकर्तृत्वमहीभोगकर्तृत्वयोः, वैय्याकरणस्य मते आख्यातार्थस्य धात्वर्थव्यापारविशेषणत्वेन प्राधान्यासम्भवः । न्यायमते धात्वर्थापेक्षया आख्यातार्थस्य प्राधान्यम् इत्यभिप्रायेण । वस्तुतस्तु पूर्वमतमेव ज्यायः, न्यायमते आख्यातार्थस्य धात्वर्थविशेष्यत्वेऽपि प्रथमान्तार्थे पारतन्त्र्यात् । धात्वर्थयोरेककर्तृत्वमेवोपात्तं

कारकत्वेनैव क्रियान्वयं विना विकल्पासंगतेः । न च धात्वर्थयो-रेकस्य कर्तृरूपसाधारणधर्मस्योक्तत्वात् कथं लुप्ततेति वाच्यम्, कर्तृरूपसाधारणधर्ममादायौपम्यस्यात्र सुन्दरस्यानिष्पत्तेः । अन्यथा 'हतो वा नरकं गन्ता जित्वा वा भोक्ष्यसे महीम्' इत्य-त्राप्यौपम्यप्रत्ययापत्तेः ।

यत्तु—

"—'भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये ।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥'

अत्र विकल्पः । उत्तमत्वाच्च तुल्यप्रमाणश्लिष्टत्वम्" इत्य-लङ्कारसर्वस्वकृतोक्तम् । तच्चिन्त्यम् । भवार्तिशमने तनु-नेत्र-द्वन्द्वयोर्द्वयोरपि युगपत्कर्तृत्वे विरोधाभावाद्विकल्पानुत्थानात् । 'विरोधे विकल्पः' इति हि तेनैवोक्तम् ।

---

साधारणमस्तु कृतमनुपात्तोत्तमत्वेन इत्याशङ्कते न च धात्वर्थयोः ● भक्ति प्रह्ववि ● भक्तिप्रवणानां विलोकने प्रणयिनी । विशेषणानि नेत्रे इति विशेष्यानुरोधेन नपुंसकद्विवचनस्य रूपाणि । तनुरिति विशेष्यानुरोधेन स्त्रीलिङ्गै-कवचनस्य रूपाणि । तथैव नीलकमलानुसारिणी । समाधिनिरतैः हितप्राप्तये ध्यानविषयतां नीते नेत्रे तथा ईहितप्राप्तये चेष्टितप्राप्तये ध्यानविषयतां नीता तनुः । सौन्दर्यस्य महान् निधिः । निधिशब्दस्य नित्यपुल्लिङ्गतया नात्र श्लेषः, किन्तु रेफलोपात्सन्धिवशाद् दीर्घः । रमानयनयो रसास्वादं तन्वती इदमपि पूर्ववत् शतृप्रत्ययान्तस्य नपुंसकद्विवचनान्तं स्त्रीलिङ्गं ङीबन्तमेकवच-नान्तम् । कुरुतामित्यपि परस्मैपदस्य द्विवचनान्तमात्मनेपदस्यैकवचनान्तञ्च । विकल्पः नेत्रतन्वोः । उत्तमत्वाच्च तुल्यप्रमाणं विशेषणानां श्लिष्टत्वेन श्लिष्टञ्च ।

न च तनूमध्ये नेत्रयोः प्रविष्टत्वात् पृथगभिधानानौचित्येऽपि यत्पृथगभिधानं तद्वक्तुस्तनुनेत्रद्वन्द्वयोर्विरोधमभिप्रेतं गमयतीति वाच्यम्, वास्तवस्यैव विरोधस्य विकल्पोत्थापकत्वेन वैवक्षिकस्याप्रयोजकत्वात्, विकल्पस्यात्रासुन्दरत्वाच्च। वस्तुतस्तु 'सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव' इत्यादाविवात्रापि श्लेषमूलोपमैवालङ्कारः। तनुर्वेति तनुरिवेत्यर्थः। 'वा स्याद्विकल्पोपमयोः' इति वाशब्दस्येवार्थकत्वाभिधानात्।

न च लिङ्गवचनभेद उपमायां दोष इति वाच्यम्, साधारणधर्मस्योपमानसामानाधिकरण्ये उपमेयसामानाधिकरण्ये च यत्र वैरूप्यं तत्रैव लिङ्गवचनभेदस्य दोषताया अभ्युपगतेः। यथा 'हंसीव धवलश्चन्द्रः सरांसीवामलं नभः' अत्र हंसी धवला, चन्द्रो धवलः, सरांस्यमलानि, नभो ह्यमलमिति साधारणधर्मस्योपमाने उपमेये च द्वैविध्येनैव प्रतीतेरुपमायाः सम्यगनिष्पत्तेः।

---

तेनैवोक्तम् ● एवकारोऽप्यर्थः। विरुद्धत्वेन प्रतिपादने वक्तृतात्पर्यमिति शङ्कते न च तनु ● एतदभिप्रायक एव विरोधसमर्थकः सर्वस्वग्रन्थोऽपि। उत्तरमाह वास्तवस्यैव ● विवक्षाया आगतस्य वैवक्षिकस्य। त्वेन वैवक्षिकस्येति नञ्कारसहितः पाठः प्राङ्मुद्रितोऽशुद्धो नञ्रहितः शुद्धः। त्रासुन्दरत्वाच्च ● भगवतः सर्वाङ्गेषु भवार्तिशमनसामर्थ्यसत्त्वे सर्वकालिकत्वे च विकल्पस्यासुन्दरत्वम्। चमत्कारातिशयानुरोधेनाह वस्तुतस्तु ● विभिन्नयोरपि समानशब्दोपात्तत्वेन साधारण्यमापन्नेन धर्मेण। साधारणधर्मस्यो ● उपमानेनोपमेयेन च सहाभेदान्वयोत्थापको यत्र साधारणधर्मवाचकशब्द उपमानोपमेयवाचकशब्दमपेक्ष्य भिन्नलिङ्गतयोक्तः, तत्रैव तादृशलिङ्गभेदस्यैवोपमादूषकता। धवलश्चन्द्रः ● अत्र धवलशब्दस्य हंस्या अमलशब्दस्य च सरोभिः सह सामानाधिकरण्यान्वयविरोधित्वाल्लिङ्गवचनयोर्भेदस्य दूषकता।

नन्वेवं सति 'सरांसीव नभः' इत्यादौ लुप्तोपमायां कथं वचनभेदो दोष इति चेत्, तत्रापि प्रतीयमानसाधारणधर्मस्य वैरूप्यादेवेत्यभ्युपगमात् । न च प्रतीयमानस्य धर्मस्य स्वशब्दानालिङ्गिततया सुतरां लिङ्गानालिङ्गनेन नास्ति वैरूप्यमिति शङ्क्यम्, शब्दालिङ्गितस्यैवार्थस्य प्रतीतेरिष्टेः । यदाहुः—'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते' इति । यद्वा श्रुतार्थापत्तावभ्युपगम्यमानायां शब्द एव कल्प्यते, अर्थस्तु तेनाभिधीयत इत्यस्ति वैरूप्यम् । एवं स्थिते राजते भासते—इत्यादितिङन्तप्रतिपाद्ये साधारणधर्मे यथा लिङ्गवचनभेदो न दोषस्तथात्रापीति । अत एव 'यस्मिन्नतिसरसो जनो जनपदाश्च' इति तुल्ययोगितापि संगच्छते । अन्यथा उपमागर्भत्वात्तस्या उपमाया दुष्टत्वे दुष्टतापत्तेः । श्लिष्टे धर्मलिङ्ग संख्याभेदादिर्नैव दूषणमिति प्रतिप्रसवाच्चेति दिक् ।

इति रसगङ्गाधरे विकल्पालङ्कारनिरूपणम् ।

---

नन्वेवम् ● साधारणधर्मवाचिप्रयोग एवोक्तव्यवस्थाया सम्भवे । वैरूप्यादेव ● एकस्य साधारणधर्मवाचकस्याक्षेपे उपमानोपमेययोरन्यतरेण सह सामानाधिकरण्यानुपपत्तेरेव । अर्थमात्रस्य साधारण्यस्याक्षेपे क्व लिङ्गव चनभेद-सम्भावना ? इत्याशङ्कते न च प्रतीयमानस्य ● ! स्वशब्दा ● स्वं धर्मः तस्य वाचकशब्दस्तदसंपृक्ततया । लिङ्गाना ● लिङ्ग । सम्पृक्तत्वेन, शब्दधर्म-त्वादेव लिङ्गस्य । श्रुतार्थाप ● श्रुतमेवानुपपन्नं सद् यदर्थान्तरस्य कल्पकं तत्रान्वययोग्यार्थोपस्थापकशब्द एवाध्याह्रियते नार्थः । यथा पुष्पेभ्य इत्युक्तौ स्पृहि-रेवाध्याह्रियते चतुर्थीदर्शनात्, पुष्पाणीत्युक्तौ इच्छत्यादयः । न्नतिसरसो ● अतिशयितः सरसः सरसमतिक्रान्तो वा जनविशेषणत्वे अतिशयितानि सरांसि यत्रेति जनपदविशेषत्वे ।

॥ इति विकल्पालङ्कारनिरूपणम् ॥

अथ समुच्चयः—

युगपत्पदार्थानामन्वयः समुच्चयः ।

युगपदिति क्रमव्यावृत्त्यर्थम्, न त्वेकक्षणप्रतिपत्त्यर्थम् । तेन किञ्चित् कालभेदेऽपि न समुच्चयभङ्गः ।

स तावद् द्विविधः—धर्मिभेदधर्म्यैक्याभ्याम् । धर्म्यैक्येऽपि द्वैविध्यम्—कारणत्वातिरिक्तसंबन्धेनैकधर्म्यन्वये, कारणतया एकधर्म्यन्वये चेति । एवं त्रिविधेऽस्मिन्नाद्यभेदयोर्गुणानां क्रियाणां च, तृतीये रमणीयानामरमणीयानां रमणीयारमणीयानां समन्वयः ।

न चास्मिन् वक्ष्यमाणसमाध्यालङ्कारत्वमाशङ्क्यम् । समाधौ हि एकेन कार्ये निष्पाद्यमानेऽप्यन्येनाकस्मिकमापतता कारणेन सौकर्यादिरूपोतिशयो यत्र संपाद्यते स विषयः । अस्मिंस्तु समुच्चयप्रभेदे यत्रैककार्यं सम्पादयितुं युगपदनेके खले कपोत इवाहमहमिकया संपतन्ति, कार्यस्य च न कोऽप्यतिशयः सः ।

---

अथ समुच्चयालङ्कारनिरूपणम्

ननु प्रादुर्भवति पयोदेत्यत्र कार्यकारणभूतानां युगपदन्वयरूपसम्बन्धाभावान्न लक्षणसमन्वय इत्याशङ्काव्यावृत्त्यर्थमाह क्रमव्या ● क्रमिकाणामक्रमिकाणां वा पदार्थानां क्रमशोऽन्वये समुच्चयत्वस्य व्यावृत्त्यर्थम् । क्रमिकाणामपि पदार्थानां स्थूलकालमादाय युगपदन्वयो बोद्धव्यः । युगपदित्यस्यैककालवृत्तित्वमर्थः । तत्र कालश्च यथाकथञ्चिन्न क्षणरूपमित्याह न त्वेकक्षणप्रति ● त्रिविधे ● धर्मिभेदः प्रथमः, द्वितीयं तृतीयञ्च सम्बन्धभेदमादाय । तृतीये ● कारणत्वसम्बन्धाश्रिते धर्म्यैक्ये । आकस्मिकं प्रयत्नानपेक्षम् । रूपोऽतिशयो ●

क्रमेणोदाहरणानि—

'प्रादुर्भवति पयोदे कज्जलमलिनं बभूव नभः ।
रक्तं च पथिकहृदयं कपोलपाली मृगीदृशः पाण्डुः ॥'

'उदितं मण्डलमिन्दोरुदितं सद्यो वियोगिवर्गेण ।
मुदितं च सकलयुवजनचूडामणिशासनेन मदनेन ॥'

अत्राद्ये गुणानां द्वितीये क्रियाणां च यौगपद्येन भिन्नधर्म्यन्वयः ।

'आताम्रा सिन्धुकन्याधवचरणनखोल्लासिकान्तिच्छटाभि-
ज्योत्स्नाजालैर्जटानां त्रिपुरविजयिनो जातजाम्बूनदश्रीः ।
स्वाभाव्यादच्छमुक्ताफलरचितलसद्गुच्छसच्छायकाया
पायादायासजालादमरसरिदघव्रातजातश्रमान्नः ॥'

'देव त्वां परितः स्तुवन्तु कवयो लोभेन किं तावता
स्तव्यस्त्वं भवितासि यस्य तरुणश्चापप्रतापोऽधुना ।
क्रोडान्तः कुरुतेतरां वसुमतीमाशाः समालिङ्गति
द्यां चुम्बत्यमरावतीं च सहसा गच्छत्यगम्यामपि ॥'

अत्राद्ये गुणानां द्वितीये क्रियाणामेकधर्म्यन्वयः ।

---

अत्रातिशयो न कश्चिद् जायते । प्रादुर्भवति पयोदे ● पयोदे प्रकटति सति । रक्तम् उद्दीपनवशादाविर्भूतानुरागम् । विरहवशात् पाण्डुः । अत्र भिन्ने धर्मिणि कज्जलमलिनत्वरक्तत्वपाण्डुत्वानां युगपदन्वयः । तथैव क्रियाणां युगपदन्वयमुदाहरति उदितं मण्डलम् ● आताम्रा ● लक्ष्मीपतिचरणनखकान्तिसमूहैं रक्तवर्णा, शिवजटाकिरणैः सुवर्णतुल्याभा, स्वभावेन मुक्तागुच्छवत्स्वच्छकान्तिः, अमरसरित् परिश्रमसमूहात् पापपुञ्जादस्मान् पायात् ।

अत्र श्वैत्येन सह रक्तपीतयोः समुच्चयः, कारणत्वसम्बन्धाद् गुणानाम् । देव त्वां परितः ● क्रियाणां समुच्चयः । इदं समासोक्तौ व्याजस्तुतौ

यद्यपि हरिचरणनखसंसर्गसमये नास्ति हरजटासंसर्ग इति रक्तपीतवर्णयोर्यौगपद्यासंभवः, तथापि साहजिकश्वैत्येन सह तयोः प्रत्येकं तस्य संभवोऽस्त्येवेति न दोषः ।

'समुत्पत्तिः पद्मारमणपदपद्मामलनखा-
न्निवासः कंदर्पप्रतिभटजटाजूटभवने ।
अथायं व्यासङ्गः पतितजननिस्तारणविधे-
र्न कस्मादुत्कर्षस्तव जननि जागर्ति जगतः ॥'

अत्र त्रिष्वेकेनाप्युत्कर्षजननासंभवे त्रयोऽप्युत्कर्षजननार्थं स्पर्धयेवापतन्तो रमणीयाः ।

'पाटीरद्रुभुजङ्गपुंगवमुखोद्भूता वपुस्तापिनो
वाता वान्ति दहन्ति लोचनममी ताम्रा रसालद्रुमाः ।
श्रोत्रे हन्त किरन्ति कूजितमिमे हालाहलं कोकिला
बाला बालमृणालकोमलतनुः प्राणान् कथं रक्षतु ॥'

अत्रापि जीवनाशार्थमापतन्तोऽरमणीयाः ।

'जीवितं मृत्युनालीढं संपदः श्वासविभ्रमाः ।
रामाः क्षणप्रभारामाः शल्यान्येतानि देहिनाम् ॥'

---

चोदाहृतं तत एव व्याख्यानमवसेयम् । समुत्पत्तिः पद्मा (●) विष्णुचरण-नखात् समुत्पत्तिः, हरशिरसि निवासः, पतितजनानां निस्तारणस्य आसक्तिः इति त्रय उत्कर्षहेतवः कारणत्वसम्बन्धः ।

पाटीरद्रु (●) चन्दनवृक्षस्य भुजङ्गपुङ्गवानां मुखैरुद्गताः शरीरसंतापिनो दक्षिणानिला वान्ति । अग्निरिव ताम्रा अमी आम्रवृक्षा लोचनं दहन्ति । हन्त इमे कोकिलाः श्रोत्रे हालाहलं कूजितं गिरन्ति । एकेनापि तनुत्यागसम्भवे एते त्रयोऽपि प्राणनाशार्थं समुपस्थिताः । तत्रापि सा बाला एवमपि कोमलशरीरा, कथं प्राणान् रक्षतु । प्राणनाशका अत एवारमणीयाः ।

अत्र जीवितादयः स्वाभाव्याद्रमणीया इति निःसारयितुमशक्याः, विशेषणमाहात्म्याच्चारमणीया इति दुःखजनकाश्च, अत एव शल्यतुल्याः ।

रमणीयारमणीयशब्दे कर्मधारय आश्रीयते, न द्वन्द्वः, सहचरभिन्नत्वापत्तेः ।

एवमरमणीयरमणीयानामप्येककार्यजननार्थमापततां समुच्चयः संभवति ।

'शरीरं ज्ञानजननं रोगो विष्णुस्मृतिप्रदः ।
विपद्वैराग्यजननी त्रयं सुखकरं सताम् ।।'

शरीरादयो हि स्वाभाव्यादरमणीया अपि भेदकमाहात्म्याद्रमणीयाः ।

न च रमणीयानां समुच्चये अरमणीयानां च समालङ्कारेण, रमणीयारमणीयानाञ्च विषमालङ्कारेण च संकीर्णत्वाद् नैते प्रभेदा युक्ताः समुच्चयस्य, संकरस्य प्रभेदताप्रयोजकत्वविरहात्, अन्यथा सर्वेषामलङ्काराणामनन्तभेदत्वापत्तेरिति

---

रमणीया अपि दुःखजनकत्वेनारमणीया इति उदाहरति जीवितं मृत्युना ● जीवनस्य मृत्युवशतया संपदां क्षणिकतया रमणीनां क्षणिकसुखकारितया च एतानि त्रीणि देहिनां शल्यतुल्यानि । सहचरभिन्नत्व ● सदृश एव सहचरो युक्तो रमणीयानां सहचरोऽरमणीयो न युक्त इति भावः । शरीरज्ञान ● शरीररोगविपदः स्वस्वभावेनारमणीयाः, परं सत्कार्यजनकतया रमणीया इति भावः । भेदक ● विशेषणमाहात्म्यात् । समालङ्कारेण ● अन्वयिनां पदार्थानां समत्वेनानुरूपसंसर्गात् । विषमाल ● रमणीयानामरमणीयानां च संसर्गस्याननुरूपत्वात् । ननु संकीर्णतयैव समुच्चयभेदत्वं समुच्चयस्याप्यत्र संस्पर्शाद् इत्याशङ्कायां उत्तरमर्पयति संकरस्य ● । अन्यथा ● संकरस्य तत्तदलङ्कार-

वाच्यम्, 'समुत्पत्तिः पद्मारमण—' इत्यत्र, 'पाटीरद्रुभुजङ्ग–' इत्यत्र च समालङ्कारस्याविवक्षितत्वात्। न हि हरिचरणनख-संभूतिहरजटाजूटनिवास-पतितनिस्तारणव्यासङ्गानां परस्परं योगो योग्य इति कवेरभिप्रेतम्। किन्तु भगवत्या भागीरथ्या उत्कर्षं जनयितुं त्रयोऽपि जागरूका इति। नापि मलयानिल-रसालद्रुमकोकिलकूजितानाम्। किन्तु त्रयोऽपि बालायाः प्राण-नाशार्थं बद्धपरिकरा इति। अत एव हन्तेति खेद उपपद्यते। समालङ्कारस्याभिप्रेतत्वे तु त्रयाणां योगस्य युक्तत्वात् खेदोऽनुप-पन्न एव स्यात्। अथ बालाया मारकत्रितययोगोऽननुरूप इति विषमाभिप्रायेण खेदोपपत्तिरिति चेत्, एवमपि त्रयाणां योगांशे समालङ्कारस्यात्यन्तमप्रतीतेर्विषमस्य च बाह्यबालांशमादाय प्रतिष्ठानात् समुच्चयस्यासंकीर्णतैव। एवं 'जीवितं मृत्युनालीढम्' इत्यादौ जीवितादे रमणीयस्य मृत्युलीढत्वादिना अरमणीय-त्वेऽपि न मृत्य्वालीढत्वादिकमयुक्तमिति कवेरिह विवक्षितम्। रमणीयानामचिरस्थायित्वस्योत्सर्गतः सिद्धेस्तस्य च स्वाभि-

---

भेदप्रयोजकत्वे। स्याविवक्षितत्वात् ● समत्वे विषमत्वे च कवेस्तात्पर्य विरहात्। उत्कर्षम् ● अन्यथा समत्वे तात्पर्ये चतुर्थपादार्थस्यापुष्टार्थत्वापत्तेः। कूजितानाम् ● समत्वं कवेरभिप्रेतमिति शेषः। अत एव ● बालाया अपि प्राणनाशनार्थं त्रयाणां बद्धपरिकरत्वे तात्पर्यादेव। अथ ● प्रश्नार्थकः। स्या-संकीर्णतैव ● त्रयाणां मलयानिलरसालद्रुमकोकिलकूजितानां यो योगः स समुच्चयस्य विषयः, खेदान्यथानुपपत्त्या स योगः समस्य विषयो भवितुं नार्हति। विषमस्यापि स योगो न विषयः, किन्तु त्रिभिः सह बालायाः सम्बन्धः। बालया सह त्रयाणां सम्बन्धः समुच्चयबहिर्भूत इति भावः। मयुक्तमिति ● येन विष-मेण कवलीक्रियेत। स्वाभिलषिता ● यतः स्वाभिलषितानां प्रतिकूलं ततस्तेषां

लषितानन्नुगुणत्वाच्छल्यत्वप्रयोजकत्वम् । अतस्तृतीयप्रभेदस्यापि न विषमसंकीर्णत्वेनान्यथासिद्धिः । एतेन 'सद्योगासद्योगसदसद्योगैर्न समुच्चयः प्रभेदवान् । समविषमसंकरेणैवान्यथा सिद्धेः' इति रत्नाकरोक्तमपास्तम् ।

इति रसगङ्गाधरे समुच्चयनिरूपणम् ।

अथ समाधिः—

एककारणजन्यस्य कार्यस्याकस्मिककारणान्तरसमवधानाहितसौकर्यं समाधिः ।

तच्च कार्यस्यानायासेन सिद्ध्या साङ्गसिद्ध्या च । पूर्वापेक्षया विशेषस्तूक्त एव ।

'आयातैव निशा मनो मृगदृशामुन्निद्रमातन्वती
मानो मे कथमेष संप्रति निरातङ्कं हृदि स्थास्यति ।

---

शल्यत्वम् । 'रमणीयानामचिरस्थायित्वं न विषमम्' इति 'उत्सर्गतः सिद्धेः' इत्यनेनोक्तम् । सद्योगास[illegible] सतां योगोऽसतां च योगः समेन, सतामसताञ्च योगो विषमेणेत्यर्थः ।

इति समुच्चयालङ्कारनिरूपणम् ।

अथ समाध्यलङ्कारनिरूपणम्

सम्यगाधानमतिशयस्य सौकर्यरूपस्येत्यर्थः । अन्ये तु समाधीयते कार्यस्य दुष्करत्वमनेनेति व्युत्पादयन्ति । कार्यमेकं सम्पादयितुं कारणसमवधानेऽपि अचिन्तितोपस्थितेन कारणेन भिन्नेन पूर्वकारणापेक्षया प्रकृतकार्यस्य सौकर्यं यत्र वर्ण्यते तत्रायमलङ्कारः । अलङ्कारकौस्तुभकृतोऽत्रैव प्रहर्षणमन्तर्भावयन्ति, तद्विवेचना तु प्रहर्षणे एव प्रस्तोष्यते । आयातैव निशा [illegible] उन्निद्रमुत्कण्ठिततया वियोगेन निद्राया अभावात् । आतन्वती कुर्वती सती । निरातङ्कम् अपनोदना

ऊहापोहमिमं सरोजनयना यावद्विधत्तेतरां
तावत्कामनृपातपत्रसुषमं बिम्बं बभासे विधोः ॥'

अत्र रात्रिसन्निधानादपि सिद्धयतो मानविनाशस्य चन्द्रोदयादनायासेन सिद्धिः ।

यथा वा ।

'स्मरदीपदीप्तदृष्टेर्घनान्धकारेऽपि पतिगृहं यान्त्याः ।
झटिति प्रादुरभूवन् सख्यादिव चञ्चलाः परितः ॥'

इहाकस्मिके निष्प्रत्यूहपतिगृहयानस्य कारणान्तरसमवधाने हेतोरुत्प्रेक्षणादुत्प्रेक्षालीढः । पूर्वस्तु शुद्धः ।

'नवप्रसङ्गं दयितस्य लोभादङ्गीकरोति स्म यदा नताङ्गी ।
श्लथं तदालिङ्गनमप्यकस्माद् घनो निनादैर्घनतां निनाय ॥'

अत्र घनध्वनिभिरालिङ्गनस्य साङ्गतासिद्धिः । पूर्वपद्यद्वये त्वनायासेन कार्यसिद्धिः ।

---

शङ्कारहितम् । ऊहः कयाऽपि कल्पनया स्थास्यतीति ज्ञानम्, पुनः कल्पनान्तरेण न स्थास्यतीति ज्ञानमपोहः ! कामनृपस्यातपत्रेण विधोर्बिम्बेन विशेषोद्दीपकतया माननाशस्य सौकर्यं जातम् ।

स्मरदीपदी ● घनान्धकारेऽपि कामवशादेव रमण्यः पतिगृहं यान्ति स्म, परं तडितां विद्योतनेन गमनं सुकरं जातम् । विद्युतां विद्योतनमाकस्मिकम्, तथापि सख्युर्भावं मित्रत्वं हेतुत्वेनोत्प्रेक्षितम् । आकस्मिक इति समवधाने इत्यस्य विशेषणम् । कारणान्तरं विद्युतां विद्योतनम् । नवप्रसङ्गम् ● प्रियप्रेम्णा शिथिलमालिङ्गनं घनगर्जनभयाद् गाढं जातम् । लोभादपि आलिङ्गनं कार्यं जातं परं घनगर्जनेन साङ्गता सम्पादिता । अत्र कारणान्तरेण कार्यस्य पूर्तिः, पूर्वपद्ये तु कारणान्तरेण कार्यस्य सिद्धिः । प्रत्युदा-हरणं दर्शयति

'कथय कथमिवाशा जायतां जीविते मे
मलयभुजगवान्ता वान्ति वाताः कृतान्ताः ।
अयमपि वत गुञ्जत्यालि माकन्दमौलौ
मनसिजमहिमानं मन्यमानो मिलिन्दः ॥''

अत्र जीवितनाशं प्रति वातवान-चञ्चरीकगुञ्जितयोरहमहमिकया हेतुत्वादेकस्याकस्मिकत्वाभावान्न प्रकृतालङ्कारस्य विषयः, किन्तु कर्तृरूपभिन्नधर्मिकेण वानगुञ्जनक्रिययोः समुच्चयेन जीवितनाशरूपैककार्यात्मकैकधर्मिकस्तयोरेव कारणयोः समुच्चयः संकीर्णः ।

इति रसगङ्गाधरे समाधिनिरूपणम् ।

अथ प्रत्यनीकम्—

प्रतिपक्षसंबन्धिनस्तिरस्कृतिः प्रत्यनीकम् ।

---

कथय कथमिव ● जीवनस्याशा कथं जायताम् । यमसदृशा मलयानिलाः सर्पविषयुक्ता वान्ति हे आलि वत अयमपि चञ्चरीकः कामदेवमहिमानं मन्यमानः आम्रवृक्षशिखरे गुञ्जति । रहमह ● न तु तुल्यकक्षतया न केनापि सौकर्यं सम्पाद्यतेऽतः समुच्चयस्य विषयः । अतः समुच्चयद्वयम् । जीवितनाशरूपे कार्ये एकस्मिन् धर्मिणि वातगुञ्जनयोः कारणयोः समुच्चयः । भिन्ने कर्तृरूपे वाते मिलिन्दे च वातस्य गुञ्जनस्य च क्रियारूपस्य समुच्चयः ।

इति समाध्यलङ्कारनिरूपणम्

अथ प्रत्यनीकालङ्कारनिरूपणम्

अनीकं सैन्यम् । 'अनीकोऽस्त्री रणे सैन्ये' इति मेदिनीकोशात् । अनीकं विपक्षविरोधाय प्रयुज्यते, तत्सदृशत्वाद्विरोधः प्रत्यनीकशब्दार्थः । तदधिकं लक्षणेन दर्शयति प्रतिपक्ष ● सम्बन्धश्च यथासम्भवं जन्यजनकस्व-

अनीकेन सदृशं प्रत्यनीकम् । सादृश्यस्य यथार्थत्वेनैव संग्रहे पुनः सादृश्यग्रहणाद् गुणभूतेऽपि सादृश्येऽव्ययीभावः । लोके प्रतिपक्षस्य तिरस्कारायानीकं प्रयुज्यते । तदशक्तौ प्रतिपक्ष-संबन्धिनः कस्यचित्तिरस्कारः क्रियते स चानीकसदृशतया प्रयुज्यमानत्वात्प्रत्यनीकमुच्यते । अत्र च प्रतिपक्षगतं बलवत्त्वम्, आत्मगतं दुर्बलत्वं च गम्यते । संबन्धी च तदुप-जीव्योपजीवकमित्यादिभेदादनेकविधः ।

यथा—

'रे रे मनो मम मनोभवशासनस्य
पादाम्बुजद्वयमनारतमानमन्तम् [मामनन्तम्]
किं मां निपातयसि संसृतिगर्तमध्ये
नैतावता तव गमिष्यति पुत्रशोकः ॥'

---

स्वामिभावादिः । काव्यप्रकाशे प्रतिनिधिशब्दं दृष्ट्वा तुल्यत्वशब्दं चापर्यालोचयतां मते प्रतिशब्दस्य प्रतिनिधित्वार्थकत्वे समासक्लेशं पर्यालोच्य सदृशार्थे प्रतिशब्देनाव्ययीभावं दर्शयति अनीकेन सदृशम् ● ननु अव्ययं विभक्तीत्यादिसूत्रे सादृश्यस्य ग्रहणम् अत्र च सदृशार्थे समासः । स च न युक्तः, गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययाद् गौणे समासासम्भवादित्याशङ्क्य समाधत्ते यथार्थत्वेनैव ● अयं भावः सूत्रे समायातयथार्थेऽपि सादृश्यमायाति । प्रधाने सादृश्ये यथार्थत्वेनैव सिद्धे पुनः सादृश्यग्रहणवशाद् गौणमुख्यन्यायो न प्रवर्तते । एष एव पन्थाः सिद्धान्तकौमुद्या अपि । शेखरे तु यथाऽसादृश्ये इति सूत्रस्य विधित्वे भाष्यसम्मते यथार्थेषु सादृश्यं न गृह्यते, गौणमुख्यन्यायस्तु वचनग्रहणान्न प्रवर्तते इति व्यवस्थापितम् । परं शेखरं खण्डयित्वा कैय्यटानुयायिभिः पूर्व-मतमपि व्यवस्थाप्यते । तच्च विस्तरभिया नोपस्थाप्यतेऽत्र । गम्यते ● प्रधानस्य शत्रोस्तिरस्कारासम्भव एव, तत्सम्बन्धिनस्तिरस्कृतेर्वर्णनात् ।

रेरे मनो ● मनसस्तु तत्पुत्रकामशासकत्वेन शिवः प्रतिपक्षस्थानस्थितः । शिवतिरस्कारासम्भवे शिवोपजीव्यशिवभक्तस्य गर्ते पातनं तिरस्कृतिं विदधाति ।

'जितमौक्तिकसंपदां रदानां सहवासेन परां मुदं ददानाम् ।
विरसादधरीकरोति नासामधुना साहसशालि मौक्तिकं ते ॥'

पूर्वत्रोपजीव्यस्य, इह तूपजीवकस्य तिरस्काराद्वैरस्यार्थत्व-शाब्दत्वाभ्यां च वैलक्षण्यम् ।

एवमन्यदप्यूह्यम् ।

अत्र विचार्यते--हेतूत्प्रेक्षयैव गतार्थत्वान्नेदमलङ्कारान्तरं भवितुमर्हति। तत्र द्वितीयोदाहरणे तावद्धेत्वंशः शाब्दः उत्प्रेक्षांश-मात्रमार्थम् । प्रथमोदाहरणे द्वयमप्यार्थम् । पुत्रमारक-सेवकत्वेन कारणेन वैरस्य तस्य स्वात्मकर्मक-गर्त-मध्यविपातनेन कार्येण हेतुतायाश्च स्फुटं प्रतीतेः । अस्मिन्नलङ्कारे हेतुत्वं निश्चीयमानम्, हेतूत्प्रेक्षायां तु संभाव्यमानमित्यस्ति विशेष इति चेत्, प्रतीयमानहेतूत्प्रेक्षाया अनुत्प्रेक्षात्वापत्तेः । वाचकस्यैवादे-रभावाद्धेतुत्वस्य निश्चीयमानतायास्तत्रापि वक्तुं शक्यत्वात् ।

---

रे मनः शिवस्य चरणकमलं निरन्तरं भजन्तं मां किं फलमपेक्ष्य संसाररूपे गर्ते निपातयसि । मम गर्तनिपतनेऽपि तव पुत्रशोको नैव यास्यति । अत्र वैरस्यार्थत्वम् । जितमौक्तिक ● अत्र मौक्तिकस्य तज्जयिनो दन्ताः शत्रवः, दन्तानां सह वासेन सम्बन्धिन्या नासाया मौक्तिकेन तिरस्कारः । जिता मौक्तिकस्य सम्पद् यैस्तेषां रदानां सहवासेन परां मुदमर्पयन्तीं नासां साहसि तव मौक्तिकं वैरस्याद् वैरादिति यावदधरीकरोति तिरस्करोति । अत्र दन्तोपजीविका नासिका । विरस-शब्दाद्वैरस्य शाब्दत्वम् । जितशब्देन तु गम्यमेव वैरम् । तथा शाब्दत्वं वर्णयन्ती सरला भ्रान्ता । नासाया उपरि भागे भूषणधारणस्याप्रसिद्धेर्मुक्ताकारनासिका-वर्णने तात्पर्यमुन्नेयम् । समौक्तिकनथस्योपरिभागेऽप्यवस्थानमित्यपि वदन्ति । शाब्दः ● विरसादित्यत्र पञ्चम्योपात्तत्वात् । मार्थम् ● इवादिप्रयोगाभावात् । द्वयमप्या ● हेत्वर्थपञ्चम्यभावात् । वैरस्य ● प्रतीतेः कर्म । वैरस्य कारणं पुत्र-मारणं कार्यञ्च गर्तपातः । सम्भाव्यमान ● शङ्काकवलितम् । शक्यत्वात् ●

'यस्य किञ्चिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः ।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते ॥'

इत्यलङ्कारसर्वस्वकृतोदाहृते प्राचीनपद्येऽपि भगवद्वैरानुबन्धादिव भगवद्वक्त्रसदृशमिन्दुं राहुर्बाधत इति प्रतीतेरुत्प्रेक्षैव गम्यमाना ।

'मम रूपकीर्तिमहरद् भुवि यस्तदनुप्रविष्टहृदयेयमिति ।
त्वयि मत्सरादिव निरस्तदयः सुतरां क्षिणोति खलु तां मदनः ॥'

इति कुवलयानन्दकारेणोदाहृते तु पद्ये हेत्वंश उत्प्रेक्षांश-

---

अत्रापि हेतुत्वनिश्चयस्यैवादीनामभाव एव । स च तत्रापीति भावः । ननूत्प्रेक्षायाः कस्यचित् कार्यस्य प्रयोजकं हेतुत्वं विषयः, प्रत्यनीकस्य तु उत्प्रेक्षितहेतुप्रयोज्यं प्रतिपक्षसम्बन्धिनो बाधनं विषय इति विविक्तविषयत्वात्कथमस्य हेतूत्प्रेक्षया गतार्थलङ्कारत्वम् ब्रुवते चैवमेव अलङ्कारचन्द्रिकाप्रदीपोद्योतालङ्कारकौस्तुभमर्मप्रकाशा इति चेत्, विचार्यतामित्थम् । नूतनतया कविप्रतिभयोस्थितो ह्यर्थोऽलङ्कारत्वप्रयोजक इति खल्वालङ्कारिको दण्डः । सम्भवति तथा हेत्वंशे । विषयानुपातिनो मनसस्तावत् संसारगर्ते पातनं स्वभावसिद्धम्, विषयानुसरणापतितं वा । तत्र शिववैरस्य हेतुता कविप्रतिभानिर्मिता । द्वितायांशस्तु लोकसिद्धः । वैरवशात् प्रधानप्रतिपक्षस्य बाधनासम्भवे तत्सम्बन्धिनोऽपि बाध्यन्ते एव । तथा च कथमस्य अलङ्कारकता अन्यथा तन्त्रसिद्धाया अपि परिसंख्याया लोकसिद्धस्य च विकल्पस्यालङ्कारता कया रीत्या वार्येत ।

यस्य किञ्चिद् ● माघचतुर्दशे सर्गे पद्यमिदम् । राहोः शत्रुः कृष्णोऽमृतपरिवेषणसमये पौराणिककथानुसारात् शिरसस्छेदनेन । स च राहुः कृष्णस्यापकर्तुमसमर्थः । कृष्णमुखसदृशाकृतिमत्त्वेन कृष्णसम्बन्धिनं चन्द्रं बाधते । कायस्य च्छेदनेन गृहीतं वैरं येन स राहुः । कान्तञ्च तद्वक्त्रम् ।

मम रूपकीर्ति ● रूपयशसोऽपहरणाद् मदनस्य नायकः साक्षात्प्रतिपक्षः । परं नायकानुरक्तत्वेन नायकसम्बन्धिनीं नायिकां क्लेशयति । तस्मिन् नायकेऽनुरक्तं हृदयं यस्याः सा, अथवा तस्यानुप्रविष्टं हृदयं यस्यां सा । परमस्मिन् पक्षे

श्चेत्युभयमपि शाब्दमिति कथंकारमस्यालङ्कारस्योदाहरणतां नीतमिदमायुष्मतेति न विद्मः। प्रतिपक्षगतबलवत्त्व-स्वात्मगतदुर्बलत्वयोः प्रतीतेर्हेतूत्प्रेक्षान्तरादस्य वैलक्षण्यम्। नैतावता हेतूत्प्रेक्षाया बहिर्भवितुमिदमीष्टे, तदविनाभावित्वात्। किन्तु तदवान्तरविशेषीभवितुम्। नहि पृथिव्यवान्तरभेदाद् घटात्पटो विलक्षण इति पृथिव्या बहिर्भवतीत्यपि वदन्ति।

इति रसगङ्गाधरे प्रत्यनीकनिरूपणम्।

अथ प्रतीपम्—

प्रसिद्धौपम्यवैपरीत्येन वर्ण्यमानमौपम्यमेकं प्रतीपम्। तद्वैपरीत्यं च तदुपमानोपमेययोरुपमेयोपमानत्वकल्पनया, न तु प्रकारान्तरेण।

---

सामर्थ्यदारिद्र्यम्। शाब्दमिति ● पञ्चम्या हेतुत्वं सम्भावनार्थकेवपदप्रयोगादुत्प्रेक्षा च। न विद्म ● यस्य किञ्चिदित्यादेः प्रकाशोदाहरणस्यापि। अत्रत्यमर्मप्रकाशावलोकनेन कश्चित् पाठभेद आयाति, परं न स्फुटं प्रतिभात्यतो न निरूप्यते। नैतावता ● उदाहरणान्तरवैषम्यमात्रेण। बहिर्भाव ● अपि तु हेतूत्प्रेक्षाभेदत्वमीष्टे। तदविना ● अलङ्कारत्वप्रयोजकरूपमास्थायेति शेषः। अत्र कौस्तुभकृतां न स्फुटमुक्तोऽप्येषोऽभिप्रायः प्रतिभाति यद् रे रे मनो ममेत्यादिपद्ये भक्तेन सह शिवभक्तत्वमपि बाधाहेतुरित्युत्पेक्षाया अविषयोऽस्य विषय इति सोऽपि लौकिकत्वादेव खण्डितो बोध्यः। शत्रुसम्बन्धिषु शत्रुसम्बन्धस्य वैरप्रयोजकताया लोके दृष्टत्वात्। वदन्ति ● स्वतन्त्रविचारशीलाः। प्राचीनपथानुरोधे तु सम्यगेवोदाहरणद्वयीति भावः।

॥ इति प्रत्यनीकालङ्कारनिरूपणम् ॥

अथ प्रतीपालङ्कारनिरूपणम्

प्रतीपशब्दस्य निरूढलक्षणया विरोधित्वमर्थः। प्रसिद्धोपमानविपरीतमिति फलति। तच्च सामान्यलक्षणस्याभावात् प्राचीनमतेन विभजते प्रसिद्धौपम्य ●

उपमानोपमेययोरन्यतरस्य किञ्चिद् गुणप्रयुक्तमद्वितीयतोत्कर्षं प्रतिहर्तुं द्वितीयप्रदर्शनेनोल्लास्यमानं सादृश्यमपरं द्विविधम् ॥

उपमानस्य कैमर्थ्यं चतुर्थम्, सादृश्यविघटनं पञ्चमम् ।

तत्राद्ये प्रभेदे प्रसिद्धौपम्ये यदुपमेयं तस्यैवोपमानत्वादाधिक्यस्य, यच्चोपमानं तस्योपमेयत्वान्न्यूनत्वस्य च प्रत्ययः फलम् । इदमेव चौपम्यस्याविशेषेऽप्युपमालङ्कारादस्य वैलक्षण्ये बीजम् । औपम्यप्रतिष्ठानं च निषिध्यमानसादृश्याद्व्यतिरेकात् । नन्वौपम्यस्योपमानोपमेयसाधारण्येऽपि यदेकस्याधिक्यमपरस्य

---

उभयत्रौपम्यमुपमा । तदुपमान ● उपमानस्योपमेयत्वकल्पना, उपमेयस्योपमानत्वकल्पना च । न तु ● अन्यथा द्वितीयादिभेदस्याप्यन्तर्भावापत्तेः । द्वितीयतृतीयभेदावेकोक्त्या लक्षयति उपमानोप ● उपमानस्य किञ्चिद् गुणप्रयुक्तम् अद्वितीयताया उत्कर्षं परिहर्तुं द्वितीयप्रदर्शनेनोल्लास्यमानं सादृश्यं द्वितीयम् । एवमुपमेयस्य किञ्चिद् गुणप्रयुक्तम् अद्विती:ताया उत्कर्षं परिहर्तुं द्वितीयप्रदर्शनेनोल्लास्यमानं सादृश्यं तृतीयं प्रतीपम् । ननु आधिक्यन्यूनत्वयोः प्रतीतौ सादृश्यविघटनात्कथमौपम्यरूपं प्रतीपमित्याशङ्क्य समाधत्ते औपम्यप्रतिष्ठानं ● व्यतिरेकात् । यथा व्यतिरेकप्रकरणे सादृश्यनिषेधेऽपि सादृश्यं तिष्ठत्येव । सादृश्यनिषेधस्य प्रयोजनमुत्कर्षप्रतीतिमात्रम् । न तु सादृश्यनिषेधे तात्पर्यमित्यादि विवेचितम्, तथाऽत्रापि न्यूनाधिकत्वे विवक्षिते, न तु औपम्यनिषेध इति औपम्यं प्रतिष्ठितमेव । तथा च व्यतिरेकप्रयुक्तमेवोपम्यप्रतिष्ठानं सादृश्याभावे व्यतिरेकस्याप्यसम्भवात् । व्यतिरेकशब्दस्योत्कर्षप्रत्ययफलक इत्यर्थः । अथवा औपम्यप्रतिष्ठानञ्च व्यतिरेकादित्यस्य अस्य वैलक्षण्ये बीजमित्यत्रान्वयः । व्यतिरेकात् प्रतीपस्य भेद इत्यर्थः । सरलायां तु व्यतिरेको विशेषः सादृश्यनिषेधे विशेषः प्रतीयते । तथा च सत्ययमेव विशेषो धर्मान्तरेण सादृश्यस्य प्रतिष्ठाननिति रीत्या व्याख्यायते । साधारण्येऽपि ● स्वरूपेणोभयत्र वृत्तित्वेऽपि । उपमाने साधारणधर्मसम्बन्धः सिद्धः । उपमेये च

न्यूनत्वं च गम्यते, तत्कस्य हेतोरिति चेत्, शृणु—उपमाने हि साधारणधर्मसंबन्धोऽनूद्योपमेये विधीयत इति तावन्निर्विवादम्, विध्यनुवादौ च साध्यत्वसिद्धत्वाभ्याम्। ते च क्रमेण न्यूनत्वाधिक्ये उपमानोपमेययोः प्रयोजयतः। लोकेऽपि निश्चितविद्यो यथा पूज्यते तथा नानिश्चितविद्य इति स्फुटमेव। ते च साध्यत्वसिद्धत्वे वक्तृविवक्षाधीने इति नात्र दोषः।

द्वितीयतृतीययोर्भेदयोस्तु फलं स्फुटमेव, चतुर्थस्य तु निषिध्यमानवस्तुगतसकलगुणवत्त्वप्रतिपत्तिः। पञ्चमस्य प्रथमवदिति।

उदाहरणम्—

'किं जल्पसि मुग्धतया हन्त ममाङ्गं सुवर्णवर्णमिति।
तद् यदि पतति हुताशे तदा हताशे तवाङ्गवर्णं स्यात्॥'

अत्र पूर्वार्धोपमागम्यं सुवर्णवर्णाधिक्यं तिरस्कृत्य द्वितीयार्धे प्रतीपं बालाङ्गवर्णस्याधिक्यं गमयति। हुताशपातं विना प्रती-

---

साध्यते। यत्र सिद्धस्तस्याधिक्यं यत्र साध्यते तस्य न्यूनत्वमिति व्यवस्थापयति उपमाने हि ◉ स्फुटमेव लक्षणे प्रतिपादितमद्वितीयतागर्वनिवारणम्। निषिध्यमान ◉ निषिध्यमानं वस्तु उपमानं तद्गतस्य सकलगुणस्योपमेये प्रतीतिः। यथा अभूदप्रत्युह इति पद्ये चन्द्रे निषिध्यमाने तद्गतानां कामसहाय-सतिमिरनयनतापनिवारणसुधावर्षाणां गुणानां नायिकावदने प्रतीतिः। प्रथमवत् ◉ प्रथमभेदे यथोपमेयस्याधिक्यमुपमानस्य न्यूनत्वम् तथाऽत्रापि उपमेये उपमानसादृश्यसत्त्वेऽपि सादृश्यविघटनवर्णनेन प्रतीयते।

किं जल्पसि ◉ सुवर्णस्य वर्ण इव वर्णो यस्येति समासलुप्ताया उपमाया मुग्धत्वहताशत्वाभ्यां निषेधः। तवाङ्गस्य वर्ण इव वर्णो यस्येत्युपमा नायिकाङ्गप्रतियोगिन्युल्लास्यते। निषिध्यमाना तु सुवर्णप्रतियोगिनी। हुताशोऽग्निः। तिरस्कृत्य ◉ उपमानत्वं निरस्योपमेयत्वकल्पनेन। स्याधिक्यम् ◉ उपमानतया

पमपि दुर्लभम् । उपमा तु स्वप्नेऽपि न संभवतीति मुग्धत्व-हताशत्वाभ्यां गम्यते ।

'माहात्म्यस्य परोऽवधिर्निजगृहं गम्भीरतायाः पिता
रत्नानामहमेक एव भुवने को वा परो मादृशः ।
इत्येवं परिचिन्त्य मा स्म सहसा गर्वान्धकारं गमो
दुग्धाब्धे भवता समो विजयते दिल्लीधरावल्लभः ॥'

'निभाल्य भूयो निजगौरिमाणं मा नाम मानं हृदये विधासीः ।
गृहे गृहे पश्य तवाङ्गवर्णा मुग्धे सुवर्णावलयो लुठन्ति ॥'

उपमानकैमर्थ्यस्य तूदाहरणमाक्षेपप्रकरण एव गदितम् 'अभूदप्रत्यूहः' इत्यादि ।

पञ्चमो यथा—

'करिकुम्भतुलामुरोजयोः क्रियमाणां कविभिर्विशृङ्खलैः ।
कथमालि शृणोषि सादरं विपरीतार्थविदो हि योषितः ॥'

अत्र कथं शृणोषीत्यनेन तुलैव न संभवतीति गम्यते । अर्थान्तरन्यासोऽप्यमुमेवार्थं पुष्णाति ।

---

वर्णनेन । प्रतीपमपि ● अङ्गप्रतियोगिकसादृश्यमपि । उपमा तु ● अङ्गानुयोगिकसादृश्यप्रतियोगिता तु सर्वथोपमानिषेधेऽपि तात्पर्यं शक्यते वक्तुम् । माहात्म्यस्य ● द्वितीयप्रतीपस्योदाहरणम् । माहात्म्यगम्भीरतारत्नालयत्वादीनामेकमात्रोपमानस्य क्षीरनीधेरद्वितीयतां निरसितुं दिल्लीपतौ सादृश्यप्रदर्शनम् । उपमेयस्याद्वितीयतामपहर्तुमुपमानीकृतोपमेयस्य सादृश्यस्य प्रदर्शनाय तृतीयभेदमुदाहरति निभाल्य ● निभाल्य निरीक्ष्य, मा विधासीः व्यधासीः, अकार्षीरित्यर्थः । गौरिमा गौरत्वम्, इमनिच्प्रत्ययान्तः । सुवर्णानामवलयः । सादृश्यविघटनमुदाहरति करिकुम्भ ● अर्थान्तरन्यासप्रकरणे व्याख्यातम् । तुलैव ● उपमैव । अर्थान्तरन्यास ● चतुर्थपादस्थोऽर्थान्तरन्यासस्तुलनाभावमेव

तदेवं पञ्चविधं प्रतीपं प्राचामनुरोधान्निरूपितम् ।

वस्तुतस्तु—आद्यास्त्रयोऽप्युपमायामेवान्तर्गता भेदाः । चतुर्थः केषाञ्चिदाक्षेपः । पञ्चमस्त्वनुक्तवैधर्म्ये व्यतिरेके । तथाहि—निष्पाद्यमानं सुन्दरं वा सादृश्यमुपमा । नह्याद्ये प्रतीपे 'मुखमिव कमलम्' इत्यादौ सादृश्यस्यानिष्पत्तिरसौन्दर्यं वास्ति, येनोपमातो बहिर्भावः स्यात्, सौन्दर्यविशेषस्य त्वयाप्यभ्युपगमात् । विशेषस्य सामान्यानिवारकत्वात् । न च प्रसिद्धकमलादिप्रतियोगिकमेव सादृश्यमुपमेति राज्ञामाज्ञास्ति । न चोपमाविरुद्धवाचिनः प्रतीपशब्दस्य माहात्म्यादेव तादृशं सादृश्यमुपमेति शक्यं वक्तुम्, उपमाविशेषविरुद्धवाचकत्वेनापि तदुपपत्तेः । एवं चाद्यं प्रतीपं प्रसिद्धोपमावदुपमाविशेष एव । अत एव द्वितीयतृतीयावपि भेदावुपमाविशेषावेव । उपमानोपमेययोस्तिरस्कारस्तूपमान्तराद्वैलक्षण्यं प्रयोजयेत्, न तूपमा-

---

पुष्णाति । दण्डिरीत्याह वस्तुतस्तु ● । केषाञ्चिदा ● वामनादीनाम् । चतुर्थपञ्चमयोः सादृश्यविघटनेन सादृश्ये सौन्दर्याभावान्न तयोरुपमायामन्तर्भावः । त्वयाऽप्य ● अन्यथाऽलङ्कारत्वमेव न स्यात् । ननु यत्र प्रसिद्धोपमानप्रतियोगिकत्वोपमेयानुयोगिकत्वकृतः सादृश्यचमत्कारस्तत्रैवोपमा, न तु सादृश्यमात्रस्य सौन्दर्ये इति मर्मप्रकाशप्रदर्शितसिद्धान्तं शङ्काविधयोपपाद्य खण्डयति न च प्रसिद्धकमल ● । माहात्म्यदेव ● यदि सुन्दरं सादृश्यमात्रमुपमा स्यात्तदा सादृश्यबोधकप्रतीपशब्दस्योपमावीरुद्धं प्रयोगो न स्यादित्यनुपपत्त्या पूर्वोक्तः सादृश्यविशेष उपमा, तद्विपरीतः सादृश्यविशेषः प्रतीपमिति व्यवस्था । उपमाविशेषः ● प्रसिद्धोपमानप्रतियोगिनी एकाउपमा । उपमेयादिप्रतियोगिनी चापरोपमा । सुन्दरसादृश्यत्वाविशेषात् । प्रथमाया विरुद्धा प्रतीपपदव्यवहार्या द्वितीया । उपमासामान्यविरुद्धे प्रतीपपदव्यवहारोऽप्रामाणिकः, प्रतीपे सुन्दरसादृश्यसाम्राज्यात् । अत एव ● द्वितीये उपमानप्रतियोगिकस्य तृतीये उपमेय-प्रतियोगिस्य

सामान्यात्, तदनुस्यूतत्वेनैव तत्प्रतीतेः। न हि द्राक्षामाधुर्यातिशयेन पार्थिवान्तराद् विलक्षणेत्यपार्थिवी भवति। अपि च यद्युपमानोपमेययोस्तिरस्कारोऽलङ्कारताप्रयोजकः स्यात्, पुरस्कारोऽपि तथा स्यात्। यथा—

'एको विश्वसतां हराम्यपघृणः प्राणानहं प्राणिना-
मित्येवं परिचिन्त्य मा स्म मनसि व्याधानुतापं कृथाः।
भूपानां भवनेषु किञ्च विमलक्षेत्रेषु गूढाशयाः
साधूनामरयो वसन्ति कति न त्वत्तुल्यकक्षाः खलाः॥'

अत्रौपम्यप्रदर्शनस्य नोपमानतिरस्कारः फलम्, तस्य गर्वितत्वेनाविवक्षणात्। किं तु तदनुतापनाशः। एवं च

---

च सुन्दरसादृश्यस्य सत्त्वात्। स्तूपमान्तरा ● कस्याश्चिदुपमाया उपमेयप्रशंसा प्रयोजनम्, कस्याश्चिदुपमानतिरस्कारद्वारोपमेयप्रसंसा प्रयोजनम्। अवान्तरभेदानां विभिन्नानि प्रयोजनानि। प्रयोजनभेदो यस्य न तत्प्रयोजनं तस्यैव भेदं साधयेत्, न तु अन्यस्यापि। अत उपमानतिरस्कारप्रयोजनं नोपमासामान्यभेदकम्। तदनुस्यूत ● सुन्दरसादृश्यरूपोपमाकवलितत्वेनैव प्रतीपोदाहरणस्यापि प्रतीतेः। यत्र साधर्म्यप्रयुक्त एव चमत्कारस्तत्रोपमा, प्रतीपे तु उपमानतिरस्कारप्रयुक्त इति नोपमेति अलङ्कारचन्द्रिकाकण्टकमपि निःसारितमेवास्ति। प्रतीपेऽपि साधर्म्यस्य चमत्कारानुपयोगे तद्वर्णनमेव वृथा स्यादतः प्रतीपेऽपि साधर्म्यस्य चमत्कारित्वमागतम्। तद्वशाच्चोपमाया आक्रमणम्। तदा चेत्थं व्यवस्थापनीयम्—साधर्म्यमात्रचमत्कारिका प्रथम उपमा, साधर्म्योपमानतिरस्कृतिभ्यां चमत्कारिका द्वितीया। व्यतिरेके तु न सादृश्यस्य सौन्दर्यम्।

एको विश्वसताम ● अहमेको विश्वासं कुर्वतां प्राणिनां प्राणान् निर्दयः सन् अपहरामि। इत्थं परिचिन्त्य हे व्याध? मनसि अनुतापं मा स्म कृथाः। विमलक्षेत्राणि तीर्थस्थानानि, विश्वसतामिति शतृप्रत्ययान्तस्य षष्ठीबहुवचनम्।

फलवैलक्षण्यमात्रेणालङ्कारान्तरत्वं ब्रुवता अस्याप्यलङ्कारान्तरत्वमभ्युपेयं स्यात्, प्रतीपषष्ठभेदत्वं वा । किं च त्वदुक्तप्रतीपभेदानामपि परस्परवैलक्षण्येन पृथगलङ्कारत्वं स्यात्, न प्रतीपभेदत्वम्, प्रतीपस्य सकलप्रभेदसाधारणसामान्यलक्षणाभावात् । अन्यतमत्वं तु दूषणसहस्रग्रस्तत्वादलक्षणमेवेत्यसकृदुक्तम् । उपमालक्षणं तु सकलसाधारणम् । चतुर्थः प्रभेदस्तु येषां मते

---

प्रभेदत्वं वा ● एवञ्च प्रतीपस्योपमाबहिर्भूतत्वमिवास्य प्रतीपबहिर्भूतत्वं परेषामापतेत् । तथा चालङ्कारान्तरत्वम् । यदि तद्भिया फलवैलक्षण्येऽपि प्रतीपप्रभेदत्वं कल्प्यते, तदा तथैव फलवैलक्षण्येऽपि प्रतीपस्योपमाप्रभेदत्वमित्युभयतः पाशारज्जुः । अनेन अलङ्कारचन्द्रिकाप्रकाशितं प्रतीपपदप्रवृत्तिनिमित्तं पञ्चप्रभेदसाधारणमुपमानतिरस्कारप्रयोजकत्वमिति सामान्यलक्षणमपि प्रत्युक्तम्, प्रतीपभेदेऽत्र षष्ठे उपमानतिरस्काराभावात् । उपमेयप्रतियोगिकसादृश्यतया त्वयोपमायामन्तर्भावयितुमशक्यत्वात् । अन्यथोपमेयोपमाया अपि अन्तर्भावापत्तेः । तस्याः प्रयोजनभेदादलङ्कारान्तत्वेऽस्यापि तत एवालङ्कारान्तरतापत्तेः । किञ्च, उपमानतिरस्कारप्रयोजकत्वमात्रं शुद्धे उपमानतिरस्कारेऽतिप्रस्तक्तम्, अतस्तादृशतिरस्कृतिप्रयोजकं सादृश्यम्, तत्प्रयुक्तोपमा वेति वाच्यम् । तथा चोपमात्वं प्रतीपस्य गले पतितम् । चतुर्थपञ्चमयोरसंग्रहश्च । एवमेव काव्यप्रकाशटीकास्थमुपमानापकर्षबोधानुकूलो व्यापारः प्रतीपमिति सामान्यलक्षणं खण्डितं बोध्यम् । अलङ्कारकौस्तुभकृता तु यन्निष्ठसादृश्यप्रतियोगित्वानाश्रयत्वाभिमतोपमानकत्वमिति सामान्यलक्षणं दर्शितम् । यत्रोपमानं स । दृश्यप्रतियोगित्वेन नाभिमतमिति तत्सरलार्थः । उपमायामुपमानं सादृश्यप्रतियोगीति ततोऽस्य भेदः । उपमेयस्योपमानताकरणे सादृश्यप्रतियोगितोपमेये नोपमा । एवं यत्र सादृश्यमेव विघट्यते तथापि उपमाने सादृश्यप्रतियोगिता विघट्यते इति प्रतीपलक्षणसमन्वय इति तदभिप्रायः प्रतिभाति । परमिदम् एको विश्वसतामित्यत्रोपमानस्यैव सादृश्यप्रतियोगितात्वात् प्रतीपेऽव्याप्तम् । एतावता मर्मप्रकाशचिन्ता नावक्षिप्यते इति बोध्यम् । अस्योपमात्वेन संग्रहे तुल्ययुक्त्योपमेयोपमाप्रतीपयोरुपमात्वेन संग्रहपात्तिरित्यादि सर्वं मनसि निधायाह सामाम्यलक्षणाभावात् ● दूषणसह ●

नाक्षेपस्तेषामस्तु नाम प्रतीपालङ्कारः। पञ्चमस्य तु गति-रुक्तैव प्रभेदस्य।

इति रसगङ्गाधरे प्रतीपाङ्कारनिरूपणम्।

अथ प्रौढोक्तिः—

कस्मिंश्चिदर्थे किञ्चिद्धर्मकृतातिशयप्रतिपिपादयिषया प्रसिद्धतद्धर्मवता संसर्गस्योद्भावनं प्रौढोक्तिः।

संसर्गश्च सन्नसन् वा साक्षात्परम्परया वा।

'वल्मीकोदरसंभूत-कपिकच्छूसहोदराः।
हा पीडयित्वा निघ्नन्ति सज्जनान् दुष्टदृष्टयः॥

अत्र कपिकच्छूसहोदरत्वेन मारकत्वं न प्राप्नोति, अपि तु

---

दुर्वचत्वम् एकेन बहूनां संग्रहादि। रुक्तैव ● अनुक्तवैधर्म्यव्यतिरेकभेदः।

इति प्रतीपालङ्कारनिरूपणम्

अ थप्रौढोक्त्यलङ्कारनिरूणम्

प्रौढा युक्तिबहुला उक्तिः। एषा असम्बन्धे सम्बन्धरूपाऽतिशयोक्तिरिति काव्य-प्रकाशटीकाकृतः परं 'केशाः कलिन्दजातीरतमालस्तोममेचकाः इति कुवलया-नन्दोदाहारणे यमुनातीरे तमालानां सम्भवान्न सम्यक तत्। कौस्तुभकृतस्तु तमालाः कलिन्दजातीरे यदि जायेरन् तदा केशौपम्यं दधीरन्निति तात्पर्यवर्णनाद् यद्यर्थाति-शयोक्तिरिति वदन्ति तदपि न समीचीनम्, एतादृशशब्दानां तादृशतात्पर्यकल्पने दुराग्रहमात्रत्वात्। किञ्च प्रौढोक्तिस्थलेऽतिशयोक्तयविषयस्यातिशयस्य प्रतीते स्तत्कृतचमत्कारित्वानुरोधेनास्याः पृथगलङ्कारत्वम्। अतिशयोक्तेस्तु संग्रहानु-कूलं नानुगतं लक्षणम् येन तदतिप्रसक्तिराशङ्क्येत। अन्यतमत्वेनानुगमस्तु प्रागेव निरसितः। अतोऽतिशयोक्तेर्यावान् विषयः प्रसिद्धस्तावतामेव केनापि प्रकारेण संग्रहणमुचितं न त्वलङ्कारान्तरविषयाणामित्याद्यभिप्रेत्य लक्षयति कस्मिंश्चिदर्थे ●

पीडाजनकत्वमात्रम् । कवेस्तु पीडां जनयित्वा मारयन्तीत्येवं-रूपोऽतिशयो विवक्षितः। अतो वल्मीकोदरसंभूतत्वं सर्पाधिकरणवृत्तितारूपं कपिकच्छूविशेषणं मारकतावच्छेदकत्वेन स्वप्रतिभया कविना कल्पितम् ।

यथा वा—

'मन्थाचलभ्रमणवेगवशंवदा ये दुग्धाम्बुधेरुदपतन्नणवः सुधायाः ।
तैरेकतामुपगतैर्विविधौषधीभिर्धाता ससर्ज तव देवदयादृगन्तान् ॥'

---

यथा वल्मीकोदरेत्यादिपद्ये दुष्टदृष्टौ पीडाजनकत्वपूर्वकं सज्जनहननं वर्तमानमपि अतिशयेन साधनीयम् । पीडाजनकत्वं वृश्चिकानाम् हननं सर्पाणां प्रसिद्धम् । प्रसिद्ध-धर्मवता सर्पेण वृश्चिकेन च सामानाधिकरण्यसम्बन्ध उद्भाव्यते । तेन वल्मीकोदर-सम्भूतत्वधर्मेण मारकत्वस्य वृश्चिकसहोदरत्वेन च पीडाजनकत्वस्यातिशयो गम्यते । सन्नसन्वा ● सन् वस्तुतोऽसन् कविकल्पनामात्रसिद्धः । वल्मीकोदर ● अत्र दुष्टदृष्टिभिः सर्प्राणां वृश्चिकादीनाञ्च सहोदरत्वादिसम्बन्धः कविप्रतिभामात्रनिर्वर्तितः । कपिकच्छूर्वृश्चिक इति मर्मप्रकाशः । सरला तु कौंछ इति नाम्ना प्रसिद्धामौषधीं ब्रुवाणा मर्मप्रकाशं भर्त्सयति । केचन कपिकच्छु-शब्देन कवांचेति प्रसिद्धामौषधीं वदन्ति । कोशे प्रायो ह्रस्वान्तौ कच्छु-कपिकच्छु-शब्दौ ओषधिविशेष एव पठितौ । परमयं शक्तिभ्रमश्चेन्न, मर्मप्रकाशस्य ग्रन्थाभिप्रायतन्त्रस्य, अपि, तु ग्रन्थकारस्यैव । यतो मारकत्वं विना पीडाजनकत्वं वृश्चिकानामेव प्रसिद्धम्, न तु ओषधिविशेषस्य । ग्रन्थे प्रतिपादनमुखेन वृश्चिके तात्पर्यमवश्यमवसीयते । कोशान्तरं किमपि मूलं भवेत् कदाचित्, परं नाहमुपलभे । उणादिप्रकरणे कष्धातोश्छकारान्तादेश उप्रत्ययश्चेत्यादिना कच्छूशब्दस्य साधुत्व-मुपलभ्यते । तत्र कष्धातुर्हिसार्थकः । तत्त्वबोधिन्यां हिसायामस्य सांधुत्वञ्च लभ्यते । सर्पाधिकरण ●सर्पस्याधिकरणं वल्मीकोदरं तज्जातत्वेन तद्वृत्तित्वमपि आयाति । मारकः सर्पाधिकरणवृत्तिः कपिकच्छूस्तत्र मारकतावच्छेदकं सर्पाधिकरणवृत्तित्वम् ।

मन्थाचल ● मन्दराचलस्य भ्रमणवेगेन क्षीरनिधेः सकाशाद् ये सुधायाः कणा उदपतन् तैरौषधीभिः वशीकारिणीभिः संसृष्टैर्ब्रह्म तव दयादृष्टीः कटाक्षान् वा ससर्जेत्यर्थः ।

अत्र दृगन्तेषु न केवलं संजीवकत्वादयोऽमृतमात्रगुणा एव कवेर्बुबोधयिषिताः, अपि तु निखिलजनवशीकारकत्वादयोऽन्येऽपीति सुधाकणेष्वौषधीसंसर्गो विशेषणतयातिशयार्थमुपात्तः। उत्पाद्योत्पादकभावश्चात्र न लोकसिद्धः, अपि तु कविमात्रनिबद्धः।

यथा वा—

'त्वदङ्गणसमुद्भूता सिक्ता कुङ्कुमवारिभिः।
त्वदङ्गतुलनां याति कदाचिल्लवलीलता॥'

अत्र केवलाया लवल्या उपमानताभरसहनसामर्थ्यस्याभावात् तस्य सिद्धये नायिकासामानाधिकरण्य-कुङ्कुमजलसंयोगयोरुपादानम्।

अत्र च धर्मिविशेषसंसर्गादतिशयो धर्म्यन्तरगतो यद्यागूरणविषयस्तदैवाग्रमलङ्कारः। वाच्यवृत्त्या तत्प्रयुक्तत्वेनाभिहितश्चेत्, समालङ्कारस्यैव विषयः। यथा—

---

अत्र दृष्टौ स्वयं वर्तमाना संजीवनवशीकरणादय उत्पादकसुधाकणौषधीनिर्मितत्वेन दृङ्निष्ठेनातिशाय्यन्ते न लोक [illegible] तथा चात्रापि उत्पाद्योत्पादकसम्बन्धोऽसन्नेव।

त्वदङ्गणसम्भूता [illegible] लवली लताविशेषो। रक्तवर्णा कुत्रचित् हरफारेवडीशब्देनान्यत्र च राय आँवलेशब्देन वा भाषायां व्यवह्रियते। सा रक्ताऽपि नायिकाङ्गणजातत्वेन नायिकासम्पर्केण कुङ्कुमजलसेकेन वा रक्ततरा जायेत, तदा कदाचित् तदङ्गतुलनां याति। सामर्थ्यस्या [illegible] रक्ततरत्वरूपातिशयस्य। यद्यागूरण [illegible] व्यञ्जनागम्यः।

'त्वत्तो जन्म हिमांशुशेखरतनुज्योत्स्नानिमग्नात्मनो
दुग्धाम्भोनिधिमुग्धवीचिवलयैः साकं परिक्रीडनम् ।
संवासः सुरलोकसिन्धुपुलिने वादः सुधांशोः करैः
कस्मान्नोज्ज्वलिमानमञ्चतितमां देव त्वदीयं यशः ॥,

अत्र यशसो धवलतातिशयस्तत्तद्धर्मिसंबन्धप्रयुक्तत्वेन कथित इति तदंशे सम एवालङ्कारः । अंशुकृतश्चन्द्रे चन्द्रकृतश्च भगवति भगवत्कृतो राजनीत्येवमुत्तरोत्तरमुपचीयमानो राजगतस्त्वनुक्तत्वात् प्रौढोक्तेरेव विषयः ।

एवं च—

'शशशृङ्गधनुर्लसत्करा गगनाम्भोरुहमालिकाधराः ।
तनयैः सह भाविजन्मनां तव खेलन्ति नरेन्द्र वैरिणः ॥'

इत्यादावेकस्य मिथ्यात्वसिद्ध्यर्थं मिथ्याभूतवस्त्वन्तर-

---

त्वत्तो जन्म ● हे देव त्वदीयं यशः प्रकाशं कथन्न प्राप्नोति ? यशसः प्रथमपादेन धवलतरादुत्पत्तिः, द्वितीयतृतीयाभ्यां धवलेन वस्तुना सह सहवासः संसर्गः । क्षीरनिधेर्वीचयो धवला, देवनदीतटमपि धवलम् । यशोजनकस्य राज्ञो धवलता तु शिवशरीरकान्तिनिमज्जनेन, शिवे चन्द्रेण चन्द्रे किरणैः । तत्तद्धर्मि● धवलजनकसहवासिसम्बन्धः ।

( २ ) सम एवा ● धवलस्य धवलादुत्पत्तेर्धवलेन धवलस्य सहवासाच्च । मुपचीयमान ● तत्तद्धर्मिसंसर्गप्रयुक्तमतिशयं दधानः । प्रौढोक्तेरेव ● न च व्यज्यमानः समोऽत्रेति कौस्तुभकृदुक्तिः श्रद्धेया सिद्धयोर्धवलयोरेव सम्बन्धे एव तस्य प्रसराद्, न त्वेकस्य सम्बन्धेनान्यस्मिन्नतिशयस्य साध्यत्वे, तस्य विषयताऽभावात् । उक्तत्वे तु सिद्धत्वं प्रतिभासते । एवञ्च ● असत्सम्बन्धेनापि अतिशयप्रतीतेः प्रौढोक्तिसम्भवे ।

शशशृङ्ग●वैरिणो न सन्तीत्यत्र तात्पर्यम् । विशेषणानामलीकत्वाद्विशेष्यस्याप्यलीकत्वमायाति । शशानां शृङ्गाणि न भवन्ति, गगनेऽम्भोरुहाणि न जायन्ते । वैरिणां भावीनि जन्मानि तत्सम्बन्धिभिस्तनयैरित्यर्थः । वेकस्य ●

कल्पनं मिथ्याध्यवसित्याख्यमलङ्कारान्तरमिति न वाच्यम्, प्रौढोक्त्यैव गतार्थत्वात् । 'केशाः कलिन्दजातीरतमालस्तोम-मेचकाः' इत्यादौ प्राचीनकृतप्रौढोक्त्युदाहरणे यथा तमालेषु श्यामत्वसिद्ध्यर्थं श्यामत्वाधिकरणीभूतकालिन्दीसंबन्ध उद्भाव्यते, तथा वैरिष्वपि मिथ्यात्वसिद्धये मिथ्यात्वाधिकरण-शशशृङ्गादिसंबन्ध इत्यस्यापि सुवचत्वात् । तत्र श्यामत्वातिशयः, इह तु मिथ्यात्वमात्रम्, न तु तस्यातिशयः सिद्ध्यतीति वैलक्षण्यं तु न वाच्यम्, तमालस्तोमे प्रमाणान्तरेण सिद्धेऽपि श्यामत्वे कालिन्दीसंसर्गोद्भावनं पुनः श्यामत्वसाधनेनातिशया-गूरकमेव स्यात् । वैरिषु तु मिथ्यात्वस्यासिद्धत्वाच्छशशृङ्गादि-संबन्धैर्मिथ्यात्वस्य सिद्धिरित्यार्थसमाजाधीनेयमतिशयसिद्धि-र्वैलक्षण्यं न प्रयोजयति। यत्तु 'वेश्यां वशयेत् खस्रजं वहन्' इति कुवलयानन्दकृता मिथ्याध्यवसितेरुदाहरणं निर्मितम्, तत्तु निदर्शनयैव गतार्थम् । निदर्शनागर्भात्र मिथ्याध्यवसितिरिति तु

---

वैरित्वस्य । वस्त्वन्तर ● शशशृङ्गधनुषः खपुष्पमालायाः भावितनयानाञ्च प्राचीनकृत ● चन्द्रालोककारकृतः । प्रमाणान्तरेण ● प्रत्यक्षादिना । यागूरकम् ● अतिशयव्यञ्जकम् । त्यार्थसमा ● अर्थवशसम्पन्नः कारणानां समाजस्तदधीनेत्यर्थः । अयं भावः—लक्षणेऽतिशयपदेनोत्कर्ष एव न सर्वथा ग्राह्यः, किन्तु यत्किञ्चित्प्रागसिद्धं सम्बन्धेन साध्यते स एवातिशयः । पूर्वोदाहरणे धवलतायाः सिद्धतया साध्यमानं धवलतरत्वमतिशयोऽत्र तु मिथ्यात्वं वैरिष्वसिद्धं सम्बन्धेन साध्यते तदाऽर्थादेव मिथ्यात्वमेवातिशयः सम्पद्यते । वेश्यां वश ● खपुष्पमालाधरो वेश्यां वशीकुर्यादित्यर्थः । असम्भूतस्य वेश्यावशीकरणस्य

न युक्तम्, मिथ्याध्यवसितेरेव मिथ्यात्वात् । यदि च मिथ्याध्यवसितिरेवालङ्कारान्तरं स्यात्, सत्याध्तवसितिरपि तथा स्यात् । यथा—

'हरिश्चन्द्रेण संज्ञप्ताः प्रगीता धर्मसूनुना ।
खेलन्ति निगमोत्सङ्गे मातर्गङ्गे गुणास्तव ।।'

अत्र हरिश्चन्द्रयुधिष्ठिरनिगमसंबन्धाद् गुणानां सत्यत्वं प्रतीयते । एवम्—

'मध्ये सुधासमुद्रस्य सितामयगृहोदरे ।
पूर्णेन्दुविष्टरे देव स्थातु योग्यास्तवोक्तयः ।।'

अत्रापि सुधासमुद्रादिसंबन्धादुक्तिषु माधुर्यातिशयः प्रतीयमानः कस्यालङ्कारस्य गोचरः स्यात् ? अतोऽ-

---

मिथ्यात्वसिद्धये मिथ्याभूतस्य खस्रग्वस्तुनः कल्पना क्रियते । मिथ्यात्वेन सदृशयोर्वेश्यावशीकरणखस्रग्वहनयोर्वाक्यार्थयोर्निदर्शना । मिथ्यात्त्वात् ● अनलङ्कारत्वात् । हरिश्चन्द्रेण ● संज्ञप्ताः संज्ञापिताः, ज्ञपेर्ण्यन्तात् क्ते वा दान्तशान्तेत्यादिसूत्रेण णिचो लोपनिपातनम् । यद्यपि मारणतोषणनिशामनेष्वेव मित्त्वादत्र मित्त्वं दुर्घटम् तथापि मित एव लक्षणादिना भूयान् प्रयोगः । निगमो वेदः । ननु कविकल्पिता एव पदार्था अलङ्कारतायाः प्रयोजकाः सत्यत्वख्यापनार्थं सत्यानामेव बस्तूनां सम्बन्धो न कविकल्पितानां मिथ्याभूतानां मिथ्यात्वसिद्धौ तु साधकाः पदार्थाः मिथ्याभूताः कविकल्पिता एवेति कथं प्रतिद्वन्द्वितया तस्यालङ्कारता इति मर्मप्रकाशालङ्कारचन्द्रिकयोरुद्धार इति चेन्न, अत्रापि गुणत्वखेलननिगमोत्सङ्गांशे कविप्रतिभाया उपयोगात् । मिथ्याध्यवसितेरलङ्कारन्तरत्वे नानुभवः प्रकाशादीनाम् । अत एवारुचेराह एवम् ● यत्र मिथ्याभूतैर्वस्तुभिः सह सन्त्रन्धेनातिशयप्रतिपादनं न तत्र प्रौढोक्तिरित्यङ्गीकारे । मध्ये सुधा ● मध्येशब्देन समासस्य वैकल्पिकत्वादत्र वाक्यम् । शर्करानिर्मितगृहमध्ये । अत्र सुधासमुद्रशर्करागृहचन्द्रासनानां मिथ्यानामेव सम्बन्धेन माधुर्यातिशयसिद्धिः । मम तु ●

लङ्कारान्तरं स्यात्। मम तु प्रौढोक्त्यैव गतार्थतेत्यास्तां तावत्।

इति रसगङ्गाधरे प्रौढोक्त्यलङ्कारनिणम्।

अथ ललितम्—

प्रकृतधर्मिणि प्रकृतव्यवहारानुल्लेखेन निरूप्यमाणोऽप्रकृतव्यवहारसंबन्धो ललितालङ्कारः।

'आददानः परद्रव्यं विषं भक्षयसि ध्रुवम्' इत्यादिनिदर्शनावारणाय तृतीयान्तम्। अप्रस्तुतप्रशंसावारणाय प्रकृतधर्मिणीति।

---

मिथ्याभूतानां सतां वा सम्बन्धेन यत्रातिशयप्रतिपादने तात्पर्यं तत्र प्रौढोक्तिरित्यङ्गीकुर्वाणस्य।

इति प्रौढोक्त्यलङ्कारनिरूपणम्

अथ ललितालङ्कारनिरूपणम्

ललितं सुन्दरम्, वाच्यवृत्तिं तिरस्कृत्य व्यञ्जनया प्रतिपाद्यमानं वस्तु। तस्य व्यङ्ग्यतया चमत्कारित्वात् पृथगलङ्कारत्वमिति कुवलयानन्दादयः सम्यग्विविच्य स्थापयन्ति। काव्यप्रकाशटीकाकृतस्तु एतस्योदाहरणेषु आर्थीं वाक्यनिदर्शनां संगमयन्ति। तथैव प्रायोऽलङ्कारकौस्तुभेऽपि। मर्मप्रकाशस्य तु लेखपरम्परामुद्रणाद्यशुद्धिपिहितस्य वास्तवं रूपं न परिज्ञायते, परं प्रदीपोद्योते ललितालङ्कारस्य निदर्शनायामन्तर्भावात्तादृशेनैवाकारेण शोधनीयोऽसौ। ग्रन्थकारस्तु किमप्युदाहरणमस्य निदर्शनायां किञ्चिच्च पर्यायोक्ताद्यन्तर्भावविष्यति। प्रथमं ललितालङ्कारस्वीकर्तृनयेन लक्षयति प्रकृतधर्मिणि ● प्रकृतस्य अप्रकृतस्य च व्यवहारस्य एक एव धर्मी, अप्रकृतव्यवहारस्तु वर्ण्यते प्रकृतस्तु गम्यते इति सरलार्थः। निदर्शना ● परद्रव्यग्रहणविषभक्षणयोर्वाक्यार्थयोर्निदर्शनायां प्रकृतव्यवहारस्य परद्रव्यग्रहणस्याप्युल्लेखान्नातिव्याप्तिः। अप्रस्तुत ● अप्रस्तुतप्रशंसायामपि अप्रकृतव्यवहार एवोल्लिख्यते प्रकृतश्च गोप्यते, परं तत्राप्रकृत-

यथा—

'क्व वा रामः कामप्रतिभटललाटन्तपबल-

स्तव क्वामी वीरा रणशिरसि धीरा मखभुजाम् ।

दिधक्षोस्त्रैलोक्यं प्रलयशिखिनः पद्ममथन-

प्रगल्भैः प्रालेयैः प्रशममसि कर्तुं व्यवसितः ॥'

अत्र प्रकृते धर्मिणि रावणे परदत्तपुरोडाशादिकमश्नतां देवानामग्रे धीरैः कुम्भकर्णादिभिर्वीरैर्भगवतो रामस्य पराभवमिच्छन्नित्येवं कण्ठरवेण तादृशेच्छारूपं प्रकृतव्यवहारं विषयमनुक्त्वैव तादृशप्रालेयकरणकतादृशाग्निप्रशमनव्यवसायरूपोऽप्रकृतव्यवहारो विषय्युपात्तः । विषयोपादाने तु निदर्शनैव ।

यथा वा—

'नान्यास्ति किं भूमितले सुरूपा सीतैव वा किं भवतोऽनुरूपा ।

आकर्षता चन्दनशाखिशाखां प्रबोधितोऽयं भवता फणीन्द्रः ॥'

---

व्यवहारविशिष्टस्य धर्मिण उल्लेखः प्रकृतव्यवहारविशिष्टं धर्म्यन्तरं गम्यते । अत्र व्यवहारयोरेव वाच्यत्वगम्यत्वे प्रकृताप्रकृतत्वे चेति विवेकः ।

रावणं प्रति रामदूतोक्तिमुदाहरति । क्व वा रामः ● क्वशब्दद्वयेन रामरावणयोर्महावैषम्यं सूच्यते । कामप्रतिभटः शिवस्तस्य ललाटं तपद्बलं यस्य सः । यस्य बलस्य प्रतापः शिवशिरस्यपि वर्तते । शिवोऽपि यद्बलं महन्मनुते । असूर्यललाटयोर्दृशितयोरित्यनेन खश् । तव वीराः पराधीनभोजनवतां देवानां सङ्ग्रामे धीराः । एतादृशैर्वीरैस्तादृशस्य रामस्य पराभवमिच्छसीति प्रकृतव्यवहारं व्यञ्जयितुम् अप्रकृतव्यवहारं त्रिलोकीदहनसमर्थस्य प्रलयवह्नेः शमनं कमलमथनप्रवीणैस्तुषारैः कर्तुमिच्छसीति दर्शितवान् । विषय्यु ● रामपराभवेच्छायाः प्रलयाग्निशमनसमीहात्वेनोक्ततया व्यवहारयोस्तादात्म्यारोपो विवक्षितो विषयविषयितया वर्णनम् । यथा वा ● ललितस्यैवोदाहरणान्तरं न निदर्शनायाः । नान्यास्ति किम् ● अनुरूपा सदृशी । आकर्षता शतृप्रत्ययान्तं तृतीयान्तं

अत्रापि राघवसंबन्धिनायिकाहरणप्रयुक्तं तदीयक्रोधोद्बोधमनुक्त्वैव चन्दनसंबन्धिशाखाकर्षणप्रयुक्तं फणीन्द्रप्रबोधनमुपन्यस्तम् ।

न चात्र भेदेऽप्यभेद इत्यतिशयोक्त्या गतार्थतेति वाच्यम्, तत्र हि पदार्थेन पदार्थस्यैवाभेदाध्यवसानम् 'कनकलतायां विराजते चन्द्रः' इत्यादौ दृष्टम्, न तु व्यवहारेण व्यवहारस्येत्यविषय एवायमतिशयोक्तेः । नापि सादृश्यमूलया प्रस्तुतप्रशंसया, धर्मांशेऽप्रस्तुतत्वविरहात् । नापि निदर्शनया, एकधर्मिगतव्यवहारद्वयोपादान एव तस्या इष्टेः । अत एव 'उपात्तयोः' इति तल्लक्षणे विशेषणमुक्तम्, प्रकृते च प्रकृतव्यवहारस्यानुपात्तत्वादलङ्कारान्तरमेव ।

एवं च—

'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।<br>
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥'

इत्यत्र काव्यप्रकाशकारो यन्निदर्शनामुदाहार्षीत्तदसंगतमेव । ललितस्यावश्याभ्युपगम्यत्वान्निदर्शनाया अत्राप्राप्तेश्च ।

तदित्थं ललितस्यालङ्कारान्तरत्वमुरीकुर्वतामाशयः ।

अन्ये तु "ललितं नालङ्कारान्तरम्, निदर्शनयैव गतार्थत्वात् । नन्वेकधर्मिगताप्रस्तुतव्यवहारद्वयोपादानजीविता

---

भवतेत्यस्य विशेषणम् । कनकलतायाम् ● कनकलतायां गौरतन्वां चन्द्रस्य च मुखे पदार्थ एव पदार्थस्याभेदः । प्रशंसया ● गतार्थतेति पूर्वेणान्वयः । एवमग्रेऽपि । एवञ्च ● प्रकृतव्यवहारस्यानुपादाने निदर्शनाया असम्भवे । क्व सूर्य ● इदं निदर्शनायां व्याख्यातम् । व्यवहारद्वय ● एकस्मिन् धर्मिणि

निदर्शना कथमप्रस्तुतव्यवहारमात्रोपादाने पदमाधत्तामिति चेत्, श्रूयतामायुष्मता । इह तावदलङ्काराः प्रायशः श्रौता आर्थाश्च संभवन्ति । तत्र श्रौतेभ्य आर्था न पृथगलङ्कारत्वेन गण्यन्ते । किं तु पृथग्भेदत्वेन, तदलङ्कारसामान्यलक्षणेन क्रोडीकरणात् ।

इदं पुनर्वाक्यार्थनिदर्शनास्वरूपम्—व्यवहारद्वयवद्धर्म्यभेदप्रतिपादनाक्षिप्तो व्यवहारद्वयाभेदः । तत्र व्यवहारद्वयवद्धर्म्यभेदस्य प्रतिपादनं श्रौतमेवापेक्षितमिति न नियमः, किंतु प्रतिपादनमात्रम् । तेन 'परद्रव्यं हरन् मर्त्यो गिलति क्ष्वेडसंचयम्' इत्यत्र व्यवहारद्वयवद्धर्मिणोरभेदस्य श्रुत्या प्रतिपाद न इव 'धिक् परस्वम्, तथाप्येष गिलति क्ष्वेडसंचयम्' इत्यत्राऽऽर्थप्रकृतव्यवहारवद्धर्मि-श्रौताप्रकृतव्यवहारवद्धर्मिणोरार्थाभेदस्य प्रतिपादनेऽपि वाक्यार्थनिदर्शनात्वमक्षतम् । एकत्र श्रौतीत्वमपरत्रार्थीत्वमिति विशेषो न वार्यते । पदार्थनिदर्शनास्वरूपं तूपमानोपमेयधर्मयोरभेदाध्यवसायमूल उपमेय उपमानधर्मसंबन्ध इति पृथगेव । एतदुभयान्यतरत्वं च प्राचीनरीत्या सामान्यलक्षणम् । यदि तु

---

व्यवहारयोर्धर्मिसाधारण्यादव्यवहारयोरप्यभेदः । यत्र व्यवहारयोरुपादानं तत्राभेदः श्रौतः, यत्र तु अन्यतरस्योपादानं तत्रार्थ इति व्यवस्था । क्ष्वेडो विषम् । इत्यत्रार्थ [illegible] आर्थः प्रकृतः परद्रव्यग्रहणरूपो व्यवहारः, श्रौतोऽप्रकृतो विषगिलनव्यवहारः । तयोरभेद आर्थः । रभेदाध्यव [illegible] यथा निदर्शनायामुदाहृते पाणौ कृत इत्यादिपद्ये सीताकरः पद्मस्य शोभां बभारेत्यत्र धर्मिभेदेन शोभयोर्भेदेन पद्मस्य शोभा कथं करे तिष्ठेदित्यनुपपत्त्या अनुपात्तकरशोभा पद्मशोभात्वेनाध्यवसीयते तदाऽभेदात् पद्मशोभाया अपि करे सम्बन्ध उपपद्यते । एतदुभ [illegible] पदार्थवाक्यार्थनिदर्शनालक्षणे एतत्पदपरामृश्ये । प्राचीन [illegible] काव्यप्रकाशादि-

ललितं पृथगलङ्कारः स्यात् लुप्तोपमादिरप्युपमादेः पृथक् स्यात्, त्वदुक्तयुक्तेस्तुल्यत्वात् ।

नन्वतिशयोक्तिरेवं सति रूपक एव विलीयेत । विषय-विषयिणोर्द्वयोरप्युपादने श्रौतं रूपकम्, विषयिमात्रोपादाने त्वार्थमित्यस्यापि सुवचत्वात् । सत्यम् । यत्र ह्यलङ्कारशरीर-मुभयत्राप्यविलक्षणम्, तत्रैकालङ्कारव्यपदेशो युक्तः । यथा सादृश्यं निष्पाद्यमानमुपमाशरीरं लुप्तोपमादिष्वविलक्षणमेवेति तत्राप्युपमयैव व्यपदेशो न्याय्यः, नालङ्कारान्तरेण, लुप्तत्व-पूर्णत्वादिस्तु न तच्छरीरनिविष्ट इति स्वयं व्यावर्तमानोऽपि नोपमात्वव्यावर्तकः, तथान्यत्रापीति स्थितिः ।

एवं च विषयतावच्छेदकरूपेण भाते विषये विषयिताव-च्छेदकावच्छिन्नाभेदस्य रूपकशरीरस्य विषयितावच्छेदक-रूपेणाऽऽभासमानविषयात्मकादतिशयोक्तिरूपाद् विलक्षणत्वेन द्वयोरेका लङ्कारत्वं न युक्तम् । निदर्शनाललितयोस्तु स्वरूपा-वैलक्षण्यं प्रदर्शितमित्येकालङ्कारत्वमेव" इत्याहुः ।

'आहार्यनिश्चयविषयीभूतो विषये विषय्यभेदो रूपक-स्वरूपमुच्यते । न निवेश्यते च विषयतावच्छेदकादि, गौरवात् । एवं चातिशयोक्तेर्निगीर्याध्यवसानरूपाया रूपकभेदत्वमस्तु

---

रीत्या । एतदंशे साम्येऽपि नव्यमतस्याप्यग्रे वक्ष्यमाणतया प्राचीनपदम् । शयोक्तिरेवम् ● अन्येषामलङ्काराणामार्थत्वेन संग्रहे । प्रसङ्गापतिता शङ्केयम् । तच्छरीर ● उपमाशरीर । द्विलक्षणत्वेन ● विषयतावच्छेदकरूपेण विषयो रूपके भासते न त्वतिशयोक्तौ, तत्र तु विषयितावच्छेदकरूपेण विषयस्य भानात् । अत्र सरलाऽशुद्धेति ध्येयम् । रूपावैलक्ष ● वाक्यार्थयोरभेदः श्रौतार्थसाधारणः स्वरूपम् । विषयतावच्छेदक ● प्रथमं रूपकं त्रिविधम् । विषयतावच्छेदकस्य

नाम । का नो हानिः । एवमपह्नुतेरपि, विषयतावच्छेदक-निह्नवानिह्नवनिगरणानि रूपकस्यैवावान्तरविशेषाः' इति तु नव्याः ।

एतन्मतरीत्या तु ललितस्य निदर्शनातः पृथगलङ्कारत्वं मनोरथललितमेवेति ।

एवं च 'तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्' इत्यत्र निदर्शना साधु संगच्छते । क्व सूर्येत्यादिना स्वमति-सूर्यप्रभव-वंशयोरत्यन्ताननुरूपत्वकथनोत्तरमुडुपकरणकसागरतरणेच्छाया अप्रकृतायाः कथनेन तादृशमतिकरणकवर्णनेच्छायाः प्रकृतायाः प्रतिपत्तेः ।

यत्तु "–'अनायि देशः कतमस्त्वयाद्य वसन्तमुक्तस्य दशां वनस्य' इति पद्ये कतमो देशस्त्वया परित्यक्त इति प्रस्तुतार्थ-मनुपन्यस्य वसन्तमुक्तस्य वनस्य दशामनायीति तत्प्रतिबिम्ब-भूतार्थमात्रोपन्यासाल्ललितालङ्कारः" इति कुवलयानन्दकार

---

पुरस्कारः, निह्नवः, निगरणञ्चेत्यभिप्रायः । मनोरथललि मनोरथ एव ललिते ललितं ननु बहिः कथमपि न सिध्यतीति यावत् गलितं वापारुः प्रतिद्वन्द्वि-प्रश्नस्य रूपकविषयकस्य नव्यमतेन कवलीकारात् । ननु रूप क्वशब्दाभ्यां वैषम्यद्योतनात् । अनायि देशः "त्वदाप्तसंकेततया कृतार्था श्राव्याऽपि नानेन जनेन संज्ञा" इत्यस्योत्तरार्धम् । नलं प्रति दमयन्त्या उक्तिरियम् । कस्मादागतः, किञ्च नामेत्यर्थः । अत्रैको धर्मी देशः । तत्प्रतिबिम्ब प्रस्तुतार्थस्य प्रतिबिम्बभूतस्य । प्रस्तुतार्थमात्रस्य । देशे वनवृत्तिनिःश्रीकत्व-स्यारोपः पदार्थनिदर्शनाविधया । देशे निःश्रीकत्वज्ञाने सति तत्कारणीभूतस्य देशवृत्तेस्त्यागकर्मत्वस्य प्रतीति पर्यायोक्तस्य विषय इति प्रतिपादयति

आह । तदत्यन्तमसङ्गतम् । अत्र कथमन्यस्य दशामन्यो नेतुं शक्य इति वसन्तमुक्तवनदशां निःश्रीकत्वलक्षणामनायीति हि पर्यवसन्नोऽर्थः । तत्र निःश्रीकत्वरूपकार्यद्वारा कारणस्य राजकर्तृकत्यागकर्मत्वस्याभिधानं पर्यायोक्तेर्विषयः, दशयोरेकत्वाध्यवसानं तु पदार्थनिदर्शनाया अतिशयोक्तेर्वेत्यन्यदेतत् । एवं च पदार्थनिदर्शनोपबृहितस्य पर्यायोक्तस्यैवात्र विषयः, न ललितस्य । किं च त्वदुक्तं ललितालङ्कारलक्षणमपि नात्र संभवति । तच्च "–'प्रस्तुते वर्ण्यवाक्यार्थप्रतिबिम्बस्य वर्णनम्' प्रस्तुते धर्मिणि वर्णनीयं वाक्यार्थमवर्णयित्वा कस्यचिदप्रस्तुतस्य वाक्यार्थस्य वर्णनं ललितम्" इत्यादिना ग्रन्थेन भवता विवेचितम् । इह च प्रस्तुते धर्मिणि देशविशेषे राजकर्तृकत्यागकर्मत्वरूपस्य वर्ण्यस्यार्थस्यावर्णनेऽप्यप्रस्तुतस्य वसन्तकर्तृकत्यागकर्मत्वस्याप्यवर्णनात् कथं संगच्छताम् । यदि पुनः 'अकारि देशः कतमस्त्वयाद्य निरस्तचन्द्रः कठिनाशयेन' इति पद्यं स्यात्, तदा स्यादपि तव मनोरथः । न च तादृशवनदशाया अप्रस्तुताया

---

कथमन्यस्य अतिशयोक्तेर्वे मतभेदेनेदम् । तद्विचारप्रकारस्तु निदर्शनायां गतः । प्रकृतो व्यवहारो देशे वर्ण्यमानोऽप्रकृतस्तु वने इति धर्मिभेदाल्ललितलक्षणसमन्वयो नेत्याह किञ्च त्वदुक्तम् । वसन्तकर्तृक वने वसन्तकर्तृकनिःश्रीकत्वं वर्णितम्, न तु वसन्तकर्तृकत्यागकर्मत्वम् । यद्वर्णितं निःश्रीकत्वं तत्तु न प्रस्तुतस्य प्रतिबिम्बभूतम् । चन्द्रिकाकृता यत्तु प्रस्तुतव्यवहारस्य व्यङ्गताप्रयुक्तचमत्कृतिर्ललितस्यालङ्कारत्वे हेतुरित्युक्तं, तत्तु पर्यायेण परिपन्थितम् । अतः पर्यायेण संकरोक्तिरपि तदीया समाप्ता, पर्यायोक्तेरविषयस्य चमत्कृतेस्तत्राननुभवात् । यदपि दशयोरुपमानोपमेयभावस्याप्रतीतेर्न निदर्शनेत्युच्यते, तदप्याग्रहमात्रम्, कुवलयानन्दे पदार्थनिदर्शना यथोदाहृता व्याख्याता च

देशविशेषे वर्णनमस्त्येवेति वाच्यम्, दशाशब्देन तद्दशासदृशस्य दशान्तरस्य लक्ष्यत्वेन तस्याप्रस्तुतत्वायोगात् । अन्यथा पदार्थ-निदर्शनोच्छेदापत्तेः ।

एवम्—

'रामो विजयते यस्य क्षणात् सामर्षवीक्षणात् ।
दावाग्निदग्धकान्तारलीलां लङ्कापुरीं दधौ ।।

इत्यादौ ललितस्यालङ्कारान्तरतामभ्युपगच्छतामपि मते न तस्य विषयः, किंतु निदर्शनायाः । अत एव—

---

ततोऽल्पशोऽपि वैषम्यस्यात्रानुपलब्धेरित्यास्तां विस्तरः । मनोरथ ललितो-दाहरणविषयकः । लक्ष्यत्वेन अन्यदशाया अन्यत्रासंभवमूलकानुप-पत्तिमूलफललक्षणया । अन्यथा लक्षणया प्रतिपाद्यस्य प्रस्तत्वाङ्गीकारे । च्छेदापत्तेः कुवलयानन्दीयनिदर्शनाप्रकरणस्य विरोधादिष्टापत्तिः कर्तुं न शक्यते । अत्र वनदशाऽपि बुद्धिविषयो भवतीत्यादि सरला अन्यथैव ।

रामो विजयते अयं सन्दर्भो विदुषां विवेचनमर्हति, सन्दर्भस्याभिप्रायस्त्वेवं प्रतिभाति, यदस्मिन् पद्ये ये ललितालङ्कारमिच्छन्ति तेषामपि मते अनायि देश इत्यादिपद्यं न ललितालङ्कारविषयो भवति, भवति च निदर्शनाया विषयः । सरला तु पदार्थनिदर्शनाया उच्छेदसमर्थकतया सन्दर्भमिमं व्याचष्टे नासौ सन्दर्भार्थः । स्फुटे सन्दर्भार्थे अधस्तनाः प्रश्ना जाग्रति कस्य ललितलक्षणस्य लक्ष्यमिदं पद्यम्? तल्लक्षणं किं ललितस्यालङ्कारान्तरतां स्फोरयति? पण्डितराजमते पद्यमिदं कस्यालङ्कारस्य लक्ष्यम्? ४ कस्य तन्मतम्? ५ किञ्च तदभिमतं लक्षणम्? इदं पद्यं यदि ललितस्य विषयस्तदा अनायि देश इति पद्यं कथं न ललितविषयतां भजते? इत्यादिकं सुधीभिर्विभाव्यम् । प्रस्तुतं सामर्षवीक्षणकर्मत्वं लङ्कापुर्याम् अनुपात्तम्, अप्रस्तुतं तु दावाग्निदग्धवनलीलाविषयत्वमुपात्तमिति ललि-तस्य आर्थ्या वाक्यार्थनिदर्शनायाश्च विषयः । कान्तारलङ्कालीलयोरभेदाध्य-वसानात् पदार्थनिदर्शनायाश्च । पर्यायोक्तेर्विषयोऽत्र न कश्चित् प्रतिभाति इति कदाचनपर्यायोक्तनिर्मुक्तललितोदाहरणाऽभिप्रायेणैवेदमुदाहृतं स्याद् ग्रन्थकृता । तथा च अनायि देश इत्यत्र देशवृत्तिनिःश्रीकत्वस्यापि लक्षणयोक्त्या ललितस्या-

'उदयति विततोर्ध्वरश्मिरज्जावहिम-
रुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टा-
द्वयपरिवारितवारणेन्द्रलीलाम् ॥'

इति प्राचां निदर्शनोदाहरणमपि संगच्छते। तव तु रश्मिरज्जुनियन्त्रितपार्श्वद्वयसंलग्नसूर्यचन्द्रोऽयं गिरिरित्येवं प्रकृतधर्म्यारूढतया प्रकृतार्थानुपादानाल्ललितमेव स्यात्। प्रकृतव्यवहारस्य लेशतोऽप्यकीर्तने केवलं प्रकरणादिना गम्यत्वे ललितम्, अन्यथा निदर्शनेति चेत् 'क्व सूर्यप्रभवः–' इत्यस्मात् कथं निदर्शना, तर्हि निर्वासितेति सर्वमसमञ्जसमेव।

इति रसगङ्गाधरे ललितालङ्कारनिरूपणम्।

---

विषयता पदार्थनिदर्शनायाश्च विषयता। अत एव ● प्रकृतव्यवहारस्यानुपादानस्थले आर्थनिदर्शनाया अङ्गीकरणादेव।

पूर्वोक्तानां षण्णां प्रश्नानामेवं निवारणं चिन्त्यम् १. रामो विजयत इत्यादिपद्यं न ललितलक्षणस्य लक्ष्यं स्फुटञ्च पदार्थनिदर्शनाया लक्ष्यम्, ललितलक्ष्यता संदिह्य निवार्यते। आर्थ्या वाक्यार्थनिदर्शनाया अपि संभव उपपाद्यते, २. न स्फोरयति, ३. निदर्शनायाः, ४. पण्डितराजस्य मतम्। ५. मूले वर्णितमेव। ६. पद्यद्वयेऽपि न ललितं लेशतः प्रकृतव्यवहारस्योपादानात्। उदयति विततो ● वितता उर्ध्वकिरणरज्जुर्यस्यैवंभूते तीक्ष्णरुचौ सूर्ये उदयं प्राप्नुवति चन्द्रे च अस्तं गच्छति सति भावलक्षणे सप्तमी, प्रातःकाले अयं त्रिलम्बिना घण्टाद्वयेन परिवेष्टितस्य हस्तिनो लीलां वहति। कटीत्यादौ प्रश्लिष्टादीधातोः शत्रन्तात् सप्तमी उदयति इत्यादिसिद्धान्तकौमुद्यामुक्तम्। चक्षिङो ङित्करणादनुदात्तेदात्मनेपदस्यानित्यत्वेन अय्धातोरित्यन्ये। न्यायसुधोक्तदिशा चान्द्रे व्याकरणे सर्वेभ्यो धातुभ्यो वा आत्मनेपदं भवति। माघे रैवतकवर्णनमिदम्। निदर्शनो ● लीलांशे पदार्थनिदर्शना। स्मात् कथं ● मतिशब्देन लेशत उपादानाद्विषयस्येति दिक्।

इति ललितालङ्कारनिरूपणम्



CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

अथ प्रहर्षणम्—

साक्षात्तदुद्देश्यकयत्नमन्तरेणाप्यभीष्टार्थलाभः प्रहर्षणम् ।

इदं च सामान्यलक्षणं त्रिविधप्रहर्षणसाधारणम् । तत्राकस्मादभीप्सितार्थलाभ इत्येका विधा । वाञ्छितार्थसिद्ध्यर्थं यत्ने क्रियमाणे ततोऽप्यधिकतरार्थलाभ इत्यपरा । उपायसिद्ध्यर्थाद् यत्नात् साक्षात्फलस्य लाभ इति तृतीया । अस्यामेवाव्याप्तिनिरासार्थं लक्षणे साक्षादित्युक्तम् ।

क्रमेणोदाहरणानि—

'तिरस्कृतो रोषवशात् परिष्वजनन्
प्रियो मृगाक्ष्या शयितः पराङ्मुखः ।
किं मूर्च्छितोऽसाविति कांदिशीकया
कयाचिदाचुम्ब्य चिराय सस्वजे ।।

---

अथ प्रहर्षणालङ्कारनिरूपणम्

प्रहर्षणञ्चानन्दविशेषः । स च सन्तोषरूपतृप्तिवशात् । तृप्तिश्चाभीष्टार्थलाभेन, प्रकृष्टहर्षणजनकतृप्तिश्च यत्नमन्तरेण जायमानेति तद्रीत्या लक्षयति साक्षात्तदु ● तत्पदेन लभ्यमानमभीष्टम् । यस्याभीष्टस्य लाभे साक्षात्तदुद्देश्यकयत्नो न भवेत् । यत्न एव न भवेत्, अभीष्टसाधकं यद्वस्तु तत्साधनार्थं यत्नो भवेत् सर्वत्र लक्षणसमन्वयः । उपायसिद्ध्य ● क्वचिदुपेयसिद्ध्येत्यशुद्धं मुद्रितम् । साक्षादित्यु ● यत्नमन्तरेण नास्य अभीष्टस्य सिद्धिः, अपि तु उपायविषयकाद्यत्नात् । उपायविषयकोऽपि यत्नः परम्परया फलविषयको भवति, न तु साक्षात्फलविषयक इत्यभिप्रायः । काव्यप्रकाशे प्रहर्षणालङ्कारस्यानुक्ततया तट्टीकाकृतोऽलङ्कारकौस्तुभकृतश्च समाधौ प्रहर्षणमन्तर्भावयन्ति । कौस्तुभकृताञ्च मतमग्रे विवेचिष्यते । अलङ्कारसर्वस्वकृताऽपि नोद्धृतोऽयमलङ्कारः ।

प्रयत्नं विनाऽभीष्टसिद्धिमुदाहरति तिरस्कृतो रोष ● कश्चिन्नायकः आलिङ्गन् क्रुद्धया नायिकया तिरस्कृतः सन् किञ्चिदकुर्वाणः शयितः । नायिका च किं

अत्र यत्नसामान्यशून्यस्यापीष्टलाभः ।

'केलीमन्दिरमागतस्य शनकैरालीरपास्येङ्गितैः
सुप्तायाः सरुषः सरोरुहदृशः संवीजनं कुर्वतः ।
जानन्त्याप्यनभिज्ञयेव कपटव्यामीलिताक्ष्या सखि
श्रान्तासीत्यभिधाय वक्षसि तया पाणिर्ममाधीयत ॥'

अत्र भामिन्या रोषनिवारणाय यत्ने क्रियमाणे रोषनिवारणादप्यधिकतरसुखप्रदः कामुकस्य भामिनीकर्तृकः स्वकरकर्मकस्तत्कुचाधिकरणक आसङ्गः । न चात्र तृतीयभेदः शङ्क्यः, व्यजनवीजनसमये कामुकस्य माननिवारणस्यैव मुख्योद्देश्यत्वेन तदुपेयकुचस्पर्शादिफलान्तरस्यानुपस्थितेः ।

यथा वा—

---

मूर्च्छितोऽयमिति भीत्या परिचुम्ब्य नायकमालिलिङ्ग । भयद्रुतौ शक्तः कान्दिशीकाशब्दो लक्षणया भीतिमात्रे । कां दिशं यामीत्यर्थे तदाह माशब्दादिभ्य इत्यनेन ठकि पृषोदरादित्वात् साधुः । अन्ये तु कदिशीक्धातुभ्यां साधयन्ति । प्रसिद्धकारणराहित्यरूपमाकस्मिकत्वं संगमयति अत्र यत्न ● द्वितीयमुदाहरति केलिमन्दिर ● अत्र सरुषो रोषत्यागो वाञ्छितः । सरुषः सुप्तायाश्च कमलनयनायाः तस्याः क्रीडागृहं समागत्य चेष्टाभिः शनैः सखीः अपसार्य व्यजनं चालयतो मम पाणिः, जानन्त्या छलेन । निमीलिते अक्षिणी यस्यास्तया अनभिज्ञतया इव हे सखि श्रान्तासि इत्यभिधाय तया स्ववक्षसि आधीयत । स्वकर ● स्वं नायकस्तस्य करस्य नायिकायाः कुचाधिकरणे समालिङ्गनम् । ननु अभीष्टं तादृशकुचस्पर्शादि तदुपायभूतमानत्यागविषयकयत्नेनैव सिद्धमित्याशङ्कते न चात्र ● तदुपेय ● तस्य माननिवारणस्य यदुपेयं कुचस्पर्शादिफलं तस्यानुपस्थितेः । यत्तु कौस्तुभकृतः आलिङ्गनस्यअपि माननिवारणफलत्वेनोपस्थितिरिति खण्डयन्तीमं ग्रन्थन्तत्तु नानाग्रहणेन । संभोगान्तराणीव कुचस्पर्शस्यापि सम्भवमात्रं न तु उपस्थितिः । सरुष इति विशेषणमहिम्ना मानत्यागस्यैवोपस्थितेः । मुख्येच्छाविषयत्वं ह्युपस्थितिः, मानत्यागे जातेऽन्येषामिव तस्यापि स्वतः सम्भवेन तदानीमिच्छाविषयत्वस्याप्य-

'लोभाद् वराटिकानां विक्रेतुं तक्रमानिशमटन्त्या ।
लब्धो गोपकिशोर्या मध्येरथ्यं महेन्द्रनीलमणिः ॥'

अत्र प्रहर्षणद्वितीयभेदः स्फुट एव । अननुरूपसंबन्धमादाय विषमालङ्कारश्च । तत्र महेन्द्रनीलमणिरित्यतिशयोक्त्यालीढयोर्विषयविषयिणोरुभयोरपि प्रहर्षणेऽनुगुणत्वम् । वाञ्छिताधिकार्थत्वस्य मणि-भगवदुभयसाधारणत्वात् । विषमे तु नीलमणिरूपस्य विषयिमात्रस्य यतो वराटिकार्थिनो यथा महेन्द्रनीलमणेः कोटिमूल्यस्य संसर्गोऽननुरूपो न तथा भगवत्संसर्गो भवितुं प्रभवति । न चाज्ञानिनां भगवत्संसर्गोऽननुरूप एवेति वाच्यम् । एवं तर्हि तक्रविक्रयकर्तृत्वेनैवाज्ञानित्वलाभे वराटिकालोभरूपहेतूपन्यासस्यानतिप्रयोजकत्वापत्तेः । यादृशवाञ्छितसिद्ध्यर्थं यत्नः क्रियते तादृशवाञ्छितसिद्धौ तु समालङ्कार एव ।

'तद्दर्शनोपायविमर्शनार्थं मया तदालीसदनं गतेन ।
तत्रैव सालक्ष्यत पक्ष्मलाक्षी दाक्षायणीमर्चयितुं प्रयाता ॥'

अत्र तद्दर्शनोपायसिद्ध्यर्थं प्रयुक्तात् तत्सखीसदनगमनयत्नात् साक्षादेव तद्दर्शनलाभः ।

---

भावाच्च । लोभाद्वरा [illegible] विशेषालङ्कारप्रकरणे व्याख्यातम् । अननुरूप [illegible] वराटिकार्थिनो नीलमणिलाभस्य च सम्बन्धस्यानुरूपत्वाभावात् । विषयविष [illegible] विषयो भगवान् कृष्णो विषयी महानिन्द्रमणिः । वराटिकार्थित्वस्योक्तेस्तदेवोद्देश्यतावच्छेदकम्, न तु अज्ञानित्वम्, तस्यानुपस्थितेर्गोपकिशोर्यामनिर्णयाच्च । तृतीयमुदाहरति तद्दर्शने [illegible] नायिका कथं दृश्येतेति उपायविमर्शनार्थं नायिकायाः

यत्तु—

'चातकस्त्रिचतुरान्पयःकणान् याचते जलधरं पिपासया ।
सोऽपि पूरयति विश्वमम्भसा हन्त हन्त महतामुदारता ॥'

इति पद्यम् 'वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम्' इति प्रहर्षणद्वितीयप्रभेदं लक्षयित्वोदाहृतं कुवलयानन्दकृता । तदसत्, वाञ्छितादधिकार्थस्य संसिद्धिरिति लक्षणे संसिद्धिपदेन निष्पत्तिमात्रं न वक्तुं युक्तम्, सत्यामपि निष्पत्तौ वाञ्छितुस्तल्लाभकृतसंतोषानतिशये प्रहर्षणशब्दयोगार्थासंगत्या तदलङ्कारत्वायोगात् । किन्तु लाभेन कृतः सन्तोषातिशयः । एवं च प्रकृते चातकस्य त्रिचतुरकणमात्रार्थितया जलदकर्तृकजलकरणकविश्वपूरणेन हर्षाधिक्याभावात् प्रहर्षणं कथङ्कारं पदमाधत्ताम् ? वाञ्छितादधिकप्रदत्वेन दातुरुत्कर्षो भवंस्तु

---

(सखीगृहं) नायको जगाम । परं नायिका देवीं पूजयितुं सखीगृहे समागता नायकेन साक्षात्कृता ।

चातकस्त्रिचतुरान् चातकः पिपासया त्रीन् चतुरो वा कणान् पयोधरं याचते । संख्याव्ययासन्नेत्यादिना समासे अचतुर्विचतुरेत्यादिसूत्रस्थेन त्र्युपाभ्यां चतुरोऽजिष्यत इति वार्त्तिकेनाच्प्रत्ययान्तस्त्रिचतुरशब्दोऽदन्तः । पयोधरोऽपि जलेन जगत् पूरयति । चातकरवो वृष्टिसूचक इति क्वचित् प्रसिद्धिरपि । सामान्येन समर्थकमर्थान्तरन्यासमाह हन्त हन्तेत्यादि । अत्राप्रस्तुतप्रशंसया सामान्यदातृयाचकवृत्तान्तोऽपि प्रतीयत इति चन्द्रिकामर्मप्रकाशकाभ्यां स्पष्टमुदीर्यते । योगार्थासंगत्या हृष् तुष्टौ धातोर्भावे ल्युटा संतोषः करणं च संतोषजनकमर्थः । प्रकर्ष उपसर्गार्थः । तथा संतोषाधिक्यमस्यालङ्कारस्य जीवातुः । स च चातकेऽसम्भवः, संतोषस्य तत्र सम्भवेऽपि संतोषाधिक्यासम्भवात्, प्रत्युताधिकवर्षणेनोद्वेगस्य सम्भवाच्च । न चाप्रस्तुतप्रशंसयाऽवगतसामान्ययाचकेषु कस्यचित् संतोषातिशयोऽपीति चन्द्रिकामर्मप्रकाशयोरभिप्रेतमिति वाच्यं तयोरेवाभिप्रेतं न कवेरित्याह न

न वार्यते। अत एव हन्तहन्तेत्यादिनार्थान्तरन्यासेन स एव पोष्यते। लोभाद्वराटिकानामित्यस्मदीये तूदाहरणे वाञ्छितुर्वाञ्छितार्थादधिकवस्तुलाभेन संतोषाधिक्यात् तद्युक्तम्।

इति रसगङ्गाधरे प्रहर्षणालङ्कारनिरूपणम्।

अथ विषादनम्—

अभीष्टार्थविरुद्धलाभो विषादनम्।

---

वार्यते। अत एव ● दातुरुत्कर्षे एव प्राधान्येन कवेस्तात्पर्यादिवान्यथा चतुर्थपादवैय्यर्थ्यापत्तेः। संतोषातिशये व्यङ्ग्येऽर्थान्तरन्यासेन किं पोषितं स्यात्। अप्रस्तुतप्रशंसाऽपि स्वव्यङ्ग्येन उत्कर्षपोषणेऽवसरं लभत इत्यनुभूयते तदोत्तिष्ठतां नामान्यथा तु अर्थान्तरपोषितपयोधरोत्कर्षस्यास्यैव दासीतां भजते। एवञ्च समाधेः सौकर्यं कार्यनिष्ठं प्रहर्षणस्य च चेतननिष्ठं सतोषाधिक्यं जीवातुस्तदा समाधावस्यान्तर्भावो मनोरथगलित एव। एवञ्च निष्कर्षमननुरुन्धानानां केवले लक्षणमात्रानुगमे प्रयतमानानां कौस्तुभकृतामित्थं प्रयासः। उद्देश्यतासम्बन्धेन प्रवृत्तिविषयस्य यदर्थप्रयोजकत्वमिच्छाविषयत्वप्रयोजकं तदवच्छिन्नकार्यस्य हेत्वन्तरात्सिद्धिरिति प्रहर्षणसाधारणं समाधिलक्षणम्। मानत्यागकार्यस्य प्रतिवन्धकाभावविशिष्टस्वालिङ्गनादिप्रयोजकत्वमेव नायकेच्छाविषयत्वप्रयोजकम्। आलिङ्गनावच्छिन्नमानत्यागस्य च भयात्सिद्धेः। तृतीयेऽपि उपायविमर्षरूपकार्यस्य नायिकादर्शनप्रयोजकत्वमिच्छाविषयत्वप्रयोजकम्, तदवच्छिन्नदर्शनस्य हेत्वन्तरात् सिद्धिः, लोभाद् वराटिकेत्यादावपि वराटिकानामिच्छाविषयत्वे वस्त्वन्तरप्राप्तिप्रयोजकत्वं प्रयोजकम्। तत्प्राप्त्यवच्छिन्नञ्च प्रयोजकतासम्बन्धेन नीलरूपमणिकार्यमिति। यत्फलमवाप्तुं किमपि कार्यमारभते तत्फलयुक्तस्य तत्कार्यस्य हेत्वन्तरात्सिद्धिरिति लक्षणवाक्यस्य सरलार्थः। प्रथमप्रहर्षणासंग्रहोऽपि दोष इत्यलं ग्रन्थान्तरव्याख्यानतानेन।

॥ इति प्रहर्षणालङ्कारनिरूपणम् ॥

अथ विषादनालङ्कारनिरूपणम्

प्रहर्षप्रतिद्वन्द्विविषादनम्। यथा तत्र लाभजन्ये सन्तोषाधिक्यम्, तथाऽत्र लाभजन्यो विशिष्टोऽवसादोऽनुक्तोऽपि ग्रन्थकृता जीवातुरवसेयः। अत एव विषमाद्भेदोऽस्यावश्यमायाति। प्रदीपोद्योतेऽलङ्कारकौस्तुभे चास्य विषमप्रभेदत्वमेवाङ्गीकृतम्।

अस्य चाभीष्टार्थलाभार्थं कारणयोगो यत्र न कृतः केवल-मिच्छैव कृता जातश्च विरुद्धार्थलाभः सः। यत्र चेष्टार्थं प्रयुक्तेऽपि कारणे तस्मान्न विरुद्धार्थलाभः, अपि तु स्वकारण-वशात् स च विविक्तो विषयः। यत्र त्विष्टार्थं प्रयुक्तात् कारणादेव विरुद्धार्थलाभस्तत्र तादृशकारण-विरुद्धार्थयोरुत्पादकोत्पाद्यभाव-लक्षणसंसर्गस्याननुरूपत्वाद् विषमम्, इष्यमाणविरुद्धार्थ-लाभसत्त्वाच्च विषादनमिति संकीर्णतैव। एवं चास्य विषम-भेदैर्गतार्थतेति नाशङ्कनीयम्, विषमरहितस्याप्येतद्विषयस्य दर्शयिष्यमाणत्वात्।

यथा—

'स्व-स्व-व्यापृति-मग्न-मानसतया मत्तो निवृत्ते जने
चञ्चूकोटिनिराकृतार्गल इतो यास्याम्यहं पञ्जरात्।
एवं कीरवरे मनोरथमयं पीयूषमास्वादय-
त्यन्तः संप्रविवेश वारणकराकारः फणिग्रामणीः॥'

अत्र हि विषमप्रभेदस्य नास्ति विषयः, इष्टार्थं कारण-प्रयोगाभावात्, इष्टार्थप्रयुक्तकारणेन सह विरुद्धार्थस्योत्पादक-संसर्गस्याननुरूपत्वं हि तच्छरीरम्। तस्माद्विषादनमेवाप्रस्तुत-प्रशंसाघटकतयावस्थितम्।

---

प्रहर्षणवदेवास्य भेदत्रयं निर्वक्ति अस्य चाभी ● विविक्तो विषमेणासंकीर्णः। अत्र सरला भ्रान्ता। द्धार्थयोरु ● विरुद्धार्थः कार्यरूपो ग्राह्यः, स्वस्व-व्यापृति ● स्वे स्वे व्यापारे तत्परतया मम सकाशाद् जने निवृत्ते सति चञ्चू-कोटिभिर्निराकृता अर्गलाबन्धनं येन तादृशोऽहमितः पञ्जराद्यास्यामि। एवं शुकवरे मनोरथस्वरूपममृतमास्वादयति सति हस्तिशुण्डसदृशः सर्पराजोऽन्तः प्रविवेश।

'चेलाञ्चलेनाननशीतरश्मिं संवृण्वतीनां हरिदृश्वरीणाम् ।
गोपाङ्गनानां स्मरजातकम्पादकाण्डसंपातमियाय नीवी ॥'

अत्रेष्टस्याननगोपनस्य विरुद्धोऽर्थो नीवीस्खलनम्, कारणीभूतत्रपासंघातपरिपन्थित्वात् । तच्च सात्त्विककम्परूपात् स्वकारणादेवोत्पन्नम्, न तु गोपनानुकूलयत्नात् । नापीष्टसाधनत्वेन प्रयुक्तात् कारणादिष्टानुत्पत्तिरत्रास्ति । चेलाञ्चलावरणेनाननगोपनरूपस्येष्टस्योत्पत्तेः । यतो विषादनमेवात्र, न विषमम् ।

अत्रेदं बोध्यम्—इष्टसाधनत्वेन निश्चितादनिष्टोत्पत्तिरिति यो विषमस्य भेदः प्राक् प्रत्यपादि, सोऽनेन विषादनेन ग्रस्तत्वादस्यैव प्रभेदो भवितुमीष्टे, न तु विषमस्येति कश्चिद् यदि ब्रूयात् स प्रष्टव्यः–न विषमस्येति यदुक्तं तत्कस्य हेतोः ? विषादनेनेव विषमेणापि कार्यकारणसंसर्गाननुरूपतालक्षणेन ग्रस्तत्वात् । न चात्रैकस्यान्यापवादकत्वं युक्तम् । द्वयोरपि सावकाशत्वात्, भिन्नविषयत्वाच्च । विरुद्धलाभांशो विषाद-

---

घटकतया ● अप्रस्तुतप्रशंसया गमिते एवं समीचीने समीहमानस्य अकाण्डगलितमनोरथस्य वृत्तान्ते विरुद्धार्थलाभकृतविषादद्योतकतयाऽवस्थितम् । द्वितीयमुदाहरति चेलाञ्चले ● श्रीकृष्णं दृष्टवतीनां संभ्रमाल्लज्जया वा स्वीयं मुखचन्द्रं चेलाञ्चलेन आच्छादयन्तीनां दर्शनोद्भूतकामजन्यकम्पवशादकस्माद् नीवी पपात । श्नुविकरणशत्रन्तङीबन्तः संवृण्वतीशब्दः । दृशेः क्वनिबिति वनोरचेति ङीपिरभावे च दृश्वरीशब्दः । व्याख्यातृभेदेन हरिं पश्यन्तीत्यपि विग्रहः । लाभांशो ● विषादफलकः । एतेनाधस्तनः कौस्तुभग्रन्थः प्रत्युक्तो वेदितव्यः । इष्टार्थकारणप्रयोगाभावादिति चिन्त्यम् । मोक्षरूपेष्टकारणस्येहापि प्रयोगात् । अथेच्छायाः प्रयोगेऽपि अनिष्टे न तज्जन्यमिति चेत् किं तत् ? इष्टसाधनत्वेन निश्चितात्

नस्य, विरुद्धलाभेष्टार्थप्रयुक्तकारणयोः संसर्गाननुरूपतांशश्च विषमस्य विषय इत्यवोचाम। तस्मात्तत्र किञ्चिदंशे विषमम्, किञ्चिदंशे विषादनमित्युभयोरपि समावेशो बोध्यः।

इति रसगङ्गाधरे विषादनालङ्कारनिरूप।

अथोल्लासः

अन्यदीय-गुण-दोष-प्रयुक्तमन्यस्य गुण-दोषयोराधानमुंल्लासः

तच्च गुणेन गुणस्य दोषस्य वा, दोषेण गुणस्य दोषस्य वेति चतुर्धा।

आधानं च तद्वत्ताबुद्धिः।

क्रमेणोदाहरणानि--

---

कारणादनिष्टकार्योत्पत्तिरिति विषमस्वभाव इति चेत् कुतः? इष्टप्राप्त्यभावविशिष्टानिष्टप्राप्तेरेव तत्स्वरूपत्वात्। अनिष्टे इष्टार्थप्रयुक्तकारणजन्यत्वविशेषणे प्रयोजनाभावात्। त्वया च विषादनालङ्कारपार्थक्यदुराग्रहेणैव तस्य दत्तत्वात्। तस्मादिष्टार्थसमुद्यतस्य तत्प्राप्त्यभावसहितानिष्टप्राप्तिरेव विषमभेदस्य शरीरम्। अनिष्टाप्राप्तिश्च तत्कारणादन्यतो वेति नाग्रहः। विषमस्यैवैतद्भेदद्वयमिति तु न निवारयामः। नन्वेवमननुरूपसंसर्गरूपविषमसामान्यलक्षणानुपपत्तिः, इष्टसाधनत्वेन ज्ञायमानात् कारणादनिष्टोत्पत्तावेव तदुत्पाद्योत्पादकत्वसंसर्गस्याननुरूपत्वस्मराणादिति चेत्, मैवम्, इष्टोद्यमानिष्टलाभयोरननुरूपत्वस्मरणादेव तदुत्पत्तेरिति ग्रन्थकारः। विषयभेदस्य दर्शितत्वात्, संसर्गे एवाननुरूपत्वस्य विषमघटकत्वाद्, उद्यमस्य यत्नरूपत्वेन प्रथमविषादनस्थासंग्रहाच्च। अयमेव विषाद इति। अन्यच्चात्र अत्रेदं बोध्यम्' इत्यनेन ग्रन्थकृदेव अवबोधयति।

॥ इति विषादनालङ्कारनिरूपणम् ॥

अथोल्लासालङ्कारनिरूपणम्

उत्कृष्टोलास उन्नतिरित्यर्थः। स च कस्यचिद् गुणेनान्यस्य गुणाधाने सति जायत इति स तस्य विषयः। छत्र्यच्छत्रिसमुदाये छत्रिशब्दवत् कस्यचिद् दोषा-

'अलभ्यं सौरभ्यं हरति सततं यः सुमनसां
क्षणादेव प्राणानपि विरह-शस्त्र-क्षत-हृदाम् ।
त्वदीयानां लीला-चलित-लहरीणां व्यतिकरात्
पुनीते सोऽपि द्रागहह पवमानस्त्रिभुवनम् ॥'

अत्र लहरीणां पावनत्वातिशयेन पवमानस्य पावनत्व-गुणान्तरं वर्णितम् ।

गुणेन दोषाधानमुदाहरति—

'विशालाभ्यामाभ्यां किमिह नयनाभ्यां खलु फलं
न याभ्यामालीढा परम-रमणीया तव तनुः ।
अयं तु न्यक्कारो जननि मनुजस्य श्रवणयो-
र्ययोर्नान्तर्यातस्तव लहरिलीलाकलकलः ॥'

अत्र श्रीभागीरथीरमणीयत्वगुणेन तद्रूपशब्दविमुखयो-र्नयनयोः श्रवणयोश्च नैष्फल्यधिक्काररूपौ दोषौ ।

यथा वा—

---

धानेनापि प्रयुज्यते तदप्यस्योदाहरणम् । अयञ्च बहुषु आलङ्कारिकग्रन्थेषु खण्डनी-यतया समर्थनीयतया वा न स्पृष्टः ।

गुणेन गुणाधानमुदाहरति अलभ्यं सौरभ्यम् ● पुष्पाणां सौरभहरणेन चोरः, वियोगशस्त्रेण विद्धहृदयानां प्राणापहरणेन व्याधकल्पोऽपि पवमानो वायुः पवित्राणां गङ्गालहरीणां सम्बन्धाद् जगत् पुनीते । व्यतिकरः सम्बन्धः ।

विशालाभ्यामा ● इदं विनोक्तिध्वन्युदाहरणतयोदाहृतं व्याख्यातञ्च ।

'हिंसाप्रधानैः खलु यातुधानैर्याऽनीयताऽपावनतां सदैव ।
रामांघ्रियोगादथ सापि वन्या विन्ध्यस्य धन्यास्त मुनेः सतीव ॥'

अत्र दोषेण दोषः पूर्वार्धे, द्वितीयार्धे तु गुणेन गुण इति विशेषः ।

यथा वा—

'भूषितानि हरेर्भक्तैर्दूषितानि पराङ्मुखैः ।
स्वकुलं नगरं देशो द्वीपं सर्वा च मेदिनी ॥'

अत्रोत्तरोत्तरव्यापकतया तथेति विशेषः ।

'श्वपाकानां व्रातैरमित-विचिकित्सा-विचलितै—
र्विमुक्तानामेकं किल सदनमेनःपरिषदाम् ।
मुदा मामुद्धर्तुं जननि घटयन्त्याः परिकरं
तव श्लाघां कर्तुं कथमिव समर्थो नरपशुः ॥'

अत्र वक्तृगतपापरूपदोषप्रयुक्तस्तदुद्धर्त्र्याः श्रीगङ्गायाः श्लाघ्यत्वं गुणः ।

यथा वा—

---

हिंसाप्रधाने ● या विन्ध्यस्य वन्या वनसमूहो हिंसाप्रधानै राक्षसैरपवित्रतामनीयत प्राप्ता साऽपि गौतमस्य सती अहल्या इव रामचरणसंपर्काद् धन्या आस्त । भूषितानि ● हरेर्भक्तैर्भूषितानि हरिपराङ्मुखैश्च दूषितानि । उत्तरार्धदर्शितानि । कुलमपेक्ष्य नगरस्य तदपेक्ष्यदेशस्यैव द्वीपस्य मेदिन्या पृथिव्याश्चोत्तरोत्तरं व्यापकतयोपन्यासः । दोषेण गुणाधानं यथा श्वपाकानां व्रातै ● बहुविधसंशयेभ्यश्चलितैश्चण्डालानां समूहैरपि त्यक्तानां पापसमूहानामेकमात्रं

'श्ववृत्तिर्व्यासङ्गो नियतमथ मिथ्याप्रलपनं
कुतर्केष्वभ्यासः सतत-पर-पैशुन्य-मननम् ।
अपि श्रावं श्रावं मम तु पुनरेवंविधगुणा-
नृते त्वत्को नाम क्षणमपि निरीक्षेत वदनम् ॥'

इहापि प्राग्वदेव । किन्तु व्यङ्ग्यः स इति विशेषः ।

'काव्यलिङ्गेन गतार्थोऽयम्, नालङ्कारान्तरत्वभूमिमारोहति' इत्येके । 'लौकिकार्थमयत्वादनलङ्कार एव' इत्यपरे ।

इति रसगङ्गाधर उल्लासालङ्कारनिरूपणम् ।

अथावज्ञा—

तद्विपर्ययोऽवज्ञा ।

---

गृहं मामपि हे जननि ! मुदा उद्धाराय कटिबन्धनं कुर्वन्त्यास्तव नरः पशुरिव प्रशंसां कर्तुं कथं समर्थः ?

व्यङ्ग्यमुदाहरति श्ववृत्तिव्यासङ्गो ● सेवावृत्तौ आसक्तिः । अथ नियतमसत्यभाषणम्, कुत्सिततर्केषु श्रद्धाविरहयोग्येषु हेतुशास्त्रेषु अभ्यासः, निरन्तरं पिशुनवृत्तेर्मननम्, मम पुनरेवंविधान् दोषरूपान् गुणान् श्रुत्वा अपि त्वां विना को नाम क्षणमपि मम मुखं निरीक्षेत न कोऽपि । व्यङ्ग्य ● पापस्य मुखावलोकनेनोदारतातिशयाद् दोषेण श्लाघ्यत्वगुणस्याधानरूपोल्लासो व्यज्यते ।

गतार्थोऽयम् ● पवमाने पावनत्वगुणो भागीरथीलहरीसंसर्गहेतुक इति बुद्धया न काव्यलिङ्गभिन्नत्वस्थानं लभत इत्यर्थः । लौकिकार्थं ● क्वचिदन्यस्य गुणिनः संनिधानेऽन्यस्मिन् गुणिता बुद्धिर्जायते, दोषिणां पुरस्तादल्पगुणोऽपि श्लाघामर्हति, यथा 'निरस्तपादपे देशे एरण्डोऽपि द्रुमायते' इत्यादौ लोकप्रसिद्धे वस्तुनि कविप्रतिभाया अनुपयोगादलङ्कारतैव नास्ति ।

॥ इति उल्लासालङ्कारनिरूपणम् ॥

तस्योल्लासस्य विपर्ययोऽभावः। अन्यस्यान्यदीयगुणदोष-प्रयुक्तगुणदोषाऽऽधानाभाव इति पर्यवसितोऽर्थः।

यथा

'निष्णातोऽपि च वेदान्ते वैराग्यं नैति दुर्जनः।
चिरं जलनिधौ मग्नो मैनाक इव मार्दवम् ॥'

अत्र पूर्वार्धे प्रपञ्चानित्यत्वबोधकतारूपवेदान्तशास्त्रगुण-प्रयुक्तस्य खले वैराग्यरूपगुणाधानस्य, उत्तरार्धे द्रवत्वरूपजल-निधिगुणप्रयुक्तस्य मैनाके मार्दवरूपगुणाधानस्य च विपर्ययो वर्णितः।

'मध्येगलं विहरतां गरलं निकामं
नागाधिपः शिरसि भालतले हुताशः।
ध्याता भवज्वलनमध्यगतैस्तथापि
तापं तदैव हरते हर ते तनुश्रीः ॥'

अत्र तापकतारूपगरलादिदोषप्रयुक्तस्य भगवन्मूर्तौ क्रूर-त्वादिदोषाधानस्याभावः।

---

### अथानुज्ञालङ्कारनिरूपणम्

यद्यपि अन्यत्रावज्ञाशब्दस्तिरस्कारेऽपि प्रसिद्धस्तथापि उपेक्षायामपि प्रयुज्यते। तिरस्कारस्यालङ्कारान्तरतया न स तिरस्कारोऽर्थो गृह्यतेऽपितु उपेक्षैव। उल्लासेऽन्यदीयगुणदोषयोरपेक्षा प्रतीयतेऽत्र तूपेक्षेति तद्विपरीतत्वमस्याः। तथैव लक्षयति व्याचष्टे च तद्विपर्ययो • द्रवत्वरूप • द्रवत्वं तर्कसंग्रहादौ गुण-तया प्रसिद्धं तद्वशान्मार्दवं जायते। मैनाकस्य समुद्रस्थितिः पौराणिकप्रसिद्धि-वशात्। मध्येगलम् • गलस्य मध्ये इति पारे मध्ये षष्ठ्या वेत्यनेनाव्ययी-भावसमासः। विहरतामिति लोटो गरलनागाधिपहुताशेष्वन्वेति। हुताशोऽग्निः।

न चात्रातद्गुणो वक्ष्यमाणोऽलङ्कार इति वाच्यम्, यतो यमुनाजलस्थराजहंसादेर्यथा यमुनाजलगतश्यामत्वाग्रहणं न तथा भगवन्मूर्तेर्गरलादिगतक्रूरत्वाग्रहणं विवक्षितम् । अपि तु तादृश-क्रूरत्वप्रयुक्तस्य क्रूरत्वान्तरस्यानाविष्करणमित्यस्ति विशेषः । 'निष्णातोऽपि—' इत्यादौ तु अतद्गुणस्याप्रसक्तिरेव ।

'मद्वाणि मा कुरु विषादमनादरेण
मात्सर्य-मन्द-मनसा सहसा खलानाम् ।
काव्यारविन्द-मकरन्द-मधुव्रताना-
मास्येषु यास्यसि सतां विपुलं विलासम् ।।'

अत्र पूर्वार्धेऽनादररूपखलदोषप्रयुक्तस्य कविवाण्यां विषाद-रूपदोषस्य निषिध्यमानत्वादप्रतिष्ठानेनाभावः शाब्दः, वाणीगत-रमणीयतारूपगुणप्रयुक्तस्य खले संतोषरूपगुणाधानस्याभावः पुनरार्थ इत्युभयविधाऽप्यवज्ञा । उत्तरार्धे तु सहृदयगुणेन सरसतारूपेण वाण्या उल्लासरूपगुणाधानमित्युल्लास एव ।

---

संसाररूपे ज्वलने मध्ये गतैः संसारिपुरुषैः । यतो यमुना [illegible] तत्र हंसानां प्रत्यक्षे हंसरूपतया श्यामत्वं न गृह्यते । अत्र तु भगवन्मूर्त्तौ तापकैस्तैः सहैव भगवत्प्रत्य-क्षता प्रत्यक्षे न विशेषः । किन्तु क्रूरत्वगुणप्रयुक्तं क्रूरत्वं नोत्पद्यते भगवत्मूर्तौ इति विवक्षितम् । तत्र ग्रहणकृतो विशेषोऽत्र तु आधानकृत इति भावः ।

मद्वाणि ? [illegible] हे मम वाणि ? मात्सर्येण मन्दं मनो येषां तेषां खलानां सहसा अनादरेण संतोषाभावप्रयुक्तेन विषादं मा कुरु । अनेन विषादाभाव उक्तः । काव्यकमलस्य रसपरागे लुब्धानां सतां सहृदयानां मुखेषु विपुलं विलासं

विशेषोक्त्यैव गतार्थत्वादवज्ञा नालङ्कारान्तरमित्यपि वदन्ति ।

इति रसगङ्गाधरेऽवज्ञालङ्कारनिरुपणम् ।

अथानुज्ञा—

उत्कटगुणविशेषलालसया दोषत्वेन प्रसिद्धस्यापि वस्तुनः प्रार्थनमनुज्ञा ।

यथा

'प्रणिपत्य विधे भवन्तमद्धा विनिबद्धाञ्जलिरेकमेव याचे ।
जनुरस्तु कुले कृषीबलानामपि गोविन्दपदारविन्दभाजाम् ।।'

अत्र हरिभक्तिलालसया कृषीबलकुलजन्मनः प्रार्थनम् ।

इति रसगङ्गाधरेऽनुज्ञालङ्कारनिरुपणम् ।

अथ तिरस्कारः ।

एवम्—दोषविशेषानुबन्धाद् गुणत्वेन प्रसिद्धस्यापि द्वेषस्तिरष्कारः ।

---

यास्यति । विशेषोक्त्यैव ● गुणदोषयोराधानसामग्रीसत्त्वेऽपि तदाधानकार्याभावान् ।

इत्यवज्ञालङ्कारनिरूपणम् ।

अथानुज्ञाऽलङ्कारनिरूपणम्

अनुज्ञा स्वीकारः । परिणामे रमणीयं विविच्य हीनस्यापीति शेषः । तथा लक्षयति उत्कटगुण ● प्रार्थनायामर्थतोऽङ्गीकार आयातीति प्रार्थनमित्युक्तम् । विष्णुभक्तस्य ब्रह्माणं प्रत्युक्तिः प्रणिपत्य ● विधे ब्रह्मन्, अद्धा हे, जनुर्जन्म, भाजां भजनशीलानाम् ।

।। इत्यनुज्ञाऽलङ्कारनिरूपणम् ।।

अथ तिरस्कारालङ्कारनिरूपणम्

अयञ्चालङ्कारो बहुभिरालङ्कारिकैरस्पृष्टः । दोषविशेषा ● दोषविशेष-

यथा

'श्रियो मे मा सन्तु क्षणमपि च माद्यद्गजघटा-
मदभ्राम्यद्भृङ्गावलिमधुरसंगीतसुभगाः ।
निमग्नानां यासु द्रविणरसपर्याकुलहृदां
सपर्या-सौकर्यं हरिचरणयोरस्तमयते ॥'

अत्र हरिचरणभजनच्युतिभयाद्राज्यसुखस्य तिरस्कारः ।

अमुं च तिरस्कारमलक्षयित्वाऽनुज्ञां लक्षयतः कुवलयानन्दकृतो विस्मरणमेव शरणम् । अन्यथा 'भवद्भवनदेहली—' इति तदुदाहृतपद्ये 'किमित्यमरसंपदाम्' इत्यंशे तिरस्कारस्य स्फुरणानापत्तेः ।

ननु कथमनयोरलङ्कारयोः सम्भवः ? यावता प्रार्थनमिच्छा तिरस्कारश्च द्वेषः । तत्र दोषे इष्टसाधनताज्ञानरूपकारणा-

---

सम्बन्धेन दोषांशमादाय द्वेषः । द्वेषस्तु रूपादिचतुर्विंशतिगुणेषु पठितो गुणविशेषः । दार्शनिकपदार्थास्पृष्टा सरला तु द्वेषशब्दस्य त्यागमर्थं वर्णयति ।

श्रियो मे मा ● माद्यन्तीनां गजघटानां मदेन भ्राम्यन्त्या भृङ्गावल्या मधुरेण संगीतेन सुभगाः श्रियो मम क्षणमपि न सन्तु । यासु राजलक्ष्मीषु पतितानां द्रव्येच्छया पर्याकुलं हृदयं येषां तेषां विष्णुचरणयोः पूजा सुविधा अस्तं गच्छति । भवद्भवनदेहली ● इत्थं हि पद्यम् । व्रजेम भवदन्तिकं प्रकृतिमेत्य पैशाचिकीं किमित्यमरसंपदः प्रमथनाथ नाथामहे । भवद्भवनदेहली विकटतुण्डदण्डाहतित्रुटन्मुकुटकोटिभिर्मघवदादिभिर्भूयते । उपलभ्यते तदनुसारी पाठः पाठकैः कल्पनीयः । मया तु यथोपलब्धं पाठः स्थाप्यते । आशिषि नाथ इति षष्ठीविधानन्तु आशिषि एव समासाभावफलकतया कृद्योग एव, चन्द्रिका च द्वितीयान्ततयैव व्याचष्टे, तथापि सूत्रस्य व्याख्यान्तरमाश्रित्य आशिषि तात्पर्यञ्च परिकल्प्य षष्ठ्यपि संपदामित्यत्र कथञ्चित् सम्भवति । तृतीयचतुर्थपादाभ्यामिन्द्रादीनां तिरस्कारः स्फुरति । कथमनयो ● अनुज्ञातिरस्कारयोः । दोषे इच्छाया गुणे

भावादिच्छा न युक्ता। गुणे च द्विष्टसाधनताज्ञानाभावाद् द्वेषोऽपि तथा। वैपरीत्यं तु कारणसत्त्वादुचितमिति चेत्; मैवम्। दोषगुणयोर्गुणदोषांशमादायेष्ट-द्विष्टसाधनताज्ञानयोः सत्त्वात् त्वदुक्तं कारणं तावदव्याहृतम्। उत्कटद्विष्टाननुबन्धीष्टसाधनताज्ञानस्योपायेच्छां प्रति, उत्कटेष्टानुबन्धिद्विष्टसाधनताज्ञानस्य चोपायद्वेषं प्रति कारणत्वस्यैववाच्यत्वाद्वैपरीत्यमपि नोचितम्।

---

द्वेषस्य चासम्भवात्। अयं भावः——सुखे सुखसाधने च इच्छा जायते, नान्यत्र। सुखे तु स्वभावादेवेच्छा निरुपाधिकी। अन्यत्र सुखसाधनत्वोपाधिकी। इदं सुखसाधनमिति यदा जानाति, तदैव तदिच्छति, नान्यथा। त ज्ञानं भ्रमः प्रमा वेत्यत्र नाग्रहः। प्रधानमिष्टं सुखं सुखसाधनतयाऽन्यदपीष्टशब्देन व्यवहारपथमवतरति। तथा च दोषस्य दुःखसाधनतया प्रसिद्धतया इष्टसाधनतयाऽज्ञायमानतया दोषस्य प्रार्थनं न सम्भवति। तथा चालङ्कारविषय एवालीकः। तद्विषयस्याप्रसिद्ध्या अनुज्ञाया नालङ्कारत्वम्। एवं दुःखे स्वभावाद् द्वेषो निरुपाधिकः। दुःखातिरिक्ते वस्तुनि दुःखसाधनमिदमिति निश्चयाधीनो दुःखसाधनत्वोपाधकः। द्विष्टञ्च मुख्यं दुःखमौपाधिकञ्चान्यद् दुःखसाधनम्। तथा च गुणे सुखसाधनतया प्रसिद्धे द्विष्टसाधनतयाऽज्ञायमाने द्वेषासम्भवात्तिरस्कारस्यालङ्कारत्वासम्भवः। अत्रापथे प्रचलन्ती सरला न विश्वासार्हेति ध्येयम्। तथा ● न युक्ता। वैपरीत्यन्तु ● दोषे द्विष्टसाधनतया ज्ञायमाने द्वेषः, इष्टसाधनतया ज्ञायमाने गुणे च प्रार्थनम्। गुणदोषांशमा ● दोषेऽपि गुणांशो गुणेऽपि दोषांशः। अग्रे उदाहरणे आंशिकता स्फुटीभविष्यति। दोषेऽपि गुणांशमादायेष्टसाधनताज्ञानं गुणेऽपि दोषांशमादाय द्विष्टसाधनताज्ञानम्। अपि च नेष्टसाधनताज्ञानमात्रं सुखोपायविषयिणीमिच्छां प्रति कारणम्, फलश्रुत्या इष्टसाधनतया फलार्थिनामास्तिकानां नियमेनेच्छाया आपत्तेः। न च तथा, कृच्छ्रतया बहूनां द्वेषविषयत्वात्। एवं द्विष्टसाधनताज्ञानं न द्विष्टोपायविषयकं द्वेषं प्रति कारणम्, चन्द्रायणाचरणक्लेशसाधनतया चन्द्रायणादौ नियमेन द्वेषापत्तेः। न तथेष्यते केषाञ्चिदिष्टत्वादेव। किन्तु उत्कटद्वेषविषयस्यासाधनत्वे सति यदिष्टसाधनत्वविषयकं ज्ञानं तदुपायविषयिणीमिच्छां जनयति, एवमुत्कटेच्छाविषयस्यासाधनत्वे सति यद् द्विष्ट-

अन्यथा सुखःदुखोभयसाधनेषु चान्द्रायणकलञ्जभक्षणादिषु हरीतकी-दधित्रपुंषभक्षणादिषु चेच्छाद्वेषयोरनियम एव स्यात् । अत्र च पुरुषकालप्रवेश आवश्यकः । उत्कटतत्पुरुषीयतात्कालिक-द्विष्टाननुबन्धितत्पुरुषीयतात्कालिकेच्छाविषयफलसाधनताज्ञानं तत्पुरुषीयोपायेच्छां प्रति कारणम् । एवमुत्कटतत्पुरुषीय-तात्कालिकेष्टाननुबन्धितत्पुरुषीयतात्कालिकद्वेषविषयफलसाधन-ताज्ञानं तत्पुरुषीयोपायद्वेषं प्रति तेन पुरुषान्तरीयं कालान्तरीयं च द्विष्टमिष्टमादाय न दोषः ।

---

साधनत्वविषयकं ज्ञानं तदुपायविषयकद्वेषं प्रति कारणमिति वाच्यम्—इत्याह उत्कटद्विष्टा ● अननुबन्धित्वमसाधनत्वम् । प्रकृतार्थमाह द्वैपरीत्य ● अयं भावः—दोषे गुणांशोऽपीत्युक्तम् । दोषांशमादाय द्वेषो गुणांशमादाय रागश्च भवितुमर्हति । परं रागजनिका सामग्री यदा बलवती जाता, तदोत्कटो रागो द्वेषश्च साधारण एव । उत्कटेच्छायाञ्च सुखविषयिण्यां सत्यामिष्टसाधनताज्ञानादिच्छा जायते । द्विष्टत्वस्य सत्त्वेऽपि उत्कटेष्टानुबन्धित्वज्ञानाद् द्वेषश्च न जायते । एवं गुणस्यापि सतो दोषांशमादाय दुःखे वलवद्द्वेषोदयाद् द्वेषस्योत्पत्तिरिच्छायाश्च उत्कटद्विष्टानुबन्धित्वज्ञानादनुत्पत्तिरवसेया । अन्यथा ● अननुबन्धित्वांशस्या-विशेषणत्वे । कलञ्जपदेन फलविशेषोऽपि केनचिद् गृह्यते, परं मीमांसाग्रन्थेषु विषदिग्धबाणेन हतो मृगो गृहीतः । तत्रापि स्वाद्गतया रागो विषदिग्धतया द्वेषः । हरीतक्यां कषायताकोष्ठशुद्धिदोषगुणौ । दधियुक्तं त्रपुषं प्रान्तीयभाषायां फुटनाम्ना व्यवहृतम् । दधित्रपुसं प्रत्यक्षो ज्वर इति महाभाष्योक्तिः । स्वादुत्वञ्च रागहेतुः । रनियमए ● अत्र लेखकदोषपरम्परया विषयकाठिन्येन सरलाया बुद्धावनवताराच्च नकाररहितः पाठः प्रसिद्धिं गतः । विषयस्वाभाव्यात्, अग्रिमस्य द्वयोरप्यापत्तेरिति ग्रन्थस्य च स्वारस्यात् नकारसहितः पाठः समुचितः । ननु कस्य-चिच्चान्द्रायणादौ प्रार्थनं कस्यचिच्च तिरस्कारो न घटते, कस्यचिदिष्टसाधनताज्ञानात् कारणसत्त्वादिच्छाया इव द्विष्टसाधनताधियश्च द्वेषस्याप्यापत्तेः । एवं प्राग्विभ्यदपि गुरूपदेशादिना साहसं विभ्राणः समीहते कृच्छ्रमपि चान्द्रायणं कथमेकस्यैव इच्छा-द्वेषौ घटेत इत्याशङ्क्य समाधत्ते अत्र च ● । न दोषः ● ननु कथमयं प्रयासः

इदं तु बोध्यम्—फले उत्कटेच्छया उपायेऽप्युत्कटेच्छैव जायते । एवं फले उत्कटद्वेषेणोपायेऽपि द्वेष एव । एवं च सुख-दुःखोभयसाधनेषु चान्द्रायणादिषु यदि स्वसामग्रीवशात् प्रथमं सुखे उत्कटेच्छा, तथा तत्साधनेषु चान्द्रायणादिष्वपि सैव, अथ स्वसामग्रीवशात् प्रथमं दुःखे उत्कटद्वेषस्तदा चान्द्रायणादिषु स एव उत्कटसामग्र्या बलवत्त्वकल्पनात् ।

उत्कटत्वं च प्रकृते इच्छाद्वेषगतो विषयिताविशेषः । एक-साधनजन्ये इष्टानिष्टरूपे फलद्वये एककालावच्छेदेनैकत्रोत्कटेच्छा, अपरत्रोत्कटद्वेषश्च न संभवति । तथा सति चान्द्रायणादिष्वेक-

---

समवायेन तादृशेच्छां प्रति तादृशज्ञानस्य कारणताङ्गीकारेणैव पुरुषान्तरमादाय दोषाप्रसक्तेः । द्विक्षणस्थायिनो ज्ञानस्य विनाशादेव कारणस्य कालान्तरे इच्छा-द्वेषयोरनापत्तेरिति चेद् गौरवभिया समवायेन कार्यकारणभावानङ्गीकारादिति गृहाण । यथाहि यागविशेष्यकेष्टसाधनत्वज्ञानाद् घटविषयकेच्छाया वारणाय तद्विशेष्यकेच्छां प्रति तद्धर्मिकेष्टसाधनत्वप्रकारकं ज्ञानमिति धर्मिविशेषनिबन्धनोऽनन्त-कार्यकारणभाव आपतति । अतो लाघवात् समानविशेष्यताप्रत्यासत्या विशेष्यता-सम्बन्धेनेच्छां प्रति विशेष्यतासम्बन्धेनेष्टसाधनत्वप्रकारकं ज्ञानं कारणमिति पुरुषा-न्तरं कालान्तरञ्चादाय दोषप्रसक्तेः पुरुषकालप्रवेश आवश्यकः । पुरुषकालौ तु समवायसम्बन्धेन कार्यकारणभावेऽपि धर्मिविधया प्रविष्टाविति धर्म्यन्तरभेदेन कार्यकारणभावाकल्पनाल्लाघवमनुसृत्य ग्रन्थकृताऽयं पक्ष आदृतः । अत्रान्ततो धर्मितावच्छेदकपर्यन्तमपि निवेशनीयं भवेत् तद्विचारे कोमलमतीनां क्लेशबाहुल्या-दधिकं न निवेश्यते । किन्नामोत्कटत्वम् ? सुखदुःखयोरुत्कटाविच्छाद्वेषौ कथमुपाये प्रवर्तेयाताम् ! दोषे गुणे च दोषगुणांशावादाय युगपदुत्कटयोरिच्छाद्वेषयोः सतोः का पूर्वोक्तालङ्कारयोर्गतिरित्यादिकं समाधातुमवधापयति इदन्तु बोध्यम् ● स्वपदेन यथाक्रममिच्छाद्वेषौ गृह्येताम् । विषयिता ● इच्छा यत्किञ्चिद्विषयिणी जायते । विषयिता इच्छागतो धर्मः । एवं द्वेषेऽपि बोध्यम् । विशेषत्वञ्च विषयान्तरा-ग्राहकत्वयोग्यत्वादिकम् । कालावच्छेदे ● एकस्मिन् काले एकस्मिन् फले उत्कटेच्छा, अन्यस्मिन्ननिष्टे फले चोत्कटद्वेषो न जायते, वस्तुस्वाभाव्यात्,

स्मिन्नेव समये इच्छाद्वेषयोर्द्वयोरप्यापत्तेः। एवं च बलवद-निष्टाननुबन्धित्वं बलवदिष्टाननुबन्धित्वं चोपायेच्छायद्वेषयोः कारणतावच्छेदके न देयमेवेत्याहुः।

अन्ये तु फलेच्छा-फलसाधनताज्ञानयोर्द्वयोरुपायेच्छां प्रति, फलद्वेषफलसाधनताज्ञानयोरुपायद्वेषं प्रति च कारणत्वम्। उत्कट-सामग्र्या बलवत्त्वाच्चेष्टानिष्टोभयसाधने न दोष इत्यपि वदन्ति।

एवं चेष्टानिष्टोभयसाधने दोषे गुणे च गुणेन दोषेण च मिश्रिते सहृदयानामिच्छाद्वेषयोरुचितैवोत्पत्तिः, हरीतकीकदल-भक्षणयोरिवेति।

इति रसगङ्गाधरे तिरस्कारालङ्कारनिरुपणम्।

---

उत्कटत्वासम्भवाच्च। वच्छेदकत्वेन ● उपलक्षणे तृतीया। प्राचीनपुस्तके-त्वशब्दो नास्ति। तत्र प्रकृत्यादित्वादभेदे तृतीया कथञ्चित् समाधेया। वस्तुतस्त्व शब्दो लेखकप्रमादपरम्परया परिभ्रष्टः। मुग्धा सरला तु सर्वथैव पदार्थपरिचयहीना नकारं निषेधार्थं विच्छिन्दन्ती ग्रन्थार्थमेव गर्ते पातयति। फलविषयिण्योत्कटेच्छया उपायविषयिणी उत्कटेच्छा, एवं फलविषयकोत्कटद्वेषेण उपायविषयक उत्कटद्वेष इति कल्पनाक्लेशमक्षममाणम्, कारणद्वयक्लेशञ्च सहमानं प्रकारान्तरमाह अन्ये तु ● फलेच्छा यदि स्वसामग्रीवशाज्जाता, तदा फलोपाये इच्छैव न द्वेषः। एवं फलद्वेषो यदि जातस्तदा दुःखोपाये द्वेष एव न राग इति व्यवस्था। फलद्वेष-फलासाधनेति शोधयन्ती सरला अन्धैव। अकाररहितः प्राचीनः पाठः शुद्धः। अत्र मतेऽपि फलेच्छाद्वेषाबुत्कटो ग्राह्याविति सूचयति उत्कटसामग्र्या ●। न दोष ● चान्द्रायणादौ न युगपदिच्छाद्वेषौ, स्वादलम्पटस्य द्वेष एव कोष्टशुद्धि समीहमानस्य राग एव। इदन्त्वत्राधेयम्, फलेच्छा द्वेषाभ्यां नियमनाद् युग-पदिच्छाद्वेषयोरुपायेऽसम्भवाद् अननुबन्धित्वान्तं न कारणावच्छेदके निवेश-नीयम्। फलेच्छाद्वेषयोस्तु उत्कटसामग्रीवशान्नियमनम्। प्रकृतेऽलङ्कारविषये उपसंहरति एवञ्चेष्टा ●। कदलभक्ष ● स्वादुता कोष्टबन्धता च गुणदोषौ। कदलीपर्यायः पुलिङ्गः कदलशब्दोऽप्यस्ति।

॥ इति तिरस्कारालङ्कारनिरूपणम् ॥

अथ लेशः—

गुणस्यानिष्टसाधनतया दोषत्वेन, दोषस्येष्टसाधनतया गुणत्वेन च वर्णनं लेशः ।

यथा

'अपि बत गुरुगर्वं मा स्म कस्तूरि यासी-
रखिलपरिमलानां मौलिना सौरभेण ।
गिरिगहनगुहायां लीनमत्यन्तदीनं
स्वजनकममुनैव प्राणहीनं करोषि ॥'

'नैर्गुण्यमेव साधीयो धिगस्तु गुणगौरवम् ।
शाखिनोऽन्ये विराजन्ते खण्ड्यन्ते चन्दनद्रुमाः ॥'

पूर्वत्र गुणस्य दोषत्वेन वर्णनमात्रम्, उत्तरत्र तु दोषस्य गुणत्वेन वर्णनमर्थान्तरन्यासानुविद्धम् ।

---

अथ लेशालङ्कारनिरूपणम्

लेशोंऽशः । गुणेष्वपि दोषलेशस्य वर्णनम्, दोषेष्वपि गुणलेशस्य वर्णनम् । गुणेष्वपि दोषलेशोऽनिष्टसाधनतया । एवं दोषेष्वपि गुणलेश इष्टसाधनतया कल्प्यते । तथैव लक्षयति गुणस्या ● । प्रदीपोद्द्योतकारा विशेषे इममन्तर्भावयन्ति । तन्न ग्रन्थकाराय रोचते, विशेषस्यानुगतलक्षणाभावाच्चमत्कारविशेषेण प्राचीनानामनुभवसिद्धस्य पृथक्त्वे बाधाभावात् । अन्यतमत्वेनान्येषां क्रोडीकारस्य विशेषप्रकरण एव दूषितत्वात् । अलङ्कारकौस्तुभकारास्तु गुणत्वेनाभिमताद् विरुद्धस्य दोषकार्यस्य वर्णनाद् व्याघातान्तर्भावं वर्णयन्ति । तदपि न समीचीनम् । कस्तूर्याः सौरभस्यानिष्टकारित्वे तात्पर्यात् । एवं व्यङ्ग्ये प्रस्तुतवृतान्ते जन्यस्य सतः स्वगुणेन स्वजनकप्राणापहारसाधनतया संनिपातविरोधे तात्पर्यात्, न तु विरुद्धकार्योत्पत्तिमात्रे तात्पर्यम् ।

अपि बतगुरु ● हे कस्तूरि सर्वसुगन्धिश्रेष्टेन सौरभेण महागर्वं मा स्म यासीः । याधातोर्लुङि सगागमे रूपम् । अमुनैव सौरभेणैव । अप्रस्तुतप्रशंसया

'स्खलन्ती स्वर्लोकादवनितलशोकापहृतये
जटाजूटग्रन्थौ यदसि विनिबद्धा पुरभिदा ।
अये निर्लोभानामपि मनसि लोभं जनयतां
गुणानामेवायं तव जननि दोषः परिणतः ॥'

अत्र दोषोऽपराधः । तथा चापराधत्वेन गुणानां दोषत्व-मुक्तं भवति ।

न चायमलङ्कारो व्याजस्तुत्या उभयरूपया गतार्थ इति शङ्क्यम्, मुखप्रतिपादितार्थवैपरीत्येनात्र सर्वत्र पर्यवसानाभावात् । न हि 'अपि बत गुरु गर्वम्—' इत्यत्र कस्तूर्याः स्तुतौ कवेस्तात्पर्यम्, अपि तु जनकप्राणापहारित्वेन निन्दायामेव । अत एवाप्रस्तुतकस्तूरीवृत्तान्ताभिव्यक्ते प्रस्तुतवृत्तान्तेऽपि तस्यामेव विश्रान्तिः । एवं 'नैगुंण्यमेव साधीयः' इत्यत्र शास्त्र्यन्तराणां निन्दा न विवक्षिता, किं तु सुखावस्थानम् । गुणिनः स्वगुणैर्दुःखितस्य वाक्येऽस्मिन्निर्गुणानां निन्दाया अवक्तव्यत्वात्

---

स्वजनकविघातिनो गुणिनो वृतान्तो गम्यते। नैर्गुण्यमेव ● अतिशयेन साधु साधीयइयनूप्रत्ययान्तः ।

स्खलन्ती स्वर्लो ● हे जननि गङ्गे तव गुणानामेवायमपराधो यन्निर्लोभेनापि शिवेन स्वर्लोकादवतरन्ती जटाजूटे बद्धासि । उभयरूपया ● स्तुतिरूपया निन्दारूपया च । तथा च प्रकृते गुणानां निन्दाया अपि गङ्गा स्तुतौ पर्यवसानम् । मुखप्रति ● प्रारम्भे प्रतिपादितार्थः । प्रारम्भे यदि स्तुतिः प्रतिपाद्यते तदा निन्दायां पर्यवसानम्, यदि निन्दा तदा स्तुतौ पर्यपस्यति । अत्र न तथेति प्रतिपादयति नहि अपि वत ● नहीति तात्पर्यमित्यत्रान्वेति । तस्यामेव ● पुत्रस्य निन्दायामेव । अत एव विषयभेदाद् विशेषव्याघाताभ्यामपि भेदोऽवसेयः । अप्रस्तुतप्रशंसया गमितमर्थमादायाह गुणिनः स्वगुण ● ।

प्रत्युत स्तुतेरेव वाच्यत्वात् । 'स्खलन्तीस्वर्लोकात्–' इति पद्ये भागीरथीस्तुतिप्रकरणपठिते यद्यस्ति भागीरथीस्तुतौ तात्पर्यम् तदा व्याजस्तुतिरप्यस्तु । तस्याः सावकाशत्वेनैतद्बाधकत्वायोगात् ।

'रवितुरगदिग्गजेषु स्वर्णाचलजलधिधनदकोषेषु ।
सत्त्वेन राजपुंगव किं दातास्मीति गर्वमावहसि ।।'

अत्र पर्यन्ते प्रतीयमानस्य रवितुरगादिपदार्थातिरिक्तसकलवस्तुदानरूपस्य गुणस्य दोषत्वेनावर्णनात्, तत्त्वेन वर्ण्यमानस्य च रवितुरगाद्यदानस्यागुणत्वाद् गुणदोषयोर्भिन्नविषयत्वेनावस्थानेन लेशस्पर्शरहिता व्याजस्तुतिरिति स्फुटमेव सावकाशत्वम् । अत एव लेशोऽपि न व्याजस्तुतेर्बाधक इति प्रागुक्तजाह्नवीस्तुतौ द्वयोरपि समावेशः ।

इति रसगङ्गाधरे लेशालङ्कारनिरुपणम् ।

---

लेशेन सावकाशां व्याजस्तुतिं दर्शयति रवितुरग ● हे राजश्रेष्ठ ? स्वर्णाचले सुमेरुपर्वतरूपे कोषे रवेः सत्त्वे, समुद्ररूपे कोषे उच्चैश्रवआद्यश्वानां सत्त्वे, कुवेरकोषे दिग्गजानां सत्त्वेऽपि, अर्थदिषामदानेऽपि अहं दातेति गर्वमावहसि । तत्त्वेन ● दोषत्वेन । दोषस्य गुणत्वेन गुणस्य वा दोषत्वेन वर्णनं लेशविषयः स चात्र नास्ति । गुणोऽतिरिक्तसकलवस्तुदानं न तद्दोषत्वेन वर्णितम्, दोषत्वेन वर्णितञ्च रवितुरगदिग्गजानामदानं न तद्गुणः गुणतया दोषतया चैक एव लेशविषयः, अत्र च अन्यदेव गुणत्वेन प्रतिपित्सितम्, अन्यच्च दोषत्वेन प्रतिपादितम् । तदेवाह भिन्नविषयत्वेन ● । अत एव ● व्याजस्तुतेरविषये प्रथमोदाहरणविषये सावकाशत्वादेव । रवितुरगेत्यादिपद्यं सरला अन्यथा व्याख्याति परं शब्दस्वारस्यं तत्र न प्रतिभाति । कोषाः रविप्रभृतीन् वितरन्तीत्यर्थे शब्दो नास्ति ।

।। इति रसगङ्गाधरे लेशालङ्कानिरूपणम् ।।

अथ तद्गुणः

स्वगुणत्यागपूर्वकं स्वसन्निहितवस्त्वन्तरसम्बन्धिगुणग्रहणं तद्गुणः ।

यथा

'नीतो नासान्तिकं तन्व्या मालत्याः कुसुमोत्करः ।
बन्धूकभावमानिन्ये रागेणाधरवर्तिना ॥'

यथा वा

'अधरेण समागमाद्रदानामरुणिम्ना पिहितोऽपि शुद्धभावः ।
हसितेन सितेन पक्ष्मलाक्ष्याः पुनरुल्लासमवाप जातपक्षः ॥'

अत्राद्ये मालतीकुसुमोत्करस्याधररागरक्ततया बन्धूकभावोपपत्तेस्तद्गुणः । द्वितीयेऽपि पूर्वार्धे स्पष्ट एव तद्गुणः । परं तूत्तरार्धगतेन प्रतिप्रसवतुल्येन हासेनापोह्यमानत्वाद् भङ्गुरः । यदि तु हासेनाधरसितीकरणद्वारा तदरुणिम्नो बाधः तदा तत्राप्यपरस्तद्गुणः ।

---

अथ तद्गुणालङ्कारनिरूपणम्

तस्य सम्बन्धिनो गुण इतरसम्बन्धिनि वर्तमानः । अन्यत्र अन्यगुणस्य विरोधिगुणपरित्यागमन्तरा न सम्भवतीति स्वगुणत्यागपूर्वकम् ● इति लक्षयति । स्वसन्निहितं यद् वस्त्वन्तरं सम्बन्धि । नीतो नासान्तिकम् ● कुसुमोत्करः पुष्पगुच्छम् । बन्धूकपुष्पं रक्तं मालती च श्वेता । रागो रक्तिमा । उत्तरार्धेनार्थमपि उदाहर्तुमाह अधरेण ● रदानां दन्तानाम्, अरुणिम्ना, रक्तिम्ना, शुद्धभावः श्वैत्यम् । जातपक्षः, जातः सहायो यस्य, सितं शुक्लम् । प्रतिप्रसव ● विधेर्निषेधेनावरोधे पुनर्निषेधान्तरेण विधेरुत्थानं प्रतिप्रसवो व्याकरणादिशास्त्रेषु प्रसिद्धः, तत्तुल्यमत्र । दन्तश्वैत्यस्याधररागेणावरोधे पुनर्हासेन दन्तश्वैत्यस्योज्जीवनम् । पोह्यमान ● अरुणिम्नः अपोह्यमानत्वात् निवार्य-

इमं केचित् पूर्वरूपमामनन्ति ।

यद्यप्युल्लासेऽप्यन्यदीयगुणेनान्यस्य गुणाधानमस्ति, तथापि तत्रान्यदीयगुणप्रयुक्तं गुणान्तरं चूर्णादिक्षारताप्रयुक्तं हरिद्रादेः शोणत्वमिवाधीयते । प्रकृते तु जपाकुसुमलौहित्यं स्फटिक इवान्यदीयगुण एवान्यत्रेति ततोऽस्य भेदः ।

इति रसगङ्गाधरे तद्गुणालङ्कारनिरुपणम् ।

अथातद्गुणः—

तद्विपर्ययोऽतद्गुणः ।

यथा—

'कुचाभ्यामालीढं सहजकाठिनाभ्यामपि रमे
न काठिन्यं धत्ते तव हृदयमत्यन्तमृदुलम् ।
मृगाङ्गानामन्तर्जननि निवसन्ती खलु चिरं
न कस्तूरी दूरीभवति निजसौरभ्यविभवात् ॥'

अत्र पूर्वार्धे परगुणाग्रहणं शाब्दम्, स्वगुणत्यागाभाव-

---

माणत्वात् । पूर्वरूप ● पर्वरूपनामानमलङ्कारम् । वाधीयते ● पूर्वगुणं विनाश्य अन्यो गुण उत्पन्न इति प्रतीयते । जपाकुसुम ● स्वच्छ एव स्फटिके जपाकुसुम-सन्निधानेन लौहित्यं प्रतीयते, नतूत्पद्यत इव । न वा स्फटिकश्वैत्यं विनश्यतीव ॥ इति तद्गुणालङ्कारनिरूपणम् । ॥

अथातद्गुणालङ्कारनिरूपणम्

तद्विपर्ययो ● तस्य तद्गुणविषयस्य विपर्ययः स्वसन्निहितवस्त्वन्तरस्य सम्बन्धिनो गुणस्याग्रहणं स्वगुणात्यागश्च । कुचाभ्यामालीढम् ● हे लक्ष्मि! स्वभावतः कठिनाभ्यां कुचाभ्यां युक्तमपि अत्यन्तकोमलं तव हृदयं काठिन्यं कुचयोर्न गृह्णन्ति । तत्र दृष्टन्तः । हे जननि—कस्तूरी निर्गन्धानां मृगशरीरावयवानां

स्त्वार्थः। उत्तरार्धगते दृष्टान्ते स्वगुणत्यागाभावः, शाब्दः परगुणाग्रहणं त्वार्थम्।

न चायमवज्ञाया नातिरिच्यते। उल्लासविपर्ययो ह्यवज्ञा। तद्गुणविपर्ययश्चातद्गुण इति प्रतियोगिभेदादेव भेदस्य सिद्धेः।

'अत्र गुणाग्राहकापेक्षया सन्निहितस्य गुणवत उत्कृष्टत्वसमत्वाभ्यां द्वैविध्यम्' इति सर्वस्वकारः। तस्यायमाशयः—अपकृष्टसंबन्धिगुणाग्रहणस्य साहजिकत्वेन वैचित्र्यानाधायकत्वादनलङ्कारतैवेत्यपकृष्टत्वेन तृतीयविधा तु न संभवतीति। अन्ये तु 'अवान्तरचमत्कारविशेषस्याभावाद् द्वैविध्यमपि न' इति वदन्ति।

अन्ये तु—'सति गुणग्रहणहेतावुत्कृष्टगुणवस्तुसन्निधाने तद्गुणग्रहणरूपकार्याभावात्मकोऽयमतद्गुणो विशेषोक्तेरवान्तरभेदः, न त्वलङ्कारान्तरम्। कार्यकारणभावो नात्र क्विवक्षितः।

---

मध्ये चिरं निवसन्ती अपि स्वीयसौरभ्यप्रभावात् पृथम् न भवति। स्त्वार्थः ● काठिन्याग्रहणे मार्दवस्य स्थितेर्मार्दवत्यागाभावोऽर्थादायाति। त्वार्थम् ● शरीरगन्धाग्रहणं शब्दतो नोक्तम्। प्रतियोगि ● उल्लासतद्गुणविषययोर्भेदादेव तद्विपरीतविषययोरनयोर्भेदः। गुणाग्राहकापेक्षया ● योऽन्यस्य सन्निहितस्य गुणं न गृह्णाति तमपेक्ष्य, सन्निहितवस्त्वन्तरमुत्कृष्टं समञ्च संभवति तद्द्वारा भेदद्वयम्। अपकृष्टमपि कथन्न सम्भवति ? कथन्न तेन तृतीयो भेद इति समाधातुमुपक्रमते तस्यायमा ● अपकृष्ट उत्कृष्टस्य गुणं गृह्णानीति स्वभावः। स्याभावाद्द्वै ● परकीयगुणाग्रहणकृते चमत्कारे उत्कृष्टत्वसमत्वयोरकिञ्चित्करत्वात्। सति गुण ● अग्रिमात इत्यस्यानुरोधेनास्य यत इत्यादिः। कारणसत्त्वे कार्याभाव इति विशेषोक्तिभेदः। अत्र कारणं ग्रहणीयगुणकस्य वस्तुनः सन्निधानम्, कार्यन्तु तद्गुणग्रहणम्। अन्यथा ● विरोधस्याविव-

किन्तु सन्निधानेऽपि तद्गुणग्रहणाभाव इत्येतावन्मात्रम् । अतो विशेषोक्तेरतद्गुणो भिन्न इति तु न युक्तम् । सन्निधानेऽपीत्य-पिना विरोधोऽपि विवक्षित इति गम्यते । अन्यथा जीवातो-रभावादलङ्कारतैव न स्यात् । स च कार्यकारणभावाविवक्षणे न भवतीति कथमुच्यते न विवक्षित' इत्यप्याहुः ।

इति रसगङ्गाधरेऽतद्गुणालङ्कारनिरूपणम् ।

अथ मीलितम्—

स्फुटमुपलभ्यमानस्य कस्यचिद्वस्तुनो लिङ्गैरतिसाम्याद् भिन्नत्वेनागृह्यमाणानां वस्त्वन्तरलिङ्गानां स्वकारणाननुमाप-कत्वं मीलितम् ।

संग्रहश्च—

'भेदाग्रहेण लिङ्गानां लिङ्गैः प्रत्यक्षवस्तुनः ।
अप्रकाशो ह्यनध्यक्षवस्तुनस्तन्निमीलितम् ॥'

सामान्यवारणाय अनध्यक्षेति । तत्राध्यक्षस्यैव वस्त्वन्तर-

---

क्षितत्वे विरोधमूलकातद्गुणस्यालङ्कारताप्रयोजकस्य विरोधस्याभावादलङ्कारत्वमेव न स्यात् । स च [illegible] विरोधश्च । इत्याहुः [illegible] अत्रास्वरसबीजन्तु विशेषलक्षण-स्यानुगतस्याभावादन्येषामन्तर्भावो युक्तः । कौस्तुभकृतस्तु कार्यतावच्छेदका-वच्छिन्न प्रतियोगिताककार्याभावो विशेषोक्तेर्विषयः, अस्य तु कार्यप्रतियोगिताककार्याभावो विषय इति भङ्ग्यन्तरेण वदन्ति । दीक्षितरीत्या तु विशेषोक्तौ कार्याभावोऽत्र गुणग्रहणाभावो विषय इत्यायाति ।

इत्यतद्गुणालङ्कारनिरूपणम्

अथ मीलिताऽलङ्कारनिरूपणम्

मीलितं पृथक्त्वेनानवभासनम् । अप्रत्यक्षवस्तुनो लिङ्गेनाऽनुमेयस्य लिङ्गानि कस्यचित् प्रक्षवस्तुनो लिङ्गैरतिसादृश्यादभेदं गतानि सन्तिनानुमाप-यन्ति चेत् तत्र मीलितालङ्कार इति लक्षणवाक्यार्थः । संग्रहवाक्ये प्रत्यक्षवस्तुनो

स्याग्रहणम् । तद्गुणे वस्त्वन्तरगुणानां भिन्नत्वेनाग्रहणेऽपि वस्त्वन्तरस्य ग्रहणमस्त्येवेति न तत्र प्रसङ्गः ।

उदाहरणम्—

'जलकुम्भमुम्भितरसं सपदि सरस्याः समानयन्त्यास्ते ।
तटकुञ्जगूढसुरतं भगवानेको मनोभवो वेद ।।'

अत्र सुरतगमकानां स्वेदकम्पनिःश्वासानां जलकुम्भानयनत्वराजनितैस्तैर्भेदस्याग्रहात् सुरतस्याप्रकाशः ।

यथा वा—

'सरसिरुहोदरसुरभावधरितबिम्बाधरे मृगाक्षि तव ।
वद वदने मणिरदने ताम्बूलं केन लक्षयेम वयम् ।।'

अत्र प्रियेण ताम्बूलं कुतो न गृह्णासीत्युक्ते एतावन्तं समयं ताम्बूलानि भुक्त्वैव समागतास्मीत्युक्तवतीं प्रति तस्येयमुक्तिः ।

---

लिङ्गैः सह अनध्यक्षवस्तुनो लिङ्गानां भेदाग्रहेण अनध्यक्षवस्तुनोऽप्रकाशोऽनुमितेरभाव इति योजना । स्याग्रहणाम् ● तत्र प्रत्यक्षवस्तुन एव तथाऽग्रहणम्, अत्र तु अप्रत्यक्षवस्तुनः । मस्त्येव ● अत्र तु वस्तुनो ग्रहणं नास्ति । जलकुम्भ ● उम्भितरसं पूर्णजलम्, तटकुञ्जे गुप्तं सुरतम् । अत्राप्रत्यक्षवस्तु सुरतम्, प्रत्यक्षञ्च कुम्भानयनत्वरावस्तु उभयोर्लिङ्गानि स्वेदकम्पनिश्वासादीनि समानानि । तानि लिङ्गानि कुम्भानयनत्वरायां व्यभिचारीणि सन्ति, न गूढसुरतमनुमातुं प्रभवन्ति । जनितैस्तै ● तैः स्वेदादिभिः । अप्रकाशोऽनुमितेरभावः ।

सरसीरुहो ● हे मृगाक्षि ! वद कमलमध्यवत् सौरभशालिनि अधरीकृतं बिम्बं येनैवंभूतमधरं यस्य तस्मिन् मणय इव दन्ता यस्य तस्मिन्

पूर्वोदाहरणे प्रत्यक्षवस्तुलिङ्गान्यागन्तुकानि, अत्र तु साहजिकानीति विशेषः ।

इति रसगङ्गाधरे मीलितालङ्कारनिरुपणम् ।

अथ सामान्यम्—

प्रत्यक्षविषयस्यापि वस्तुनो बलवत्सजातीयग्रहणकृतं तद्भिन्नत्वेनाग्रहणं सामान्यम् ।

मीलिते तु निगूह्यमानवस्तु न प्रत्यक्षविषय इति न तत्रातिव्याप्तिः ।

---

तव वदने वयं ताम्बूलं केन लिङ्गेन पश्येम । साहजिका ● अधरदन्तादीनां रक्तता स्वाभाविकी । यत्तु कौस्तुभकृता इदमुदाहरणमयुक्तम्, द्रव्याविषयकरूपचाक्षुषाप्रसिद्धया वस्त्वन्तरग्रहणं विना विजातीयरूपादिस्वरूपाणां तदीयलिङ्गानामपि चाक्षुषानुपपत्तेरित्याक्षिपति तदकाण्डताण्डवम् । ताम्बूलस्याप्रत्यक्षत्वेऽपि ताम्बूलरूपप्रत्यक्षं क्व निबद्धं पण्डितराजेन यदयमाक्षेप उत्तिष्ठेवत् । लक्षणेऽपि लिङ्गयोः साम्यमेव नैक्यम्, भिन्नत्वेनाग्रहणमेव नैकत्वेन ग्रहणं निक्षिप्तमिति क्व शङ्कायाः अवसरः ? मिलितलक्षणेऽननुमापकत्वमुक्तं नाग्रहणमात्रम् । दूरतरे वस्तुनि असाधारणरूपेणाग्रहणेऽपि रूपस्य ग्रहणमनुभूयते च ।

इति मीलितालङ्कारनिरूपणम्

अथ सामान्यालङ्कारनिरूपणम्

समानस्य भावः सामान्यम् । ग्राह्याग्राह्यौ रूपेण समानौ, तद्भिन्नत्वेन ● बलवत्सजातीयभिन्नत्वेन । मिलिते तु ● तुना सामान्यस्य व्यवच्छेदः, तत्राप्रत्यक्षमपि वस्तु प्रत्यक्षयोग्यमेवास्ति । यत्तु मीलितसामान्ययोः स्ववृत्तिधर्मप्रकारकत्वेन वस्तुनि उभयत्रानवभासाद्, अन्यथा तु उभयत्राप्यवभासादिति कौस्तुभकृता आक्षिप्तं तदसारम्, तथाहि सत्यं सामान्योदाहरणे चन्द्रिकासु चमरीत्वेन न ग्रहणम्, अपि तु चन्द्रिकात्वेन, परं मीलिते धर्मिणोऽप्रकाशः स्फुटमुक्तो नानुध्यातो विश्वेश्वरविदुषा, प्रथमोदाहरणे कुम्भानयनसमये कथं सुरतं कश्चिदपि लक्ष्यीकुर्वीत ? स्वेदादयस्तत्कार्याणि गृह्यमाणान्यपि न

उदाहरणम्—

'यस्मिन् हिमानीनिकरावदाते चन्द्रांशुकैवल्यमिव प्रयाते ।
पुच्छाश्रयाभ्यां विकला इवाद्रौ चरन्ति राकासु चिरं चमर्यः ॥'

अत्र चन्द्रिकान्तः पृथक्त्वेन हिमाचलचमरीपुच्छयोरदर्शनादुत्प्रेक्षोत्पत्तिरिति तस्यां सामान्यं गुणः ।

केचित्तु—प्रागुक्तलक्षणे 'भिन्नत्वेनाग्रहणम्' इत्यपहाय 'भिन्नजातीयत्वेनाग्रहणम्' इति वक्तव्यम् । तेन व्यक्तिभेदाग्रहेऽपि सामान्यमेवालङ्कारः ।

तथा

'स्तबकभरैर्ललिताभिश्चलिताभिर्मारुतैर्नृप लताभिः ।
वृतमुपवनमेवासीदरिमहिलानां महावनं भवतः ॥'

अत्र महावनमिति महावनकार्यस्य निलयनस्य संपादनात् तच्च तासां प्रत्यक्षेण त्वदीयैर्भटैर्लताभिः सह तत्तद्व्यक्तितया

---

सुरतजन्यत्वेन गृह्यन्ते, अन्यथा समेषामनुमेयत्वसौलभ्ये मनोभव एव कथं जानीयात् ? द्वितीयोदाहरणे रक्तत्वसामान्येन ताम्बूलस्य प्रत्यक्षं संभवति, परं न जातम्, कथमन्यथा ताम्बूलग्रहणप्रश्न उत्तिष्ठेत् ? ताम्बूलरूपसदृशं रूपं गृहीतं न ताम्बूलं न वा ताम्बूलरूपमिति स्फुटमेव प्रतीयते ।

**यस्मिन् हिमानी** ● महतां हिमानां समूहः शुभ्रे हिमालयप्रदेशे केवलं चन्द्रकिरणा एवेति प्रतिभासमाने शुक्लानां भेदाग्रहे हिमरूपैश्चमरीरूपे क्रोडीकृते चमरीत्वेनाग्रहणे शुक्लत्वेनैव ग्रहणे पुच्छेन आश्रयरूपहिमालयेन च रहिताश्चमर्यः पूर्णिमासु चिरं चरन्ति । महद्धिमं हिमानी, अवदातः शुक्लः, केवलस्य भावोऽद्वैतं कैवल्यम् । चन्द्रिकान्तः चन्द्रिकामध्ये, अल्पभेदात् पृथक्पदप्रयोगाच्च चन्द्रिकात इति पाठोऽपि संदिह्यते । अत्र बलवान् सजातीयो हिमनिकरस्तद्भिन्नत्वेन समानरूपायाश्चमर्या अग्रहणम् ।

**स्तवकभरैः** ● स्तवकभरतया स्तनकृतभेदाग्रहः, ललिततया सौन्दर्यकृतभेदग्रहः, चलिततया चाञ्चल्यकृतो लतया सह शत्रुकामिनीनां भेदग्रहोऽपनोद्यते ।

भिन्नत्वेन ग्रहेऽपि भिन्नजातीयत्वेनाग्रहणान्निष्पद्यते। पूर्वमते त्वत्रालङ्कारान्तरमभ्युपेयं स्यात्'' इत्याहुः।

ननु भेदाग्रह एव मीलित-सामान्य-तद्गुण-साधारण एकोऽलङ्कारोऽस्तु, किमलङ्कारत्रयेण? मीलिते तावत्प्रकृताप्रकृतधर्मिगुणानां भेदाग्रह उपपादित एव। सामान्ये केषाञ्चिद् गुणगुणिभेदाग्रहः, केषाञ्चित्क्वचिदयं क्वचिज्जातिमात्रभेदाग्रहश्च। तद्गुणेऽपि रक्तगुणे रञ्जकगुणभेदाग्रहः। न चावान्तरभेदसत्त्वान्नैकालङ्कारत्वमुपपद्यत इति वाच्यम्, लुप्तोपमादितः पूर्णोपमादेः पृथगलङ्कारतापत्तेः। तस्माद् भेदाग्रहस्य त्रयो मीलितादयोऽवान्तरभेदा इति युक्तम्, न तु पृथगलङ्कारा इति

---

महावने गोपनमत्रोपवने तु लताभिन्नत्वेनाग्रहणाद् रक्षणम्। निलयनं गोपनम्। ग्रहेऽपि लताव्यक्त्याविक्यग्रहेऽपि। नाग्रहणा लताभिन्ना काचिदित्यग्रहणात्। पूर्वमते तद्भिन्नत्वेनाग्रहणमिति मते। लतानिष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगिताको भेदो लतान्तरसाधारणो नायिकासु गृह्यते, परं लतात्वावच्छिन्नलतानिष्ठप्रतियोगिताको भेदो लतायामवर्तमानो नायिकानिष्ठोऽपि न गृह्यत इति भावः। एतेन तत्तद्व्यक्तितया भिन्नत्वेन ग्रहो न युज्यते, तथाहि वस्तुतो भिन्ना या व्यक्तिस्तस्या येन केनापि रूपेण ग्रहणम्, अथवा तद्व्यक्तिनिष्ठभेदप्रतियोगितया वा? नाद्यः, मिलितेऽपि तत्सम्भवात्। नापि द्वितीयो विरुद्धधर्मानवभासे भेदप्रतीतेरसंभवात्—इति कौस्तुभकृतां प्रत्यवस्थानं प्रत्युक्तम्। मीलिते निगूह्यमानव्यक्तेर्भानाभावस्योपपादितत्वात्। तद्व्यक्तित्वस्वरूपविरुद्धमानस्याङ्गीकाराच्च। धर्मिगुणानाम् लक्षणे लिङ्गशब्देन प्रतिपादितानाम्, गुणगुणि चमरीगुणस्य रूपस्य चन्द्रिकया क्रोडीकरणे चमर्य्या गुणिन्या अपि क्रोडीकाराद् गुणगुणिनोरभेद इति केचित्। अन्ये तु चन्द्रगुणेन चन्द्रिकया चमरीगुणिन्या अभेद इति व्याचक्षते। क्वचिदयम् गुणगुणिनोरभेदः, भेदाग्रहः बलवत्सजातीयेन गुणिना दुर्बलस्य समानगुणकस्याभेदः। रक्तगुणे बन्धूकगुणे रञ्जकस्य अधररागरूपस्य गुणस्य भेदाग्रहः। वान्तर प्रकृताप्रकृतधर्मिगुणगुणिरज्यरञ्जककृत-

चेत्; उच्यते, एवं तर्ह्यभेदोऽप्येकोऽलंकारः। तदवान्तरभेदा रूपकपरिणामाद्यतिशयोक्तिप्रमुखा इत्यपि शक्यते वक्तुम्। विच्छित्तिभेदस्तु प्रकृतेऽपि तुल्यः।

'हिमाद्रिं त्वद्यशोमृष्टं सुराः शीतेन जानते'

लक्षितान्युदिते चन्द्रे पद्मानि च मुखानि च ॥'—"

इति कुवलयानन्दकृदाह, तन्न, अनुमानालङ्कारेणैव गतार्थत्वादनयोरलङ्कारत्वायोगात्। न चात्र प्रत्यक्षसामग्र्या बलवत्त्वेनानुमितेरनुदयान्नानुमानालङ्कृतिः शक्यनिरूपणेति वाच्यम्, व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञानस्यैवानुमानालङ्कारलक्षणवाक्यगतेनानुमितिपदेन ग्रहणात्। अत एव तत्रा-

---

भेदसत्त्वात्। प्रतिवन्दि उत्तरमाह लुप्तोपमादितः ● ननु अभेदस्य सामान्यतः सत्त्वेऽपि प्रतियोग्यनुयोगिभेदकृतो निगरणानिगरणाकृतश्च चमत्कारविशेषो रूपकपरिणामादीनां भेदक इति आशङ्क्य समाधत्ते विच्छित्ति ● भेदः प्राक् प्रदर्शितः। यशोमृष्टम् ● यशसा शुद्धभावमापन्नम्। कुत्रचित् पुस्तके मृष्टमित्यस्य स्थाने मग्नं लग्नमिति वा मुद्रितमस्ति। यशसा हिमाद्रिर्मीलितः। शीतहेतुकं हिमाद्रौ यशसो भेदज्ञानम्। चन्द्रे उदिते पद्मानि मुखानि पृथक्त्वेन लक्षितानि, पद्मानां मुकुलीभावात्। यशसा मीलितो हिमाद्रिरिति पूर्वार्धे मीलितरीत्या भेदाग्रहस्तदंशे उन्मीलितम्, उत्तरार्धे बलीयसा सजातीयेन मुखेनैक्यमापन्नस्य पद्मस्य सामान्यरीत्या भेदाग्रहे विशेषकालङ्कारः। चन्द्रोदये पद्मानां मुकुलीभावान्मुखत्वपद्मत्वाभ्यां भेदग्रहः। अनुमाना ● हिमत्वव्याप्यशीतवानिति ज्ञानजन्योऽयं हिम इति प्रत्ययोऽनुमानम्। एवं पद्मत्वव्याप्यचन्द्रोदयसम्बन्धजन्यमुकुलितत्ववदित्याकारकज्ञानजन्यमिदं पद्ममिति ज्ञानमनुमानम्। ननु तज्ज्ञानं नानुमानम्, अपि तु प्रत्यक्षम्, तादृशव्याप्यवत्त्वज्ञाने सत्यपि इन्द्रियसन्निकर्षस्यापि सत्त्वेन प्रत्यक्षसामग्र्या बलवत्त्वेन च अनुमानं प्रतिबध्य प्रत्यक्षस्यैवोपपत्तेरित्याशङ्क्य पारिभाषिकानुमानत्वेन समाधत्ते व्याप्तिविशिष्ट ● अस्य समन्वयपदकृत्यप्रत्यक्षसाधारण्यानि अनुमानालङ्कारप्रकरणे स्फुटं प्रतिपादितानि। सरला तु न विश्वसनीया। अत एव ●

स्माभिः पक्षान्तरमुक्तम् । प्रकृते च विशेषदर्शनहेतुकस्य प्रत्यक्षस्यैव तथात्वात् । नहि प्रमाणविभाजकानां नैयायिकानामिवालङ्कारिकाणामपि सरणिः, येन प्रत्यक्षत्वानालिङ्गितामनुमितिं परिभाषेमहि । न चैवंविधे विषये नानुमितिपदप्रयोगोऽभ्यर्हितानामिति वाच्यम्, तथाप्युन्मीलितादिवत्परिभाषाया अनिवारणात् । अस्तु वानुमितित्वजातियुक्तैवानुमितिः, तथापि प्रकृते प्रतिबन्धकवशात् तस्या अनुदयेऽपि तत्करणस्याप्रत्यूहत्वेनानुमानत्वमव्याहतम् । न हि सत्यप्यग्नौ मणिमन्त्रादिभिः प्रतिबद्धो दाहो न भवतीति दाहकरणमग्निर्नेति वक्तुं शक्यम्, फलायोगव्यवच्छेदस्तु न करणतायाः प्रयोजकः, अपि तु व्यापार

---

प्रत्यक्षस्यापि संग्राह्यत्वादेव । विशेषदर्शन ● विशेषदर्शनं हिमत्वव्याप्य शीतवानित्याकारकं पूर्वोक्तं ज्ञानद्वयम् । तदेव च व्याप्तिविशिष्टपक्षधर्मज्ञानम् । नैयायिकसम्मतानुमितित्वजात्याकान्तस्यैव निबन्धनेऽनुमानालङ्कारस्वीकाराद् इति मर्मप्रकाशवचो नोत्तिष्ठेत् । तथाह न प्रमाण ● प्रमाणविभाजन एव प्रत्यक्षत्वाद्यसाधारणस्यानुमानत्वस्यापेक्षा, न त्वलङ्कारत्वेन वर्णने, प्रत्यक्षत्वानालिङ्गितां प्रत्यक्षत्वासमानाधिकरणां प्रत्यक्षभिन्नामिति यावत् । अनिवारणात् ● यथा त्वया नूतनं परिभाष्यते उन्मीलितम्, तथा मयाऽनुमितित्वम् । कौस्तुभकृता यदाक्षिप्तम्—अनुमानालङ्कारस्य व्यङ्ग्यत्व-लक्ष्यत्वव्यवस्थायै पूर्वं व्यवस्थापितस्यानुमित्यात्मकानुमानस्य परामर्शात्मकव्यवस्थापनमधुना विरुध्यते इति । तदुन्मूलनाय पक्षान्तरमुक्तमिति वच एव पण्डितराजस्य पर्याप्तम् । यत्तु निश्चयान्तसंदेहसंग्रहस्तेनापादितः, तदपि न विचारमर्हति, व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञानत्वस्य संशयेऽसम्भवात् । संशयालङ्कारोऽपि निश्चयरूप इति तु महान् भ्रमः । निश्चयालिङ्गितसंशये एव तृतीयसंशयालङ्कारत्वस्य सामान्यलक्षणानुरोधेन स्वीकर्तव्यत्वात् । कुवलयानन्दे तु प्रमाणस्यैवानुमानस्य सन्दर्भानुसारेण अलङ्कारत्वं प्रतिभाति, न त्वनुमितिरूपेति मर्मप्रकाशस्यानुमितावाग्रहो वृथैव । पक्षान्तरेणाप्यनुमानत्वं समर्थयते अस्तु वा ● । स्याप्रत्यूहत्वे ● कार्यानुत्पादेऽपि कारणस्वरूपविघाताभावात् । फलायोगव्यवच्छेद ● फलेन सहा-

एवेति । एतेन 'विशेषदर्शनस्य कोटचन्तरभानप्रतिबन्धकत्वेन चक्षुःसंयोगादिरूपस्वसामग्रीवशादेवोत्पन्ने तादृशप्रत्यक्षे हेतुताया मानाभावात् पारिभाषिक्यप्यत्र नानुमितिः । अतस्तत्करणमनुमानं कथं नाम स्यात्' इति परास्तम् ।

यदप्युक्तम्—"तद्गुणरीत्यापि भेदानध्यवसायप्राप्तावुन्मीलितं दृश्यते । यथा—

'नृत्यद्भर्गाट्टहासप्रसरसहचरैस्तावकीनैर्यशोभि-
र्धावल्यं नीयमाने त्रिजगति परितः श्रीनृसिंहक्षितीन्द्र ।
नेदृग् यद्येष नाभीकमलपरिमलप्रौढिमासादयिष्यद्-
देवानां नाभविष्यत् कथमपि कमलाकामुकस्य प्रबोधः ।।'

---

योगस्यासम्बन्धस्य व्यवच्छेदोऽभावः, फलनियतत्वमिति यावत् । एतेन अनुमितिकारणस्यानुमानालङ्कारत्वव्यवस्थापनेन । कोटयन्तर संशये कोटिद्वयं जायते, विशेषदर्शनोत्तरं संशयो न जायते, किन्तु एककोटिकनिश्चयमात्रम् । संशयप्रतिबन्धकत्वं विशेषदर्शनस्य कोटचन्तरोपस्थितिप्रतिबन्धकत्वमेव ।- न त्वेककोटिकनिश्चयस्य जननेऽपि उपयोगः, तादृशप्रत्यक्षरूपनिश्चयस्य चक्षुः संयोगादिस्वसामग्रीत एव संभवात् । तथा च विशेषदर्शनोत्तरीयनिश्चयस्य प्रत्यक्षस्य व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यताभावाद् नानुमानपरिभाषया संग्रहः इति कुवलयानन्दोक्तमपास्तम्, अनुमितिकरणत्वलक्षणेन संग्रहात् । प्रदीपोद्द्योताभ्यां तु. मीलितसामान्याभ्यामेव भेदप्रतीतिपूर्वकालिकाभेदप्रत्ययस्य जातत्वात् संग्रहो मन्यते । अवज्ञाऽतद्गुणयोरिव मीलितसामान्यप्रतिद्वन्द्वितया प्रागभिन्नस्य विशेषरूपेण स्फुरणात्मकवैचित्र्यस्यानुभवाच्चातिरिक्तत्वमनयोरिति चन्द्रिकायाश्चाञ्चल्यमेव । दृष्टान्तेऽलङ्कारान्तरविषयताया अभावाद् दार्ष्टान्तिके चानुमानविषयतायाः सत्त्वाच्च महावैषम्यम् । अस्ति विशेषाकारेण स्फुरणम्, परं तदपि स्फुरणमनुमानं न परिजिहीर्षतीति पण्डितराजाभिप्रायात् । उन्मीलितम् इत्यस्य केनचिद् हेतुना विशेषस्फूर्तौ इत्यादिः शेषः ।

नृत्यद्भर्गाट्ट नृत्यतः शिवस्य अट्टहासविस्तारस्य सदृशैस्तव सम्बन्धिभि-

इति । तदपि न, तद्गुणे हि गुणयोर्भेदानध्वसायः, न तु वस्तुनोरिति निर्विवादम् । अत्र नाभीकमलपरिमलेन भगवत्त्वेन भगवज्ज्ञाने जातेऽपि तदीयगुणे नीलिमनि यशोगुणधावल्यभेदानध्यवसायरूपस्य तद्गुणस्य निर्बाधत्वात् कथङ्कारं तत्प्रतिद्वन्द्विता उन्मीलितस्योच्यते ? यदि चैकस्मिन् वस्तुनि संनिहितवस्त्वन्तरगुणवद्भेदानध्यवसायस्तद्गुणजीवितमुच्यते, तथाप्यत्र तद्गुणो निर्बाधः । भगवतः श्वेतभिन्नत्वेन ज्ञानस्योपायशून्यत्वेनायोगात् । न च नीलत्वव्याप्यभगवत्त्वज्ञानमेवोपायः, प्राङ्नीलोऽपि कारणविशेषमहिम्ना संप्रति श्वेतो जात इति बुद्धेः प्रत्यक्षानुगृहीतायास्तथाप्यनपायात्, अत एव त्वदुपजीव्ये-

---

यशोभिः परितस्त्रिजगति धावल्यं नीयमाने सति सदेवेषु भगवत्सु एकतां गतेषु एष कृष्ण इदृक् शुक्लः सन् नाभीकमलसौरभ्यस्याधिक्यं न आसादयिष्यत् चेत्, देवानां मध्ये अथवा देवकर्तृकः लक्ष्मीपतेः प्रबोधो न कथमपि अभविष्यत् । तवेमानि तावकीनानि । परिमलः प्रथमान्तपाठोऽपि दृश्यते, सोऽपि पूर्वत्र कर्ता । निर्विवादम् ● कुवलयानन्दकृताऽपि तद्गुणस्य रूपादिगुणविषयताया उक्तत्वात् । तथा चात्र भगवतो नीलिमपरित्यागपूर्वकं यशोधावल्यग्रहणमेव तद्गुणविषयः, न तु भगवति यशःस्वरूपतापत्तिरिति सिद्धम् । यदि भगवति नीलिम्नः प्रत्ययः केनचित् क्रियेत, तदैव तद्गुणप्रतिद्वन्द्विता प्रसज्येत, न तु परिमलप्राकट्येन न वा भगवत्त्वस्फूर्त्या च । तुष्यतु दुर्जन इति न्यायेनाभ्युपगम्योच्यते यदि चैकस्मिन् ● सन्निहितं गुणवद्वस्त्वन्तरं यशः । स्योपायशून्य ● परिमलप्रौढ्या असुरभिभिन्नत्वसाधन एव सामर्थ्यात् । ननु भगवान् नील एवेति ज्ञानादेव यशोभेदः सेत्स्यति इत्याशङ्कते न च नीलत्व ● यत्र यत्र भगवत्त्वं तत्र नीलत्वमिति ज्ञानम् । विशेषमहिम्ना ● यशसो बलवत्ता धावल्येन । प्रत्यक्षानु ● नीलोऽपि कारणवशात् प्रत्यक्षीक्रियते धवल इति । अनया एव रीत्या तद्गुणेन त्रिजगतो धावल्यं प्रतिपादितम् । अत्र मर्मप्रकाशः--न ह्यत्र तद्गुणरीत्येत्यनेन तद्गुणो नास्ति इत्युच्यते, किन्तु तद्रीत्या देवान्तरेभ्यो विष्णोर्भेदानध्यवसायप्राप्तौ केनापि निमित्तेन भेदाध्यवसाय इत्येतावन्मात्रमिति न कश्चिद्विरोध इत्याह । तदर्थं केवलं विष्णोर्भेद-

नालङ्कारसर्वस्वकृता उन्मीलितविशेषकयोश्चर्चैव न कृता । अतः प्राचीनैः कृतविभागेष्वलङ्कारेष्विदंप्रथमोत्प्रेक्षितस्य यावदलङ्कारस्य शक्योऽन्तर्भावः कर्तुम् । न तावत् पृथगलङ्कारत्ववाचोयुक्त्या विगलितश्रृङ्खलत्वमात्मनो नाटयितुं सांप्रतं मर्यादावशंवदैरार्यैरिति ।

यत्तु—

'वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि ।
भृङ्गाः सहेलं यदि नापतिष्यन् कोऽवेदयिष्यन्नवचम्पकानि ॥'

इत्यत्र सामान्यमुदाहृत्य काव्यप्रकाशे 'निमित्तान्तरजनितापि नानात्वप्रतीतिः प्रथमप्रतिपन्नमभेदं न व्युदसितुमुत्सहते, प्रतीतस्य त्यागायोगात्' इत्युक्तम् । अत्रोत्तरप्रतिपत्त्या तिरस्कृतत्वात् पूर्वंप्रतीतेर्न चमत्कारित्वम्, किं तूत्तरप्रतीतेरेवेति तयैव

---

प्रत्यायनं न क्रियते परिमलप्रौढ्येति पण्डितराजाभिप्रायमेव पर्याप्तं स्मारयामि । अत एव ● अनयोः पृथगलाङ्कारत्वाभावादेव, प्राचीनानुभवविरुद्धत्वादेव । इदं प्रथमो ● इयं प्रथममेवोत्प्रेक्षा संजाता यस्य । प्रथमोत्प्रेक्षयोः विस्पष्टं पटुरित्यादाविव सहसुपेति समासान्तरम् इतच् । प्राक् कैश्चिदप्यनुत्प्रेक्षित इत्यर्थः । मर्यादापरिपालकैर्विनाशिता प्राचीनश्रृङ्खला येन तत्त्वं नाटयितुं न युज्यते । काव्यप्रकाशमते वैमत्यं प्रदर्शयितुमुपक्रमते वेत्रत्वचा ● वेत्रस्य त्वचा चर्मणा । अथवा भागुरिमतसिद्धावन्तस्य तृतीया तत्पुरुषः, वेत्रत्वचा गौरवर्णेति प्रसिद्धिः । कर्णाग्रतः कर्णभूषणस्थानात् पतितानि कपोलभागे आगतानि गौरवर्णानि नूतनचम्पकपुष्पाणि इति कोऽज्ञास्यत्, यदि भृङ्गाः सलीलं तत्र न अपतिष्यन् ।

शरीरगौरतया तिरोहितानां नवचम्पकानां भृङ्गपातेन च शरीराद् भेदोऽध्यवसीयते । अवेदिष्यदित्यत्र निवृत्तप्रेषणाद् विद्धातोर्णिचि रूपम्, चुरादिपठितस्य तु आत्मनेपदित्वम् । चम्पकेषु भृङ्गपातस्य कविसमयाप्रसिद्धत्वेऽपि

व्यपदेशो न्याय्यः, अन्यथा व्यतिरेकेऽप्युपमापत्तेः। विरोधाभासस्तु पूर्वोत्तरप्रतीतिद्वयात्मक इति भवति चमत्कारी।

इति रसगङ्गाधरे सामान्यालङ्कारनिरुपणम्।

अथोत्तरालङ्कारः—

प्रश्नप्रतिबन्धकज्ञानविषयीभूतोऽर्थ उत्तरम्।

प्रश्नश्च ज्ञीप्सा, भावे नङो विधानात्। सा च ज्ञानविषयेच्छा। सा चोत्तरवाक्याद्विषयीभूते ज्ञाने जाते निवर्तते।

---

नायिकायाः पद्मिनीत्वेन वदनसौरभादपि पातः। अन्यथा ● तिरस्कृतस्यापि चमत्कारित्वे। तत्र व्यतिरेकेण उपमायास्तिरस्कृतत्वेऽपि। ननु विरोधे उत्तरप्रतीत्या तिरस्कृताया अपि पूर्वप्रतीतेश्चमत्कारित्वं दृष्टमेवेति चेत्, तत्राह विरोधाभास● अत्र तु न भेदप्रतीतिः। या तु सामान्यात्मिका, सातु तिरस्कृता। यच्च भेदप्रतीतेर्वर्णनायोत्कर्षाधायकत्वेन न तथात्वमिति कौस्तुभकृतोऽपचनम् तत्तु व्यतिरेकस्य चमत्कारित्वावलोकनेनाविचारितरमणीयम्।

इति सामान्यालङ्कारनिरूपणम्

अथोत्तरालङ्कारनिरूपणम्

प्रश्नोत्तरशब्दार्थौ परस्परमविनाभूततया प्रसिद्धौ। तथा च प्रश्नस्यैवोत्तरं प्रश्नस्य च प्रतिबन्धकमुत्तरम्। प्रश्नश्च जिज्ञासा कस्यचिद्वस्तुनो ज्ञानस्येच्छा। उत्तरवाक्येन जिज्ञासितस्य वस्तुनो ज्ञाने जाते ज्ञानेच्छा नोदेति, यतो हि यद्वस्तुसिद्धं तस्येच्छा न जायते। तथा चेच्छाया वस्तुसिद्धिः प्रतिबन्धिका। अत्रेच्छाया विषयो ज्ञानं तच्चोत्तरेण सिद्धचतीत्युत्तरस्य प्रश्नप्रतिबन्धकत्वम्। परमत्रोत्तरवाक्यं न प्रतिबन्धकम्, किन्तु तदर्थज्ञानम्, न वा उत्तरवाक्यमलङ्कारः, अपि तु वाक्यार्थः। एवञ्च प्रश्नस्य प्रतिबन्धकं यदुत्तरवाक्यार्थज्ञानं तद्विषपीभूतोऽर्थ उत्तरवाक्यार्थोऽलङ्कार उपस्कारकः सन्नित्यर्थः। प्रच्छ् ज्ञीप्सायामिति धातोः यजयाचेत्यादिसूत्रेण नङ्। ज्ञीप्सा च ज्ञानार्थकज्ञप्धातोरिच्छार्थे सनि भावेऽकारप्रत्ययेन सिध्यति, अत आह सा च ज्ञान ● किं शब्दादिस्थले एतादृशी जिज्ञासैव मतभेदेन जिज्ञासाविषयोवोपस्थाप्यते, तेन जिज्ञासाकारणीभूतो विषयसंशयो व्यज्यते। स संदेहप्रकरणे 'आज्ञा सुमेषोरिवेत्यादिपद्ये किमादिशब्दानामवाच्यः संशय इति

